# नैषधचरितम् ।



महाकवि-श्रीहर्ष-विरचितम् ।



पूर्व्वार्द्धरूपं प्रथमखण्डम् ।

( प्रथमसर्गादिकादशसर्गपर्य्यन्तम् । )



गङ्गाधरविद्यालङ्कारभट्टाचार्य्यात्मजेन
शब्दाचार्य्य-पुराणशास्त्रि-सांख्यरत्न-
व्याकरणतीर्थ-काव्यतीर्थ-
स्मृतितीर्थ-
महोपदेशक-
श्रीहरिदाससिद्धान्तवागीशभट्टाचार्य्येण

प्रणीतया 'जयन्ती' समाख्यया टीकया
अन्वयेन वङ्गानुवादेन च
समन्वितम् ।



मलीपुर-हरिचरणचतुष्पाठीतः
तेनैव प्रकाशितञ्च ।



१८४९ शकाब्दीयसौरवैशाखद्वादशदिवसे ।

बीजं स्वयं
निहितमङ्कुरितं प्रपश्यन्,
औत्सुक्यवान् किल भवान् कुसुमाय यासीत्।
आमोदिनीं रसवतीं गुण-गीति-रम्या,
तस्यां पितः! तव पदे
प्रददे 'जयन्तीम्'॥

भक्तो पुत्रः

श्रीहरिदासदेवशर्म्मा।

१८५४ शकाब्दे
पौषे मासद्वादशदिने।

# निवेदनम् ।

रचनायां प्राणान्तः परिश्रम इति विदितविषये व्यर्थमभिधानम्, मुद्रणे चास-
ाद्गुल्यमिति प्रत्यक्षविषये पुनरुक्तिदोषः । तत्फलतया यशोलाभश्च
जे दुष्कर एव, धनलाभश्च दरिद्रे याहके आकाशकुसुमायते । तथापि
समुद्यम एव मामत्र न्ययुङ्क्त । परन्तु तदाशास्महे—पठनपाठनयोः
वं एव अपूर्वामिव सुविधामासादयन्तः सुमहान्तमेव सन्तोषं यास्य-
परसन्तोषस्य परमं फलम् । उत्कर्षापकर्षविचारभारस्य निरपेक्षविच-
एव विन्यस्तः ।

त्र सविशेषमेव विवेचनीयम् । यत्, इदानीन्तनपाठ्यभागमात्रस्यैव
ो, लेखने श्रमलाघवम्, मुद्रणे व्ययलाघवम्, ग्रहणे च मूल्यलाघव-
, इत्थं लाघवत्रयेण सर्वेषामेव सुविधासम्भवेऽपि, सहसा पाठ्यपरिवर्त्तने
[redacted] तथैव असुविधा भवेत् । अतएव तावदादितः शेषपर्य्यन्तं सर्वत्रैव
अन्वयः, नूतना टीका, अनुवादश्च प्रणीतः प्रकाशितश्च । व्ययानुपातेन च मूल्य-
मल्पमेव कल्पितमिति निपुणैरूह्यमिति ।

१३२४ वङ्गाब्दे वैशाखे }
मासि सप्तमदिवसीयम् । }

सर्वविधेय—

श्रीहरिदासशर्म्मणः ।



# अथ कविकथा।

आसीत् किल गौड़देशे लक्ष्मणावतीराजधानीसन्निधाने श्रीहीरो नाम महाविचक्षणः कश्चन ब्राह्मणः [क]। स खलु मामल्लदेवीनामिकायां निजभार्य्यायां श्रीहर्षं नाम पुत्रं जनयामास [ख]। स चात्मनो विद्यावैभवेन दिग्दिगन्तविकीर्णकीर्त्तिः श्रीहीरः कान्यकुब्जाधिपतिना विजयचन्द्रेण (ग) ससम्मानमुपनीय स्वकीयान्यतमसभापण्डितपदे समारोपितः। अथ कदाचित् सभायां राजसमक्षमेव केनचित् वादिना शास्त्रवादे पराजितो नितरामपमानितश्च स श्रीहीरः स्वावासमागच्छन् तद्वृत्तान्तमभिधाय बालकमपि तीक्ष्णबुद्धिं पुत्रं श्रीहर्षमा[illegible] "वत्स! यदि शक्ष्यसि, वादिनमेनं जेष्यसि"। श्रीहर्षेण च तद[illegible]

(क) इदानीन्तनवङ्गदेशस्य कियन्तमंशमधिकृत्य प्राचीनो गौडदेश आसीत्। तस्य[illegible] वती नाम वङ्गान्तर्गतवर्त्तमान-'मालदह'—जिलायामेव अभूदेति प्रत्नतत्त्वविदां निर्णयः कविः श्रीहर्षो वङ्गदेशीय एवेति सर्वथा वक्तुं शक्यते। तथा च—

(१) १३४८ खृष्टाब्दे राजशेखरेण निर्मिते प्रबन्धकोषे "श्रीहर्षो गौडदेशीयः" इति[illegible]

(२) कविना स्वयमपि चतुर्दशसर्गे नलकण्ठे दमयन्त्या वरणमाल्यदानसमये "ए[illegible] (१४ सर्गे ४९ पद्यम्। मुम्बयीमुद्रिते तु तत्र ५१ पद्यम्) इत्युत्सवकालकरणीया 'ए[illegible] रीतिरेवोक्ता। देशान्तरे तु नेयं रीतिः। तत्रत्यटीकायां नारायणेनापि "विवाहाद्युत्सवे विशेषो गौडदेशे 'उलूलु' इत्युच्यते। सोऽप्यव्यक्तवर्णं उच्चार्यते। स्वदेशरीतिः कविनो[illegible]

मल्लिनाथेनापि तत्र "उलुलुरित्यं वर्णरूपः कश्चित् हर्षात्मको मुखोच्चार्य्यो ध्वनिवि[illegible] च्चार्य्यते इत्युदीच्यानामाचारः" इत्यभिहितम्। मल्लिनाथीयोत्कलदेशाय वङ्गदेश उदीच्य[illegible]

(३) दशमसर्गे सरस्वतीवर्णनावसरे "भुवौ दलाभ्यां प्रणवस्य यस्याः" इति (८६ पद्यम्। मुम्बयीमुद्रिते तु ८५ पद्यम्) ब्रुवता कविना 'प्रणवस्य अधःखण्डद्वयं सरस्वत्या भ्रूयुगलम्, तदुपरिस्था वक्ररेखा वीणावादनदण्डः, तदुपरिस्थो बिन्दुश्च ललाटतिलकम्' इत्यर्थयोजनात् स्वदेशीयवङ्गाक्षरलिखितः प्रणव एव कथितः। देशान्तरीयाक्षरलक्षणं तु तादृशसिद्धवर्णिर्दृष्टो न स्यात्। किञ्च तथात्वे प्रणवाक्षरस्य कियानंशः परित्यक्तः स्यादिति कवेर्न्यूनतापत्तिः। अतो मल्लिनाथादिभिर्यन्नागराक्षरमुद्भावितं तदपास्तम्।

(४) एकादशसर्गे काशीराजवर्णनावसरे "भूताभिधानपटुमद्यतनीमवाप्य" (११५ पद्यम्। मुम्बयीमुद्रिते तु ११७ पद्यम्) इति व्याकरणान्तरीयलुङादिसंज्ञां विश्वप्रसिद्धामपि विहाय कलापव्याकरणीयाम् 'अद्यतनी' इति संज्ञामुल्लिखता कविना आत्मनः कलापव्याकरणाध्यायित्वमेव सूचितम्। कलापव्याकरणञ्च प्रायेण पूर्वोत्तरवङ्गयोरद्यापि प्रचलति। मालदहजिला च वास्तविकाभ्रमनुसारेण उत्तरवङ्ग एव वर्त्तते।

अतएव च श्रीहर्षेण स्वदेशीयतयैव 'गौड़राजवंशप्रशस्तिः' विरचिता; "गौडोर्वीशकुलप्रशस्तिभणितिभ्रातरि" इत्यनेन सप्तमसर्गसमाप्तिपद्येन सा सूचिता च। अतएव च गौडराजधानीसन्निधाने एवास्य वासः प्रतीयते; सन्निधानं विना सम्यक् वंशगुणप्रत्यक्षाभावात् तदप्रत्यक्षे च तद्वर्णनानुपपत्तेः।

(ख) "श्रीहर्षं कविराजराजि—" इत्यादिप्रतिसर्गसमाप्तिपद्यमेवात्र प्रमाणम्।

(ग) विजयचन्द्रे च श्रीहर्षस्य बाल्ये जयचन्द्रसमये तदादेशेन युवकस्य श्रीहर्षस्य सुदूरकाश्मीरदेशगमनमसम्भवमिव प्रतिभाति, जयचन्द्रे च श्रीहीरानयने च श्रीहीरमरणात् परं श्रीहर्षस्य विविधविद्याभ्यासेन बहुकालातीततया युवकीभूतं जयचन्द्रं प्रति "गोविन्दनन्दनतया च" इत्यादियुवकोचितपद्योक्तिर्न सङ्गच्छते। [illegible]न्द्रे च श्रीहीरानय-

गते च श्रीहीरे श्रीहर्षः परिजनभरणभारं कस्मिंश्चित् विश्वस्तबन्धुजने विन्यस्य देशाद्देशान्तरं पर्य्यटन् अशेषशास्त्रपारावारपारमधिगत्य पुनः कान्यकुब्जं जगाम। तदानीन्तु विजयचन्द्रपुत्रो जयचन्द्रः कान्यकुब्जाधिपतिरासीत्। एकदा चासौ श्रीहर्षः शुभे लग्ने सभामुपेत्य राजानं जयचन्द्रमस्तौषीत्—

"गोविन्दनन्दनतया च वपुःश्रिया च मास्मिन् नृपे कुरुत कामधियं तरुण्यः।
अस्त्रीकरोति जगतां विजये स्मरः स्त्रीरस्त्री जनः पुनरनेन विधीयते स्त्री (घ)"॥

स्वयमेव व्याख्यासीच्चेदं पद्यरत्नम्। राजा च जयचन्द्र ईदृशीं चमत्कारिणीं रचनाचातुरीमुपलभ्य गुणग्रसभ्यसमेत एव विपुलेनानन्देनाधीरो बभूव ; निनाय चास्य
।परिचयश्चैनं श्रीहर्षं प्रधानसभापण्डितपदे समारोपयामास। श्रीहीर-
क्रमेण श्रीहर्षस्य प्रतिभाप्रभावं परिचिन्वानः, तमजेयमेव मन्वानः
विजितं मेने। अथ कदाचित् राज्ञो जयचन्द्रस्यैव प्ररोचनया
यं नामापूर्वं महाकाव्यं निर्म्माय (ङ) राजानुरोधेन तदर्पितव्ययेन
सभामुपेत्य तत्रत्यपण्डितादिभिः परीक्षणाया स्वकीयनैषधचरितस्य
ास (च)। तदवधि प्रचलितश्च नैषधचरितं लोकसमाजे (छ)।
ालायां दृश्यते। प्रथमः 'यशोविग्रहः' १। तस्य पुत्रः
२। तस्य पुत्रः 'चन्द्रदेवः' ३। तस्य पुत्रः 'मदनपालः' ४। तस्य पुत्रः
ः' ५। तस्य पुत्रः 'विजयचन्द्रः' ६। तस्य पुत्रश्च 'जयचन्द्रः' ७।
एव जयचन्द्रापरनामा काशीकान्यकुब्जयोरधीश्वर आसीत् (ज)।
ानीमवधेयम्। यत्, "ताम्बूलद्वयमासनञ्च लभते यः कान्यकुब्जेश्व-
रात्" इति नैषधचरितद्वाविंशसर्गशेषस्थपद्यपादमभिदधानः श्रीहर्षः स्वयमेव कान्यकुब्जराजसभापण्डितभावेनात्मानं विज्ञापयति स्म। ततश्च "तस्य श्रीविजयप्रशस्तिरचनाततस्य—" इति पञ्चमसर्गसमाप्तिश्लोकदर्शनात् श्रीहर्षेण यस्य विजयस्य प्रशस्तिरचना कृता, स खलु जयचन्द्रपिता विजयचन्द्र एवेति ध्रुवमकामेनापि वक्तव्यम्, स्वाश्रयजयचन्द्रपितरं विहाय निःसम्पर्कविजयान्तरप्रशस्ति-

(घ) एकत्र गोविन्दो गोविन्दचन्द्रो राजा, तन्नन्दनश्च पौत्रत्वादानन्दजनको जयचन्द्रः। अन्यत्र गोविन्दः श्रीकृष्णः, तस्य नन्दनः पुत्रश्च कामदेवः।

(ङ) इदं निर्म्माणञ्च कदाचित् स्वकीयगौडदेशे तिष्ठन् कदाचिच्च कार्य्यस्थाने कान्यकुब्जे प्रवसन्नकार्षीत्। तत्र स्वदेशावस्थानकालीनरचनायां स्वदेशीयरीतिमुपनिबद्धवान्। सा च पादटीकायां प्राक् प्रदर्शिता। तथा यवनैर्भारताक्रमणात् पूर्वमेव श्रीहर्षो नैषधचरितनिर्म्माणं समापयामित्यपि प्रतीयते।

(च) "काश्मीरैर्महिते चतुर्दशतयीं विद्यां विदद्भिर्महाकाव्ये" इत्यादिषोडशसर्गसमाप्तिश्लोक एवात्र प्रमाणम्।

(छ) १२४८ खृष्टाब्दे राजशेखरकृतप्रबन्धकोषवृत्तान्तमेव संक्षिप्येदं लिखितम्।

(ज) मुम्बयी-निर्णयसागरयन्त्र-मुद्रित-नैषधचरित प्रस्तावनायां शिलालिपेरनुलिपितः सुदृढं प्रमाणमिदमुपलब्धम्। ( " तत्रैव द्रष्टव्यः।

रचनायां हेत्वभावात्। तेन च जयचन्द्रं प्रत्येव "गोविन्दनन्दनतया—" इत्याद्य-भिधानेन च श्रीहर्षस्य विजयचन्द्रात् परवर्त्तित्वमवश्यं मन्तव्यम्। इत्थञ्च श्रीहर्षो जयचन्द्रस्यैव समसामयिकः सभापण्डितश्चासीदित्यवसीयते (झ)।

श्रीहर्षो जयचन्द्रात् परवर्त्तीत्यपि वक्तुं न शक्यते; महम्मदघोरीनामधेयेन यवनवीरेण जयचन्द्रं विजित्य कान्यकुब्जस्य राजशून्यीकरणेन "ताम्बूलद्वयमासनञ्च लभते यः कान्यकुब्जेश्वरात्" इति श्रीहर्षोक्तेरेवानुपपत्तेः।

वाराणसीकान्यकुब्जयोरधीश्वरो जयचन्द्रश्च वाराणस्यामवतिष्ठमानः १२४३ संवहर्षे (११८६ खृष्टाब्दे) भरद्वाजगोत्राय श्रनङ्गनाम्ने ब्राह्मणाय कश्चिद् ग्रामं ददौ इति शिलालिपेरनुलिपितः सुस्पष्टमुपलभ्यते (ञ)। कि खृष्टाब्दे महम्मदघोरीनाम्ना यवनवीरेण जयचन्द्रं विजित्य कान्यकु निति सर्वेषामेवैतिहासिकानां संवादः। अतः खृष्टद्वादशशताब्दीम भूतस्य जयचन्द्रस्य समसामयिकतया महाकविः श्रीहर्षोऽपि खृ मध्यभाग एव प्रादुरासीदिति निःसन्देहं निर्विवादञ्च।

यत्तु खृष्टीयैकादशशताब्दीप्रथमार्द्धप्रादूर्भूतेन भोजराजेन कण्ठाभरणे नैषधचरितश्लोकोदाहरणदर्शनात् श्रीहर्षस्तत्पूर्ववर्त्तीति तन्न, सरस्वतीकण्ठाभरणे नैषधश्लोकोदाहरणाभावात्। तदभावोऽपि भोजराजादर्वाचीनतामेव प्रमापयति।

यच्च खृष्टीयैकादशशताब्दीसञ्जातेन वाचस्पतिमिश्रेण श्रीहर्षकृतख खण्डनदर्शनात् श्रीहर्षो वाचस्पतिमिश्रात् प्राचीन इति केचित्। चस्पतिमिश्रस्यान्यत्वात् बहूनाञ्च वाचस्पतिमिश्रनामदर्शनात्।

यच्च माधवप्रणीते शङ्करविजये शङ्करेण वादे श्रीहर्षो ि नत इति दर्शनात् श्रीहर्षः शङ्कराचार्य्यसमकालीनतया सप्तमशताब्दीस्थ इत्यपरे। तदग्राह्यम्, शङ्कर-विजये उपाख्यानान्तरस्येव अस्याप्यविश्वास्यत्वात्।

यच्च चन्द्रकवेः पृथिवीराजरासौग्रन्थे "सर्पराजं शेषम्, विष्णुं व्यासम्, शुक-देवम्, नलराजयशःप्रख्यापकं श्रीहर्षम्, भोजराजवृत्तान्तप्रणेतारं कालिदासम्" इति पाठक्रमदर्शनात् श्रीहर्षः कालिदासादपि प्राचीन इति ग्रौससाहेबः। तत्तु च्छम्, भोजराजवृत्तान्तप्रणेतुः कालिदासस्य नवरत्नान्तर्गतकालिदासभिन्नत्वात्।

किञ्च "कविकुलादृष्टाध्वपान्थे" इति सप्तमसर्गसमाप्तिश्लोकस्थविशेषणेन श्रीहर्षः स्वयमेवात्मानं कालिदासादिप्रसिद्धमहाकविभ्यः परवर्त्तिनमेव सर्वथा सूचयामासेति।

---

(झ) श्रीहर्षः कान्यकुब्जाधिपतेर्जयचन्द्रस्यैव सभापण्डित आसीदिति प्रबन्धकोषे राजशेखरेणापिलिखितम्।

(ञ) मुम्बयी-निर्णयसागरयन्त्र मुद्रित-नैषधचरित-प्रस्तावनायां शिलालिपेरनुलिपिर्यथा—"... विदितमस्तु भवतां यथोपरिलिखितग्रामः ... त्रिचत्वारिंशदधिकद्वादशशततमसंवत्सरे आषाढ़े मासि शुक्लपक्षे सप्तम्यां तिथौ रविदिने ... भारद्वाजगोत्राय ... श्रीअनङ्गाय ... प्रदत्तः।"

# अथ नैषधचरितपूर्वार्द्धसर्गसंक्षेपः ।

१ । प्रारम्भे नलवर्णना, अनमुखाद्भैमीगुणाकर्णनं,
स्वल्पा घोटकवर्णना, विरहतः केलीवने प्रस्थितिः ।
तत्केलीवन-दीर्घिका-विवरणं, हंसस्य सन्धारणं,
दैन्योक्तिः, परिमुक्तिरस्य, प्रथमे वृत्तान्यमूनि क्रमात् ॥

२ । पुनरपि नलहस्ते राजहंसस्य यानं, निरुपमदमयन्त्याः सुन्दरं वर्णनञ्च ।
...कुलचिता वर्णना कुण्डिनस्य, स गतिमकृत तस्मिन्, वृत्तमित्थं द्वितीये ॥

...ये पतितः स हंसः संवर्णयामास गुणं नलस्य ।
स्वीयनलानुरागम्, अमूनि वृत्तानि तृतीयसर्गे ॥

ततः सर्गे आरम्भादासमापनम् ।
...मकन्यायाः महाकविरवर्णयत् ॥

...ालवरुणा ननु नारदोक्तेः भैमीस्वयंवरमवेत्य भुवि प्रयाताः ।
...ञ्चत नलं बहुचाटुवाक्यैः भैमीं ययौ स इति पञ्चमसर्गवृत्तम् ॥

...र्गे तरुणीः स पश्यन् स्मित्यन् मुहुः कामितयेव दैवात् ।
...कर्ण्य महेन्द्रदूत्याः आश्वस्तचित्तो नितरां बभूव ॥

७ । सप्तमे च ततः सर्गे दमयन्त्या मनोरमा ।
केशप्रभृतिपादान्ता नलकर्तृकवर्णना ॥

८ । अष्टमे च चतुर्णां सः इन्द्राग्नियमपाशिनाम् ।
दमयन्त्यन्तिके रम्यं दूत्यं सत्यगिराकरोत् ॥

९ । वैदर्भी-कृत-वंश-नाम-विषय-प्रश्नोत्तरे चातुरी
देशानामकृती च दोषकथनं, मृत्यूद्यमो निष्फलः ।
भैम्या दैन्यविलापवाक्, अथ नलस्यात्मप्रकाशो हठात्,
कन्दर्पोपनिषत्कथा च, नवमे सर्गे च वार्त्ता इमाः ॥

१० । स्वयंवरमुपागमन् नृपकुमारवर्गो रसात्,
नलाकृतिधराः सुराः, नलनृपः, मुनीनां गणः ।
कवेः समितिवर्णना, गतसरस्वतीवर्णना,
परञ्च दमयन्तिकाः दशमसर्गवृत्तं क्रमात् ॥

११ । देव्याथ ...सकिमथो, सवनञ्च, हव्यं, क्रौञ्चाधिपं, कुशपतिं, किल शाल्मलीशम् ।
अवन्तिपतिञ्च, गौडम्, एकादशे च मथुरेश-वराणसीशौ ॥

# नैषधचरितम्।



## प्रथमः सर्गः।

——:*:——

निपीय यस्य क्षितिरक्षिणः कथां (१) तथाद्रियन्ते न बुधाः
नलः सितच्छत्रितकीर्त्तिमण्डलः स राशिरासीन्महसां महोज्ज्वल

अन्वयः—बुधाः यस्य क्षितिरक्षिणः कथां निपीय सुधामपि तथा न आद्रियन्ते कीर्त्तिमण्डलः महसां राशिः महोज्ज्वलः सः नलः आसीत् ॥१॥

जयन्ती—

गङ्गातरङ्गपरिपूतजटाकलापं
भालेन्दुदीधितिविधौतललाटदेशम्।
अम्बाङ्गसङ्गजगराजविराजदङ्गं
वन्दे विभूतिपरिभूषितभूतनाथम् ॥

प्राचीनामनलङ्कृतिं गतरसां लुप्तान्वयं दुर्गमां
निर्भावां विगुणां विशेषविकलां टीकावलीं वर्जयन्।
नव्यां भव्यतमां नितान्तसुगमां सालङ्कृतिं सद्गुणां
सद्भावां कुशला यतस्व। सरसां सेवस्व टीकामिमाम् ॥

अथ भगवान् महाकविपण्डितशिरोमणिः श्रीहर्षो नैषधचरितं नाम महाकाव्यं चिकीर्षन् निर्विघ्नेन चिकीर्षितपरिसमाप्तिकामो नलनामोच्चारणरूपं मङ्गलमाचरन् "आशीर्नमस्क्रियावस्तुनिर्देशो वापि तन्मुखम्" इत्यालङ्कारिकवचनप्रामाण्यात् अतीतकाले नलवृत्तान्तरूपं वस्तु निर्दिशति—

निपीयेति। बुधाः पण्डिताः, यस्य क्षितिरक्षिणो भूपतेः, कथाम् उपाख्यानम्, निपीय सुरसत्वात् सादरं श्रुत्वा, सुधाम् ईश्वरेच्छया प्राप्तम् अमृतमपि, तथा तत्कथावत् न आद्रियन्ते न सादरं गृह्णन्ति, सुधापेक्षयापि तत्कथाया माधुर्य्यातिशयादित्याशयः। सितच्छत्रितं कीर्त्तियशसोः श्वेतवर्णतया वर्णनीयत्वात् आत्मनः श्वेतवर्णच्छत्रस्वरूपीकृतं कीर्त्तिमण्डलं दशदिग्विसारिणी शौर्य्यादिनिबन्धना आत्मन एव सुख्यातिर्येन स सितच्छत्रितकीर्त्तिमण्डलः; महसां राशिः तेजःपुञ्जस्वरूपः, महान् सातिशयः उज्ज्वलः प्रकाशरश्मी यस्य स महोज्ज्वलः, स नलः, आसीत्।

---

(१) … कथा।

**रसैः कथा यस्य सुधावधीरिणी (१) नलः स भूजानिरभूद्गुणाद्भुतः ।**
**सुवर्णदण्डैकसितातपत्रित-ज्वलत्-प्रतापावलि-कीर्त्तिमण्डलः ॥२॥**

अत्र सुधापेक्षयापि नलकथाया माधुर्य्यातिशयद्योतनेनाधिक्यप्रतिपादनात् व्यतिरेकालङ्कारः ; तथा सितच्छ-त्रितकीर्त्तिमण्डल इति निरङ्गं केवलरूपकम्, एवं मङ्गलां राशिरित्यत्रापि निरङ्गं केवलरूपकम्, इत्येतेषां परस्परनिरपेक्षतया संसृष्टिः । तथा चितिरचिता इति मङ्‌ मङ्‌ इति च व्यञ्जनसंघस्य सकृदनेकधा साम्यात् छेकानुप्रासः, एवम् एकस्य थकारस्य धकारस्य 'रा' इत्यस्य च सकृत्साम्यात् वृत्त्यनुप्रासश्च ; अनयोरपि तथैव संसृष्टिः । इतः प्रभृत्य कविशतमश्लोकं यावत् राजविषयकरतिभावः स्थायी, प्रसादो गुणः, वैदर्भी च रीतिः । ख्यातिशयप्रन्थगौरवभयादनद्य तानि लक्षणान्यपामनुसन्धेयानि ।

[श]र्मी:" "शृङ्गारः शुचिरुज्ज्वलः" इति च अमरः ।

पाने" इति दैवादिकपीधातोः क्तौ यपि रूपम् । "धेट् पा पाने" इति भौवादिकपाधा-स्यात् । सितच्छत्रं कृतमिति करोत्यर्थे नन्तात् सितच्छत्रशब्दात् कर्मणि क्तः ।

"कर्कोटकस्य नागस्य दमयन्त्या नलस्य च ।
ऋतुपर्णस्य राजर्षेः कीर्त्तनं कलिनाशनम् ॥"

॥रणस्य पुण्यजनकतयैव कलिनाशकत्वाभिप्रायात् अत्रापि नमस्कारादिवत् तस्य मङ्गलरूपत्वं

विंशत्यधिकशततमश्लोकपर्य्यन्तं वंशस्थविलं वृत्तम् "वदन्ति वंशस्थविलं जतौ जरौ"
॥

[অনুবাদ]—পণ্ডিতগণ যে রাজার উপাখ্যান সাদরে শ্রবণ করিয়া, অমৃতেরও সেরূপ [আদর ক]রেন না ; তেজঃপুঞ্জস্বরূপ এবং অত্যন্তশৃঙ্গারী নলনামে সেই রাজা ছিলেন ; [যিনি নিজে]র কীর্ত্তিমণ্ডলকে নিজের শ্বেতবর্ণ ছত্র করিয়াছিলেন ॥১।

**अन्वयः**—यस्य कथा रसैः सुधावधीरिणी, गुणाद्भुतः सुवर्णदण्डैकसितातपत्रित-ज्वलत्-प्रतापावलि-कीर्त्तिमण्डलः भूजानिः सः नलः अभूत् ॥२॥

यं कञ्चित् भावलेशमुपादाय पद्यान्तरोक्तिः श्रीहर्षमाघादीनां स्वभावः । अतएवोक्तप्रायमेवार्थं भावलेश-विशेषप्रतिपादनाय पुनराह रसैरिति । यस्य कथा उपाख्यानम्, रसाः शृङ्गारादय एव रसाः स्वादार्थाः, सुधाम् अमृतम् अवधीरयितुम् अवज्ञातुं शीलं यस्याः सा सुधावधीरिणी ; गुणैः शौर्य्यगाम्भीर्य्यदयादाक्षिण्या-दिभिः अद्भुतः तद्गुणानां सर्व्वातिरेकात् आश्चर्य्यभूतः । सुवर्णस्य दण्डः स्वर्णनिर्म्मितो दण्डो यस्य तत्र तत् एकमद्वितीयं सितातपत्रं श्वेतवर्णच्छत्रञ्चेति सुवर्णदण्डैकसितातपत्रं तत् कृतमिति सुवर्णदण्डैकसिता-तपत्रितम्, तथा ज्वलन्ती दीप्यमाना प्रतापावलिः कोषदण्डजतेजसां राशिर्यस्मिन् तत्र तत् कीर्त्तिमण्डलञ्चेति ज्वलत्प्रतापावलिकीर्त्तिमण्डलम्, सुवर्णदण्डैकसितातपत्रितं ज्वलत्प्रतापावलि कीर्त्तिमण्डलं येन स तथोक्तः, भूर्जाया यस्य स भूजानिः भूपतिरित्यर्थः, स नलः अभूत् आसीत् । ज्वलनतया पीतवर्णा प्रतापावलिरेव सुवर्ण-दण्डस्थानपातिनी, तद्युक्तं कीर्त्तिमण्डलञ्च श्वेतच्छत्रस्थानवर्त्तीत्येवाव भावविशेष इति पुनरुक्तत्वाभावः ।

अत्र शृङ्गारादिस्वादयोर्भेदेऽपि संबन्धाभेदाध्यवसायादतिशयोक्तिः, पूर्ववत् व्यतिरेकः, तथा तादृश-कीर्त्तिमण्डले सितातपत्रत्वारोपात् निरङ्गं केवलरूपकमित्येतेषां परस्परनिरपेक्षतया संसृष्टिः, छेकरूपकेण च

(१) सुधावधीरणी

**पवित्रमत्रातनुते जगद्युगे स्मृता रसक्षालनयेव यत्कथा (१)।**
**कथं न सा मद्गिरमाविलामपि स्वसेविनीमेव पवित्रयिष्यति ॥३॥**

---

ज्वलत्प्रतापाग्नौ सुवर्णदण्डस्यारोपात्मकं रूपकान्तरं व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः, तथा यथासंख्या-लङ्कारध्वनिश्च। तथा क्रमेण पादचतुष्टये धकारयोः भकारयोः तकारयोः लकारयोश्च सकृत् सकृत् साम्यात् छेकानुप्रासश्चेति समुदायेऽपि संसृष्टिः। स नलः अमूदित्यत्रैव वाक्यसमाप्तौ, पुनर्नल इत्यस्य विशेषणतया द्वितीयार्द्धोपादानात् समाप्तपुनरात्ततादोषः। तत्परिहाराय च श्लोक एवं पठनीयः 'सुवर्णदण्डैकसितात-पवित-ज्वलत्प्रतापावलिकीर्त्तिमण्डलः। गुणाद्भुतो भूभृदभूत्नलाभिधो रसैः कथा यस्य सुधावधीरणी।" एतत्पाठे यच्छब्दस्य उत्तरवाक्यगततया तच्छब्दानपेक्षणात् न न्यूनपदता न वा विधेयावि-[illegible] जानाति यत् पापम्" इति दर्पणोदाहरणवत्। माधुर्य्यं गुणः, पाञ्चाली च रीतिः।

"रसः स्वादे जले वीर्य्ये" इत्यादि हैमः।

भूजानिरिति "नित्यं जायाया जानिः स्यात्" इति जायाशब्दस्य जानिरादेशः। करोत्यर्थे ण्यन्तात् सितातपत्रशब्दात् कर्म्मणि क्तः ॥२॥

बाङ्गाला—याहार उपाख्यान, रसेर गुणे अमृतकेও अवज्ञा का[illegible] [illegible]गुणवशतः लोकेर विस्मयजनक नलनामे सेइ राजा छिलेन; [illegible]युक्त आपन कीर्त्तिमण्डलकेइ स्वर्णदण्डयुक्त आपन श्वेतच्छत्र करियाछिले[illegible]

**अन्वयः**—अत्र युगे यत्कथा स्मृता (सती) रसक्षालनया इव जगत् पवि[illegible] लाम् अपि स्वसेविनीम् एव मद्गिरं कथं न पवित्रयिष्यति ॥३॥

आत्मगर्वं परिहर्त्तुमाह पवित्रमिति। अत्र कलौ युगे, या यस्य कथा च[illegible] उपाख्यानम्, स्मृता सती, रसाः शृङ्गारादय एव रसा जलानि तैः क्षालनया मार्ज्जना[illegible] आतनुते सम्यक् करोति; सा कथा, आविलां नानादोषकलुषिताम् अपि, स्वमात्मानं सेवते वर्णनया उपास्ते इति स्वसेविनी तां तादृशीमेव, मद्गिरं मम वाचम्, कथं न पवित्रयिष्यति पवित्राम् अश्लीलाद्यभिधानमिथ्या-लपापदोषरहितां न करिष्यति, अपि तु अवश्यमेव पवित्रयिष्यतीत्यर्थः। तथा च यः पदार्थः साक्षाद-सम्बद्धमपि व्यापकं साधयितुमर्हति, स अवश्यमेव नियतसम्बद्धं व्याप्यं साधयितुमर्हति; तेन साक्षा-दसम्बद्धसमस्तजगत्पवित्रीकरणशक्तिमती नलकथा उपासकतया नियतसम्बद्धां मद्गिरमवश्यमेव पवि-त्रयेदिति भावः।

अत्र शृङ्गारादिभिः सह जलस्य भेदेऽपि श्लेषेणाभेदाध्यवसायादतिशयोक्तिः, क्रियोत्प्रेक्षा च अनयोरेका-श्रयानुप्रवेशरूपः सङ्करः; तथा यतः स्वसेविनी अतोऽवश्यमेव पवित्रयिष्यतीति पदार्थहेतुकं काव्यलिङ्गम्, अर्थापत्तिश्च, अनयोः परस्परनैरपेक्ष्यात् संसृष्टिः। 'व' 'म' इति व्यञ्जनसंघस्य सकृदनेकधा साम्यात् छेकानु-प्रासः, जयोरेकतालव्यत्वात् श्रुत्यनुप्रासश्च इति समुदायेऽपि संसृष्टिः। संसृष्टिसङ्करयोरपि पुनः संसृष्टिसङ्करौ सम्भवत इति समर्थितमस्माभिः साहित्यदर्पणटीकायाम्। प्रसादो गुणः, वैदर्भी च रीतिः।

शङ्खः पाण्डुर एव इत्यादिवत् स्वायोगव्यवच्छेदने एवशब्दः। पवित्रां करिष्यतीति करोत्यर्थे ण्यन्तात् पवित्र-शब्दात् ण्यतिः। ननु पवित्रयिष्यतीत्यस्य अन्तर्भावितकर्म्मकतया "अन्तर्भावितकर्म्मकधातोरकर्म्मकत्वम्" इति नियमात् कथं मद्गिरमित्यस्य कर्म्मत्वम्? इति चेन्न अकर्म्मकत्वमित्यत्र कर्म्मपदं प्राधान्यात् विधेय-

---

(१) स्मृता रसक्षालनयेव यत्कथा. श्रुता रसक्षालनयेव तत्कथा

**अधीतिबोधाचरणप्रचारणैर्दशाश्चतस्रः प्रणयन्नुपाधिभिः ।**
**चतुर्दशत्वं कृतवान् कुतः स्वयं न वेद्मि विद्यासु चतुर्दशस्वयम् ॥४॥**

---

कर्म्मपरम् । तेन पक्षान्निर्विष्टकर्म्मकाधातोः विधेयकर्म्म न भवतीत्यर्थः नहि भवति कलिं पावयतीति प्रयोगः । ततश्च मद्गिरमित्यस्य चर्ह्यकर्म्मतया न दोषः ।

"पुण्यश्लोको नलो राजा पुण्यश्लोको युधिष्ठिरः ।
पुण्यश्लोका च वैदेही पुण्यश्लोको जनार्द्दनः ॥"

इति स्मृतेः, "कर्कोटकस्य नागस्य" इत्यादुक्तस्मृतेश्च नलचरितस्य पवित्रताजनकत्वमवधेयम् ॥३॥

।—এই কলিযুগে যে উপাখ্যান শুনিলে পর, সে জন দ্বারা প্রক্ষালন করিয়াই পবিত্র করিয়া থাকে; আমার বাক্য দোষকলুষিত হইলেও নিজের সেবা ।, সে উপাখ্যান আমার বাক্যকে কেন পবিত্র করিবে না ॥৩॥

अयम् अधीतिबोधाचरणप्रचारणैः उपाधिभिः चतस्रः दशाः प्रणयन् (सन्) चतुर्दशसु ...र्दशत्वं कृतवान् (इति) न वेद्मि ॥४॥

...विद्याभ्यासित्वं प्रतिपादयितुमाह अधीतीति । अयं नलः, अधीतिरध्ययनम् गुरुमुखात् श्रव- ...णम्, आचरणं बोधानुसारेण कर्म्मानुष्ठानम्, प्रचारणं लोकसमाजे प्रकाशनम्, तैश्चतुर्भिः ..., चतस्रो दशाः अवस्थाः, प्रणयन् कुर्व्वन् सन्, चतुर्दशसु शिक्षाकल्पादिभिः चतुर्द्दशसंख्याका- स्वयम् आत्मना, कुतः केन प्रकारेण, चतुर्द्दशत्वं केवलचतुर्द्दशसंख्याशालित्वम्, कृतवान् इति ... न बुध्ये; चतुर्द्दशानां चतुर्गुणत्वे षट्पञ्चाशत्संख्यत्वादिति भावः । अतएव च विरोधः; अवस्था यासां ताश्चतुर्द्दशाः तासां भाव इति चतुर्द्दशत्वम्, अधीत्याद्युक्तचतुरवस्थावत्त्वमिति च तद्वि- ...। समाधानपक्षे न वेद्मीति काकुवशात् वेद्मि एवेत्यर्थः ।

...रवात् विरोधाभासोऽलङ्कारः । तथा प्रथमचरणे एकस्य धकारस्य सकृत्साम्यात् छेकानुप्रासः, रच-रच इति व्यञ्जनसङ्घस्यानेकधासाम्यात् वृत्त्यनुप्रासः, स्वयं स्वयमित्यन्त्ययमकञ्च, इत्येतेषां मिथोनिरपेक्षतया संसृष्टिः । ओजो गुणः, गौडी च रीतिः ।

"उपाधिर्धर्म्मचिन्तायां कैतवेऽपि विशेषणे" इति विश्वः । विशेषणमेव च प्रकारः ।

कुत इति "सर्व्वविभक्तिभ्यस्तस्" इति तृतीयान्तात् किंशब्दात् तस् । समाधानपक्षे चतुर्द्दशत्वमिति "त्वतलो- र्गुणवचनस्य" इति पुंवद्भावः ।

चतुर्द्दश विद्या उक्ताः प्रायश्चित्ततत्त्वधृतविष्णुपुराणे—

"शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चितिः ।
ज्योतिषामयनञ्चैव वेदाङ्गानि वदन्ति षट् ॥
अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः ।
धर्म्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्द्दश ॥४॥"

বাঙ্গালা—প্রথমে শাস্ত্র অধ্যয়ন, তাহার পর তাহার অর্থজ্ঞান, তৎপরে তদনুসারে কর্ম্মানুষ্ঠান এবং তাহার পরে তাহা লোকসমাজে প্রচার করা, এই চারি প্রকারে চারিটী অবস্থা করিয়া, নল নিজেই কিপ্রকারে যে চতুর্দ্দশ বিদ্যাতে চতুর্দ্দশত্ব করিয়াছিলেন তাহা আমি বুঝি না ॥৪॥

अमुष्य विद्या रसनाग्रनर्त्तकी त्रयीव नीताङ्गगुणेन विस्तरम् ।
अगाहताष्टादशतां जिगीषया नवद्वयद्वीपपृथग्जयश्रियाम् ॥५॥
दिगीशवृन्दांशविभूतिरीशिता दिशां स कामप्रसराबरोधिनीम् ।
बभार शास्त्राणि दृशं द्वयाधिकां निजत्रिनेत्रावतरत्वबोधिकाम् ॥६॥

---

**अन्वयः**—अमुष्य रसनाग्रनर्त्तकी विद्या, त्रयी इव अङ्गगुणेन विस्तरं नीता (सती) नवद्वयद्वीपपृथग्-जयश्रियां जिगीषया (इव) अष्टादशताम् अगाहत ॥५॥

नन् त्रैलोकीन नलस्य चतुर्द्दशविद्याधिगमो प्रतिपादितेऽपि तदितरविद्याणाभि-त्वादित्याह अमुष्येति । अमुष्य नलस्य, रसनाग्रे जिह्वाग्रान्ते नर्त्तकी इव विद्यमाना शास्त्रज्ञानम्, त्रयी श्रुतिरिव, अङ्गानां शिक्षाभ्यासादुपायानां व्याकरणादीनां च विस्तरं बाहुल्यम्, नीता प्रापिता सती, नवद्वयम् अष्टादश च ते द्वीपाश्चेति तेषु च भिन्नभिन्ना विजयलक्ष्म्याः तासाम्, जिगीषया तत्पर्य्यन्तात् जेतुमिच्छया इव, अष्टादश अगाहत प्राप्तवती । अतो नलस्य सर्व्वविद्याधिगम एवासीदिति भावः ।

अत्र रसनाग्रे नर्त्तकीभूतायाः स्त्रिया विद्यमानत्वासम्भवात् रसनाग्रेति पदर्म याश्च साधकमिति लुप्तोपमा, त्रयीवेति च पूर्णोपमा, विद्याया जिगीषाया असम्भवेन सात्मा गुणोत्प्रेक्षा, तथा चतुर्थचरणे 'द' 'य' इति व्यञ्जनानामनेकधा सकृत् साम्य स्वरवर्णनिरपेक्षतया संसृष्टिः । ओजो गुणः, पाञ्चाली च रीतिः ।

"अङ्ग' गात्रान्तिकोपायप्रतीकेष्वप्रधानके । अङ्गा देशविशेषे स्युरङ्ग नृत्यं शिल्पसद्म। इति नर्त्तकी कृते: "शिल्पिनि ष्वुन्" ।

जम्बूप्रभृतयः सप्त द्वीपाः लङ्काप्रभृतयश्चैकादश उपद्वीपा इति मिलित्वा चतुर्द्दश विद्याः पूर्व्वमुक्ताः । अपराश्च तथैव विष्णुपुराणे—

"आयुर्व्वेदो धनुर्व्वेदो गान्धर्व्वश्चेति ते त्रयः ।
अर्थशास्त्रं चतुर्थञ्च विद्या ह्यष्टादशैव ताः" ॥५॥

**বাঙ্গালা**—নলের জিহ্বাগ্রে নর্ত্তকীর ন্যায় বিদ্যা বিদ্যমান থাকিত এবং ব্যাকরণাদি অঙ্গশাস্ত্রের গুণে বেদ যেমন বিস্তৃতি লাভ করিয়াছে; তাঁহার বিদ্যাও তেমন শিক্ষা ও অভ্যাসাদির গুণে বিস্তৃতি লাভ করিয়াছিল এবং অষ্টাদশ দ্বীপেই নলের বিজয়লক্ষ্মী ভিন্ন ভিন্ন ভাবে ছিল; তাহাদিগকে জয় করিবার ইচ্ছাতেই যেন সেই বিদ্যা অষ্টাদশ সংখ্যা প্রাপ্ত হইয়াছিল ॥৫॥

**অন্বয়:**—दिगीशवृन्दांशविभूतिः दिशाम् ईशिता सः कामप्रसराबरोधिनीं निजत्रिनेत्रावतरत्व-बोधिकां द्वयाधिकां शास्त्राणि दृशं बभार ॥६॥

तस्य शास्त्रज्ञानजनितमुपकारमाह दिगीशेति । दिगीशवृन्दस्य इन्द्रादिदिक्पालगणस्य अंशेन विभूतिरुत्-पत्तिर्यस्य सः, "अष्टाभिश्च सुरेन्द्राणां मात्राभिर्निर्म्मितो नृपः ।" इति मनुवचनादित्याशयः । अथवा तु दिगीशवृन्दस्य अंशे इन्द्रभागे मुख्यत्वात् मसवो इत्यर्थः; विभूतिरैश्वर्यं यस्य सः, दिशाम् ईशिता समग्र-पृथिवीपतित्वात् सर्व्वासामेव दिशां शासिता ; अथवा तु बहिश्वरत्वादेव सर्व्वासां दिशामपि ईशिता ईश्वरः, स नलः, कामप्रसरस्य स्वेच्छाचारस्य अवरोधिनीं निवर्त्तिकाम्, शास्त्राणां तत्पर्य्येव वशवर्त्ती कलादिति भावः ; अथवा

पदैश्चतुर्भिः सुकृते स्थिरीकृते कृतेऽमुना के न तपः प्रपेदिरे ।
भुवं यदेकाङ्घ्रिकनिष्ठया स्पृशन् दधावधर्मोऽपि कृशस्तपस्विताम् ॥७॥

---

न्तु कामप्रसरस्य आत्मनः प्रकाशाय कामीयमस्य अवरोधिनीं तृतीयनयनेनैव तद्व्याजात् निवारयित्रीम्; निजस्य स्वकीयस्य विनेशावतरत्वस्य महादेवावतारत्वस्य बोधिकां ज्ञापिकाम् महादेवस्यापि त्रिनेत्रत्वादित्यभिप्रायः; द्वयाधिकां द्वाभ्यामतिरिक्तां तृतीयामित्यर्थः; शास्त्राणि दृशं सर्वशास्त्रस्वरूपं नयनम्, बभार धृतवान् । कामप्रसरावरोध एव शास्त्रज्ञानजनितो महानुपकार इति बोध्यम् ।

अत्र "मुखं तव कुरङ्गाक्षि ! सरोजमिति नान्यथा" इति दर्पणोदाहृतवत् शास्त्राणि दृशमिति समासाद्विऽपि निरङ्गं केवलरूपकम्; तन्नृतविच्छित्त्या च नलः विनेशावतारः नेत्रत्रयशालित्वादिति नेत्रत्रयात्मकस्य विनेशावतारत्वरूपसाध्यस्य अनुमानमात्मालङ्कारः । तथा एकस्य प्रकारस्य असकृत्साम्यात् छेकानुप्रास-संसृष्टिः । तथा शास्त्राणि दृशं बभार इत्यन्तेनैव वाक्यसमाप्तौ पुनर्दृशमित्यस्य विशेषणतया चतुर्थपादानात् समाप्तपुनरात्तत्वादोषः स च तृतीयचरणस्थाने चतुर्थचरणं पठित्वा समाधेयः । तालव्यप्रमः, पाञ्चाली च रीतिः ।

"स्मरः पतिरीशिता" "दृग् दृष्टिः" इति च अमरः ।

अवतरणीत्यवतरः तरतेः पचादित्वादच् । अथवा अवतीर्य्यते अनेनेति करणे अल् प्रत्ययः, "स्वरवृहृगमिश्च" इत्यत्र "दीर्घादलिव" इति नियमात् ॥६॥

বাঙ্গালা—দিক্‌পালগণের অংশসম্ভূত এবং সমস্ত দিকের অধিপতি নল, স্বেচ্ছা-চার নিবর্ত্তক এবং আপনি যে মহাদেবের অবতার তাহারই বোধক, তৃতীয় অধিক শাস্ত্ররূপ নয়ন ধারণ করিতেন ॥৬॥

অন্বয়ঃ—অমুনা চতুর্ভিঃ পদৈঃ সুকৃতে স্থিরীকৃতে (সতি) কৃতে কে তপঃ ন প্রপেদিরে । যত্ একাঙ্ঘ্রি-কনিষ্ঠয়া ভুবং স্পৃশন্ কৃশঃ অধর্ম্মঃ অপি তপস্বিতাং দধৌ ॥৭॥

न केवलमसौ शास्त्रज्ञः, अपि तु धर्म्मप्रवर्त्तकः अधर्म्मनिवर्त्तकश्चासीदित्याह पदैरिति । अमुना नलेन, चतुर्भिः पदैः ध्यान-यज्ञ तपो-दानरूपैः चतुर्भिः पादैः सुकृते पुण्याकारे धर्म्मे, स्थिरीकृते उपदेशशासनादिना निश्चलीकृते सति, कृते सत्ये युगे, के जनाः, तपो धर्म्मम् न प्रपेदिरे न प्राप्तवन्तः, अपि तु सर्व एव तपः प्रपेदिरे इत्यर्थः । कथमिदं ज्ञातमित्याह यत् यस्मात्, एकस्य अङ्घ्रेः चरणस्य कनिष्ठया अङ्गुल्या लेशमात्रेण च भुवं पृथिवीम्, स्पृशन् सम्बध्नन् गच्छंश्च, अतएव कृशः लोकैरनवलम्बनात् स्वल्पप्रभावः अनाहारादिना क्षीणदेहः अधर्म्मः अपि तपस्वितां दीनत्वमेव तपस्वितां धर्म्मवत्ताम्, दधौ धृतवान् ।

अत्र प्रथमार्द्धे छेकानुप्रासार्थापत्त्योः संसृष्टिः; द्वितीयार्द्धे तु कार्श्ये च अधर्म्मे कस्यचिदेकचरणकनिष्ठाङ्गुल्या दण्डायमानस्य तपस्विनो व्यवहारसमारोपात् समासोक्तिः, दैन्यधर्म्मयोर्भेदेऽपि श्लेषेणाभेदाध्यवसायादतिशयोक्तिः, तथा अधर्म्मोऽपि धर्म्मं दधाविति विरोधाभासश्च, इत्येतेषामङ्गाङ्गिभावेन सङ्करः इति समुदाये संसृष्टिः । असाधारणविशेषणेनैव विशेष्यप्रतीतिरित्यमरकोषटीकायां रघुनाथसिद्धान्तादय कनिष्ठापदेनैव कनिष्ठाङ्गुलीप्रतीतेर्न न्यूनपदतादोषः । प्रसादो गुणः, पाञ्चाली च रीतिः ।

"स्याद्धर्म्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः ।" "दीनश्रीच्यौ तपस्विनौ ।" इति च अमरः । "कृतं युगेऽलमर्थे स्यात् विहिते हिंसिते त्रिषु ।" "तपो लोकान्तरेऽपि च । चान्द्रायणादौ धर्म्मे च पुमान् शिशिरमाघयोः ।" इति च मेदिनी ।

**यदस्य यात्रासु बलोद्धतं रजः स्फुरत्प्रतापानलधूममञ्जिम।**
**तदेव गत्वा पतितं सुधाम्बुधौ दधाति पङ्कीभवदङ्कतां विधौ ॥८॥**
**स्फुरद्धनुर्निस्वनतद्घनाशुग-प्रगल्भवृष्टिव्ययितस्य सङ्गरे।**
**निजस्य तेजःशिखिनः परःशता वितेनुरङ्गारमिवायशः परे (१) ॥९॥**

---

नलस्य त्रेतायुगीयतया धर्म्म त्रिपदमसमग्रमिति प्राचामनेकेषामाशयः। तत्र चन्द्रवंशीयवीरसेनपुत्रस्य एतत्-काव्यनायकस्य नलस्य सत्ययुगीयत्वात्, "सुधांशुवंशस्य करीरमेव माम्" इति नवमसर्गे स्वयमेव चन्द्रवंशीय-त्वस्य वक्ष्यमाणत्वात्, "चवयम्याधिभावानां प्रतीकारो भवेद्यदि। प्रतिकुर्य्युर्न किं इति युगक्रमाभिधानेन नलस्य सत्ययुगीयत्वं वावगमात्, श्रीरामवंशीयनलस्यैव च वे।

বাঙ্গালা—মহারাজ নল ধ্যান, যজ্ঞ, তপস্যা ও দান এই চারি স্থিরভাবে স্থাপিত করিলে, সত্যযুগে কোন্ ব্যক্তি ধর্ম্মাচরণ না করি চরণের কেবল কনিষ্ঠাঙ্গুলী দ্বারা ভূতল স্পর্শ করতঃ, কৃশ অধর্ম্ম ছিল ॥৭॥

**अन्वयः**—अस्य यात्रासु स्फुरत्प्रतापानलधूममञ्जिम यत् रजः बलोद्धतं पतितं (भूत्वा) पङ्कीभवत् (सत्) विधौ अङ्कतां दधाति ॥८॥

अस्य सैन्यप्राचुर्य्यं प्रतिपादयति यदिति। अस्य नलस्य, यात्रासु दिग्विजय प्रताप एव अनलः अग्निः दाहकत्वादग्निः तस्य यो धूमः तस्य इव मञ्जिमा मञ्जुत्वं निकि तयोक्तम्, यत् रजो धूलिः बलैः अश्वपदातिप्रभृतिभिः उद्धतम् उत्तोलित सुधाम्बुधौ क्षीरोदसागरे, पतितं भूत्वेति शेषः, पङ्कीभवत् अतीवप्राचुर्य्यात् कर्द्दम अङ्कतां मलिनचिह्नताम्, दधाति धारयति। तथा च चन्द्रे यदयं कलङ्को दृश्यते, नायमपरः पदार्थः; किन्तु नलस्य युद्धयात्राकाले अश्वखुररथचक्रादिभिर्यत् धूलिजालमुत्थापितम्, तदेव, गत्वा क्षीरोदसागरे पतित्वा स्वप्राचुर्य्यात् कर्द्दमतां प्राप्तम्। तस्मिन्नेव च समये तत्र सागरे चन्द्रो जातः, तदा च स कर्द्दमस्तदङ्गे लग्नः, स एव च लोकैः कलङ्क इत्याख्यायते इति सरलार्थो भावार्थश्च।

अत एतत् असम्बन्धे सम्बन्धरूपा अतिशयोक्तिरलङ्कारः, तेन चास्य सैन्यप्राचुर्य्यं व्यज्यत इत्यलङ्कारेण वस्तु-ध्वनिः; तथा द्वितीयचरणे निरङ्गं केवलरूपकं लुप्तोपमा च इत्यं तेषां गुणप्रधानभावेनाङ्गाङ्गिभावात् सङ्करः; तथा द्वितीयचरणे एकस्य मकारस्य असकृत् साम्यात् छेकानुप्रासः, चतुर्थचरणे च पङ्काङ्केति व्यञ्जनद्वयस्य अनेकधा सकृत् साम्यात् छेकानुप्रास इति समुदाये संसृष्टिः। माधुर्य्यं गुणः, पाञ्चाली च रीतिः।

मञ्जीभाव इति मञ्जिमा पृथ्वादित्वाद्भावे इमन् प्रत्ययः ॥८॥

বাঙ্গালা—নলের যুদ্ধযাত্রার সময়ে, দীপ্যমান প্রতাপানলের ধূমের ন্যায় মনোহর যে ধূলিজাল সৈন্যেরা, (ভূতল হইতে) উঠাইয়াছিল, তাহাই গিয়া, ক্ষীরোদসাগরে পড়িয়া, একেবারে কর্দ্দমতা প্রাপ্ত হইয়া, চন্দ্রে কলঙ্করূপতা ধারণ করিতেছে ॥৮॥

**अन्वयः**—परःशताः परे सङ्गरे स्फुरद्धनुर्निस्वनतद्घनाशुगप्रगल्भवृष्टिव्ययितस्य निजस्य तेजःशिखिनः अङ्गारमिव अयशः वितेनुः ॥९॥

न केवलमस्य सैन्यप्राचुर्य्यमासीत्, स्वयमप्ययं महायोद्धा इत्याह स्फुरदिति। शतात् परे इति परःशताः शता-

---

(१) वितेनुरिङ्गालमिव …।

নিবারিতাস্তেন মহীতলেঽখিলে নিরীতিভাবং গমিতেঽতিবৃষ্টয়ঃ।
ন তত্যজুর্নূনমনন্যবিশ্রমাঃ প্রতীপভূপালমৃগীদৃশাং দৃশঃ ॥১১॥
সিতাম্বুবর্ণৈর্বয়তি স্ম তদ্গুণৈর্মহাসিবেম্নঃ সহকৃত্বরী বহুম্ (১)।
দিগঙ্গনাঙ্গাবরণং (২) রণাঙ্গনে যশঃপটং তদ্ভটচাতুরীতুরী ॥১২॥

---

তখন সেই অগ্নিতে তাঁহার প্রতাপানলও উজ্জ্বল হইয়া উঠিত এবং সেই প্রতাপানলের তেজে সমগ্র ভূমণ্ডলও উজ্জ্বল হইয়া যাইত ; এই অবস্থায় সেই প্রতাপানল ভূমণ্ডল প্রদক্ষিণ করিয়া তাঁহার জয়ের জন্য যে আরতি করিত, তাহাতে তিনি শোভা পাইতেন ॥১০॥

অন্বয়ঃ—তেন অখিলে মহীতলে নিরীতিভাবং গমিতে (সতি), নিবারিতাঃ (অতএব) অনন্যবিশ্রমাঃ অতিবৃষ্টয়ঃ প্রতীপভূপালমৃগীদৃশাং দৃশঃ নূনং ন তত্যজুঃ ॥১১॥

নলস্য প্রজারক্ষকত্বং প্রভুত্বঞ্চাহ নিবারিতা ইতি। তেন নলেন, অখিলে ঈতয়ঃ অতিবৃষ্টিপ্রভৃত্যুৎপাতা অস্মিন্ ন সন্তীতি তস্য ভাবম্ অতিবৃষ্টিপ্রভৃত্যুৎপাতরহিতত্বম্ অনুষ্ঠানপ্রয়োগাদিনা প্রাপিতে সতি, নিবারিতাস্তেন নিবর্তিতাঃ অতিবৃষ্টয়ঃ বিশ্রমো বিশ্রামস্থানং ন বিদ্যতে অন্যো বিশ্রমো যাসাং তাদৃশ্যঃ সত্যঃ, প্রতীপভূপালমৃগীদৃশাং শত্রুনৃপরমণীনাম্, দৃশশ্চক্ষূংষি, নূনং ন তত্যজুঃ ন ত্যক্তবত্য ইত্যর্থঃ নয়নেভ্যঃ অনবরতমেব অশ্রুজলধারাপাতাদিতি ভাবঃ।

অত্র নিবারিতা অপি ন তত্যজুরিতি বিরোধাৎ নয়নজলপরতয়া চ তৎসমাধানাৎ বিরোধাভাসোঽলঙ্কারঃ নয়নজলানাঞ্চ নিঃসৃতৌঽপি ঈদৃশ্যা অতিশয়োক্ত্যধ্যবসায়াদুৎপ্রেক্ষা ; নূনম্ ইত্যাদিনা ক্রিয়োৎপ্রেক্ষা ; তথা প্রতীপভূপালবধকার্য্যে চ নলপতিসংবন্ধপ্রকারবর্ণনং "অন্যাঃ" ইত্যাদিরূপং প্রকারবশাৎ পর্য্যায়োক্তঞ্চ, এষাং তেষামঙ্গাঙ্গিভাবেন সঙ্করঃ। প্রসাদো গুণঃ, রীতিঃ।

বিশ্রম ইতি বিপূর্ব্বশ্রমির্ঘঞি "ন চেটোঽমকস্যাবমিকমিচমাম্" ইত্যত্র অনিষেধাৎ ন দোষঃ।

ঈতয়শ্চ "অতিবৃষ্টিরনাবৃষ্টিঃ শলভা মূষিকাঃ খগাঃ।
প্রত্যাসন্নাশ্চ রাজানঃ ষড়েতা ঈতয়ঃ স্মৃতাঃ" ॥১১॥

বাঙ্গালা—মহারাজ নল, সমগ্র ভূমণ্ডলকে ঈতি(উৎপাত) শূন্য করিলে, অতিবৃষ্টি নিবারিত হইয়াছিল বটে ; কিন্তু তাহার অবস্থানের অন্য স্থান না থাকায় সে অতিবৃষ্টি, বিপক্ষরাজাদের রমণীগণের নয়ন পরিত্যাগ করিয়াছিল না ; ইহা আমি মনে করি ॥১১॥

অন্বয়ঃ—তদ্ভটচাতুরীতুরী মহাসিবেম্নঃ সহকৃত্বরী (সতী), রণাঙ্গনে সিতাম্বুবর্ণৈঃ তদ্গুণৈঃ দিগঙ্গনাঙ্গাবরণং বহু যশঃপটং বয়তি স্ম ॥১২॥

নলস্য যশঃ সমরজিতমাপাদয়ন্নাহ সিতাম্বিতি। তস্য নলস্য ভটানাং যোদ্ধৃণাং চাতুরী সমরকৌশলমেব তুরী বস্ত্রবয়নোপকরণবিশেষঃ, মহানসিরেব বেমা তস্য দীর্ঘত্বাৎ বস্ত্রবয়নসাধনবিশেষস্তস্য সহকারিণী সতী, রণাঙ্গনে সমরভূমৌ, সিতাম্বুবর্ণৈ শ্বেতাঃ শুভ্রবর্ণা ইত্যর্থঃ,

---

(১)···বহু···।  (২) দিগঙ্গনাঙ্গাবরণং···।

**तदोजसस्तद्यशसः स्थिताविमौ वृथेति चित्ते कुरुते यदा यदा ।**
**तनोति भानोः परिवेशकैतवात् तदा विधिः कुण्डलनां विधोरपि ॥१४॥**
**अयं दरिद्रो भवितेति वैधसीं लिपिं ललाटेऽर्थिजनस्य जाग्रतीम् ।**
**मृषा न चक्रेऽल्पितकल्पपादपः प्रणीय दारिद्र्यदरिद्रतां नृपः ॥१५॥**

**अन्वयः**—विधिः तदोजसः तद्यशसः स्थितौ, इमौ वृथा इति यदा यदा चित्ते कुरुते ; तदा परिवेशकैतवात् भानोः विधोः अपि कुण्डलनां तनोति ॥१४॥

युगपदेव नलस्य महातेजस्वित्वं महायशस्वित्वञ्च प्रतिपादयितुमाह तदोजस इति । विधिः नलस्य ओजसस्तेजसः, तथा तस्य नलस्य यशसश्च, स्थितौ विद्यमानतायां सत्याम्, इमौ वृथा निष्फलौ, नलतेजसैव सूर्य्यकार्य्यसिद्धेः नलयशसैव च चन्द्रकार्य्यसिद्धेरिति भावः ; इति चित्ते कुरुते भावयतीत्यर्थः ; तदा तस्मिन् तस्मिन् काले परिवेशकैतवात् परिधिच्छलात् भानोः रवेः विधोरपि चन्द्रस्य च कुण्डलनां निष्फलत्वसूचकं बहिर्गोलाकारचिह्नम्, तनोति करोति ; लिखितस्य वाक्यस्य निष्फलत्वसूचकं गोलाकारचिह्नं करोति तद्वदित्याशयः ।

अत्र एतौ 'वृथौ' कार्य्ये च लेखकव्यवहारसमारोपात् समासोक्तिः ; तात्पर्य्यमात्रतया अतथाभूतस्याऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ; प्रसिद्धोपमानभूतस्य सूर्य्यस्य चन्द्रस्य च प्रतीपम् ; तथा प्रकृतपरिवेशनिषेधेन कुण्डलनारोपणादपह्नुतिश्च ; प्रथमे तृतीये च चरणे च छेकानुप्रासश्च एतेषां परस्परनिरपेक्षतया संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः । तदेत्यवीप्सितोऽपि सामर्थ्यात् वीप्सार्थं गमयति ॥१४॥

**বাঙ্গালা**—মহারাজ নলের তেজ থাকিতে সূর্য্যের থাকা নিষ্ফল এব থাকিতে চন্দ্রের থাকা নিষ্প্রয়োজন এইরূপ যখন যখন বিধাতা মনে করেন তিনি পরিবেশচ্ছলে (সূর্য্যমণ্ডল ও চন্দ্রমণ্ডলের ছলে) সূর্য্য ও চন্দ্রের কুণ্ডলনা (ব্রাকেট) দিয়া থাকেন ॥১৪॥

**अन्वयः**—अल्पितकल्पपादपः नृपः दारिद्र्यदरिद्रतां प्रणीय अर्थिजनस्य ललाटे जाग्रतीम् 'अयं दरिद्रः भविता' इति वैधसीं लिपिं मृषा न चक्रे ॥१५॥

पद्यद्वयेन नलस्य दातृत्वं वर्णयति अयमिति । अल्पितः अप्रार्थितार्थस्यापि प्रदानात् न्यूनीकृतः, कल्पपादपः प्रार्थितार्थमात्रप्रदायी कल्पवृक्षो येन स तादृशः, नृपः प्रकरणात् राजा नलः, दारिद्र्यस्य प्रार्थिजनानां निर्धनत्वस्य दरिद्रताम् अभावम्, प्रणीय विधाय, अर्थिजनस्य प्रार्थिलोकस्य, ललाटे जाग्रतीं सर्वदा विद्यमानाम्, अयं जनः दरिद्रो भविता भविष्यति, इति इत्थम्, वैधसीं विधातृसम्बन्धिनीम्, लिपिं लिखितवर्णावलीम्, मृषा मिथ्या, न चक्रे न कृतवान्, विधिलिपिलङ्घनस्य असाध्यत्वादशक्यत्वाच्च तां सत्यामेव कृतवानित्यर्थः । अतोऽसौ महादातेत्याशयः ।

अत्र निर्धनार्थे विधातृप्रयुक्तस्य दरिद्रपदस्य श्लेषद्वारा कविना दारिद्र्याभावार्थकल्पकरणात् वक्रोक्तिरलङ्कारः, तथा अल्पितकल्पपादप इत्यनेन उपमानकल्पवृक्षापेक्षया उपमेयनलस्याधिक्यवर्णनात् व्यतिरेकः, तथैव तत्पदे छेकानुप्रासश्चेति व्यतिरेकच्छेकानुप्रासयोरेकाश्रयानुप्रवेशरूपः सङ्करः, सोऽपि च वक्रोक्त्या संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ।

वैधसीमिति । वेधस इयमिति वैधसी ताम् । अण्; ततः ङीप् अल्पित, करोत्यर्थे णिजन्तादल्पशब्दात्

लतावलालास्यकलागुरुस्तरु-प्रसूनगन्धोत्करपश्यतोहरः ।
असेवतामुं मधुगन्धवारिणि प्रणीतलीलाप्लवनो वनानिलः ॥१०६॥
अथ स्वमादाय भयेन मन्थनात् चिरत्नरत्नाधिकमुच्चितं चिरात् ।
निलीय तस्मिन्निवसन्नपां निधिः वने तडागो ददृशेऽवनीभुजा (१) ॥१०७॥

---

इति संभावनयेत्यर्थः, करेण पाणितलेन, निजकेतनं स्वकीयध्वजभूतं कामदेवस्य मीनकेतनत्वादिति भावः, अन्यत्र तु निजकेतनम् आत्मनश्चक्रवर्त्तित्वचिह्नभूतम्, मीनं मत्स्यम्, दधत् धारयन्, तथा मित्रं सखायम्, मधुं वसन्तम् अनुसरन् अनुगच्छन्, अरः कामदेव इवं स नलः, व्यतर्कि तर्कितः लोकैरिति शेषः, तादृशसुन्दरत्वादित्यभिप्रायः ।

अत्र वाच्या भावाभिमानिनी इत्यौतम्र्प्यालङ्कारः इत्यनुप्रासश्छेकानुप्रासश्च, इत्येतेषां संसृष्टिः । गुणरीती पूर्ववत् ।

"केतनन्तु निमन्त्रणे गृहे केतौ च कृत्ये" इति मेदिनी । "केतनं सदने चिह्ने कृत्ये चोपनिमन्त्रणे" इति हेमचन्द्रः ॥१०५॥

বাঙ্গালা—সকল ঋতুর লক্ষণযুক্ত সেই উদ্যানে বৃক্ষের আলবালের জলে ছাড়িয়া দিবেন মনে করিয়া, আপনার ধ্বজস্বরূপ মৎস্যটীকে হস্তে ধারণ করতঃ কামদেবই যেন সখা বসন্তের অনুসরণ করিতেছেন বলিয়া সকলে নলকে মনে করিতে লাগিল ॥১০৫॥

**अन्वयः**—लतावलालास्यकलागुरुः तरुप्रसूनगन्धोत्करपश्यतोहरः मधुगन्धवारिणि प्रणीतलीलाप्लवनः वनानिलः अमुम् असेवत ॥१०६॥

लतेति । लता एव अबलाः स्त्रियः लता इव अबलाश्च तासां लास्यं मृदु सञ्चलनमिव नृत्यमिव च कला कलाविद्या तस्या गुरुः शिक्षकः लतानां मृदुसञ्चालकः स्त्रीणां नृत्यशिक्षकश्चेत्यर्थः । एतेन वायोर्मान्द्यं सूचितं प्रबलत्वे लतानां छेदादिसम्भवात् । तरुप्रसूनानां वृक्षस्थपुष्पाणां गन्धोत्करस्य सौरभसमूहस्य पश्यतोहरश्चौरः अपहर्त्तेत्यर्थः । एतेन वायोः सौगन्ध्यं ध्वनितम् । भूतलादौ पतितपुष्पाणां पर्य्युषिततया उत्कृष्टगन्धो न स्यादित्यतस्तत्सत्त्वबोधनाय तरुपदम् । अन्यत्र तु तरुप्रसूनानि गन्धोत्करं गन्धद्रव्यसमूहञ्च पश्यन्तं स्वामिनमनादृत्य हरतीति स तथोक्तः । तथा मधूनां पतितपुष्परसानां गन्धयुक्तं वारि मधुगन्धवारि तस्मिन् पतितपुष्परसयुक्तसरोवरजले इत्यर्थः, प्रणीतं कृतं लीलया प्लवनं सन्तरणं येन स तादृशः । इदन्तु उभयत्रापि समानम् । एतेन वायोः शैत्यं प्रथायितम् । वनानिलः उद्यानवायुः [illegible] पुस्पू षितवान् ।

समासोक्तिरलङ्कारः,

| संसृष्टिः । मधुर-

"क्रियोरलयथा-

०६॥

ापहारी एवं

|াছিল ।১০৬॥

ाय तस्मिन् वने

पयोनिलीनाभ्रमुकामुकावली-रदाननन्तोरगपुच्छसूच्छवीन् (१) ।
जलार्द्धरुद्धस्य तटान्तभूभिदो मृणालजालस्य मिषाद्बभार यः ॥१०८॥

अथेति । अथ वायुकर्षकतिवनानन्तरम्, अवनीभुजा भूपालेन नलेन ददृशे, इत्यन्वयः, मन्थनात् पुनरपि देवैर्मन्थनात् ऐरावतादिरत्नादिकस्य लुण्ठनाय, भयेन हेतुना, चिरात् सञ्चितं बहुकालादवधि सञ्चितम्, चिर-र्वैश्चिरन्तनैः प्राचीनैरिति यावत् ऐरावतादिभिर्वस्तुभिः अधिकं बहुलीभूतम्, स्वं धनम्, आदाय गृहीत्वा तस्मिन् वने उद्याने, निलीय लुक्कायितो भूत्वा, सन् तिष्ठन्, अपां निधिः समुद्र इव, यथा कश्चिदपि धनी चौराद्य-पहारादिकस्य लुण्ठनभयेन चिरसञ्चितं धनरत्नादिकमादाय क्वचिद्विपिने लुक्कायितस्तिष्ठति ; तद्वदिति भावः । तडागः सरोवरः, ददृशे दृष्टः ।

अत्र काव्ये च अपांनिधौ उक्तविधधनित्वव्यवहारसमारोपात् समासोक्तिरलङ्कारः, वाच्या भावाभिमानिनी जात्युत्प्रेक्षा, छेकानुप्रासश्च, इत्येतेषां परस्परनिरपेक्षतया संसृष्टिः । निवसन्निति पाठे तु प्रतीयमानोत्प्रेक्षा । उत्प्रेक्षया च तडागस्य उक्तविधरत्नादिमत्त्वं विशालत्वं गभीरत्वञ्च व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः । गुणरीती पूर्ववत् ।

"स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने" इत्यमरः । "रत्नं स्वजातिश्रेष्ठेऽपि मणावपि" इति विश्वः ॥१०७॥

বাঙ্গালা—তাহার পর, রাজা একটি সরোবর দেখিলেন, দেখিয়া মনে করিলেন যে, পুনরায় মন্থনের ভয়ে, বহুকাল হইতে সঞ্চিত পূর্ববর্ত্তী ঐরাবতপ্রভৃতি রত্ন ও ধন লইয়া, সমুদ্রই যেন আসিয়া, সেই বনে লুক্কায়িত হইয়া রহিয়াছে ॥১০৭॥

अन्वयः—यः जलार्द्धरुद्धस्य तटान्तभूभिदः मृणालजालस्य मिषात् अनन्तोरगपुच्छसूच्छवीन् पयोनिलीना-भ्रमुकामुकावलीरदान् बभार ॥१०८॥

नवभिः श्लोकैः तडागं वर्णयन् प्रथमम् ऐरावतावस्थानप्रदर्शनद्वारा तस्य पूर्वश्लोकोक्तं समुद्रसादृश्यं तावदुपपा-दयति पय इति । यस्तडागः, जलेन अर्द्धरुद्धस्य अर्द्धावृतस्य ऐरावतदन्तपक्षे तु अर्द्धावृतानाम्, अपराईंस्य जलोपर्य्यु-त्थानादित्यभयथापि भावः, तथा तटान्तभुवं तीरसन्नोपदेशं भिनत्ति भित्त्वा उत्पद्यत इति तस्य, ऐरावतदन्तपक्षे तु तटान्तभूविदारकान्, मृणालजालस्य मृणालसमूहस्य, मिषात् छलात्, अनन्तोरगस्य सर्पवर्य्यस्य अनन्तनामकस्य यत् पुच्छं लाङ्गूलं तस्य समाना छविः कान्तिर्येषां तान्, अनन्तनागस्य लाङ्गूलवत् शुभ्रान् क्रमिकसूक्ष्मांश्च इत्यर्थः, पयसि तस्यैव तडागस्य जले निलीना निमग्ना ये अभ्रमुः तदाख्या पूर्वदिगधिकारिणी हस्तिनी निजभार्य्यात्वेन कामयितुं शीलं येषां ते अभ्रमुकामुका ऐरावतास्तेषां या आवली श्रेणी तस्याः रदान् दन्तान्, बभार धृतवान् । तथा च तत्तडागजले अनन्तनागलाङ्गूलवत् शुभ्रं क्रमिकसूक्ष्मञ्च यत् वस्तुजातमासीत्, तन्न मृणालजालम् अपि तु जलनिमग्नानाम् ऐरावतहस्तिनां जलोपर्य्युत्थितं दन्तजालमेव तदिति तात्पर्य्यार्थः । तेन च समुद्रे एक एव ऐरावत आसीत्, तस्मिन् [illegible] ऐरावता इति समुद्रसादृश्ये का कथा, समुद्रादाधिक्यमेव तत्तडागस्यासीदिति भावः ।

अत्र

संसृष्टिः ।

बाङ्गला

(१)

तटान्तविश्रान्ततुरङ्गमच्छटा-स्फुटानुबिम्बोदयचुम्बनेन यः ।
बभौ चलद्वीचिकशान्तशातनैः सहस्रमुच्चैःश्रवसामिव श्रयन् ॥१०९॥
सिताम्बुजानां निवहस्य यश्छलात् बभावलिश्यामलितोदरश्रियाम् ।
तमःसमच्छायकलङ्कसङ्कुलं कुलं सुधांशोर्बहुलं वहन् वहु (१) ॥११०॥

---

कामुकेति "मृणाल" इत्यादिना कमिवकम् । सच्छवीनिति "सहसमानयोः सौ ना" इति समानशब्दस्य स्थाने सादेशः ॥१०८॥

বাঙ্গালা—জলে অর্দ্ধনিমগ্ন এবং তীরপ্রান্তদেশ ভেদ করিয়া উত্থিত মৃণালসমূহের ছলে যে সরোবর, অনন্তনাগের লাঙ্গুলের ন্যায় সুন্দর জলনিমগ্ন ঐরাবতহস্তিগণের দন্তসমূহ ধারণ করিত। ১০৮॥

**অন্বয়:**—यः तटान्तविश्रान्ततुरङ्गमच्छटास्फुटानुबिम्बोदयचुम्बनेन वीचिकशान्तशातनैः चलत् उच्चैः-श्रवसां सहस्रं श्रयन् इव बभौ ॥१०९॥

ननु तत्तडागस्य समुद्रतुल्यत्वे उच्चैःश्रवा नाम अश्वः कुत इत्याह तटान्तेति । यस्तडागः, तटान्ते तीरप्रान्तदेशे विश्रान्ता अवस्थिता या तुरङ्गमाणां सहचरनलघोटकानां छटा समूहः तस्याः स्फुटः स्पष्टो यः अनुबिम्बोदयः जले प्रतिबिम्बोत्पत्तिः तस्य चुम्बनेन सम्बन्धेन हेतुना, वीचयस्तरङ्गा एव कशाः तथैव लम्बमानत्वात् अश्वताडनद्रव्याणाम् अन्तैः प्रान्तदेशैः यानि शातनानि ताडनानि तैः, चलत् चञ्चलीभवत्; तरङ्गघातेन जलप्रतिबिम्बितवस्तुजातस्य चलत्वप्रतीतेः प्रत्यक्षत्वादिति भावः, उच्चैःश्रवसां तदाख्यानाम् अश्वानाम्, सहस्रं प्राचुर्य्यमित्यर्थः, श्रयन् धारयन्निव, बभौ शुशुभे ।

अत्र वीचिकशेति निरङ्गं केवलरूपकम् वाच्या भावाभिमानिनी द्रव्योत्प्रेक्षा च, अनयोर्गुणप्रधानभावेनाङ्गाङ्गिभावात् सङ्करः, छेकानुप्रासो वृत्त्यनुप्रासश्चेति समुदाये संसृष्टिः । उत्प्रेक्षया च नलाश्वानामुच्चैःश्रवस्तुल्यत्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः । माधुर्य्यं गुणः, पाञ्चाली च रीतिः ।

"अश्वादिस्ताडनी कशा" इत्यमरः ॥१०९॥

বাঙ্গালা—নল ও নলের সহচরবর্গের ঘোড়াগুলি, তীরের প্রান্তভাগে (জলের নিকট) বিশ্রাম করিতে থাকায় সরোবরের জলে তাহাদের স্পষ্ট স্পষ্ট প্রতিবিম্ব পড়িয়াছিল; তরঙ্গরূপ চাবুকের তাড়নে সে প্রতিবিম্বগুলি আবার চলিতেছিল; তাহাতে বোধ হইতেছিল যেন, যে সরোবর বহুতর উচ্চৈঃশ্রবা অশ্ব ধারণ করতঃ শোভা পাইতেছে ॥১০৯॥

**অন্বয়:**—यः अलिश्यामलितोदरश्रियां सिताम्बुजानां निवहस्य छलात् तमःसमच्छायकलङ्कसङ्कुलं बहुलं सुधांशोः कुलं वहन् वहु बभौ ॥११०॥

अथ तत्तडागस्य समुद्रतुल्यत्वे तत्र चन्द्रः कुत इत्याह सितेति । यस्तडागः, अलिभिः उपरिपतितैर्भ्रमरैः श्यामलिता श्यामवर्णीकृता उदरश्रीः मध्यदेशशोभा येषां तेषाम् [illegible] अतएव लाञ्छनयुक्तानां कलङ्कतुल्यत्वमिति भावः, सिताम्बुजानां चन्द्रवदेव गौराकाराणां [illegible], निवहस्य समूहस्य छलात्, तमःसमा अन्धकारतुल्या कृष्णवर्णेत्यर्थः छाया कान्तिर्यस्य स [illegible] कलङ्को लाञ्छनं तेन सङ्कुलं व्याप्तम्, बहुलं [illegible], सुधांशोश्चन्द्रस्य, कुलं समूहम्, वहन् धारयन्, वहु अधिकम्, बभौ शुशुभे । 'समुद्रे एक एव चन्द्रः, अत्र तु बहव एव चन्द्रा इति समुद्रादुत्कर्ष एव तडागस्येति भावः ।

रथाङ्गभाजा कमलानुषङ्गिणा शिलीमुखस्तोमसखेन शार्ङ्गिणा ।
सरोजिनीस्तम्बकदम्बकैतवात् मृणालशेषाहिभुवान्वयायि यः ॥१११॥
तरङ्गिणीरङ्गजुषः स्ववल्लभास्तरङ्गलेखा बिभराम्बभूव यः ।
दरोद्गतैः कोकनदौघकोरकैः धृतप्रवालाङ्कुरसञ्चयश्च यः ॥११२॥

---

अत्र तमःसमच्छायीति श्यामी तमःसमतोपमा, अपह्नुतिश्च अनयोरङ्गाङ्गिभावेनावस्थानाभावात् संसृष्टिः, तथा छेकानुप्रासवृत्त्यनुप्रासयोरेकाश्रयानुप्रवेशरूपः सङ्करश्चेति समुदाये संसृष्टिः। मधुरव्यञ्जनाबन्धान्माधुर्यं गुणः, पाञ्चाली च रीतिः।

श्यामलितेति श्यामवर्णनात् श्यामलशब्दात् कर्मणि क्तः। स्त्रियाभिन्नपदस्य सितानुजविशेषणत्वेन नपुंसकत्वेऽपि "भाषितपुंस्कं पुंवत्" इति पक्षे पुंवद्भावात् न ह्रस्वो न वा नुडागमः ॥११०॥

বাঙ্গালা—বহুতর ভ্রমর পড়িয়া শ্বেতপদ্মগুলির মধ্য স্থানসকল শ্যামবর্ণ করিয়া ফেলিয়াছিল; এদিকে চন্দ্রের মধ্য ভাগও অন্ধকারতুল্য মৃগচিহ্নে ব্যাপ্ত থাকে; সুতরাং যে সরোবর তাদৃশ শ্বেতপদ্মসমূহের ছলে বহুতর চন্দ্রসমূহ ধারণ করত: অত্যন্ত শোভা পাইয়াছিল ॥১১০॥

অন্বয়:—सरोजिनीस्तम्बकदम्बकैतवात् रथाङ्गभाजा कमलानुषङ्गिणा शिलीमुखस्तोमसखेन मृणालशेषाहिभुवा शार्ङ्गिणा यः अन्वयायि ॥१११॥

ननु तडागश्चेत् समुद्रतुल्यः तर्हि तत्र नारायणः क इत्याह रथाङ्गेति। सरोजिन्याः पद्मिन्याः स्तम्बकदम्बस्य गुल्मसमूहस्य कैतवात् छलात् सरोजिनीस्तम्बकदम्बरूपेणेत्यर्थः, रथाङ्गं सुदर्शनचक्रं चक्रवाकपक्षिणश्च भजत इति तेन, कमलायाः लक्ष्म्याः कमलानां पद्मानां जलानां वा च अनुषङ्गः सम्बन्धः अस्यास्तीति तेन, शिलीमुखस्तोमस्य भ्रमरसमूहस्य सखा सदृशः तद्वत् कृष्णवर्ण इत्यर्थः अन्यत्र सखि सहायभूतं तेन, तथा मृणालमिव शेषाहिः मृणालवत् शुभ्रवर्णः अनन्तनागः स एव भूः शयनस्थानं यस्य तेन, अन्यत्र तु मृणालानि शेषाहयः अनन्तनागा इव ते मृणालशेषाहयः भुव उत्पत्तिस्थानानि यस्य तेन, शार्ङ्गिणा नारायणेन यस्तडागः, अन्वयायि अनुगतः सेवितः। सरोजिनीस्तम्बकदम्बमेवात्र नारायण इति भावः।

अत्र प्रकृतं सरोजिनीस्तम्बकदम्बं प्रतिषिध्य शार्ङ्गिस्थापनादपह्नुतिरलङ्कारः, मृणालशेषाहीत्यत्र लुप्तोपमा, श्लेषः, पूर्वार्द्धे अन्त्यानुप्रासः, तृतीयपादे छेकानुप्रासश्च इत्येतेषां मिथो निरपेक्षतया संसृष्टिः। गुणरीती पूर्ववत्।

"रथाङ्गश्चक्रवाकेऽपि रथाङ्गं चक्र उच्यते" इति विश्वः। "कमलं सलिले ताम्रे जलजे क्लोम्नि भेषजे। मृगभेदे तु कमलः कमला श्रीवरस्त्रियोः" इति मेदिनी। "भृङ्गबाणौ शिलीमुखौ" इत्यनेकार्थध्वनिमञ्जरी। "स्तम्बः गुल्मे ... गुच्छयोः। ब्रीह्यादीनां प्रकाण्डे च" इति हेमचन्द्रः ॥१११॥

বাঙ্গা[illegible]
ন্যায় শুভ্রবর্ণ [illegible]
বরের সেবা ক[illegible]
অন্বয়:[illegible]
नदीवधीरङ्ग[illegible]

যদম্বুপূরপ্রতিবিম্বিতায়তির্মরুত্তরঙ্গৈস্তরলস্তটদ্রুমঃ।
নিমজ্য মৈনাকমহীভৃতঃ সতস্ততান পক্ষান্ ধুবতঃ সপক্ষতাম্ ॥১১৬॥
পয়োধিলক্ষ্মীমুষি কেলিপল্বলে রিরংসুহংসীকলনাদসাদরম্।
স তত্র চিত্রং বিচরন্তমন্তিকে হিরণ্ময়ং হংসমবোধি নৈষধঃ ॥১১৭॥

---

বাঙ্গালা—যে সরোবরজাত পদ্মিনী, অত্যন্ত কণ্টকাকীর্ণদেহ হইয়া, সূর্য্যকে পাইয়া নিরতিশয় সৌরভ প্রকাশ করিয়া, এবং প্রফুটিত পদ্মরূপ শরীর ধারণ করিয়া, দিনের বেলা অপ্সরার ন্যায় আচরণ করিত ॥১১৫॥

অন্বয়:—যদম্বুপূরপ্রতিবিম্বিতায়তিঃ তটদ্রুমঃ মরুত্তরঙ্গৈঃ তরলঃ (সন্) নিমজ্য সতঃ পক্ষান্ ধুবতঃ মৈনাকমহীভৃতঃ সপক্ষতাং ততান ॥১১৬॥

ননু সমুদ্রে মৈনাকো নামাচলো নিমগ্নস্তিষ্ঠতি অত্র স কুত ইত্যাহ যদিতি। যস্য তড়াগস্য অম্বুপূরে জলরাশৌ প্রতিবিম্বিতা প্রতিবিম্বভাবেন পতিতা আয়তির্দৈর্ঘ্যং যস্য স তাদৃশঃ, তটদ্রুমস্তীরস্থবৃক্ষঃ, মরুত্তরঙ্গৈঃ বায়ুত্থাপিততরঙ্গৈঃ, তরলশ্চঞ্চলঃ সন্, নিমজ্য নিমগ্নীভূয়, সতো বিদ্যমানস্য, পক্ষান্ পতত্রাণি, ধুবতঃ কম্পায়মানস্য, মৈনাকমহীভৃতো মৈনাকাখ্যপর্ব্বতস্য, সপক্ষতাং সাদৃশ্যম্, ততান বিস্তারয়ামাস। প্রতিবিম্বিততটদ্রুম এব মৈনাকপর্ব্বত ইতি ভাবঃ।

পুরা কিল ইন্দ্রেণ পর্ব্বতানাং পক্ষেষু ছিদ্যমানেষু মৈনাকো নাম হিমাচলপুত্রঃ পলায্য গত্বা সমুদ্রে নিমগ্নোঽভূদিতি পৌরাণিকী বার্ত্তা।

অত্র অর্থাপত্ত্যলঙ্কারঃ বৃত্ত্যনুপ্রাসচ্ছেকানুপ্রাসয়োরিতি সংসৃষ্টিঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ।

মরুতা উত্থাপিতাস্তরঙ্গা ইতি মরুত্তরঙ্গাঃ "শাকপার্থিবাদয়শ্চ" ইতি মধ্যপদলোপী সমাসঃ ॥১১৬॥

বাঙ্গালা—যে সরোবরের জলরাশির ভিতরে তীরস্থ বৃক্ষের বিস্তৃত প্রতিবিম্ব পতিত হইয়া, বায়ুজনিত তরঙ্গে কম্পিত হইতেছিল; তখন সে প্রতিবিম্ব, জলে নিমগ্ন থাকিয়া পক্ষকম্পনকারী মৈনাকপর্ব্বতের সাদৃশ্য বিস্তার করিয়াছিল ॥১১৬॥

অন্বয়:—সঃ নৈষধঃ পয়োধিলক্ষ্মীমুষি তত্র কেলিপল্বলে রিরংসুহংসীকলনাদসাদরম্ অন্তিকে বিচরন্তং হিরণ্ময়ং চিত্রং হংসম্ অবোধি ॥১১৭॥

সাবিদমগ্রস্তীপরিণয়ঘটকং হংসদর্শনমাহ যুগ্মকেন পয়োধীতি। স নৈষধো নলঃ, পয়োধেঃ সমুদ্রস্য লক্ষ্মীং শোভাং মুষ্ণাতি পূর্ব্বোক্তৈঃ রত্নাদিভিরপহরতীতি তস্মিন্, তত্র বর্ণিতপূর্ব্বে, কেলিপল্বলে ক্রীড়াসরসি তদুপকূলস্থ্যর্থঃ, রিরংসুঃ রন্তুমিচ্ছুর্যা হংসী তস্যাঃ কলনাদে অব্যক্তমধুরধ্বনৌ সাদরং সাগ্রহং তৎপ্রবণায় সাদরমিতি তাৎপর্য্যম্, অন্তিকে তস্যাঃ সমীপে, বিচরন্তং গচ্ছন্তম্, হিরণ্ময়ং স্বর্ণময়ম্, অতএব চিত্রম্ আশ্চর্য্যভূতম্, হংসম্, অবোধি দদর্শ জ্ঞাতবান্ দৃষ্টবানিত্যর্থঃ, "মহীমহেন্দ্রস্তমবৈক্ষত" ইতি বক্ষ্যমাণত্বাৎ। তথা চ প্রসিদ্ধঃ নিষধং কঠিনং ব্রতমাচরতীতি নৈষধো যোগী, পয়োধিলক্ষ্মীমুষি উপশমাপশমাদিসমুদ্রশোভাহারিণি

[illegible] আপাতমধুর-
[illegible] হিরণ্ময়ঃ
[illegible] অবোধি যোগিনা-

[illegible] ইতি অত্রাপ্রস্তুত-
[illegible] রীতিঃ।

विधाय मूर्त्तिं कपटेन वामनीं स्वयं बलिध्वंसिविडम्बिनीमयम्।
उपेतपार्श्वश्चरणेन मौनिना नृपः पतङ्गं समधत्त पाणिना॥१२४॥
तदात्तमात्मानमवेत्य सम्भ्रमात् पुनः पुनः प्रायसदुत्प्लवाय सः।
गतो विरुत्योड्डयने निराशतां करौ निरोद्धुर्दशति स्म केवलम्॥१२५॥

---

अधीति। ततः पूर्वोक्तप्रकारवीक्षणानन्तरम्, हयात् घोटकात् कृतः अवरोहः अवतरणं येन तस्य, अस्य नलस्य, उपानहौ चर्म्मपादुकाद्वयम्, बिभ्रती दधाने, पदे चरणयुगलम्, तयोः पूर्वोक्तयोः, वनयोः काननजलयोः, प्रवालैः पल्लवैः, तथा अम्बुजैः पद्मैः सह काननस्य पल्लवैः जलस्य च पद्मैः सहितायैः, नियोद्धुं नियुद्धेन संग्रामयितुं कामः अभिलाषो ययोस्ते तादृशी, अतएव बाहुयुद्धे नागरत्वाय धृते चर्म्मणी कवचद्वयं याभ्यां ते तादृशे सती, उपानहोः कवचवदावरकत्वादिति भावः, किमु [illegible]ः स्म प्रभाति; पल्लव-पद्म-पादानां समानलौहित्यात् समानकोमलत्वाच्चेति भावः।

अत्र किमु इत्यस्यैव सम्भावनावाचकतया वाच्या भावाभिमानिनी गुणोत्प्रेक्षालङ्कारः कामस्य इच्छारूपतया गुणपदार्थत्वात्, चतुर्थपादे छेकानुप्रासस्य तस्यनयोः संसृष्टिः। गुणवृत्तौ पूर्ववत्।

"वने सलिलकानने" इत्यमरः। "प्रवालोऽस्त्री किसलये वीणादण्डे च विद्रुमे" इति मेदिनी। "नियुद्धं बाहुयुद्धे स्याद् युद्धमात्रेऽपि चेष्यते" इति मल्लः।

नियोद्धुकामौ इति "तुमः काममनसोः" इति तुमो मकारलोपः॥१२३॥

বাঙ্গালা—তদনন্তর, মহারাজ নল অশ্ব হইতে অবতরণ করিলেন; তখন তাঁহার চরণযুগল চর্ম্মপাদুকা (জুতা) ধারণ করিতেছিল; সুতরাং সে চরণযুগল যেন উদ্যানের নবপল্লব ও জলের পদ্ম ইহাদের সহিত যুদ্ধ করিতে ইচ্ছুক হইয়া, বর্ম্মধারণ করিয়া শোভা পাইতেছিল॥১২৩॥

অন্বয়ঃ—अयं नृपः कपटेन बलिध्वंसिविडम्बिनीं वामनीं मूर्त्तिं विधाय मौनिना चरणेन उपेतपार्श्वः (सन्) पाणिना तं पतङ्गं स्वयम् अधत्त॥१२४॥

विधायेति। अयं नृपो नलः, कपटेन छलेन, बलिध्वंसिनं बलिं छलयितारं वामनावतारं नारायणं तन्मूर्त्तिमित्यर्थः विडम्बयितुमनुकर्त्तुं शीलं यस्यास्ताम्, वामनीं खर्वोभवेन खर्वाम्, मूर्त्तिं शरीरम्, विधाय कृत्वा, मौनिना निःशब्देन, चरणेन पदेन गमनेन वा, उपेतो गतः पार्श्वः तत्पतङ्गस्यैव पार्श्वदेशो येन स तथोक्तः सन्, पाणिना हस्तेन न तु जालादिनेति भावः, तं पतङ्गं पक्षिणं हंसम्, स्वयम् आत्मनैव न तु किङ्करद्वारेणेत्याशयः, अधत्त धृतवान्।

अत्र स्वभावोक्तिरलङ्कारः, बलिध्वंसिविडम्बिनीमित्यार्थोपमा, द्वितीयार्द्धे अन्त्यानुप्रासश्चेति संसृष्टिः। यथा पुरा नारायणः कपटेन वामनीं मूर्त्तिं विधाय वामनदेवरूपं धृत्वा बलिं राज्यात् ध्वंसयन् आकाशवर्त्तिनाम् मौनिना निःशब्देन चरणेन उपेतसूर्य्यपार्श्वः सन् पाणिना तं प्रसिद्धं पतङ्गं सूर्य्यम्, अधत्त अत्र अद्भुत वामनावतारव्यापनेन सूर्य्योऽपि हस्तस्पर्शात् तद्वदिति व्यज्यत इति वस्तुना उपमालङ्कारध्वनिः। गुणवृत्तौ पूर्ववत्।

"पतङ्गौ पक्षिसूर्य्यौ च" इत्यमरः। वामनीमिति गौरादित्वान्ङीप्रत्ययः॥१२४॥

বাঙ্গালা—নলরাজা ছলপূর্ব্বক, বামনরূপের অনুকারী খর্ব্বরূপ ধারণ করিয়া, নিঃশব্দ পদবিক্ষেপে পার্শ্বে যাইয়া, নিজেই হস্ত দ্বারা সেই পক্ষীটিকে ধরিলেন॥১২৪॥

ससम्भ्रमोत्पातिपतत्कुलाकुलं सरः प्रपद्योत्कतयानुकम्पताम्।
तमूर्मिलोलैः पतगग्रहान्नृपं न्यवारयद्वारिरुहैः करैरिव ॥१२६॥

**अन्वयः**—सः आत्मानं गृहीतम् अवेत्य सम्भ्रमात् उत्प्लवाय पुनः पुनः प्रायसत्; (अथ) उत्प्लवने निराशतां गतः (सन्) विधुत्य निरीक्षुः करौ दशति स्म ॥१२५॥

गृहीतमिति। स हंसः, आत्मानं स्वदेहम्, तेन नलेन ग्रस्तं गृहीतं धृतम्, अवेत्य ज्ञात्वा, सम्भ्रमात् भयजनितत्वरावशात्, उत्प्लवाय उड्डयनाय, पुनः पुनर्वारं वारम्, प्रायसत् प्रयत्नमकार्षीत्। अथ उड्डयने उत्प्लवे विषये, निराशतां नैराश्यं, गतः प्राप्तः सन्, विधुत्य विशेषेण धुतं कृत्वा, निरीक्षुः धर्मं गृहीत्वा, करौ उड्डयनप्रयत्नकारणकारी हस्तद्वयेन धारणात् हस्तद्वयम्, कैवलमनवरतम्, दशति स्म ददंश।

अत्र स्वभावोक्तिरलङ्कारः, द्वितीयपादे छेकानुप्रासश्चेति संसृष्टिः। तथा उत्प्लवाय प्रयत्नेन प्रक्रम्य उड्डयने प्रत्यभिधानात् प्रकृतिप्रत्ययोभयविषय एव भग्नप्रक्रमतादोषः; स च 'निराशतां तत्र गतो भृशं दशन्' इति पाठेन समाधेयः। गुणरीती पूर्ववत्।

प्रायसदिति "यसु प्रयत्ने" इति दैवादिकयसधातोरद्यतन्याः प्रथमपुरुषैकवचने पुषादित्वादङि रूपम्। दशः तीति "दन्शिसञ्जिस्वञ्जीनामनि" इति नकारलोपः ॥१२५॥

**বাঙ্গালা**—নল আপনাকে ধরিয়াছেন ইহা বুঝিতে পারিয়া সেই হাঁসটী ভয়ব্যস্ততা-বশতঃ উড়িবার জন্য বার বার চেষ্টা করিল; তার পর, উড়িবার বিষয়ে নিরাশ হইয়া, নলের করযুগল অনবরত দংশন করিতে লাগিল ॥১২৫॥

**अन्वयः**—ससम्भ्रमोत्पातिपतत्कुलाकुलं सरः उत्कतया अनुकम्पतां प्रपद्य करैः इव ऊर्मिलोलैः वारिरुहैः पतगग्रहात् तं नृपं न्यवारयत् (इव) ॥१२६॥

सेति। सम्भ्रमेण भयजनितत्वरया सहेति ससम्भ्रमं यथा तथा उत्पतितुम् उड्डयितुं शीलं यस्येति तत् तादृशं यत् पतत्कुलं पक्षिसमूहस्तेन आकुलं विह्वलम्, सरः पूर्वोक्तस्तडागः, उच्चलितं पक्षिपक्षवातेन किञ्चिदुत्थितं भूत्वा चलितं कं जलं यस्य तदुत्कं तस्य भावस्तया हेतुना, अनु पश्चात् जलोच्चलनानन्तरमित्यर्थः, कम्पतां क्रमिक-पक्षिपक्षवाताधिक्येन साकल्येनैव कम्पितत्वम्, प्रपद्य प्राप्य, करैः हस्तैरिव, ऊर्मिभिस्तरङ्गैर्लोलानि चञ्चलानि तैः, वारिरुहैः पद्मैः करणैः, पतगग्रहात् तत्पक्षिधारणात्, तं नृपं नलम्, न्यवारयदिव निषिद्धवानिव। तथा च कश्चित् प्रबलो नृशंसः कश्चित् दुर्बलमनपराधिनं जनं हन्तुमुत्क्षिपति, परस्थास्ते दुर्बलः ससम्भ्रमोत्पाती सन् पतति, तद्दर्शनेन आकुलः कश्चित् सज्जनः उत्कतया उत्कण्ठिततया अनुकम्पतां दयालुत्वं प्राप्य हस्तचालनैः पुनरपि तद्ग्रहणात् तं नृशंसं यथा निवारयति, तद्वदिति भावः।

अत एतेन कार्य्येण प्रस्तुते सरसि अप्रस्तुतस्य सज्जनस्य व्यवहारसमारोपात् समासोक्तिरलङ्कारः, करैरिवेति श्रौतोपमा, इवाद्यभावात् न्यवारयदिति प्रतीयमाना क्रियोत्प्रेक्षा च, इत्थं तेषामङ्गाङ्गिभावेन सङ्करः, छेकानुप्रासो वृत्त्यनुप्रासश्चेति समुदाये संसृष्टिः। वारिरुहरूपैः करैः न्यवारयदिवेति व्याख्यायान्तु वाच्योत्प्रेक्षा। प्रसादो गुणः, वैदर्भी च रीतिः।

"पतत्रिपत्रिपतगपतत्पत्ररथाण्डजाः" इति "स्यादुत्क उन्मनाः" इति "कं शिरोऽम्बुनीः" इति च अमरः ॥१२६॥

**বাঙ্গালা**—পক্ষিগণ ভয়ে ব্যস্ত হইয়া উড়িয়া যাইতে লাগিল; তাহাতে সরোবরটি আকুল হইয়া উঠিল এবং জল চলিতে থাকায় কাঁপিতে লাগিল; আর তরঙ্গের আঘাতে

पतत्रिणा तद्रुचिरेण वञ्चितं श्रियः प्रयान्त्याः प्रविहाय पल्वलम् ।
चलत्पदाम्भोरुहनूपुरोपमा चुकूज कूले कलहंसमण्डली ॥१२७॥
न वासयोग्या वसुधेयमीदृशस्त्वमङ्ग ! यस्याः पतिरुज्झितस्थितिः ।
इति प्रहाय क्षितिमाश्रिता नभः खगास्तमाचुक्रुशुरारवैः खलु ॥१२८॥

---

পদ্ম সকল চলিতে থাকিল। সুতরাং সরোবরটী যেন হস্তের ন্যায় সেই সকল পদ্ম দ্বারা, পক্ষিধারণ হইতে নলরাজাকে নিবারণ করিতে লাগিল ॥১২৬॥

**অন্বয়ঃ**—रुचिरेण पतत्रिणा वञ्चितं तत् पल्वलं प्रविहाय प्रयान्त्याः श्रियः चलत्पदाम्भोरुहनूपुरोपमा कलहंसमण्डली कूले चुकूज ॥१२७॥

पतत्रिणेति । रुचिरेण मनोहरेण, पतत्रिणा पक्षिणा जातावेकवचनात् पक्षिवर्गेणेत्यर्थः, वञ्चितं परित्यक्तम्, तत् पल्वलं सरः, प्रविहाय परित्यज्य, सुन्दरवस्तुविहीने स्थाने लक्ष्म्या वासस्यासम्भवादिति भावः, प्रयान्त्या गच्छन्त्याः, श्रीः शोभैव श्रीर्लक्ष्मीर्देवी तस्याः, चलन्ती प्रसरन्ती ये पदाम्भोरुहे पादपद्मद्वयं तयोर्यौ नूपुरौ ताभ्यामुपमा समानशब्दकारित्वात् सादृश्यं यस्याः सा तथोक्ता, कलहंसानां राजहंसानां मण्डली समूहः, कूले तत्पल्वलस्यैव तीरे, चुकूज अव्यक्तं शब्दयामास, तस्यैव पक्षित्वभावादित्याशयः ।

अत्र शोभालक्ष्म्योर्द्वयोर्भेदेऽपि श्रीशब्देनैवाभेदाध्यवसायादतिशयोक्तिः लुप्तोपमा चानयोस्तु अप्रधानभावेनाङ्गाङ्गिभावात् सङ्करः, तथा चतुर्थपादे छेकानुप्रासच्छेकानुप्रासयोरेकाश्रयानुप्रवेशरूपः सङ्करः; सङ्करयोः सङ्करयोरपि परस्परनिरपेक्षतया संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"शोभासम्पत्तिपद्मासु लक्ष्मीश्रीरिव दृश्यते" इति विकाण्डशेषः । "कलहंसस्तु कादम्बे राजहंसे नृपोत्तमे" इति मेदिनी ॥१२७॥

**বাঙ্গালা**—মনোহর পক্ষিগণ সে সরোবর পরিত্যাগ করিয়া গিয়াছিল বলিয়া লক্ষ্মী-দেবীও সে সরোবর পরিত্যাগ করিয়া যাইতে লাগিলেন; তখন তাঁহার গতিশীল পাদ-পদ্মযুগলের নূপুরের ন্যায় রাজহংসগণ, তীরে থাকিয়া রব করিতে লাগিল ॥১২৭॥

**অন্বয়ঃ**—अङ्ग ! ईदृशः उज्झितस्थितिः त्वं यस्याः पतिः, इयं वसुधा न वासयोग्या इति क्षितिं प्रहाय नभः आश्रिताः खगाः आरवैः तम् आचुक्रुशुः खलु ॥१२८॥

नेति । अङ्गेति सम्बोधने । हे नल ! ईदृश एवम्भूतः अनपराधिपीडकः, अतएव उज्झिता परित्यक्ता स्थितिः राजमर्यादा येन स तादृशस्त्वम्, यस्या वसुधायाः, पतिः पालयिता, इयं सा, वसूनि रत्नानि दधातीति वसुधा पृथिवी, न वासयोग्या कस्यापि अवस्थाने न उचिता, उत्पीडकपतिकतया रत्नधारिणीमपि पृथिवीं विहाय सर्वाश्रयस्वरूपस्य आकाशस्याप्याश्रयणीयत्वादिति भावः, इति हेतोः, क्षितिं भूतलम्, प्रहाय परित्यज्य, नभ आकाशम्, आश्रिता गताः, खगाः पक्षिणः, आरवैः स्वस्वकण्ठध्वनिभिः, तं नलम्, आचुक्रुशुः तिरश्चक्रुरिव । खल्वित्युत्प्रेक्षायाम्; उत्प्रेक्षायामिति केचित् ।

अत्र पक्षिणामाक्रोशनकर्तृत्वासम्भवात् स्वाभावाभावात् प्रतीयमाना क्रियोत्प्रेक्षालङ्कारः, प्रथमपादे 'वास' 'वसु' इति छेकानुप्रासस्य तत्रयोः संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"अथ सम्बोधनार्थकाः । स्युः प्याट् पाडङ्ग हे है भोः" इत्यमरः ॥१२८॥

**বাঙ্গালা**—হে রাজন্! বিনা অপরাধে এইরূপ উৎপীড়ক এবং রাজমর্য্যাদাহীন তুমি যাহার পতি; সে পৃথিবী কাহারও বাসের যোগ্য নহে এই ভাবে—ভূতল পরিত্যাগ

न जातरूपच्छदजातरूपता द्विजस्य दृष्टेयमिति स्तुवन् मुहुः।
अवादि तेनाथ स मानसौकसा जनाधिनाथः करपञ्जरस्पृशा॥१२९॥
धिगस्तु तृष्णातरलं भवन्मनः समीक्ष्य पक्षान्मम हेमजन्मनः।
तवार्णवस्येव तुषारशीकरैर्भवेदमीभिः कमलोदयः कियान्॥१३०॥

---

করিয়া, আকাশে যাইয়া পক্ষিগণ আপন আপন রবে নলকে যেন তিরস্কার করিতে লাগিল ॥১২৮॥

**अन्वयः**—करपञ्जरस्पृशा तेन मानसौकसा द्विजस्य इयं जातरूपच्छदजातरूपता न दृष्टा इति मुहुः स्तुवन् सः जनाधिनाथः अवादि ॥१२९॥

नेति। अथ पक्षिणामाक्रोशानन्तरम्, करौ नलस्य हस्तः पञ्जरमिव शलाकावदङ्गुलीजालपूर्णत्वादिति भावः तत् करपञ्जरं स्पृशतीति करपञ्जरस्पृक् तेन। एतेन पञ्जरे इव नलहस्ते अवस्थानं न यन्त्रणाकरं शिथिलभावेन धारणात् कोमलाङ्गुलीग्राहित्वाच्चेति सूचितम्। तेन पूर्वोक्तेन, मानसं मानसाख्यं सरः ओकः आश्रयो यस्य तेन हंसेन, द्विजस्य पक्षिणः, इयम् एवम्भूतेत्यर्थः, जातरूपस्य स्वर्णस्य यौ च्छदौ पक्षौ ताभ्यां जातम् उत्पन्नं रूपं सौन्दर्यं यस्य तस्य भावः सा तथोक्ता, न दृष्टा पूर्वं कुत्रापि नावलोकिता, महदेतदाश्चर्य्यमिति भावः, इति मुहुर्वारं वारम्, स्तुवन् प्रशंसन्, स जनाधिनाथो मनुष्येश्वरो नलः, अवादि वक्ष्यमाणप्रकारेणोक्तः।

अत्र तदानीं वास्तविकपञ्जरस्य स्वर्णाभावात् स्पृशधातुरेव उपमायाः साधको रूपकस्य च बाधक इति लुप्तोपमैव, प्रथमपादे 'जातरूप' 'जातरूप' इति यमकम्, द्वितीयार्द्धे वृत्त्यनुप्रासश्चेति संसृष्टिः। प्रसादो गुणः, पाञ्चाली च रीतिः।

"चामीकरं जातरूपं महारजतकाञ्चने" इति "दन्तविप्राण्डजा द्विजाः, इति "हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः" इति च अमरः ॥१२९॥

**বাঙ্গালা**—"পক্ষীর স্বর্ণময় পক্ষজাত এইরূপ সৌন্দর্য্য আমি আর কখনও দেখি নাই" এই বলিয়া মহারাজ নল, বার বার প্রশংসা করিতেছিলেন; তখন তাঁহার করপিঞ্জরগত সেই হংসটী তাঁহাকে বলিতে লাগিল ॥১২৯॥

**अन्वयः**—हेमजन्मनः मम पक्षान् समीक्ष्य तृष्णातरलं (जातं) भवन्मनः धिक् अस्तु। तुषारशीकरैः अर्णवस्य इव अमीभिः तव कियान् कमलोदयः भवेत् ॥१३०॥

धिगिति। हे महाराज! हेम्नः सुवर्णात् जन्म येषां तान् स्वर्णोत्पन्नान्, मम पक्षान् पतत्राणि, समीक्ष्य दृष्ट्वा, तृष्णया तद्ग्रहणलालसया तरलं चञ्चलं जातम्, भवतो मनः भवन्मनः, धिक् निन्दितम् अस्तु। ननु सुवर्णं दृष्ट्वा तद्ग्रहणेच्छा कस्य न तृष्णा जायते, येन ममैव मनो निन्दितं भवेदित्याह तवेति। तुषारशीकरैः हिमबिन्दुभिः अर्णवस्य समुद्रस्य इव, अमीभिर्मम हेमजन्मभिः पक्षैः, तव पृथिवीपतेरित्याशयः, कियान् किम्परिमाणः, कमलायाः लक्ष्म्याः सम्पद इति यावत् कमलस्य जलस्य च उदयो वृद्धिः, भवेत्? अपि तु अत्यन्तस्वल्प एवेत्यर्थः। तथा च यथा कतिपयहिमबिन्दुभिः समुद्रस्य यावती वृद्धिर्भवेत्, सा दृष्टिग्राह्या तु न भवत्येव, मनसापि कष्टेनैव गृह्यते; तथा अमीभिर्मम कतिपयसुवर्णपक्षैरनन्तधनाधीश्वरस्य तव यावती सम्पद्वृद्धिर्भवेत्, सा दृष्टिग्राह्या तु न भवेदेव, मनसापि कष्टेनैव गृह्येत; तथापि एतद्ग्रहणायैव प्रार्थनीयाकरणे यस्मिन् मनसि प्रवृत्तिर्जाता, तन्मनः सर्वथैव धिगिति भावः।

अत्र परार्द्धवाक्येन पूर्वार्द्धवाक्यार्थसमर्थनादर्थान्तरन्यासः, श्रौतोपमा, कमलोदय [illegible] श्लेषः, छेकानुप्रासो वृत्त्यनुप्रासश्च, इत्थं तेषां परस्परनिरपेक्षतया संसृष्टिः। माधुर्य्यं गुणः, वैद

न केवलं प्राणिवधो वधो मम त्वदीक्षणाद्विश्वसितान्तरात्मनः ।
विगर्हितं धर्मधनैर्निबर्हणं विशिष्य विश्वासजुषां द्विषामपि ॥१३१॥
पदे पदे सन्ति भटा रणोद्भटाः न तेषु हिंसारस एष पूर्यते ।
धिगीदृशन्ते नृपते ! कुविक्रमं कृपाश्रये यः कृपणे पतत्रिणि ॥१३२॥

---

"सप्तमी बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदे" इति वचनात् हिमजन्मन इत्यत्र व्यधिकरणबहुव्रीह्याश्रयणम् । जातमित्यध्याहारात् समीचीन इत्यस्य नैकर्ण्यकल्पहानिः । तथात्वेऽपि न न्यूनपदत्वदोषः, जातमित्यस्य सामर्थ्यादेवावगमात् "क्वचिन्न दोषो न गुणः" इति दर्पणात् ।

"कमला श्रीर्हरिप्रिया" इति "सलिलं कमलं जलम्" इति च अमरः ॥१३०॥

বাঙ্গালা—মহারাজ ! আমার সুবর্ণময় পক্ষ দেখিয়া আপনার মন লোভে চঞ্চল হইয়া উঠিয়াছে ; সুতরাং তাহার ধিক্কার হউক। কেন না, (কতিপয়) হিমবিন্দুতে সমুদ্র-জলের কতটুকু বৃদ্ধি হইয়া থাকে ? সেইরূপ এই সোণাটুকুতে আপনারই বা কতটুকু সম্পত্তিবৃদ্ধি হইবে ? ॥১৩০॥

**अन्वयः**—मम वधः केवलं प्राणिवधः न, (अपि तु) त्वदीक्षणात् विश्वसितान्तरात्मनः (वधः) । धर्मधनैः विश्वासजुषां द्विषाम् अपि निबर्हणं विशिष्य विगर्हितम् ॥१३१॥

नेति । मम वधो हत्या, केवलं प्राणिनो वधो हत्या न ; अपि तु तव महाविश्वासभाजनस्य राज्ञ ईक्षणात् दर्शनात्, विश्वसितो विश्वासं प्राप्तः अन्तरात्मा अन्तःकरणं यस्य स तस्य वध इत्यन्वयः । तथा च अन्यप्राणिनः प्राणिमात्रस्यैव हत्यायां पापं स्यात्, तव तु आत्मनि विश्वस्तचित्तस्य हत्यायां विश्वासघातकत्वमेव भवेदिति भावः । भवत्वेव नाम विश्वासघातकता, तथापि कोऽधिको दोष इत्याह विगर्हितमिति । धर्म एव धनं येषां तैः धर्मधनैः मुनिभिः, विश्वासं जुषन्ते सेवन्ते प्राप्नुवन्तीति विश्वासजुषस्तेषां हन्तारं प्रति विश्वासवतामित्यर्थः, द्विषामपि मित्रजनेषु उदासीनजनेषु वा का कथा, शत्रूणामपि, निबर्हणं वधः, विशिष्य अतिरिच्य सामान्याद्विशेषं कृत्वेति यावत्, विगर्हितं निन्दितम् ; अतो विश्वासघातकतायां सुमहान् दोष इति सर्वथैव त्वया अहं मोचनीय इत्याशयः ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, अर्थापत्त्या सङ्कीर्यते ; तथा प्रथमे पादे वधो वध इत्यापाततः शब्दार्थयोः पौनरुक्त्यात् परन्तु उद्देश्यविधेयभावेन तयोर्भेदात् लाटानुप्रासः, तृतीये छेकानुप्रासः, चतुर्थे च वृत्त्यनुप्रास इति समुदाये संसृष्टिः ।

विश्वसितेति श्वसेः क्ते "व्याङ्भ्यां श्वसः" इति दुर्गवृत्तेः पक्षे इडागमः ।

कर्म्मविपाके अतिदिष्टमहापातकप्रकरणे शातातपः "नवमं विश्वासवध —" महापातकमिति शेषः ॥१३१॥

বাঙ্গালা—মহারাজ ! আমাকে বধ করা—কেবল প্রাণিবধ নহে ; কিন্তু আপনার দর্শনে আমার বিশ্বাস জন্মিয়াছিল ; সুতরাং আমাকে বধ করা—আপনার পক্ষে বিশ্বাস-ঘাতকতাও বটে । দেখুন—মহর্ষিরা, বিশ্বাসকারী শত্রুরও বধকে বিশেষ করিয়া নিন্দা করিয়াছেন ॥১৩১॥

**अन्वयः**—पदे पदे रणोद्भटाः भटाः सन्ति, तेषु एषः हिंसारसः न पूर्यते ; (हे) नृपते ! ईदृशं ते कुविक्रमं धिक्, यः कृपणे कृपाश्रये पतत्रिणि (वर्त्तते) ॥१३२॥

अथ वीरत्वप्रकाशनार्थमेव त्वं हन्तुं, न पुनः स्वर्णपक्षलोभेनेत्याह पदे पदे इति । पदे पदे स्थाने स्थाने,

फलेन मूलेन च वारिभूरुहां मुनेरिवेत्थं मम यस्य वृत्तयः ।
त्वयाद्य तस्मिन्नपि दण्डधारिणा कथं न पत्या धरणी हृणीयते (१) ॥१२३॥

---

रणाय युद्धाय उत्कटा दर्पशालिनः, भटा योद्धारः सन्ति ; तेषु तादृशभटेषु, एष तृष्णमानः, हिंसारसो रत्यानुरागः, न पूर्यते न पूर्णो भवतीति काकुः । ननु भटैरपूरयित्वा त्वयि पूर्यते, तेन को दोष इत्याह धिगिति । हे नृपते ! ईदृशं क्षुद्रप्राणिविषयकम् अतएव कुविक्रमं कुत्सितपराक्रमम्, धिक् अतिशयेन निन्दामि । तथा च यः कुविक्रमः, कृपणे क्षुद्रे, अतएव कृपाम्पदे दयापात्रे, पतत्रिणि पक्षिणि, वर्त्तत इति शेषः । ईदृक्षुद्रे दर्पो न कर्त्तव्यः, न पुनर्विक्रम इत्यन्वाप्यत्वात् विक्रमस्य कुत्सितत्वमिति भावः ।

अत एवात्र विक्रमस्य कुत्सितत्वं प्रति चतुर्थपादवाक्यार्थो हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गम्, अप्रस्तुतपतत्रिसामान्याभिधानात् प्रस्तुतस्वात्मकपतत्रिविशेषप्रतीतेरप्रस्तुतप्रशंसा चानयोरङ्गाङ्गिभावेन सङ्करः ; तथा चाद्य-चतुर्थपादयोश्छेकानुप्रासश्चेति समुदाये संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"भटा योधाश्च योद्धारः" इति "प्रकारादौ विधे वीर्ये गुणे रागे द्रवे रसः" इति "कदर्ये कृपणक्षुद्रकिम्पचानमितम्पचाः" इति च अमरः ।

रणाय उत्कर्षेण भटन्ति दर्पं बिभ्रतीति रणोत्कटाः "भट भृतौ" इति भौवादिकाद्भटधातोः पचादित्वाद् अच् ॥१२२॥

বাঙ্গালা—স্থানে স্থানে যুদ্ধের জন্য দর্পশালী বহুতর যোদ্ধা রহিয়াছে ; তাহাদের প্রতি আপনার এই হিংসানুরাগ পূর্ণ হয় না কি ? সুতরাং মহারাজ ! আপনার এইরূপ নিকৃষ্ট বিক্রমের আমি ধিক্কার করি ; যে বিক্রম—ক্ষুদ্র, দয়ার পাত্র পক্ষীর প্রতি প্রযুক্ত হইতেছে ॥১২২॥

**অন্বয়:**—वारिभूरुहां फलेन मूलेन च मुनेः इव यस्य मम इत्थं वृत्तयः (निष्पद्यन्ते), अद्य तस्मिन् अपि दण्डधारिणा पत्या त्वया धरणी कथं न हृणीयते ॥१२३॥

अथ विक्रमप्रकाशाय न खलु त्वं धृतः, अपि तु अन्यायवर्त्तिनस्ते दण्डदानायेत्याह फलेनेति । वारिभुवो-र्जलभूतलयोः रोहन्ति उत्पद्यन्ते ये ते वारिभूरुहः पद्मपादपादयस्तेषाम्, तत्र वारिरुहां पद्मकुमुदादीनां मूलेन, भूरुहां लतापादपादीनां फलेन चेति यथासंख्यमेवान्वयः, मुनेरिव ऋषिजनस्येव, यस्य मम, इत्थं सर्वजनप्रत्यक्षी-भूताः न तु गोपनकृता इत्यर्थः, वृत्तयो जीविकाः, निष्पद्यन्त इति शेषः, अतो मुनेरिव ममापि न किञ्चिदन्यायवर्त्ति-त्वमस्तीति भावः । अद्य तस्मिन्नपि मुनिवत् निर्दोषवृत्तिशालिन्यपि मयि, दण्डधारिणा दण्डदानकारिणा, पत्या स्वामिना त्वया करणेन, धरणी पृथिवी, कथं न हृणीयते न लज्जते, अपि तु लज्जत एवेत्यर्थः, स्वामिनः अन्याया-चरिते स्त्रियो लज्जायाः स्वाभाविकत्वादिति भावः ।

अत्र श्रौतोपमा अर्थापत्तिः छेकानुप्रासश्चेत्येतेषां मिथो निरपेक्षतया संसृष्टिः । न च प्रथमपादे वारिरुहां मूलेन भूरुहाञ्च फलेनेति यथासंख्यान्वयाभावादक्रमतादोष इति वाच्यम्, यथासंख्यमेवान्वयस्यापि सर्ववादिसिद्धत्वात् । न च वाप्येव भूरुत्पत्तिस्थानं तस्यां रोहन्तीति नारायणव्याख्यानं युक्तम्, उत्पत्तिस्थानं विना उत्पत्तेरसम्भवेन भूपदस्यानर्थक्यापत्तेरधिकपदतादोषप्रसङ्गात् । प्रसादो गुणः, वैदर्भी च रीतिः ।

हृणीं करोतीति हृणीयते "कण्ड्वादिभ्यो यक्" ॥१२३॥

বাঙ্গালা—পদ্মপ্রভৃতির মূল এবং তরুলতার ফল দ্বারা মুনিগণের ন্যায় যে আমার

(১) হ্রিণীয়তে, হৃণীয়তে ।

इतीदृशैस्तं विरचय्य वाङ्मयैः सचित्रवैलक्ष्यकृपं नृपं खगः ।
दयासमुद्रे स तदाशयेऽतिथीचकार कारुण्यरसापगा गिरः ॥१३४॥
मदेकपुत्रा जननी जरातुरा नवप्रसूतिर्वरटा तपस्विनी ।
गतिस्तयोरेष जनस्तमर्दयन् अहो विधे ! त्वां करुणा रुणद्धि न ॥१३५॥

---

এই রূপ জীবিকানির্বাহ হইতেছে ; আজ আপনি সেই ব্যক্তির উপরেও দণ্ডদান করিতেছেন ; সুতরাং আপনি পতি হওয়ায় পৃথিবী কেন লজ্জিত হইবেন না ? ॥১৩৩॥

**अन्वयः**—सः खगः ईदृशैः वाङ्मयैः तं नृपम् इति सचित्रवैलक्ष्यकृपं विरचय्य दयासमुद्रे तदाशये कारुण्यरसापगा गिरः अतिथीचकार ॥१३४॥

इतीति । स खगः पक्षी हंसः, ईदृशैः "धिगस्तु तृष्णातरलम्" इत्यादिरूपैः, वाङ्मयैर्वाक्यैः, तं नृपं नलम्, इति प्रकारेण अतिशयेनेति यावत्, चित्रमाश्चर्य्यं वैलक्ष्यं गुरुतरलज्जा कृपा दया ताभिः सहेति सचित्रवैलक्ष्यकृपम्, विरचय्य कृत्वा, वाग्मिनो मानुषस्येव सामान्यपक्षिणो महती वाक्पटुतेति चित्रम्, अतथाचात्मकः स्वदोषोऽनेन ज्ञात इति वैलक्ष्यं, विप्रियगुणलिनोऽस्य धारणेन कष्टं दत्तमिति च कृपेति भावः, दयासमुद्रे कृपासागररूपे, तस्य नलस्य आशये मनसि, कारुण्यं करुणात्मकी रसः स्वाद एव रसो जलं तस्य आपगा नदीरूपाः, गिरो निजवाक्यानि, अतिथीचकार विषयीचकार । तथा च यथा विधाता समुद्रे नदीः प्रवेशयति, तथासौ हंसः करुणारसव्यञ्जकानि स्ववचनानि नलहृदये प्रवेशयामासेति भावः ।

अत्र नलहृदये समुद्रत्वारोपो हंसगीषु नदीत्वारोपे निमित्तं रसपदस्य श्लिष्टमिति श्लिष्टपरम्परितरूपकमलङ्कारः, इत्थमनुप्रासस्तयोः संसृष्टिः । रसपदाभिधानेऽपि न रसस्य स्वशब्दोक्तिदोषः, तस्य जलपरतया पर्यवसानात्, स्वादरूपतया अनुभूयमानस्यैव स्वशब्दोक्तौ तद्दोषाङ्गीकारात्, अन्यथा 'नव रसाः' इति गणनायामपि तद्दोषप्रसङ्गात् । किन्तु चित्रवैलक्ष्यकृपाणां विधेयतया प्राधान्यात् तेषाञ्च समासे गुणीभावात् विधेयाविमर्शदोषः सम्पन्न एव ; तत्समाधानाय च पूर्वार्द्धमेवं पठनीयम् 'इतीदृशैस्तस्य नृपस्य वाङ्मयैः संजग्मुरक्षीणविलक्षविस्मयाम्' । अनुक्रोशोऽपि कृपैव । प्रसादो गुणः, वैदर्भी च रीतिः ।

"इति हेतुप्रकरणप्रकर्षादिसमाप्तिषु" इत्यमरः । "आत्मनश्चरिते सम्यग् ज्ञातेऽर्थे यस्य जायते । अपत्रपाति महती स विलक्ष इति स्मृतः ।" इति नारायणधृतम् । "आशयः स्यादभिप्राये मानसाधारयोरपि" इति विश्वः । "रसो जलं रसो हर्षः रसः शृङ्गारपूर्वकाः ।" इत्याद्यनेकार्थध्वनिमञ्जरी ।

वाङ्मयैरिति "एकाक्षरान्नित्यम्" इति वाच्शब्दात् स्वार्थे मयट् ॥१३४॥

বাঙ্গালা—সেই পক্ষী এই রূপ বাক্যে নলরাজার হৃদয়ে অত্যন্ত বিস্ময়, লজ্জা ও দয়া জন্মাইয়া, দয়ার সাগরস্বরূপ তাঁহার হৃদয়ে কারুণ্যরসের নদীস্বরূপ আপনার বাক্যগুলিকে প্রবেশ করাইতে লাগিল ॥১৩৪॥

**अन्वयः**—जननी मदेकपुत्रा जरातुरा (च), वरटा नवप्रसूतिः तपस्विनी (च) ; एषः जनः तयोः गतिः ; अहो तमर्दयन् विधे ! करुणा त्वां न रुणद्धि ॥१३५॥

प्रस्तुतकारुण्यरसव्यञ्जकवाक्यमाह मदेकेति । जननी मम माता, अहमेव एकः पुत्रो यस्याः सा मदेकपुत्रा । अतो मम मरणानन्तरं तस्या जीविकानिर्वाहः असम्भव एव भवेदिति भावः । अथ सा स्वयमेव जीविका निर्वाहयिष्यतीत्याह जरातुरेति । जरया वार्द्धक्येन आतुरा पीड़िता गमनशक्तिरहितेत्यर्थः । अतस्तस्याः स्वयं जीविकानिर्वाहोऽसम्भव एवेत्याशयः । नहि मम पत्न्येव मज्जीविकामपि निर्वाहयिष्यतीत्याह वरटेति । [illegible]

मुहूर्त्तमात्रं भवनिन्दया दया-सखाः सखायः स्रवदश्रवो मम ।
निवृत्तिमेष्यन्ति परं दुरुत्तरस्त्वयैव मातः ! सुतशोकसागरः ॥१२६॥

---

मम पत्नी, नवा अचिरजाता प्रसूतिः प्रसवो यस्याः सा तथोक्ता । सुतरां सा आत्मजीविकानिर्वाहे एवासमर्था कथं परजीविकां निर्वाहयेदित्यभिप्रायः । तदा तव मरणानन्तरं तस्या अपरो कंसः पतिर्भूत्वा उभयोरेव जीविकां निर्वाहयिष्यतीत्याह तपस्विनीति । तपः पातिव्रत्यधर्मः अस्या अस्तीति तपस्विनी पतिव्रता । अतस्तस्या अपरः पतिरप्यसम्भव एवेति भावः । अतएव एष मत्स्वरूपो जनः, तयोः जननीवरटयोः, गतिः एकमात्रजीविकानिर्वाहोपायः ; अहो तं माम् अर्द्दयन् विनाशयन्, विधे ! विधातः ! करुणा त्वच्चित्तवर्त्तिन्येव दया कर्त्री, त्वां न रुणद्धि मामर्द्दयितुं न प्रतिबध्नाति, तेन च त्वमतीवनिष्ठुर इत्याशयः ।

अत्र मदेकपुत्र इत्यादीनां चतुर्णामेव विशेषणानां विशेषविशेषाभिप्रायपोषकत्वात् परिकरो नामालङ्कारः "उक्तिर्विशेषणैः साभिप्रायैः परिकरो मतः" इति लक्षणात् । चतुर्थपादे छेकानुप्रासश्चेत्यनयोः संसृष्टिः । करुणो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ।

"हंसस्य योषिद्वरटा" इत्यमरः । "अथ स्त्रियां तु धर्म्मे व्रते तपः" इति त्रिकाण्डशेषः ।

"अर्ह पूजायाम्" इति चौरादिकादर्हधातोः "वृ... प्रत्ययाः" स्त्र्याद्यागमयम्… काचित्करणामन्त्रितयो" इत्यत्रोक्तिते प्रत्यक्षि अर्हयन्निति रूपम् ॥१२५॥

বাঙ্গালা—আমার জননীর আমিই একমাত্র পুত্র এবং তিনি বার্দ্ধক্যপীড়িতা ; তার পর আমার স্ত্রীরও নূতন প্রসব হইয়াছে ; বিশেষতঃ সে পতিব্রতা । সুতরাং এই ব্যক্তিই তাঁহাদের একমাত্র উপায় ; হা বিধাতঃ ! আপনি সেই আমাকে বিনাশ করিতেছেন ; ইহাতে আপনার দয়া আপনাকে বাধা দিতেছে না ! ॥১২৫॥

—दयासखाः मम सखायः मुहूर्त्तमात्रं स्रवदश्रवः (सन्तः) भवनिन्दया निवृत्तिम् एष्यन्ति ; (हे) मातः ! परं त्वयैव सुतशोकसागरः दुरुत्तरः ॥१२६॥

जननीभार्य्योभयविषये विलप्य इदानीमेकं कविषये विलपन् प्रथमं जननीविषये विलपति मुहूर्त्तेति । वयस्यैव सखायः सहायाः न पुनर्धात्रीत्यादिना केनचित् सम्पर्केणेति दयासखाः परपक्षरदयाश्रयिणः सन्तः सहचरा इत्यर्थः, मम सखायो मित्राणि, मुहूर्त्तमात्रं कियत्कालमात्रम्, स्रवन्ति मम शोकेन निपतन्ति अश्रूणि नयनजलानि येषां ते स्रवदश्रवः सन्तः, भवस्य संसारस्य निन्दया 'धिगिमं क्षणविनश्वरप्राणिमत्संसारम्' इत्यादिरूपया जुगुप्सया, निवृत्तिं विलापविरामम्, एष्यन्ति प्राप्स्यन्ति । किन्तु हे मातः ! परं केवलार्थेऽर्थः त्वयैव, सुतशोक एव सागरः सुतशोकसागरः, दुःखेनोत्तीर्य्यत इति दुरुत्तरः, सर्वापेक्षया विलक्षणत्वादित्याशयः ।

अत्र सुतशोकसागर इति निरङ्गं केवलरूपकमलङ्कारः, तथा प्रथमार्द्धे छेकानुप्रासः, द्वितीयार्द्धे तु वृत्त्यनुप्रास इति समुदाये संसृष्टिः । करुणो रसः, मधुररचनाश्रयान्माधुर्य्यं गुणः, वैदर्भी च रीतिः ।

"सखा मित्रे सहाये च" इति "परः श्रादुत्तमानात्मवैरिदूरेषु केवले । परमव्ययमित्याहुन्ति" इति च विश्वः । केवले केवलार्थे परं परशब्दमव्ययमित्याहुरित्यर्थः । अतएवात्र केवलार्थे परंशब्दः अव्ययरूपो बोध्यः ।

दयासखा इति "राजाहःसखिभ्यष्टच्" इति राजादित्वादत्प्रत्ययः ॥१२६॥

বাঙ্গালা—আমার দয়াসহচর বন্ধুগণের কিছু কালমাত্র চোখের জল পড়িবে ; তাহার পর তাহারা সংসারের নিন্দা করিয়া নিবৃত্তি পাইবে । কিন্তু মা ! কেবল আপনারই পুত্রশোকসাগর উত্তীর্ণ হওয়া দুষ্কর হইবে ॥১২৬॥

মশী" ইত্যমরঃ। "চক্রী নদী চক্রবাকি চক্রং সৈন্যরথাঙ্গয়োঃ। গ্রামজালে কুলালস্য ভাণ্ডে রাষ্ট্র-

অপ্যসামপি আবর্তে—" ইতি বিশ্বঃ।

... ইতি স ইতি প্রকৃত্যনুসারেণ ... ॥৩২॥

বাঙ্গালা— ... কারণ দণ্ড; সেই দণ্ড হইতে উৎপন্ন চক্রভ্রমণের জনকতা-গুণ, সে ... কখনই না;—আছে—) যেহেতু, সেই বৃত্ত দময়ন্তীর স্তনযুগল-রূপে পরিণত ... প্রবাহে বিস্তৃতরূপে চক্রের ভ্রমণ জন্মাইতেছে ॥৩২॥

**অন্বয়ঃ**— ... : নির্ম্মিতবর্হগর্হণঃ শিখী খলু ষণ্মুখং ভজতে; দমস্বসুঃ কুচশোভয়া জিতকুম্ভঃ ইভরাট্ অপি জম্ভরিপুং ভজতে ॥

ভজত ইতি। দমস্বসুর্দময়ন্ত্যাঃ, ... নির্ম্মিতা কৃতা বর্হগর্হণা পিচ্ছকুৎসা যস্য স তাদৃশঃ, শিখী ময়ূরঃ, খলু বাক্যালঙ্কারে, ষণ্মুখং কার্ত্তিকেয়ং ... আশ্রয়তি। তথা দমস্বসুঃ কুচশোভয়া স্বক-কান্ত্যা, জিতৌ কুম্ভৌ যস্য স তাদৃশঃ, ইভরাট্ ... আপি ... জম্ভরিপুম্ ইন্দ্রম্, ভজতে আশ্রয়তি, দময়ন্ত্যাশ্চিকুরকুচয়োঃ শোভালাভাভিলাষাৎ ভক্ত্যা, ... ইত্যাদিলাভেচ্ছাবশাৎ ভয়াদ্বা দৈবশৈবাদয়ো নাদিত্যাভয়বদপি ভাবঃ।

অত্র ভজত ইত্যেকয়া ক্রিয়য়া অপ্রস্তুতয়োঃ শিখীভরাজোঃ কর্তৃতয়াভিসম্বন্ধা... কার্ত্তিকেয়ভজনং জম্ভরিপুভজনঞ্চ প্রতি নির্ম্মিতবর্হগর্হপদস্য জিতকুম্ভপদস্য চ যথাক্রমং হেতুত্বাৎ পদার্থ... তাদৃশহেতুনা ভজনদ্বয়স্যাসম্বন্ধেঽপি তৎসম্বন্ধাদতিশয়োক্তিদ্বয়শ্চেত্যেতেষাং পূর্ববৎ সঙ্করঃ; তথা ছেকানুপ্রা... বৃত্ত্যনুপ্রাসশ্চেতি সমুদায়ে সংসৃষ্টিঃ। রসাদয়ঃ পূর্ববৎ।

"পিচ্ছবর্হে নপুংসকে" "জম্ভভেদী হরিহয়ঃ" ইত্যমরঃ ॥৩৩॥

বাঙ্গালা—দময়ন্তীর কেশকলাপ, আপন পুচ্ছের তিরস্কার করিয়াছে বলিয়া, ময়ূর যাইয়া কার্ত্তিকের সেবা করিতেছে; আর দময়ন্তীর স্তনসৌন্দর্য্য, নিজের কুম্ভকে জয় করিয়াছে বলিয়া, ঐরাবত হস্তী যাইয়া ইন্দ্রকে আশ্রয় করিয়াছে ॥৩৩॥

**অন্বয়ঃ**—নতমধ্যপৃষ্ঠতাস্ফুরদঙ্গুষ্ঠপদেন মুষ্টিনা চতুরঙ্গুলমধ্যনির্গতত্রিবলিভাজি দমস্বসুঃ উদরং জ্ঞাতম্ (বিধিনা) ॥৩৪॥

তাভ্যামুদরং বর্ণয়তি উদরমিতি। নত ঊর্দ্ধ্বৌভাবেন গর্ত্তীভূতঃ মধ্যো মধ্যদেশো যস্য তৎ তাদৃশং পৃষ্ঠং যস্যা দময়ন্ত্যাস্তস্যা ভাবঃ নতমধ্যপৃষ্ঠতা "লততোর্বিবচনস্য" ইতি হ্রস্বঃ। তয়া স্ফুরৎ ব্যক্তীভবৎ অঙ্গুষ্ঠপদং বিধেরঙ্গুষ্ঠস্থানং যস্য তেন তথোক্তেন, মুষ্টিনা, চতসৃণাম্ অঙ্গুলীনাং মধ্যেভ্যঃ অভ্যন্তরত্রয়াৎ নির্গতা যা তিস্রো বলয়ো মাংসরেখাঃ তাভির্ভাজতে শোভত ইতি তৎ তাদৃশম্, দমস্বসুর্দময়ন্ত্যাঃ উদরং জ্ঞাতমিব, বিধিনেতি শেষঃ। তথা চ দময়ন্ত্যাঃ পৃষ্ঠদেশে মেরুদণ্ডোপরি ঊর্দ্ধাধোলম্বমানঃ খলু যো গর্ত্তো বর্ত্ততে, স তু বিধেরুদ্ধাঙ্গুষ্ঠনিবেশাৎ জাতঃ; তথা উদরোপরি যৎ বলিত্রয়ং বর্ত্ততে; তত্র চতসৃণামঙ্গুলীনাং নিবেশাৎ, অঙ্গুলীচতুষ্টয়ে তন্মধ্যত্রয়স্যৈব সম্ভবাদিতি ভাবঃ।

(১) স্ফুটদঙ্গুষ্ঠপদেন

सं सृष्टि:। तथा जलमित्यस्य जघं पदानभिधानात् न्यूनपदतादोष:; स तु 'जल' इति ... ध्येय:। प्रकरणादेव दमयन्त्या लाभेन दमसमुद्रियनुक्ता यदि न न्यूनपदता ... ...त्यात् ओजो गुण:, गौड़ी च रीति।

चतुरङ्गुलीति "संख्याव्ययादङ्गुलि:" इति समासान्तो ...॥३४॥

বাঙ্গালা—বিধাতা বুড়ে আঙুলটা উঁচু রাখিয়া, ... করিয়া ... উদরটা তৈয়ার করিয়াছিলেন বলিয়া বোধ হয়। কেন না, তাহার পিঠে মেরুদণ্ডের উপরে সেই বুড়ে আঙুলের চাপের মত নীচু ভাগ রহিয়াছে; ...টির চারিটা আঙুলের তিনটা ফাঁক দিয়া তিনটা থর বাহির হইয়া পেটের উপর রহিয়াছে (ভাবানুবাদ) ॥৩৪॥

**অন্বয়:**— कोऽपि कुतुकी (सन्) ...ना दमस्वसु: उदरं परिमाति किमु। यत् सहेमकाञ्चिभि: वलिभि: (...) धृततच्चतुरङ्गुलि ... ॥३५॥

...। कोऽपि जन:, कुतुकी तदुदरस्यातिकृशतादर्शनेन कौतुकवान् सन्, मुष्टिना दमस्वसु: ... उदरं परिमाति किमु मुष्टिमध्ये म्रियते नवेति ज्ञातुं परिच्छिनत्ति किम्?। ननु ...—यत् यस्मात्, हेमकाञ्च्या स्वर्णमेखलया सहेति सहेमकाञ्चयस्ताभि:, वलिभि: ... तदुदरम्, धृतास्तस्य परिमातु: जनस्य चतस्रोऽङ्गुल्यो येन तत्ताद्दृशमिव भाति शोभते। तथा च एका ...काञ्चि:, तिस्रश्च वलय इति जनस्य परिमातुर्जनस्य मुष्टेरङ्गुलिचतुष्टयमित्याशय।

अत्र पूर्वार्द्धे किमुशब्दस्य उत्प्रेक्षावाचकत्वात् द्वितीयार्द्धे च साक्षादुत्प्रेक्षावाचकेवशब्दोपादानात् वाच्यं भावाभिमानि क्रियोत्प्रेक्षाद्वयम्, तयोश्च कार्य्यकारणभावादङ्गाङ्गिभावेन सङ्कर:। रस: पूर्ववत्, प्रसादो गुण:, वैदर्भी च रीति:।

"संख्याव्ययादङ्गुलि:" इत्यत्र "प्रागुक्तो विधिस्तत्पुरुष एव" इति नियमात् धृततच्चतुरङ्गुलीत्यत्र बहुव्रीहौ नात्-प्रत्यय: ॥३५॥

বাঙ্গালা—কোন লোক কৌতুকাবিষ্ট হইয়া মুট দ্বারা দময়ন্তীর উদরটা মাপিতেছে কি? । যেহেতু সে উদরটা স্বর্ণময় চন্দ্রহারের সহিত তিনটি থরকেই যেন সেই মাপয়িতার চারিটি আঙুলের ন্যায় ধারণ করিতেছে ॥৩৫॥

**অন্বয়:** — विधि: मिहिरस्यन्दनशिल्पशिक्षया पृथु वर्त्तुलतन्नितम्बकम् (सन्) एककचक्रचारिणं मान्मथं रथं निर्मित्सति किमु ॥३६॥

एकेन नितम्बं वर्णयति पृथ्विति। विधिर्विधाता, मिहिरस्य सूर्य्यस्य य: स्यन्दन एकचक्रो रथस्तस्य शिल्पं निर्माणं तस्य शिक्षया शिक्षानिबन्धनपाटवेन, पृथुं विशालं वर्त्तुलं गोलाकारं तस्या दमयन्त्या नितम्बं कटी-पश्चाद्भागं करोतीति स ताद्दृश: सन्, एककेन अद्वितीयेन चक्रेण चरितुं शीलं यस्य तम्, मन्मथस्य कामदेवस्याय-मिति मान्मथस्तम्, रथम्, निर्मित्सति निर्मातुमिच्छति किमु। तथा च सूर्य्यस्य एकचक्ररथनिर्माणेन ताद्दृश-

जलजे रविसेवयेव ये पदमेतत्पदतामवापतुः ।
ध्रुवमेत्य रतः सहंसकी-कुरुतस्ते विधिपत्रदम्पती ॥३८॥

---

[illegible] पुरावर्त्तिन्यम् विधाता दमयन्त्या विशालगोलाकारनितम्बात्मकं कथमयुक्तं कामदेवस्य रथं निर्मातु- मिच्छतीति [illegible]र्थः । दमयन्त्या नितम्बदेशदर्शनेन अतीवकामोद्रेकः स्यादित्याशयः ।

अत्र [illegible] मिनी क्रियोत्प्रेक्षा च्छेकानुप्रासश्चानयोः संसृष्टिः । पूर्ववत् रसः, माधुर्यं गुणः, पाञ्चाली च रीतिः ।

বাঙ্গালা—[illegible] সূর্য্যের একচক্র রথ নির্ম্মাণ করিয়া যে শিক্ষা লাভ করিয়াছিলেন, সেই শিক্ষার ব[illegible] বিশাল ও গোলাকার নিতম্ব নির্ম্মাণ করিয়া কামদেবের জন্য এক- চক্রচারী আর একখানি রথ নির্ম্মাণ করিবার ইচ্ছা করিতেছেন কি ? ॥৩৬॥

अन्वयः—सुन्दरी परिणाहिना ऊरुद्वयेन परं रम्भा तरुः जिता: किमु ? धनदापत्य-तपः-फल-स्तनी तां रम्भाम् अपि जिता: एव ॥३७॥

एकेन ऊरुयुगलं वर्णयति तरुमिति । सुन्दरी सर्वाङ्गसुन्दराङ्गी दमयन्ती, परिणाहिना विशालतायालिना, ऊरुयुगेन ऊरुद्वयेन, परं केवलम्, रम्भां तरुं कदलीं नाम तरुम्, जिता जयशीला किमु ? अपि तु कथमपि नेतार्थः । किन्तर्हि इत्याह—धनदस्य कुबेरस्य अपत्यं पुत्रः नलकूबरस्तस्य [illegible] तपसः फलं स्तनौ यस्यास्ताम्, तां रम्भापदवाच्यां रम्भानाम्नीमित्यर्थः, तरुणीं युवतिम् अपि, जितवतीव [illegible] रम्भाया ऊरुयुग- स्यापेक्ष्य तदूरुयुगस्य सौन्दर्य्याधिक्यादित्याशयः ।

अत्र पूर्वार्द्धे अर्थापत्तिः, दमयन्त्या ऊरुयुगकर्त्तृकरम्भोरुजयनिश्चयासम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्ति- रित्यनयोरङ्गाङ्गिभावेन सङ्करः । तथा प्रथमपादे वृत्त्यनुप्रासः, द्वितीये च छेकानुप्रास इति द्वयमुक्तार्थे संसृष्टिः । पूर्ववत् पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ।

"रम्भा स्यादप्सरोभेदे कदलीव्रीहिभेदयोः" इति मल्लः ।

जेतुं शीलमस्या इति जिष्णुः ; "ग्लाजिस्थश्च ग्स्नुः" इति जयतेः ग्स्नुप्रत्ययः, तस्य च निष्ठादित्वात् रम्भा- मित्यादौ न कर्म्मणि षष्ठी ।

कुबेरपुत्रो नलकूबरः सुस्तनीं काञ्चित् तरुणीमभिलष्य तपश्चचार ; ततो रम्भा जातेति पौराणिकी वार्त्ता ॥३७॥

বাঙ্গালা—সুন্দরাঙ্গী দময়ন্তী, নিজের বিশাল উরুযুগল দ্বারা কেবল কি কদলীবৃক্ষ- কেই জয় করিয়াছেন ? (তাহা নহে) ; কিন্তু কুবেরপুত্র নলকূবরের তপস্যার ফলে যাহার সুন্দর স্তনযুগল হইয়াছিল ; সেই রম্ভানাম্নী যুবতিকেও নিশ্চয়ই জয় করিয়াছেন ॥৩৭॥

अन्वयः—ये जलजे रविसेवया इव एतत्पदतां पदम् अवापतुः, रतः ध्रुवं विधिपत्रदम्पती एत्य ते सहंसकीकुरुतः ॥३८॥

द्वाभ्यां चरणं वर्णयति जलजे इति । ये जलजे पद्मद्वयं कर्त्तृणी, रवेः सूर्य्यस्य सेवया तदभिमुखावस्थान- रूपोपासनया इव, एतस्या दमयन्त्याः, पदतां चरणत्वरूपम्, पदम् उत्तमस्थानम्, अवापतुः प्राप्तवती ; रतः अन्वात् तयोरेव पदयोः अनुरागवशादित्यर्थः ध्रुवं निश्चितम्, विधेर्ब्रह्मणः पत्रे वाहनीभूतौ दम्पती हंसजायापती, एत्य आगत्य, ते जलजे, सहंसकीकुरुतः हंसकयुक्ते पादकटकद्वययुक्ते च कुरुतः । तथा च देवसेवया अव-

अत्र पूर्वार्द्धे वाच्या गुणीभूतव्यङ्ग्या ; परार्द्धेऽपि च वाच्या [illegible] इति श्लेषेणामेदाध्यवसायादतिशयोक्तिः ; प्रथमे पादे वृत्त्यनुप्रासः, द्वितीये च छेका[illegible]तया परस्परनिरपेक्षतया संसृष्टिः । पूर्ववत् पूर्वरागरूपो रसः, मधुररचनाख्यमाधुर्य्यं गुणः, [illegible]रीतिः ।

"पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" [illegible]हंसकः पादकटकः" "[illegible] [illegible] तूर्य्यम्" इत्यमरः ।

रवणं रुत् सम्पदादित्वात् रौतेर्भावे क्विप् । [illegible] सहंसक असहंसकौ, सहंसकौ कुरुत इति सहंसकीकुरुतः अभूततद्भावे च्चि प्रत्ययः ॥३८॥

বাঙ্গালা—যে দুইটী পদ্ম, সূর্য্যের উপাসনাবশতঃই যেন দময়ন্তীর চরণস্বরূপ উৎকৃষ্ট স্থান লাভ করিয়াছিল ; (সেই চরণের) রব শুনিয়া নিশ্চয়ই আমার বোধ হয় যে, ব্রহ্মার বাহন হংসযুগল আ[illegible] সেই পদ্ম দুইটীকে হংসযুক্ত করিতেছে ॥৩৮॥

अन्वयः—[illegible]समाधिक्षपिताखिलक्षपं जलजं दमयन्तीपदनाम्नि जन्मनि कथं मञ्जुलां गतिं [illegible]

[illegible] श्रिता: स्वभावात् धर्म्मार्जनाभिलाषाच्च अवलम्बिताः पुण्याः पुण्यजनिकाः सरः-सरितः मानसादि-सरोवर-गङ्गादिनद्यो येन तत्, तथा समाधिना निद्रया सूर्य्यादर्शनात् मुद्रणेनेत्यर्थः ध्यानेन च क्षपिता अतिवाहिताः अखिलाः सर्वाः क्षपा रात्रयो येन तत् तथोक्तम्, जलजं पद्मम्, दमयन्त्याः पदं चरणमेव नाम यस्य तस्मिन् जन्मनि दमयन्त्याः पदरूपेणोत्पत्तावित्यर्थः, कथं केन हेतुना, मञ्जुलां मनोहराम्, गतिं गमनं दशाञ्च, न एतु न प्राप्नोतु, अपि त्ववश्यमेव एतु इत्यर्थः ; तदर्थमेव उक्तविधधर्म्मार्जनात् धर्म्मार्जनेन च अन्यस्यापि जन्मान्तरे मनोहरगतिप्राप्तिदर्शनादिति भावः ।

अतएवात्र श्लिष्टविशेषणसाम्येन जलजे उक्तविधपुण्यवज्जनव्यवहारसमारोपात् समासोक्तिः, मनोहरगतिप्राप्तिं प्रति श्रितेत्यादिविशेषणपदद्वयार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम् अर्थापत्तिश्च तौ तेषामङ्गाङ्गिभावेन सङ्करः ; पूर्वार्द्धे छेकानुप्रास इति समुदाये संसृष्टिः । पूर्ववत् रसः, प्रसादो गुणः, वैदर्भी च रीतिः ।

"समाधिर्नियमे ध्याने निद्रायाञ्च समर्थने" "गतिर्मार्गे दशायाञ्च ज्ञाने यात्राभ्युपाययोः । नाडीव्रणसरण्योश्च" इति विश्वः ।

एत्विति "विध्यादिषु सप्तमी च" इति सम्भावनायां पञ्चमी ॥३९॥

বাঙ্গালা—যে পদ্ম, পুণ্যজনক সরোবর ও নদী আশ্রয় করিয়াছিল এবং, সমাধি অবলম্বনপূর্ব্বক সমস্ত রাত্রি অতিবাহিত করিয়াছিল ; সে পদ্ম, দময়ন্তীর পদনামক জন্মে সুন্দর গতি লাভ করিবে না কেন ? ॥৩৯॥

अन्वयः—सरसीः परिशीलितुं गमिकर्म्मीकृतनैकनीवृता मया तदुत्सङ्गमयमीयरोदरी सा हंसीः [illegible] अतिथित्वम् अनायि ॥४०॥

[illegible] दमयन्ती [illegible] । [illegible]

[illegible] दमयन्त्या [illegible]

[illegible] यत्र [illegible] सा दमयन्ती, दृशोर्नेत्रयोः चक्षुषोः, अतिथित्वं विषयत्वम्, अनायि नीता । अत-

[illegible] त्या मामित्यन्वय ।

अत्र दमयन्त्याः [illegible] तत्सम्बन्धोक्त्या रतिशयोक्तिरलङ्कारः ; तेन चालीकत्वमो-

रत्वं व्यज्यत [illegible] । [illegible]

"सरसी स्यान्मतद् सर:" इति [illegible] । "[illegible]" इत्यमरः ।

गमीति "इषगम् लिपी कामुकस्ये" इतीक [illegible] धातुस्वरूपस्यैव उपस्थापकतया गमनमेव तेन तस्य गमेः

तरदेशसंयोगानुकूलव्यापाररूपस्य गमनस्य कर्मीकृता: ततम [illegible] दकफलाश्रयीकृता इत्युप-

त्ति: । न एका नैका "येन नाप्राप्तिन्यायेन" इत्यादिवत् "नभ्राण्नपादित्यादिषु नञ् प्रकृत्या" इति [illegible] नञः प्रकृति-

भाव: । निवर्त्तत इति नीवृत् क्विपि "नहिवृति—" इत्यादिना दीर्घ ॥४०॥

বাঙ্গালা—আমি, সরোবরসমূহে অবগাহন করিবার জন্য, বহু দেশ পর্যটন করিয়া, সেই দময়ন্তীকে দৃষ্টিপথে আনিয়াছিলাম ; তাঁহার উদরটী কিন্তু 'আছে কি নাই' এই রূপ সন্দেহের বিষয় ছিল ॥৪০॥

অন্বয়:—अहम् इमां दिव: यौवतैः अपि सह न अधीतवतीम् अवधृत्य, [illegible] आशये अस्याः कतम: नु पति: वसति' इति अचिन्तयम् ॥४१॥

व्याख्या दमयन्त्याः पतिविषये चिन्तामाह अवधृत्येति । अहम्, इमां प्रकृतां दमयन्तीम्, दिव: स्वर्गलोकस्य यौवतैः युवतिगणैरपि सह न अधीतवतीम् एकत्राध्ययनमकृतवतीम् असदृशीं तेभ्योऽपि उत्तमामित्यर्थः, अवधृत्य सौन्दर्यतारतम्येन निश्चित्य, विधातुर्ब्रह्मणः आशये मनसि अस्या दमयन्त्याः; कतमस्तु बहूनां पतीनान्तु मध्ये को नामोत्तमः पति:, वसति वर्त्तते, इति अचिन्तयं विधाता को नाम पुरुषः अस्याः पतित्वेनाभिप्रेत इति विचारितवानित्यर्थः ।

अत्र उपमानभूतस्वर्गयुवतिभ्य उपमेयभूताया दमयन्त्या आधिक्यवर्णनात् व्यतिरेकालङ्कारः । न सहाधी-तवतीमित्यनेनाभिमतस्य असदृशीमित्यर्थस्य निन्दितत्वेऽप्युपपत्तौ विरुद्धमतिकारितादोषः प्रसक्तोऽपि प्रकृतत्वेन कवीत्कर्षस्यैव निश्चयान्न नियमः ; तथा अहमित्यादिवाक्यान्तरमध्ये कतम इत्यादिवाक्यान्तरस्य प्रवेशेऽपि चैत्रो ग्रामं गच्छतीत्यादौ ग्राममित्यादिवत् कतम इत्यादिवाक्यस्य इतिशब्देन कर्म्मरूपत्वव्यवस्थापनान्न गर्भितताद्दोषः । प्रसादो गुणः, वैदर्भी च रीतिः ।

युवतीनां समूहा इति यौवतानि तैः,एवमादित्वात् समूहार्थेऽण् ॥४१॥

বাঙ্গালা—আমি এই দময়ন্তীকে স্বর্গের যুবতিগণ অপেক্ষাও অধিক সুন্দরী স্থির করিয়া চিন্তা করিয়াছিলাম যে, কোন্ পুরুষ ইহাঁর পতিরূপে বিধাতার মনে বাস করিতেছে ॥৪১॥

अहम्, अन्येषु सर्वेषु अपि युवसु, पूर्वपक्षतां दमयन्त्या अयोग्यत्वात् पूर्वपक्ष[illegible] निरसनीयपूर्वोपन्यस्तपक्षताम्, व्यपनेतुं निरसितुम्, अक्षमः असमर्थः सन्, त्वयि नले, सिद्धान्तधियं दमयन्त्या योग्यत्वनिश्चयबुद्धिम्, अवेशयं निवेशितवान् विषयतया स्थापितवानित्यर्थः। यथा च शास्त्रे [illegible]भा सर्वं एव पूर्वपक्षा निरास्याः, तथा दमयन्त्या योग्यत्वे अन्ये सर्वं एव युवानो निरास्याः; एवं शास्त्रे यथा सिद्धान्तो ग्राह्यः, तथा दमयन्तीयोग्यत्वे त्वमेव ग्राह्य इति भावः।

अत्र नले सिद्धान्तबुद्धिनिवेशनेन नलदमयन्त्योः परस्परानुरूपत्वेन श्लाघाप्रतीतेः समं नामालङ्कारः, पूर्वोक्त-च्छेकानुप्रासश्चेत्युभयोः संसृष्टिः। पूर्वरागरूपः शृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः।

"प्रकृत्यर्थविरोधी तर्कोपन्यासः पूर्वपक्षः। शास्त्रार्थविनिश्चयो निर्णयः" इति तिथितत्त्वे आप्तः। निर्णय एव च सिद्धान्तः। सर्वं एव युवानो दमयन्त्यायोग्या इति पूर्वपक्षः; न; नलस्तु योग्य इति च सिद्धान्तः ॥४२॥

**বাঙ্গালা**—তাহার পর, আমি মনে মনে দময়ন্তীর যোগ্য বর নিরূপণ করিতে প্রবৃত্ত হইয়া, (আপনি ভিন্ন) সকল যুবকের উপরেই পূর্বপক্ষতা খণ্ডন করিতে না পারিয়া, আপনার উপরেই সিদ্ধান্তবুদ্ধি স্থাপন করিলাম ।৪২।

**अन्वयः**—चिरम् अवलोकिता अपि शुचिस्मिता सा अनया तव रूपसीमया कृतसंस्कारविबोधनस्य मे अद्य स्मृतिम् आरूढवती ॥४३॥

अनयेति। चिरं बहुपूर्वम्, अवलोकितापि दृष्टापि, शुचिस्मिता निर्मलहास्या, सा दमयन्ती, अनया दृश्यमानया, तव रूपस्य सौन्दर्यस्य सीमया शेषावधिना असाधारणसौन्दर्येणेत्यर्थः, कृतं संस्कारस्य स्मृतिप्रवर्तक-भावनाख्यसंस्कारस्य विबोधनम् उद्बोधनं यस्य तस्य तादृशस्य, मे मम, अद्य स्मृतिं आरूढवती स्मरणविषयतां प्राप्तवती। योग्यवस्तुदर्शनं हि भावनाख्यसंस्कारोद्बोधनद्वारा योग्यवस्त्वन्तरं स्मारयतीति भावः।

अत्र स्मृत्यारोहणं प्रति कृतेत्यादिपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः। राघवानन्दमता-नुमते स्मरणालङ्कारोऽपीति चेत्तर्हि सङ्करः। रसादयः पूर्ववत् ॥४३॥

**বাঙ্গালা**—আপনার এই সৌন্দর্য্যের পরা কাষ্ঠাতে আমার ভাবনাখ্যসংস্কারের উদ্বোধন জন্মাইয়া দিয়াছে; সুতরাং সেই নির্ম্মলহাস্যা দময়ন্তীকে বহুপূর্বে দেখিয়া থাকি-লেও, তিনি আজ আমার স্মৃতিপথে উঠিয়াছেন ।৪৩।

**अन्वयः**—(हे) वीर! परं त्वयि दमयन्ती-किलकिञ्चितं विराजते किल। नखिहारावलिरामणी-यकं तदवीस्तने एव दीप्यते ॥४४॥

अतएवात्र एकत्र ।

प्रतिवस्तूपमा तद्वारेणैव काव्यप्रातिस्विकेन स‌ंसृज्यते । रसादय: पूर्ववत् ।

"स्मित-शुष्करुदित-हसित-त्रास-क्रोध-श्रमादीनाम् । साङ्कर्य्यं किलकिञ्चितम् अभीष्टतमसङ्गमादिजात् हर्षात् ॥" इति साहित्यदर्पण: ।

किल सम्भाव्यं किञ्चित् भावान्तरमिति किलकिञ्चितम्, पृषोदरादित्वात् साधु ॥४४॥

বাঙ্গালা—হে বীর! কেবল আপনার উপরেই দময়ন্তীর কামানুরাগ আবির্ভূত হইয়া শোভা পাইতেছে ইহা নিশ্চয়। কেন না, মণিময়হারশ্রেণীর সৌন্দর্য্য, যুবতির স্তনেই শোভা পাইয়া থাকে ॥৪৪॥

**अन्वय:**—इदं तव रूपं तया विना अवकेशिन: पुष्पम् इव विफलम्; (तथा) ऋद्धधना इयम् अवनी वृथा, सम्भवदन्पिका सुवनी अपि का? ॥४५॥

दमयन्त्यर्थं मतान्तमुत्सुकयन्नाह तवेति । इदं दृश्यमानम्, तव रूपम् असाधारणं सौन्दर्य्यम्, तया दमयन्त्या विना । एतच्च परवाक्यद्वयेऽप्यन्वेति । अवकेशिनो वन्ध्यावृक्षस्य, पुष्पमिव, विफलं निष्प्रयोजनं फलरहितञ्च; रूपलभ्यस्य योग्यरमणीरत्नस्यालाभादिति भाव: । तथा ऋद्धानि तवैव चेष्टया वृद्धिं प्राप्तानि धनानि यस्यां सा तथोक्ता, इयम् अवनी तवायत्ता पृथिवी, वृथा व्यर्था; सम्भवदन्तो मधुरमालपन्त: पिका: कोकिला यस्यां सा तादृशी, सुन्दरं स्वल्पं वनमुद्यानमिति सुवनी मनोहरमुद्यानमित्यर्थ:, अपि च का न कापि नितान्ततुच्छेत्यर्थ:; योग्यस्त्रीसहभावेन भोगस्यैव मधुरायमाणत्वात् अन्यथा च शून्यप्रायत्वादिति भाव:

अत्र प्रथमार्द्धे पूर्णोपमाविनोक्त्योरेकाश्रयानुप्रवेशरूप: सङ्कर:; द्वितीयार्द्धे तु विनोक्तिद्वयम्, अर्थापत्ति:, छेकानुप्रासश्चेति समुदाये स‌ंसृष्टि: । पूर्वरागरूपशृङ्गारो रस:, प्रसादो गुण:, वैदर्भी च रीति: ।

"वन्ध्योऽफलोऽवकेशी च" इत्यमर: । स्वल्पत्वाद्यर्थविवक्षायां कुण्डलादिशब्दानां नदादित्वान्ङीकारात् सुवनशब्दस्य च कुण्डलादिगणान्त:पातित्वात् सुवनीत्यत्र नदादित्वादीप् इत्यर्थ: । तथा चामर: — "स्त्री स्यात् काचिन्मृणाल्यादि विवक्षापचये यदि" ॥४५॥

বাঙ্গালা—বন্ধ্যা বৃক্ষের ফুল যেমন নিষ্ফল; দময়ন্তী ব্যতীত আপনার এই রূপও তেমনই নিষ্ফল; আর দময়ন্তীকে ছাড়া আপনার এই ধনসমৃদ্ধিপূর্ণ রাজ্য বৃথা এবং যে উদ্যানে কোকিলগণ কলরব করিয়া থাকে, সেই সুন্দর উদ্যান ও তুচ্ছ ॥৪৫॥

(১) সবনী।

জ্ঞাপয়িতুমেব ; পরন্তু তস্য তৎকার্য্যস্য সম্পাদনদ্বারৈব আত্মীয়যোগ্যতাপ্রকাশো মম সাধুতা ভবেৎ, তৎ-সম্পাদনাৎ পূর্ব্বন্তু তৎপ্রকাশো মুখরতাপ্রকাশনেন মমাসাধুত্বমেবেতি অক্ষরার্থো ভাবার্থশ্চ।

অত্র সামান্যেন বিশেষসমর্থনরূপোঽর্থান্তরন্যাসোঽলঙ্কারঃ, দ্বিতীয়পাদে ছেকানুপ্রাসবৃত্ত্যনুপ্রাসয়োঃ সংসৃষ্টিঃ। বৃত্তাদিকং পূর্ব্ববৎ ॥৪৮॥

বাঙ্গালা—এ বিষয়ে আপনার সম্মতি আছে কি না, কেবল তাহা জানিবার জন্যই আমি ইহা নিবেদন করিয়াছি ; কিন্তু তাহা নিন্দনীয়ই হইয়াছে। কেন না, সজ্জনেরা ফলসম্পাদন দ্বারাই আপনাদের উপযোগিতা প্রকাশ করিয়া থাকেন ; কিন্তু বাক্য দ্বারা করেন না ॥৪৮॥

অন্বয়ঃ—সঃ দ্বিজাধিপাৎ অভ্যুদিতং বিশদং তদিদং বচোঽমৃতং পরিপীয় অতিতৃপ্ততয়া তদুদ্গারম্ ইব স্মিতং সিতং বিনির্ম্মমে ॥৪৯॥

তদিতি। স নলঃ, দ্বিজানাং পক্ষিণামধিপো হংস এব দ্বিজানাং ব্রাহ্মণানামধিপো রাজা চন্দ্রস্তস্মাৎ, অভ্যুদিতমুৎপন্নম্, বিশদং ব্যক্তং স্পষ্টার্থমিত্যর্থঃ স্বভাবত এব শুভ্রঞ্চ, তচ্চ তৎ ইদঞ্চেতি তদিদম্, বচো বাক্যমেব অমৃতং সুধা তৎ, পরিপীয় আদরেণ সর্ব্বথা শ্রুত্বা সাকল্যেন পীত্বা চ, অতিতৃপ্ততয়া নিতান্তসন্তুষ্টতয়া পানাধিক্যেন চ হেতুনা, তস্য বিশদস্য বচোঽমৃতস্য উদ্গারং বাষ্পোদ্গমনম্ ইব, সিতং শুভ্রবর্ণম্, স্মিতম্ ঈষদ্ধাস্যম্, বিনির্ম্মমে চকার। যদ্বর্ণং বস্তু ভুজ্যতে পীয়তে বা উদ্গারস্যাপি তদ্বর্ণত্বমৌচিত্যেন সিতা-পরপর্য্যায়স্য বিশদস্য বচোঽমৃতস্য পানাৎ তদুদ্গারস্যাপি সিতত্বম্, "যশাংসি ধবলতা বর্ণ্যতে হাসকীর্ত্ত্যোঃ" ইতি কবিসময়প্রসিদ্ধেঃ স্মিতস্য চ সিতত্বমিত্যাশয়ঃ।

অত্র বচসি অমৃতত্বারোপো হংসে চন্দ্রত্বারোপং প্রতি কারণং দ্বিজাধিপপদস্য শ্লিষ্টমিতি শ্লিষ্টপরম্পরিতরূপ-কমলঙ্কারঃ, ক্রিয়োৎপ্রেক্ষা আনয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ, চ্ছেকানুপ্রাসশ্চেতি তেন সহ পুনঃ সংসৃষ্টিঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ।

"বিশদঃ পাণ্ডুরে ব্যক্তে" ইতি হৈমচন্দ্রঃ। "দন্তবিপ্রাণ্ডজা দ্বিজাঃ" ইত্যমরঃ ॥৪৯॥

বাঙ্গালা—পক্ষিশ্রেষ্ঠ হংস হইতে উৎপন্ন সেই রূপ নির্ম্মল বাক্যামৃত পান করিয়া, মহারাজ নল অত্যন্ত তৃপ্তিবশতঃ তাহার উদ্গারের ন্যায় শুভ্রবর্ণ হাস্য করিলেন ॥৪৯॥

বাক্যানি, অগিরৎ উদ্গারিতবান্।

অত্র “মুখং তব কুরঙ্গাক্ষি! সরোজমিতি নান্যথা” ইতি দর্পণোদাহৃতবৎ অনাহার্য্যেঽপি মুখাদ্য-জন্মনি কোকনদত্বারোপাৎ নিরঙ্গং কেবলরূপকম্, প্রিয়বাচি অমৃতত্বারোপঃ কণ্ঠে কূপত্বারোপং প্রতি নিমিত্তমিতি পরম্পরিতরূপকম্, ছেকানুপ্রাসশ্চেত্যেতেষাং পরস্পরনিরপেক্ষতয়া সংসৃষ্টিঃ। দ্বিতীয়রূপকেণ চ গিরামমৃততুল্যত্বং ব্যজ্যতে। তথা তৃতীয়চরণেন বাক্যসমাপ্তাবপি পুনর্গিরঃ ইত্যস্য বিশেষণতয়া চতুর্থচরণোপাদানাৎ সমাপ্ত-পুনরাত্ততাদোষঃ; “সুধয়োঽমৃতকূপকণ্ঠতঃ অগিরদমুং মৃদুং গিরং অর্ণঃ” ইতি পঠনে চ তস্য পরিহারঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ।

“রক্তোৎপলং কোকনদম্” ইত্যমরঃ ॥৫০॥

**বাঙ্গালা**—মহারাজ নল, রক্তবর্ণ পাণিকমল দ্বারা হংসটীকে পরিমার্জনা করিয়া, তাহার আনন্দের নিমিত্ত বাক্য বলিতে আরম্ভ করিলেন; সে বাক্যগুলি প্রিয়বাক্যরূপ অমৃতের কূপরূপ কণ্ঠ হইতে উৎপন্ন হইয়াছিল ॥৫০॥

**অন্বয়ঃ**—তব আকৃতিঃ তুলাবিষয়ে ন (বর্ত্ততে; তথা) তে সুশীলতা বচোবর্ত্মনি ন (বর্ত্ততে)। আকৃতৌ গুণাঃ ইতি সামুদ্রকসারমুদ্রণা ত্বদুদাহরণা ॥৫১॥

কা নাম গিরঃ অগিরদিত্যাহ নেতি। তব আকৃতিঃ রূপম্, তুলায়াঃ সাদৃশ্যস্য বিষয়ে, ন বর্ত্ততে, অসাধারণসুন্দরত্বাদিতি ভাবঃ; তথা তে তব, সুশীলতা সৎস্বভাবত্বম্, বচোবর্ত্মনি বাক্পথে, ন বর্ত্ততে তব সাধুস্বভাবত্বমপি বাচা নির্ব্বক্তুমশক্যমিত্যর্থঃ, অযাচিতনিঃস্বার্থভাবেন স্বভাবত এব পরোপকারে প্রবৃত্তত্বাদিত্যাশয়ঃ। অতএব আকৃতৌ রূপে, গুণা বসন্তি সুন্দরাকৃতৌ সদ্গুণাঃ কুৎসিতাকৃতৌ চ দুষ্টগুণাঃ প্রায়েণ বর্ত্তন্ত ইত্যর্থঃ, ইতি এবমর্থিকা “যত্রাকৃতিস্তত্র গুণা বসন্তি” ইত্যেবংরূপেতি তাৎপর্য্যম্, সামুদ্রকস্য লক্ষণদৃষ্ট্যা শুভাশুভনিশ্চয়কারকশাস্ত্রবিশেষস্য সারা শ্রেষ্ঠা মুদ্রণা লিপিবিন্যাসঃ, ত্বমেব উদাহরণং দৃষ্টান্তো যস্যাঃ সা তাদৃশী। তথা চ তব যাদৃশমুত্তমং রূপম্, গুণা অপি তাদৃশা এবোত্তমাঃ। অতএব “যত্রাকৃতিস্তত্র গুণা বসন্তি” ইতি সর্ব্বথা সত্যস্য সামুদ্রকবচনস্য ত্বমেব দৃষ্টান্ত ইতি সরলার্থঃ।

অত্র আকৃতেস্তুলাবিষয়ে বর্ত্তমানত্বসম্বন্ধেঽপি তদসম্বন্ধোক্তেঃ তথা সুশীলতায়া বচোবর্ত্মনি বর্ত্তমানত্বসম্বন্ধেঽপি তদসম্বন্ধোক্তেরিতিশয়োক্তিদ্বয়ম্, পূর্ব্বার্দ্ধস্য পরার্দ্ধং প্রতি হেতুত্বাৎ বাক্যার্থহেতুকং কাব্যলিঙ্গম্, অয়ার্দ্ধে অন্ত্যানুপ্রাসশ্ছেকানুপ্রাসশ্চেত্যেষাং মিথো নিরপেক্ষতয়া সংসৃষ্টিঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ।

“তুলা সাদৃশ্যকোষয়োঃ” ইতি বিশ্বপ্রকাশঃ। “আকৃতিস্তু স্ত্রিয়াং রূপে সামান্যবপুষোরপি।” ইতি মেদিনী ॥৫১॥

नेति। नन्विति सम्बोधने। हे हंस! तावकी त्वत्सम्बन्धिनी, तनुः शरीरम्, परं केवलम्, सुवर्ण-मयी स्वर्णमयी न; किन्तु, तावकी त्वदीया, वाक् वाक्यमपि, तथा सुवर्णमयी शोभना वर्णा अक्षराणि यस्यां सा तत्स्वरूपा। न केवलं तव शरीरं स्वर्णमयत्वात् सुन्दरम्, अपि तु वाक्यमपि शोभनाक्षरशालित्वात् सुन्दर-मित्यर्थः। तथा न विद्यते अवलम्बः अवलम्बनम् आश्रयो यस्मिन् तादृशे अवलम्बनशून्ये पथि गगनमार्गे, परं केवलम्, न, पक्षाभ्यां पतत्राभ्यां पतति गच्छतीति पक्षपाती तस्य भावः सा पक्षाभ्यां गमनमित्यर्थः; किन्तु किन्तु अनवलम्बे निराश्रये निरुपाये, मादृशे कामुके जनेऽपि, सा पक्षपातिता पक्षवर्त्तित्वम् आनुकूल्यकारित्व-मित्यर्थः, वर्त्तते इति शेषः। दमयन्तीप्राप्तिं प्रति निरुपायस्य मे त्वमेवोपाय इत्याशयः।

अत्र सुवर्णमयी पक्षपातितेत्युभयत्र पदद्वये वाच्यशब्दालङ्कारद्वयम्, तस्य च परस्परनिरपेक्षतया संसृष्टिः। तथा परमित्यस्य द्विः पाठात् कथितपदतादोषः; स च 'न सुवर्णमयी तनूरभून्नवरं वागपि तावकी तथा' इति प्रथमार्द्धपाठेन समाधेयः। नवरं केवलमित्यर्थः, "नवरं केवलार्थकम्" इति रभसकोषात्। प्रसादो गुणः वैदर्भी च रीतिः।

तव इयमिति तावकी, अण्प्रत्यये "तवकममकौ कर्द" इति तवकादेशाद्ङीप्रत्ययः ॥५२॥

**বাঙ্গালা**—হে হংস! তোমার শরীরটাই যে কেবল সুবর্ণময়, তাহা নহে; কিন্তু তোমার বাক্যও সু-বর্ণময়; আবার শূন্যপথেই যে কেবল তোমার পক্ষপাতিতা, তাহা নহে; কিন্তু আমার মত নিরুপায় লোকের প্রতি ও তোমার সে পক্ষপাতিতা আছে ।৫২।

**अन्वयः**—(हे) सन्! भृशतापभृता मया भवान् तुषारसारवान् मरुत् आसादि। धनिनाम् इतरः निधिः, सतां पुनः गुणवत्सन्निधिः एव निधिः ॥५३॥

भृशेति। हे सन्! साधो! निःस्वार्थभावेन परोपकारे प्रवृत्तत्वादिति भावः। भृशमत्यन्तं तापं कामज्वरं बिभर्त्तीति तेन तादृशेन मया, भवान् भवत्स्वरूपः, तुषारस्य हिमस्य सारः कणारूपः श्रेष्ठभागोऽस्यास्तीति स तथोक्तः, मरुत् वायुः, आसादि लब्धः। शीतलवायुलाभेन रवितापसन्तप्तस्येव भवल्लाभेन कामसन्तप्तस्य ममापि शान्तिसम्भावनया आनन्दातिशय इत्याशयः। तथा च धनिनाम् इतरो गुणवत्सन्निधिभिन्नः, निधिः शङ्ख-पद्मादिनामकं धनभाण्डम्, सतां सज्जनानां पुनः, गुणवतां परोपकारित्वादिगुणशालिनाम्, सन्निधिः सामीप्य-मेव, निधिः शङ्खपद्मादिनिधिस्वरूपः; उभयोरपि उभयेषु समानानन्दजननादित्यभिप्रायः।

**অন্বয়:**—ত্রিজগন্মোহমহৌষধিঃ সা মম শতশঃ শ্রুতিম্ আগতা এব। তু অধুনা তব শংসিতেন তাং স্বদৃশা এব অধিগতাম্ অবৈমি ॥৫৪॥

তবাহং স্বাপনায় আত্মনঃ পরমবিশ্বাসং জ্ঞাপয়িতুমাহ শতশ ইতি। ত্রিজগতী ত্রিজগদ্বাসিনাং যূনাং মোহে মূর্চ্ছায়াং মহৌষধিস্তৎস্বরূপা, সা দময়ন্তী, শতশো বহুবারমিত্যর্থঃ, শ্রুতিং কর্ণম্, আগতা প্রাপ্তা এব তাদৃশসৌন্দর্য্যাদিমত্তয়া সা বহুবারান্ শ্রুতৈব ন পুনঃ স্বচক্ষুষা দৃষ্টেতি তাৎপর্য্যম্। তু কিন্তু, অধুনা তব শংসিতেন গুণবর্ণনেন, তাং দময়ন্তীম্, স্বদৃশৈব নিজচক্ষুষৈব, অধিগতাং প্রাপ্তাং দৃষ্টামিত্যর্থঃ, অবৈমি জানামি; পরমবিশ্বস্ততয়া ত্বদ্বাক্যস্য অনন্যথাভাবিত্বাদিতি ভাবঃ।

অত্র পূর্বার্দ্ধে নিরঙ্গং কেবলরূপকং মোহমহৌষধিরিতি ছেকানুপ্রাসস্য দ্বিতীয়ার্দ্ধে চ ভবিষ্যন্তী দময়ন্ত্যধিগমস্য প্রত্যক্ষায়মাণত্বাৎ ভাবিকং নামালঙ্কারঃ। বৃত্ত্যনুপ্রাসশ্চ তেষাং পূর্ববৎ সংসৃষ্টিঃ। পূর্বরাগরূপঃ শৃঙ্গারো রসঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৫৪॥

**বাঙ্গালা**—দময়ন্তী, ত্রিজগদ্বাসী যুবকগণের মূর্চ্ছা জন্মাইতে মহৌষধিস্বরূপ; এই ভাবে তিনি বহুবার আমার শ্রবণপথেই আসিয়াছেন মাত্র; (কিন্তু দর্শনপথে আসেন নাই); কিন্তু এখন তোমার এই প্রশংসাবাদে, আমি তাঁহাকে আপন চোখে প্রত্যক্ষকৃত বলিয়া মনে করিতেছি ॥৫৪॥

**অন্বয়:**—সুহৃদা চ স্বহৃদা চ অখিলম্ অনাবিলং পশ্যতা বিদুষা (সম্বন্ধিনী) সবিধে অপি ন সূক্ষ্মসাক্ষিণী অক্ষিণী বদনালঙ্কৃতিমাত্রম্ (ভবতঃ) ॥৫৫॥

পরমবিশ্বস্তসুহৃদো বাক্যং নিজনেত্রদর্শনাদপি দৃঢ়প্রমাণমিতি সূচয়িতুমাহ অখিলমিতি। সুহৃদা বন্ধুনা চ, স্বহৃদা নিজমনসা চ করণেন, অখিলং সর্বং বস্তু, অনাবিলম্ অসন্দেহকলুষং যথা স্যাৎ তথা, পশ্যতা বাক্যানুমানাভ্যাং জানতাম্, বিদুষাং প্রাজ্ঞজনানাং সম্বন্ধিনী, সবিধে অপি আসন্নস্থিতে অপি, ন সূক্ষ্মস্য পরমাণুপ্রভৃতিবস্তুনঃ সাক্ষিণৌ দ্রষ্টারৌ, অক্ষিণী চক্ষুষী, বদনস্য মুখমণ্ডলস্য অলঙ্কৃতিমাত্রং কেবলমাভরণম্; ন পুনঃ সাক্ষাৎ কিমপি তয়োঃ প্রয়োজনমিতি ভাবঃ তথা চ পরমাণ্বাদয়ঃ সূক্ষ্মপদার্থাঃ সমীপস্থা অপি অতীন্দ্রিয়তয়া চক্ষুষা নির্ণেতুং ন শক্যন্তে; কিন্তু পরমবিশ্বস্তসুহৃদ্বাক্যেন সমীচীনানুমানেন চ তে নির্ণেতুং শক্যন্ত ইতি চক্ষুষী বদনালঙ্কৃতিমাত্রমেবেতি সরলার্থঃ। অলঙ্কারমন্যং সমাধান্যং সূচয়তি।

অত্র অপ্রস্তুতবিষয়সামান্যাভিধানাৎ প্রস্তুতবিষয়বিশেষাত্মনঃ প্রতীতেরপ্রস্তুতপ্রশংসা, বদনালঙ্কৃতিমাত্রমা

---

(১) অমুনা।

নিরূপণ করিয়া থাকেন ; তাঁহাদের নয়নযুগল, কেবল মুখমণ্ডলের অলঙ্কারই হইয়া থাকে। কেন না, সে নয়নযুগল নিকটের সূক্ষ্ম বস্তুও দেখিতে পায় না ॥৫৫॥

**অন্বয়:**—(হে) খগ ! অমিতং মধু তৎকথা জনৈঃ ধিগধৈর্য্যধারিণঃ মম শ্রবণপ্রাঘুণিকীকৃতা (সতী) মদনানলবোধনে ধাষ্যা অভবৎ ॥৫৬॥

অমিতমিতি। হে খগ ! পক্ষিন্ ! হংস ! অমিতম্ অপরিমিতম্, মধু সমানমাধুর্য্যাৎ পুষ্পরসস্বরূপা, তস্যা দময়ন্ত্যাঃ কথা উপাখ্যানম্, জনৈর্বন্দিপ্রভৃতিভির্লোকৈঃ, ধিগধৈর্য্যং কামদোষজনিতত্বাৎ নিন্দনীয়মধৈর্য্যং ধারয়তীতি তস্য মম, শ্রবণপ্রাঘুণিকীকৃতা কর্ণাতিথীকৃতা কর্ণগোচরীকৃতা সতী, মদনস্য এবানলস্য বোধনে সন্ধুক্ষণে, ধাষ্যা ঋক্ মন্ত্রস্বরূপেত্যর্থঃ অভবৎ। অগ্নিসমিন্ধনমন্ত্রো যথা অগ্নিং সমিন্ধয়তি, মধুস্বরূপা দময়ন্তীকথাপি মম কামং তথৈব সমিন্ধয়তি স্মেতি সরলার্থঃ ;

অত্র প্রথমে পাদে নিরঙ্গং কেবলরূপকম্, তথা মদনে অনলত্বারোপঃ কথায়াং মন্ত্রত্বারোপে নিমিত্তমিতি শ্লিষ্ট-শব্দনিবন্ধনং পরম্পরিতরূপকমিত্যনয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ ; তথা চতুর্থপাদে বৃত্ত্যনুপ্রাস ইতি সমুদায়ে সংসৃষ্টিঃ। পূর্ব্বরাগরূপো বিপ্রলম্ভশৃঙ্গারো রসঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ।

"অতিথিঃ স্যাৎ প্রাঘুণিকঃ" ইতি বলঃ। "ঋক্ সামধেনী ধাষ্যা চ যা স্যাদগ্নিসমিন্ধনে।" ইত্যমরঃ। ধীয়তে অনয়েতি ধাষ্যা, "পাষ্যোন্মায়সাধিষ্যধাষ্যাঃ" ইতি ধাধাতোর্ণ্যতি ধজন্তাবে "আয়িত্বিদ্যাদন্তানাম্" ইত্যায় ॥৫৬॥

বাঙ্গালা—হে পক্ষী ! দময়ন্তীর কথা, আমার নিকট অপরিমিত মধুস্বরূপ ; লোকে আমার কাণে তুলিয়া দিলে, তাহা আমার কামাগ্নি প্রজ্বালন করিবার পক্ষে মন্ত্রস্বরূপ হইয়া আসিতেছে এবং তাহাতে আমি, নিন্দনীয় অধীরতা ধারণ করিয়া আসিতেছি ॥৫৬॥

**অন্বয়:**—নরিবত্তানলবশা ময়া কালকলমদিগম্ভবঃ পবন, বিষমঃ মলয়াহিমণ্ডলী বিষফুৎকারময়ঃ অভিমতঃ বত ॥৫৭॥

বিষম ইতি। তস্যা দময়ন্ত্যা বিরহো বিচ্ছেদ এব অনলো অগ্নিস্তস্য বশতা কাষ্ঠস্বরূপেণ ময়া, কালস্য যমস্য আলয়ং যস্মাৎ আর্য্যামূলা যা দিক্ দক্ষিণদিগিত্যর্থঃ তস্যা ভবতীতি স তাদৃশঃ, পবনো বায়ুঃ, বিষমো দুঃসহঃ, মলয়ে দক্ষিণদিগ্বর্ত্তিনি মলয়পর্ব্বতে যা অহিমণ্ডলী সর্পসমূহস্তস্যা বিষফূৎকারময়ঃ বিষযুক্তফূৎকারস্বরূপঃ, অভিমতঃ কল্পিতঃ সম্ভাবিত ইতি যাবৎ ; তদ্বৎ পীড়াকরত্বাদিতি ভাবঃ। তথা চ যথা মুখ-

(১) অবৈধ্য ! (২) খগ ! ।

বহ্নিরূপত্বাদস্য ইতি তদস্তন্যাভিধানাদতিপ্রযোগঃ, অরবিন্দমুকুলকুসুমানি ।......

তাপনার্থত্বমুক্তমানম্, দ্বিতীয়ার্দ্ধে ছেকানুপ্রাসস্য চৈতেষাং সংসৃষ্টিঃ। তথাপীত্যস্য অনুক্তাবপি সামর্থ্যলভ্যত্বাৎ ন ন্যূনপদতাদোষঃ; "ক্বচিন্ন দোষো ন গুণঃ" ইতি সাহিত্যদর্পণাৎ। কিঞ্চ তানীত্যর্থে তৎপদস্যাব্যয়ত্বাঙ্গীকারাৎ ন অবাচকত্বদোষঃ। রসাদয়ঃ পূর্ববৎ।

"পত্রী রোপ ইষুর্দ্বয়োঃ" ইত্যমরঃ। তথা চাত্র ইষুশব্দস্য স্ত্রীলিঙ্গে প্রয়োগাৎ অমূ ইত্যপি স্ত্রীলিঙ্গ এব প্রযুক্তম্। অমূমুহন্নিতি মুহেঃ অতীতপন্নিতি চ তপের্ণিজন্তস্যাদ্যতন্যা প্রথমঃ। অ ততমামিতি "আখ্যাতক্রিমে-ত্যাদ্যন্ত—" ইত্যাদিনা তমপ্প্রত্যয়ঃ ॥৫৯॥

বাঙ্গালা—কামদেবের বাণগুলি যদি পুষ্পই হইয়া থাকে, কিন্তু বজ্র নহে; তথাপি সে গুলিকে বিষলতা হইতে উৎপন্ন বলিয়াই স্বীকার করিতে হইবে। যেহেতু, সেগুলি আমার মনকে অত্যন্ত মোহিত করিয়াছে এবং যেহেতু অত্যন্ত সন্তপ্ত করিয়াছে ॥৫৯॥

অন্বয়ঃ—তৎ অনবধৌ ইহ কন্দর্পশরাধিনীরধৌ নিমজ্জতঃ মম বিধিনা আকস্মিকসৃষ্টসন্নিধিঃ (ত্বং) পোতঃ ইব অবলম্বনং ভব ॥৬০॥

অহোপলাভমিথ্যাপীদানীং সাহায্যং প্রার্থয়তে তদিতি। তৎ তস্মাৎ পূর্বোক্তকারণাৎ, ন বিদ্যতে অবধিঃ সীমা যস্য তস্মিন্, ইহ অর্পিতপূর্বে, কন্দর্পশরেণ কামবাণেন য আধির্মানসী ব্যথা স এব নীরধিঃ সমুদ্রস্তস্মিন্, নিমজ্জতো নিমগ্নীভবতঃ মম বিধিনা দৈবেন আকস্মিকোঽকস্মাৎ সৃষ্টো জনিতঃ সন্নিধিঃ সামীপ্যং যস্য স তাদৃশস্ত্বম্, পোতো নৌকাবিশেষ ইব, অবলম্বনম্ আশ্রয়ো ভব ত্বং খলু মে সহায়ো ভূত্বা দময়ন্ত্যা সহ সংযোজ্য কামপীড়াতো মামুদ্ধরিষ্যাশয়ঃ।

অত্র পূর্বার্দ্ধে নিরঙ্গং কেবলরূপকং ছেকানুপ্রাসশ্চ, দ্বিতীয়ার্দ্ধে তু শ্রৌতোপমা চৈতেষাং মিথো নিরপেক্ষতয়া সংসৃষ্টিঃ। তথা পোতঃ অবলম্বনং ভবতি ত্বন্তু ভব ইতি বিধিভেদাদ্ভগ্নপ্রক্রমতাদোষঃ; "চিরং জীবতু তে সূনুর্মার্কণ্ডেয়মুনির্যথা" ইতি দর্পণোদাহরণবৎ। 'ভব পোতসমোঽবলম্বনম্' ইত্যার্থোপময়া তু তদভাবঃ, পোতে-ত্যনেন পৃথগন্বয়াভাবাৎ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ।

"পুংস্যাধির্মানসী ব্যথা" "যানপাত্রে শিশৌ পোতঃ" ইতি চামরঃ ॥৬০॥

বাঙ্গালা—অতএব আমি, এই অসীম কামবাণপীড়াসমুদ্রে মগ্ন হইতেছি; বিধাতাও অকস্মাৎ তোমার উপস্থিতি ঘটাইয়া দিয়াছেন; সুতরাং তুমি, পোতের ন্যায় আমার অবলম্বন হও ॥৬০॥

[illegible] । तथा च यथा पिष्टस्य पेषणं निष्प्रयोजनम्, तथा त्वत्र मदुक्तं भवेत्, भवेत् न वा निष्प्रयो-
जनं वेति भावः । हि यस्मात्, सतां साधूनाम्, स्वत एव स्वभावत एव, परार्थता परप्रयोजनकता परोपकारित्व-
मिति यावत् । यथा, गृह्यन्ते विषया एभिरिति ग्रहणानि ज्ञानानि तेषाम्, स्वतएव, यथार्थता सत्यत्वं प्रामाण्य-
मिति यावत् । अथवा गृह्यन्ते ज्ञायन्ते पदार्था एभिरिति ग्रहणानि चक्षुरादीनीन्द्रियाणि तेषाम्, स्वत एव यथार्थता
अर्थं घटादिपदार्थम् अनतिक्रम्य वर्त्तमानता स्वभावत एव पदार्थग्राहकतेत्यर्थः । तथा च यथा चक्षुरादीनामिन्द्रियाणां
स्वभावत एव घटपटादिपदार्थप्रत्यक्षजनकता, तथा सज्जनानामपि स्वभावत एव परोपकारितेति न तत्र कस्यचित्
प्रवर्त्तनापेक्षेति भावः ।

अत्र प्रथमार्द्धे असम्भवद्वस्तुसम्बन्धरूपा निदर्शना अर्थापत्तिश्च अनयोरेकाश्रयानुप्रवेशरूपः सङ्करः, तृतीयचरण-
गतसामान्येन प्रथमार्द्धगतविशेषसमर्थनादर्थान्तरन्यासः, चतुर्थे श्रौतोपमा, पूर्वार्द्धे च्छेकानुप्रासः परार्द्धे च्छेकानु-
प्रासोऽन्त्यानुप्रासश्चेति समुदाये संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

प्रवर्त्तनेति प्रपूर्वकवृतधातोर्णिजन्तात् भावे "ण्यासश्रन्थ—" इत्यादिना युः । न इति "अस्मदो द्वयोश्च" इति बहुवच-
नम् ॥६१॥

বাঙ্গালা—অথবা, আমি তোমাকে এই যে প্রবৃত্ত করাইতেছি, ইহা কি পিষ্ট-পেষণ করিতেছে না ? । কেন না, যেমন ইন্দ্রিয়সমূহের স্বভাবতই পদার্থ প্রত্যক্ষ করাইবার শক্তি থাকে ; তেমন সজ্জনদিগেরও স্বভাবতই পরোপকারিতা-গুণ থাকে ॥৬১॥

**অন্বয়ঃ**—वर्त्मनि तव शिवं वर्त्तताम्, पुनः त्वरितं समागमः अस्तु । अयि ! ईप्सितं साधय साधय ; (१) वयः ! समये वयं अरणीयाः ॥६२॥

आशिषा सम्भाषणेन च सन्तोष्य हंसं विसृजति तवेति । वर्त्मनि पथि, तव शिवं मङ्गलम्, वर्त्तां भवतु ; पुनः त्वरितम्, समागमो मया सह सम्मिलनम्, अस्तु कृतकार्य्यस्य तवेति शेषः । अयीति सानुनयसम्बोधने । ईप्सितं दमयन्तीप्राप्तिरूपं ममाभीष्टम्, साधय साधय सम्पादय सम्पादय । प्रसादने द्विरुक्तिः । तथा हे वयः ! पक्षिन् हंस ! समये उपयुक्तकाले, वयं "अस्मदो द्वयोश्च" इति बहुवचनात् अहमित्यर्थः, अरणीयाः अर्त्तव्याः । एका-किदमयन्तीप्राप्त्यादौ अलीकमस्मंस्यापि त्वया अहमनुयाह्य इति भावः ।

अत्र शेषपादे च्छेकानुप्रासोऽलङ्कारः । पूर्वरागाख्यो विप्रलम्भशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः । "वयः पक्षिणि बाल्यादौ वयो यौवनमात्रके" इति विश्वः ॥६२॥

(१) अयि ।

**अन्वयः**—श्रुतिलग्नैः कलहंसशंसितैः विस्मितः सूनृतवाग्बृहस्पतिः सः नृपतिः इति तं विसृज्य धैर्यवान् (सन्) वनवेश्म अविशत् ॥६३॥

इतीति। श्रुतिलग्नैः कर्णगतैः साक्षादेव श्रुतैरित्यर्थः, कलहंसस्य राजहंसस्य शंसितैर्वाक्यैः, विस्मितः मानुषतुल्यवाक्यत्वात् आश्चर्यान्वितः, सूनृतवाचि सत्यप्रियवाक्ये बृहस्पतिरिव स तथोक्तः, स नृपतिर्नलः, इति अनेन प्रकारेण, तं हंसम्, विसृज्य प्रस्थाप्य, धैर्यवान् दमयन्तीलाभे कृतनिश्चयत्वात् चित्तस्थैर्यवान् सन्, वनवेश्म उद्यानगृहम्, अविशत् प्रविष्टवान्।

अत्र सूनृतवाग्बृहस्पतिरिति लुप्तोपमा, छेकानुप्रासो वृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः।

"सूनृतं प्रिये सत्ये" इत्यमरः। "कलहंसस्तु कादम्बे राजहंसे नृपोत्तमे" इति मेदिनी ॥६३॥

**বাঙ্গালা**—সত্য ও প্রিয় বাক্যে বৃহস্পতির তুল্য সেই রাজা নল, এই ভাবে সেই রাজহংসকে বিদায় দিয়া, তাহার বাক্যশ্রবণে বিস্ময়াপন্ন হইয়া, ধৈর্য্যযুক্ত মনে উদ্যানগৃহে প্রবেশ করিলেন ॥৬৩॥

**अन्वयः**—अथ सः अण्डजः भीमसुतावलोकनैः तत् एव अहः सफलं कर्त्तुं क्षितिमण्डलमण्डनायितं कुण्डिनं नगरं ययौ ॥६४॥

अथेति। अथ नलकर्त्तृकविसर्जनानन्तरम्, सः अण्डजः पक्षी हंसः, भीमसुतायाः दमयन्त्याः अवलोकनैः असकृद्दर्शनैः, तदेव अहर्दिनम्, सफलं तस्याः अलौकिकसुन्दरत्वात् सार्थकम्, कर्त्तुम्, क्षितिमण्डलस्य भूमण्डलस्य मण्डनायितं सौन्दर्यसम्पादकत्वात् अलङ्कारवदाचरितम्, कुण्डिनं नाम नगरं भीमराजस्य कुण्डिनाख्यां राजधानीमित्यर्थः, ययौ गतवान्।

अत्र मण्डनायितमिति क्यङन्ता उपमा, द्वितीयार्द्धे 'ण्ड' इत्यस्य असकृदनेकधासाम्यात् वृत्त्यनुप्रासश्चेत्यनयोः संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः।

"अण्डजाः पक्षिसर्पाद्याः" इत्यमरः। मण्डनवदाचरितमिति मण्डनशब्दात् "कर्त्तुः क्यङ् सलोपश्च" इत्यादिः, ततः कर्त्तरि क्तः ॥६४॥

**বাঙ্গালা**—তদনন্তর, সেই হংস দময়ন্তীর দর্শন দ্বারা সেই দিনটীকেই সার্থক করিবার জন্য, ভূমণ্ডলের অলঙ্কারের তুল্য কুণ্ডিননগরে গমন করিল ॥৬৪॥

**अन्वयः**—सः कलहंसः पथि प्रथमं पुरः पथिकप्रार्थितसिद्धिशंसिनं जलपूर्णं कलशं [illegible]
[illegible] ॥६५॥

अत्र प्रथमार्द्धे एकस्य धकारस्य असकृत् साम्यात् वृत्त्यनुप्रासः, द्वितीयार्द्धे तु कलयोरसकृदनेकधासाम्यात् वृत्त्यनुप्रासः, तत्र लसं लसमिति भागमादाय छेकानुप्रासस्यापि प्रवेश इति तयोरेकाश्रयानुप्रवेशरूपः सङ्करः; सोऽपि पूर्वार्द्धगतानुप्रासेन संसृज्यते। मधुररचनावशान्माधुर्य्यं गुणः वैदर्भी च रीतिः।

जलपूर्णकुम्भादिदर्शनस्य प्रार्थितसिद्धिसूचकतामाह ज्योतिषे—

"धेनुर्वत्सप्रयुक्ता वृषगजतुरगा दक्षिणावर्त्तवह्निः
दिव्यस्त्री पूर्णकुम्भा द्विजनृपगणिका पुष्पमाला पताका।
सद्यो मांसं घृतं वा दधि मधु रजतं काञ्चनं शुक्लधान्यं
दृष्ट्वा श्रुत्वा पठित्वा फलमिह लभते मानवो गन्तुकामः॥"

एवमुत्तरत्राप्यूह्यम्।

"कलि कामधेनुः" इति शिशुपालवधे मल्लिनाथः। अतएवात्र तस्य करणार्थे प्रयोगः॥६५॥

বাঙ্গালা—সেই রাজহংস, পথে প্রথমেই সম্মুখে, পথিকের অভীষ্টসিদ্ধিসূচক জলপূর্ণ একটি কলস দেখিল॥৬৫॥

**অন্বয়:**—सः दिदृक्षया अम्बरे क्षणम् आश्चर्य्यरसालसं गतम् अवलम्ब्य अवनीभृतः विलासवने रसालसंगतं फलम् ऐक्षिष्ट॥६६॥

अम्बरेति। स हंसः, दिदृक्षया विलासवनस्यैव दर्शनेच्छया, अम्बरे आकाशे, क्षणं यत्किञ्चित् कालं यावत् आश्चर्य्यरसेन विलासवनदर्शनजनितविस्मयरसेन अलसं मन्दम्, गतं गमनम्, अवलम्ब्य आश्रित्य, अवनीभृतो राज्ञो जलस्य, विलासवने केलिकानने उद्याने, रसाले आम्रवृक्षे संगतं सम्बन्धं स्थितमिति यावत्, फलम् आम्रफलम् ऐक्षिष्ट अद्राक्षीत्।

अत्र प्रथमतृतीयपादयोश्छेकानुप्रासः द्वितीयचतुर्थपादयोस्तु अन्त्ययमकमितुभयोः संसृष्टिः। गुणरीती पूर्ववत्।

"सत्फले फलसिद्धिः स्यात्" इति शाकुनशास्त्रात् आम्रफलदर्शनं कार्य्यसिद्धिसूचकम्॥६६॥

বাঙ্গালা—হংস উদ্যানের শোভা দেখিবার জন্য, বিস্ময়বশতঃ আকাশে কিছুকাল মন্দ গতি অবলম্বন করিয়া, রাজার কেলিবনে আম্ররক্ষে (আম্র) ফল দর্শন করিল॥৬৬॥

**অন্বয়:**—सः पतङ्गपुङ्गवः नभसः कलभैः जलदैः उपासितं भूरितर-धूपं विटप-स्कन्ध-तरङ्ग-पन्नगं जनं ददर्श॥६७॥

नभस इति। स पतङ्गपुङ्गवः पक्षिश्रेष्ठो हंसः, नभस आकाशस्य, कलभैः करिशावकस्वरूपैः, जलदैर्मेघैः

पदविन्यासस्य आरोहावरोहाभ्याम् ओजो गुणः, गौडी च रीतिः।

"कलभः करिशावकः" "क्षुद्रशाखाशिफा क्षुपाः" "शैलदघ्नो नगावनी" 'मतङ्गो पक्षिग्राहलभी" 'तरक्षुस्तु मृगादनः" इत्यमरः ॥५७॥

**বাঙ্গালা**—পক্ষিশ্রেষ্ঠ রাজহংস একটি পর্বত দেখিল ; হস্তিশাবকস্বরূপ আকাশের মেঘ সকল সেই পর্বতের উপরে অধিষ্ঠান করিতেছিল এবং তাহাতে ক্ষুদ্রশাখা ও ক্ষুদ্রমূলযুক্ত বৃক্ষ ছিল ; আর চিতা বাঘ ও সাপগুলি গাছের ডালে ঢাকা ছিল ॥৬৭॥

**अन्वयः**—सः क्षणं धुतपक्षतिः (सन्) क्षणम् ऊर्ध्वायन-दुर्विभावनः (सन्) क्षणं विततीकृतनिश्चलच्छदः (संश्च) आलोकक-दत्त-कौतुकः (सन्) ययौ ॥५८॥

अथ पञ्चभिः श्लोकैर्हंसस्य कुण्डिननगरगमनं वर्णयति स इति। स हंसः, क्षणं कियन्तं कालं यावत्, धुते कम्पिते पक्षती पक्षमूलद्वयं येन स तादृशः सन्, क्षणम् ऊर्ध्वं यत् अयनं गमनं तेन दुर्विभावनो दुर्लक्ष्यः सन्, क्षणं विततीकृतौ प्रसारितौ निश्चलौ निष्कम्पौ छदौ पक्षौ येन स तादृशः संश्च, इत्थम् आलोककेभ्यो दर्शकेभ्यो जनेभ्यः दत्तं कौतुकं येन स तादृशः सन्, ययौ कुण्डिननगरं प्रति गतवान्।

अत्र स्वभावोक्तिरलङ्कारः। तथा क्षणमित्यस्य पुनः पुनः पाठात् अनवीकृतत्वदोषः ; द्वितीये क्षणमित्यत्र परमिति पाठेन चतुर्थे च पादे क्षणमित्यत्र क्वचिदिति पाठेन चासौ परिहार्यः। प्रसादो गुणः, वैदर्भी च रीतिः ॥५८॥

**বাঙ্গালা**—সেই হংস কিছুকাল পাখা দুই খানা কাঁপাইয়া, কিছুকাল উপরের দিকে উড়িতে থাকায় সাধারণের দুর্লক্ষ্য হইয়া, আবার কিছুকাল পাখা দুই খানাকে বিস্তৃত ও নিশ্চল করিয়া যাইতে লাগিল ; তাহাতে সে দর্শকবৃন্দের কৌতুক জন্মাইয়াছিল ॥৬৮॥

**अन्वयः**—असौ लोकविलोकनां गतया रयात् तनुदीधितिधारया कषपाषाणनिभे नभस्तले छदहेम कषन् इव अलसत् ॥५९॥

तन्विति। असौ हंसः, लोकानां भूतलस्थजनानां विलोकनां दर्शनं दृष्टिविषयतामित्यर्थः, गतया प्राप्तया। अतएव कषणमिवेति लोकानां कषणसम्भावना समभवदिति भावः। रयात् गमनवेगात्, तत एव च धारात्वेन प्रतीतिरित्याशयः। तनोः सर्वस्य शरीरस्य या दीधितिधारा प्रभाप्रवाहस्तया हेतुना, कषपाषाणनिभे समानश्यामवर्णत्वात् निकषप्रस्तरतुल्ये, नभस्तले आकाशे, छदयोः पक्षयोः हेम स्वर्णम्, कषन् उत्कर्षापकर्षपरीक्षार्थं घर्षन्निव, अलसत् अराजत्। अन्योऽपि उत्कर्षापकर्षपरीक्षार्थं स्वर्णं निकषपाषाणे कषति।

নিজের পাখার সোনাকে ঘর্ষণ করতই যেন সেই

**अन्वयः**— श्येननिपातशङ्किभिः झटिति विनमद्भिः अधःस्थितैः खगैः एकया दृशा उपरि स्यद-सांकारि-पतत्र-पद्धतिः स निरैक्षि ॥৩০॥

विनमद्भिरिति । श्येनस्य तदाख्यहिंस्रपक्षिविशेषस्य निपातं पतनं शङ्कन्ते इति तैः, अतएव झटिति द्रुतम्, विनमद्भिः भयेन भूतलं प्रति अवतरद्भिः, अतएव च अधःस्थितैः, खगैः अन्यान्यपक्षिभिः, एकया भयेनान्यस्याः सङ्कोचनादिति भावः, दृशा चक्षुषा, उपरि ऊर्द्ध्वदिशि, स्यदेन वेगेन सांकारिणी 'सां' इत्येवं शब्दकारिणी पतत्र-पद्धतिः पक्षश्रेणिर्यस्य स तथोक्तः, स हंसः, निरैक्षि अदर्शि ।

अत्र स्वभावोक्तिरलङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"रंहस्तरसी तु रयः स्यदः" इत्यमरः । "पद्धतिः पथि पङ्क्तौ च" इति हेमचन्द्रः ॥৩০॥

**বাঙ্গালা**—শ্যেনপক্ষী পড়িতেছে এই আশঙ্কা করিয়া, অন্যান্য পক্ষীরা নীচে থাকিয়াও, তাড়াতাড়ি আরও নামিতে লাগিয়া, একটি চোক দিয়া উপরের দিকে সেই হংসকে দেখিতে লাগিল; তখন বেগবশতঃ তাহার পাখাগুলি 'সাং' ইত্যাকার শব্দ করিতেছিল ॥১০॥

**अन्वयः**—जनेन भुवि तच्छायम् अवेक्ष्य तत्क्षणात् दिवि दिक्षु (च) वितीर्णचक्षुषा (सता) यन् पृथु-वेग-द्रुत-मुक्त-दृक्पथः असौ न ददृशे ॥৩১॥

ददृशे इति । जनेन भूतलवर्तिना लोकेन, भुवि भूतले, तस्य उपरि गच्छतो हंसस्य छाया इति तच्छायम्, अवेक्ष्य दृष्ट्वा, तत्क्षणात् दिवि आकाशे, दिक्षु च वितीर्णं दत्तं तच्छाया कुत आगता इति निरूपणार्थमर्पितं चक्षुर्येन तादृशेन सता, यन् गच्छन्, पृथुना महता वेगेन द्रुतं शीघ्रं मुक्तस्त्यक्तो दृक्पथो दृष्टिमार्गो येन स तथोक्तः, असौ हंसः, न ददृशे न दृष्टः ।

अत्र दर्शनाभावं प्रति पृथ्वित्यादिपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गं द्वितीयतृतीयपादयोश्छेकानुप्रासश्चेत्युभयोः संसृष्टिः । तथा दिवि दिक्षु इत्यतः परं समुच्चयार्थचकारो वक्तव्यः; किन्तु नोक्त इति वाच्यानभिधानदोषः; स तु दिवि 'दिक्षु च दत्तचक्षुषा' इति पाठेन परिहार्यः । प्रसादो गुणः, वैदर्भी च रीतिः ।

यन्निति इणधातोः शतृङि "इयन्" इति य आदेशे रूपम् । तच्छायमिति "सेनासुराच्छायाशालानिशाच्छाया वा" इति षष्ठीसमासे पक्षे नपुंसकत्वम् ॥৩১॥

**বাঙ্গালা**—লোকে ভূতলে তাহার ছায়া দেখিয়া, তৎক্ষণাৎ আকাশে ও চারি দিকে চক্ষু নিক্ষেপ করিয়াও, গমনশীল সেই হংসকে দেখিতে পাইয়াছিল না। কারণ, অত্যন্ত বেগবশতঃ সে, দ্রুতই দৃষ্টিপথ অতিক্রম করিতেছিল ॥১১॥

तामिङ्गितैरप्यनुमाय मायामयं न भैम्या वियदुत्पपात ।
तत्पाणिमात्मोपरिपातुकन्तु मोघं वितेने प्लुतलाघवेन ॥५॥
व्यर्थीकृतं पत्ररथेन तेन तथावसाय व्यवसायमस्याः ।
परस्परामर्पितहस्ततालं तत्कालमालीभिरहस्यतालम् ॥६॥

---

सहसैव चञ्चलदेहा भवेयम् तदा हंसोऽसौ पलायेत इत्याशङ्कया दमयन्ती निश्चलदेहा जाता । मुनिमनोवृत्तिरपि स्थिरचित्ततया हृदयकमले परमात्मानं पश्यन्ती तच्छरीर एव निश्चला तिष्ठतीति सरलार्थः ।

अत्रापि पूर्णोपमालङ्कारः । तथा "खगग्रहातिविनीतया" इति खकीयार्थे खशब्दस्य सर्वनामत्वात् "सर्वनाम्नस्तु ससवी हृस्वपूर्वाश्च" इति व्याकरणप्रसिद्धत्वात् खकायामित्यपप्रयोग इति च्युतसंस्कारतादोषः । किञ्च दमयन्ती सगारौ, मुनिमनोहातस्तु मासते इति कालभेदात् पूर्वबद्धप्रक्रमभङ्गदोषः । तयोः समाधानाय चित्त शयाचलमीव पाठ्यम्— 'मुनेर्मनोवृत्तिरिवात्मनिष्ठा ।" प्रसादो गुणः, वैदर्भी च रीतिः ।

"हंसो विहङ्गभेदे स्यादर्के विष्णौ हयान्तरे । योगिमन्त्रादिभेदेषु परमात्मनि मत्सरे ।" इति विश्वः । "दक्षोऽसियौ मयी खगे" "पत्ररथाः खगः पाणिः" इति च अमरः ।

स्विकायामिति । खशब्दादकप्रत्यये स्त्रियामादा, "के प्रत्यये—" इत्यादिना पूर्वस्य अकारस्य च इकार इति कवेरभिप्रायः ; स चानुपपन्न इति दर्शितम् । यहीतुकामेति "तुमः काममनसोः" इति तुमो मकारलोपः ॥४॥

বাঙ্গালা—মুনিজনের মনোবৃত্তির ন্যায় দময়ন্তী, ঈষৎকম্পিত হস্ত দ্বারা, নিকটবর্ত্তী বিচরণকারী হংসটীকে ধরিতে ইচ্ছুক হইয়া, যত্নপূর্ব্বক আপন শরীরে নিস্পন্দতা অবলম্বন করিলেন ॥৪॥

**अन्वयः**—अयं भैम्याः तां मायाम् इङ्गितैः अनुमाय अपि वियत् न उत्पपात ; तु प्लुतलाघवेन आत्मोपरिपातुकं तत्पाणिं मोघं वितेने ॥५॥

तामिति । अयं हंसः, भैम्या दमयन्त्याः, तां मायां निश्चलतावलम्बनादिरूपां कपटताम्, इङ्गितैः आत्मानं प्रति निश्चलदृष्टिपातादिरूपाभिश्चेष्टाभिः, अनुमायापि अनुमानेन ज्ञात्वापि, वियत् आकाशम्, न उत्पपात न उड्डयते स्म, वियदुत्पतने दमयन्त्या अपि प्रतिनिवृत्तौ निजजन्मनि तदानयनाशक्तेः, निकटीभवितुमिच्छया इति भावः । तु किन्तु, प्लुतस्य लम्फनस्य लाघवेन शीघ्रतया शीघ्रशीघ्रलम्फनेनेत्यर्थः, आत्मनः स्वदेहस्य उपरि पातुकं पतनशीलम्, तस्याः भैम्याः पाणिम्, मोघं अग्रहणभावेन व्यर्थम्, वितेने चकार ; अन्यथा आत्मघाती कष्टसम्पादित्याशयः ।

अत्र हेत्वनुप्रासोऽलङ्कारः, प्रसादो गुणः, वैदर्भी च रीतिः ।

पातुकमिति । "लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ्" पतलेरुकञ् प्रत्ययः ॥५॥

বাঙ্গালা—হাঁসটী দময়ন্তীর সেই কপটতা তাঁহারই ব্যবহারে অনুমানে বুঝিতে পারিয়াও, আকাশে উড়িয়া গেল না ; কিন্তু দময়ন্তীর হাতখানি যে নিজের গায়ের উপর পড়িতেছিল ; তাড়াতাড়ি লাফাইয়া লাফাইয়া তাহা ব্যর্থ করিয়া দিতে লাগিল ॥৫॥

**अन्वयः**—आलीभिः तत्कालम् अस्याः तथा व्यवसायं पत्ररथेन तेन व्यर्थीकृतम् अवसाय परस्परार्पितहस्ततालम् अलम् अहस्यत ॥६॥

व्यर्थीकृतमिति । आलीभिः सखीभिः, तत्काले तस्मिन् काले, अस्याः दमयन्त्याः, तथा तादृशम्, व्यवसायं हंसधारणोद्यमम् पत्ररथेन पक्षिणा हंसेन, तेन प्रकारेण प्लुतलाघवेनेत्यर्थः, व्यर्थीकृतं धर्तुमशक्यत्वात् निष्फली-

उच्चाटनीयः करतालिकानां दानादिदानीं भवतीभिरेषः।
यान्वेति मां द्रुह्यति मह्यमेव सात्रेत्युपालम्भि तयालिवर्गः ॥७॥
धृताल्पकोपा हसिते सखीनां छायेव भास्वन्तमभिप्रयातुः।
श्यामाथ हंसस्य करानवाप्तेः मन्दाक्षलक्ष्या लगति स्म पश्चात् ॥८॥

---

ततम्, अवसाय ज्ञात्वा, परस्परम् अन्योन्यम्, अर्पितौ दत्तः हस्ततालः करतालो यस्मिन् कर्मणि तद् यथा तथा, अलमत्यर्थम्, अहस्यत हसितम्।

अत्र द्वितीयचरणे मध्ययमकम्, तृतीयचतुर्थचरणयोस्तु अन्त्ययमकमित्यनयोः संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः।

पत्रं प्रच्छः रथो रथवत्पालकं यस्य स पत्ररथः। "पतत्पत्ररथाण्डजाः" इत्यमरः।

परस्परमिति। परस्परशब्दात् क्रियाविशेषणे द्वितीयैकवचनम्; ततः "कर्मव्यतिहारे सर्वनाम्नो द्विर्वचनं समासवच्च बहुलम्" इति तस्य अमः स्थाने आम्। तत्कालमिति "अत्यन्तसंयोगे च" इति द्वितीया ॥६॥

বাঙ্গালা—হাঁসটা সেই ভাবে দময়ন্তীর সেই ধরিবার উদ্যমটাকে ব্যর্থ করিয়া দিল ইহা দেখিয়া, সেই সময়ে সখীরা পরস্পর করতালী দিয়া অত্যন্ত হাস্য করিল ॥৬॥

अन्वयः—भवतीभिः इदानीं करतालिकानां दानात् एषः उच्चाटनीयः; (अतएव) अत्र या माम् अन्वेति, सा मह्यम् एव द्रुह्यति इति तया आलिवर्गः उपालम्भि ॥७॥

उच्चाटनीय इति। भवतीभिर्युष्माभिः, इदानीं, करतालिकानां हस्ततालानाम्, दानात् तद्वादनादित्यर्थः, एष हंसः, उच्चाटनीयः भयजननेन वियति उत्पातनीयः। अतएव अत्र आसु सखीषु मध्ये, या मां एतस्य धारणार्थं न गच्छन्तीमित्यर्थः, अन्वेति अनुगमिष्यति, सा मह्यमेव, द्रुह्यति मद्द्रोहमाचरिष्यति, इति एवम्प्रकारेण, तया दमयन्त्या, आलिवर्गः सखीगणः, उपालम्भि तिरस्कृतः।

अत्र ममानुगमनं मम द्रोहाचरणमिव विशेषापराधजनकमिति साहश्याक्षेपादसम्भवद्वस्तुसम्बन्धा निदर्शनालङ्कारः, द्वितीयतृतीयचरणयोश्छेकानुप्रास इति संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः।

उच्चाटनीय इति। "चट स्फुट भेदने" इति चौरादिकचटधातोः कर्मण्यनीयः। मह्यमिति। "यं प्रति कोपः" इति सम्प्रदानत्वाच्चतुर्थी। अन्वेति द्रुह्यतीत्युभयत्रापि भविष्यत्सामीप्ये वर्त्तमाना ॥७॥

বাঙ্গালা—'তোমরা এখন হাততালী দিয়া এই পাখীটাকে উড়াইয়া দিবে; অতএব তোমাদের মধ্যে যে আমার অনুসরণ করিবে, সে আমারই বিদ্রোহাচরণ করিবে' এই বলিয়া দময়ন্তী সখীগণকে তিরস্কার করিলেন ॥৭॥

अन्वयः—अथ सखीनां हसिते धृताल्पकोपा हंसस्य करानवाप्तेः मन्दाक्षलक्ष्या श्यामा भास्वन्तम् अभिप्रयातुः छाया इव हंसस्य पश्चात् लगति स्म ॥८॥

धृतेति। सखीनां हसिते हास्यविषये, धृत आत्मनि धारितः अल्पः कोपो यया सा, तदपराधस्याल्पत्वादिति भावः, हंसस्य करग्रहणस्य, करेण हस्तेन अनवाप्तेः अलाभाद्धेतोः, मन्दाक्षस्य लज्जाया लक्ष्या विषयीभूता लज्जितेति तात्पर्य्यम्; अन्यत्र तु हंसस्य सूर्य्यस्य करानवाप्तेः छायाहेतुतत्किरणासम्बन्धाद्धेतोः मन्दाक्षेव मन्ददृष्टिना जनेनापि लक्ष्या द्रष्टुं शक्या सूर्यकिरणसम्बन्धे तु दृष्ट्युपघातात् छायापि मन्दाक्षस्य लक्ष्या न भवतीति द्रष्टव्यम्। श्यामा उत्तमस्त्रीविशेषो दमयन्ती, अन्यत्र श्यामा श्यामलवर्णा, भास्वन्तं सूर्य्यम्, अभिप्रयातुः अभिमुखीभूय गच्छतः छाया इव, हंसस्य पश्चात्, लगति स्म हंसस्य अनुगच्छत्।

**शस्ता न हंसाभिमुखी पुनस्ते यात्रेति ताभिश्छलहस्यमाना ।**
**आह स्म नैवाशकुनीभवेन्मे भाविप्रियावेदक एष हंसः ॥९॥**

छाया यथा सूर्य्याभिमुखगामिनी जनस्य पश्चात् भ्रमति, दमयन्त्यपि तथैव हंसस्य पश्चात् भ्रमति स्म इति भ्रमतिपदानुषङ्गेन चान्वयोपपत्तेर्न पुनरुक्तमग्नप्रक्रमतादोषः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"मन्दाक्षं ह्रीस्त्रपा व्रीडा" इत्यमरः । श्यामालक्षणमाह भरतः—

"शीते सुखोष्णसर्वाङ्गी ग्रीष्मे च सुखशीतला ।
तप्तकाञ्चनवर्णाभा सा स्त्री श्यामेति कथ्यते" ॥८॥

**बाङ्गाला**—তাহার পরে, উত্তমাঙ্গনা দময়ন্তী, সখীদের হাস্যে কিছু কোপ করিয়া এবং হাত দিয়া হাঁসটীকে ধরিতে না পারায় লজ্জিত হইয়া, ছায়া যেমন সূর্য্যাভিমুখে গমনকারী ব্যক্তির পিছনে পিছনে যায়, সেইরূপ হাঁসটীর পিছনে পিছনে যাইতে লাগিলেন ॥৮॥

**अन्वयः**—हंसाभिमुखी पुनः ते यात्रा न शस्ता इति ताभिः छलहस्यमाना सा आह स्म एषः हंसः मे न एव अशकुनीभवेत् ; (किन्तु) भाविप्रियावेदकः (एव भवेत्) ॥९॥

शस्तेति । हे दमयन्ति ! हंसो राजहंस एव हंसः सूर्य्यस्तस्य अभिमुखी, पुनस्ते तव, यात्रा प्रयाणम्, न शस्ता न प्रशस्ता ; शास्त्रानुसारेणाशुभसूचकत्वादिति भावः, इति अनेन प्रकारेण, ताभिः सखीभिः, छलेन शब्द-च्छलेन शब्दश्लेषव्याजेनेत्यर्थः, हस्यमाना उपहस्यमाना, सा दमयन्ती, आह ब्रवीति स्म । किमाह इत्याह— एष हंसः, मे मम, नैव अशकुनीभवेत् न अपक्षीभवेत् पक्षिभिन्नो न भवेत् अपि तु पक्ष्येव भवेत्, तस्यैव हृग्य-मानत्वात्, तेन एतदभिमुखयात्रायां सूर्य्याभिमुखयात्रादोषो न प्रसज्यतेति भाव. । किञ्च यत एष हंसो नाम पक्षी, अतएव नैव अशकुनीभवेत् न अशुभसूचको भवेत् ; किन्तु भाविनो भविष्यतः प्रियस्य प्रीतिकरस्य विषयस्य शुभस्येत्यर्थः आवेदकः सूचक एव भवेत् ; हंसपक्षिदर्शनस्यैव शुभसूचकत्वादित्याशयः । अथ च भाविनो भवि-ष्यतः प्रियस्य पत्युर्नलस्य आवेदको ज्ञापको भवेत् ।

अत्र पक्षिसूर्य्ययोर्भेदेऽपि हंसशब्दश्लेषेण तदभेदाध्यवसायादतिशयोक्तिः ; अतएव च सखीभिः सूर्य्यार्थे प्रयुक्तस्य हंसशब्दस्य दमयन्त्या पक्ष्यर्थे नियोजनात् वक्रोक्तिः, तयोश्च अङ्गाङ्गिभावेन सङ्करः । प्रसादो गुणः, वैदर्भी च रीतिः । इदञ्च दर्पणमते चतुर्थं पताकास्थानम् ; अर्थकपत्रधानार्थाक्षेपकत्वात् । तथा च दर्पणः—

"द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः ।
प्रधानार्थान्तराक्षेपी पताकास्थानकं परम् ॥"

हंसाभिधानमुक्तं प्राक् । "शकुनस्तु पुमान् पक्षिमात्रपक्षिविशेषयोः । शुभाशुभनिमित्ते च शकुनं स्यान्नपुंसकम् ।" इति मेदिनी ।

अशकुनीभवेदिति च्वि-प्रत्ययप्रयोगः ।

सूर्य्याभिमुखे यात्रानिषेधमाह ज्योतिषे—"प्रत्यादित्यं प्रतिबुधं न गन्तव्यं शुभार्थिना ।

हंसदर्शने शुभमुक्तं वसन्तराजशाकुने—

"काष्ठासु सर्वास्वपि दर्शनेन हंसस्य तावच्छुभसूचनं स्यात् ।
अच्छन् रवं तस्य प्रयाति यस्तु प्रयान्ति नाशं दुरितानि तस्य" ॥९॥

**बाङ्गाला**—"দময়ন্তি ! হংসের অভিমুখে তোমার যাত্রা করা প্রশস্ত নহে" এইরূপে

हंसोऽप्यसौ हंसगतेः सुदत्याः पुरः पुरश्चारु चलन् बभासे।
वैलक्ष्यहेतोर्गतिमेतदीयाम् अग्रेऽनुकृत्योपहसन्निवोच्चैः॥१०॥
पदे पदे भाविनि भाविनी तं यथा करप्राप्यमवैति नूनम्।
तथा सखेलं चलता लतासु प्रतार्य्य तेनाचकृषे कृशाङ्गी॥११॥
रुषा निषिद्धालिजनां यदैनां छायाद्वितीयां कलयाञ्चकार।
तदा श्रमाम्भःकणभूषिताङ्गीं स कीरवन्मानुषवागवादीत्॥१२॥

---

সখীরা দময়ন্তীকে শব্দচ্ছলে উপহাস করিলে, তিনি বলিলেন—"এই হংস আমার পক্ষে পরিহিত্য হইবে না; অধিকন্তু ভাবী প্রীতিকর বিষয়ই জানাইবে" ॥৯॥

**অন্বয়**—असौ हंसः अपि हंसगतेः सुदत्याः वैलक्ष्यहेतोः एतदीयां गतिम् अग्रे अनुकृत्य उच्चैः उपहसन् इव चारु पुरः पुरः चलन् बभासे ॥१०॥

हंस इति। न केवलं सख्यो दमयन्तीमुपहसन्ति स्म, किन्तु हंसोऽपि, हंसस्य गतिरिव गतिर्गमनं यस्या-स्तस्याः, सुदत्याः शोभनदन्तायाः दमयन्त्याः, वैलक्ष्यहेतोर्गत्यनुकरणेन लज्जोत्पादनार्थम्, एतदीयां दमयन्तीसम्ब-न्धिनीम्, गतिं गमनम्, अग्रे तत्सम्मुख एव, अनुकृत्य, उच्चैरतिशयेन, उपहसन्निव, चारु मनोहरं यथा स्यात्तथा, पुरः पुरश्चलन् अग्रतोऽग्रतो गच्छन्, बभासे शुशुभे। अन्योऽपि बालकादिर्बालकान्तरस्य सम्मुख एव तद्गमनाद्यनु-करणेन तमुपहसति।

अत्र प्रथमपादे लाटानुप्रासो लुप्तोपमा च, ताभ्यां वाच्या क्रियोत्प्रेक्षा संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः ॥१०॥

**বাঙ্গালা**—ঐ হংসটীও, হংসগামিনী দময়ন্তীর লজ্জা জন্মাইবার নিমিত্ত, তাঁহার সম্মুখেই তাঁহার গমনের অনুকরণ করিয়া, অত্যন্ত উপহাস করতই যেন আগে আগে চলিতে থাকিয়া শোভা পাইতে লাগিল ॥১০॥

**অন্বয়**—भाविनी भाविनि पदे पदे यथा तं नूनं करप्राप्यम् अवैति, तथा सखेलं चलता तेन प्रतार्य्य कृशाङ्गी लतासु आचकृषे ॥११॥

पद इति। भावो हंसधारणचेष्टा अस्या अस्तीति भाविनी दमयन्ती, भाविनि भविष्यति, पदे पदे प्रतिपद-क्षेपे, यथा येन प्रकारेण, तं हंसम्, नूनं निश्चितम्, करप्राप्यं स्वहस्तधार्य्यम्, अवैति जानाति स्म; तथा तेन प्रकारेण, सखेलं सलीलम्, चलता अग्रे अग्रे सरता, तेन हंसेन, प्रतार्य्य तादृशगमनभङ्ग्या वञ्चयित्वा, कृशाङ्गी दमयन्ती, लतासु लतावनसमीपे, आचकृषे आकृष्टा आकृष्य नीतेत्यर्थः।

अत्र प्रथमतृतीयपादयोश्छेकानुप्रासोऽलङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः।

"भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु" इत्यमरः ॥११॥

**বাঙ্গালা**—পরবর্ত্তী প্রত্যেক পদক্ষেপে যাহাতে হাঁসটীকে নিশ্চয়ই হাতে ধরা যাইবে বলিয়া দময়ন্তী মনে করেন; হাঁসটী সেই ভাবে নানাবিধ ভঙ্গীর সহিত সরিতে থাকিয়া, প্রতারণা করিয়া দময়ন্তীকে লতাকুঞ্জের নিকটে নিয়া গেল ॥১১॥

**অন্বয়**—सः रुषा निषिद्धालिजनाम् एनां यदा छायाद्वितीयां कलयाञ्चकार, तदा कीरवत् मानुषवाक् (सन्) श्रमाम्भःकणभूषिताङ्गीं (ताम्) अवादीत् ॥१२॥

रुषेति। स हंसः, रुषा कोपेन, निषिद्धः "आत्मेति मां दुःखयति मामैव ता" इत्येवं निवारितः आलिजनः

अये! कियद्यावदुपैषि दूरं व्यर्थं परिश्राम्यसि वा किमित्थम्।
उदेति ते भीरपि किन्नु बाले! विलोकयन्त्या न घना वनाली:॥१३॥

इयाप यन्नोमपथे पदं त्वां मरुच्चलत्पल्लवपाणिकम्पैः (१)।
आलीव पश्य प्रतिषेधतीयं कपोतहुङ्कारगिरा वनाली॥१४॥

सखीजनो यया ताम्, एनां दमयन्तीम्, छाया आत्मनोऽनातप एव द्वितीया सहचरी यस्यास्ताम् एकाकिनीमिति तात्पर्यम्, कलयाञ्चकार प्रत्यक्षीकृतवान्; तदा कीरवत् शुकपक्षी इव, मानुषस्येव वाक् स्पष्टवाक्यं यस्य स तादृशः सन्, श्रमाम्भःकणैः घर्मजलबिन्दुभिः भूषितानि अङ्गानि यस्यास्तां दमयन्तीम्, अवादीत् वक्ष्यमाणप्रकारेण उक्तवान्।

अत्र श्रौतोपमाहल्यनुप्रासयोः संसृष्टिरलङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः॥१२॥

বাঙ্গালা—হংস যখন দেখিল যে, দময়ন্তী ক্রোধবশতঃ সখীদিগকে আসিতে নিষেধ করিয়া তত দূরে আসিয়াছেন এবং তাঁহার ছায়াই কেবল তাঁহার সহচরী আছে; তখন সে শুকপক্ষীর ন্যায় মনুষ্যতুল্য স্পষ্টভাষী হইয়া বলিতে লাগিল॥১২॥

অন্বয়ঃ—অয়ি! कियत् दूरं यावत् उपैषि? व्यर्थं वा किं परिश्राम्यसि? (हे) बाले! घनाः वनाली: विलोकयन्त्याः अपि ते किन्नु भीः न उदेति?॥१३॥

अये इति। अयि इत्यनादरसम्बोधने। अनादरश्च विवेकमूढत्वात्। कियत् दूरं यावत् उपैषि उपगमिष्यसि?। इत्थमीदृशम्, व्यर्थं निष्फलं वा, किं कथम्, परिश्राम्यसि मम धारणार्थं शीघ्रगमनेन परिश्रान्ता भवसि?। हे बाले! बालत्वादल्पबुद्धिके। घना निबिडाः, वनालीः वनश्रेणीः, विलोकयन्त्या अपि समीपे पश्यन्त्या अपि, ते तव, किन्नु भीर्भयम्, न उदेति न उत्पद्यते? ईदृग्घनवनश्रेणीदर्शनेन तव भयोत्पत्तेरौचित्यात् इतो गमनान्निवर्तितव्यमिति भावः।

अत्र द्वितीयार्द्धे छेकानुप्रासवृत्त्यनुप्रासयोः संसृष्टिरलङ्कारः। तथा तृतीयचरण एव वाक्यसमाप्तौ पुनस्तदन्तर्गतस्य ते इत्यस्य विशेषणतया चतुर्थचरणोपादानात् समाप्तपुनरात्तत्वदोषः। तत्समाधानाय च तृतीयस्थाने चतुर्थं चतुर्थस्थाने च तृतीयं चरणं पाठ्यम्। प्रसादो गुणः, वैदर्भी च रीतिः॥१३॥

বাঙ্গালা—ওহে! তুমি আর কত দূরপর্য্যন্ত যাইবে? এবং কি জন্যই বা তুমি এরূপ নিরর্থক পরিশ্রম করিতেছ? হে বালিকে! নিবিড় বনশ্রেণী দেখিয়াও কি তোমার ভয় হইতেছে না?॥১৩॥

অন্বয়ঃ—इयं वनाली आली इव मरुच्चलत्पल्लवपाणिकम्पैः कपोतहुङ्कारगिरा अपथे तथा पदम् अर्पयन्तीं त्वां प्रतिषेधति (इव इति) पश्य॥१४॥

इयेति। इयं वनाली वनश्रेणी, आली सखी इव, मरुता वायुना चलन् सञ्चलन् पल्लव एव पाणिर्हस्तस्तस्य कम्पैर्निवर्तनसूचककम्पनैः, तथा कपोतानां हुङ्कारः 'हुम्' इत्येव शब्द एव गीर्निषेधकवाक्यं तया, अपथे अहारपथे असम्भवविषये असन्मार्गे च, पदम् अध्यवसायं चरणञ्च, अर्पयन्तीं कुर्वतीं निक्षिपन्तीञ्च, त्वाम्, प्रतिषेधति निषेधतीव इति त्वं पश्य।

अत्र श्रौतोपमा, प्रतीयमाना क्रियोत्प्रेक्षा, तथा पल्लवे पाणित्वारोपस्य हुङ्कारे वाक्यत्वारोपस्य च प्रकृतप्रतिषेधोपयोगित्वात् परिणामः, द्वितीयपादे छेकानुप्रासश्चेति संसृष्टिः। किञ्च, पश्येति वाक्यान्तरपदस्य वाक्यान्तरेऽनुप्रवेशात्

(१) मरुच्चलत्।

**धार्य्यः कथङ्कारमहं भवत्या वियद्विहारी वसुधैकगत्या ।**
**अहो ! शिशुत्वं तव खण्डितं न स्मरस्य सख्या वयसाप्यनेन ॥१५॥**
**सहस्रपत्रासन-पत्र-हंस-वंशस्य पत्राणि पतत्त्रिणः स्मः ।**
**अस्मादृशां चाटुरसामृतानि स्वर्लोकलोकेतरदुर्लभानि ॥१६॥**

उत्प्रेक्षितादीषः । तत्समाधानाय पराद्धमेवं पठनीयम्—'वनालिरालीव निषेधतीयं कपोतहुङ्कारगिरेति पश्य' । मधुररचनावत्त्वान्माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥१४॥

**বাঙ্গালা**—দময়ন্তি ! তুমি অপথে বৃথা পদক্ষেপ করিতেছ ; সুতরাং বায়ুসঞ্চালিত পল্লবরূপ হস্ত কম্পিত করিয়া এবং কপোতভঙ্কাররূপ বাক্য দ্বারা এই বনশ্রেণী যেন সখীর ন্যায় তোমাকে নিষেধ করিতেছে ; দেখ ॥১৪॥

**अन्वयः**—वसुधैकगत्या भवत्या वियद्विहारी अहं कथङ्कारं धार्य्यः ? अहो ! स्मरस्य सख्या अनेन अपि वयसा तव शिशुत्वं न खण्डितम् ? ॥१५॥

अथ । नाहं व्यर्थं परिश्राम्यामि, किन्तु तव धारणार्थमेवेत्याह धार्य्य इति । वसुधायां भूतल एव एका केवला गतिर्यस्यास्तया भवत्या, वियति आकाशे विहर्त्तुं विहारवत् सुखेन विचरितुं शीलं यस्य स वियद्विहारी अहम्, कथङ्कारं केन प्रकारेण, धार्य्यः धर्त्तुं शक्यः, अपि तु कथमपि नेत्यर्थः, असम्भवादिति भावः । अतएव अहो आश्चर्य्यम्, स्मरस्य कामस्य, सख्या तदनुकूलत्वात् मित्रभूतेन, अनेन दृश्यमानेनापि, वयसा नवयौवनेन कर्त्रा, तव शिशुत्वं शैशवम्, न खण्डितं न विच्छिन्नं तत्कार्य्यस्यास्य व्यापारे शिशुवत् प्रवृत्तत्वात् नापसारितमिति काकुः । यौवनेन शैशव खण्डनमेवाश्चर्य्यमित्याशयः ।

अत्र धारणाशक्यत्वं प्रति द्वितीयपादगतपदार्थद्वयमेव हेतुरिति पदार्थहेतुकमेकं काव्यलिङ्गम् ; पराद्धे प्रतिपूर्वार्द्धवाक्यार्थस्य हेतुत्वादपरस्य वाक्यार्थहेतुकं काव्यलिङ्गम्, पूर्वार्द्धे अर्थापत्तिः, तथा पराद्धे यौवनरूपे कारणे सत्यपि शिशुत्वखण्डनरूपकार्य्यानुत्पत्तेर्विशेषोक्तिश्च, इत्येतेषामङ्गाङ्गिभावेन सङ्करः ; पुनः प्रथमार्द्धे अन्यं तुल्ययोगितासमुदाये संसृष्टिः । तथा स्मरस्य स्मरतुल्यसुन्दरस्य नलस्य, सख्या वयस्यभूतेन, धारणा धरित्र्या, अनेन मया, तव शिशुत्वं न खण्डितं न किं दूरीकृतम् ? अपि तु खण्डितमेव ; अविचारेण मद्ग्रहणप्रयासात् तदेव च शिशुत्वापगमादिति शब्दशक्तिमूलो वस्तुध्वनिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"स्मरवान्ध्याद्विनीवधः" इत्यमरः ।

कथङ्कारमिति—कथंशब्दोपपदे "अन्यथैवं कथमित्थं सु सिद्धाप्रयोगश्चेत्" इति णमुल् ॥१५॥

**বাঙ্গালা**—তোমার গতি কেবল ভূতলেই সম্ভব ; আবার আমি অনায়াসেই আকাশে বিচরণ করিতে পারি। সুতরাং তুমি কি প্রকারে আমাকে ধরিতে পারিবে ? কি আশ্চর্য্য ! কামের সখা এই যৌবন বয়সেও তোমার শৈশবকে দূর করিল না ? ॥১৫॥

**अन्वयः**—(वयं) सहस्रपत्रासन-पत्र-हंस-वंशस्य पत्राणि पतत्त्रिणः स्मः । अस्मादृशां चाटुरसामृतानि स्वर्लोक-लोकेतर-दुर्लभानि ॥१६॥

मद्वाक्यामृतश्रवणार्थत्वात् त्वद्धारणमपि न व्यर्थमित्याह सहस्रेति । हे दमयन्ति ! वयम्, सहस्रपत्रं पद्ममेव आसनं यस्य स सहस्रपत्रासनो ब्रह्मा तस्य पत्राणि वाहनीभूता ये हंसास्तेषां वंशः कुलमेव वंशो वेणुस्तस्य, पत्राणि पर्णानि तत्सम्बन्धा इत्यर्थः, पतत्त्रिणः पक्षिणः, स्मः भवामः । तथा च वेणुदण्डाद् यथा पर्णान्युत्पद्यन्ते,

**स्वर्गापगाहेममृणालिनीनां नालामृणालाग्रभुजो भजामः।**
**अन्नानुरूपां तनुरूपऋद्धिं कार्यं निदानाद्धि गुणानधीते ॥१७॥**

---

तथा वयमपि ब्रह्मणो वाहनीभूतानां हंसानां कुलादुत्पन्ना इति सरलार्थः। अतएव अस्मादृशां पतत्रिणाम्, चाटुषु प्रियमधुरवाक्येषु ये रसाल एव अमृतानि सुधाः, स्वर्लोकस्य स्वर्गधाम्नो ये लोका जना इव ते इत्यर्थः, तेभ्य इतरैर्मनुष्यादिभिः दुर्लभानि दुष्प्रापाणि। अतो महाकाव्यमत्सम्भाषणमपि मानुष्याणां असम्भवमेवेति भावः।

अत्र कुले वंशत्वारोपो हंसे तत्पत्त्रत्वारोपं प्रति निमित्तं वंशपदस्य श्लिष्टमिति पूर्वार्द्धे श्लिष्टपरम्परितरूपकं कथ्यमुपात्तम्; तथा परार्द्धे चाटुरसामृतानीति निरङ्गं केवलरूपकं हेतुकाव्यमुपात्तम्, तथा परार्द्धं प्रति पूर्वार्द्धवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमित्येतेषां परस्परमनपेक्षतया संसृष्टिः। उपर्य्युपरेफवर्णबाहुल्यात् ओजो गुणः, गौडी च रीतिः।

"पुंसि वंशः कुले वेणौ पृष्ठावयववर्गयोः" इति मेदिनी। "पत्रं स्याद्वाहने पर्णे पक्षे च शरपक्षिणोः" इति विश्वः। "लोकस्तु भुवने जने" इत्यमरः ॥१६॥

বাঙ্গালা—যে সকল হংস, ব্রহ্মার বাহন হইয়া বেড়াইয়া থাকেন; আমরা তাঁহাদেরই বংশের পত্র (তাঁহাদেরই বংশজাত); সুতরাং আমাদের ন্যায় ব্যক্তির প্রিয়মধুর বাক্যের রসামৃত পান করা, স্বর্গবাসী দেবতাভিন্ন অন্যের পক্ষে দুর্লভ ॥১৬॥

**अन्वयः**—स्वर्गापगा-हेममृणालिनीनां नाला-मृणालाग्रभुजः (वयम्) अन्नानुरूपां तनुरूपऋद्धिं भजामः। हि कार्य्यं निदानात् गुणान् अधीते ॥१७॥

ननु स्वर्गीयत्वेऽपि भवतः कथं स्वर्णमयशरीरत्वमित्याह स्वर्गेति। स्वर्गस्य या आपगा नदी मन्दाकिनी तत्र या हेममृणालिन्यः स्वर्णपद्मिन्यस्तासां नालानां दण्डानां मृणालानाञ्च अग्राणि भुञ्जते खादन्तीति ते तथोक्ता वयम्, अन्नानुरूपां तत्खाद्यपरिणतियोग्याम्, तनूनां शरीराणां रूपऋद्धिं स्वर्गीयसौन्दर्य्यसम्पत्तिम् भजाम आश्रयामः। हि यस्मात्, कार्य्यं घटादिकं जन्यं वस्तु कर्तृ, निदानात् मृत्तिकादिरूपात् आदिकारणात्, गुणान् रूपादिधर्म्मान्, अधीते अध्ययनवत् आदत्ते। तथा च "कारणगुणा हि कार्य्यगुणमारभन्ते" इति न्यायात् घटादिकं कार्य्यं यथा मृत्तिकादिसमवायिकारणगतनीलपीतादिगुणान् गृह्णाति; तथा अस्माकं शरीरमपि स्वर्णमयपद्मनालरूपखाद्यात्मकसमवायिकारणगतपीतगुणं गृह्णाति; खाद्यवस्तुगतपरमाणूनामेव शरीरोपचयहेतुभूतद्व्यणुकाद्यारम्भकत्वात्; दुग्धादिगतशुक्लतादिगुणानां शरीरेऽनुपस्थितिस्तु तेषामप्राचुर्य्यादित्याशयः।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः छेकानुप्रासेन संसृज्यते। तथा तनुरूपऋद्धिमित्यत्र "ऋत्यसिन्धुसमासेऽनुपसर्गसमानस्य ह्रस्वश्च" इत्यनेन प्रकृतिभावेऽपि तद्वैकल्पिकतया सन्धिप्राप्तौ तदकरणात् विसन्धिर्दोषः। अन्यथा "संहितैकपदे नित्या नित्या धातूपसर्गयोः। सूत्रेष्वपि तथा नित्या सैवान्यत्र विभाषया।" इत्युक्तेः असमासे सर्वेषामेव भिन्नपदगतसन्धीनां वैकल्पिकत्वे सत्यपि "वासवाशामुखे भाति इन्दुश्चन्दनबिन्दुवत्।" इति साहित्यदर्पणोदाहरणासङ्गतिः। तेन 'तनुरूपलक्ष्मीम्' इति पाठान्तरं समाधेयः। प्रसादो गुणः, वैदर्भी च रीतिः।

"नाला दण्डे सरोजस्य नाली शाक-कलम्बयोः" इति विश्वः ॥१७॥

বাঙ্গালা—আমরা, মন্দাকিনীর স্বর্ণময় পদ্মিনীসমূহের নাল ও মৃণালের অগ্র খাইয়া থাকি; তাই খাদ্যের অনুরূপ দেহের সৌন্দর্য্যসমৃদ্ধিও পাইয়া থাকি। কেন না; কার্য্যগুলি কারণের গুণই পাইয়া থাকে ॥১৭॥

धातुर्नियोगादिह नैषधीयं लीलासरः सेवितुमागतेषु ।
हैमेषु हंसेष्वहमेक एव भ्रमामि भूलोकविलोकनोत्कः ॥१८॥
विधेः कदाचिद्भ्रमणीविलासे श्रमातुरेभ्यः स्वमहत्तरेभ्यः ।
स्कन्धस्य विश्रान्तिमदां तदादि श्राम्यामि नाविश्रमविश्वगोऽपि ॥१९॥

---

**अन्वयः**—धातुः नियोगात् इह नैषधीयं लीलासरः सेवितुम् आगतेषु हैमेषु हंसेषु एकः एव अहं भूलोक-विलोकनोत्-कः ( सन् ) भ्रमामि ॥१८॥

ननु भवतः स्वर्गीयत्वे कथमत्रागमनमित्याह धातुरिति । धातुर्ब्रह्मणः, नियोगात् 'युष्मत्पूर्वपुरुषा एव मे वाहनीभूतास्तिष्ठन्ति ; तद्यूयं वयःपूर्णतां यावत् यथेष्टं विचरत' इत्येवमादेशात्, इह मर्त्यमण्डले, नैषधीयं सर्वोत्कर्षात् नलसम्बन्धि, लीलासरः केलिसरोवरम्, सेवितुम् अवगाहनादिना अनुभवितुम्, आगतेषु, हैमेषु स्वर्णमयेषु हंसेषु मध्ये, एक एव अहम्, भूलोकस्य समस्तमर्त्यभुवनस्य विलोकनाय दर्शनाय उत्कः उत्कण्ठितः सन्, भ्रमामि विचरामि । अत्र स्वर्गादागच्छन्तो वयं नललीलासरसः सर्वोत्कर्षश्रवणात् तत्रैव गताः, अहन्तु ततोऽप्यागत्य परं समग्रभूलोकदर्शनप्रवृत्तः त्वद्ग्राममागत इति भावः ।

अत्र चतुर्थपादे छेकानुप्रासवृत्त्यनुप्रासयोरेकाश्रयानुप्रवेशरूपः सङ्करः । मानिकं धर्मं भवत्या एतावान् प्रयासः, किन्तु नलस्य लीलासरसि माहात्म्यः सहस्रशः सन्तीति व्यज्यत इति वस्तुना वस्तुध्वनिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"स्यादुत्क उन्मनाः" इत्यमरः ॥१८॥

**বাঙ্গালা**—বিধাতার আদেশে বহুতর স্বর্ণময় হংস, এই মর্ত্ত্যলোকে নলের কেলি-সরোবরে অবগাহন করিবার জন্য আসিয়াছে ; তাহাদের মধ্যে আমি একাই, সমগ্র ভূমণ্ডল দেখিবার জন্য উৎকণ্ঠিত হইয়া বিচরণ করিতেছি ॥১৮॥

**अन्वयः**—कदाचित् विधेः भ्रमणीविलासे श्रमातुरेभ्यः स्वमहत्तरेभ्यः स्कन्धस्य विश्रान्तिम् अदाम्, तदादि अविश्रमविश्वगः अपि ( अहं ) न श्राम्यामि ॥१९॥

अथ समग्रभूमण्डलविचरणेन परिश्रान्तो भवान् दुर्बलीभूत इत्यमायासेनैव धार्य्यः, तत्कायमुक्तं "धार्य्यः कायस्त्वमहं भवत्या" इत्यादीत्याह विधेरिति । कदाचित् विधेर्ब्रह्मणः, भ्रमण्येव विलासस्तस्मिन् विलासभ्रमणे इत्यर्थः, श्रमातुरेभ्यो ब्रह्मणो यानवहनाद्विश्रान्तपरिश्रान्तेभ्यः, स्वमहत्तरेभ्यो निजपूर्वपुरुषेभ्यः, स्कन्धस्य विश्रान्तिं तद्वहनीययानस्य मध्ये वहनात् विश्रामम्, अदां दत्तवानस्मि, तदादि ततः प्रभृति, न विद्यते विश्रमो विश्रामो यस्मिन् कर्मणि तदविश्रमं यथा तथा विश्वं सर्वं भुवनं गच्छामीति स तथोक्तः सन्नपि अनवरतसमस्तभुवनपर्य्यटनप्रसक्तोऽपीत्यर्थः, अहं न श्राम्यामि विधेर्वरात् निजपूर्वपुरुषाशीर्वादाच्च न परिश्रान्तो भवामि । सुतराञ्च परिश्रमनिबन्धनदौर्बल्याभावात् अधार्य्य एवाहमिति भावः ।

अत्र वृत्त्यनुप्रासच्छेकानुप्रासयोः संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

स्वयं भ्रमणमिति भ्रमणी "स्त्री स्यात् काचिन्मृणाल्यादि विवक्षापचये यदि" इत्यमरोक्तिप्रामाण्यात् युट्-प्रत्ययान्ताद्भ्रमधातोर्नदादित्वादीप्रत्ययः ॥१९॥

**বাঙ্গালা**—কোন সময়ে ব্রহ্মা সখে বেড়াইতেছিলেন ; তখন আমার পূর্ব্বপুরুষেরা তাঁহার যান বহন করিতে করিতে অত্যন্ত পরিশ্রান্ত হইয়া পড়েন ; কিন্তু আমি সেই সময়ে ( সে যান বহন করিতে থাকিয়া ) তাঁহাদের স্কন্ধকে বিশ্রাম করিতে দিয়াছিলাম ; তদবধি আমি অনবরত এই ব্রহ্মাণ্ড বিচরণ করিলেও পরিশ্রান্ত হই না ॥১৯॥

**बन्धाय दिव्ये न तिरश्चि कश्चित् पाशादिरासादितपौरुषः स्यात्।**
**एकं विना मादृशि तन्नरस्य स्वर्भोगभाग्यं विरलोदयस्य॥२०॥**
**इष्टेन पूर्तेन नलस्य वश्याः स्वर्भोगमत्रापि सृजन्त्यमर्त्याः।**
**महीरुहा दोहदसेकशक्तेराकालिकं कोरकमुद्गिरन्ति॥२१॥**

---

**अन्वयः**—विरलोदयस्य नरस्य एकं तत् स्वर्भोगभाग्यं विना मादृशि दिव्ये तिरश्चि कश्चित् पाशादिः बन्धाय न आसादितपौरुषः स्यात्॥२०॥

अथ भवान् हस्तधार्य्यो मा भूत् किन्तु पाशादिना बद्धा धार्य्य एवेत्याह बन्धायेति। विरलो नितान्तमेव स्वल्प उदय उत्पत्तिर्यस्य तस्य क्वाचित्कस्येत्यर्थः, नरस्य मनुष्यस्य एकमसाधारणम् तत् प्रसिद्धम्, स्वर्भोगभाग्यं स्वर्गलोकोपयोगिसम्भोगजनकमदृष्टम् विना, मादृशि मत्सदृशे, दिव्ये स्वर्गीये, तिरश्चि प्रकरणात् पक्षिणि विषये, कश्चित् पाशादिः वागुराप्रभृतिः, बन्धाय बन्धनाय धारणायेत्यर्थः, न आसादितं प्राप्तं पौरुषं शक्तिर्येन सः तथोक्तः स्यात् भवेत्। किन्तु तादृशनरस्य तत् स्वर्भोगभाग्यमेव मादृशस्य दिव्यतिरश्चो बन्धाय आसादितपौरुषं स्यादिति भावः। अत्र विरलोदयस्येति पदस्य मल्लिनाथव्याख्यानमाश्रित्याः केचन नरस्येति नलपरत्वं ब्रुवते; तदसाम्प्रतं स्पष्टत एव तस्य वक्ष्यमाणत्वात्।

अत्र छेकानुप्रासोऽलङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः॥२०॥

**বাঙ্গালা**—যাহাদের উৎপত্তি অত্যন্ত বিরল, সেই রূপ মনুষ্যের সেই স্বর্গীয় ভোগোপযোগী একমাত্র ভাগ্য ব্যতীত, কোন রজ্জুপ্রভৃতিই আমার ন্যায় স্বর্গীয় পক্ষীকে বদ্ধ করিতে সমর্থ হয় না॥২০॥

**अन्वयः**—इष्टेन पूर्तेन (च) नलस्य वश्याः अमर्त्याः अत्र अपि (नलस्य) स्वर्भोगं सृजन्ति। महीरुहाः दोहदसेकशक्तेः आकालिकं कोरकम् उद्गिरन्ति॥२१॥

ननु मर्त्यमण्डले को नाम तादृशो नरः, यस्य स्वर्भोगभाग्यं परिलक्ष्यत इत्याह इष्टेनेति। इष्टेन अग्निहोत्रादिना, पूर्तेन सोधारणोपयोगिखातादिना च नलस्य वश्याः तत्करणाधीनाः, अमर्त्या देवाः, अत्र मर्त्यलोकेऽपि, नलस्य स्वर्भोगं स्वर्गीयसम्भोगम्, सृजन्ति सम्पादयन्ति। तथाहि महीरुहा अचेतना वृक्षा अपि, दोहदसेकयोर्धूपदानजलसेचनयोः शक्तेः सामर्थ्याद्धेतोः, आकालिकम् अकालसम्भवम्, कोरकं कलिकाम्, उद्गिरन्ति जनयन्ति प्रकाशयन्ति। तथा च वृक्षा यथा दोहदसेकसामर्थ्यात् अकाले कलिकां प्रकटयन्ति; तथा देवा अपि इष्टापूर्तजनितधर्मसामर्थ्यात् मर्त्यलोकेऽपि नलस्य स्वर्गीयभोगं सम्पादयन्तीति भावः।

अतएवात्र सृजन्त्युद्गिरन्तीत्यनयोर्वस्तुत एकार्थत्वात् अथ च पृथङ्निर्देशात् प्रतिवस्तूपमालङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः।

इष्टं पूर्तञ्चाह याज्ञवल्क्ये हारीतः—

"अग्निहोत्रं तपः सत्यं वेदानाञ्चानुपालनम्। आतिथ्यं वैश्वदेवञ्च इष्टमित्यभिधीयते॥
कूपारामतडागादि देवतायतनानि च। अन्नप्रदानमारामाः पूर्त्तमित्यभिधीयते॥" ॥२१॥

**বাঙ্গালা**—যাগসম্পাদন ও জলাশয়নির্ম্মাণ প্রভৃতি কার্য্য দ্বারা সমস্ত দেবতাই নলের বশতাপন্ন; তাই তাঁহারা এই মর্ত্ত্যলোকেও নলের স্বর্গীয় ভোগ সম্পাদন করিয়া থাকেন। কারণ, মূলে ধূপদান ও জলসেচন করিলে, বৃক্ষ সকল অকালেও কলিকা জন্মাইয়া থাকে॥২১॥

**सुवर्णशैलादवतीर्य तूर्णं स्वर्वाहिनीवारिकणावकीर्णैः ।**
**तं वीजयामः स्मरकेलिकाले पक्षैर्नृपं चामरबद्धसख्यैः ॥२२॥**
**क्रियेत चेत् साधुविभक्तिचिन्ता व्यक्तिस्तदा सा प्रथमाभिधेया ।**
**या स्वौजसां साधयितुं विलासैस्तावत् क्षमा नाम पदं बहु स्यात् ॥२३॥**

---

**अन्वयः**—( वयं ) सुवर्णशैलात् तूर्णम् अवतीर्य स्वर्वाहिनीवारिकणावकीर्णैः चामर-बद्ध-सख्यैः पक्षैः स्मरकेलिकाले तं नृपं वीजयामः ॥२२॥

ननु कीदृशोऽसौ स्वर्भोग इत्याह सुवर्णेति । वयं सुवर्णशैलात् सुमेरुपर्वतात्, तूर्णं स्मरकेलेरधिककाला-स्थायित्वात् शीघ्रम्, अवतीर्य, स्वर्वाहिन्याः स्वर्गनद्याः मन्दाकिन्याः वारिकणैः जलबिन्दुभिः अवकीर्णाः संसिक्ताः-तथा चामरैः सह बद्धं कृतं सख्यं सादृश्यात् सौहार्द्दं यैस्तैः चामरतुल्यशुभ्रवर्णैरित्यर्थः, पक्षैः स्वस्वपत्रैः, स्मरकेलिः सुरतं तस्य काले, तं नृपं नलम्, वीजयामो वायुस्पर्शं कारयामः ; स्मरकेलिश्रमापनोदनार्थमिति भावः ।

अत्र तथा व्यजनासम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिः, चामरबद्धसख्यैरित्यार्थोपमा चानयोरङ्गाङ्गिभावेन सङ्करः ; छेकानुप्रासो वृत्त्यनुप्रासश्च शब्दालङ्काराविति समुदाये संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः

ईदृशवाक्यानां विवाहघटकत्वान्न मिथ्यात्वनिबन्धनं पापम् । यथा महाभारते—

"न नर्मयुक्तं वचनं हिनस्ति न स्त्रीषु राजन् ! न विवाहकाले ।
प्राणात्यये सर्वधनापहारे पञ्चानृतान्याहुरपातकानि" ॥२२॥

**বাঙ্গালা**—আমরা সুমেরুপর্বত হইতে শীঘ্র অবতীর্ণ হইয়া, মন্দাকিনীর জলবিন্দুতে সংসিক্ত এবং চামরের ন্যায় শুভ্রবর্ণ আপন আপন পক্ষ দ্বারা, রমণের সময়ে সেই নল রাজাকে ব্যজন করিয়া থাকি ॥২২॥

**अन्वयः**—( लोकेन ) चेत् साधु-विभक्ति-चिन्ता क्रियेत ; तदा सा व्यक्तिः प्रथमाभिधेया । या स्वौजसां विलासैः तावत् बहु पदं साधयितुं क्षमा स्यात् नाम ॥२३॥

इमनन्नौ प्रलोभयितुं नलं वर्णयति क्रियेतेति । चेत् यदि, साधूनां सज्जनानां विभक्तौ विभागकरणे अन्यासज्जनेभ्यः पृथक्करणविषये इत्यर्थः चिन्ता विचारपूर्वकविचारः, क्रियेत लोकेनेति शेषः ; तदा सा व्यक्तिर्नलो नल इति तात्पर्य्यम्, प्रथमं आदौ अभिधेया वक्तव्या । स खलु नलः साधूनामग्रगण्य इति भावः । कथमितदित्याह या नलरूपा व्यक्तिः, स्वौजसां निजतेजसाम् ; विलासैः चर्म्मायुद्ध एव व्यवहारैः, तावत् साकल्येन, बहु प्रचुरम्, पदं सम्पूर्णं स्थानम्, साधयितुं निजाधीनतया निष्पादयितुम् अधिकर्तुं-मित्यर्थः, क्षमा समर्था, स्यात् भवेत्, नाम तदीय-चरितदर्शनादित्यहं सम्भावयामि । सर्वथा प्रबलतमस्य तस्य युद्धेऽपि धर्म्म एव व्यवहारः, स साधूनामग्रगण्य एवेत्यर्थः ।

पक्षान्तरे तु चेद् यदि, साधुविभक्तेः प्रथमादिषु सप्तसु विभक्तिषु मध्ये का नाम विभक्तिः साध्वी उत्-कृष्टा इत्यस्य चिन्ता विचारः, क्रियेत लोकेन विधीयेत ; तदा सा प्रथमा नाम व्यञ्जनं प्रकाश्यमानं संख्या-कर्म्मादयोऽर्था यस्यामिति व्यक्तिर्व्यक्तिः, अभिधेया साधुत्वेन वाच्या । कुत इत्यत्राह प्रथमा विभक्तिः, स्वौजसां वाचिन्यादिमतो सु-औ-जस् इत्येवंरूपाणां प्रथमाविभक्तिघटकानां प्रत्ययानामेव वचनानाम्, विलासैः-विभक्त्यादिरूपैरेव परिणामैः, तावदिति वाक्यालङ्कारे, बहु प्रचुरम्, नाम सुबन्तम्, पदं रामो हरिरित्यादि-

राजा स यज्वा विबुधव्रजत्रा कृत्वाध्वराज्योपमयैव राज्यम्।
भुङ्क्ते श्रितश्रोत्रियसात्कृतश्रीः पूर्वं त्वहो शेषमशेषमन्त्यम्॥२४॥

---

प्रयोगम्, साधयितुं निष्पादयितुम्, क्षमा समर्था, स्यात्। तथा च अन्यान्यविभक्त्यपेक्षया प्रथमा विभक्तिरेव बहुतरं पदं साधयति; सम्बोधने एवं कारकत्वाभावात् स्वादौ च तस्या विधानेन विभक्त्यन्तरापेक्षया प्रसार-बाहुल्यात् तस्य एव प्राधान्येन साधुत्वमित्याशयः।

अत्र लौकिके वस्तुनि नले शास्त्रीय व्याकरणशास्त्रीयवस्तुनः प्रथम विभक्त्यर्थं व्यवहारसमारोपात् समासोक्तिरलङ्कारः; "ध्वैरेकरूपमखिलास्वपि हन्ति धाम" इत्यादिरूपं चोदाहरणम्; तथा पूर्वार्द्धवाक्यार्थं प्रति परार्द्धगतवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गञ्च; अनयोरङ्गाङ्गिभावेन सङ्करः। प्रसादो गुणः, वैदर्भी च रीतिः।

"पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः॥२३॥

বাঙ্গালা—কোন লোক যদি তাল লোককে বিভক্ত করিবার চিন্তা করেন; তাহা হইলে, তিনি প্রথমে নলের উল্লেখ করিবেন। কেন না, যে নল আপন তেজের প্রভাবে (ধর্মযুদ্ধেই শত্রুদিগের) বহুতর স্থান সর্ব প্রকারে আয়ত্ত করিতে সমর্থ হইয়া থাকেন॥২৩॥

**अन्वयः**—श्रितश्रोत्रियसात्कृतश्रीः यज्वा सः राजा अध्वराज्योपमया एव राज्यं विबुधव्रजत्रा कृत्वा पूर्वं शेषं भुङ्क्ते, अन्त्यं तु अशेषं भुङ्क्ते अहो॥२४॥

राजेति। श्रितेभ्य आत्मानमाश्रितेभ्यः श्रोत्रियेभ्यो ब्राह्मणविशेषेभ्यः देयाः कृता श्रियो धनसम्पत्तयो येन स तथोक्तः, यज्वा विधिना इष्टवान् शास्त्रानुसारेण कृतयज्ञ इत्यर्थः, स राजा नलः, अध्वरे यज्ञे यत् आज्यं हवनीयघृतं तस्य उपमयैव तुलनयैव, राज्यं स्वाधिकृतभूमिम्, विबुधानां देवानां पण्डितानाञ्च व्रजाय समूहाय देयं कृत्वा इति विबुधव्रजत्रा कृत्वा, पूर्वम् एतत्पदार्थाक्रमेण प्रथमम् आज्यम्, शेषं यागावशिष्टम्, भुङ्क्ते शास्त्रविधानसत्त्वात् खादति; अन्त्यं तु एतत्पदार्थाक्रमेण चरमं राज्यम्, अशेषं सकलम्, भुङ्क्ते उपभुनक्ति, इति अहो आश्चर्यम्। अयमाशयः सरलार्थः आश्रितब्राह्मणेभ्यो यथोपयुक्तं धनदाता नलः शास्त्रानुसारेण यज्ञं विधाय तत्र च देवेभ्यो घृतं हुत्वा शास्त्रानुसारेण यथा तदवशिष्टं खादति तथा राज्यान्तर्गतां भूमिं ब्राह्मणेभ्यो दत्वा तदवशिष्टमेव सर्वं राज्यं पालयतीति। तत्र च यत् पूर्वं भुङ्क्ते तत्प्रथममेव भवति न पुनः शेषम्; किन्तु अत्र तत् शेषम्, तथा यत् अन्त्यं भुङ्क्ते तत् शेषमेव भवति, न पुनरशेषम्, किन्तु अत्र तत् अशेषमित्यत एव आश्चर्यमिति भावः। नलो दाता यागकर्ता चेति स्थूलार्थः।

अत्र पूर्वं शेषम् अन्त्यञ्च अशेषमिति विरोधात् उक्तविधश्लेषेण च तत्समाधानात् विरोधाभासोऽलङ्कारः, अध्वराज्योपमयेति आर्थोपमा, प्रथमे तृतीये च पादे वृत्त्यनुप्रासः, द्वितीये चतुर्थे च पादे छेकानुप्रास इत्येतेषां मिथो निरपेक्षतया संसृष्टिः। तालव्यशकारबाहुल्यात् ओजो गुणः, गौडी च रीतिः।

"विबुधः पण्डिते देवे" इति विश्वः। "यज्वा तु विधिनेष्टवान्" इति "समूहनिवहव्यूहसन्दोहविसरव्रजाः" इति च अमरः।

यज्वेति "सुयजोर्ङ्वनिप्" इति यजधातोरनेन ङ्वनिप्। विबुधव्रजत्रेति "देये त्रा च" इति त्राप्रत्ययः। श्रोत्रियसादिति "अभिव्याप्तौ सम्पदा च सातिर्वा" इति सातिप्रत्ययः। अशेषं भुङ्क्ते इत्यत्रैव तु क्षितिं भुङ्क्ते इत्यादिवत् उपभोगार्थे आत्मनेपदम्।

दारिद्र्य-दारि-द्रविणौघ-वर्षैरमोघ-मेघ-व्रतमर्थिसार्थे ।
सन्तुष्टमिष्टानि तमिष्टदेवं नाथन्ति के नाम न लोकनाथम् ॥२५॥
अस्मात् किल श्रोत्रसुधां विधाय रम्भा चिरम्भामतुलां नलस्य ।
तत्रानुरक्ता तमनाप्य भेजे तन्नामगन्धान्नलकूबरं सा ॥२६॥

---

श्रोत्रियमाह देवलः—"एकां शाखां सकल्पां वा षड्भिरङ्गैरधीत्य वा ।
षट्कर्मनिरतो विप्रः श्रोत्रियो नाम धर्मवित् ॥"

यज्ञशेषभोजनमाह आपस्तम्बः—"यज्ञान्ते शेषभुग्भवेत्" ॥२४॥

বাঙ্গালা—সেই নলরাজা আশ্রিত শ্রোত্রিয় ব্রাহ্মণদিগকে (উপযুক্তরূপে) ধন দান করিয়া এবং শাস্ত্রানুসারে যজ্ঞসম্পাদন করিয়া, আর সেই যজ্ঞে যে রূপে দেবগণকে ঘৃত দিয়াছেন, সেই রূপেই ব্রাহ্মণগণকে ভূমিদান করিয়া, প্রথমটীর (ঘৃতের) শেষ ভোজন করেন, আর পরেরটীকে (রাজ্যকে) অশেষ রূপে ভোজন (উপভোগ) করেন; ইহা আশ্চর্য্য বটে ।২৪॥

**अन्वयः**—के नाम दारिद्र्य-दारि-द्रविणौघ-वर्षैः अर्थिसार्थे अमोघ-मेघ-व्रतं सन्तुष्टम् इष्टदेवं लोकनाथं तम् इष्टानि न नाथन्ति ? ॥२५॥

दारिद्र्येति । के नाम जनाः, दारिद्र्यं दारयितुं नाशयितुं शीलमस्येति दारिद्र्यदारी यो द्रविणौघो धनसमूहस्तस्य वर्षैः वितरणैः करणैः, अर्थिसार्थे याचकसमूहविषये, अमोघम् अव्यर्थं मेघस्येव व्रतं नियमो यस्य तम् । मेघो यथा प्रचुरतरवारिवर्षणैः सूर्यकिरणकृततापं निवार्य्य लोकान् सुखयति, तथा नलोऽपि प्रचुरतरधनवितरणैः दारिद्र्यदुःखं निवार्य्य याचकान् सुखयतीति भावः । सन्तुष्टं याचकप्रार्थनयापि सन्तोषयुक्तम्, न पुनरन्यदातृवत् याचकप्रार्थनामात्रेण विरक्तीभूतमित्याशयः । अतएव इष्टो लोकानां प्रियश्चासौ देवो देवतुल्यश्चेति तम्, तथा लोकानां जनानां नाथमधीश्वरं राजानमित्यर्थः, तं नलम्, इष्टानि ईप्सितानि वस्तूनि, न नाथन्ति न याचन्ते ? अपि तु सर्व एव जना नाथन्तीत्यर्थः । नलः खल्वसाधारण एव दातेति समुदायाभिप्रायः ।

अत्र अमोघमेघव्रतमिति लुप्तोपमा, अर्थापत्तिश्च, अनयोरङ्गाङ्गिभावेन सङ्करः; तृतीयपादे वृत्त्यनुप्रासः, अन्यत्र तु छेकानुप्रास इति समुदाये संसृष्टिः । इष्टदेवं लोकनाथमिति विशेषणद्वयेन च नलस्य नारायणतुल्यत्वं व्यज्यत इति वस्तुना वस्तुध्वनिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"हिरण्यं द्रविणं द्युम्नमर्थरैविभवा अपि" इत्यमरः ।

नाथन्तीति याचनार्थत्वात् द्विकर्मकत्वम् । अतएव चाशीरर्थाभावात् "आशिषि नाथ" इति नात्मनेपदम् ॥२५॥

বাঙ্গালা—যিনি দারিদ্র্যনাশক ধনসমূহ বিতরণ করিয়া, প্রার্থিগণের প্রতি অব্যর্থ মেঘব্রত ধারণ করিয়া আসিতেছেন এবং যিনি সর্বদাই সন্তুষ্টচিত্ত ও লোকের নিকট ইষ্ট এবং দেবতুল্য; সেই নরনাথ নলের নিকটে কোন্ লোক অভীষ্ট বস্তুর প্রার্থনা করে না ? ।২৫॥

**अन्वयः**—सा रम्भा अस्मात् अतुलां नलस्य भां चिरं श्रोत्रसुधां विधाय किल तत्र अनुरक्ता (सती) तम् अनाप्य तन्नामगन्धात् नलकूबरं भेजे ॥२६॥

स्वर्लोकमस्माभिरितः प्रयातैः केलीषु तद्गानगुणान्निपीय ।
हा हेति गायन् यदशोचि तेन नाम्नैव हाहा हरिगायनोऽभूत् ॥२७॥
शृण्वन् सदारस्तदुदारभावं हृष्यन्मुहुर्लोम पुलोमजायाः ।
पुण्येन नालोकत लोकपालः प्रमोद-बाष्पावृत-नेत्र-मालः ॥२८॥

अस्मादिति । सा-"नारीषु रम्भा पुरुषेषु नामः" इत्युक्तेः सौन्दर्य्येण प्रसिद्धा, रम्भा तदाख्या स्वर्वेश्या, अस्मत् अस्माकं सकाशात् अतुलाम् अनुपमाम्, नलस्य भां कान्तिम्, चिरं बहुसमयं यावत्, श्रोत्रयोः कर्णयोः सुधाम् अमृतरूपाम्, विधाय कृत्वा इव, सादरं श्रुत्वेत्यर्थः, तत्र नले अनुरक्ता सती, तं नलम्, अनाप्य स्वर्गमर्त्ययोरत्यन्तव्यवधानात् अलब्ध्वा, तस्य नलस्य नाम्नो गन्धात् प्रथमांशे साहचर्य्यसम्बन्धाद् हेतोः, नलकूवरं तदाख्यं कुबेरपुत्रम्, भजे सुरताय सेवितवती तदभावे किंयत्साहचर्य्यात् तं लब्धम् । अतो नलस्य कान्तिस्त्रि-भुवनमध्य एव सर्वोत्तमेति भावः ।

अत्र तथा भजनासम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिः, निरङ्गं केवलरूपकञ्च, अनयोरङ्गाङ्गिभावेन सङ्करः, तथा प्रथमे पादे वृत्त्यनुप्रासः, द्वितीये च छेकानुप्रास इति समुदाये संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोः" इति विश्वः ।

अस्मादिति पञ्चम्या बहुवचनान्तं पदम् ॥२६॥

বাঙ্গালা—প্রসিদ্ধসুন্দরী রম্ভা, আমাদের নিকট হইতে নলের অতুলনীয় সৌন্দর্য্যকে বহুকাল যাবৎ কর্ণযুগলে অমৃতস্বরূপ করিয়া (আদরের সহিত শুনিয়া), নলের প্রতি অনুরক্ত হইয়া, তাঁহাকে না পাইয়া, তাঁহার নামের সম্পর্ক আছে বলিয়া, নলকূবরকে ভজনা করিতেছে ॥২৬॥

**অন্বয়ঃ**—केलीषु तद्गानगुणान् निपीय इतः स्वर्लोकं प्रयातैः अस्माभिः गायन् हरिगायनः हा हा इति यत् अशोचि, तेन (सः हरिगायनः) नाम्ना एव हाहा अभूत् ॥२७॥

स्वर्लोकमिति । केलीषु गानगोष्ठीविनोदेषु, तस्य नलस्य गानगुणान् तानलयशुद्धिमाधुर्य्यादिरूपान् गानोत्-कर्षान्, निपीय सादरं श्रुत्वा, इतो मर्त्यलोकात्, स्वर्लोकं प्रयातैरस्माभिः, गायन् गानं कुर्वन्, हरेरिन्द्रस्य गायनो गायको गन्धर्वविशेषः, हा हा इति कृत्वा, यत् अशोचि 'हा हा! नलगानं श्रुत्वा अस्य गानश्रवणं कोकिलकाकली श्रुत्वा भेकध्वनिश्रवणमिव विरक्तीकरोति' इत्येवं शोकविषयीकृतः; तेन हेतुना, स हरिगायनः, नाम्ना एव हाहा अभूत् तस्य हाहा इत्येवंरूपमेव नाम अभूदित्यर्थः ।

अत्र हाहेति नामकरणस्य शोकनिमित्तकत्वासम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिरलङ्कारः । तेन च नलस्य गानशक्तिरप्यसाधारणीति वस्तु व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"हाहा हूहूश्चैवमाद्या गन्धर्वाः" इत्यमरः । गायन इति गायतेः "ण्युट् च" इति ण्युट्प्रत्यये रूपम् ॥२७॥

বাঙ্গালা—আমরা বহুতর মজলিসে নলের গানমাধুর্য্য শ্রবণ করিয়া, এই মর্ত্তলোক হইতে স্বর্গলোকে যাইয়া, ইন্দ্রের গায়কের গান শুনিয়া, যে হেতু 'হা হা' এই রূপ শব্দ প্রয়োগ করিয়া, শোক করিতাম; সেই হেতুই সেই ইন্দ্রগায়কের 'হাহা' এইরূপ নাম হইয়াছে ॥২৭॥

**सापीश्वरे शृण्वति तद्गुणौघान् प्रसह्य चेतो हरतोऽर्धशम्भुः ।**
**अभूदपर्णाङ्गुलिरुद्धकर्णा कदा न कण्डूयनकैतवेन ॥२९॥**

**अन्वयः**—सदारः लोकपालः तदुदारभावं शृण्वन् प्रमोद-बाष्पावृत-नेत्र-मालः ( सन् ) मुहुः हृष्यत् पुलोमजायाः लोम पुण्यं न न आलोकत ॥२८॥

नलगुणश्रवणेन न केवलं मानुषीणां किन्तु देवीनामपि विकारो जात इति चतुर्भिः श्लोकैर्वर्णयति सदार इति । सदारः सपत्नीकः, लोकपाल इन्द्रः, तस्य नलस्य उदारभावं महत्त्वम्, शृण्वन्, प्रमोदबाष्पैरानन्दाश्रुभिः आवृता नेत्राणां माला श्रेणिर्यस्य स तादृशः सन्, इन्द्रस्य सहस्रनेत्रत्वादित्याशयः, मुहुर्वारं वारम्, हृष्यत् कामविकारोदयेन उद्गच्छत्, पुलोमजायाः शचीदेव्या लोम, पुण्यं न तस्या एव धर्म्मेण हेतुना, न आलोकत प्रमोदबाष्पावृतनेत्रमालत्वादेव न दृष्टवान् । यदि पुनरालोकिष्यत, तदा परपुरुषगुणश्रवणेन कामविकारोदयाद‌सतीनिश्चयेन पुलोमजामत्यक्ष्यदेव । तेन इन्द्रेण तदवस्थाया यददर्शनं, तत् पुलोमजायाः पुण्येनैवेति भावः ।

अत्र अनालोकनं प्रति प्रमोदबाष्पावृतनेत्रमाल इति पदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, पुलोमजाया रोमहर्षासम्बन्धेऽपि तत्सम्बन्धोक्त्या अतिशयोक्तिः, तथा पुलोमजाया भावोदयात् भावोदयनामालङ्कारश्चेत्येतेषामङ्गाङ्गिभावेन सङ्करः, तथा प्रथमपादस्य छेकानुप्रासः, तृतीयचतुर्थयो र्वृत्त्यनुप्रासश्चेति समुदाये संसृष्टिः । तथा तृतीयपादे वाक्यसमाप्तावपि पुनर्लोकपाल इत्यस्य विशेषणतया चतुर्थपादोपादानात् समाप्तपुनरात्ततादोषः ; स च तृतीयचतुर्थपादयोः पाठपौर्वापर्य्यविपर्य्ययेण समाधेयः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"उदारो दातृमहतोः" "पुलोमजा शचीन्द्राणी" इति चामरः ॥२८॥

**বাঙ্গালা**—দেবরাজ যখন শচীদেবীর সহিত বসিয়া নলের উদারতার বৃত্তান্ত শুনিতেন, তখন আনন্দাশ্রু তাঁহার নয়নগুলিকে আবৃত করিত এবং শচীদেবীরও বার বার রোমাঞ্চ জন্মিত; কিন্তু শচীদেবীরই পুণ্যবলে দেবরাজের নয়নগুলি তখন আনন্দাশ্রুতে আবৃত থাকায় দেবরাজ শচীদেবীর সে রোমাঞ্চ দেখিতে পাইতেন না ॥২৮॥

**अन्वयः**—ईश्वरे प्रसह्य चेतः हरतः तद्गुणौघान् शृण्वति (सति), अर्धशम्भुः सा अपर्णा अपि कण्डूयनकैतवेन कदा अङ्गुलिरुद्धकर्णा न अभूत् ॥२९॥

सेति । ईश्वरे महादेवे, प्रसह्य बलेन, चेतो हरतः मनोहरान्, तस्य नलस्य गुणौघान् शौर्य्यसौन्दर्य्यदयादाक्षिण्यादिगुणसमूहान्, शृण्वति सति अर्द्धदेहाद्धं शम्भुः शिवो यस्याः सा । अतएव चित्तविकारोदयसम्भवेऽपि सा स्थानान्तरं गन्तुं नाशक्नोदिति भावः । सा पातिव्रत्येन प्रसिद्धा, अपर्णा पतित्वेन शिवस्य लाभाशया तपश्चरणकाले न विद्यते पर्णं वृक्षतः पतितपत्रमपि खाद्यं यस्याः सा अपि पार्वत्यपि, कण्डूयनकैतवेन कर्णयोरेव कण्डूयनच्छलेन, कदा कस्मिन् काले, अङ्गुलिभिः रुद्धौ कर्णौ यया सा तादृशी, न अभूत् अपि तु सर्वदैवाभूदित्यर्थः । अन्यथा नलगुणश्रवणेन चित्तविकारोदये पातिव्रत्यभङ्गः ; स्वभावतः कर्णरोधे तु आत्मनस्तुच्छत्वसम्भावना ; अर्द्धशम्भुत्वादेव शम्भौ स्थिते आत्मनोऽन्यत्र गमनासम्भवः ; सुतरां गत्यन्तराभावात् अङ्गुलिभिरेव कर्णरोध इति भावः ।

अत्र उचितस्य कर्णरोधस्य कण्डूयनव्याजेन गोपनात् व्याजोक्तिरलङ्कारः, रुद्धकर्णत्वासम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिश्चानयोरेकाश्रयानुप्रवेशरूपः सङ्करः, अर्थापत्तिः, तृतीयपादे छेकानुप्रासश्चेति समुदाये पुनः संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"अपर्णा पार्वती दुर्गा" इत्यमरः ॥२९॥

**अलं सजन् धर्म्मविधौ विधाता रुणद्धि मौनस्य मिषेण वाणीम्।**
**तत्कण्ठमालिङ्ग्य रसस्य तृप्तां न वेद तां वेदजड़ः स वक्राम् ॥३०॥**
**प्रियस्तदालिङ्गनभूर्न भूता व्रतक्षतिः कापि पतिव्रतायाः।**
**समस्तभूतात्मतया न भूतं तद्भर्त्तुरीर्ष्याकलुषाणुनापि ॥३१॥**

---

বাঙ্গালা—নলের গুণগ্রাম, বলপূর্ব্বক চিত্ত হরণ করিয়া থাকে; সুতরাং মহাদেব যখন সেই গুণগ্রাম শুনিতে থাকিতেন, তখন তাঁহারই অর্দ্ধদেহ পার্ব্বতীও, কণ্ডূয়নচ্ছলে অঙ্গুলী দ্বারা কোন্ সময়ে আপনার কর্ণযুগলকে রুদ্ধ না করিতেন ॥২৯॥

**অন্বয়:**—विधाता धर्म्मविधौ सजन् (सन्) मौनस्य मिषेण वाणीम् अलं रुणद्धि। (यतः) वेदजड़ः सः तत्कण्ठम् आलिङ्ग्य रसस्य तृप्तां वक्रां तां न वेद ॥३०॥

अलमिति। विधाता ब्रह्मा, धर्म्मविधौ सन्ध्यावन्दनादिधर्म्मकार्य्ये, सजन् आसक्तो भवन्, मौनस्य तूष्णीम्भावस्य, मिषेण छलेन, वाणीं वाचं निजभार्य्यां भारतीञ्च, अलं व्यर्थम्, रुणद्धि हृदयाभ्यन्तरे गृहाभ्यन्तरे च वध्नाति। वाक्या निरोधाभावे यदि वा बहिर्निर्गत्य पुरुषान्तरं भजेदित्याशङ्कया मौनावलम्बनच्छलेन यत्तां रुणद्धि, तद्व्यर्थमेवेत्यर्थः। कथमेतदित्याह-यतः वेदे सर्व्वदा वेदपाठे जड़ो विषयान्तरेष्वनभिज्ञः, स विधाता, तस्य नलस्य पुरुषान्तरस्य च कण्ठम् आलिङ्ग्य आश्लिष्य आश्लिष्य च, रसस्य तृप्तां शृङ्गारादिरसैः पूर्णाम् अनुरागीणां सन्तुष्टाञ्च, वक्रां व्यङ्ग्यार्थबहुलतया असरलां कुटिलाञ्च, तां वाणीं निजभार्य्याञ्च, न वेद न जानाति। यथा अवरुद्धापि कुलटा केनचिच्छिद्रेण निर्गत्य पुरुषान्तरस्य कण्ठमालिङ्ग्य तदीयानुरागकर्म्मणा सुरतेन तृप्यति, जड़ो भर्त्ता तन्न जानाति; तद्वदत्रापि तद्वदिति भावः। एतेन नलस्य वाग्मित्वमपि सूचितम्।

अत एवात्र कार्य्यद्वारा विधातरि नायकस्य, नले उपनायकस्य, वाण्याञ्च कुलटाया व्यवहारसमारोपात् समासोक्तिरलङ्कारः, प्रकृतमौनापह्नवेन अप्रकृतवाणीरोधस्थापनादपह्नुतिः; पूर्व्वार्द्धं प्रति परार्द्धवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम्; प्रथमचतुर्थपादयोश्च छेकानुप्रासश्च एतेषां मिथो निरपेक्षतया संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः।

रसस्येति "करणे पुंस्त्वार्थयोः" इति करणे षष्ठी ॥३०॥

বাঙ্গালা—ব্রহ্মা ধর্ম্মকার্য্যে ব্যাপৃত হইয়া মৌনাবলম্বনচ্ছলে সরস্বতীকে যে অবরুদ্ধ করেন, তাহা নিরর্থক। কেন না, ব্রহ্মা সর্ব্বদা বেদপাঠে ব্যস্ত থাকায় অন্যান্য বিষয়ে একেবারেই অনভিজ্ঞ; তাই তিনি ইহা জানেন না যে, সে কুটিলা সরস্বতী নলের কণ্ঠ আলিঙ্গন করিয়া রসে তৃপ্ত হইয়া থাকে ॥৩০॥

**অন্বয়:**—पतिव्रतायाः प्रियः तदालिङ्गनभूः का अपि व्रतक्षतिः तद्भर्त्तुः समस्तभूतात्मतया न भूता। (तथा) समस्तभूतात्मतया तद्भर्त्तुः ईर्ष्याकलुषाणुना अपि न भूतम् ॥३१॥

प्रिय इति। पतिव्रतायाः श्रियो लक्ष्मीदेव्याः शोभायाश्च, तस्य नलस्य आलिङ्गनात् राजलक्ष्मीरूपेण आश्रितत्वात् स्वरूपेण आश्रयणाच्च भवतीति तदालिङ्गनभूः, कापि व्रतक्षतिः पतिव्रतानियमहानिः, तस्याः श्रियो भर्त्तुः नारायणस्य, समस्तानि च भूतानि प्राणिन आत्मा स्वरूपं यस्य तस्य भावस्तया हेतुना, न भूता न जाता; श्रियः समस्तभूतात्मतया नलस्यापि तदात्मत्वात् न परपुरुषालिङ्गने च व्रतक्षतिरभूदिति भावः। तथा समस्तभूतात्मतया तद्भर्त्तुर्विष्णोरपि, ईर्ष्यायाः स्वभार्य्याकर्त्तृकपरपुरुषालिङ्गननिबन्धनायाः असहिष्णुतायाः कलुषस्य कालुष्यस्य

धिक् तं विधेः पाणिमजातलज्जं निर्म्माति यः पर्व्वणि पूर्णमिन्दुम् ।
मन्ये स विज्ञः स्मृततन्मुखश्रीः कृतार्द्धमौज्झद्भवमूर्द्ध्नि यस्तम् ॥३२॥

---

अथवा तेनापि, न भूतं न जातम् ; आत्मनः समस्तभूतस्वरूपत्वेन नलस्याप्यात्मस्वरूपत्वात् स्वभार्य्याकर्षकं-कर्त्तृ नरपृथगालिङ्गन एव च ईर्ष्याकालुष्यसम्भवादित्याशयः ।

अत्र लक्ष्मीदेवीशोभयोर्भेदेऽपि तदभेदाध्यवसायादतिशयोक्तिः, प्रथमे पादे वृत्त्यनुप्रासः, द्वितीये लाटानुप्रासः, तृतीये च च्छेकानुप्रास इति सर्व्वेषां संसृष्टिः । अतिशयोक्त्या च नलस्यालौकिकशोभावत्त्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः । तथा भूता भूतमिति एकार्थकशब्दस्य द्विरुपादानात् कथितपदतादोषः ; "रतिलीलाश्रमं भिन्ते सलीलमनिलो वहन्" इति दर्पणोदाहरणवत् । स च भूतमित्यत्र जातमिति पाठेन समाधेयः । किन्तु एवं वस्तुत्वेन ग्रीष्मेषु परमपतिव्रतानां शचीप्रभृतीनां महादेवीनामिव इतरस्त्रीणामिव परपुरुषगुणानुभवेन चित्तविकारादिवर्णनादनुचितार्थतादोषो दुर्वार एव । प्रसादो गुणः, वैदर्भी च रीतिः ।

"एक एव हि भूतात्मा भूते भूते व्यवस्थितः" इति श्रुतेर्विष्णोः समस्तभूतात्मता वेदितव्या । कलुषपदमत्र भाव-प्राधान्येन निर्द्दिष्टम् ॥३१॥

বাঙ্গালা—লক্ষ্মীদেবী পতিব্রতা হইলেও, নলের আলিঙ্গনে তাঁহার কোনই ব্রতক্ষতি হয় নাই ; কারণ, জগতের সমস্ত প্রাণীই, তাঁহার পতি বিষ্ণুর স্বরূপ ; আবার সেই কারণেই বিষ্ণুরও সে আলিঙ্গনে ঈর্ষ্যাকালুষ্যের লেশও হয় নাই ।৩১।

**অন্বয়ঃ**—यः स्मृततन्मुखश्रीः (सन्नपि) पर्व्वणि पूर्णम् इन्दुं निर्म्माति, अजातलज्जं विधेः तं पाणिं धिक् ; यः स्मृततन्मुखश्रीः (सन्) कृतार्द्धं तं भवमूर्द्ध्नि औज्झत्, सः विज्ञः (इति) मन्ये ॥३२॥

अथ दमयन्तीं प्रलोभयितुमिव नलं वर्णयति धिगिति । यो विधेः पाणिः, स्मृता तस्य नलस्य मुखश्रीर्वदनशोभा येन स तथोक्तः सन्नपि, पर्व्वणि योग्यत्वात् पूर्णिमायाम्, पूर्णम् इन्दुं चन्द्रम्, निर्म्माति सृजति, न जाता तन्मुखस्मरणेऽपि नोत्पन्ना लज्जा यस्य तम्, विधेः ब्रह्मणः पाणिं हस्तम्, धिक् निन्दामि ; उत्कृष्टवस्तुसत्त्वे तदवगमे च सति ततोऽपकृष्टवस्तुनिर्म्माणं निर्म्मातुर्लज्जोदयोचित्येऽपि तदनुदयादिति भावः । किन्तु विधेर्यः पाणिः, स्मृततन्मुखश्रीः सन्, कृतम् अस्मरणावस्थायामेव निर्म्मितम् अर्द्धं यस्य तं कृतार्द्धम्, तम् इन्दुम्, भवमूर्द्ध्नि महादेवमस्तके, तस्य जटिलत्वेन जटाभिस्तदर्द्धचन्द्रावरणसम्भवादित्यभिप्रायः ; औज्झत् त्यागमात्रमेव त्यक्तवान् ; स विधेः पाणिः, विज्ञो विवेचक इति मन्ये ; उत्कृष्टवस्तुसत्त्वे कृतस्याप्यकृष्टवस्तुनः परित्यागे परित्यक्तुर्गुणज्ञत्वप्रकाशात् । अतः खल्वमुं प्रशंसामीति भावः । विधेः पाणिचतुष्टयसत्त्वात् भिन्नवस्तुनिर्म्माणे च भिन्नपाणेरेव नियोगकल्पनात् एकस्यैव च चन्द्रस्य पूर्णत्वार्द्धत्वादिभेदेन भेदोपगमादित्यमुक्तिः सङ्गच्छत इति सुधीभिर्भाव्यम् ।

अत्र धिक्कारं प्रति अजातलज्जपदस्य, उज्झनं प्रति स्मृततन्मुखश्रीपदस्य चार्थो हेतुरिति पदार्थहेतुकं काव्य-लिङ्गद्वयम्, तन्मुखस्मरणपूर्व्वकोज्झनासम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिश्च त्येतेषामङ्गाङ्गिभावेन सङ्करः । "अहन्त्वमुं मन्ये त्वदरिविरहाक्रान्ततरुणी—" इत्यादिदर्पणोदाहरणवदेवात्र मन्ये इत्यस्य प्रयोगेऽपि नोत्प्रेक्षा, तद्घटिकायाः सम्भावनाया एवाप्रतीतेः । उक्तसङ्करेण च पूर्णचन्द्रादपि नलमुखस्य दर्श्यस्याधिक्यवचनात् व्यतिरेकालङ्कारो व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः । तथा चतुर्थपादे परुषवर्णबाहुल्यात् दुःश्रवत्वदोषः ; स च "समीशशीर्षेऽत्यजदर्द्धितं यः" इति पाठेन समाधेयः । अर्थवैकल्यात् ओजो गुणः, गौडी च रीतिः ।

औज्झदिति उज्झधातोर्लङ्यादौ प्रयोगः ॥३२॥

বাঙ্গালা—বিধাতার যে হাতখানি নলের মুখশোভা স্মরণ করিয়াও, পূর্ণিমার দিন পূর্ণচন্দ্র সৃষ্টি করে ; সে হাত অতিনির্লজ্জ ; সুতরাং আমি তাহাকে ধিক্কার দিই । আর

निलीयते ह्रीविधुरः स्वजैत्रं श्रुत्वा विधुस्तस्य मुखं मुखान्नः।
सूरे समुद्रस्य कदापि पूरे कदाचिदभ्रभ्रमदभ्रगर्भे ॥३३॥
संप्राप्य नः स्वध्वजभृत्यवर्गान् दैत्यारित्यज्ञनलास्यतुल्यै।
तत्सद्मनाभिसरोजपातात् धातुर्विलज्जं रमते रमायाम् ॥३४॥

---

বিধাতার যে হাত খানি চন্দ্রকে আধা-আধি সৃষ্টি করিয়া, নলের মুখশোভা স্মরণ করা মাত্রই সে অর্দ্ধচন্দ্রকে মহাদেবের মস্তকে ত্যাগ করে; সেই হাতখানিকেই বিজ্ঞ বলিয়া আমি মনে করি ।৩২।

**अन्वयः**—विधुः नः मुखात् तस्य मुखं स्वजैत्रं श्रुत्वा ह्रीविधुरः (सन्) कदापि सूरे, कदापि समुद्रस्य पूरे, कदाचित् अभ्रभ्रमदभ्रगर्भे निलीयते ॥३३॥

निलीयत इति। विधुश्चन्द्रः, नः अस्माकं मुखात्, तस्य नलस्य मुखम्, स्वजैत्रं सौन्दर्य्येण आत्मनो जय-कारि, श्रुत्वा, ह्रिया लज्जया विधुरो विह्वलः सन्, कदापि अमावस्यायाम्, सूरे सूर्य्ये, कदापि सन्ध्यावेलायाम्, समुद्रस्य पूरे जलसमूहे, कदाचित् वर्षाकाले, अभ्रे आकाशे भ्रमन्ति यानि अभ्राणि मेघास्तेषां गर्भे अभ्यन्तरे, निलीयते लुक्कायितो भवति; लोकसमाजे मुखदर्शनभयादिति भावः। अन्योऽपि लज्जातुरः सन् नानास्थाने लुक्कायितो भवति।

अतएवात्र चन्द्रे लज्जातुरस्त्रीकर्त्तृकव्यवहारसमारोपात् समासोक्तिः, एकस्य चन्द्रस्य सूर्य्यादिनैकस्थानस्थभवनात् पर्य्यायः, तथा ह्रीविधुरत्वनिलयनकारणलयासम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिः; द्वितीये पादे लाटानु-प्रासः, तृतीये सूरे पूरे इति पदगतः अन्त्यानुप्रासः, चतुर्थे च छेकानुप्रास इति सर्व्वेषां संसृष्टिः। मल्लिनाथस्तु आतश्योक्तिस्त्वामे प्रतीयमानोत्प्रेक्षामाह। अस्मिन्नकर्षस्य आरोहावरोहाभ्याम् ओजो गुणः, गौडी च रीतिः।

"सूर्य्याचन्द्रमसोर्यः परः सन्निकर्षः सा मावस्या" इति गोभिलसूत्रेणामावस्यायां सम्पातस्य अर्थेन चन्द्रस्य सूर्य्याधःस्थितिनियमात् तथात्वे च चन्द्रस्य सूर्य्यकरेणावृततया अदर्शनात् तत्रैव तस्य निलयो विवक्षित इति बोध्यम्।

"सूरसूर्य्यार्य्यमादित्यद्वादशात्मदिवाकराः," "द्यौर्दिवौ द्वे स्त्रियामभ्रम्" "अभ्रं मेघो वारिवाहः" इति च अमरः।

लिङ् एव जैत्रं प्रज्ञादित्वात् स्वार्थे अण् ॥३३॥

**বাঙ্গালা**—চন্দ্র, আমাদের মুখে নলের মুখখানিকে নিজের জয়কারী শুনিয়া, লজ্জায় বিহ্বল হইয়া, কখনও সূর্য্যে, কখনও সমুদ্রের জলে এবং কখনও আকাশসঞ্চারী মেঘের ভিতরে লুক্কায়িত হইয়া থাকেন ।৩৩।

**अन्वयः**—दैत्यारिः अत्यज्ञ-नलास्य-तुल्यै स्वध्वज-भृत्यवर्गान् नः संप्राप्य तत्सद्म-नाभि-सरोज-पीतात् धातुः विलज्जं रमायां रमते ॥३४॥

संप्राप्येति। दैत्यारिर्विष्णुः, सौन्दर्य्येण अज्ञं पद्ममतिक्रान्तमिति अत्यज्ञं यत् नलस्य आस्यं मुखं तस्य तुल्यं स्तवाय प्रशंसनायेति यावत्, स्वस्य ध्वजस्य चिह्नीभूतो गरुड़स्तस्य भृत्यवर्गान् सेवकसमूहान्, गरुड़स्य पक्षिराज-त्वादित्याशयः, नः अस्मान्, संप्राप्य नयनमार्गया आदिश्य, तया अस्मत्कर्त्तृकनलास्यतुल्या सद्म यत् मुद्रितीभवत् यत् नाभिसरोजं दैत्यारेरेव नाभिपद्मं तेन पीतात् पश्चात् आच्छादितादित्यर्थः, धातुर्ब्रह्मणः सकाशात्, विलज्जं विगतलज्जं यथा स्यात्तथा, रमायां निजपत्न्यां कमलायाम्, रमते सुरतं करोति। नारायणस्य नाभिः

রেখাভিরাস্যে গণনাদিবাস্য দ্বাত্রিংশতা দন্তময়ীভিরন্তঃ।
চতুর্দ্দশাষ্টাদশ চাত্র বিদ্যা দ্বেধাপি সন্তীতি শশংস বেধাঃ ॥৩৫॥

পদ্মে সদৈব ব্রহ্মা নিবসতি, ততশ্চ লজ্জাবশাৎ নারায়ণস্য রমণাবসরো ন ভবতি; কিন্তু পদ্মাপেক্ষয়া উৎকৃষ্টতরস্য নলমুখস্য প্রশংসয়া যদা তৎ পদ্মং মুদ্রিতং ভবতি ব্রহ্মা চ তদন্তঃপিহিতস্তিষ্ঠতি; তদৈব নারায়ণস্য অদর্শনাৎ লজ্জাশূন্যতয়া রমণাবসরো ভবতীতি সরলার্থঃ। উৎকৃষ্টস্য সত্ত্বে নিকৃষ্টস্য সঙ্কোচঃ স্বাভাবিক এবেতি ভাবঃ।

অত্র অত্যজীতি পদ্মাপেক্ষয়া নলমুখস্যাধিক্যবর্ণনাৎ ব্যতিরেকঃ, স্তুতিনিমিত্তকনাভিসরোজসঙ্কোচা-সম্বন্ধেঽপি তৎসম্বন্ধাভিধানাদতিশয়োক্তিঃ, পূর্ব্বার্দ্ধে বৃত্ত্যনুপ্রাসঃ, চতুর্থপাদে ছেকানুপ্রাসশ্চেতি সর্ব্বেষাং সংসৃষ্টিঃ। প্রসাদো গুণঃ, পাঞ্চালী চ রীতিঃ।

“চিহ্নকেতনপতাকাসু খট্বাঙ্গেঽপি ধ্বজোঽস্ত্রিয়াম্” ইতি ত্রিকাণ্ডশেষঃ ॥৩৪॥

বাঙ্গালা—আমরা, পক্ষিরাজ গরুড়ের ভৃত্য; গরুড়ও আবার নারায়ণের ধ্বজের চিহ্ন; তাই পদ্ম অপেক্ষাও সুন্দর নলমুখের প্রশংসা করিবার জন্য, নারায়ণ নয়নের ইঙ্গিত দ্বারা আমাদিগকে আদেশ করেন; পরে আমরাও নলমুখের প্রশংসা করিতে থাকি; তাহাতে নারায়ণের নাভিপদ্ম মুদ্রিত হইয়া যায়; তাহাতে আবার ব্রহ্মা আচ্ছাদিত হইয়া পড়েন; তখন নারায়ণ লজ্জা ত্যাগ করিয়া লক্ষ্মীর সহিত রমণ করিয়া থাকেন ॥৩৪॥

**অন্বয়ঃ**—বেধাঃ অস্য আস্যে অন্তঃ দ্বাত্রিংশতা দন্তময়ীভিঃ রেখাভিঃ গণনাৎ অত্র চতুর্দ্দশ অষ্টাদশ চ দ্বেধা অপি বিদ্যাঃ সন্তি ইতি বেধাঃ শশংস ইব ॥৩৫॥

নলস্য ভাবী বিদ্যাসৌন্দর্য্যমনুবর্ণয়তি, বিদ্যা বর্ণয়তে ন বৈশ্যাস্য রেখাভিরিতি। অস্য নলস্য, আস্যে অন্তঃ মুখস্যাভ্যন্তরে, দ্বাত্রিংশতা দ্বাত্রিংশৎসংখ্যাভিঃ, দন্তময়ীভিঃ দন্তস্বরূপাভিঃ, রেখাভিঃ চিহ্নৈঃ, গণনাৎ সংখ্যা-করণাৎ, অত্র নলে, চতুর্দ্দশ চৈব বিদ্যাঃ অস্তি চতুর্দ্দশপ্রকারাঃ, অষ্টাদশ চৈব বিদ্যা অষ্টাদশপ্রকারাশ্চ ইতি দ্বেধা দ্বিপ্রকারা অপি; চতুর্দ্দশানামষ্টাদশানাঞ্চ মিলনে দ্বাত্রিংশদ্ভবতীতি ভাবঃ, বিদ্যাঃ সন্তি ইতি বেধাঃ বিধাতা, শশংস ইব সূচয়ামাসেব।

অত্র “তারাময়াস্তস্য চ ফেনময়াঃ” ইতি দর্পণোদাহরণবৎ দন্তময়ীভিরিত্যনেন দন্তানপহ্নুত্য রেখাণাং প্রতিষ্ঠাপনাদপহ্নুতিঃ, বাচ্যা ক্রিয়োৎপ্রেক্ষা চ, অনয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ; ছেকানুপ্রাসো বৃত্ত্যনুপ্রাসশ্চেত্যনয়োঃ সংসৃষ্টিঃ। দন্তময়ীভিঃ রেখাভিরিত্যনেন দন্তানাং সূক্ষ্মত্বরূপং সামুদ্রিকশাস্ত্রোক্তলক্ষণং ব্যঞ্জিতমিত্যপহ্নুত্যা বস্তুধ্বনিঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ।

গণনাদিতি ল্যব্লোপে পঞ্চমী। দ্বাত্রিংশতেতি “বিংশত্যাদ্যাঃ সদৈকত্বে সর্ব্বাঃ সংখ্যেয়সংখ্যয়োঃ” ইত্য-মরোক্তের্বহুত্বার্থেঽপ্যেকবচনম্।

বিদ্যানাং চতুর্দ্দশত্বমষ্টাদশত্বঞ্চাহ প্রায়শ্চিত্ততত্ত্বে বিষ্ণুপুরাণম্—

“শিক্ষা কল্পো ব্যাকরণং নিরুক্তং ছন্দসাং চিতিঃ। জ্যোতিষামযনঞ্চৈব বেদাঙ্গানি বদন্তি ষট্ ॥
অঙ্গানি বেদাশ্চত্বারো মীমাংসা ন্যায়বিস্তরঃ। ধর্ম্মশাস্ত্রং পুরাণঞ্চ বিদ্যা হ্যেতাশ্চতুর্দ্দশ ॥”
আয়ুর্ব্বেদো ধনুর্ব্বেদো গান্ধর্ব্বশ্চেতি তে ত্রয়ঃ। অর্থশাস্ত্রং চতুর্থঞ্চ বিদ্যা অষ্টাদশৈব তাঃ ॥৩৫॥

বাঙ্গালা—নলের মুখের ভিতরে দন্তরূপ বত্রিশটী রেখা করিয়া, বিধাতা যেন ইহাই বুঝাইয়া দিয়াছেন যে, এই নলে চৌদ্দ ও আঠার এই দুই রকম বিদ্যাই আছে ॥৩৫॥

श्रियौ नरेन्द्रस्य निरीक्ष्य तस्य स्मरामरेन्द्रावपि न स्मरामः ।
वासेन सम्यक् क्षमयोश्च तस्मिन् बुद्धौ न दध्मः खलु शेषबुद्धौ ॥३६॥
विना पतत्रं विनतातनूजैः समीरणैरीक्षणलक्षणीयैः ।
मनोभिरासीदनणुप्रमाणैः न निर्जिता दिक्कतमा तदश्वैः ॥३७॥

**अन्वयः**—(वयम्) तस्य नरेन्द्रस्य श्रियौ निरीक्ष्य स्मरामरेन्द्रौ अपि न स्मरामः, क्षमयोश्च तस्मिन् सम्यक् वासेन बुद्धौ शेषबुद्धौ (अपि) न खलु दध्मः ॥३६॥

श्रियाविति । वयं तस्य नरेन्द्रस्य राज्ञो नलस्य, श्रियौ शोभासम्पदौ, निरीक्ष्य दृष्ट्वा, स्मरामरेन्द्रौ अपि कामदेवपुरन्दरावपि, न स्मरामः नलसदृशत्वेन न चिन्तयामः । कामदेवापेक्षया सौन्दर्यं, इन्द्रापेक्षया च ऐश्वर्यं नलेऽधिकं वर्तते इति भावः । तथा क्षमयोश्च पृथिवीसहिष्णुतागुणयोश्च, तस्मिन् नले, सम्यग्वासेन पालनीयत्वसम्बन्धेन समवायसम्बन्धेन च यथायथम् अवस्थित्या हेतुना, बुद्धौ मत्याम्, शेषबुद्धौ अनन्तनागसुगतौ अपि, न खलु दध्मः विषयतासम्बन्धेन नैव धारयामः, न खलु चिन्तयाम इत्यर्थः । तथा च पृथिवी अनन्तनागे यथा दृढं वसति तदपेक्षया नले अधिकं दृढं वसति, तथा क्षमागुणो बुद्धदेवे यथा दृढं वसति, तदपेक्षया नले अधिकं दृढं वसतीत्याशयः ।

अत्र उभयोरपि श्रियोः क्षमयोश्च नलवर्णनार्हत्वेन प्रस्तुतत्वात् पदश्लेषः, तथा स्मरामरेन्द्र-शेष-बुद्धापेक्षया नलस्याधिक्यवर्णनात् व्यतिरेकः, द्वितीयचतुर्थपादयोश्च छेकानुप्रासश्चेत्येषां संसृष्टिः । यथासंख्यमिति केचित् । प्रसादो गुणः, वैदर्भी च रीतिः ।

"श्रीर्लक्ष्मीविभवसम्पत्सु भारतीशोभयोरपि" इति त्रिकाण्डशेषः । "क्षितिक्षान्त्योः क्षमा, युक्ते क्षमं शक्ते हिते त्रिषु" इत्यमरः ।

कल्यान्तरीयबुद्धस्याभिधानान्न कालविपर्ययदोष इति दिक् ॥३६॥

বাঙ্গালা—সেই নলরাজার সৌন্দর্য্য ও সম্পদ দেখিয়া, আমরা কামদেব এবং ইন্দ্রকেও চিন্তা করি না, আর তাঁহাতে যেরূপ দৃঢ়ভাবে পৃথিবী ও সহিষ্ণুতাগুণ অবস্থান করে, তাহাতে আমরা অনন্তনাগ এবং বুদ্ধদেবকেও বুদ্ধিতে ধারণ করি না ॥৩৬॥

**अन्वयः**—पतत्रं विना विनतातनूजैः ईक्षणलक्षणीयैः समीरणैः, अनणुप्रमाणैः मनोभिः तदश्वैः कतमा दिक् न निर्जिता आसीत् ? ॥३७॥

अथ त्रिभिस्तस्य वीरत्वं वर्णयति विनेति । पतत्रं पक्षं विना पक्षरहितैरित्यर्थः, विनतातनूजैः गरुडस्वरूपैः, ईक्षणलक्षणीयैः नयनदृश्यैः, समीरणैः वायुस्वरूपैः, तथा अनणुप्रमाणैः विशालपरिमाणैः, मनोभिः मनःस्वरूपैः, एतत्त्रितयतुल्यवेगशालिभिरित्यर्थः, तस्य नलस्य अश्वैः घोटकैः, कतमा दिक् न निर्जिता आसीत् ? अपि तु सर्वैव दिक् निर्जितेत्यर्थः । महावीरोऽपि नल इत्याशयः ।

अत्र विना पतत्रमित्यादिविशेषणत्रयेण वैशिष्ट्यस्य अधिककथनात् अधिकारूढवैशिष्ट्यरूपकमलङ्कारः, अर्थापत्तिरनयोरङ्गाङ्गिभावेन सङ्करः, तथा प्रथमे पादे छेकानुप्रासवृत्त्यनुप्रासयोरेकाश्रयानुप्रवेशरूपः सङ्करः, द्वितीये छेकानुप्रासमात्रमिति समुदाये संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

मनसः अणुपरिमाणत्वं प्रमाणं यथा भाषापरिच्छेदे—

"अयौगपद्याज्ज्ञानानां तस्याणुत्वमिहोच्यते" इति ॥३७॥

संग्रामभूमीषु भवत्यरीणाम् अस्रैर्नदीमातृकतां गतासु।
तदापधारापवनाशनानां राजव्रजीयैरसुभिः सुभिक्षम्॥६८॥

यशो यदस्याजनि संयुगेषु कण्डूलभावं भजता भुजेन।
हेतोर्गुणादेव दिगापगाली-कूलङ्कषत्वं व्यसनं तदीयम्॥६९॥

বাঙ্গালা—পক্ষশূন্য গরুড়স্বরূপ, দৃষ্টিগোচর বায়ুস্বরূপ এবং বৃহৎপরিমাণ মনস্বরূপ নলের ঘোড়াগুলি, কোন্ দিক্ জয় না করিয়াছে ? ॥৬৭॥

**अन्वयः**—संग्रामभूमीषु अरीणाम् अस्रैः नदीमातृकतां गतासु (सतीषु) राजव्रजीयैः असुभिः तदाप-धारा-पवनाशनानां सुभिक्षं भवति ॥६८॥

संग्रामेति। संग्रामभूमिषु युद्धस्थानेषु, अरीणां शत्रूणाम्, अस्रैः रुधिरैः, नद्य एव मातरः शस्योत्पादकतया पालिका यासां तासां भावस्ताम्, गतासु प्राप्तासु सतीषु नदीमयीषु सतीष्वित्यर्थः, राज्ञां निहतानां विपक्षनृपतीनां व्रजः समूहस्तस्य इमे इति राजव्रजीयास्तैः, असुभिः प्राणवायुभिः, तस्य नलस्य आपधाराः शरपरम्परा एव पवनं प्राणम् अश्नन्ति खादन्तीति पवनाशनास्ताहशदीर्घत्वत् ताहशशब्दकारित्वाच्च सर्पास्तेषाम्, सुभिक्षं भिक्षासमृद्धिः खाद्यसौलभ्यमित्यर्थः, भवति। नलस्य बाणरूपिणः सर्पा विपक्षनृपतीनां प्राणवायूनेव भुञ्जते तेषां वायुभोजित्वादिति सरलार्थः।

अत्र निरङ्गं केवलरूपकमलङ्कारः, चतुर्थपादे छेकानुप्रासश्च तयोः संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः।

"देशो नद्यम्बुवृष्ट्यम्बु-सम्पन्नव्रीहिपालितः। स्यान्नदीमातृको देवमातृकश्च यथाक्रमम्।" इत्यमरः।
भिक्षाणां समृद्धिरिति सुभिक्षम्, समृद्ध्यर्थे अव्ययीभावः ॥६८॥

বাঙ্গালা—যুদ্ধস্থান শত্রুগণের রক্ত দ্বারা নদীময় হইয়া গেলে, বিপক্ষরাজগণের প্রাণ-বায়ু দ্বারাই নলের বাণশ্রেণিরূপ সর্পগণের খাদ্যের সুবিধা হইয়া থাকে ।৬৮॥

**अन्वयः**—कण्डूलभावं भजता भुजेन संयुगेषु अस्य यत् यशः अजनि; तदीयं दिगापगालीकूलङ्कषत्वं व्यसनं हेतोः गुणात् एव (जातम् इव) ॥६९॥

यश इति। कण्डूलभावं रणकण्डूयायालित्वम्, भजता धारयता, भुजेन नलस्यैव बाहुना, संयुगेषु युद्धेषु, यत् यशः, अजनि उत्पादितम्, तदीयं तद्यशःसम्बन्धि, दिश एव आपगा विस्तृतत्वात् नद्यस्तासां या आली श्रेणी समूह इति यावत्, तस्याः कूलङ्कषत्वं तीरविदारकत्वं तदात्मकमित्यर्थः, व्यसनं व्यवसायः, हेतोः कारणीभूतस्य भुजस्य, गुणात् कण्डूलभावरूपाद्धर्मादेव; जातमिवेति शेषः। तथा च कारणं भुजः, तस्य कार्यञ्च यशः। एवञ्च कारणीभूते भुजे कण्डूलभावरूपो गुणो वर्त्तते; अतएव च कार्य्यभूते यशसि कूलङ्कषत्वरूपो गुणस्तस्मादेव आगतः; "कारणगुणा हि कार्य्यगुणमारभन्ते" इति न्यायादिति भावः। नलस्य यशः सर्वास्वेव दिक्षु व्याप्तमिति स्थूलार्थः।

अत्र दिक्षु आपगात्वारोपात् निरङ्गं केवलरूपकम्, जातमिवेति प्रतीयमाना क्रियोत्प्रेक्षा, प्रथमपादे वृत्त्यनुप्रासः, द्वितीये च छेकानुप्रास इति सर्वेषां संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः।

कण्डूरस्यास्तीति कण्डूलः "सिध्मादिभ्यश्च" इत्यस्यार्थे लच्। कूलङ्कषतीति कूलङ्कषं "सर्वकूलाभ्रकरीषेषु कषः" इति कषतेः खश् ॥६९॥

বাঙ্গালা—নলের বাহু, রণকণ্ডূয়া ধারণ করে; তাই সে বাহু, রণে যে যশ উৎপাদন

यदि त्रिलोकी गणनापरा स्यात् तस्याः समाप्तिर्यदि नायुषः स्यात्।
पारेपरार्द्धं गणितं यदि स्यात् गणेयनिःशेषगुणोऽपि स स्यात्॥४०॥
अवारितद्वारतया तिरश्चामन्तःपुरे तस्य निविश्य राज्ञः।
गतेषु रम्येष्वधिकं विशेषमध्यापयामः परमाणुमध्याः॥४१॥

---

করিয়াছে, সে যশ সমস্ত দিক্‌রূপ নদীসমূহের তীর ভাঙ্গিতেছে। ইহার কারণ এই যে, নলের বাহু হইল কারণ; আর তাহার কার্য্য হইল তাঁহার যশ; সুতরাং বাহুতে যে কণ্ডূয়া ছিল, তাহা যশেও আসিয়াছে বলিয়াই বোধ হয়।৩৯॥

**अन्वयः**—यदि त्रिलोकी गणनापरा स्यात्, यदि तस्याः आयुषः समाप्तिः न स्यात्, यदि (च) गणितं पारेपरार्द्धं स्यात्, (तदा) सः अपि गणेयनिःशेषगुणः स्यात्॥४०॥

एकाकिन्या दमयन्त्या अधिककालं प्राप्तिसम्भावना नास्तीति विभाव्य संक्षेपेण नलवर्णनां समापयति यदीति। यदि, त्रयाणां लोकानां समाहार इति त्रिलोकी तद्वासी जनसमूह इत्यर्थः, गणनापरा नलगुणसंख्याकरणासक्ता स्यात्, यदि तस्यास्त्रिलोक्यास्त्रिलोकीवासिजनस्येति तात्पर्य्यम्, आयुषः समाप्तिरवसानम्, न स्यात्; यदि च गणितं गणनाया अङ्कः, पारेपरार्द्धं परार्द्धादप्यधिकं स्यात्; तदा स नलोऽपि, गणेया गणयितुं शक्या निःशेषाः सकला गुणा यस्य स तादृशः स्यात्। अन्यथा न इत्याशयः।

अत्र त्रिलोक्यादीनां गणनापरत्वाद्यसम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तित्रयम्, गुणानां गणेयत्वसम्बन्धेऽप्यसम्बन्धसूचनादपरा चातिशयोक्तिः; तासाञ्चाङ्गाङ्गिभावेन सङ्करः, परार्द्धे च्छेकानुप्रासश्चेति समुदाये संसृष्टिः। तथा यदि पदस्य स्यात्पदस्य च पुनःपुनरभिधानात् अनवीकृतत्वदोषद्वयम्। तत्समाधानाय पद्यमेतदेवं पठनीयम्—

'जगत्त्रयीयं गणने लगेच्चेत् यद्यायुरस्या न समाप्तिमृच्छेत्।
पारेपरार्द्धं गणितं भवेच्च गणेयनिःशेषगुणोऽपि स स्यात्॥'

प्रसादो गुणः, वैदर्भी च रीतिः।

परार्द्धादधिका संख्या नास्ति। यथा लीलावत्यां भास्कराचार्य्यः—
"एक-दश-शत-सहस्रायुत-लक्ष-प्रयुत-कोटयः क्रमशः। अर्ब्बुदमब्जं खर्ब्ब-निखर्ब्ब-महापद्म-शङ्कवस्तस्मात्।
जलधिश्चान्त्यं मध्यं परार्द्धमिति दशगुणोत्तराः संज्ञाः। संख्यायाः स्थानानां व्यवहारार्थं कृताः पूर्व्वैः॥";
पारेपरार्द्धमिति "पारे मध्ये षष्ठ्या वा" इत्यव्ययीभावः, निपातनादेत्वञ्च।
अहो! बालिकां प्रलोभयितुं बालवदेवेदं नलवर्णनं हंसस्य॥४०॥

**বাঙ্গালা**—যদি ত্রিজগতের লোক নলের গুণগণনায় প্রবৃত্ত হয় এবং তাহাদের আয়ুর অবসান যদি না হইয়া যায়; আবার পরার্দ্ধেরও অতিরিক্ত সংখ্যা যদি আবিষ্কৃত হয়; তাহা হইলে, নলের সমস্ত গুণও গণিত হইতে পারে।৪০।

**अन्वयः**—तिरश्चाम् अवारितद्वारतया तस्य राज्ञः अन्तःपुरे निविश्य (वयं) परमाणुमध्याः रम्येषु गतेषु अधिकं विशेषम् अध्यापयामः॥४१॥

अथ दिव्यहंसानां नलेन सह सञ्जातसौहार्द्दतया तस्य नानाविषयेषु विशेषोपकाराः सञ्जायन्त इत्याह अवारितेति। तिरश्चां पक्षिणाम्, अवारितद्वारतया हेतुना, तस्य राज्ञो नलस्य, अन्तःपुरे निविश्य प्रविश्य वयम्, परमाणुवत् मध्यः कटिदेशो यासां तास्तादृशीः महिलाः, रम्येषु स्वभावत एव सुन्दरेष्वपि, गतेषु गमनेषु विषये, अधिकं विशेषं सर्व्वोत्कर्षचमत्कारित्वम्, अध्यापयामः शिक्षयामः। तथा च नलभोग्या महिलाः स्वभावत एव

পীযূষধারানধরাভিরন্তঃ-তাসাং রসোদন্বতি মজ্জয়ামঃ।
রম্ভাদি-সৌভাগ্য-রহঃকথাভিঃ কাব্যেন কাব্যং সৃজতাদৃতাভিঃ ॥৪২॥
কামিনং তত্রাভিনবস্মরাজ্ঞা-বিশ্বাস-নিক্ষেপ-বণিক্ ক্রিয়েঽহম্।
জিহ্রেতি যন্নৈব কুতোঽপি তির্য্যক্ কশ্চিত্তিরশ্চস্ত্রপতে ন তেন ॥৪৩॥

---

সুন্দরগমনাঃ তথাপি চ স্বর্গীয়া হংসা বয়ং স্বর্গীয়ং গমনচমৎকারিত্বং তাঃ শিক্ষয়াম ইত্যাশয়ঃ। এতেন ত্বমপি যদি তস্য অন্তঃপুরগামিনী ভবিষ্যসি, তদা ত্বামপি তথৈব শিক্ষয়িষ্যাম ইতি সূচিতম্।

অত্র চতুর্থচরণে ছেকানুপ্রাসঃ, লুপ্তোপমা, তথা পরমাশ্চর্য্যমধ্যমাস্বসম্বন্ধেঽপি তৎসম্বন্ধাভিধানাদতিশয়োক্তিরিত্যেতেষামেকাশ্রয়ানুপ্রবেশরূপঃ সঙ্করঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ।

অত্যন্তস্য বোধবিশিষ্টত্বাৎ "মৃদ্ব্যগ্যাস্তমুম্বু—" ইত্যাদিনা পরমাত্মনস্থা ইত্যনিত্যজ্ঞ্যঃ কর্ত্তব্যম্ ॥৪১॥

বাঙ্গালা—পক্ষিগণের প্রবেশে অবারিত দ্বার বলিয়া, আমরা নলরাজার অন্তঃপুরে প্রবেশ করিয়া, তাঁহার কৃশোদরী রমণীগণের স্বভাবতঃ সুন্দর গমন হইলেও, তাহাদিগকে স্বর্গীয় গমনের চমৎকারিতা শিখাইয়া থাকি ॥৪১॥

অন্বয়ঃ—(বয়ং) পীযূষধারানধরাভিঃ কাব্যং সৃজতা কাব্যেন আদৃতাভিঃ রম্ভাদিসৌভাগ্যরহঃকথাভিঃ তাসাম্ অন্তঃ রসোদন্বতি মজ্জয়ামঃ ॥৪২॥

পীযূষেতি। পীযূষধারায়া অমৃতপ্রবাহাৎ ন অধরা ন ন্যূনা ইত্যনধরাস্তাভিঃ অমৃতধারাতুল্যাভিরিত্যর্থঃ, তাদৃশপ্রীতিজনকত্বাদিতি ভাবঃ, তথা কাব্যং রসাত্মকং বাক্যম্, সৃজতা রচয়তা, কাব্যেন শুক্রাচার্য্যেণ, আদৃতাভিঃ, আদরপূর্ব্বকং গৃহীতাভিঃ, স্বকৃতকাব্যে তত্তত্কথাদিনিবেশযোগ্যত্বাদিত্যাশয়ঃ; রম্ভাদীনাং স্বর্গীয়সুন্দরীণাম্, যৎ সৌভাগ্যং পুরুষবশীকরণসামর্থ্যং যচ্চ রহঃ নানাবিধং সুরতং তয়োঃ কথাভিরুপাখ্যানৈঃ, তাসাং নলস্ত্রীণাম্, অন্তশ্চিত্তম্, রসোদন্বতি শৃঙ্গাররসসাগরে, মজ্জয়ামো নিমগ্নং কুর্ম্মঃ। তেন ত্বমপি যদি তস্য স্ত্রীমধ্যগতা ভবিষ্যসি, তদা তথাপি এতাদৃশং করিষ্যাম ইতি ধ্বনিতম্।

অত্র প্রথমে পাদে আর্থোপমা ছেকানুপ্রাসশ্চ, চতুর্থে ছেকানুপ্রাসো বৃত্ত্যনুপ্রাসঃ, কাব্যকর্ত্তুরাদরাসম্বন্ধেঽপি তৎসম্বন্ধাভিধানাদতিশয়োক্তিশ্চ; ইত্যেতেষাং সংসৃষ্টিঃ। তথা রসোদন্বতীত্যত্র রসস্য সমুদ্রোক্তিদোষঃ, কথাভিরিত্যনেন বাক্যসমাপ্তাবপি পুনঃ কথাভিরিত্যস্য বিশেষণতয়া চতুর্থপাদোপাদানাৎ সমাপ্তপুনরাত্তত্বদোষশ্চ। কেন রসোদন্বতীত্যত্র 'মদোদন্বতি' ইতি পাঠঃ, তৃতীয়চতুর্থপাদয়োঃ পাঠপৌর্বাপর্য্যবিপর্য্যয়শ্চ কর্ত্তব্যঃ। মদো হর্ষঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ।

"শুক্রো দৈত্যগুরুঃ কাব্য উশনা ভার্গবঃ কবিঃ" ইত্যমরঃ ॥৪২॥

বাঙ্গালা—আমরা, রম্ভাপ্রভৃতি দিব্য সুন্দরীগণের সৌভাগ্য এবং রমণ বিষয়ের উপাখ্যান বলিয়া, নলরমণীগণের চিত্তকে একেবারে শৃঙ্গারসাগরে মগ্ন করিয়া থাকি। কেন না, আমাদের সেই উপাখ্যানগুলি, অমৃতধারা অপেক্ষা ন্যূন হয় না; অধিকন্তু কাব্যরচয়িতা শুক্রাচার্য্যও, সে উপাখ্যানগুলির আদর করিয়া থাকেন ॥৪২॥

অন্বয়ঃ—তত্র কামিভিঃ অহম্ অভিনব-স্মরাজ্ঞা-বিশ্বাস-নিক্ষেপ-বণিক্ ন ক্রিয়ে?। যৎ তির্য্যক্ কুতঃ অপি ন এব জিহ্রেতি; তেন কশ্চিৎ তিরশ্চঃ ন ত্রপতে ॥৪৩॥

আত্মনো নিতান্তবিশ্বাসযোগ্যত্বং সূচয়তি কামিনমিতি। তত্র নলান্তঃপুরে, কামিভিঃ মুগ্ধাপ্রভৃতিভিঃ স্ত্রীভিঃ, অহম্, অভিনবা নূতনা যা স্মরাজ্ঞা কামাদেশঃ কামাবেশজনিতসম্ভোগনবনবাভিলাষপ্রকাশ ইত্যর্থঃ, তস্যা বিশ্বাসেন

**वार्त्ता च सासत्यपि नान्यमेति योगादरन्ध्रे हृदि यां निरुन्धे।**
**विरिञ्चि-नानानन-वाद-धौत-समाधि-शास्त्र-श्रुति-पूर्ण-कर्णः ॥४४॥**

---

निक्षेपवणिक् स्थापनिकवणिक् स्वरूपः, न क्रिये ? अपि तु सर्वाभिरेव क्रिये इत्यर्थः। सर्वाभिरेव मां विश्वस्य स्वं कामरहस्यं मयि कथ्यत इति भावार्थः। अथ भवतु तव महाविश्वासत्वं तथापि त्वयि कामरहस्यकथने तासां लज्जा किं न स्यादित्याह यद् यस्मात्, तिर्य्यक्-मनुष्येतरः प्राणी, कुतोऽपि मनुष्यात् नैव जिह्रेति लज्जते ; तेन हेतुना, कः अपि मनुष्योऽपि, तिरश्चो मनुष्येतरप्राणिनः सकाशात्, न त्रपते न लज्जते। लज्जा तु केवलं युष्माकं मनुष्यजातिमध्य एव परस्परं निबद्धेति भावः। एतेन त्वमपि यं कञ्चिदभिलाषं मयि कथयितुमर्हसीति सूचितम्।

अत्र निक्षेपवणिगिति निरङ्गं केवलरूपकमलङ्कारः, अर्थापत्तिः, तथा प्रथमे चतुर्थे च पादे छेकानुप्रास इत्येतेषां संसृष्टिः। किञ्च जिह्रेतीति ह्रीधातुना प्रक्रम्य त्रपत इति त्रपधातोः प्रयोगात् प्रकृतिविषयो भग्नप्रक्रमतादोषः ; स च "न कोऽपि जिह्रेति नरस्तिरश्चः" इति पाठेन समाधेयः। न च तत्पाठे पुनः कथितपदतादोष इति वाच्यम्, तयोर्द्वयप्रतिनिर्द्देश्यव्यतिरिक्तविषयत्वात्। प्रसादो गुणः, पाञ्चाली च रीतिः ॥४३॥

**বাঙ্গালা**—নলরাজার অন্তঃপুরে কোন্ রমণী আমাকে নূতন কামাদেশ গচ্ছিত রাখার বিশ্বাসভাজক না করে ? যে হেতু, তির্য্যক্‌জাতি কোন মনুষ্যকেই লজ্জা করে না ; সেই হেতু, কোন মনুষ্যও আবার তির্য্যক্ জাতিকে লজ্জা করে না ॥৪৩॥

**अन्वयः**—विरिञ्चि-नानानन-वाद-धौत-समाधि-शास्त्र-श्रुति-पूर्ण-कर्णः ( अहं ) योगात् अरन्ध्रे हृदि यां निरुन्धे, सा असती अपि वार्त्ता अन्यं न एति च ॥४४॥

अन्यथाप्यात्मनः पररहस्यप्रकाशसम्भावनां निरस्यति वार्त्तेति। किञ्चेति चार्थः। विरिञ्चेर्ब्रह्मणः यानि नाना अनेकानि चत्वारीत्यर्थः आननानि मुखानि तेषां वादैर्व्याख्यानवाक्यैः धौतं प्रक्षालितं परिष्कृतं सर्वथा विशदीकरणादस्माकमपि बोधयोग्यीकृतमित्यर्थः यत् समाधिशास्त्रं "अथ योगानुशासनम्" इत्यादि योगशास्त्रं तस्य श्रुत्या श्रवणेन पूर्णौ कर्णौ यस्य स तथोक्तः अहम्। साधारणाध्यापकानामैककमुखव्याख्यातान्यपि शास्त्राणि साधारणजिज्ञासूनामपि बोधगम्यानि भवन्ति ; अत्र तु योगशास्त्रस्य आदिकर्त्ता स्वयं ब्रह्मा अध्यापकः तस्य च चत्वारि मुखानि, अहञ्च स्वर्गीयो जिज्ञासुः ; तेन च योगशास्त्रस्य सर्वथा सम्यगवबोधो मम सञ्जात एवेति योगावलम्बनमपि मे सर्वथैव सुकरमिति भावः। योगात् "तदर्थमेकतत्त्वाभ्यासः" इति पातञ्जलशास्त्रानुसारेण मनसः स्थिरीकरणार्थमेकतत्त्वाभ्यासात् रागद्वेषनिवारणाद्युपायाच्च, अरन्ध्रे विक्षेपादिदोषरहिते निश्छिद्रे च, हृदि चित्ते गृहे च, यां वार्त्ताम् असतीञ्च, निरुन्धे आबध्नामि ; सा असती मिथ्यापि परिहासादिप्रयुक्ततया नितान्तमिथ्यात्वात् प्रकाशे अक्षतिकारिण्यपीत्यर्थः वार्त्ता यः कश्चित् वृत्तान्तः, अन्यत्र सत्यां स्त्रियां का कथा, असती कुलटा स्त्री अपि, अन्यं जनं पुरुषञ्च, न एति न प्राप्नोति अन्यजनस्य कर्णगोचरी न भवति, रमणाय पुरुषान्तरं गन्तुं न शक्नोति चेत्यर्थः, उभयत्रापि निरुद्धत्वादिति भावः। एतेन त्वया मन्निकटे या वार्त्ता वक्तव्या, सा कदापि नान्येन श्रोतव्येति द्योतितम्।

अत्र कार्य्यसाम्येन वार्त्तायां कुलटाव्यवहारसमारोपात् समासोक्तिरलङ्कारः, योगावलम्बनं प्रति द्वितीयार्द्धगतपदार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गं छेकानुप्रासश्चेत्येतेषां मिथो निरपेक्षतया संसृष्टिः। समासबाहुल्यादोजो गुणः, गौडी च रीतिः।

"असत्यं साध्वी विद्यमाने पृश्निः प्स्याहिते च सत्" इत्यमरः ॥४४॥

नलाश्रयेण त्रिदिवोपभोगं तवानवाप्यं लभते बतान्या ।
कुमुद्वतीवेन्दुपरिग्रहेण ज्योत्स्नोत्सवं दुर्लभमम्बुजिन्या (१) ॥४५॥
तन्नैषधानूढतया दुरापं शर्म त्वयास्मत्कृत-चाटु-जन्म ।
रसालवल्या मधुपानुविद्धं सौभाग्यमप्राप्तवसन्तयेव ॥४६॥

---

বাঙ্গালা—ব্রহ্মা চারিখানা মুখ দিয়া ব্যাখ্যা করিয়াছেন; তাহাতে যোগশাস্ত্র অত্যন্ত সহজ হইয়া গিয়াছিল; তাহা শ্রবণ করায় আমার কর্ণযুগল পূর্ণ হইয়া রহিয়াছে। সুতরাং আমি যোগাবলম্বনবশতঃ ছিদ্রবিহীন হৃদয়ে যাহা আবদ্ধ রাখি, সে বৃত্তান্ত মিথ্যা হইলেও অন্যের কর্ণগোচর হয় না ॥৪৪॥

অন্বয়:—কুমুদ্বতী ইন্দুপরিগ্রহেণ অম্বুজিন্যা দুর্লভং জ্যোৎস্নোৎসবম্ ইব, অন্যা নলাশ্রয়েণ তব অনবাপ্যং ত্রিদিবোপভোগ্যং লভতে বত ॥৪৫॥

নলার্থং সাক্ষাদুৎসুকয়তি নলেতি। হে দময়ন্তি! কুমুদ্বতী, ইন্দোশ্চন্দ্রস্য পরিগ্রহেণ ভর্তৃতয়া অঙ্গীকারেণ হেতুনা, অম্বুজিন্যা পদ্মিন্যা, দুর্লভং দুষ্প্রাপম্, অম্বুজিন্যা দিবসে জ্যোৎস্নায়াস্ত রাত্রৌ প্রকাশাদিতি ভাবঃ, জ্যোৎস্নোৎসবং জ্যোৎস্নানিবন্ধনস্বপ্রকাশরূপমানন্দম্ ইব, অন্যা ত্বদিতরা স্ত্রী, নলস্য আশ্রয়েণ ভর্তৃতয়া অবলম্বনেন হেতুনা, তব ত্বয়া অনবাপ্যং নলাশ্রয়াভাবাৎ অলভ্যম্, ত্রিদিবোপভোগং স্বর্গভোগম্ অপ্সরঃপ্রমোদ-নাদিসুখম্, লভতে প্রাপ্নোতি। বত খেদে। অযোগ্যা খল্বন্যা তাদৃশং সুখং লভতে ইত্যেবাস্মাকং খেদ ইত্যাশয়ঃ। এতেন ত্বং শীঘ্রমেব নলপরিগ্রহায় যতস্বেতি সূচিতম্।

অত্র শ্রৌতোপমালঙ্কারঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ।

তবেতি "বা কর্তরি কৃত্যে" ইতি কর্তরি ষষ্ঠী। খলর্থপ্রত্যয়স্য নিষ্ঠাদিত্বাৎ অম্বুজিন্যা ইত্যত্র "ন নিষ্ঠাদিষু" ইতি কর্তরি ষষ্ঠীনিষেধঃ ॥৪৫॥

বাঙ্গালা—কুমুদিনী যেমন চন্দ্রকে গ্রহণ করায়, পদ্মিনীর দুর্লভ জ্যোৎস্নোৎসব লাভ করে; অন্য স্ত্রীও তেমন নলকে আশ্রয় করায়, তোমার অপ্রাপ্য স্বর্গসুখ লাভ করিতেছে; ইহা দুঃখের বিষয় বটে ॥৪৫॥

অন্বয়:—তৎ অপ্রাপ্তবসন্তয়া রসালবল্ল্যা মধুপানুবিদ্ধং সৌভাগ্যম্ ইব, ত্বয়া নৈষধানূঢ়তয়া অস্মৎকৃত-চাটু-জন্ম শর্ম দুরাপম্ ॥৪৬॥

তদিতি। তৎ তস্মাৎ নলাশ্রয়েণৈব অস্মৎসেবাজনিতসুখস্য প্রাপ্যত্বাদিত্যর্থঃ, ন প্রাপ্তো বসন্তস্তদাখ্য ঋতুর্যয়া তয়া, রসালবল্ল্যা আম্রলতয়া, মধুপৈর্ভ্রমরৈঃ অনুবিদ্ধমুৎপাদিতম্, সৌভাগ্যং গুঞ্জনাদ্যনুভবসুখমিব, ত্বয়া নৈষধেন নলেন অনূঢ়তয়া অপরিণীততয়া হেতুনা, অস্মাভিঃ কৃতাৎ চাটুনঃ প্রিয়বাক্যাৎ জন্ম যস্য তৎ তথোক্তম্, শর্ম সুখম্, দুরাপং দুর্লভম্। অতো নৈষধো যথা ত্বাং বিবহতি, তথা যতস্বেতি ভাবঃ।

অত্র শ্রৌতোপমালঙ্কারঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৪৬॥

বাঙ্গালা—অতএব আমের লতা যেমন বসন্তকাল না পাইয়া ভ্রমরগুঞ্জনশ্রবণের সুখ পাইতে পারে না; তুমিও তেমন নলের সহিত বিবাহ না হওয়া পর্য্যন্ত আমাদের চাটুক্তিশ্রবণের সুখ পাইতে পারিবে না ॥৪৬॥

---

(১) ত্রিদিবোপভোগ্যম্। অম্বুজিন্যাঃ।

तस्यैव वा यास्यसि किं न हस्तं दृष्टं मनः केन विधेः प्रविश्य।
अजातपाणिग्रहणासि तावत् रूपस्वरूपातिशयाश्रयश्च ॥४७॥
निशा शशाङ्कं शिवया गिरीशं श्रिया हरिं योजयतः प्रतीतः।
विधेरपि स्वारसिकः प्रयासः परस्परं योग्यसमागमाय ॥४८॥

---

**अन्वयः**—वा तस्य हस्तं न किं यास्यसि एव (इति) विधेः मनः प्रविश्य केन दृष्टम्। (त्वं) तावत् अजातपाणिग्रहणा रूपस्वरूपातिशयाश्रयश्च असि ॥४७॥

नलप्राप्तिसम्भावनाप्रदर्शनेन दमयन्त्या नैराश्यं निरस्यति तस्यैवेति। वाशब्दः पक्षान्तरे। अथवा त्वं तस्य नलस्य हस्तं न किं यास्यस्येव तादृशशुभादृष्टाभावात् न किं गमिष्यस्येव, इति विधेर्ब्रह्मणः, मनः प्रविश्य, केन जनेन दृष्टम्, केन तदभिप्रायोऽवगतः, अपि तु न केनापीत्यर्थः। अथ तत्प्राप्तिसम्भावनापि कुत इत्याह त्वं तावत्, न जातं पाणिग्रहणं विवाहो यस्याः सा तथोक्ता। अतः कस्यापि हस्तगमनमद्यापि सम्भाव्यत इति भावः। ननु तथात्वेऽपि कथं नलस्यैव हस्तगमनसम्भावनेत्याह रूपस्य सौन्दर्य्यस्य स्वरूपेण स्वभावेनैव अलङ्कारादिकं विनापीत्यर्थः यः अतिशयः असाधारणोत्कर्षः तस्य आश्रयः आधारः, असि। अतः खल्वलौकिकसुन्दरस्य नलस्यैव हस्तगमनं सर्वथैव सम्भाव्यते योग्यत्वादित्यभिप्रायः।

अत्र कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः शेषचरणगतच्छेकानुप्रासेन संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः ॥४७॥

**বাঙ্গালা**—অথবা তুমি নলের হাতে কি যাইবেই না ইহা কোন্ ব্যক্তি বিধাতার মনের ভিতর প্রবেশ করিয়া দেখিয়াছে? তোমার (এখনও) বিবাহ হয় নাই, বিশেষত তুমি অসাধারণ রূপের আধার ॥৪৭॥

**अन्वयः**—निशा शशाङ्कं, शिवया गिरीशम्, श्रिया हरिं योजयतः विधेः अपि परस्परं योग्यसमागमाय स्वारसिकः प्रयासः प्रतीतः ॥४८॥

अथ योग्यत्वादपि दमयन्त्या नलप्राप्तिसम्भावनां द्योतयति निशेति। निशा रजन्या सह, शशाङ्कं चन्द्रम्, शिवया पार्वत्या सह, गिरीशं शिवम्, तथा श्रिया लक्ष्म्या सह, हरिं विष्णुम्, योजयतो दाम्पत्यसम्बन्धेन सम्मेलयतः, विधेर्ब्रह्मणोऽपि, परस्परं योग्ययोः स्त्रीपुंसयोः समागमाय सम्मेलनाय, स्वेन रसेन रागेण सम्भूत इति स्वारसिकः स्वेच्छाजात इत्यर्थः, प्रयासः प्रयत्नः, प्रतीतः तत्तद्दर्शनादस्माभिरवगतः। एतेन त्वं सर्वथैव नलस्य योग्यासि पूर्णेति सूचितम्।

अत्र निशाशशाङ्कादीनां परस्परानुरूपत्वेन श्लाघासूचनात् समम्, निशाशशाङ्कयोर्लिङ्गसाम्येन स्त्रीपुरुषव्यवहारसमारोपात् समासोक्तिः, योजयत इत्येकया क्रियया शशाङ्कादीनां धर्म्मतयाभिसम्बन्धात्तुल्ययोगिता च तत्तत्ता च विच्छित्तिः। ततश्च विधाता परस्परयोग्यसमागमार्थं प्रयत्नवान् इत्यस्य निशाशशाङ्कादियोजनादिति साधनेन साध्यस्य अनुमानादनुमानालङ्कार इत्येतेषामङ्गाङ्गिभावेन सङ्करः। प्रसादो गुणः, वैदर्भी च रीतिः ॥४८॥

**বাঙ্গালা**—রাত্রির সহিত চন্দ্রকে, পার্বতীর সহিত শিবকে এবং লক্ষ্মীর সহিত নারায়ণকে সম্মিলিত করিয়াছেন বলিয়া, বিধাতার ও, পরস্পর যোগ্য স্ত্রী পুরুষকে সম্মিলিত করিবার জন্য, স্বেচ্ছাপ্রবৃত্ত যত্ন আছে বলিয়া আমরা বুঝিতে পারি ॥৪৮॥

वेलातिग-स्त्रैण-गुणाब्धि-वेणी न योगयोग्यासि नलेतरेण।
सन्दीर्य्यते दर्भगुणेन मल्लीमाला न मृद्वी भृशकर्कशेन ॥४९॥
विधिं वधूसृष्टिमपृच्छमेव तद्यानयुग्यो नलकेलियोग्याम्।
त्वन्नामवर्णा इव कर्णपीता मयास्य संक्रीडति चक्रचक्रे (१) ॥५०॥

---

अन्वयः—वेलातिग-स्त्रैण गुणाब्धि-वेणी (त्वं) नलेतरेण योगयोग्या न असि। मृद्वी मल्लीमाला भृशकर्कशेन दर्भगुणेन न सन्दीर्य्यते ॥४९॥

दमयन्त्याः पुरुषान्तरयोगासम्भावनां निरस्यति वेलेति। हे दमयन्ति! वेलां तीरमतिक्रम्य गच्छतीति वेलातिगः यः स्त्रैणगुणाब्धिः स्त्रीसम्बन्धिसौन्दर्य्यादिगुणसमुद्रः तस्य वेणी प्रवाहस्वरूपा असाधारणसुन्दरी त्वमित्यर्थः, नलेतरेण नलभिन्नेन पुरुषेण सह योगे दाम्पत्यसम्बन्धेन मेलने योग्या न असि; नलस्यैव तवानुरूपसौन्दर्य्यादिति भावः। तथा च मृद्वी कोमला, मल्लीमाला मल्लिकाकुसुमस्रक्, भृशकर्कशेन अत्यन्तकठिनेन, दर्भगुणेन कुशसूत्रेण, न सन्दीर्य्यते केनापि न ग्रथ्यते। अतस्त्वं सर्वथा नलस्यैव योग्येत्याशयः।

अत्र तादृशवेण्युत्सरूपेति निरङ्गं केवलरूपकं दृष्टान्तश्च, अनयोरङ्गाङ्गिभावेन सङ्करः। प्रसादो गुणः, वैदर्भी च रीतिः।

"वेणी सेतुप्रवाहयोः। देवताडे केशबन्धे" इति हेमचन्द्रः।

स्त्रैणेति। स्त्रीणामयमिति स्त्रीशब्दात् "स्त्रीपुंसाभ्यां नञ्स्नञौ" इति नञ्प्रत्ययः। मृद्वीति "वोतो गुणवचनात्—" इत्यादिना ङीप्रत्ययः। सन्दीर्य्यत इति "दृ विदारणे" इत्यस्यैव प्रयोगः धातूनामनेकार्थत्वात् ॥४९॥

বাঙ্গালা—হে দময়ন্তি! তীরোচ্ছলিত স্ত্রীলোকসম্বন্ধী গুণসমুদ্রের প্রবাহস্বরূপা তুমি; সুতরাং তুমি, নলভিন্ন অন্য পুরুষের সহিত সম্মেলনের যোগ্য নহ। কারণ, কেহই অত্যন্ত কঠিন কুশসূত্রদ্বারা কোমল মল্লিকাকুসুমের মালা গাঁথে না ॥৪৯॥

अन्वयः—तद्यानयुग्यः (अहं) विधिं नलकेलियोग्यां वधूसृष्टिम् अपृच्छमेव। (ततः) अस्य चक्रचक्रे संक्रीडति (सति) मया त्वन्नामवर्णाः इव कर्णपीताः ॥५०॥

नन्वेवमनुमानशब्दप्रमाणादिभिः कष्टकल्पनैः किं प्रयोजनम्, विधेर्यानवाहको भवान्, ततश्च का नाम नलस्य वधूर्भवेदिति साक्षादेव विधिं पृष्ट्वा सर्वं ज्ञातुमर्हतीत्याह विधिमिति। तस्य विधेर्यानस्य रथस्य युग्यो वाहकः अहम्, विधिं ब्रह्माणम् नलस्य केली क्रीडायां योग्यामनुरूपाम्, वधूसृष्टिं "क्तिन्नभिहितौ भावे द्रव्यवत् प्रकाशते" इति न्यायात् सृष्टां वधूम्, अपृच्छमेव का नाम नलस्य वधूर्भवेदिति जिज्ञासितवानेव। प्रश्नः प्राक्तन एवेत्यादिवत् ध्यायोगव्यवच्छेदे एवकारः। ततश्च अस्य विधेः, चक्रचक्रे रथाङ्गसमूहे, संक्रीडति ध्वनयति सम्यक् शब्दायमाने सति, मया तव दमयन्त्या नाम्नो वर्णा अक्षराणीव, कर्णाभ्यां पीताः सादरं श्रुताः! इवशब्देन अस्पष्टं श्रवणं सूचितम्। श्रवणस्य अस्पष्टत्वञ्च रथचक्रशब्देन विध्युच्चारित-दमयन्तीतिशब्दस्य प्रायेण तिरोधानादित्यवधेयम्।

अत्र अस्पष्टं श्रवणं प्रति चक्रचक्रसंक्रीडनपदार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गं, उत्प्रेक्षानुप्राणित्वादनयोः सङ्करः। प्रसादो गुणः, वैदर्भी च रीतिः।

"चक्रः कोकि नपुंसि स्याद् सैन्यराष्ट्रयोः। ग्रामजाले कुम्भकारभाण्डे राष्ट्रे च दृश्यते।" इति विश्वप्रकाशः।

---

(१) चक्रिचक्रे।

अन्येन पत्या त्वयि योजितायां विज्ञत्वकीर्त्या गतजन्मनो वा ।
जनापवादार्णवमुत्तरीतुं विधा विधातुः कतमा तरिः स्यात् ॥५१॥
आस्तां तदप्रस्तुतचिन्तयालं मयासि तन्वि ! श्रमितातिवेलम् ।
सोऽहं तदागः परिमार्ष्टुकामः तवेप्सितं किं विदधेऽभिधेहि ॥५२॥

---

युग्य इति "युग्यं पत्रं" इति वाहनार्थे निपातः । संकीर्त्तयतीति कृतनामार्थत्वात् "सत्योऽस्तुगने" इति नामनीवदम् ॥५०॥

**বাঙ্গালা**—আমি ব্রহ্মার রথবাহক ; সুতরাং ব্রহ্মা নলের বিহারের উপযুক্ত করিয়া কোন্ রমণীকে সৃষ্টি করিয়াছেন, তাহা আমি তাঁহাকে জিজ্ঞাসা করিয়াছিলাম ; তাহার পর, উঁহার রথের চক্রগুলি শব্দ করিতে লাগিলে, আমি যেন তোমার নামের অক্ষরগুলিই কাণে শুনিতে পাইয়াছিলাম ॥৫০॥

**अन्वयः**—वा त्वयि अन्येन पत्या योजितायां (सत्याम्), विज्ञत्वकीर्त्या गतजन्मनः विधातुः जनापवादार्णवम् उत्तरीतुं कतमा विधा तरिः स्यात् ? ॥५१॥

ननु त्वया मन्नामवर्णा अस्मदीयेव श्रुता इत्यन्योऽपि मे पतिर्भविष्यतीत्याह अन्येनेति । वाशब्दः पक्षान्तरे । पक्षान्तरञ्च अन्यनामोच्चारणसम्भवेन अन्येन पत्या सह तव योजनम् । त्वयि अन्येन नलभिन्नेन पत्या सह, योजितायां विवाहघटनेन सम्मेलितायां सत्याम्, विज्ञत्वकीर्त्या 'विधाता योग्येनैव सह योग्यां योजयति' इति सुविवेचकत्वयशसा, गतमतीतप्रायं जन्म जीवनं यस्य तस्य, विधातुर्ब्रह्मणः, जनापवाद एव 'विधाता दमयन्तीमयोग्येन सह योजितवानित्ययं नितरामविवेचक एव' इति लोकनिन्दैव अर्णवः अतिविस्तृतत्वात् समुद्रस्तम्, उत्तरीतुम् उत्तीर्णो भवितुम्, कतमा विधा प्रकार उपाय इत्यर्थः, तरिर्नौका तत्स्वरूपा, स्यात्, अपि तु न कापीत्यर्थः । अतस्तादृशनिन्दाभयादेव विधाता नलेनैव सह त्वां योजयिष्यतीति भावः ।

अत्र तत्र जनापवादे अर्णवत्वारोपो विधायां तरित्वारोपे निमित्तमिति परम्परितं रूपकमलङ्कारश्छेकानुप्रासश्चेत्युभयोः संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"विधा गजाशने ऋद्धौ प्रकारे वेतने विधौ" इति मेदिनी ।

उत्तरीतुमिति "वृतो वाऽनिटोऽपि वा दीर्घः—" इत्यादिना दीर्घः ॥५१॥

**বাঙ্গালা**—সুবিবেচনার যশে যাঁহার জীবন প্রায় গিয়াছে, সেই বিধাতা যদি তোমাকে অন্য পতির সঙ্গে সম্মিলিত করেন ; তাহা হইলে, লোকাপবাদরূপ সমুদ্র পার হইতে তাঁহার কোন্ উপায়, নৌকাস্বরূপ হইবে ? ॥৫১॥

**अन्वयः**—तत् आस्ताम्, अप्रस्तुतचिन्तया अलम्, (हे) तन्वि ! मया (त्वम्) अतिवेलं श्रमिता असि । सः अहं तत् आगः परिमार्ष्टुकामः (सन्) तव ईप्सितं किं विदधे, (तत्) अभिधेहि ॥५२॥

दमयन्त्या अभिप्रायं ज्ञातुमुपसंहरन्नाह आस्तामिति । तत् तव विवाहविषयकालोचनम्, आस्तां विरतं भवतु । कुत इत्याह अप्रस्तुतस्य अप्राकरणिकस्य तव विवाहविषयस्य चिन्तया विचारेण अलं व्यर्थं तदालोचनमित्यर्थः, विधातृविधेयत्वादिति भावः । हे तन्वि ! कृशाङ्गि ! मया त्वम् अतिवेलमतिमात्रम्, श्रमिता अतिदूरागमनात् परिश्रमं प्रापिता असि । स तव परिश्रमहेतुः अहं, तत् श्रमजननिबन्धनम्, आगः अपराधम्, परिमार्ष्टुमपनेतुं कामो यस्य स तादृशः सन् तव ईप्सितमभीष्टं किं विदधे करोमि, तत् अभिधेहि ब्रूहि ।

**इतीरयित्वा विरराम पत्त्री स राजपुत्रीहृदयं बुभुत्सुः।**
**ह्रदे गभीरे हृदि चावगाढे शंसन्ति कार्य्यावतरं हि सन्तः॥५३॥**
**किञ्चित्तिरश्चीनविलोलमौलिर्विचिन्त्य वाच्यं मनसा मुहूर्त्तम्।**
**पतत्त्रिणं सा पृथिवीन्द्रपुत्री जगाद वक्त्रेण तृणीकृतेन्दुः॥५४॥**

---

अत्र प्रथमार्द्धे छेकानुप्रासः अन्त्यानुप्रासश्च, परार्द्धे च वृत्त्यनुप्रास इत्येतेषां संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः।

"अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम्" इत्यमरः।

परिमार्ष्टुकाम इति "तुमः काममनसोः" इति तुमो मकारलोपः॥५२॥

বাঙ্গালা—সে আলোচনা থাক; কেন না, অপ্রস্তাবিত বিষয়ের চিন্তা করা নিষ্প্রয়োজন। হে কৃশাঙ্গি! আমি তোমাকে অত্যন্ত পরিশ্রান্ত করিয়াছি; অতএব সেই আমি সেই অপরাধ দূর করিতে ইচ্ছা করিয়া, তোমার কোন্ অভীষ্ট সম্পাদন করিব, তাহা বল॥৫২॥

**অন্বয়ঃ**—राजपुत्रीहृदयं बुभुत्सुः सः पत्त्री इति ईरयित्वा विरराम। हि गभीरे ह्रदे हृदि च अवगाढे (सति) सन्तः कार्य्यावतरं शंसन्ति॥५३॥

इतीति। राजपुत्र्या दमयन्त्या हृदयं बुभुत्सुः नलं प्रति अनुरक्तामनुरक्ता वेति बोद्धुमिच्छुः, स पत्त्री पक्षी हंसः, इति पूर्वोक्तरूपम्, ईरयित्वा उक्त्वा, विरराम मौनी बभूव। अथ नलं प्रति त्वमनुरक्ता न वेति स्पष्टं कथं न पृष्टवानित्याह हि यस्मात्, गभीरे अतीवखाते अतीवगूढाभिप्राये च, ह्रदे बृहज्जलाशये, हृदि मनसि च, अवगाढे आलोडिते दण्डघट्टनादिना सुपरीक्षिते व्यञ्जकवचनादिना अवगताभिप्राये च सतीत्यर्थः, सन्तः साधवः, कार्य्याय स्नानादिकार्य्यकरणाय अवतरम् अवतरणम्, शंसन्ति कर्त्तव्यतया ब्रुवन्ति, अन्यथा जलजन्तुप्रद्रवेण अनिष्टं सम्भाव्यत इति भावः; अन्यत्र तु कार्य्यस्य कर्त्तव्यविषयस्य अवतरं प्रस्तावमुत्थापनमिति यावत् शंसन्ति कर्त्तव्यतया ब्रुवन्ति; अन्यथा श्रोतुरैकमत्यसम्भवेन प्रस्तावयितुर्ल्लाघवमेव सारं स्यादित्याशयः। अतो दमयन्त्या वैमत्यस्यापि सम्भावनया स्पष्टं नलानुरागं न पृष्टवानिति समुदायाभिप्रायः।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, अप्रस्तुतस्य ह्रदस्य प्रस्तुतस्य च हृदः अवगाढ इत्येकया क्रिययाभिसम्बन्धाद्दीपकञ्चानयोरेकाश्रयानुप्रवेशरूपः सङ्करः; सोऽपि च छेकानुप्रासेन संसृज्यते। माधुर्य्यं गुणः, वैदर्भी च रीतिः।

अवतरमिति अवपूर्वस्य तरतेः "ऋदोरप्—" इत्यादिना अप्॥५३॥

বাঙ্গালা—সেই পক্ষী হংস, দময়ন্তীর মন বুঝিতে ইচ্ছা করিয়া, পূর্বোক্তরূপ বলিয়া বিরত হইল। কারণ পণ্ডিতগণ বলিয়া থাকেন যে, আলোড়ন করিবার পরেই যেমন গভীর হ্রদে স্নানাদি করিবার জন্য অবতরণ করা উচিত; সেইরূপ পরের মনোভাব বুঝিবার পরেই তাহার নিকট কর্তব্য বিষয়ের অবতারণা করা উচিত॥৫৩॥

**অন্বয়ঃ**—वक्त्रेण तृणीकृतेन्दुः सा पृथिवीन्द्रपुत्री किञ्चित्तिरश्चीन-विलोल-मौलिः (सती) मनसा मुहूर्त्तं वाच्यं विचिन्त्य पतत्त्रिणं जगाद॥५४॥

किञ्चिदिति। वक्त्रेण मुखेन, तृणीकृतः स्वभावसौन्दर्य्येण निष्कलङ्कत्वेन च तृणवल्लघूकृत इन्दुश्चन्द्रो

**धिक् चापले वत्सिम-वत्सलत्वं यत्प्रेरणादुत्तरलीभवन्त्या ।**
**समीरसङ्गादिव नीरभङ्ग्या मया तटस्थस्त्वमुपद्रुतोऽसि ॥५५॥**
**आदर्शतां स्वच्छतया प्रयासि सतां स तावत् खलु दर्शनीयः ।**
**आगः पुरस्कुर्वति सागसं मां यस्यात्मनीदं प्रतिबिम्बितं ते ॥५६॥**

---

यया सा, सा प्रकृता, पृथिवीन्द्रपुत्री राजकन्या दमयन्ती, किञ्चिन्तिरश्चीन ईषद्वक्रः विलोलचञ्चलश्च मौलिमस्तकं यस्याः सा तादृशी सती, मनसा मुहूर्तं कियन्तं कालं यावत्, वाच्यम् आत्मनो वक्तव्यविषयम्, विचिन्त्य विभाव्य पतत्त्रिणं पक्षिणं हंसम्, जगाद उवाच ।

अत्र इन्दूपेक्षया वक्त्रस्याधिक्यवर्णनात् व्यतिरेकालङ्कारः, पूर्वार्द्धे छेकानुप्रासः, तृतीयपादे च छेकानुप्रास इति संसृष्टिः । अनुरागोदयेन मुखस्य प्रफुल्लताद्योतनार्थं वक्त्रेण तृणीकृतेन्दुरिति विशेषणमिति नापुष्टार्थत्वदोषः । किन्तु जगादेत्यनेन वाक्यसमाप्तावपि पुनः पृथिवीन्द्रपुत्रीत्यस्य विशेषणतया तृणीकृतेन्दुरिति पदोपादानात् समाप्तपुनरात्तत्वादोषः ; स च पराद्धपादद्वयस्य पाठपौर्वापर्यविपर्ययेण समाधेयः । माधुर्यं गुणः, वैदर्भी च रीतिः ॥५४॥

বাঙ্গালা—যিনি আপনার মুখ দ্বারা চন্দ্রকে তৃণের ন্যায় তুচ্ছ করিয়া রাখিয়াছিলেন, সেই রাজকন্যা দময়ন্তী; মস্তকটীকে একটু বক্র ও চঞ্চল করিয়া এবং মনে মনে কিছু কাল বক্তব্য বিষয়ের চিন্তা করিয়া, পক্ষীকে বলিতে লাগিলেন ॥৫৪॥

**अन्वयः**—चापले वत्सिम-वत्सलत्वं धिक् ; यत्प्रेरणात् उत्तरलीभवन्त्या मया समीरसङ्गात् नीरभङ्ग्या इव तटस्थः त्वम् उपद्रुतः असि ॥५५॥

किं जगादेत्याह धिगिति । चापले चञ्चलतायाम्, वत्सिम्ना बालत्वेन वत्सलत्वं स्नेहवत्त्वं धिक्, बालत्वनिबन्धनं त्वद्धारणरूपचाञ्चल्यविषयकं ममाग्रहं निन्दामीत्यर्थः । कथमेतदित्याह यस्य वत्सिमवत्सलत्वस्य प्रेरणात् प्रवर्त्तनात्, उत्तरलीभवन्त्या चञ्चलीभवन्त्या मया, समीरसङ्गात् वायुसंसर्गात्, उत्तरलीभवन्त्या, नीरभङ्ग्या क्षुद्रजलतरङ्गेण इव, तटस्थः उदासीनः जलसमीपतीरस्थश्च, त्वम्, उपद्रुतो व्यथीकृतः असि । यथा च हंसजातीयो भवान् यदा चञ्चुपुटेन मत्स्यधरणाय निस्पन्दभावेन जलसमीपतीरदेशे तिष्ठति, तदा च यथा वायुजनितजलतरङ्ग आगत्य उपद्रुतः क्रियते ; तथा बालत्वनिबन्धनचाञ्चल्येन पश्चाद्गमन्त्या मया उदासीनो भवान् उपद्रुतः कृत इति सरलार्थो भावार्थश्च ।

अत्र श्रौतोपमालङ्कारः, वत्सिमवत्सलत्वस्य धिक्कारं प्रति यत्प्रेरणादित्यादिपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गमित्यनयोरङ्गाङ्गिभावेन सङ्करः ; सोऽपि च छेकानुप्रासेन संसृज्यते । माधुर्यं गुणः, वैदर्भी च रीतिः ।

"तटस्थः स्यादुदासीने तीरस्थनिकटस्थयोः" इति बलः ।

वत्सस्य बालस्य भाव इति वत्सिमा "पृथ्वादिभ्य इमन् भावे" इतीमन्प्रत्ययः ॥५५॥

বাঙ্গালা—তোমাকে ধরিবার জন্য বালত্ববশতঃ আমার যে আগ্রহ জন্মিয়াছিল, আমি তাহার নিন্দা করি। কারণ, যখন তুমি জলের নিকটে তীরে থাক, তখন বায়ুসঞ্চালিত জলতরঙ্গ আসিয়া যেমন তোমার উপদ্রব করে ; সেই রূপ তুমি উদাসীন ছিলে, কিন্তু আমি, যে বালত্বনিবন্ধন চাঞ্চল্যের প্রেরণায় চঞ্চল হইয়া, তোমার পিছনে লাগিয়া তোমার উপদ্রব করিয়াছি ॥৫৫॥

**अनार्य्यमप्याचरितं कुमार्य्या भवान् मम क्षाम्यतु सौम्य! तावत्।**
**हंसोऽपि देवांशतयाभिवन्द्यः (१) श्रीवत्सलक्ष्मेव हि मत्स्यमूर्त्तिः॥५७॥**

---

**अन्वयः**—दर्शनीयः खलु सः (त्वं) स्वच्छतया तावत् सताम् आदर्शतां प्रयासि। सागसं मां पुरस्कुर्वन्ति यस्य ते आत्मनि इदम् आगः प्रतिविम्बितम्॥५६॥

"सोऽहं तदागः परिमार्ष्टुकामः" इत्यनेन हंसो यत् स्वमपराधमुक्तवान्, दमयन्ती तस्यात्मनि प्रवर्त्तनेन हंसमनुनयति आदर्शतामिति। दर्शनीयः स्वर्णमयत्वात् सुदृश्याकृतिः माङ्गलिकत्वात् द्रष्टुमुचितश्च; खलु-शब्दोऽनुनये, स त्वम्, स्वच्छतया अकपटचित्तत्वात् मणिकाचादिनिर्म्मितत्वाच्च निर्म्मलतया हेतुना, तावत् सर्व्वेषामेव, सतां साधूनाम्, आदर्शतां दृष्टान्ततां दर्पणताञ्च, प्रयासि प्राप्नोषि। कथमेतदित्याह सागसं प्रयोजनं विना पश्चाद्गमनेन उपद्रुतत्वात् सापराधाम्, मां दमयन्तीम्, पुरस्कुर्वन्ति सौन्दर्य्यादिना प्रशंसति सम्मुखे स्थापयति च, यस्य ते तव, आत्मनि चित्ते स्वरूपे च, इदम् मदीयम्, आगः अपराधः, प्रतिविम्बितं सञ्चरितं प्रतिफलितञ्च। यथा च कृष्णचित्रादिचिह्नितं वस्तु पुरस्कुर्व्वति निर्म्मले दर्पणे यथा तत्प्रतिविम्बं पतति; तथा सापराधां मां पुरस्कुर्व्वति चित्तपटे तवात्मन मदीयः सोऽपराधः सञ्चरितः; परकीयमपराधमात्मीयत्वेन मत्वा तत्प्रशंसाकरणस्य सतां स्वभावत्वादिति भावः।

अत्र दृष्टान्तदर्पणयोर्भेदेऽपि आदर्शपदश्लेषेणाभेदाध्यवसायादतिशयोक्तिः, पूर्व्वार्द्धं प्रति परार्द्धवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गञ्च, अनयोरङ्गाङ्गिभावेन सङ्करः। प्रसादो गुणः, वैदर्भी च रीतिः॥५६॥

বাঙ্গালা— সুদৃশ্যমূর্ত্তি সেই তুমি, নিজের নির্ম্মলতাবশতঃ সকল সাধুজনের আদর্শস্থান লাভ করিয়াছ। কেন না, বস্তুবিকপক্ষে আমিই অপরাধিনী; অথচ আমাকে তুমি সম্মুখে রাখিয়া প্রশংসা করিতেছ; তাহাতেই যে তোমার আত্মাতে আমার সেই অপরাধ প্রতিবিম্বিত হইয়াছে॥৫৬॥

**অন্বয়ঃ**—(হে) সৌম্য! भवान् कुमार्य्याः मम अनार्य्यम् अपि आचरितं तावत् क्षाम्यतु। हंसः अपि (भवान्) देवांशतया मत्स्यमूर्त्तिः श्रीवत्सलक्ष्मा इव अभिवन्द्यः हि॥५७॥

अथ प्रथमं तावद्भवान् मम तमपराधं क्षमताम्; पश्चादीप्सितं विधास्यतीत्याह अनार्य्यमिति। हे सौम्य! स्वर्णमयत्वात् सुन्दर! भवान्, कुमार्य्याः अविवाहितत्वेन बालिकायाः मम, अनार्य्यमपि अनार्य्यजनयोग्यमपि अनुचितमपीत्यर्थः, आचरितं पश्चात् पश्चाद्धावनेन उपद्रवजननरूपमाचरणं तज्जनितमपराधमिति तात्पर्य्यम्, तावत् प्रथमम्, क्षाम्यतु सहताम्। पश्चादीप्सितं विधास्यतीति भावः। ननु राजकन्या त्वं पक्षिणं मां कथं क्षमां प्रार्थयसीत्याह हंसोऽपि भवान्, देवांशतया हेतुना, "यद्यद्विभूतिमत् सत्त्वं श्रीमदूर्ज्जितमेव वा" इत्यादिगीतोक्तेः श्रीमत्त्वादित्याशयः; मत्स्यमूर्त्तिर्मत्स्यावतारः, श्रीवत्सो वक्षोगतलोमावर्त्तः लक्ष्म चिह्नं यस्य स श्रीवत्सलक्ष्मा नारायणः स इव, अभिवन्द्यो हि पूजनीय एव। पूजनीयं प्रति च क्षमाप्रार्थना युज्यत एवेति भावः।

अत्र पूर्व्ववाक्यार्थं प्रति परवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गं श्रौतीपमा चेत्यनयोरङ्गाङ्गिभावेनैषां सङ्करः। प्रसादो गुणः, वैदर्भी च रीतिः।

"वक्षःस्थले रोमावर्त्तविशेषः श्रीवत्सः" इत्यमरटीकायां रघुनाथः॥५७॥

---

(१) देवांशतयाभिवन्द्यः।

मत्प्रीतिमाधित्ससि कां त्वदीक्षामुदं मदक्ष्णोरपि यातिशेताम्।
निजामृतैर्लोचनसेचनाद्वा पृथक् किमिन्दुः सृजति प्रजानाम्॥५८॥
मनस्तु यं नोज्झति जातु, यातु मनोरथः कण्ठपथं कथं सः।
का नाम बाला द्विजराजपाणि-ग्रहाभिलाषं कथयेदलज्जा॥५९॥

---

বাঙ্গালা—হে সুন্দর! আমি কুমারী; সুতরাং আমার আচরণ অনুচিত হইলেও, তাহা তুমি ক্ষমা কর। কেন না, তুমি হংস হইলেও দেবতার অংশ বলিয়া, মৎস্যমূর্ত্তি নারায়ণের ন্যায় পূজনীয় ॥৫৭॥

**अन्वयः**—(त्वं) कां मत्प्रीतिम् आधित्ससि, या मदक्ष्णोः त्वदीक्षामुदम् अपि अतिशेताम्। इन्दुः निजामृतैः प्रजानां लोचनसेचनात् पृथक् किं वा सृजति ॥५८॥

"तवेप्सितं किं विदधेऽभिधेहि" इत्यनेन आनन्दकरं कार्य्यमेवोक्तं तत्राह मत्प्रीतिमिति। हे हंस। त्वं कां नाम मत्प्रीतिं ममानन्दम्, आधित्ससि आधातुं कर्त्तुमिच्छसि? या प्रीतिः, मदक्ष्णोर्मम नयनयोः, त्वदीक्षामुदमपि त्वद्दर्शनजनितानन्दमपि, अतिशेताम् अतिक्रामतु। तथा च त्वया दर्शनदानेनैव यावानानन्दो जनितः तावानानन्द एव जगत्यामन्यत्र नास्तीति तदधिकानन्दजननेच्छा निष्फलैवेति भावः। तथाहि इन्दुश्चन्द्रः, निजामृतैः स्वकीयसुधाभिः, प्रजानां जनानाम्, लोचनसेचनात् नयनसेकात् लोचनसेचनजनितानन्दादित्यर्थः, पृथक् अन्यत् किं वा सृजति कं वा आनन्दमुत्पादयति, अपि तु किमपि नेत्यर्थः। तथा च चन्द्रो यथा स्वकीयसुधामयकिरण-वर्षैर्जनानां नयनानन्दं जनयन् आह्लादको जायते; तथा त्वमपि दर्शनदानेनैव ममानन्दं जनयन् आह्लादको जात इत्यन्यदीप्सितं न प्रार्थयामीत्याशयः।

अतएवात्र दृष्टान्तोऽलङ्कारश्छेकानुप्रासेन संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः ॥५८॥

বাঙ্গালা—হে হংস! তুমি আমার এমন কোন্ আনন্দ জন্মাইতে ইচ্ছা করিতেছ; যাহা আমার নয়নযুগলের পক্ষে তোমার দর্শনজনিত আনন্দকেও অতিক্রম করিতে পারে। দেখ,—চন্দ্র নিজের অমৃতময় কিরণ দ্বারা লোকের নয়নসেচন ব্যতীত আর কি করিয়া থাকেন? ॥৫৮॥

**अन्वयः**—मनः तु जातु यं न उज्झति, सः मनोरथः कथं कण्ठपथं यातु। अलज्जा का नाम बाला द्विजराजपाणिग्रहाभिलाषं कथयेत् ॥५९॥

अथ विषयान्तरवक्तृतां परिहाय प्रकृतमात्मीयमीप्सितं तावदभिधित्सुराह मन इति। तुशब्दो भिन्नक्रमे। तथा च किन्तु मनः कर्त्तृ, जातु कदाचिदपि, यं मनोरथम्, न उज्झति न त्यजति आत्मन्येवावरुध्य रक्षतीत्यर्थः; सः मनोरथः अभिलाषः, कथं केन प्रकारेण, कण्ठपथं वाक्यनिर्गमनमार्गम्, यातु गच्छतु, अपितु लज्जया व्याघातात् कथमपि नेत्यर्थः। तथाहि अलज्जा का नाम बाला भूतलगता बालिका स्त्री, द्विजराजस्य ऊर्द्ध्वस्थितस्य चन्द्रस्य पाणिना हस्तेन यो ग्रहो ग्रहणं धारणं तस्य अभिलाषम्, कथयेत् मुखेन वदेत्? अपि तु कापि नेत्यर्थः। तथा च भूतलस्थिता बालिका स्वहस्तेनैव गगनस्थस्य चन्द्रस्य धारणेच्छां यदि कथयेत्, तदा तत्कार्य्यस्य सर्वथैव सिद्ध्यसम्भवेन यथा तस्या निर्लज्जता प्रकाशते; तथैव मन्मनोरथस्य सर्वथैव सिद्ध्यसम्भवेन तत्कथने केवलं मम निर्लज्जतैव प्रकाशेत। अतस्तं न वक्तुमर्हामीति भावः।

अतएवात्र समानधर्म्मयोरुभयोर्बिम्बप्रतिबिम्बभावात् दृष्टान्तोऽलङ्कारः अर्थापत्तिश्चेयम्, प्रथमे पादे वृत्त्यनुप्रासः, द्वितीये च वृत्त्यनुप्रास इति संसृष्टिः। बालापदं तस्या नितान्ततुच्छतया तत्कथनसम्भवप्रदर्शनार्थम्। अतो नाविशेषे विशेष्याव्यदोषः।

वाचं तदीयां परिपीय मृद्वीं मृद्वीकया तुल्यरसां स हंसः।
तत्याज तोषं परपुष्ट-घोषे (१) घृणाञ्च वीणाक्वणिते वितेने ॥६०॥

शब्दशक्तिमूलो वस्तुध्वनिस्तावत्—तु किन्तु, मनः कर्त्तृ, जातु कदाचिदपि, यं मनोरथविषयीभूतं नलम्, न उज्झति प्रियतमत्वात् न परित्यजति; स मनोरथो मनोरथविषयीभूतो नलः, कथं केन प्रकारेण, कण्ठपथं 'नल एव मे पतिर्भवतु,' इत्येवंरूपेण वाक्पदवीम्, यातु गच्छतु, अपि तु कथमपि नेत्यर्थः, तथा च नल एव मे पतिर्भवतु इत्येवमिच्छायां सत्यामपि लज्जावशात् तां न वक्तुमर्हामीति भावः। तथाहि हे द्विज! पक्षिन्! हंस! अलज्जा का नाम बाला अन्यापि कुमारी, राज्ञा सह पाणिग्रहाभिलाषं विवाहेच्छां कथयेत्, अपि तु लज्जावशात् कापि नेत्यर्थः। तेन अन्या कुमारी यथा लज्जावशात् राजपाणिग्रहाभिलाषं कथयितुं नार्हति, अहमपि तथैव लज्जावशादेव नलराजपाणिग्रहाभिलाषं कथयितुं नार्हामि; अथ च नलराजपाणिग्रहाभिलाषो मम वर्त्तत एवेति। अतएव वक्ष्यति "नृपेण पाणिग्रहमस्य हेति" इति। अथवा हे द्विजराज! पक्षिश्रेष्ठ! पाणिग्रहाभिलाषं सामान्यतः एवात्मनो विवाहेच्छामित्यर्थः। इत्थञ्च नलं प्रत्यनुरागसूचनात् पूर्वरागरूपो विप्रलम्भशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः।

"कदाचित् जातु" "दन्तविप्राण्डजा द्विजाः" इत्यमरः।

यात्विति "विध्यादिषु सप्तमी च" इति सम्भावनायां पञ्चमी ॥५९॥

বাঙ্গালা—কিন্তু মন কোন সময়েই যাহাকে পরিত্যাগ করে না; সেই অভিলাষ কি করিয়া কণ্ঠপথে যাইবে? দেখ—কোন্ বালিকা হস্ত দ্বারা চন্দ্রকে ধরিবার ইচ্ছা (মুখে) বলিয়া থাকে?॥৫৯॥

**अन्वयः**—सः हंसः मृद्वीकया तुल्यरसां मृद्वीं तदीयां वाचं परिपीय परपुष्ट-घोषे तोषं तत्याज, वीणाक्वणिते च घृणां वितेने ॥६०॥

वाचमिति। स हंसः, मृद्वीकया द्राक्षया तुल्यौ रसौ माधुर्यं यस्यास्ताम्, तथा मृद्वीं कोमलाम्, तदीयां दमयन्तीसम्बन्धिनीम्, वाचमुक्तरूपां वाणीम्, परिपीय सादरं श्रुत्वा, परपुष्टघोषे कोकिलरवे, तोषं चिरकालागतमानन्दम्, तत्याज तथा वीणायाः क्वणिते शब्दे च, घृणां कुत्साम्, वितेने विस्तारेण चकार; तदुभयापेक्षयैव दमयन्तीवाचो माधुर्यातिशयादिति भावः।

अत्र मृद्वीकारसो रसनेन्द्रियग्राह्यः वाक्यरसस्तु श्रवणेन्द्रियग्राह्य इत्युभयोर्भेदेऽपि रसशब्दश्लेषाभेदाध्यवसायादतिशयोक्तिः, आर्थोपमा, तोषत्याग-घृणाविस्तारयोरसम्बन्धेऽपि तत्सम्बन्धाभिधानात् पुनरतिशयोक्तिद्वयम्, छेकानुप्रासो वृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः। द्वितीयातिशयोक्तिद्वयेन च कोकिलकलरव-वीणाक्वणनापेक्षया दमयन्तीकण्ठस्वरस्य माधुर्याधिक्यद्योतनात् व्यतिरेकालङ्कारो व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः। तथा तत्याजेति परस्मैपदान्तपदेन प्रक्रम्य वितेने इति आत्मनेपदान्तपदाभिधानात् भग्नप्रक्रमतादोषः; स च वितेने इत्यत्र ततान इति पाठेनैव समाधेयः। प्रसादो गुणः, वैदर्भी च रीतिः।

"मृद्वीका गोस्तनी द्राक्षा" इत्यमरः।

मृद्वीमिति "वोतो गुणवचनात्" इति ङीप् दुमृद्वादीप्रत्ययः ॥६०॥

বাঙ্গালা—সেই হংস, কিস্‌মিসের তুল্য মধুর ও কোমল দময়ন্তীর বাক্য সাদরে শ্রবণ

(१) परपुष्टघुष्टे।

**मन्दाक्ष-मन्दाक्षर-मुद्रमुक्त्वा तस्यां समाकुञ्चितवाचि हंसः।**
**तच्छंसिते किञ्चन संशयालुः गिरा मुखाम्भोजमयं युयोज ॥६१॥**
**करेण वाञ्छेव विधुं विधर्त्तुं यमित्थमात्थादरिणी तमर्थम्।**
**पातुं श्रुतिभ्यामपि नाधिकुर्वे वर्णं श्रुतेर्वर्णं इवान्तिमः किम् ॥६२॥**

---

করিয়া, কোকিলের রবে যে আনন্দ হইয়া আসিতেছিল, তাহা ত্যাগ করিল এবং বীণার শব্দেও ঘৃণা বোধ করিল ।৬০।

**अन्वयः**—तस्यां मन्दाक्ष-मन्दाक्षर-मुद्रम् उक्त्वा समाकुञ्चित-वाचि (सत्याम्), अयं हंसः तच्छंसिते किञ्चन संशयालुः (सन्) गिरा मुखाम्भोजं युयोज ॥६१॥

मन्दाक्षेति। तस्यां दमयन्त्याम्, मन्दाक्षेण लज्जया मन्दा अल्पा अक्षराणां वर्णानां मुद्रा विन्यासो यस्मिन् कर्म्मणि तद्यथा तथा, उक्त्वा "मनस्तु यम्" इत्याद्यभिधाय, समाकुञ्चिता उपसंहृता वाक् वाक्यं यया तस्यां सत्याम्, अयं हंसः, तस्याः दमयन्त्याः शंसिते "मनस्तु यम्" इत्यादौ वाक्ये, किञ्चन किञ्चित्, संशयालुः अस्पष्टत्वात् नले अनुरक्ता न वेति सन्दिहानः सन्, गिरा वक्ष्यमाणवाचा सह, मुखाम्भोजम् आत्मनो वदनपङ्कजम्, युयोज युक्तं चकार उवाचेत्यर्थः।

अत्र मन्दाक्ष-मन्दाक्षेति यमकं मुखाम्भोजमिति समासगता उपमा चानयोः संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः।

"मन्दाक्षं ह्रीस्त्रपा व्रीडा" "मूढाल्पापटुनिर्भाग्या मन्दाः स्युः" इत्यमरः।

संशयालुरिति संपूर्वात् शीङः स्पृहिगृहीत्यादालुप्रत्ययः। अतएवाह दुर्गः— "शयालुरिति अनाल्यम्" इति ॥६१॥

বাঙ্গালা—দময়ন্তী লজ্জাবশতঃ অল্পাক্ষরে বলিয়া বাক্যের উপসংহার করিলে; সেই হংস তাঁহার বাক্যে কিঞ্চিৎ সন্দিহান হইয়া, বাক্যের সহিত মুখপদ্মকে যুক্ত করিল (অর্থাৎ বলিল) ।৬১।

**अन्वयः**—(त्वम्) आदरिणी (सती) करेण विधुं विधर्त्तुं वाञ्छा इव इत्थं यम् आत्थ, अन्तिमः वर्णः श्रुतेः वर्णम् इव (अहं) तम् अर्थं श्रुतिभ्यां पातुम् अपि किं न अधिकुर्वे ? ॥६२॥

अथ कया गिरा स मुखाम्भोजं युयोज इत्याह करेणेति। त्वम् आदरिणी यत्नमायत्नवती सती, करेण हस्तेन, विधुं चन्द्रम्, विधर्त्तुं ग्रहीतुम्, वाञ्छा इच्छा इव, इत्थम् एवम्प्रकारेण, यम् अर्थं विषयम्, आत्थ "का नाम बाला—" इत्यादिना ब्रवीषि; अन्तिमो वर्णः ब्राह्मणादीनां चतुर्णां वर्णानां मध्ये शेषो वर्णः शूद्रः, श्रुतेर्वेदस्य, वर्णमक्षरमिव, अहं तमर्थं विषयम्, श्रुतिभ्यां कर्णाभ्याम्, पातुं सादरं ग्रहीतुमपि स्पष्टं श्रोतुमपीत्यर्थः, किं न अधिकुर्वे न अधिकारी भवामि ?। प्रश्न एवायम्। अपि त्वमहमेवाधिकुर्वे; अतः स्पष्टमेव तमर्थमभिधाय मत्सन्देहमपनयेति भावः।

अत्र श्रौतोपमालङ्कारश्छेकानुप्रासेन संसृज्यते। तथा अहमधिकुर्वे, अन्तिमो वर्णस्तु अधिकुरुते इति पुरुषभेदाद्भग्नप्रक्रमतादोषः; "लतेव राजसे तन्वि!" इति दर्पणोदाहरणवत्। 'नाधिकारी' इति पाठेन चास्य समाधेयः। प्रसादो गुणः, वैदर्भी च रीतिः।

आत्थेति "ब्रुवस्त्यादिषु पञ्चसु निपाता वा" इति ब्रूधातोर्वर्त्तमानाया मध्यमपुरुषैकवचने निपातः। वर्णः ब्राह्मणादीनां सामीप्ये।

अर्थाप्यते (१) वा किमियद्भवत्या चित्तैकपद्यामपि विद्यते यः।
यत्रान्धकारः किल चेतसोऽपि जिह्मेतरैर्ब्रह्म तदप्यवाप्यम्॥६३॥
ईशाणिमैश्वर्य्य-विवर्त्त-मध्ये! लोकेश-लोकेशय-लोक-मध्ये।
तिर्य्यञ्चमप्यञ्च मृषानभिज्ञ-रसज्ञतोपज्ञ-समज्ञमज्ञम्॥६४॥

---

शूद्रस्य वेदवर्णश्रवणनिषेधमाह तिथितत्त्वधृता नृसिंहतापनीयोपनिषत्— "सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्राय नेच्छन्ति।"

महाभारतेच— "स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरः।
इति कारुणिको व्यासः पुराणं विदधे मुनिः॥६२॥

বাঙ্গালা—'হস্ত দ্বারা চন্দ্রকে ধরিবার ইচ্ছার ন্যায়' এইরূপে যে বিষয় তুমি আদর-পূর্ব্বক বলিলে; শূদ্র যেমন বেদের অক্ষর কর্ণযুগল দ্বারা শুনিতেও অধিকারী নহে, আমিও কি সেইরূপ তোমার বিষয় কর্ণযুগল দ্বারা শুনিতেও অধিকারী নহি? ॥৬২॥

अन्वयः—भवत्या (सः) इयत् किम् अर्थाप्यते वा? यः चित्तैकपद्याम् अपि विद्यते। यत्र किल चेतसः अपि अन्धकारः, तत् ब्रह्म अपि जिह्मेतरैः अवाप्यं (भवति)॥६३॥

अर्थाप्यत इति। हे दमयन्ति! भवत्या त्वया, इयत्, एतावत्, किं कथम्, अर्थाप्यते अर्थवत् क्रियते स विषयः, कथं धनवत् गोप्यते वा इत्यर्थः; यो विषयः, चित्तैकपद्यामपि मम मनःपथेऽपि विद्यते। तथा च यं विषयमहं मनसा चिन्तामात्रेणैवावगन्तुमर्हामि स विषयः कथं गोप्यते; अथ स्पष्टमभिधीयताम्, मया च तत् साधयितुं यतिष्यत इति सरलार्थो भावार्थश्च। अथ सामान्येन पक्षिणा त्वया तत्साधनमशक्यमित्याह यत्र ब्रह्मणि, किलेत्यैतिह्ये, चेतसोऽपि अन्धकारः अविषयता "यन्मनसा न मनुते" इति श्रुतेः यत् ब्रह्म मनसोऽपि विषयो न भवतीत्यर्थः, तत् ब्रह्मापि परमात्मापि, जिह्मेतरैरनलसैः उद्योगिभिर्जनैरिति तात्पर्य्यम् अवाप्यं योगादिना लभ्यं भवति। अतो मया सामान्येन सतापि उद्योगवशात् तवार्थः साधयितुं शक्यत एवेत्यर्थः।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः, अर्थापत्तिः, छेकानुप्रासश्च, इत्येतेषां परस्परनिरपेक्षतया संसृष्टिः। तथा अन्धकारपदम् अविषयतार्थस्य अवाचकमित्यवाचकत्वदोषः; स च 'अगोचरो यत् किल चेतसोऽपि' इति पाठेन समाधेयः। प्रसादो गुणः, वैदर्भी च रीतिः।

"वर्त्म न्यैकपदीति च" "जिह्मस्तु कुटिलोऽलसे" इत्यमरः।

"अथातो ब्रह्मजिज्ञासा। जन्माद्यस्य यतः" इति शारीरकसूत्रद्वयम्, "यतो वा इमानि भूतानि जायन्ते" इत्यादिश्रुतिश्च प्रमाणम्।

अर्थः क्रियत इति करोत्यर्थे ण्यन्तादर्थशब्दात् "सत्यार्थवेदानामन्त आप्" इति आप् आगमः॥६३॥

বাঙ্গালা—দময়ন্তি! তুমি সে বিষয়টীকে এত গোপনই বা করিতেছ কেন? যাহা আমার মনের পথেই রহিয়াছে। দেখ—যে ব্রহ্মপদার্থ মনেরও বিষয় নহে, সে ব্রহ্মপদার্থকেও উদ্যোগী লোকেরা লাভ করিয়া থাকে ॥৬৩॥

अन्वयः—(हे) ईशाणिमैश्वर्य्य-विवर्त्त-मध्ये! लोकेशलोकेशयलोकमध्ये अञ्च तिर्य्यञ्चम् अपि (मा) मृषानभिज्ञ-रसज्ञतोपज्ञ-समज्ञम् अञ्च॥६४॥

---

(१) अथाप्यते वा।

मध्ये श्रुतीनां प्रतिवेश्मिनीनां सरस्वती वासवती मुखे नः ।
ह्रियेव ताभ्यां स्खलतीयमद्धा-(१) पथाद संसर्गगुणेन मद्धा ॥६५॥

अथ सामान्यः पक्षी त्वं मयापि वक्तुं शक्यः, मृषावादिनि च कथं विश्वासः, अविश्वस्तं वा कथं गोपनीयं ब्रवीमीत्याह इंशेति । ईशस्य महादेवस्य यत् अणिमैश्वर्यम् अणुवद्रूपमैश्वर्यं तस्य विवर्त्तं विरोधिभावेन वर्त्तत इति विवर्त्तः प्रतिपक्षस्तत्सदृशः सूक्ष्म इत्यर्थः मध्यः कटिदेशो यस्यास्तत्सम्बोधनम् । अस्य कवेरीदृशः प्रयोगोऽन्यत्रापि यथा—"मध्यं पयामः परमाणुमध्यः" "इंशकोदरी" इत्यादिः । हे कृशोदरि ! इति स्फुटार्थः, लोकेशस्य ब्रह्मणो यो लोको भुवनं तत्र शेरते अवतिष्ठन्त इति लोकेशलोकेशयाः तादृशा ये लोका जनास्तेषां मध्ये अभ्यन्तरे ; मृषा मिथ्या वक्तुं न अभिजानातीति मृषानभिज्ञा रसज्ञा जिह्वा येषां तें मृषानभिज्ञरसज्ञास्तेषां भावः सा तथा या उपज्ञा आदिकथनम् अस्मिन् ब्रह्मलोके के नाम सत्यपरायणा इति प्रश्ने अयं हंस एव प्रथम इत्येवं रूपेण यन्मम प्रथममेवोल्लेख इत्यर्थः तेन समज्ञा यशो यस्य तं तथोक्तम्, अस्य जानीहि । अतः परमसत्यशालितया महाविश्वस्तत्वात् मयि सर्वं वक्तुमर्हसीति भावः ।

अत्र प्रथमे पादे आर्थोपमा, द्वितीये यमकम्, प्रथमार्द्धेऽप्यन्त्ययमकम्, तृतीये छेकानुप्रासः, चतुर्थे च वृत्त्यनुप्रास इति सर्वेषां संसृष्टिः । अणिमाद्यैश्वर्याणां नारायणादौ सत्त्वेऽपि ईश्वरैश्वर्य एव आधिक्यसम्भवात् तत्-ज्ञापनाय ईशपदमिति न अविमृष्टविधेयांशदोषः । दम्पत्यर्णस्य च प्रगाढत्वादोजो गुणः, गौडी च रीतिः ।

"अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा । ईशित्वञ्च वशित्वञ्च तथा कामावसायिता ॥" इति सांख्यतत्त्वकौमुद्यां वाचस्पतिमिश्राः । एषां विशेषास्तु तत्रैवानुसन्धेयाः ।

"हिरण्यगर्भो लोकेशः" "रसज्ञा रसना जिह्वा" "यशः कीर्त्तिः समज्ञा च" इत्यमरः । "उपज्ञोपक्रमावादिकथने" इति कुमारनन्दी । "उपज्ञादि क्लीबम्" इति तत्पुरुषसमासे तस्य क्लीबत्वात् ह्रस्वान्तत्वम् । लोकेशय इति "शीङोऽधिकरणे च" इत्यत्र शेतेरच् "प्रायेण सप्तम्याः क्वचि" इति सप्तम्या अलुक् । अवेहि इति "अवन्, गतिपूजनयोः" इति गत्यर्थस्य अवेर्ज्ञानार्थत्वम् ॥६४॥

বাঙ্গালা—হে কৃশোদরি ! আমরা মূর্খ পক্ষিজাতি হইলেও, আমাদের ব্রহ্মলোকে যত লোক আছে, তাহাদের মধ্যে আমিই সত্যবাদীদিগের অগ্রগণ্য বলিয়া আমার যশ আছে, ইহা তুমি জানিও ॥৬৪॥

**अन्वयः**—प्रतिवेश्मिनीनां श्रुतीनां मध्ये नः मुखे वासवती इयं सरस्वती संसर्गगुणेन नम्रा (सती) ताभ्यः ह्रिया इव अद्धापथात् न स्खलति ॥६५॥

ननु तवैतादृशसत्यवादित्वे को नाम हेतुरित्याह मध्य इति । प्रतिवेश्मिनीनां निकटवर्त्तिनीनाम्, श्रुतीनां ब्रह्ममुखोच्चारितत्वात् अस्माकञ्च तद्वाहनत्वादिति भावः, एकपल्लीवासिनीनाञ्च, श्रुतीनां वेदानां सतीनाञ्च मध्ये, नः अस्माकं मुखे कस्मिंश्चिद्भवने च, वासवती स्थितिमती, इयं श्रूयमाणा, सरस्वती वाणी काचित् स्त्री च, संसर्गः तासां श्रुतीनां सङ्ग एव गुणः उत्कर्षस्तेन नम्रा सम्बद्धा सती, ताभ्यः श्रुतिभ्यः, ह्रिया स्खलने सम्भाव्यमानया लज्जया हेतुनेव, अद्धापथात् सत्यमार्गात् सतीधर्माच्च, न स्खलति न च्यवते मिथ्या न भवतीत्यर्थः, न व्यभिचरति च । प्रतिवेश्मिनीनां सतीनां मध्यवर्त्तिनी स्त्री यथा न व्यभिचरति तद्वत् । तेन च प्रतिवेश्मिनीनां श्रुतीनां संसर्गगुण एवास्माकं सत्यवादित्वे हेतुरित्याशयः ।

(१) स्खलतीयमद्धा ।

पर्य्यङ्कतापन्नसरस्वदङ्कां लङ्कापुरीमप्यभिलाषि चित्तम् ।
कुत्रापि चेद्वस्तुनि ते प्रयाति तदप्यवेहि स्वशये शयालु ॥६६॥
इतीरिता पत्ररथेन तेन ह्रीणा च हृष्टा च बभाण भैमी ।
चेतो नलङ्कामयते मदीयं नान्यत्र कुत्रापि च साभिलाषम् ॥६७॥

---

अत्र विशेषणद्वारा सरस्वत्यां तादृशस्त्रीव्यवहारसमारोपात् समासोक्तिरलङ्कारः, छिद्येतेति गुणहेतूत्प्रेक्षा वा, प्रथमार्द्धे छेकानुप्रासः, द्वितीयार्द्धे च अन्त्यानुप्रास इत्येतेषां संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"तत्त्वे त्वद्वाक्श्रवा ऋयम्" इत्यमरः ॥६५॥

বাঙ্গালা—আমাদের বাক্য, প্রতিবেশী বেদবাক্যসমূহের মধ্যে আমাদের মুখে বাস করিতেছে ; সুতরাং সে, সেই বেদবাক্যসমূহের সংসর্গগুণে সবদা থাকিয়া, তাহাদের নিকট লজ্জাবশতই যেন সত্যপথ হইতে ভ্রষ্ট হয় না ।৬৫॥

**अन्वयः**—(हे दमयन्ति ! ) ते चित्तं पर्य्यङ्कतापन्न-सरस्वदङ्कां लङ्कापुरीम् अपि अभिलाषि चेत् (किंवा अन्यत्र) कुत्र अपि वस्तुनि प्रयाति चेत्, तत् अपि स्वशये शयालु अवेहि ॥६६॥

ननु त्वं खलु क्षुद्रः पक्षी ; अतस्त्वदन्तिके ममाभिलाषकथनेऽपि तं कथं साधयितुं शक्ष्यसीत्याह पर्य्यङ्केति । हे दमयन्ति ! ते तव चित्तं कर्त्तृ, पर्य्यङ्कतामापन्नः खट्वात्वं प्राप्तः सरस्वतः समुद्रस्य अङ्कः क्रोडो यस्यास्तां समुद्रमध्यवर्त्तिनीमित्यर्थः, अतएव दुर्लभामिति भावः, लङ्कापुरीमपि अन्यत्र का कथा राक्षसरक्षितां लङ्कानगरीमपि, अभिलाषि चेत् अभिलषिष्यति यदि, किम्वा अन्यत्र कुत्रापि दुर्लभे वस्तुनि, प्रयाति लब्धुं गच्छति चेत्, तदा तदपि तदुभयमपि, स्वशये निजहस्ते, शयालु स्थितम्, अवेहि जानीहि निजहस्तस्थितं वस्तु यथा नितान्तसुलभं तथा स्वभावतो दुर्लभमपि वस्तु मम दया तव नितान्तसुलभमेवेति जानीहीत्यर्थः । अतः खल्वसाधारणक्षमताशालित्वात् यं कञ्चित्तवाभिलाषं साधयितुमहं शक्ष्यामीति भावः ।

अत्र पर्य्यङ्कतापन्नेति निरङ्गं केवलरूपकम्, शयालु शयालुवदिति सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धा निदर्शना, प्रथमार्द्धे वृत्त्यनुप्रासः, शेषपादे च छेकानुप्रास इति संसृष्टिः । तथा 'किंवा' 'अन्यत्र' इत्येतयोः पदयोरनुक्तावपि वक्तुः हंसस्य दमयन्तीं प्रलोभयितुमुत्कण्ठामयत्वात् न न्यूनपदतादोषः, "उत्कण्ठानन्दमग्नादेः स्यान्न्यूनपदता गुणः" इति साहित्यदर्पणात् । माधुर्य्यं गुणः, वैदर्भी च रीतिः ।

"पञ्चशाखः शयः पाणिः" इत्यमरः ।

अभिलाषीति "भविष्यति गम्यादयः" इति इनप्रत्ययान्तो निपातः । अतएव लङ्कापुरीमिति "इनि भविष्यदधमर्ण्ययोः" इति षष्ठीनिषेधात् कर्म्मणि द्वितीया । शयालुसाधनमुक्तम् ॥६६॥

বাঙ্গালা—দময়ন্তি ! তোমার চিত্ত যদি সমুদ্রমধ্যবর্ত্তিনী লঙ্কাপুরীকেও লাভ করিবার ইচ্ছা করে ; কিম্বা অন্য কোন বস্তুতেও যদি যায় ; তথাপি তুমি তাহাও নিজহস্তস্থিতের ন্যায় মনে কর ।৬৬।

**अन्वयः**—तेन पत्ररथेन इति ईरिता भैमी ह्रीणा च हृष्टा च (सती) बभाण । मदीयं चेतः लङ्कां न अयते अन्यत्र कुत्र अपि च न साभिलाषम् ॥६७॥

इतीति । तेन पूर्व्वोक्तेन, पत्रं पक्ष एव रथो वाहको यस्य तेन पत्ररथेन पक्षिणा हंसेन, इति पूर्व्वोक्तप्रकारेण, ईरिता उक्ता, भैमी दमयन्ती, ह्रीणा अभीष्टनलप्रस्तावेन लज्जिता च, हृष्टा हंसेन स्वाभिलाषपूरणस्य प्रतिश्रुतत्वात् आनन्दिता च सती, बभाण प्रत्युवाच । किं बभाणेत्याह मदीयं चेतः कर्त्तृ, लङ्कां त्वयोक्तां लङ्काः

विचिन्त्य बालाजनशीलशैलं लज्जानदीमज्जदनङ्गनागम्।
आचष्ट विस्पष्टमभाषमाणाम् एतां स चक्राङ्ग-पतङ्ग-शक्रः ॥६८॥
नृपेण पाणिग्रहणस्पृहेति नलं मनः कामयते ममेति।
आश्लेषि न श्लेषकवेर्भवत्याः श्लोकद्वयार्थः सुधिया मया किम्? ॥६९॥

---

पुरीम्, न अयते न गच्छति लभ्यतया नाभिलषतीत्यर्थः, तथा अन्यत्र कुत्रापि च वस्तुनि, न साभिलाषं न अभिलाषयुक्तं वर्त्तते ; योग्ययुवकेतरत्र निस्पृहत्वादिति भावः। अत्र तृतीयचरणस्य चत्वारोऽर्थाः क्रियन्ते तत्रैको दर्शितः। द्वितीयस्तु—मदीयं चेतः नलं नलनामानं राजानम्, कामयते पतित्वेनाभिलषति। तृतीयस्तु—मदीयं चेतः, यदि अनलं नलव्यतिरिक्तं पुरुषं कामयते। चतुर्थस्तु—तदा मदीयं चेतः अनलं वह्निमिव कामयते, नलव्यतिरिक्तपुरुषस्य समायोग्यत्वेन केवलसन्तापकत्वादित्याशयः।

अत्र नल-लङ्कारूपोभयार्थस्यैव प्रस्तुतत्वात् सभङ्गश्लेषोऽलङ्कारः वृत्त्यनुप्रासच्छेकानुप्रासयोरिति संसृष्टिः। पूर्वरागरूपो विप्रलम्भशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः।

"पतत्-पत्ररथाण्डजाः" इति पक्षिपर्य्याये अमरः।

स्त्रीयतीति "स्त्रीग्लावीन्दतुदविन्दां वा" इति स्त्रीधातोर्निष्ठातकारस्य विभाषया नकारः ॥६७॥

বাঙ্গালা—সেই পক্ষী এইরূপ বলিলে, দময়ন্তী লজ্জিত ও আনন্দিত হইয়া বলিল—আমার চিত্ত লঙ্কায় যায় না এবং অন্য কোন বস্তুতেও অভিলাষী নহে ॥৬৭॥

**अन्वयः**—सः चक्राङ्ग-पतङ्ग-शक्रः बालाजन-शील-शैलं लज्जा-नदी-मज्जदनङ्ग-नागं विचिन्त्य विस्पष्टम् अभाषमाणाम् एताम् आचष्ट ॥६८॥

विचिन्त्येति। स चक्राङ्गपतङ्गेषु हंसपक्षिषु मध्ये शक्र इन्द्र इवेति स तथोक्तो हंसश्रेष्ठ इत्यर्थः, बालाजनानां मुग्धाबलानां शीलं स्वभाव एव शैलः दुर्गमत्वादचलत्वाच्च पर्वतस्तम्, लज्जा तत्रत्या वर्षेव नदी अविच्छिन्नप्रवाहत्वात् सरित्, तत्र मज्जन् अभ्यन्तरे तिष्ठन् अनङ्गः काम एव नागो दुर्द्दमत्वात् हस्ती यत्र तं तथोक्तम्, विचिन्त्य विचिच्य, विस्पष्टं सुव्यक्तं यथा तथा, अभाषमाणाम् अभिलाषमकथयन्तीम्, ध्वनिना श्लेषेण च गूढन्तु भाषमाणामेवेत्याशयः, एतां दमयन्तीम्, आचष्ट स्पष्टं भाषयितुमभाषत। अन्यथा विपरीताभिप्रायें आत्मनो दौत्यमेव निकृष्टं स्यादित्यभिप्रायः।

अत्र समस्तवस्तुविषयं साङ्गं रूपकमलङ्कारश्छेकानुप्रासेन संसृज्यते। मधुररचनावशात् माधुर्य्यं गुणः, पाञ्चाली च रीतिः।

"चक्राङ्गा मानसौकसः" इत्यमरः ॥६८॥

বাঙ্গালা—দময়ন্তী বিশেষ স্পষ্ট করিয়া বলিল না; অথচ বালিকাদিগের স্বভাবরূপ পর্বতে, লজ্জারূপ নদীর ভিতরে, কামরূপ হস্তী মগ্ন হইয়া থাকে—ইহা বিবেচনা করিয়া, সেই রাজহংস দময়ন্তীকে (পুনরায়) বলিতে লাগিল ॥৬৮॥

**अन्वयः**—सुधिया मया श्लेषकवेः भवत्याः श्लोकद्वयार्थः नृपेण पाणिग्रहणस्पृहा इति मम मनः नलं कामयते इति किं न आश्लेषि? ॥६९॥

किमाचष्ट इत्याह नृपेणेति। शोभना धीर्बुद्धिर्यस्य तेन सुधिया अतएव श्लोकद्वयार्थं आश्लेषीति भावः, मया हंसेन, श्लेषं श्लिष्टं काव्यं करोति वर्णयतीति श्लेषकविस्तस्याः, भवत्यास्तव, श्लोकद्वयस्य "का नाम बाला द्विजराजपाणिग्रहाभिलाषं कथयेदलज्जा।" "चेतो नलङ्कामयते मदीयम्" इति पद्यद्वयावयवद्वयस्य अर्थः; अपि

त्वच्चेतसः स्थैर्यविपर्ययन्तु सम्भाव्य भाव्यस्मि तदज्ञ एव ।
लक्ष्ये हि बालाहृदि लोलशीले दरापराद्धेषुरपि स्मरः स्यात् ॥७०॥
महीमहेन्द्रः खलु नैषधेन्द्रः (१) तद्बोधनीयः कथमित्थमेव ।
प्रयोजनं संशयकम्पमीदृक् (२) पृथग्जनेनेव स मद्विधेन ॥७१॥

र्थयम्, वृतेष राज्ञा प्रकरणावलम्बनेन कार्या, पाणिग्रहणे, स्पृहा मम इच्छा वर्त्तते, इति एवं रूपेण, तथा मम मनः कर्त्तृ, नलं कामयते पतित्वे नेच्छति, इति एवं रूपेण च, किं न आशयं बुद्ध्या आकलितः विपरीतम् इति यावत्, अपि तु आशयं ज्ञातवानित्यर्थः ।

अत्र आशयबोधं प्रति सुधीपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गमर्थापत्तिर्वाऽनयोरङ्गाङ्गिभावेन सङ्करः; सोऽपि च छेकानुप्रासच्छेकानुप्रासाभ्यां संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ॥६९॥

বাঙ্গালা—তুমিও শ্রেষ্ঠকবি, আমিও বুদ্ধিমান্; সুতরাং তুমি দুইটী শ্লোকের যে দুইটী অংশ বলিয়াছ, তাহার প্রথমটীর অর্থ—'নলরাজার সহিত বিবাহেই আমার ইচ্ছা আছে'; আর দ্বিতীয়টীর অর্থ—'আমার মন নলকেই কামনা করে' এইরূপে কি আমি তাহা বুঝিতে পারি নাই?॥৬৯॥

**অন্বয়ঃ**—तु त्वच्चेतसः स्थैर्यविपर्ययं सम्भाव्य अस्मि तदज्ञः एव भावी । हि लोलशीले बालाहृदि लक्ष्ये स्मरः अपि दरापराद्धेषुः स्यात् ॥७०॥

अथ यदि नलाभिलाषी मतः, तदा कथं मां निर्भर्त्स्य विधाय पुनस्तं वादयसीत्याह त्वदिति । तु किन्तु, त्वच्चेतसः मनसः, स्थैर्यस्य नलं प्रति स्थिरतायाः विपर्ययं वैपरीत्यम्, सम्भाव्य तव बालत्वादेव मत्वा, अहम्, तस्मिन् तवाभिलाषविषये अज्ञ एव अनभिज्ञ इव, भावी भवामि । अधुना तवाभिलाषी नल एव वर्त्तते, किन्तु समयान्तरे चित्तान्तरं स्यादित्याशङ्कया तं जानन्नपि अजानन्निव दृढतार्थं पुनस्त्वां वादयामीति भावः । हि यस्मात्, लोलशीले बालत्वादेव चपलस्वभावे, बालाहृदि मुग्धाबलाया मनसि, लक्ष्ये शरव्ये विषये, अपरोऽपि अन्यस्मिन् का कथा स्वयं तन्मनोभवः कामोऽपि, दरेण तस्य बालाहृदः चाञ्चल्यात् आशङ्कया अपराद्धेषुः च्युतसायकः स्यात् ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः, छेकानुप्रासो वृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"अपराद्धपृषत्कोऽसौ लक्ष्याद्यश्च्युतसायकः" इत्यमरः ।

ईषदर्थे दर्शनीयम् अव्ययम् । इवार्थे एवशब्दः । भावीति भूधातोर्वर्त्तमाने गम्यादित्वात् णिनिः । ॥७०॥

বাঙ্গালা – কিন্তু তোমার চিত্তের অস্থিরতাও জন্মিতে পারে, ইহা মনে করিয়া, আমি সে বিষয়ে অনভিজ্ঞের ন্যায় হইয়া পড়িয়াছি । কারণ, চঞ্চলস্বভাব বালিকাদিগের চিত্ত লক্ষ্য হইলে, তাহা অস্থির বলিয়া, আশঙ্কায় কামের বাণও সে লক্ষ্যভ্রষ্ট হইয়া থাকে ॥৭০॥

**অন্বয়**—नैषधेन्द्रः खलु महीमहेन्द्रः, तत् पृथग्जनेन इव मद्विधेन (जनेन) सः संशयकम्पम् ईदृक् प्रयोजनं कथम् इत्थम् एव बोधनीयः (स्यात्?) ॥७१॥

भवत्यां मन्मनसः स्थैर्यविपर्ययः, तेन का क्षतिरित्याह महीति । नैषधेन्द्रो नलः खलु, मह्यां पृथिव्यां महेन्द्रः पुरन्दर इव सम्राट् इति तात्पर्यम्; तस्मात्, पृथग्जनेन नीचलोकेन मूर्खलोकेन वा इव, मद्विधेन मादृशेन अस्मदादिजनेनत्वात् शिक्षितत्वाच्च श्रेष्ठजनेन विज्ञजनेन वेत्यर्थः, स नैषधेन्द्रः, संशयेन दमयन्त्या

(१) नैषधेन्दुः (२) सांशयिकं प्रतीहक ।

**पितुर्नियोगेन निजेच्छया वा युवानमन्यं यदि वा वृणीषे।**
**त्वदर्थमर्थित्वकृति प्रतीतिः कीदृङ्मयि स्यान्निषधेश्वरस्य ॥७२॥**
**त्वयापि किं शङ्कितविक्रियेऽस्मिन् अधिक्रिये वा विषये निधातुम्।**
**इतः पृथक् प्रार्थयसे तु यद् यत् कुर्वे तदुर्वीपतिपुत्रि ! सर्वम् ॥७३॥**

---

अस्पष्टाभिधानात् तदभिलाषस्त्वयि अन्यस्मिन् वा विद्यत इति सन्देहेन कम्पमानस्वरम्, ईदृक् गुरुतरम्, प्रयोजनं त्वदीयाभिलाषरूपमुद्देश्यम्, कथं केन प्रकारेण, इत्थमेव उक्तविधसंशयकम्पत्वरूपेणैव, बोधनीयो ज्ञापनीयः स्यात्, अपि तु कथमपि नेत्यर्थः। तथात्वे मां प्रति नलस्य मदन्यथता भवेदिति भावः।

अत्र अर्थापत्तिः, अबोधनीयत्वं प्रति महीमहेन्द्रपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम् उपमा छेकानुप्रासश्चेत्येतेषां संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः।

"अस्तमीचौ पृथग्जनौ" इत्यमरः।

कम्प्रमिति "दीपिकम्प्याजसि—" इत्यादिना कम्पधातो रप्रत्ययः ॥७१॥

বাঙ্গালা—নলরাজা পৃথিবীর মধ্যে ইন্দ্রতুল্য; সুতরাং আমার মত লোক, মূর্খ লোকের মত, সংশয়ান্দোলিত এইরূপ প্রয়োজনকে কি করিয়া এই ভাবেই তাঁহাকে জানাইবে? ।৭১।

**अन्वयः**—पितुः नियोगेन वा निजेच्छया वा यदि अन्यं युवानं वृणीषे; (तदा) त्वदर्थम् अर्थित्वकृति मयि निषधेश्वरस्य कीदृक् प्रतीतिः स्यात्? ॥७२॥

दमयन्त्यभिलाषस्य सन्दिग्धत्वात् तस्या वरान्तरग्रहणे उक्तप्रायमेव दोषं स्पष्टीकरोति पितुरिति। पितुः नियोगेन आदेशेन वा, निजेच्छया वा, यदि त्वमन्यं युवानं पुरुषम्, वृणीषे पतित्वेन गृह्णासि; तदा त्वदर्थं तव ग्रहणनिमित्तम्, अर्थित्वकृति नलान्तिक एव प्रार्थनाकारिणि, मयि मद्विषये, निषधेश्वरस्य नलस्य, कीदृक् प्रतीतिर्ज्ञानं स्यात्? मिथ्यावादित्वनिश्चयात् प्रतारकत्वनिश्चयाद्वा नितान्तदूषितत्वमेव मयि तस्य प्रतीतिः स्यादिति भावः।

अत्र छेकानुप्रासोऽलङ्कारः, प्रसादो गुणः, वैदर्भी च रीतिः।

अर्थित्वं करोतीति अर्थित्वकृत् करोतेः क्विप् ॥७२॥

বাঙ্গালা—পিতার আদেশে, অথবা নিজের ইচ্ছায় তুমি যদি অন্য কোন যুবাকে বরণ কর; তবে তোমারই জন্য আমি নলের নিকট প্রার্থনা করিয়াছিলাম বলিয়া, আমার প্রতি তাঁহার কিরূপ ধারণা জন্মিবে (বল দেখি)? ।৭২।

**अन्वयः**—त्वया अपि शङ्कितविक्रिये अस्मिन् विषये निधातुं किं वा अधिक्रिये?। तु इतः पृथक् यत् यत् प्रार्थयसे, (हे) उर्वीपतिपुत्रि ! तत् सर्वं कुर्वे ॥७३॥

ईदृक्संशयापन्नविषये त्वयापि नाहं नियोज्य इत्याह त्वयेति। हे दमयन्ति ! न केवलं मया स्वेच्छया स्वयमधिक्रियते, किन्तु त्वयापि इत्यपेरर्थः, शङ्किता अस्पष्टभावेनाकथनात् सम्भाविता विक्रिया विकारो नलभिन्नवरवरणरूपमन्यथात्वं यस्मिन् तस्मिन्, अस्मिन् नलेन सह विवाहघटनरूपे विषये, निधातुं नियोक्तुम्, किं वा अधिक्रिये किमहमधिकारी क्रिये? अपि तु कथमपि नेत्यर्थः, नियोजकत्वात् नलान्तिके प्रतारकत्वेन मम निन्दासम्भवादिति भावः। अतएव तु किन्तु, इतो विवाहघटनविषयात्, पृथक् अन्यत्, यद्यत् प्रार्थयसे, हे उर्वीपतिपुत्रि ! हे राजकन्ये। तत्सर्वं कुर्वे करिष्यामि।

अन्तःप्रविष्टा इव तद्गिरस्ता विधूय वैमत्यधुतेन मूर्ध्ना ।
ऊचे ह्रियोऽपि श्लथितानुरोधा पुनर्धरित्रीपुरुहूतपुत्री ॥७४॥
मदन्यदानं प्रति कल्पनाभूत् वेदस्त्वदीये हृदि तावदेषा ।
निशोऽपि सोमेतरकान्तशङ्काम् ओङ्कारमग्रेसरमस्य कुर्य्याः ॥७५॥

---

अत्र अर्थापत्तिरलङ्कारः, प्रथमार्द्धे छेकानुप्रासः, चतुर्थपादे च वृत्त्यनुप्रास इति संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

अधिक्रिये इति कर्म्मणि वाच्ये वर्त्तमानाया उत्तमपुरुषैकवचने रूपम् । प्रार्थयसे कुर्वे इत्युभयत्रापि भविष्यत्सामीप्ये वर्त्तमाना ॥७३॥

**বাঙ্গালা**—দময়ন্তি ! এবিষয়ে অন্যরূপ হইবার সম্ভাবনা আছে, সুতরাং তুমিও কি এবিষয়ে নিযুক্ত করিবার পক্ষে আমাকে অধিকারী বলিয়া স্থির করিতে পার ? ( কখনই না ) । অতএব এতদ্ভিন্ন তুমি যাহা যাহা প্রার্থনা করিবে, আমি সে সমস্তই সম্পাদন করিব ॥৭৩॥

**अन्वयः**—धरित्री-पुरुहूत-पुत्री वैमत्यधुतेन मूर्ध्ना अन्तःप्रविष्टाः ताः तद्गिरः विधूय इव ह्रियः अपि श्लथितानुरोधा (सती) पुनः ऊचे ॥७४॥

अन्त इति । धरित्र्याः पृथिव्याः पुरु प्रचुरं हूतं यज्ञेषु आह्वानं यस्य स पुरुहूत इन्द्रस्तस्य पुत्री भीमराजकन्या दमयन्ती, वैमत्येन हंसोक्तविषये असम्मत्या धुतेन कम्पितेन, मूर्ध्ना मस्तकेन, अन्तःप्रविष्टाः कर्णाभ्यन्तरगताः, ताः प्रागुक्ताः, तस्य हंसस्य गिरो वाक्यानि, विधूय इव अग्राह्यत्वेन निःसार्य्य इव, तत्कर्णान्तर्गतजलवालुकादिवदिति भावः, ह्रियोऽपि अन्यस्य का कथा चिरसहचारिण्याः प्रबलाया लज्जाया अपि, श्लथितो मन्दीकृतः अनुरोध आग्रहो यया सा निर्लज्जा सतीत्यर्थः, पुनरुचे उक्तवती ।

अत्र क्रियोत्प्रेक्षालङ्कारः शेषपादगतेन छेकानुप्रासेन संसृज्यते । तथा मूर्ध्ना इति पदांशगतो दुःश्रवत्वदोषः ; स च 'विधूय वैमत्यधुतोत्तमाङ्गा' इति पाठेन समाधेयः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः" "पुरुहूतः पुरन्दरः" इत्यमरः ।

श्लथः कृत इति श्लथितः, इतन्तात्तत्करोतीति शब्दात् कर्म्मणि क्तः ॥७४॥

**বাঙ্গালা**—হংসের সেই কথাগুলি কাণের ভিতরে প্রবেশ করিলে, দময়ন্তী অসম্মতি-সূচক মস্তককম্পন দ্বারা সেগুলিকে যেন বাহির করিয়া ফেলিয়া, লজ্জার অনুরোধও শিথিল করিয়া, পুনরায় বলিতে লাগিল ॥৭৪॥

**अन्वयः**—( हे हंस ! ) मदन्यदानं प्रति एषा कल्पना तावत् ( यदि ) त्वदीये हृदि वेदः अभूत्, ( तदा ) निशः अपि सोमेतरशङ्काम् ओङ्कारम् अस्य अग्रेसरं कुर्य्याः ॥७५॥

किमूचे इत्याह मदिति । हे हंस ! मम अन्यस्मै नलभिन्नाय वराय दानं पितृकर्तृकसमर्पणम्, प्रति तद्विषय इत्यर्थः, एषा "पितुर्नियोगेन" इत्यनेन प्रकाशिता, कल्पना तावत् मनसा उद्भावनैव, यदि त्वदीये हृदि मनसि, वेदो वेदस्वरूपं दृढ प्रमाणम् अभूत् ; तदा निशो रात्रेरपि, सोमाच्चन्द्रात् इतरो यः कान्तः पतिस्तस्य शङ्कां सम्भावनां तत्स्वरूपमित्यर्थः ओङ्कारं प्रणवम्, अस्य तत्कल्पनारूपवेदस्य, अग्रेसरं पुरोवर्त्तिनम् कुर्य्याः । यथा याज्ञिकादिभिः वेदमन्त्रस्यादौ ओङ्कारोच्चारणं क्रियते, तथा त्वयापि मदन्यदानकल्पनाया आदौ रात्रेश्चन्द्रभिन्नपतिकल्पना कर्त्तव्येति सरलार्थः । तथा च रात्रेर्यथा चन्द्रभिन्नः पतिर्न सम्भवति, तथा ममापि नलभिन्न पतिः कदापि न सम्भविष्यतीति भाव ।

सरोजिनी-मानस-राग-वृत्ते-रनर्क-सम्पर्क मतर्कयित्वा।
मदन्य-पाणिग्रह-शङ्कितेयमहो महीयस्तव साहसिक्यम् ॥७६॥
साधु त्वया तर्कितमेतदेव स्वेनानलं यत् किल संश्रयिष्ये।
विनामुना स्वात्मनि तु प्रहर्त्तुं मृषागिरं त्वां नृपतौ न कर्त्तुम् ....

---

अतएवात्र असम्भवद्वस्तुसम्बन्धरूपा निदर्शना, तथा ताहशकल्पनायां वेदत्वारोपः सोमिलरकान्तच्छायामी-छायत्वारोपं प्रति निमित्तमिति श्लिष्टशब्दनिबन्धनं परम्परितरूपकमित्यनयोरङ्गाङ्गिभावेन सङ्करः; सोऽपि च द्वितीयार्द्धगतेन च्छेकानुप्रासेन संसृज्यते। यदितर्हीति शब्दद्वयस्यानुक्तावपि न न्यूनपदतादोषः सामर्थ्यादेव तयोरवगतेः "न दोषो न गुणः क्वचित्" इति साहित्यदर्पणात्। पूर्वरागरूपो विप्रलम्भशृङ्गारो रसः, माधुर्य्यं गुणः, वैदर्भी च रीतिः।

"यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे" इत्यमरः।

"यन्न्यूनञ्चातिरिक्तञ्च यच्छिद्रं यदयज्ञियम्। तदोङ्कारप्रयुक्तेन सर्वं स्यादिकलं भवेत् ॥"

इति योगियाज्ञवल्क्यवचनात् वेदमन्त्राणां प्रणवादित्वम्। रघुवंशे कालिदासोऽप्याह—"आसीन्महीक्षिताम् आद्यः प्रणवश्छन्दसामिव।" इति ॥७५॥

বাঙ্গালা—পিতা আমাকে অন্য বরের হস্তে সমর্পণ করিবেন; এই কল্পনাই যদি তোমার মনে বেদস্বরূপ প্রমাণ হইয়া থাকে; তাহা হইলে, রাত্রিরও চন্দ্র-ভিন্ন-পতি-কল্পনাকে ঐ বেদের অগ্রবর্ত্তী প্রণবস্বরূপ কর ॥৭৫॥

অন্বয়ঃ—सरोजिनी-मानस-राग वृत्तेः अनर्कसम्पर्कम् अतर्कयित्वा (स्थितस्य) तव इयं मदन्य पाणिग्रहशङ्किता (वर्त्तते) अहो महीयः तव साहसिक्यं (दृश्यते) ॥७६॥

नलं प्रत्यात्मनोऽनुरागस्य दृढीकरणार्थम् उक्तप्रायमेवार्थं पुनराह सरोजिनीति। सरोजिन्याः पद्मिन्याः मानसरागस्य चित्तानुरागस्य या वृत्तिर्वर्त्तमानता तस्याः, अनर्केण सूर्य्येतरेण सम्पर्कं सम्बन्धम्, अतर्कयित्वा असम्भाव्य स्थितस्येत्यर्थः। अतो नैकत्र कालक्षान्तिः। तव इयं प्रत्यक्षीभूता, मम अन्येन नलभिन्नेन पुरुषेण यः पाणिग्रहो विवाहस्तस्य शङ्किता शङ्काकरित्वं सम्भावनेति यावत्, वर्त्तते; अतएव अहो आश्चर्य्यम्, महीयो गुरुतरम्, तव साहसिक्यं साहसिकता दृश्यत इति शेषः। पद्मिन्या यथा सूर्य्यभिन्नः पतिर्न सम्भवति, ममापि तथा नलभिन्नः पतिर्न भवितुमर्हतीति भावः।

अतएवात्रापि पूर्ववदेव निदर्शनालङ्कारः, तथा सरोजिन्या मानसरागासम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिः। केचित्तु, अत्र सरोजिन्योर्लिङ्गसाम्येन नायकनायिकाव्यवहारसमारोपात् समासोक्तिरिति वदन्ति। छेकानुप्रासश्चेति संसृष्टिः। पूर्ववत् पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः।

साहसिकस्य भावः साहसिक्यम्, "यण् च प्रकीर्त्तितः" इति यण् ॥७६॥

বাঙ্গালা—পদ্মিনীর মনের অনুরাগ, সূর্য্যভিন্ন অন্যের উপরে গিয়াছে, এ রূপ সম্ভাবনা না করিয়া, তুমি, আমার পাণিগ্রহণ অন্যে করিবে, এই আশঙ্কা করিতেছ! কি আশ্চর্য্য! তোমার ত গুরুতর সাহসিকতা দেখিতেছি ॥৭৬॥

অন্বয়ঃ—(हे हंस!) त्वया एतत् साधु एव तर्कितम्, यत् (अहं) स्वेन अनलं संश्रयिष्ये किल। अमुना विना स्वात्मनि प्रहर्त्तुम् अनलं संश्रयिष्ये; तु नृपतौ त्वां मृषागिरं कर्त्तुम् अनलं न संश्रयिष्ये ॥७७॥

**मद्विप्रलम्भं पुनराह यस्त्वां तर्कः स किं तत्फलवाचि मूकः ? ।**
**अशक्यशङ्काव्यभिचारहेतुर्वाणी न वेदा यदि सन्तु के तु ? ॥७८॥**

---

"निजेच्छया वा युवानमन्यं यदि वा वृणीषे" इत्युक्तोत्तरमाह साध्वित । हे हंस ! त्वया एतत् साध्वेव भद्रमेव, तर्कितं सम्भावितम्, यदहं स्वमनस्येव, अनलं नलभिन्नं युवानम्, संश्रयिष्ये वरत्वेनावलम्बिष्ये इति । किमिति सम्भावनायाम् । सोपहासा चेयमुक्तिः । निजेच्छया नलभिन्नं युवानं कथमपि न संश्रयिष्ये इति भावः । तर्हि तदप्राप्तौ किं करिष्यसीत्याह अमुना नलेन विना नलप्राप्त्यभावे, स्वात्मनि निजदेहे, प्रहर्तुं नाशयितुम् आत्महत्यामेव कर्तुमित्यर्थः, अनलमग्निम् संश्रयिष्य इति सम्बन्धः ; तु किन्तु, नृपतौ नले राजनि विषये, त्वां तव गिरं 'दमयन्ती त्वय्यनुरक्ता' इत्युक्तिं रन्यथाभूतत्वात् मिथ्यावाचम्, कर्तुम् अनलं नलभिन्नं युवानम्, न संश्रयिष्य इत्यन्वयः । एष एव मे निश्चय इत्याशयः ।

अत्र अनलमित्यनेन अनेकार्थाभिधानात् पदश्लेषोऽलङ्कारः पदान्ते अन्त्यानुप्रासश्चेत्युभयोः संसृष्टिः । पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ।

"आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च इत्यमरः ।

स्वात्मनीति च मे गच्छतीत्यादिवत् सप्तम्यधिकरणे सप्तमी ॥७७॥

বাঙ্গালা—তুমি এটা ভালই মনে মনে ধারণা করিয়াছ যে আমি নিজেই নলভিন্ন যুবককে আশ্রয় করিব। শোন, নলকে না পাইলে, আত্মহত্যা করিবার জন্যই আমি অনল ( অগ্নি ) আশ্রয় করিব ; কিন্তু নলরাজার নিকট তোমাকে মিথ্যাবাদী করিবার জন্য অনল ( নলভিন্ন যুবক ) আশ্রয় করিব না ॥৭৭॥

**অন্বয়:**—यः पुनः त्वां मद्विप्रलम्भम् आह, सः तर्कः तत्फलवाचि किं मूकः ? अशक्यशङ्काव्यभिचारहेतुः वाणी यदि न वेदा, (तर्हि) के तु (वेदाः) सन्तु ? ॥७८॥

दमयन्ति ! त्वमिदानीमित्यमभिदधाना परथान्यथा कुर्वाणा मां प्रतारयसि चेदित्याह मदिति । यः पुनस्तर्कः त्वां मद्विप्रलम्भं मया प्रतार्यम्, आह ब्रवीति वचनवत् स्पष्टं सूचयति ; स तर्कस्तव सम्भावना, तस्य प्रतारणस्य फलवाचि प्रयोजनकथने, किं मूको नीरवः ? । येन तर्केण त्वमात्मानं मया प्रतारणीयं मन्यसे, तेन तर्केण तत्प्रयोजनं किं न ज्ञायत इत्यर्थः । प्रयोजनं विना केनापि कोऽपि न प्रतार्यत इति त्वत्प्रतारणे मम किमपि प्रयोजनं नास्तीति त्वत्प्रतारणं सर्वथैवासम्भवमिति भावः । अथ तर्कैः तवाक्येऽपि कथं नाम प्रामाण्यं मन्यत इत्याह अशक्या कर्तुं योग्या शङ्का सम्भावना यस्मिन् स अशक्यशङ्कः स चासौ व्यभिचारहेतुः अन्यथाभावकारणञ्चेति अशक्यशङ्कः स व्यभिचारहेतुः न विद्यते अशक्यशङ्काव्यभिचारहेतुर्यस्यां सा तथोक्ता, यस्या वाण्या अन्यथाभावित्वकारणं सम्भावयितुमपि न शक्यते इत्यर्थः, वाणी उक्तिः, यदि न वेदा वेदवदव्याहतप्रमाणभूता न भवेत्, तर्हि के नाम पदार्थास्तु, वेदा वेदनामानः, सन्तु भवन्तु ? अपि तु केऽपि नेत्यर्थः । तथा च मम वाण्या अन्यथाभावित्वे किमपि कारणं त्वयापि सम्भावयितुं न शक्यत इति तस्याः प्रामाण्यमस्त्येवेति भावः ।

अत्रापि अप्रस्तुतवाणीसामान्यात् प्रस्तुतदमयन्तीवाणीविशेषप्रतीतेरप्रस्तुतप्रशंसालङ्कारः पर्यायोक्त्या सङ्कीर्यते । बन्धस्य प्रगाढत्वात् समासबाहुल्याच्च ओजो गुणः, गौडी च रीतिः ।

वेदेति "औपचारिकाः शब्दाः क्वचित् लिङ्गमपि जहति" इति न्यायात् क्लीबलिङ्गता ॥७८॥

অনৈষধায়ৈব জুহোতি তাতঃ কিং মাং কৃশানৌ ন শরীরশেষাম্।
ঈষ্টে তনূজন্মতনোঃ স নূনং মৎপ্রাণনাথস্তু নলস্তথাপি ॥৭৯॥
তদেকদাসীত্বপদাদুদগ্রে মদীপ্সিতে সাধু বিধিৎসুতা তে।
অহেলিনা কিং নলিনী বিধত্তে সুধাকরেণাপি সুধাকরেণ ॥৮০॥

---

**বাঙ্গালা**—যে তর্ক তোমাকে ইহা বলিতেছে যে, আমি তোমাকে প্রতারণা করিব; সে তর্ক সে প্রতারণার প্রয়োজন বলিতে নির্বাক্ থাকে কেন? । যে বাক্য অন্যথা হওয়ার কারণেরও আশঙ্কা করা যায় না, সেই বাক্যই যদি বেদ (বেদের তুল্য প্রমাণ) না হয়; তাহা হইলে কোন্ পদার্থ বেদ হইবে? ॥৭৮॥

**অন্বয়ঃ**—তাতঃ (যদি) মাম্ অনৈষধায় এব জুহোতি, (তদা) শরীরশেষাং মাং কৃশানৌ কিং ন জুহোতি? । (যতঃ) স নূনং তনূজন্মতনোঃ ঈষ্টে; তথাপি মৎপ্রাণনাথঃ নলঃ তু ॥৭৯॥

অথ "পিতুর্নিয়োগেন—" ইত্যাদিনা ময়া যৎ তবান্যস্মৈ পিতৃকর্তৃকদানমাশঙ্কিতম্, তত্র চ "মদন্যদান প্রতি কল্পনাঽভূৎ—" ইত্যাদিনা ত্বয়া যদসম্ভবত্বমভিহিতম্, তত্র পুনর্নিরাস্যতে স্বতন্ত্রঃ পিতা ত্বামস্বতন্ত্রামনিচ্ছন্তীমপি যদন্যস্মৈ দাস্যতি তর্হি কিং ভবিষ্যতীত্যাহ অনৈষধায়েতি। তাতঃ পিতা যদি মাম্, অনৈষধায় নলভিন্নায় পুরুষায় এব, জুহোতি স্বাতন্ত্র্যাৎ স্বেচ্ছয়া দদাতি; তদা শরীরমেব শেষঃ প্রাণানাং গতত্বাদবশিষ্টং যস্যাস্তাং তাদৃশীং মাম্, কৃশানৌ বহ্নৌ, কিং ন জুহোতি ন ত্যজতি? অপি তু জুহোত্যেবেত্যর্থঃ। তথা চ পিতা স্বেচ্ছামাত্রেণ চেদন্যস্মৈ মাং দাস্যতি, তদা তৎক্ষণমেবাহমেব বিষভক্ষণাদিনা মরিষ্যামি; তথা চ মৃতদাহায় চিতানলে এব মাং ত্যক্ষ্যতি। ইত্যহং মনঃসঙ্কল্পমবগচ্ছন্ পিতা মামন্যস্মৈ কথমপি ন দাস্যতীতি ভাবঃ। অথ স্বতন্ত্রঃ পিতা তে ত্বদীয়ং সঙ্কল্পমপি পরিবর্তয়েদিত্যাহ যতঃ স তাতঃ, নূনং নিশ্চিতমেব, তস্মাৎ তচ্ছরীরাৎ জন্ম যস্যাঃ সা তনূজন্মা যা তনুর্মম শরীরং তস্যা এব ঈষ্টে প্রভবতি। পিতা স্বজনিতসন্তানশরীরমেব যথেষ্টং বিনিয়োক্তুমর্হতি, ন পুনস্তন্মনোঽপীতি ভাবঃ। তথাপি মৎপ্রাণনাথো মম সঙ্কল্পিতপতিত্বাৎ মৎপ্রাণেশ্বরঃ, নলস্তু নল এব। অহং বা নলমেব পতিত্বেন কাময়ামীতি ভাবীত্যাশয়ঃ।

অত্র পূর্বার্দ্ধগতার্থং প্রতি পরার্দ্ধগতবাক্যার্থস্য হেতুত্বাৎ বাক্যার্থহেতুকং কাব্যলিঙ্গং পূর্বার্দ্ধে অর্থাপত্তিশ্চেত্যুভয়োঃ সংসৃষ্টিঃ। যদিতদিত্যুভয়োরেব পদয়োঃ সামর্থ্যাদবগতেন ন্যূনপদতাদোষঃ। পূর্বরাগো রসঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ।

"স্ত্রিয়াং মূর্তিস্তনূস্তনুঃ" ইত্যমরঃ।

জুহোতীতি ভবিষ্যৎসামীপ্যে বর্তমানা। তনোরিতি "অধীগর্থদয়েশাং কর্মণি" ইতি কর্মণি ষষ্ঠী।

সন্তানশরীরস্য পিত্রধীনত্বে প্রমাণং যথা উদ্বাহতত্ত্বধৃতং বশিষ্ঠবচনম্ "শুক্রশোণিতসম্ভবঃ পুত্রো মাতাপিতৃনিমিত্তকস্তস্য প্রদানবিক্রয়ত্যাগেষু মাতাপিতরৌ প্রভবতঃ" ইতি ॥৭৯॥

**বাঙ্গালা**—পিতা যদি আমাকে নলভিন্ন অন্য পুরুষের হস্তে সমর্পণ করেন; তবে কি তিনি শরীরমাত্রাবশিষ্টা আমাকে অগ্নিতেই সমর্পণ করিবেন না। যে হেতু, তিনি স্বদেহজাত দেহেরই প্রভু। তথাপি মনের সঙ্কল্প অনুসারে আমার প্রাণনাথ নলই ॥৭৯॥

**অন্বয়ঃ**—তদেকদাসীত্বপদাৎ উদগ্রে মদীপ্সিতে তে বিধিৎসুতা (ইদং) সাধু। নলিনী সুধাকরেণ অপি অহেলিনা সুধাকরেণ কিং বিধত্তে ॥৮০॥

तदेकलुब्धे हृदि मेऽस्ति लब्धुं चिन्ता न चिन्तामणिमप्यनर्घ्यम्।
चित्ते ममैकः सकलत्रिलोकी-सारो निधिः पद्ममुखः स एव ॥८१॥

"इतः पृथक् प्रार्थयसे तु यद् यत्" इति हंसेन यदुक्तं तत्राह तदिति। तस्य नलस्य एकं केवलं यत् दासीत्वरूपं पदं वस्तु तस्मात् उदये उत्तमे, मदीप्सिते मयाभिलषिते वस्तुनि, ते तव, विधित्सुता विधातुमिच्छुता वर्त्तते; इदं साधु भद्रमिति शीघ्रं पठनीकिरिति इदमसाध्यमेवेत्यर्थः। तथा च ममान्तिके नलस्य दासीत्वपदादुत्तमं किमपि नास्ति; सुतरां तव ममेच्छापि न वर्त्तते; अतस्तद्विधानेच्छापि तव नोचितेति भावः। तथाहि नलिनी पद्मिनी, सुधाया अमृतस्य आकरेण कुत्सितस्थानेनापि सता, अहेलिना सूर्य्यभिन्नेन, सुधाकरेण चन्द्रेण करणेन, किं विधत्ते करोति, अपि तु किमपि नेत्यर्थः। यथा चन्द्रः सुधाया आकरत्वेन सूर्य्यापेक्षया उत्तमोऽपि सन् सूर्य्यभिन्नत्वादेव पद्मिन्या अनुरागं नाकर्षति; तथा अन्यो युवा गुणान्तरेण नलादुत्तमोऽपि सन् नलभिन्नत्वादेव ममानुरागं नाकर्षतीति तत्प्रार्थनापि मे नास्तीत्याशयः।

अतएवात्र दृष्टान्तोऽलङ्कारः शेषपादगतेन यमकेन संसृज्यते। प्रथमं सुधाकरपदं यौगिकं द्वितीयन्तु कुक्षादिवत् रूढ़मिति न पुनरुक्तता। पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः।

"हेलिरालिङ्गने सूर्य्ये" इति हेमचन्द्रः। न हेलिरहेलिस्तेन। पर्य्युदासो नञ् ॥८०॥

বাঙ্গালা—নলের একমাত্র দাসীত্বপদ অপেক্ষাও উৎকৃষ্ট আমার অভীষ্ট বিষয়েতে যে তোমার সম্পাদন করিবার ইচ্ছা জন্মিয়াছে, ইহা ভালই বটে! । দেখ—চন্দ্র অমৃতের আকর বলিয়া উৎকৃষ্ট হইলেও, তিনি সূর্য্য নহেন বলিয়া, পদ্মিনী তাঁহা দ্বারা কি করিয়া থাকে? ॥৮০॥

**অন্বয়:**—तदेकलुब्धे हृदि अनर्घ्यं चिन्तामणिम् अपि लब्धुं चिन्ता न अस्ति। (यतः) मम चित्ते सकलत्रिलोकीसारः पद्ममुखः एकः सः एव निधिः अस्ति ॥८१॥

मल्लिया व्यक्तीकृतं वाचा स्पष्टयति तदेकेति। तस्मिन् नले एकं केवलं लुब्धमभिलाषुकं तस्मिन्, हृदि मनसि, अनर्घ्यम् अभिलषितवस्तुदातृत्वात् अमूल्यम्, चिन्तामणिं तदाख्यं रत्नविशेषमपि लब्धुं चिन्ता अभिलाषो नास्ति। कुत इत्याह यतः मम चित्ते, सकलायाः सर्वस्या एव त्रिलोक्यास्त्रिभुवनस्य सारः श्रेष्ठः, पद्मवत् मुखं वदनं यस्य सः, अन्यत्र पद्मः पद्मनामको निधिरिव मुखं प्रधानं त्वादावी यस्य सः, एकः केवलः, स नल एव, निधिःपरसमनिधनिधिस्तत्स्वरूप इत्यर्थः, अस्ति। धनभाण्डविशेषश्च निधिः। तेन च यस्याष्टावेव निधयो वर्त्तन्ते, तस्यैकेन चिन्तामणिना किं प्रयोजनमिति भावः।

अत्र पूर्व्वार्द्धगतसमर्थं प्रति परार्द्धगतवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम्, निधिर्निधिस्वरूप इति निरङ्गं केवलरूपकम्, पद्ममुख इति पदश्लेषः, लुब्धे लब्धुमिति चिन्ताचिन्तेति च च्छेकानुप्रासः, सारः-लोकीति इत्यनुप्रासश्चैषां परस्परनिरपेक्षतया संसृष्टिः। पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः।

अष्टौ निधीनाह व्यासः—"पद्मस्तथा महापद्मः शङ्खो मकरकच्छपौ।
मुकुन्दकुन्दौ नीलश्च निधयोऽष्टौ प्रकीर्त्तिताः॥"

लुब्धेति इच्छार्थत्वात् "आनुबन्धमति-" इत्यादिना कर्त्तरि क्तः। त्रयाणां लोकानां समाहार इति त्रिलोकी द्विगोर्नदादित्वादीप्रत्ययः ॥८१॥

বাঙ্গালা—আমার মন, একমাত্র তাঁহার জন্যই লুব্ধ হইয়া পড়িয়াছে; সুতরাং

श्रुतः स दृष्टः स (१) हरित्सु मोहात् ध्यातः स नीरन्ध्रितबुद्धिधारम्।
ममाद्य तत्प्राप्तिरसुव्ययो वा हस्ते तवास्ते द्वयमेव शेषः ॥८२॥
सखीयतामाश्रितपालनोत्थं (२) मत्प्राणविश्राणनजन्म पुण्यम्।
निवार्य्यतामार्य्य! वृथा विमर्शा भद्रेऽपि मुद्रेयमये! भयं वा ॥८३॥

---

তাহাতে অমূল্য চিন্তামণি লাভ করিবার ইচ্ছাও নাই। কেন না, সমগ্র ত্রিভুবনের মধ্যে শ্রেষ্ঠ পদ্মপ্রভৃতি নিধি স্বরূপ একমাত্র তিনিই আমার চিত্তে রহিয়াছেন ॥৮১॥

**अन्वयः**—सः श्रुतः, मोहात् हरित्सु सः दृष्टः, नीरन्ध्रितबुद्धिधारं सः ध्यातः (च)। अद्य मम तत्प्राप्तिः असुव्ययः वा शेषः एतत् द्वयम् एव तव हस्ते आस्ते ॥८२॥

अथ दशभिः पद्यैरात्मनो नलप्राप्तौ समाकुलतां प्रकटयन्ती हंसं तत्र प्रवर्त्तयति श्रुत इति। स प्रकृतो नलः, श्रुतः प्रथमं द्विजवन्दिप्रभृतिभ्यः स्वरूपत आकर्णितः; ततो मोहात् उन्मादावस्थोपस्थित्या बुद्धिवैकल्यात्, हरित्सु दिक्षु, स श्रुतपूर्वो नलः, दृष्टः अवलोकितः, चित्तस्य तन्मयत्वेन जगत एव तन्मयत्वादिति भावः; परञ्च नीरन्ध्रिता विषयान्तरव्यवधानेन अनवच्छिन्नीकृता बुद्धिधारा धारावाहिकबुद्धिर्यस्मिन् कर्म्मणि तद् यथा तथा, स दृष्टपूर्वो नलः ध्यातश्चिन्तितः। अतस्तदासक्तौ परा काष्ठा मे सञ्जातेति भावः। तेन च अद्य मम तस्य नलस्य प्राप्तिः, असुव्ययः प्राणहानिर्वा, शेषः अवशिष्टम्, एतत् द्वयमेव, तव हस्ते आस्ते वर्त्तते त्वदायत्तमित्यर्थः। त्वं यदि यतसे तदावश्यमेव नलं मां प्रापयितुमर्हसि; अतस्तत्प्राप्तिस्त्वदधीनैव, अथ न यतसे तदा मे प्राप्तिर्न स्यात्, तेन च मरणमिति तदपि त्वदधीनमेवेत्याशयः।

अत्र तुल्यबलयोर्नलप्राप्तिप्राणनाशयोर्विरोधस्य चातुरीयुतत्वात् विकल्पो नामालङ्कारः, "विकल्पस्तुल्यबलयो-र्विरोधश्चातुरीयुतः" इति दर्पणलक्षणात्; चतुर्थचरणे छेकानुप्रास इत्युभयोः संसृष्टिः। तथा "आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो/निदिध्यासितव्यश्च" इति श्रुतौ "श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः। मत्वा च सततं ध्येय एते दर्शनहेतवः।" इति वचनेनात्मदर्शनं प्रति श्रवणादित्रयस्य हेतुतया निर्द्देशात् यथा श्रवणादिद्वारा आत्मदर्शनपूर्वकतत्प्राप्तिलक्षणो मोक्षो गुर्व्वायत्तः, तदभावे च तदाथासाम्मृत्युः; तथा प्रकारान्तरलब्धश्रवणादिद्वारा नलदर्शनप्राप्तिपूर्व्वकतत्प्राप्तिस्त्वदायत्ता, तदभावे च कामात्याचारान्मृत्युरित्युपमा-ध्वनिः। पूर्व्वरागो रसः, प्रसादो गुणः वैदर्भी च रीतिः।

नीरन्ध्रा क्रतेति नीरन्ध्रिता, करोत्यर्थे नन्तात् नीरन्ध्रशब्दात् कर्म्मणि क्तः ॥८२॥

**বাঙ্গালা**—আমি তাঁহার কথা শুনিয়াছি, মোহের প্রভাবে সকল দিকেই তাঁহাকে দেখিয়াছি এবং নিরবচ্ছিন্নভাবে বুদ্ধিপ্রবাহ সঞ্চালিত করিয়া, তাঁহার ধ্যানও করিয়াছি। এখন আমার পক্ষে তাঁহার প্রাপ্তি কিম্বা প্রাণত্যাগ অবশিষ্ট এই দুইটাই তোমার হাতে রহিয়াছে ॥৮২॥

**अन्वयः**—आश्रितपालनोत्थं मत्प्राणविश्राणनजन्म पुण्यं सखीयताम्। अयि आर्य्य! वृथा विमर्शा निवार्य्यताम्, भयं भद्रे अपि इयं का मुद्रा ॥८३॥

सखीयतामिति। आश्रितस्य शरणागतस्य जनस्य ममेत्यर्थः पालनोत्थं रक्षणजनितम्, तथा मत्प्राणानां विश्राणनात् मह्यमेव दानात् जायत इति तच्च, पुण्यं धर्म्मः, सखीयतां बाहुल्येनोपार्ज्यताम्। मया सार्द्धं नलस्य योजने च एतत् द्वयं सम्भवति; इतरथा तु मम मरणमेवेत्याशयः। ननु त्वद्दमयन्त्या सार्द्धं

---

(१) श्रुतश्च दृष्टश्च। श्रुतः स दृष्टश्च। (२) ··· आश्रुतपालनोत्थम्।

स्वजीवमप्यर्थिमुदे (१) ददद्भ्यः तव त्रपा नेहगबद्धमुष्टेः ।
मह्यं मदीयान् यदसूनदित्सोः धर्मः कराद्भ्रश्यति कीर्त्तिधौतः ॥८५॥
दत्त्वा स्वजीवं (२) त्वयि जीवदेऽपि मुच्यामि जीवाधिकदे तु केन ।
विधेहि तस्यां त्वदृणेषु मोक्तुम् (३) असमुद्र-दारिद्र्य-समुद्र-मग्नाम् ॥८६॥

---

**अन्वयः**—मदीयान् असून् मह्यम् (एव) अदित्सोः ईदृग्बद्धमुष्टेः तव अर्थिमुदे स्वजीवम् अपि ददद्भ्यः यत् त्रपा न (जायते, तत्) कीर्त्तिधौतः धर्मः करात् भ्रश्यति ॥८५॥

बालचापल्येन साक्षेपमाह हंसेति। हे हंस! मदीयान् असून् मत्सम्बन्धिकान् प्राणान्, मह्यमेव, अदित्सोः दातुमनिच्छोः, बद्धा धनपतनभयाद्विहिता मुष्टिर्येन स बद्धमुष्टिः कृपणः, ईदृशोऽलौकिकबद्धमुष्टिर्यस्येति तस्य नितान्तकृपणस्येत्यर्थः, तव सम्बन्धिनी, अर्थिमुदे याचकसन्तोषाय, स्वजीवमपि निजजीवनमपि, ददद्भ्यः दधीचि-शिबिप्रभृतिभ्यः, यत् त्रपा लज्जा, न जायते। परस्मै स्वजीवनान्यपि ददतामन्तिके परस्मै परकीयमेव अददतो लज्जा जायेतैवेति भावः। तस्मात्, कीर्त्त्या दाननिबन्धनयशसा धौतो धवलीकृतः, धर्मः पुण्यम्, करात् हस्तात्, भ्रश्यति पतति। यथा च परस्मै परकीयद्रव्यस्यैव दाने आत्मनो न काचित् क्षतिः, अथ च धर्मो जायते; किन्तु तत्राप्यनिच्छोस्तव हस्तप्राप्त एव दानजन्यो धर्मः तन्निबन्धनं यशश्च भ्रश्यति; अतो मदीयानेव मह्यं देहीत्याशयः।

अत्र असुनलयोर्भेदेऽपि अभेदाध्यवसायादतिशयोक्तिः, तथा बद्धमुष्टेः कृतमुष्टेः करात् भ्रश्यतीति विरोधः बद्धमुष्टेः कृपणस्य करात् भ्रश्यतीत्यविरोध इति विरोधाभासश्चेत्यनयोरङ्गाङ्गिभावेन सङ्करः। पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः।

"बद्धमुष्टिर्दृढमुष्टी कृपाणो कृपणेऽपि च।" इति विश्वः।

"कर्णस्त्वचं शिबिर्मांसं जीवं जीमूतवाहनः। ददौ दधीचिरस्थीनि किमदेयं महात्मनाम्॥

इत्युक्तः ॥८५॥

**বাঙ্গালা**—হংস! তুমি আমার প্রাণই আমাকে দিতে ইচ্ছা করিতেছ না; সুতরাং তুমি কৃপণের শিরোমণি হইয়া পড়িয়াছ। অতএব যাঁহারা প্রার্থীদিগের সন্তোষের নিমিত্ত নিজেদের জীবনপর্য্যন্ত দান করিয়া থাকেন, তাঁহাদের নিকট তোমার লজ্জাও জন্মিতেছে না বলিয়া তোমার হস্ত হইতে কীর্ত্তিধৌত ধর্ম্ম স্খলিত হইয়া যাইতেছে ॥৮৫॥

**अन्वयः**—जीवदे अपि त्वयि स्वजीवं दत्त्वा मुच्यामि; तु जीवाधिकदे त्वयि केन मुच्यामि। तत् मां त्वदृणेषु मोक्तुम् असमुद्र-दारिद्र्य-समुद्र-मग्नां विधेहि ॥८६॥

दमयन्ती हंसान्तिके आत्मनश्चिरकृतज्ञतां याचते दत्त्वेति। हे हंस! जीवं जीवनमात्रं ददातीति तस्मिन् जीवदे त्वयि विषये, स्वजीवम् आत्मनो जीवनपर्य्यन्तमेव दत्त्वा, मुच्यामि अनृणीभवामि; तु किन्तु, जीवात् जीवनात् अधिकं पतित्वात् श्रेष्ठं नलं ददातीति तस्मिन् तादृशे त्वयि, केन वस्तुना कस्य वस्तुनो दानेनेत्यर्थः, मुच्यामि अनृणीभवामि, अपि तु केनापि नेत्यर्थः; जगति पतिं विना जीवनाधिकवस्त्वन्तराभावादिति भावः। तस्मात् नलदानात्, मां त्वदृणेषु मोक्तुं मोचनविषये, असमुद्रः असीमो यो दारिद्र्यमेव समुद्रस्तत्र मग्नाम् विधेहि कुरु मह्यं नलं पतिं दत्त्वा मां चिरकृतज्ञां विधेहीत्यर्थः।

अत्र चतुर्थपादे निरङ्गकेवलरूपकवृत्त्यनुप्रासयोरेकाश्रयानुप्रवेशरूपः सङ्करः। पूर्वरागो रसः, बन्धोत्कर्षस्य आरोहावरोहाभ्याम् ओजो गुणः, गौडी च रीतिः ॥८६॥

---

(१) आर्त्तमुदे। (२) दत्त्वात्मजीवम्। (३) त्वदृणान्मोक्तुम्।

क्रीणीष्व मज्जीवितमेव पण्यम् अन्यन्न चेदस्ति तदस्तु पुण्यम्।
जीवेशदातर्यदि ते न दातुं यशोऽपि तावत् प्रभवामि गातुम् ॥८७॥
वराटिकोपक्रिययापि लभ्यान् नेभ्या: कृतज्ञानथवाद्रियन्ते।
प्राणैः पणैः स्वं निपुणं भणन्तः क्रीणन्ति तानेव तु हन्त सन्तः ॥८८॥

বাঙ্গালা—তুমি আমাকে জীবনপর্য্যন্ত দান করিলেও, তোমাকে আমি নিজের জীবন দান করিয়া শুদ্ধ হইতে পারি; কিন্তু তুমি আমাকে জীবনাধিক বস্তু দান করিলে, আমি তোমাকে কি দান করিয়া শুদ্ধ হইব? অতএব তোমার ঋণপরিশোধের বিষয়ে আমাকে অসীম দারিদ্র্যসমুদ্রে মগ্ন কর (তোমার নিকট আমাকে চির ঋণী করিয়া রাখ) ॥৮৬॥

अन्वय:—मज्जीवितं पण्यम् एव क्रीणीष्व; चेत् अन्यत् न अस्ति, तत् पुण्यम् अस्तु। (हे) जीवेशदातः! यदि ते अन्यत् दातुं न प्रभवामि, (तथा) अपि यशः तावत् गातुं प्रभवामि ॥८७॥

नलदाने फलान्तरमाह क्रीणीष्वेति। हे हंस! मज्जीवितं मम जीवनस्वरूपम्, पण्यं विक्रेयद्रव्यमेव, क्रीणीष्व; प्रियतमनलदानविनिमयेनेत्याशयः। ननु तव जीवनक्रये मम किं नाम फलं तस्य यथेष्टविनियोगा-सम्भवादित्याह चेद् यदि, अन्यत् लौकिकं फलम्, नास्ति, तत् तदा पुण्यं धर्मः अस्तु; परजीवदानानुरूप-द्रव्यदानादित्यभिप्रायः। अथ पुण्यं खलु पारलौकिकफलजनकं तेन तन्न प्रार्थयामि, किन्तु ऐहिकफलजनकं किञ्चित् प्रार्थयामीत्याह—हे जीवेशदातः! प्राणेश्वरनलदानकारिन्! यदि ते तुभ्यम्, अन्यत् प्राणेश्वरतुल्यमूल्यकं द्रव्यम्, दातुं न प्रभवामि न शक्नोमि; अपि तथापि, यशः तादृशदाननिबन्धनां तव सुख्यातिम्, तावत् साक-ल्येन गातुं लोकमध्ये कीर्त्तयितुम्, प्रभवामि शक्नोमि। तेन यशःप्रचारात्मकैहिकमहाफलप्रत्याशयापि मह्यं मत्प्राणेश्वरं दातुमर्हसीति भावः।

अत्र जीवने पण्यत्वारोपस्य प्रकृतक्रयोपयोगितया परिणामालङ्कारः, द्वितीयचरणे दस्ति-दृत्विति-च्छेकानुप्रासः, उभयार्द्धयोरन्त्यानुप्रासश्चेत्येषां संसृष्टिः। तथा तदिति तदार्थे अवाचकमित्यवाचकत्वदोषः; "तदा तु" इति पाठे नैवासौ समाधेयः। चतुर्थे तथापदानुक्तावपि वक्त्र्या दमयन्त्याः काममग्नत्वात् न न्यूनपदत्वादोषः प्रत्युत गुण एव "हर्षावागन्दमग्नादेः स्यान्न्यूनपदता गुणः" इति साहित्यदर्पणात्। पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः।

"यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे।" इत्यमरः ॥८७॥

বাঙ্গালা—হে হংস! আমায় আমার প্রাণেশ্বরকে দিয়া, আমার জীবনরূপ বিক্রেয়-দ্রব্য ক্রয় কর; তাহাতে অন্য ফল যদি না হয়, তবে পুণ্যই হউক। হে প্রাণেশ্বরদাতা! আমি যদি তোমাকে প্রাণেশ্বরের তুল্যমূল্য দ্রব্য দিতে নাও পারি; তথাপি তোমার সমস্ত যশ গাইতে পারিব ॥৮৭॥

अन्वय:—अथवा इभ्याः वराटिकोपक्रियया अपि लभ्यान् कृतज्ञान् न आद्रियन्ते। तु स्वं निपुणं भणन्तः सन्तः प्राणैः (अपि) पणैः तान् एव क्रीणन्ति हन्त ॥८८॥

सज्जनाः खल्वल्पमप्युपकुर्वन्तीत्याह वराटिकेति। अथवा पक्षान्तरे, इभ्या धनिनो धनलुब्धा जना इत्यर्थः, वराटिकया एककपर्द्दकमात्रेण या उपक्रिया उपकारस्तेनापि, लभ्यानायत्तीकर्त्तव्यान्, कृतज्ञान् कृतोपकारकारिणो जनान्, न आद्रियन्ते न बहु मन्यन्ते, एककपर्द्दकव्ययेनापि चिरकृतज्ञजनानपि नायत्तीकुर्वन्तीत्यर्थः, धनलुब्धता-

स भूभृदष्टावपि लोकपालास्तैर्मे तदेकाग्रधियः प्रसेदे ।
न हीतरस्माद् घटते यदेत्य स्वयं तदाप्तिप्रतिभूर्ममाभूः ॥८९॥
अकाण्डमेवात्मभुवार्जितस्य भूत्वापि मूलं मयि वीरणस्य ।
भवान् मे किं नलदत्वमेत्य कर्त्ता हृदश्चन्दनलेपकृत्यम् ॥९०॥

---

दिति भावः । तु किन्तु, स्वमात्मानम्, निपुणं भणन्तः कार्य्यद्वारा लोकसमाजे कुशलं प्रकाशयन्तः, सन्तः साधवः, प्राणैरेव पणैर्विनिमयद्रव्यैः, तानेव कृतघ्नान् जनान्, क्रीणन्ति आयत्तीकुर्वन्ति । इन्त हर्षे । अतः साधुर्भवान् मदीयमेव प्रियतमं नलं मह्यं दत्वा मां चिरकृतज्ञां क्रीणातु इति भावः ।

अत्र इभ्यापेक्षया सताम् आधिक्यवर्णनात् व्यतिरेकालङ्कारः, लभ्यान् नेभ्या इति च्छेकानुप्रासः, पराद्धे तु वृत्त्यनुप्रास इत्येतेषां संसृष्टिः । माधुर्य्यं गुणः, वैदर्भी च रीतिः ।

"इभ्य आढ्यो धनी" इत्यमरः ॥८८॥

**বাঙ্গালা**—একটী কপর্দ্দকমাত্রের উপকার দ্বারাও যাঁহারা বশীভূত হইয়া থাকেন, সেই কৃতঘ্নদিগকেও ধনী লোকেরা আদর করে না; কিন্তু আপন আপন কার্য্য দ্বারাই আপনাদিগকে নিপুণ বলিয়া বিখ্যাতকারী সাধু লোকেরা প্রাণপর্য্যন্ত পণ করিয়াও সেই কৃতঘ্নদিগকে আয়ত্ত করিয়া থাকেন ।৮৮।

**अन्वयः**—सः भूभृत् अष्टौ अपि लोकपालाः ; तदेकाग्रधियः मे तैः प्रसेदे । हि (त्वं) स्वयम् आगत्य मम यत् तदाप्तिप्रतिभूः अभूः, (तत्) इतरस्मात् न घटते ॥८९॥

इतोऽपि त्वया मे भुवमेव नलो दातव्य इत्याह स इति । स प्रक्रान्तः, भूभृत् राजा नलः, अष्टावपि लोकपाला इन्द्राद्यष्टदिक्पालस्वरूपः ; "अष्टाभिर्लोकपालानां मात्राभिर्निर्मितो नृपः" इति स्मृते राज्ञो लोकपालांशसम्भूतत्वादिति भावः ; अतएव तस्मिन् नले एकाग्रा अनुरागातिशयादेकतानाः धीर्बुद्धिर्यस्यास्तस्याः, मे मम, तैरिन्द्रादिभिरष्टाभिरपि लोकपालैः, प्रसेदे प्रसन्नं जातम् ; नलस्य इन्द्रादिलोकपालस्वरूपतया नलध्यानेनैव इन्द्रादिध्यानस्य सिद्धत्वात् ध्यानेन च ध्येयस्य प्रसन्नतायाः शास्त्रीयत्वात् प्रत्यक्षसिद्धत्वाच्चेत्याशयः । हि यस्मात्, त्वं स्वयमागत्य मम यत् तस्य नलस्य आप्तौ लाभे, प्रतिभूर्लग्नकः, अभूर्भूतोऽसि, तत् इतरस्मात् इन्द्रादिलोकपालप्रसादभिन्नात् कारणात्, न घटते न सम्भवति । तस्मादधमर्णो यथा ऋणग्रहणाय लग्नकमनुरुन्धन्नवश्यमेव तत् प्राप्नोति, तथा अहमपि नललाभाय त्वामनुरुन्धती अवश्यमेव नलं प्राप्स्यामीति भावः ।

अत्र प्रसादं प्रति तदेकाग्रधीपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, तन्मूलता च विच्छित्तिः तेन च इन्द्रादयो लोकपाला मयि प्रसन्नाः तत एव च तव स्वयमागमनात् लग्नकभवनाच्चेत्यनुमानेन अनुमानालङ्कारः ; शेषपादे वृत्त्यनुप्रासश्चेति संसृष्टिः । पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ।

"स्युर्लग्नकाः प्रतिभुवः" इत्यमरः । प्रसेदे इति भावे लिट् ॥८९॥

**বাঙ্গালা**—সেই নলরাজা, আট জন দিক্পালেরই স্বরূপ ; সুতরাং আমি একাগ্রচিত্তে নলকে ধ্যান করি বলিয়া, সেই দিক্পালেরা আমার প্রতি প্রসন্ন হইয়াছেন । কারণ, তুমি নিজেই আসিয়া যে আমার নলপ্রাপ্তির বিষয়ে জামিন হইয়াছ, তাহা অন্য কারণ হইতে ঘটিতে পারে না ।৮৯।

**अन्वयः**—अकाण्डम् एव आत्मभुवा मयि अर्जितस्य वीरणस्य मूलं भूत्वा किं अपि भवान् नलदत्वम् एत्य मे हृदः चन्दनलेपकृत्यं किं न कर्त्ता ? ॥९०॥

अलं विलम्ब्य त्वरितुं हि वेला कार्ये किल स्थैर्यसहे विचारः।
गुरूपदेशं प्रतिभेव तीक्ष्णा प्रतीक्षते जातु न कालमर्त्तिः ॥८१॥

---

मम सन्तापशान्तिकारी भवानेव भविष्यतीत्याह पचाक्षमिति। पचाक्षमेव अनवसरमेव कन्यावस्थायाम-नुचितत्वात् अयुक्तकालमित्यर्थः यथा स्यात्तथा, आत्मभुवा कामेन, मयि अर्जितस्य उत्पादितस्य, एतस्य शब्दस्य 'कामविषयी ईदृशकथोपकथनस्ये'त्यर्थः, मूलं कारणम्, भूत्वा विरपि पक्षी सन्नपि भवान्, नलदत्वं मत्प्रियतमनल-दातृत्वम्, एत्य प्राप्य उपयुक्तप्रतीपकवाक्येन मह्यं नलं दत्त्वेत्यर्थः, मे मम, हृदः कामसन्तप्तहृदयस्य, चन्दनलिप-त्वं चन्दनलेपनकार्य्यं शीतलत्वमिति तात्पर्य्यम्, किं न कर्त्ता न करिष्यति, अपितु अवश्यमेव कर्त्तेत्यर्थः। कन्यावस्थायामीदृशः कामालापः सर्वथैवासङ्गतः, तस्य च कारणं भवानेव। सुतराञ्च तन्निबन्धनसन्तापशान्तिरपि त्वयैव कर्त्तुमुचितेति नलं दत्त्वा तां शान्तिं विधेहीति भावः।

पक्षान्तरे तु पचाक्षमेव अक्षमरहितमेव यथा स्यात्तथा, आत्मभुवा ब्रह्मणा, अर्जितस्य सृष्टस्य, वीरणस्य तदाख्यतृणविशेषस्य, मूलं प्रभवरूपो भूत्वा, भवान्, नदि इत्यर्थे, नलदत्वम् उशीरत्वम्, एत्य प्राप्य, मे मम हृदो वक्षसः, चन्दनलेपकत्वं चन्दनात्मकाङ्गरागलेपनकार्य्यम्, किं न कर्त्ता न करिष्यति, अपि तु अवश्यमेव कर्त्तेत्यर्थः।

अत्र वीरणस्येति शब्दच्छेदात् सभङ्गः शब्दश्लेषः, अन्यत्र त्वर्थश्लेषः, उशीरत्व-नलदातृत्वयोर्नलदेऽपि अभि-दायकतया अभेदाध्यवसायादतिशयोक्तिः, तथा आरोप्यमाणस्य मूलत्वस्य प्रकृतचन्दनलेपकत्यकरणोपयोगित्वात् परिणामः, एतेषाञ्च प्राकरणिकेन अन्येन कर्त्तुमशक्यत्वात् त्वमेव कर्त्तेति साहाय्यापेक्षया मत्कामवर्द्धिनुत्तम्या निदर्शना, अर्थापत्तिश्च एतेषामङ्गाङ्गिभावेन सङ्करः। पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः।

"वाच्यवस्त्व तवकान्ये वार्थेऽवसरनीरयोः। कुत्सिते हत्यमित्राकोऽस्त्र्यदं रहसि न स्त्रियाम्।" इति मेदिनी। "वि-विष्किर-पतत्त्रयः" "स्यावीरणं वीरतरं मूलेऽस्योशीरमस्त्रियोम्। अभयं नलदं सेव्यम्" इत्यमरः ॥८०॥

**বাঙ্গালা**—কামদেব অসময়তেই আমাতে এইরূপ কথোপকথন ঘটাইয়াছেন; পক্ষী হইয়াও তুমিই তাহার মূল। সুতরাং এখন তুমি নলকে দান করিয়া আমার হৃদয়ে চন্দন-লেপনের কার্য্য করিবে না কি? ॥৮০॥

**अन्वयः**—विलम्ब्य अलं, हि त्वरितुं वेला (वर्त्तते); स्थैर्य्यसहे कार्य्ये किल विचारः (कर्त्तव्यः)। तीक्ष्णा प्रतिभा गुरूपदेशम् इव तीक्ष्णा अर्त्तिः जातु कालं न प्रतीक्षते ॥८१॥

इदानीं नलमानयनीकर्त्तुं शीघ्रं प्रवर्त्तयति अलमिति। विलम्ब्य अलं नलमानयनीकर्त्तुं विलम्बो न कर्त्तव्यः; हि यस्मात्, त्वरितुं तस्मिन् कार्य्ये सत्वरीभवितुम्, वेला समयो वर्त्तते। अद्यशुभदिनमिदम्, तत् शुभदिने विवाहो भविष्यतीत्याह स्थैर्य्यसहे विलम्बक्षमे, कार्य्ये किल कर्म्मण्येव, विचारः शुभाशुभदिन-विवेकः कर्त्तव्य इति शेषः। अत्र कथमीदृशो ते त्वरेत्याह तीक्ष्णा सूक्ष्मा, प्रतिभा विलक्षणा बुद्धिः, गुरोः शिक्षकस्य उपदेशमिव, तीक्ष्णा तीव्रा, अर्त्तिः पीड़ा, जातु कदाचिदपि, कालं कालान्तरम्, न प्रतीक्षते न सहते। एतेनात्मनो महती कामपीड़ा सञ्जातेति सूचितम्।

अत्र श्रौतोपमा, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्चानयोरङ्गाङ्गिभावेन सङ्करः, सोऽपि च द्वितीयचरणस्थेन काव्यलिङ्गेन संसृज्यते। पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः।

विलम्ब्येति "अलंखल्वोः प्रतिषेधयोः क्त्वा वा" इति क्त्वा। त्वरितुमिति "कालसमयवेलासु तुमुन्" इति तुम् ॥८१॥

**अभ्यर्थनीयः स गतेन राज्ञा त्वया न शुद्धान्तगतो मदर्थम्।**
**प्रियाश्य-दाक्षिण्य-बलात् कृतो हि तदोदयेदन्यवधू-निषेधः ॥८२॥**
**शुद्धान्त-सम्भोग-नितान्ततुष्टे न नैषधे कार्य्यमिदं निगाद्यम्।**
**अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिः स्वदते तुषारा ॥८३॥**

---

**বাঙ্গালা**—হংস! বিলম্ব করিও না; কারণ, সত্বর হইবার সময় উপস্থিত হইয়াছে। কেন না, যে কার্য্য বিলম্ব সহিতে পারে, তাহাতেই শুভাশুভ দিনের বিচার করা উচিত। দেখ শুদ্ধ প্রতিভা যেমন গুরূপদেশের প্রতীক্ষা করে না; তেমন কোন প্রবল পীড়া, কখনও কালান্তর প্রতীক্ষা করিতে পারে না।৮১।

**अन्वयः**—गतेन त्वया शुद्धान्तगतः सः राजा मदर्थं न अभ्यर्थनीयः। हि तदा प्रियास्य-दाक्षिण्य-बलात् कृतः अन्यवधू-निषेधः उदयेत् ॥८२॥

इदानीं चतुर्भिः श्लोकैः स्वप्रार्थनानिवेदनावसरमाह अभ्यर्थनीय इति। गतेन इतः स्थानात्तत्समीपस्थितेन त्वया, शुद्धान्तगतः अन्तःपुरस्त्रीमध्यस्थितः, स राजा नलः, मदर्थं मन्निमित्तम्, न अभ्यर्थनीयः 'परिणयेन दमयन्तीं भवाननुगृह्णातु' इत्येवं न प्रार्थनीयः। हि यस्मात्, तदा तस्मिन् काले, प्रियायाः प्रियासु वा आस्यदाक्षिण्यबलात् मौखिकौदार्य्यवशात् कृतः नैव विहितः, अन्यवधूनिषेधः 'अनयैव भार्य्यैव वा ममाशा पूर्णा; तेनान्यां स्त्रियं न परिणेष्यामि' इत्येवंरूपः अन्यस्त्रीपरिणयननिषेधः, उदयेदाविर्भवेत्। तथा चान्यरमणीपरिणयेच्छायां सत्यामपि परिणीतरमणीसमीपे केवलमौखिकौदार्य्यवशात् तामिच्छां न प्रकाशयेत् प्रत्युतान्यरमणीपरिणयं निषिध्यादेः; तदा च तवोद्यमभङ्गो भवेदिति भावः।

अत्र पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥८२॥

**বাঙ্গালা**—হংস! তুমি সে স্থানে যাইয়া, অন্তঃপুরে স্ত্রীদিগের মধ্যে থাকাকালীন সে রাজাকে আমার জন্য কোন প্রার্থনা করিও না। কারণ, সে সময়ে প্রিয়তমাদিগের প্রতি মৌখিক উদারতাবশতঃ তাঁহার মুখ হইতে অন্য স্ত্রী বিবাহের নিষেধবাক্যই প্রকাশ পাইবে।৮২।

**अन्वयः**—शुद्धान्त सम्भोग-नितान्ततुष्टे नैषधे इदं कार्य्यं न निगाद्यम्। हि स्वादुः सुगन्धिः तुषारा (च) वारिधारा अपां तृप्ताय न स्वदते ॥८३॥

शुद्धान्तेति। शुद्धान्तानामन्तःपुरिकाणां सम्भोगेन रमणसुखोपभोगेन, नितान्ततुष्टे अत्यन्तसन्तुष्टे, नैषधे नले, इदं मद्विषयम्, कार्य्यं कर्त्तव्यम्, न निगाद्यं न वक्तव्यम्। हि यस्मात्, स्वादुः शर्करादिमिश्रणेन मधुरा, सुगन्धिः कर्पूरादिमिश्रणेन सौरभवती, तुषारा शीतला च, वारिधारा अविच्छिन्नजलपातः, अपां तृप्ताय जलपानेन लब्धतृप्तये जनाय, न स्वदते न रोचते। तथा च तादृशी सुस्पृहणीयापि जलधारा यथा जलपानेनैव पूर्वं निवृत्ततृष्णाय जनाय न रोचते, तथा अन्तःपुररमणीरमणेन निवृत्तकामाय नलाय विलक्षणगुणाप्यहं न रोचेयेति भावः।

अत एवात्र दृष्टान्तोऽलङ्कारः, तादृशजलधाराख्यकारणे सत्यपि रुचिरूपतत्कार्य्यानुत्पत्तेर्विशेषोक्तिश्चेत्यनयोरङ्गाङ्गिभावेन सङ्करः। पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः।

"शुद्धान्तोऽन्तःपुरे कक्षाभेदे योषिति भूपतेः" इत्यमरः। अपामिति "कर्त्तरि पूरणार्थस्य च" इति कारके षष्ठी। तृप्ताय त "रुच्यर्थानां प्रीयमाणः" इति सम्प्रदानत्वाच्चतुर्थी। सुगन्धिरिति "सुतपसु" इत्यादिना गन्धशब्दादिच्प्रत्ययः ॥८३॥

त्वया विधेया न गिरो मदर्थाः क्रुधा कदुष्णे हृदि नैषधस्य ।
पित्तेन दूने रसने सितापि तिक्तायते हंसकुलावतंस ! ॥৮৪॥
धरातुरासाहि मदर्थयाच्ञा कार्या न कार्यान्तरचुम्बिचित्ते ।
तदार्थितस्यानवबोधनिद्रा बिभर्त्त्यवज्ञाचरणस्य मुद्राम् ॥৮৫॥

---

বাঙ্গালা।—নল যখন অন্তঃপুরস্থ রমণীগণের সম্ভোগে অত্যন্ত সন্তুষ্ট থাকেন, তখন এই কার্য্যের কথা বলিও না। কারণ, যে ব্যক্তি জলপান করিয়া তৃপ্তি লাভ করিয়াছে; তাহার আর সুস্বচ্ছ, সুগন্ধি এবং শীতল জলধারাতেও রুচি হয় না ।৮৩।

अन्वयः—(हे) हंसकुलावतंस ! नैषधस्य हृदि क्रुधा कदुष्णे (सति) त्वया मदर्थाः गिरः न विधेयाः । पित्तेन दूने रसने सिता अपि तिक्तायते ॥৮৪॥

त्वयेति । हे हंसकुलावतंस ! हंसवंशालङ्कारस्वरूप ! नैषधस्य नलस्य, हृदि चित्ते, क्रुधा कुतोऽपि कोपेन, कदुष्णे ईषदुष्णे सति महता चित्तं महता क्रोधेनापि विशेषोष्णं न भवतीति कदुष्ण इत्युक्तम् । त्वया मदर्थाः मद्विषयाः, गिरो वाक्यानि, न विधेया न वक्तव्या इत्यर्थः । मद्विषयकवाक्यानां मधुरत्वे सत्यपि चित्तस्य कोपकलुषिततया कटुत्वप्रतीतेरेव सम्भवादिति भावः । तथा च पित्तेन दूने सन्तप्ते दूषित इत्यर्थः, रसने जिह्वायाम्, सितापि शर्करापि, तिक्तायते तिक्तरसनिम्बादिवदाचरति ।

अत्रापि दृष्टान्तोऽलङ्कारः व्यतिरेकोपमया संसृज्यते । पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ।

"रसनं ध्वनिते स्वादे रसज्ञारास्रयोरपि ।" "सितस्त्ववसिते बद्धे वर्णे सिता तु शर्करा" इति च हेमचन्द्रः ।

कदुष्ण इति "कोः कत्" इति कुशब्दस्य कदादेशः । दून इति "टुदु उपतापे" इति दुधातोः "स्वादय ओदितश्च" इति निष्ठानत्वम् "दुग्वोर्दीर्घश्च" इति दीर्घत्वञ्च ॥৮৪॥

বাঙ্গালা।—হে হংসকুলভূষণ ! নলের চিত্ত কোপে কলুষিত থাকিলে তুমি আমার বিষয়ের কথাগুলি বলিও না। কারণ, পিত্ত দ্বারা রসনা কলুষিত থাকিলে; তাহাতে শর্করাও তিক্তের ন্যায় অনুভূত হয় ।৮৪॥

अन्वयः—धरातुरासाहि कार्यान्तरचुम्बिचित्ते (सति) मदर्थयाच्ञा न कार्या । तदा अर्थितस्य अनवबोधनिद्रा अवज्ञाचरणस्य मुद्रां बिभर्त्ति ॥৮৫॥

धरेति । धरातुरासाहि क्षितीन्द्रे नले, कार्यान्तरचुम्बिचित्ते अन्यकर्मनिविष्टमनसि सति, मदर्थयाच्ञा मत्प्रयोजनप्रार्थना, न कार्या त्वया न कर्त्तव्या । कथमेतदित्याह तदा तस्मिन् काले, अर्थितस्य त्वया प्रार्थितस्य विषयस्य, अनवबोध एव कार्यान्तरचुम्बिचित्तत्वात् नलस्य अनवगम एव निद्रा इन्द्रियविश्रामः, अवज्ञाचरणस्य अर्थितविषये अवहेलाकरणस्य, मुद्रां चिह्नम्, बिभर्त्ति धारयति भविष्यत्सामीप्ये वर्त्तमानेति धारयिष्यतीत्यर्थः । तथात्वे च तदौत्सुक्यभङ्गात् पुनस्तदुत्थापनप्रसक्तिर्न स्यादिति भावः ।

अत्र याच्ञाया अकर्त्तव्यत्वं प्रति परार्द्धगतवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम्, अनवबोधनिद्रेति निरङ्गं केवलरूपकम्, कार्या कार्येति निद्रा-मुद्रेति च च्छेकानुप्रास इत्येतेषां मिथो निरपेक्षतया संसृष्टिः । पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ।

धरातुरासाहीति तुराशब्दोपपदे सहधातोः "सहश्छन्दसि" इति ण्वि रूपम् । छन्दसीति तु प्रायिकम् । तथा च कुमारसम्भवेऽपि प्रयोगः—"तुरासाहं पुरोधाय धाम स्वायम्भुवं ययुः" ॥৮৫॥

বাঙ্গালা।—মহারাজ নলের চিত্ত যখন অন্য কার্য্যে নিবিষ্ট থাকিবে, তখনও তুমি

বিঘ্নেন বিজ্ঞাপ্যমিদং নরেন্দ্রে তস্মাত্ত্বয়াস্মিন্ সময়ং সমীক্ষ্য।
আত্যন্তিকাসিদ্ধি-বিলম্বিসিদ্ধ্যোঃ কার্য্যস্য কার্য্যস্য শুভা বিভাতি ॥৮৫॥
ইত্যুক্তবত্যা যদলোপি লজ্জা সানৌচিতী চেতসি নশ্চকাস্তু।
স্মরস্তু সাক্ষী তদদোষতায়া উন্মাদ্য যস্তাং তদবীবদত্তাম্ ॥৮৬॥

---

আমার জন্য প্রার্থনা করিও না। কারণ, তখন সেই প্রার্থিত বিষয়ের অনবগতিরূপ নিদ্রা, অবজ্ঞা করার লক্ষণ ধারণ করিবে।৯৫।

**অন্বয়ঃ**—তস্মাৎ (হে হংস!) বিঘ্নেন ত্বয়া সময়ং সমীক্ষ্য অস্মিন্ নরেন্দ্রে ইদং বিজ্ঞাপ্যম্। কার্য্যস্য আত্যন্তিকাসিদ্ধি-বিলম্বিসিদ্ধ্যোঃ (মধ্যে) কা আর্য্যস্য শুভা বিভাতি? ॥৮৫॥

বক্তব্যমুপসংহরতি বিঘ্নেনেতি। তস্মাৎ পূর্ব্বোক্তকারণাৎ, হে হংস! বিঘ্নেন অবসরজ্ঞেন ত্বয়া, সময়মবসরম্, সমীক্ষ্য দৃষ্ট্বা, অস্মিন্ নরেন্দ্রে নলে, ইদং মৎপ্রার্থনম্, বিজ্ঞাপ্যং নিবেদনীয়ম্। অথ তথাত্বে বিলম্বেনৈব তৎকার্য্যসিদ্ধির্ভবিষ্যতীত্যাহ কার্য্যস্য প্রয়োজনস্য, আত্যন্তিকী আত্যন্তিকী অসিদ্ধির্যেতি আত্যন্তিকাসিদ্ধিঃ সিদ্ধেরত্যন্তাভাবঃ, বিলম্বিনী পরকালভাবিনী যা সিদ্ধিরিতি বিলম্বিসিদ্ধিঃ সিদ্ধেঃ প্রাগভাবঃ তয়োর্মধ্যে, কা কতরা, আর্য্যস্য মাননীয়স্য তব, শুভা আয়াসত্বাৎ ভদ্রা, বিভাতি প্রতিভাতি বিবেচনসিদ্ধা ভবতি? তদ্‌ব্রূহীতি শেষঃ। তথা চ কার্য্যস্য আত্যন্তিকাসিদ্ধৌ তদাশায়া অপি লোপঃ, তৃষ্ণাবন্ধনস্থিরং গরীয়াননুতাপশ্চ; বিলম্বিসিদ্ধৌ তু সিদ্ধেঃ পূর্ব্বং যাবৎ কিয়ৎপ্রশান্তিঃ পরঞ্চ গরীয়ানানন্দ ইতি তয়োর্মধ্যে বিলম্বিসিদ্ধিরেব সর্ব্বথা শ্রেয়সীতি মম মতমিত্যবসর এব প্রতীক্ষণীয় ইত্যাশয়ঃ।

অত্রাপি পূর্ব্ববৎ কাব্যলিঙ্গম্, বিঘ্নেন বিজ্ঞাপ্যমিতি সময়ং সমীক্ষ্যেতি চ ছেকানুপ্রাসঃ, কার্য্যস্য কার্য্যস্যেতি যমকঞ্চেত্যেতেষাং সংসৃষ্টিঃ। পূর্ব্বরাগো রসঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ।

আত্যন্তিকীতি কোপধত্বেন "কোপধায়াশ্চ" (?) ইতি পুংবদ্ভাবনিষেধপ্রসক্তাবপি তদ্বাধকত্বাৎ "কর্ম্মধারয়ে তু পুংবদ্ভাবো বিধীয়তে" ইতি পুংবদ্ভাবঃ ॥৮৫॥

বাঙ্গালা—অতএব হংস! তুমি বিজ্ঞলোক; সুতরাং অবসর প্রতীক্ষা করিয়া, আমার বিষয় সেই রাজাকে জানাইবে। কেন না, কার্য্যের একেবারেই সিদ্ধি না হওয়া, আর বিলম্বে সিদ্ধি হওয়া এই দুইটীর মধ্যে তোমার মতে কোন্‌টী ভাল বলিয়া বিবেচনা হয়, (তাহা বল)।৯৬।

**অন্বয়ঃ**—ইতি উক্তবত্যা যৎ লজ্জা অলোপি, সা অনৌচিতী নঃ চেতসি চকাস্তু। তু স্মরঃ তদদোষতায়াঃ সাক্ষী; যঃ তাম্ উন্মাদ্য তৎ তৎ অবীবদৎ ॥৮৬॥

ইত্থমালাপেন জাতং দময়ন্ত্যা নির্লজ্জতাদোষং কবিঃ পরিহরতি ইত্যেতি। ইতি ইত্থম্, উক্তবত্যা কথয়ন্ত্যা দময়ন্ত্যা কর্ত্র্যা, যৎ লজ্জা, অলোপি ত্যক্তা, সা লজ্জাত্যাগরূপা অনৌচিতী অনৌচিত্যম্, নঃ অস্মাকং কবিপ্রভৃতীনাম্, চেতসি, চকাস্তু প্রকাশতাম্। তু কিন্তু, স্মরঃ কামদেবঃ, তস্যা দময়ন্ত্যাঃ অদোষতায়া লজ্জাত্যাগরূপদোষরাহিত্যতায়াম্, সাক্ষী সাক্ষাৎ দ্রষ্টা। অনুপস্থিতত্বাৎ স কথং সাক্ষী স্যাদিত্যাহ যঃ স্মরঃ, তাং দময়ন্তীম্, উন্মাদ্য নয়োর্দ্ধেন উন্মত্তীকৃত্য, তৎ তৎ "বিনামুনা স্বাত্মনি তু প্রহর্তুম্" ইত্যাদিরূপম্, অবীবদৎ বাদিতবান্। উপস্থিতস্যাভাবে কথমুন্মত্তীকরণমিত্যুপস্থিতঃ স্মরঃ প্রাক্ দময়ন্তীং প্রমত্তাং কৃত্বা আত্মান্তঃ প্রবেশ্য ততোহন্যদাত্ পরস্বপক্ষত্বাদিতি স তন্নির্দ্দোষতায়া সাক্ষী ভবিতুমর্হত্যেব। তথা চ দময়ন্তী কামবশাদেব তাদৃশী প্রগল্ভতামকার্ষীৎ পুনঃ স্বভাবত ইতি প্রকৃতৌ সা নির্দ্দোষৈবেতি ভাবঃ।

অত্র বিনোচিতেতি ছেকানুপ্রাসোহলঙ্কারঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৮৬॥

উন্মত্তমাসাদ্য হরঃ স্মরশ্চ দ্বাবপ্যসীমাং মুদমুদ্বহেতে।
পূর্বঃ পরস্পর্দ্ধিতয়া প্রসূনং নূনং দ্বিতীয়ো বিরহাধিদূনম্ ॥৮৮॥
তথাভিধাত্রীমথ রাজপুত্রীং নির্ণীয় তাং নৈষধনম্ররাগাম্।
অমোচি চঞ্চুপুটমৌনমুদ্রা বিহায়সা তেন বিহস্য ভূয়ঃ ॥৮৯॥

---

বাঙ্গালা—দময়ন্তী এইরূপ বলিতে থাকিয়া যে লজ্জা ত্যাগ করিয়াছিলেন, তাহা আমাদের মনে অনুচিত বলিয়া প্রকাশিত হউক ; কিন্তু তাঁহার নির্দোষতার বিষয়ে স্বয়ং কামদেবই সাক্ষী ; যিনি তাঁহাকে উন্মত্ত করিয়া সেই সেই কথা বলাইয়াছিলেন।৮৭॥

অন্বয়:—হরঃ স্মরশ্চ (এতৌ) দ্বৌ অপি উন্মত্তম্ আসাদ্য নূনম্ অসীমাং মুদম্ উদ্বহেতে। পূর্বঃ পরস্পর্দ্ধিতয়া প্রসূনম্ (উন্মত্তম্ আসাদ্য মুদম্ উদ্বহতে) ; দ্বিতীয়ঃ (তু) পরস্পর্দ্ধিতয়া বিরহাধিদূনম্ (উন্মত্তং জনম্ আসাদ্য মুদম্ উদ্বহতে) ॥৮৮॥

ননু দময়ন্ত্যা উন্মত্তীকরণে স্মরস্য কিং প্রয়োজনমিত্যাহ উন্মত্তমিতি। হরঃ শিবঃ, স্মরঃ কামশ্চ, এতৌ দ্বৌ অপি জনৌ, উন্মত্তং নাম পদার্থম্, আসাদ্য প্রাপ্য, নূনং নিশ্চিতমেব, অসীমাম্ অনন্তাম্, মুদম্ আনন্দম্, উদ্বহেতে ধারয়তঃ। অথ তয়োর্দ্বয়োরপি এক এব উন্মত্ত পদার্থঃ, উত বা বিভিন্ন ইত্যাহ পূর্বঃ তয়োর্মধ্যে প্রথমঃ শিবঃ, পরস্মিন্ স্মরে স্পর্দ্ধিতয়া স্পর্দ্ধাশালিতয়া হেতুনা, প্রসূনং পুষ্পং ধুস্তূরপুষ্পাত্মকমিত্যর্থঃ উন্মত্তম্ আসাদ্য অসীমাং মুদমুদ্বহতে ; তস্য ধুস্তূরপ্রিয়ত্বাদিতি ভাবঃ। দ্বিতীয়ঃ স্মরস্তু, পরস্মিন্ হরে স্পর্দ্ধিতয়া স্পর্দ্ধাশালিতয়া হেতুনা, বিরহাধিনা প্রণয়িজনবিচ্ছেদজনিতমানসকষ্টেন দূনং সন্তপ্তম্, জনমাসাদ্য অসীমাং মুদমুদ্বহতে ; তস্যাপি স্বাবির্ভাবেন লোকোন্মাদকত্বাদিত্যভিপ্রায়ঃ। তথা চ হরস্মরৌ পরস্পরমেব। যেন হরো যদা ধুস্তূরপুষ্পাত্মকমুন্মত্তমাসাদ্য মোদতে ; তদা স্মরোঽপি তদবলোক্য তৎস্পর্দ্ধয়া স্বাবির্ভাবেন উন্মত্তীকৃতং জনমাসাদ্য মোদতে ; এবমুন্মত্তেন জনেন মোদমানং স্মরমালোক্য তৎস্পর্দ্ধয়া হরোঽপি ধুস্তূরপুষ্পাত্মকেন উন্মত্তেন মোদতে। ইত্যেবম্ উভয়োরপি পরস্পর্দ্ধিতা জ্ঞাতব্যা। "অত এবাসীমানন্দলাভ এব দময়ন্ত্যা উন্মত্তীকরণে স্মরস্য প্রয়োজনমিত্যাশয়ঃ।

অত্র উন্মত্তমিতি প্রকৃতিশ্লেষঃ, তথা হরঃ স্মরঃ ইত্যনয়োঃ প্রস্তুতাপ্রস্তুতয়োরেকোদ্বহনক্রিয়াভিসম্বন্ধাৎ দীপকম্, নূনমিতি বাচকোপাদানাৎ বাচ্যা ক্রিয়োৎপ্রেক্ষা, দ্বিতীয়ার্দ্ধে অন্যত্র তুল্যবৎ তেষাং সংসৃষ্টিঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ।

"উন্মত্ত উন্মদবতি ধুস্তূরমুচুকুন্দয়োঃ" ইতি বিশ্বঃ।

উদ্বহেতে ইতি যজাদিত্বাদাত্মনেপদম্ ॥৮৮॥

বাঙ্গালা—মহাদেব ও কামদেব এই দুই জনই উন্মত্তকে পাইয়া অসীম আনন্দ অনুভব করেন। তাঁহাদের মধ্যে মহাদেব, কামদেবের প্রতি স্পর্দ্ধাপ্রযুক্ত উন্মত্তনামক পুষ্প (ধুস্তূরপুষ্প) পাইয়া অসীম আনন্দ অনুভব করেন ; আর কামদেবও মহাদেবের প্রতি স্পর্দ্ধাবশতঃ, বিরহদুঃখসন্তপ্ত উন্মত্ত (উন্মাদবিশিষ্ট) ব্যক্তিকে পাইয়া অসীম আনন্দ অনুভব করেন।৮৮।

অন্বয়:—অথ তেন বিহায়সা তথা অভিধাত্রীং তাং রাজপুত্রীং নৈষধনম্ররাগাং নির্ণীয় বিহস্য ভূয়ঃ চঞ্চুপুটমৌনমুদ্রা অমোচি ॥৮৯॥

इदं यदि क्ष्मापतिपुत्रि ! तत्त्वं पश्यामि तन्न स्वविधेयमस्मिन् ।
त्वामुच्चकैस्तापयता नृपश्च पञ्चेषुणैवाजनि योजनेयम् ॥१००॥
त्वद्बद्धबुद्धेर्बहिरिन्द्रियाणां तस्योपवासव्रतिनां तपोभिः ।
त्वामद्य लब्ध्वामृततृप्तिभाजां स्वदेवभूयं चरितार्थमस्तु ॥१०१॥

---

तथेति। अथ दमयन्तीकथनानन्तरम्, तेन विहायसा पक्षिणा हंसेन, तथा पूर्वोक्तप्रकारेण, अभिधात्रीं वदन्तीम्, तां राजपुत्रीं दमयन्तीम्, नैषधे नले बद्धो गाढमर्पितः रागः अनुरागो यया तां तथाविधाम्, निर्णीय उक्तवाक्यजातेन निश्चित्य, विहस्य स्मितं कृत्वा, भूयः पुनरपि, चञ्चुपुटस्य ओष्ठद्वयस्य मौनं तूष्णीम्भाव एव मुद्रा भङ्गी सा, अमोचि त्यक्ता वक्तुमारब्धमित्यर्थः।

अत्र प्रथमे चतुर्थे च पादे छेकानुप्रासोऽलङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः।

"विहायो व्योमपक्षिणोः" इति हेमचन्द्रः ॥९९॥

বাঙ্গালা—রাজকন্যা দময়ন্তী সেই ভাবে বলিতেছিলেন; সুতরাং তিনি নলের প্রতি অত্যন্ত অনুরক্ত হইয়া পড়িয়াছেন; এইরূপ নিশ্চয় করিয়া সেই পক্ষী (হংস), ঈষৎ হাস্য করিয়া, পুনরায় চঞ্চুপুটের মৌনভাব পরিত্যাগ করিল (বলিতে লাগিল) ॥৯৯॥

অন্বয়ঃ—(হে) क्ष्मापतिपुत्रि ! इदं यदि तत्त्वम्, तत् अस्मिन् स्वविधेयं न पश्यामि। त्वां नृपञ्च उच्चकैः तापयता पञ्चेषुणा एव इयं योजना अजनि ॥१००॥

यदर्थं मुखमौनमुद्रा अमोचि तद्वाक्यमाह इदमिति। हे क्ष्मापतिपुत्रि ! राजकन्ये ! इदं "चेतो नलं कामयते मदीयम्" इत्यादिरूपम्, यदि तत्त्वम् याथार्थ्यम् एव एव यदि ते निश्चय इत्यर्थः, तत् तदा, अस्मिन् तव प्रार्थनापूरणे, स्वस्य आत्मनो मम विधेयं किञ्चिदपि कर्त्तव्यम्, न पश्यामि। कथं न पश्यसीत्याह-त्वां नृपं नलञ्च, उच्चकैरतिशयेन, तापयता परस्परासक्तिवशात् वियोगसन्तापेन व्यथयता, पञ्चेषुणा कामेनैव, इयं योजना नलदमयन्त्योर्युवयोः सम्मेलनम्, अजनि जनिता कृता। "इयोस्तप्तयोः सन्धिः स्यादयःपिण्डयोरिव" इति न्यायादिति भावः।

अत्र स्वविधेयादर्शनं प्रति पराद्दैगतवाक्यार्थो हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गम्, तापयतेत्येकया क्रियया त्वां नृपमित्युभयोः कर्मतयाभिसम्बन्धात् तुल्ययोगिता, चतुर्थपादे छेकानुप्रासश्चेति संसृष्टिः। तथा तदिति तदेत्यर्थस्य अवाचकमित्यवाचकत्वदोषः; स च 'तदा न वीक्षे स्वविधेयमस्मिन्' इति पाठेन समाधेयः। प्रसादो गुणः, वैदर्भी च रीतिः ॥१००॥

বাঙ্গালা—হে রাজকন্যে ! এইরূপই যদি তোমার নিশ্চয় হইয়া থাকে, তবে এবিষয়ে আমার কর্ত্তব্য কিছুই দেখিতেছি না। কারণ, তোমাকে ও নলকে অত্যন্ত সন্তপ্ত করতঃ কামদেবই এই সম্মেলন ঘটাইয়া রাখিয়াছেন ॥১০০॥

অন্বয়ঃ—त्वद्बद्धबुद्धेः तस्य उपवासव्रतिनां बहिरिन्द्रियाणां तपोभिः अद्य त्वां लब्ध्वा अमृततृप्तिभाजां (सतां) स्वदेवभूयं चरितार्थम् अस्तु ॥१०१॥

दमयन्त्यनुरागमाकर्ण्य नलस्याप्यनुरागं विवृणोति त्वदिति। हे दमयन्ति ! त्वयि बद्धा प्रगाढमर्पिता बुद्धिरन्तःकरणं येन तस्य अनवरतमेव त्वां चिन्तयत इत्यर्थः, तस्य नलस्य, उपवासः स्वस्वविषयग्रहणरूपो भोजनाभावः स एव व्रतं नियमः तद्वतामस्तीति तेषाम्। तथा च षड्विधप्रत्यक्षं प्रति मनसः कारणत्वेन मनो योगाभावे चक्षुरादीनामिन्द्रियाणां स्वस्वविषयग्रहणसामर्थ्यं न तिष्ठति। तेन च तस्य मनसः सर्वदैव त्वयि संसः

तुल्यावयोर्मूर्त्तिरभून्मदीया दग्धा परं सास्य न ताप्यतेऽपि ।
इत्यभ्यसूयन्निव देहतापं तस्यातनुस्त्वद्विरहाद्विधत्ते ॥१०२॥
लिपिं दृशा भित्तिविभूषणं त्वां नृपः पिबन्नादरनिर्निमेषः ।
चक्षुर्भरैरर्पितमात्मचक्षूरागं स धत्ते रचितं त्वया च (१) ॥१०३॥

---

त्वत्तेन अन्यानि चक्षुरादीनीन्द्रियाणि रूपादीन् स्वस्वविषयान् न गृह्णन्ति ; तदेव तेषामुपवास इति भावः । बहिरिन्द्रियाणां चक्षुरादीनाम्, तपोभिः तादृशोपवासरूपाभिस्तपस्याभिः करणैः, अद्य त्वां लब्ध्वा, अमृततृप्तिं पीयूषपानतृप्तिं भजन्त इति तेषां तादृशानां सताम्, स्वेषां तेषामेवेन्द्रियाणां दैवभूयं देवत्वम्, चरितार्थं सार्थकम् अस्तु भवतु । तथाहि कैचिज्जना यथा उपवासव्रतात्मकतपस्याभिर्भगवन्तं लब्ध्वा अमृतपानतृप्तिभाजः सन्तो देवा भवन्ति ; तथा सूर्य्यादिदेवताधिष्ठानमात्रेण देवरूपाणि नलस्य चक्षुरादीनीन्द्रियाणि तादृशोपवासात्मकतपोभिः त्वां लब्ध्वा त्वद्रूपाद्यनुभवात्मकामृतपानतृप्तिभाञ्जि सन्ति वस्तुत एव देवा भवन्तु अमृतपाननिबन्धनतृप्तिभाजामेव देवत्वात् । चक्षुस्त्वद्रूपात्मकममृतम्, कर्णं त्वद्वचनरूपममृतम् नासिका त्वदङ्गसौरभरूपममृतम्, त्वक् त्वदङ्गस्पर्शात्मकममृतम्, रसना च त्वदधररसरूपममृतं पीत्वा प्रकृतदेव एव भवत्वित्याशयः ।

अतएवात्र प्रस्तुतेषु बहिरिन्द्रियेषु अप्रस्तुततादृशतपस्विजनव्यवहारसमारोपात् समासोक्तिरलङ्कारः त्वद्रूपबुद्धेरिति च्छेकानुप्रासेन संसृज्यते । पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ।

दैवभूयमिति "भावे भुवः" इति भुवः क्यप् । चक्षुरादीनामिन्द्रियाणां सूर्य्याद्यधिष्ठातृत्वं सांख्यसारादौ द्रष्टव्यम् ॥१०१॥

বাঙ্গালা—নল নিজের মনটীকে তোমাতেই আবদ্ধ করিয়াছেন; তাহাতে তাঁহার নয়নপ্রভৃতি বহিরিন্দ্রিয়গুলি উপবাসব্রতই করিতেছে; আজ সেই তপস্যায় সেগুলি তোমাকে পাইয়া অমৃতপানের তৃপ্তিলাভ করিবে এবং তাহাতেই সেগুলির দেবত্ব সার্থক হইবে ॥১০১॥

**अन्वयः**—आवयोः मूर्त्तिः तुल्या अभूत्, परं मदीया दग्धा, अस्य सा न ताप्यते अपि । इति अभ्यसूयन् इव अतनुः त्वद्विरहात् तस्य देहतापं विधत्ते ॥१०२॥

तुल्येति । आवयोर्मम च नलस्य च, मूर्त्तिराकृतिः, तुल्या समाना, अभूत् पूर्वमासीत् ; परं मदीया सा मूर्त्तिः, दग्धा शिवेनेति शेषः । किन्तु अस्य नलस्य, सा मूर्त्तिः, न ताप्यते अपि केनचिन्न तापविषयीक्रियते अपि । इति अभ्यसूयन्निव ईर्ष्यन्निव, अतनुरनङ्गः, त्वद्विरहाद्धेतोः, तस्य नलस्य, देहतापं विधत्ते करोति ।

अत्र क्रियोत्प्रेक्षालङ्कारः, पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥१०२॥

বাঙ্গালা—'পূর্বে আমাদের দুই জনেরই আকৃতি সমান ছিল; তাহার পর শিব আমার শরীর দগ্ধ করিয়া ফেলিয়াছেন; কিন্তু নলের শরীর কেহ সন্তপ্তও করিল না' এইরূপ ঈর্ষ্যা করিয়াই যেন কামদেব তোমার বিরহবশতঃ নলের দেহসন্তাপ জন্মাইতেছেন ॥১০২॥

**अन्वयः**—सः नृपः आदरनिर्निमेषः (सन्) दृशा भित्तिविभूषणं लिपिं त्वां पिबन् चक्षुर्भरैः अर्पितं त्वया रचितश्च आत्मचक्षूरागं धत्ते ॥१०३॥

---

(१) त्वया नु ।

पातुर्दृशाऽऽलेख्यमयीं नृपस्य त्वामादरादस्तनिमीलयाश्चि ।
ममेदमित्यश्रुणि नेत्रवृत्तेः प्रीतेर्निमेषच्छिदया विवादः ॥१०४॥
त्वं हृद्गता भैमि ! बहिर्गतापि प्राणायिता नासि कयास्य गत्या ।
न चित्तमाक्रामति तत्र चित्रम् (१) एतन्मनो यद्भवदेकवृत्ति ॥१०५॥

नलस्य कामदशा विप्रलम्भाह लिपिमिति । स नृपो नलः, आदरेण त्वां प्रत्यादरेण निर्निमेषः सन्, दृशा चक्षुषा, भित्तेर्विभूषणं चित्रावालङ्कारभूताम्, लिपिं चित्रमयीं त्वाम्, पिबन् तत्कदृक्षया पश्यन्, चक्षुषोर्निर्निमेषत्वात् आनन्दातिशयाच्च निःसृतैरश्रुप्रवाहैः, अपि तमुत्पादितम्, त्वया रचितं कृतञ्च, आत्मनश्चक्षुषोः रागं रक्तिमानं दृष्टिनिबन्धनमनुरागञ्च, धत्ते धारयति । अश्रुप्रवाहैः रक्तिमा त्वया चानुराग इति भावः । एतेन नयनप्रीतिरूपा कामदशा दर्शिता ।

अत्र चक्षूरागमिति पदश्लेषोऽलङ्कारः । पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः । दश कामदशा यथा—"नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ सङ्कल्पः । निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः । उन्मादो मूर्च्छा मृतिरित्येताः स्मरदशा दशैव स्युः ॥" इति ॥१०३॥

বাঙ্গালা—সেই রাজা আদরবশতঃ নির্নিমেষ হইয়া, নয়ন দ্বারা দেওয়ালের অলঙ্কারস্বরূপ তোমার চিত্র দর্শন করতঃ, অশ্রুপ্রবাহকৃত এবং তোমার কৃত চক্ষুরাগ( চক্ষুর রক্তিম, দর্শননিবন্ধন অনুরাগ) ধারণ করিতেছেন ॥১০৩॥

**अन्वयः**—आदरात् अस्तनिमीलया दृशा आलेख्यमयीं त्वां पातुः नृपस्य नेत्रवृत्तेः प्रीतेः निमेषच्छिदया (सह) अश्रुणि 'मम इदम्' इति विवादः अस्ति ॥१०४॥

उक्तामेव कामदशां प्रकारान्तरेण पुनराह पातुरिति । आदरात् आग्रहौत्सुक्यातिशयात्, अस्ता गता निमीला निमेषो यस्यास्तया, दृशा चक्षुषा, आलेख्यमयीं भित्त्यादौ चित्रितां त्वाम्, पातुः रतिशयेन पानशीलस्य, नृपस्य नलस्य, नेत्रयोर्नयनयोः वृत्तिर्व्यापारो यस्यास्तस्याः, प्रीतेः प्रणयस्य, निमेषच्छिदया निमेषविरामेण सह, अश्रुणि नयनजलविषये, 'मम इदं मज्जनितमेतदश्रु' इति इत्थम्, विवादः कलहः, अस्ति वर्त्तते । तथा च चक्षूरागेण निर्निमेषदर्शनेन च अश्रुप तमत्पत्तेः चक्षूरागो वदति—'इदमश्रु मयैव जनितम्'; निर्निमेषदर्शनञ्च ब्रूते 'मयैवेदं जनितम्' इत्युभयविषयत्वात् द्वयोर्विवादः उभयकार्य्यमिति भावः ।

अत्र तादृशविवादासम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिरलङ्कारः, पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ।

पातुरिति ताच्छील्यार्थे तृन्प्रत्ययात् आलेख्यमयीं त्वामिति कर्म्मणि "न लोकाव्यय" इति षष्ठीनिषेधः । छिदेति भिदादित्वादङ् ॥१०४॥

**বাঙ্গালা**—মহারাজ নল যখন আদরবশতঃ নির্নিমেষ নয়নে তোমার চিত্র দেখিতে থাকেন, তখন তাঁহার নয়ন হইতে অশ্রুজল পড়িতে থাকে; সেই সময়ে নয়নপ্রীতি বলে 'এ অশ্রু আমি জন্মাইয়াছি' আবার নির্নিমেষ বলে 'ইহা আমি জন্মাইয়াছি' এই ভাবে এক অশ্রুজল বিষয়ে তাহাদের উভয়ের বিবাদ চলিতে থাকে ॥১০৪॥

**अन्वयः**—(हे) भैमि ! बहिर्गता अपि हृद्गता त्वं कया गत्या अस्य प्राणायिता न असि ? (अतएव) एतन्मनः यत् भवदेकवृत्ति, तत्र चित्तं चित्रं न आक्रामति ॥१०५॥

(१) न चित्रमाक्रामति तत्र चित्तम् ।

अजस्रमारोहसि दूरदीर्घां सङ्कल्पसोपानततिं तदीयाम् ।
श्वासान् स वर्षत्यधिकं पुनर्यत् ध्यानात्तव त्वन्मयतामवाप्य ॥१०६॥

---

दयासरमाह अन्तरिति । हे भैमि ! भीमराजपुत्रि ! वहिर्गतापि दूरागतत्वादिति भावः, हृद्गता चिन्ताव्याप्तिवर्त्तिनी त्वम्, कया गत्या केन प्रकारेण, अस्य नलस्य, प्राणायिता प्राणवदाचरिता प्राणसमाना न असि न भवसि ? अपि तु सौन्दर्य्य-नवयौवनादिना सर्व्वेणैव प्रकारेण त्वमस्य प्राणायितैवासीत्यर्थः । अथवा वहिर्गतापि त्वम् नासिकया नासिकासौन्दर्य्येण, आस्यगत्या मुखभङ्ग्या च, कुतादिभ्यः सुतया चिरं हृदया चेत्याशयः, हृद्गता मनोरमा ; अतएव प्राणायिता प्राणतुल्या, नासि न भवसि किमिति काकुः । पक्षान्तरे तु नासिकया नासारन्ध्रेण आस्यगत्या मुखाद्विर्गमनेन च वहिर्गता अपि प्राणाः प्राणवायवः, पुनर्नासिकया नासारन्ध्रेण, आस्यगत्या मुखाभ्यन्तरप्रवेशेन च, हृद्गता हृदयाभ्यन्तरगता भवन्ति । अतएव एतस्य नलस्य मनः, यत्, भवती त्वम् एका अद्वितीया हृत्तिर्जीवनोपायो यस्य तत् तादृशम् ; यद्वा भवत्या त्वयि एका केवला हृतिर्वर्त्तनं यस्य तत् तथोक्तं भवतीति शेषः ; तत्र विषये, चित्तमस्माकं मनः कर्त्तृ, चित्रमाश्चर्य्यम्, न आक्रामति प्राप्नोति ; सर्व्वेषामेवेन्द्रियाणां प्राणाश्रयत्वात् प्राणाभावे च तेषामभावादित्यभिप्रायः । एतेन चिन्तावस्थया दर्शिता ।

अत्र वहिर्गतापि हृद्गतेति वरोधात् विरहर्व्विरोधे च तत्समाधानात् विरोधाभासः, प्राणायितेति व्यक्त्यतोपमा, अर्थापत्तिः, नासिकया स्यगत्येति समभङ्गश्लेषः, परार्द्धं प्रति पूर्व्वार्द्धगतवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गञ्चेत्येतेषां संसृष्टिः । पूर्व्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ।

भवदिति "सर्व्वनाम्नो वृत्तिमात्रे पुंवद्भावः" इति पुंवद्भावः ॥१०५॥

বাঙ্গালা—দময়ন্তি ! তুমি বাহিরে থাকিয়াও নলের হৃদয়ের ভিতরে যাইয়া, কোন্ ভাবে তাঁহার প্রাণের তুল্য না হইয়াছ ? এই জন্যই, একমাত্র তুমিই যে ইঁহার মনের জীবনস্বরূপ হইয়াছ, সে বিষয়ে আমাদের চিত্ত আশ্চর্য্যান্বিত হইতেছে না ॥১০৫॥

अन्वयः—(हे दमयन्ति ! त्वम्) दूरदीर्घां तदीयां सङ्कल्पसोपानततिम् अजस्रम् आरोहसि । यत् सः तव ध्यानात् त्वन्मयताम् अवाप्य पुनः अधिकं श्वासान् वर्षति ॥१०६॥

सङ्कल्पदशां दर्शयति अजस्रमिति । हे दमयन्ति ! त्वम्, दूरदीर्घाम् अतिदूरतीम्, तदीयां नलसम्बन्धिनीम्, सङ्कल्पाः 'दमयन्तीं परिणीय आदावेवं करिष्यामि, परश्चैवम् तत्परश्चैवम्' इत्यं मानसिकव्यापारा एव सोपानानि दमयन्त्यधिरोहणाश्रयत्वादारोहणानि तेषां ततिं श्रेणीम्, अजस्रमनवरतम्, आरोहसि अधिरोहसि । कथमिदं ज्ञातमित्याह— यत् यस्मात्, स नलः, तव ध्यानाच्चिन्तातः, त्वन्मयतां तव स्वरूपम्, अवाप्य लब्ध्वा, पुनर्वारं वारम्, अधिकं सातिशयम्, श्वासान् निश्वासान्, वर्षति मुञ्चति । तथाहि यो यमनवरतं ध्यायति स तन्मयतामापद्यते ; यश्च बहुतराणि सोपानानि आरोहति तस्य परिश्रमश्वासा जायन्ते इति हि लौकिकव्यवहारः प्रसिद्धम् । नलश्च तव ध्यानात् त्वन्मयतां प्राप्तः ; त्वञ्च तस्य सङ्कल्पसोपानश्रेणीमारोहसि ; तेन त्वयि जायमाना एव निश्वासास्तस्मिन् दृश्यन्ते इत्याशयः । एतेन सङ्कल्पदशा दर्शिता ।

अत्र सङ्कल्पे सोपानत्वारोपात् निरङ्गं केवलरूपकम्, तथा एकः सोपानमारोहति तत्परिश्रमान्निश्वासाश्चान्यस्य जायन्त इति कार्य्यकारणयोर्निश्वाससोपानारोहणयोर्भिन्नाधिकरणत्वादसङ्गत्यलङ्कारः, तथा अवाप्येति प्रतीयमाना क्रियोत्प्रेक्षा चेत्येतेषामङ्गाङ्गिभावेन सङ्करः । पूर्व्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ।

"आरोहणं स्यात् सोपानम्" इत्यमरः । अभीप्सितेऽपि पुनःशब्दः सामान्योर्थसाथैं गमयति ॥१०६॥

हृत्तस्य यां मन्त्रयते रहस्त्वां तां व्यक्तमामन्त्रयते मुखं यत् (१) ।
तद्वैरिपुष्पायुधमित्रचन्द्र-सख्यौचिती सा खलु तन्मुखस्य ॥१०७॥
स्थितस्य रात्रावधिशय्य शय्यां मोहे मनस्तस्य निमज्जयन्ती ।
आलिङ्ग्य या चुम्बति लोचने सा निद्राऽधुना न त्वहतेऽङ्गना वा ॥१०८॥

**বাঙ্গালা**—দময়ন্তি ! তুমি সর্বদাই নলের সুদীর্ঘ সঙ্কল্পরূপ সোপানশ্রেণীতে আরোহণ করিয়েছ। যে হেতু, তিনি তোমাকে ধ্যান করিয়া, তোমার স্বরূপতা প্রাপ্ত হইয়া, বার বার অধিক নিশ্বাস ত্যাগ করিতেছেন ।১০৬।

**अन्वयः**—तस्य हृत् रहः यां त्वां मन्त्रयते, तस्य मुखं तां त्वां व्यक्तं यत् आमन्त्रयते ; सा तन्मुखस्य तद्वैरि-पुष्पायुध-मित्र-चन्द्र-सख्यौचिती खलु ॥१०७॥

पुनरपि सङ्कल्पदशामेवाह हृदिति । तस्य नलस्य हृत् हृदयं कर्त्तृ, रहः निर्जनस्थाने, यां त्वां मन्त्रयते गुप्तं भाषते 'प्रिये ! मामालिङ्ग चुम्ब च' इत्यादिगुप्तभाषणविषयं सङ्कल्पयतीत्यर्थः ; तस्य नलस्य, मुखं कर्त्तृ, तां त्वां व्यक्तं स्फुटं यत् आमन्त्रयते आलपति ; सा विधेयप्राधान्यविवक्षया स्त्रीलिङ्गता ; तदामन्त्रणमित्यर्थः, तन्मुखस्य नलवदनस्य, तद्वैरी नलशत्रुर्यः पुष्पायुधः कामः तस्य मित्रं यश्चन्द्रः तेन सह यत् सख्यं तुल्यरूपत्वात् मित्रता तस्य औचिती खलु औचित्यमेव । तथा च 'निर्जने त्वया सह एवमेवं करिष्यामि' प्रथममित्थं मनः सङ्कल्पयति ; परञ्च त्वामुद्दिश्य तत् व्यक्तं भाषते ; इति यत् तत् नलमुखस्य सङ्गतमेव । येन हि तत्पीडकत्वात् कामो नलस्य शत्रुः, हर्षकरत्वात् चन्द्रश्च तस्य कामस्य मित्रम्, समानसुन्दरत्वात् नलमुखञ्च तस्यापि चन्द्रस्य मित्रम्, अयतो नलमुखमेव नलस्य शत्रुपक्षवर्त्तीति तादृशव्यक्तभाषणेन नलस्य या लघुता जायते तत्करणं तन्मुखस्य सङ्गतमेव, शत्रुपक्षीयेणापकारकरणस्य सम्भवपरत्वादिति भावः ।

अत्र तादृशौचित्यासम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिरलङ्कारः । पूर्वरागो रसः, समासबाहुल्यात् अन्यार्थस्य दुरूहत्वाच्च ओजो गुणः, गौडी च रीतिः ॥१०७॥

**বাঙ্গালা**—নলের মন, নির্জনস্থানে যে তোমাকে গুপ্ত কথা বলে ; নলের মুখ আবার সেই তোমাকেই যে স্পষ্ট করিয়া বলিতে থাকে, তাহা নলের মুখের পক্ষে সঙ্গতই ঘটে। কেন না, কামদেব নলের শত্রু ; চন্দ্র আবার সেই কামদেবের মিত্র ; এবং নলমুখখানাও আবার সেই চন্দ্রেরই মিত্র। (সুতরাং নলের মুখখানাই নলের শত্রুপক্ষভুক্ত) ।১০৭।

**अन्वयः**—रात्रौ शय्याम् अधिशय्य स्थितस्य तस्य मनः मोहे निमज्जयन्ती या आलिङ्ग्य लोचने चुम्बति, अधुना सा निद्रा अङ्गना वा त्वहते न (आयाति) ॥१०८॥

अथ निद्राच्छेद-विषयनिवृत्तिरूपं कामदशाद्वयमेकेनाह स्थितस्येति । रात्रौ शय्याम्, अधिशय्य अधिष्ठाय, स्थितस्य तस्य नलस्य, मनश्चित्तम्, मोहे अचैतन्यावस्थायां मोहनव्यापारे सम्भोगे च, निमज्जयन्ती निवेशयन्ती समर्पयन्ती च, या निद्रा अङ्गना च, आलिङ्ग्य आस्य-नासिका-बाहु-हृदयोरांसि आश्रित्य आश्लिष्य च, लोचने नयनयुगलम्, चुम्बति प्राधान्येनावलम्बते वक्त्रसंयुक्तं करोति च ; अधुना सा निद्रा, अङ्गना वा पूर्वमनुरागिणी कामिनी च, त्वहते त्वां विना तव विरहादित्यर्थः, न आयातीति शेषः ।

---

(१) हृत्तस्य यन्मन्त्रयते रहस्त्वां तद्व्यक्तमामन्त्रयते मुखं यत् ।

स्मरेण निस्तक्ष्य वृथैव बाणैः लावण्यशेषां कृशतामनायि ।
अनङ्गतामप्ययमाप्यमानः स्पर्धां न सार्धं विजहाति तेन ॥१०९॥
त्वत्पापकाङ्क्षत्यनेनसोऽपि त्वय्येष दास्येऽपि न लज्जते यत् ।
स्मरेण बाणैरतितक्ष्य तीक्ष्णैः लूनः स्वभावोऽपि कियान् किमस्य ॥११०॥

---

अत्र प्रस्तुतयोरेव निद्राङ्गनयोर्निमज्जनाद्यैककर्तृक्रियाभिसम्बन्धात् तुल्ययोगितालङ्कारः शय्य-शय्यामिति च्छेकानुप्रासेन संसृज्यते। तथा नञन्वयिनः क्रियापदस्यानभिधानात् न्यूनपदतादोषः; स च 'निद्राद्य नैति तरुणीऽङ्गना वा' इति पाठेन समाधेयः। पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः।

अधिशय्येति शीङः क्त्वाप्रत्यये "समासेऽनञ्पूर्वे" इत्यादिना क्त्वो ल्यप् "अयङ् यि क्ङिति" इति शीङ ईकारस्य अयादेशः। शय्यामिति "आधारोऽधिशीङ्स्थासां कर्म" इत्यधिकरणस्य कर्मत्वम् ॥१०८॥

বাঙ্গালা—নল রাত্রিতে শয্যার উপরে শয়ন করিয়া রহিলে, যে তাঁহার মনকে মোহে নিমগ্ন করিয়া, আলিঙ্গনপূর্ব্বক নয়নযুগল চুম্বন করিত; এখন তোমার বিরহে সেই নিদ্রা বা সেই রমণী আর আসে না ॥১০৮॥

অন্বয়:—स्मरेण बाणैः निस्तक्ष्य अयं लावण्यशेषां कृशतां वृथा एव अनायि। (येन हि) अयम् अनङ्गताम् आप्यमानः अपि (सन्) तेन सार्धं स्पर्धां न विजहाति ॥१०९॥

तनुतां नाम दशामाह स्मरेणेति स्मरेण कामेन, बाणैर्निजशरैः, निस्तक्ष्य छित्त्वा छित्त्वा, अयं नलः लावण्यमेव शेषः अवशिष्टं यस्यास्तां तादृशीं कृशतां तनुताम्, वृथैव निष्फलमेव, अनायि नीतः प्रापित इति यावत्। कथं वृथैव अनायीत्याह-येन हि अयं नलः, अनङ्गतां कृशाङ्गताम् अङ्गशून्यताञ्च, आप्यमानो नीयमानोऽपि सन्, तेन स्मरेण सार्द्धम्, स्पर्धां सौन्दर्यजिगीषाम्, न विजहाति न परित्यजति। अत्रायंमाशयः यः खलु येन सार्द्धं स्पर्द्धते, स सति सम्भवे तं स्पर्द्धाकारिणम् आत्मापेक्षया क्षीणीकृत्य तां स्पर्द्धां त्याजयति। नलश्च सौन्दर्य्येण कामेन सार्द्धं स्पर्द्धते; अतश्च कामः बाणैस्तं निस्तक्ष्य कृशीकृत्य तां स्पर्द्धां त्याजयितुमिच्छति; तच्च निष्फलम्। येन हि कृशतापर्य्यन्तकरणे का कथा, सर्वथा अनङ्गतां नीयमानोऽपि नलः तां स्पर्द्धां न त्यजेत्। यतः स कामोऽपि अनङ्ग एवेति।

अत्र अनङ्गताप्रापणरूपे कारणे सत्यपि स्पर्द्धात्यागरूपतत्कार्य्योत्पत्तेरभावात् विशेषोक्तिरलङ्कारः। तथा नलपक्षे अनङ्गतामिति ईषदर्थे नञ् अनुदरा कन्यतिवत्। तेन अनङ्गतां कृशाङ्गतामित्यर्थः। कामपक्षे तु अभावार्थे नञ्। तेन अनङ्गतामङ्गराहित्यमित्यर्थः। इत्यनयोर्भेदेऽपि श्लेषेणाभेदाध्यवसायादतिशयोक्तिश्च; तथा कृशतानयनवैयर्थ्यं प्रति पराद्धवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गञ्च; तेषामङ्गाङ्गिभावेन सङ्करः; सोऽपि च द्वितीयाद्धगतेन च्छेकानुप्रासेन संसृज्यते। पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥१०९॥

বাঙ্গালা—কামদেব বাণ দ্বারা কাটিয়া কাটিয়া, নলের শরীরটাকে যে কৃশ করিয়াছেন এবং লাবণ্যমাত্র যে অবশিষ্ট রাখিয়াছেন; তাহা নিষ্ফলই হইয়াছে। কেন না, তাঁহাকে একেবারে 'অনঙ্গ' করিয়া ফেলিলেও, তিনি কামদেবের সহিত স্পর্দ্ধা ত্যাগ করিবেন না ॥১০৯॥

অন্বয়:—एषः त्वत्पापकात् एनसः अपि यत् न त्रस्यति, त्वयि दास्ये अपि यत् (च) न लज्जते; (तत्) किं स्मरेण तीक्ष्णैः बाणैः अतितक्ष्य अस्य कियान् स्वभावः अपि लूनः ? ॥११०॥

**स्मारं ज्वरं घोरमपत्रपिष्णोः सिद्धागदङ्कारचये चिकित्सौ ।**
**निदानमौनादविशद्विशाला सांक्रामिकी तस्य रुजेव लज्जा ॥१११॥**

---

त्रपानाशं नाम दशामाह त्वदिति । हे दमयन्ति ! एष नलः, त्वां प्रापयति यत् तत् त्वत्प्रापकं तस्मात्, एनसोऽपि पापादपि पापजनकीभूतपैशाचविवाहादिव्यापारादपीत्यर्थः, यत् न भयति बिभेति ; त्वति तव विषये, दास्येऽपि दासत्वकरणेऽपि, यत्र न लज्जते ; तत् किं अरिणा कामेन, तीक्ष्णैर्बाणैः, अतिशय्य अतिशयेन शरीरं कृशीकृत्य, अस्य नलस्य, कियान् अल्पः, स्वभावोऽपि चिरन्तनी प्रकृतिरपि, लूनश्छिन्नः ? । अन्यथा अयं महाधार्म्मिकः पापान्न बिभेति, कथं वा महामानी बालिकाया अपि दासत्वस्वीकारे न लज्जत इति भावः ।

अत्र किंशब्दस्यैव उत्प्रेक्षावाचकत्वात् वाच्या भावाभिमानिनी क्रियोत्प्रेक्षालङ्कारः । पूर्व्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ।

"सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति । स पापिष्ठो विवाहानां पैशाचः कथितोऽष्टमः ॥"

इति मनुवचनात् पैशाचविवाहस्य पापजनकत्वं बोध्यम् । ततश्च "एनसोऽपि पापादपि 'राक्षसो युद्धहरणात्' इत्यादिरक्षआदिरूपात्" इति नारायणादिव्याख्यानं हेयम् । "चतुरो ब्राह्मणस्याद्यान् प्रशस्तान् कवयो विदुः । राक्षसं क्षत्रियस्यैकमासुरं वैश्यशूद्रयोः" इति याज्ञवल्क्येन क्षत्रियपक्षे राक्षसविवाहस्य प्रशस्तत्वाभिधानात् कृष्णादीनां रुक्मिणीहरणादिदर्शनाच्च ॥११०॥

বাঙ্গালা—দময়ন্তি ! যাহাতে তোমাকে পাওয়া যায়, এমন কোন পাপকার্য্য হইতেও যেহেতু নল ভীত হইতেছেন না ; এবং তোমার দাসত্ব করিতেও যেহেতু তিনি লজ্জিত হইতেছেন না, সুতরাং কামদেব তীক্ষ্ণ বাণ দ্বারা তাঁহার শরীরটীকে কৃশ করিয়া, পরে কিঞ্চিৎ স্বভাবও কি ছেদন করিয়া ফেলিয়াছেন ॥১১০॥

**अन्वयः**—अपत्रपिष्णोः तस्य घोरं स्मारं ज्वरं चिकित्सौ सिद्धागदङ्कारचये निदानमौनात् सांक्रामिकी रुजा इव विशाला लज्जा अविशत् (इव) ॥१११॥

ज्वररूपां कामदशामाह स्मारमिति । अपत्रपिष्णोर्लज्जाशीलस्य, तस्य नलस्य, घोरं भयङ्करम्, स्मरस्य कामस्यायमिति स्मारस्तम्, ज्वरः सन्ताप एव ज्वरस्तदाख्यो रोगस्तम्, चिकित्सौ प्रतिकुर्व्वति, सिद्धो विख्यातो यः अगदङ्कारचयो वैद्यसमूहस्तस्मिन्, निदाने तज्ज्वरस्य प्रथमकारणकथनविषये इत्यर्थः, मौनात् तूष्णीम्भावात् तदकथनादिति तात्पर्य्यम्, संक्रमेण रोगिणा सह संसर्गकारणवशात् सञ्चरणेन जाता सांक्रामिकी, रुजा वसन्तादिरोग इव, विशाला महती लज्जा, अविशत् सञ्चरितेव । तथा च नलस्य ज्वरः सञ्जात इत्याकर्ण्य तच्चिकित्सार्थं प्रसिद्धो वैद्यगणस्तदन्तिकं गतः । ततश्च नलस्तानवलोक्य स्वावस्थामसौ बुध्येरन्नित्याशङ्कया लज्जितो बभूव, वैद्या अपि तस्य शरीरस्थैर्निमित्तचिह्नैरनेन कामबाधैवायं ज्वरो जात इति बुध्यमाना अपि तादृशं कारणं लज्जया नाख्यातवन्त इति नलस्य समं च नलस्य लज्जा तेषु सञ्चरितेवेत्याशयः ।

अत्र सांक्रामिकी रुजेवेति श्रौती उपमा, अविशदित्यत्र इवाद्यभावात् प्रतीयमाना क्रियोत्प्रेक्षा, विश-विशेति च्छेकानुप्रासश्चेत्येषां संसृष्टिः । पूर्व्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ।

"रोगहार्य्यगदङ्कारो भिषग्वैद्यौ चिकित्सके" इत्यमरः ।

चिकित्सताविति उप्रत्ययान्तत्वात् ज्वरमित्यादौ "न निष्ठादिषु" इति कर्म्मणि षष्ठी निषेधात् द्वितीयैव । अपत्रपिष्णोरिति अपपूर्व्वत्रपधातोः "अलंकृञ्—" इत्यादिना इष्णुच् प्रत्ययः । अगदं करोतीति अगदङ्कारः कर्म्मण्यण्प्रत्ययात् कारशब्दे परे अगदशब्दात् "सत्यागदास्तूनां कारे" इति मुमागमः ॥१११॥

বাঙ্গালা—লজ্জাশীল নলের যে ভয়ঙ্কর কামজ্বর হইতেছে, তাহা চিকিৎসা করিবার

বিভেতি রুষ্টাসি কিলেত্যকস্মাৎ স ত্বাং কিলোপৈতি হসত্যকাণ্ডে (১)।
যান্তীমিব ত্বামনু যাত্যহেতোঃ উক্তস্ত্বয়েব প্রতিবক্তি মোঘম্॥১১২॥
ভবদ্বিয়োগাচ্ছিদুরার্ত্তিধারাযমস্বসুর্মজ্জতি নিঃশরণ্যঃ।
মূর্চ্ছাময়দ্বীপমহান্ধপঙ্কে হাহা মহীভৃদ্ভটকুঞ্জরোঽয়ম্॥১১৩॥

---

অন্য বহুতর বিখ্যাত চিকিৎসক আসিয়াছিলেন; কিন্তু তাঁহারা সে জ্বরের মূল কারণ বলিবার সময় মৌনাবলম্বন করিয়া রহিয়াছিলেন, তাহাতে বোধ হইয়াছিল যে, সাংক্রামিক রোগের ন্যায় নলেরই গুরুতর লজ্জা যাইয়া যেন সেই চিকিৎসকদিগের উপরে সংক্রান্ত হইয়াছে॥১১১॥

**অন্বয়ঃ**—(হে দময়ন্তি! ত্বং) রুষ্টা অসি ইতি কিল সঃ অকস্মাৎ বিভেতি, ত্বাম্ উপৈতি ইতি কিল অকাণ্ডে হসতি, যান্তীম্ ইব ত্বাম্ অনু অহেতোঃ যাতি, (তথা) ত্বয়া উক্তঃ ইব মোঘং প্রতিবক্তি॥১১২॥

তদ্দর্শয়ন্নাহ বিভেতীতি। হে দময়ন্তি! ত্বং রুষ্টাসি ইতি কিল প্রণয়কুপিতা আসীতি সম্ভাব্য, স নলঃ, অকস্মাৎ সহসা, বিভেতি ভয়ং প্রাপ্নোতি ত্বামুপৈতি প্রাপ্নোতি ইতি কিল এবং সম্ভাব্য, অকাণ্ডে অনবসরে, হসতি হাস্যং করোতি; যান্তীং গচ্ছন্তীমিব ত্বাম্, অনু লক্ষ্যীকৃত্য, অহেতোঃ নিষ্প্রয়োজনে অকারণাৎ, যাতি গচ্ছতি; তথা ত্বয়া কিঞ্চিদুক্ত ইব সন্, মোঘং শ্রোতুরভাবাৎ ব্যর্থম্, প্রতিবক্তি প্রত্যুত্তরং দদাতি। সর্ব্বং ত্বন্ময়ভাবাদিতি ভাবঃ।

অত্র বিভেতীত্যাদিষ্বনেকক্রিয়াসু স এবৈককর্ত্তৃকারকত্বাৎ দীপকমলঙ্কারঃ "অপ্রস্তুতপ্রস্তুতয়োর্দীপকন্তু নিগদ্যতে। অথ কারকমেকং স্যাদনেকাসু ক্রিয়াসু চেৎ॥" ইতি দর্পণলক্ষণাৎ। পূর্ব্বরাগো রসঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ।

"বার্ত্তাসম্ভাব্যয়োঃ কিল" ইত্যমরঃ॥১১২॥

**বাঙ্গালা**—দময়ন্তি! তুমি কুপিত হইয়াছ ইহা মনে করিয়া নল হঠাৎ ভয় পাইতেছেন; তোমাকে পাইয়াছেন ইহা ভাবিয়া অসময়ে হাসিয়া ফেলিতেছেন; তুমি যেন যাইতেছ, তাই তোমাকে লক্ষ্য করিয়া বিনা কারণে যাইতেছেন এবং তুমি যেন কিছু বলিয়াছ ইহা মনে করিয়া; অনর্থক উত্তর দিতেছেন॥১১২॥

**অন্বয়ঃ**—হাহা! নিঃশরণ্যঃ অয়ং মহীভৃদ্ভটকুঞ্জরঃ, ভবদ্বিয়োগাচ্ছিদুরার্ত্তিধারা যমস্বসুঃ মূর্চ্ছাময়দ্বীপমহান্ধপঙ্কে নিমজ্জতি॥১১৩॥

মূর্চ্ছাদশামাহ ভবদিতি। হাহেতি খেদাতিশয়ে। নিঃশরণ্যো রক্ষকহীনঃ, অয়ং প্রত্যক্ষং, মহীভৃতাং রাজ্ঞাং মধ্যে এব ভটকুঞ্জরো যোধহস্তী সঃ ভবদ্বিয়োগেন তব বিরহেণ অচ্ছিদুরা অনল্পা নিরন্তরবাহিনী আর্ত্তিঃ যা আর্ত্তিধারা পীড়াপরম্পরা সৈব যমস্বসা যমুনা তস্যাঃ, মূর্চ্ছাময়ী মূর্চ্ছারূপো যো দ্বীপঃ অন্তরীপং তস্য মহান্ অত্যন্তাজ্ঞানরূপং যৎ পঙ্কং কর্দ্দমস্তস্মিন্, নিমজ্জতি প্রবিশতি। হস্তিপকো যথা গাঢ়পঙ্কমগ্নস্য কুঞ্জরস্যোদ্ধারকর্ত্তা, তথা ত্বমেব তস্যোদ্ধারকর্ত্রীতি ভাবঃ।

---

(১) স ত্বাং কিলৈতীতি হসত্যকাণ্ডে।

सव्यापसव्यत्यजनाद्द्विवर्त्तैः पञ्चेषुवाणैः पृथगर्जितासु ।
दशासु शेषः खलु तद्दशा या (१) तया नभः पुष्प्यतु कोरकेण ॥११४॥

---

अत्र यमुनायास्तु विषयं नास्ति रूपकमलङ्कारः । "कालिन्दी श्यामा पापे" इति कविसमयप्रसिद्धा पापकश्यामलतया वर्णनीयत्वेन तच्छ्यामलतायाः मलिनताया अपि श्यामलतयैव वर्णनीयत्वात् वर्णसाम्याच्च सम-स्तरूपकमुक्तम् । तथा मोचकुञ्जरयोः प्राशस्त्यादेव प्राधान्यात् अटपदमभिहितमिति नाविमृष्टविधेयांशदोषः । पूर्वरागो रसः, समासबाहुल्यात् वर्णार्थस्य दुरूहत्वाच्च ओजो गुणः, गौडी च रीतिः ।

अवहिति वर्णनाच्छो हविमार्गे पुंबद्भावः । अच्छिदुरिति "छिदभिदिविदो कुरः" इति छिदेः कुरच्-प्रत्ययः । अस्य भाव आख्यं "यत् च प्रकीर्त्तितः" इति यत् ॥११३॥

**বাঙ্গালা**—দময়ন্তি! তোমার বিরহে নলের যে নিরবচ্ছিন্ন পীড়া চলিতেছে, তাহা হইল যমুনানদীস্বরূপ ; আবার তাহার মধ্যে যে মূর্চ্ছা হইতেছে, তাহা হইল সেই নদীর দ্বীপস্বরূপ এবং তৎকালীন যে অচৈতন্য-অবস্থা হইতেছে, তাহা হইল অত্যন্তকর্দ্দমস্বরূপ ; হায়! হায় নলরাজস্বরূপ এই যোদ্ধহস্তী সেই কর্দ্দমে মগ্ন হইতেছে, কিন্তু তাহার রক্ষক নাই ॥১১৩॥

**अन्वयः**—सव्यापसव्यत्यजनात् द्विवर्त्तैः पञ्चेषुवाणैः पृथक् अर्जितासु दशासु या खलु शेषा तद्दशा, तया कोरकेण नभः पुष्प्यतु ॥११४॥

जातप्रायां मरणदशां भङ्गीविशेषेणाह सव्येति । सव्यापसव्याभ्यां वामदक्षिणाभ्यां हस्ताभ्यां त्यजनान्निक्षेपात्, द्विवर्त्तैर्द्विगुणैः दशसंख्यकीभूतैरित्यर्थः । एकहस्तेन निक्षेपे पञ्च, हस्तद्वयेन निक्षेपे तु दशेति भावः । पञ्चेषोः कामस्य वाणैः कर्त्तृभिः, पृथक् भिन्नभिन्नम् अर्जितासु उत्पादितासु, दशासु कामावस्थासु मध्ये, या खलु शेषः अन्तिमा, तस्य नलस्य दशा मरणावस्था, तया तत्स्वरूपेणेत्यर्थः, कोरकेण पुष्पकलिकया करणेन, नभ आकाशं कर्त्तृ, पुष्प्यतु विकसतु तद्विकाशेन आकाशं शोभतामित्यर्थः । आकाशकुसुमं यथा अलीकम्, तथा मरणरूपा नलस्य दशमी कामदशा अलीका भवत्वित्याशयः । कामस्य पञ्चैव वाणाः प्रसिद्धाः, तैश्च पञ्चमावावस्था उत्पादयितुं शक्यन्ते ; अथ च कामदशा दशसंख्यकत्वेनैव निरूपिताः, तदेतत् कथमुपपद्यत इत्यत उक्तं सव्यापसव्येत्यादि ।

अत्र इषु-वाणशब्दयोः पर्य्यायतया आपाततस्तदर्थस्य पुनरुक्ततया प्रतीतेः परञ्च पञ्चेषोः कामस्य वाणैरिति भेदावगमात् भिन्नाकारशब्दगतत्वाच्च पुनरुक्तवदाभासोऽलङ्कारः, तथा कोरकेणेति निरङ्गं केवलरूपकम्, तथा मरण-दशारूपकोरकेण नभःपुष्पणमसम्भवत् आकाशकोरको यथा अलीकस्तथा नलस्य मरणदशा अलीका भवत्विति सादृश्यं बोधयतीत्यसम्भवद्वस्तुसम्बन्धा निदर्शना चेत्येतेषाम् अङ्गाङ्गिभावेन सङ्करः । कोरकपदेन मरणदशाया अयमारम्भ इति वस्तु व्यज्यत इति वस्तुना वस्तुध्वनिः । श्लोकसमुदायेन च नलस्योपस्थितां दशमीं दशां निवर्त्त-यितुं त्वरस्वेत्यपि वस्तु व्यज्यते । मरणपदाभिधाने तस्य अमङ्गलव्यञ्जकतया अश्लीलतादोषः स्यादतः शेषपदमभि-हितम् । पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ।

शेष इत्यत्र इत्यजहल्लिङ्गत्वात् स्त्रीविशेषणत्वेऽपि न स्त्रीलिङ्गः ॥११४॥

**বাঙ্গালা**—কামদেব বামহস্ত দ্বারা পাঁচটী এবং দক্ষিণ হস্ত দ্বারা পাঁচটী বাণ নিক্ষেপ করিয়াছেন ; তাহাতে দশটী বাণ নিক্ষিপ্ত হইয়াছে ; তাহার একটী একটী বাণ, একটী

---

(१) दशासु शेषा···।

त्वयि स्मराधेः सततास्मितेन प्रस्थापितो भूमिभृतास्मि तेन।
आगत्य भूतः सफलो भवत्या भावप्रतीत्या गुणलोभवत्याः ॥११५॥
धन्यासि वैदर्भि! गुणैरुदारैः यया समाकृष्यत नैषधोऽपि।
इतः स्तुतिः का खलु चन्द्रिकायाः यदब्धिमप्युत्तरलीकरोति ॥११६॥
नलेन भायाः शशिना निशेव त्वया स भायान्निशया शशीव।
पुनः पुनस्तद्युगयुग् विधाता योग्यामुपास्ते नु युवां युयुक्षुः ॥११७॥

---

এক্টী করিয়া দশা জন্ম হইয়াছে; সুতরাং সেই দশটী দশার মধ্যে তাঁহার পক্ষে শেষ যে দশাটী, তৎস্বরূপ কলিকা দ্বারা আকাশ পুষ্পিত হউক ॥১১৪॥

**अन्वयः**—स्मराधेः सततास्मितेन तेन भूमिभृता त्वयि प्रस्थापितः अस्मि, आगत्य गुणलोभवत्याः भवत्याः भावप्रतीत्या सफलः भूतः ॥११५॥

प्रकृतमनुसन्धत्ते त्वयीति। स्मराधेः कामकृतमानसपीडावशात्, अस्मितस्याप्यभाव इत्यस्मितम् अभावार्थे अव्ययीभावः, सततं सर्वदैव अस्मितम् ईषद्धास्यस्याप्यभावो यस्य तेन, तेन प्रकृतेन भूमिभृता राज्ञा नलेन, त्वयि तव समीपे, प्रस्थापितः प्रेरितः अस्मि; आगत्य चाहम्, गुणेषु विद्याविनयशौर्य्यादिषु लोभवत्या अनुरागिण्याः, भवत्यास्तव, भावप्रतीत्या अभिप्रायज्ञानेन, सफलः सफलकामः, भूतो जातः। महत् सन्तोषकारणमेतदिति भावः।

अत्र पूर्वार्द्धे अन्त्ययमकमात्रम्, परार्द्धे तु अन्त्ययमकच्छेकानुप्रासयोरेकाश्रयानुप्रवेशरूपः सङ्कर इति समुदाये संसृष्टिः। पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥११५॥

**বাঙ্গালা**—কামকৃত মানসিক কষ্ট বশতঃ নলের মুখে সর্ব্বদা একটুমাত্রও হাস্য নাই; সুতরাং সেই রাজা আমাকে তোমার নিকট পাঠাইয়া দিয়াছেন; আমি আসিয়া তোমার অভিপ্রায় জানিয়া, সফলকাম হইলাম; তুমি গুণানুরাগিণী বট ॥১১৫॥

**अन्वयः**—(हे) वैदर्भि! (त्वं) धन्या असि, यया (त्वया) उदारैः गुणैः नैषधः अपि समाकृष्यत। चन्द्रिकायाः इतः का खलु स्तुतिः, यत् अब्धिम् अपि उत्तरलीकरोति ॥११६॥

दौत्यसन्धानप्रवृत्तिं प्रदर्श्य सन्तोषयति धन्येति। हे वैदर्भि! विदर्भराजकन्ये! त्वं धन्या पुण्यवती असि, यया त्वया, उदारैर्महद्भिः, गुणैः सौन्दर्य्यादिभिः, नैषधोऽपि निषधदेशाधिपतिर्नलोऽपि, अतीवधीरप्रकृतिरपीत्याशयः, समाकृष्यत सम्यगाकृष्टः स्वाभिमुखीकृत इत्यर्थः। तथा च चन्द्रिकाया ज्योत्स्नायाः, इतः अधिका, का खलु स्तुतिः प्रशंसा, यत् अब्धिमपि अतिगभीरं समुद्रमपि, उत्तरलीकरोति स्वोदयेन चञ्चलीकरोति।

अत्र अब्धिनलयोश्चन्द्रिकादमयन्त्योश्च साम्यस्य गम्यत्वात् तादृशसमाकर्षणोत्तरलीकरणयोर्वस्तुत एकधर्म्मत्वेऽपि पृथङ्निर्द्देशात् प्रतिवस्तूपमालङ्कारः। इदमेव च दर्पणकृता प्रतिवस्तूपमालक्षणे उदाहृतमिति प्राचामलङ्कारा-न्तराभिधानम् इदम्। पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः।

"सुकृती पुण्यवान् धन्यः" इत्यमरः ॥११६॥

**বাঙ্গালা**—দময়ন্তি! তুমি ধন্য বট; কেন না, যে তুমি শ্রেষ্ঠ গুণসমূহ দ্বারা নল-রাজাকেও আকর্ষণ করিয়াছ। দেখ-জ্যোৎস্নার ইহা অপেক্ষা অধিক কি প্রশংসা হইতে পারে যে, সে সমুদ্রকেও চঞ্চল করিয়া থাকে ॥১১৬॥

**अन्वयः**—निशा शशिना इव (त्वं) नलेन भायाः, शशी निशया इव सः (च) त्वया भायात्। युवां युयुक्षुः विधाता पुनः पुनः तद्युगयुक् (सन्) योग्याम् उपास्ते नु ॥११७॥

स्तनद्वये तन्वि ! परं तवैव पृथौ यदि प्राप्स्यति नैषधस्य ।
अनल्पवैदग्ध्यविवर्द्धिनीनां पत्रावलीनां रचना समाप्तिम् ॥११८॥
एकः सुधांशुर्न कथञ्चन स्यात् तृप्तिक्षमस्त्वन्नयनद्वयस्य ।
त्वल्लोचनासेचनकस्तदस्तु नलास्यशीतद्युति-सद्वितीयः ॥११९॥

---

आशिषा हर्षयति नलेनेति। हे दमयन्ति ! निशा रात्रिः शशिना चन्द्रेणेव, त्वं नलेन पत्या, भायाः शोभिथाः ; तथा शशी निशयेव स नलश्च, त्वया पत्न्या, भायात् शोभेत । तेन च युवां नलश्च त्वञ्च, युयुक्षुः परिणयेन योक्तुं सम्मेलयितुमिच्छुः, विधाता ब्रह्मा, पुनः पुनर्वारं वारम्, तयोर्निशाशशिनोर्युगं युगलं पुनर्मिथः सम्मेलयतीति तद्युगयुक् सन्, योग्याम् योग्ययोजनाभ्यासम्, उपास्ते नु करोति किम्। अन्योऽपि शिल्पी अनेकोपादान निर्म्मेयं सुन्दरं वस्तु निर्म्मातुं पूर्वं तदभ्यासं करोतीति भावः ।

अत्र नलदमयन्त्योः परस्परशोभाजननादन्योन्यालङ्कारः, श्रौतोपमाद्वयम्, शशिनिशयोर्लिङ्गसाम्येन पतिपत्नीभावसमारोपात् समासोक्तिरित्येतेषामङ्गाङ्गिभावेन सङ्करः ; तथा युष्मदस्मदोर्मध्यमोत्तमवाचकत्वात् वाच्या क्रियोक्तिः, युगयुगिति च्छेकानुप्रासः, अन्यत्र तु वृत्त्यनुप्रास इति समुदाये संसृष्टिः । तथा निशा भाति त्वञ्च भायाः इति विधिभेदात् पुरुषभेदाच्च एकत्र भग्नप्रक्रमतादोषः, एवं शशी भाति स च भायादिति विधिभेदादपरत्र स एव दोषः । किन्तु 'नलेन भा ते शशिनेव रात्रिः तस्य च रात्र्या शशिनस्त्वया स्यात्' इति पाठेन तयोः समाधानं चिन्त्यम् । अत्र पाठे स्यादिति विधौ सम्भावनायाञ्च यथायोग्यमूहनीयम् । पूर्वरागो रसः, मधुरवर्णनावशान्माधुर्यं गुणः, वैदर्भी च रीतिः ।

"योग्याभ्यासार्कयोषितोः" इति विश्वः ॥११७॥

বাঙ্গালা—দময়ন্তি ! রাত্রি যেমন চন্দ্র দ্বারা শোভিত হয় ; তুমিও তেমন নল দ্বারা শোভিত হও, আবার চন্দ্র যেমন রাত্রি দ্বারা শোভিত হন্ ; নলও তেমন তোমা দ্বারা শোভিত হউন। বিধাতা তোমাদিগকে সম্মিলিত করিবার ইচ্ছা করিয়া, রাত্রি ও চন্দ্র এই দুইটীকে বার বার সম্মিলিত করতঃ, যোগ্য যোজনের অভ্যাস করিতেছেন কি ? ॥১১৭॥

**অন্বয়:**—(হে) तन्वि ! नैषधस्य अनल्पवैदग्ध्यविवर्द्धिनीनां पत्रावलीनां रचना यदि समाप्तिं प्राप्स्यति, (तदा) परं तव एव पृथौ स्तनद्वये ॥११८॥

नलस्य शिल्पनैपुण्यप्रदर्शनेन प्रलोभयति स्तनेति । हे तन्वि ! कृशाङ्गि ! नैषधस्य नलस्य, अनल्पं बहुतरं यत् वैदग्ध्यं शिल्पचातुर्य्यं नैपुण्यं तस्य विवर्द्धिनीनां विशेषवर्द्धितत्वेन सूचिकानाम्, पत्रावलीनां पत्राकारचित्रविन्यासानाम्, रचना करणम्, यदि समाप्तिं अवसानम्, प्राप्स्यति ; तदा परं केवलम्, तवैव पृथौ विशाले, स्तनद्वये ; न पुनरन्यासां युवतीनाम्, तासामीदृशस्तनपृथुत्वाभावादिति भावः ।

अत्र तवैव स्तनद्वये, न त्वन्यासामित्यन्यव्यपोहनादार्थी परिसंख्यालङ्कारः । तदित्यनुक्तावपि तस्य तात्पर्य्यादेवावगतेर्न न्यूनपदतादोषः । पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥११८॥

বাঙ্গালা—হে কৃশাঙ্গি ! নলের যে অত্যন্ত শিল্পনৈপুণ্য আছে, তাহার বিশেষসূচক পত্রাবলী (গোন্দানি) নির্ম্মাণ যদি কখনও সমাপ্তি পায়, তবে কেবল তোমারই বিশাল স্তনযুগলে পাইবে (কিন্তু অন্য যুবতির নহে) ॥১১৮॥

अहो तपःकल्पतरुर्नलीयः त्वत्पाणिजाग्र-स्फुरदङ्कुरश्रीः।
त्वद्भ्रूयुगं यस्य खलु द्विपत्री तवाधरो रज्यति यत्प्रवालः ॥१२०॥
यस्ते नवः पल्लवितः कराभ्यां स्मितेन यः कोरकितस्तवास्ते।
अङ्गम्रदिम्ना तव पुष्पितो यः स्तनश्रिया यः फलितस्तवैव ॥१२१॥ युग्मकम्।

---

अन्वयः—एकः सुधांशुः कथमपि त्वन्नयनद्वयस्य तृप्तिक्षमः न स्यात्; तत् (सः) नलास्य-शीतद्युति-सद्वितीयः (सन्) त्वल्लोचनासेचनकः अस्तु ॥११९॥

एक इति। एको द्वितीयरहितः, सुधांशुश्चन्द्रः, कथमपि केनापि प्रकारेण, तव नयनद्वयस्य, तृप्तिक्षमः प्रीतिजननसमर्थः, न स्यात्। चन्द्रस्यैकत्वात् नयनयोश्च द्वित्वादिति भावः। तस्मात् स सुधांशुः, नलस्य आस्यं मुखमेव शीतद्युतिश्चन्द्रस्तेन सद्वितीयो द्वितीयसहितः सन्, तव लोचनयोः असेचनकः अशीमतृप्तिजनकः, अस्तु। तथा च पूर्वं चन्द्र एक आसीत् तव नयने च द्वे इति समसंख्यकत्वाभावात् स चन्द्रस्तव नयनयोस्तृप्तिक्षमो नासीत्; इदानीन्तु आकाशे एकश्चन्द्रः द्वितीयस्तु भूतले नलमुखमिति चन्द्रौ द्वौ तव नयने च द्वे इति तर्प्यतर्पकयोः समसंख्यकत्वादुभौ चन्द्रौ उभयोरेव तव नयनयोस्तृप्तिक्षमौ स्याताम् इति भावः।

अत्र एकस्य सुधांशोस्तृप्तिक्षमत्वसम्बन्धेऽपि तदसम्बन्धोक्तेरतिशयोक्तिरलङ्कारः, तथा नलमुखे आरोप्यमाणस्य द्वितीयचन्द्रत्वस्य प्रकृततृप्तिजननोपयोगित्वात् परिणामालङ्कारः, तृतीयचरणे चना-चनेति छेकानुप्रासश्चेत्येषां संसृष्टिः। तथा नयनशब्देन प्रक्रम्य लोचनशब्दाभिधानात् भग्नप्रक्रमतादोषः; स च 'त्वन्नयनद्वयासेचनकस्तदस्तु' इति तृतीयचरणपाठेन समाधेयः। पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः।

"तदसेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात्" इत्यमरः ॥११९॥

বাঙ্গালা—দময়ন্তি! একটী মাত্র চন্দ্র, কোন প্রকারেই তোমার দুইটী নয়নের তৃপ্তি জন্মাইতে সমর্থ হয় না। তাই, নলমুখরূপ দ্বিতীয় চন্দ্রের সহিত মিলিত হইয়া সেই চন্দ্র, তোমার দুইটী নয়নেরই অসীম তৃপ্তি উৎপাদন করুক ॥১১৯॥

अन्वयः—नलीयः तपः कल्पतरुः अहो। त्वत्पाणिजाग्रस्फुरदङ्कुरश्रीः, त्वद्भ्रूयुगं यस्य खलु द्विपत्री, तव अधरः यत्प्रवालः रज्यति, यः ते कराभ्यां नवः पल्लवितः, यः तव स्मितेन कोरकितः आस्ते, यः तव अङ्गम्रदिम्ना पुष्पितः, यः (च) तव एव स्तनश्रिया फलितः ॥१२०—१२१॥

नलः खलु तपःफलेनैव त्वामीदृशीं प्राप्स्यतीति युग्मकेनाह अहो इति। नलीयो नलसम्बन्धी, तपस्तपस्या-चरणमेव कल्पतरुः कल्पवृक्षः, अहो आश्चर्यभूतः। तदाश्चर्यभूतत्वमेव व्यनक्ति त्वदित्यादि। तव पाणिजाग्रं नखाग्रमेव स्फुरन्ती प्रकाशमाना अङ्कुरश्रीः अङ्कुरशोभा यस्य सः, रक्ततासाम्यादिति भावः। तव भ्रूयुगमेव यस्य तपःकल्पतरोः खलु, द्विपत्री प्राथमिकपत्रद्वयम्, वक्रताश्यामतयोः सादृश्यादित्याशयः। तव अधर ओष्ठः, यस्य तपःकल्पतरोः प्रवालः नवं पल्लवमिति यावत्, उभयोरेव समानलौहित्यादित्यभिप्रायः; रज्यति राजते। यस्तपःकल्पतरुः, ते तव कराभ्यां पाणितलाभ्याम्, नवो नूतनः पल्लवितः सञ्जातपल्लवः, तव पाणितलद्वयमेव यस्य पल्लवस्वरूपमित्यर्थः, उभयोरेव सुकुमारत्वरक्तत्वादिति भावः। यस्तपःकल्पतरुः, तव स्मितेन ईषद्धास्येन, कोरकितः सञ्जातकोरकः आस्ते वर्त्तते, तव ईषद्धास्यमेव यस्य कलिकास्वरूपमित्यर्थः। यस्तपःकल्पतरुः, तव अङ्गम्रदिम्ना कोमलतया, पुष्पितः सञ्जातपुष्पः, तवाङ्गमार्दवमेव यस्य पुष्पस्वरूपेति तात्पर्यम्, उभयोरेव सुखस्पर्शादित्याशयः। तथा यस्तपःकल्पतरुः, तवैव स्तनश्रिया फलितः सञ्जातफलः, तव स्तन एव यस्य फलस्वरूप इत्यर्थः; पीनत्ववर्त्तुलत्वसाम्यादित्यभिप्रायः।

कांसीकृतासीत् खलु मण्डलीन्दोः संसक्तरश्मिप्रकरा स्मरेण।
तुला च नाराचलता निजैव मिथोऽनुरागस्य समीकृतौ वाम् ॥१२२॥
अस्व-स्रुत-स्वेद-मधूत्थ-सान्द्रे तत्पाणिपद्मे मदनोत्सवेषु।
लग्नोत्थितास्त्वत्कुचपत्रलेखास्तन्निर्गतास्तं प्रविशन्तु भूयः ॥१२३॥

---

अत्र समस्तवस्तुविषयं साङ्गं रूपकमलङ्कारः, तथा कारणभूतस्तपःकल्पतरुर्नले कार्यभूताः पाणिगतरूपाङ्कुराद्यवयवाश्च दमयन्त्यामिति कार्यकारणयोर्वैयधिकरण्यादसङ्गतिर्नामालङ्कारश्च, तयोश्चाङ्गाङ्गिभावेन सङ्करः। पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः।

"स्कन्धः शाखकौ नीपे न ली शाखौ कलम्बायुः" इति विश्वः।

भ्रुवोः पत्त्रयोः समाहार इति द्विपत्री, द्विगोर्नदादित्वान्ङीप्प्रत्ययः। पक्कबिम्ब इत्यादौ सर्वत्र तारकादित्वादितच्। करायामित्यादौ सर्वत्र प्रकृत्यादित्वादभेदे तृतीया सहोभाव इति मन्दमः प्रभ्वादित्वादिमन् प्रत्ययः "तद्धितेष्वचामादेः" इति अकारस्य वृद्धिः ॥१२०-१२१॥

বাঙ্গালা—দময়ন্তি! নলের তপস্যারূপ কল্পবৃক্ষ আশ্চর্য্যই বটে। কেন না, তোমার নখাগ্রই যাহার অঙ্কুর; তোমার ভ্রূযুগলই যাহার পত্রদ্বয়; তোমার ওষ্ঠই যাহার পক্কের বৃন্ত; তোমার পাণিতলই যাহার নূতন পল্লব; তোমার মন্দহাস্যই যাহার কলিকা; তোমার অঙ্গের কোমলতাই যাহার পুষ্প এবং তোমার স্তনই যাহার ফল ॥১২০—১২১॥

**अन्वयः**—स्मरेण वां मिथः अनुरागस्य समीकृतौ संसक्तरश्मिप्रकरा इन्दोः मण्डली खलु कांसीकृता आसीत्, निजा एव नाराचलता च तुला (कृता) आसीत् ॥१२२॥

युवयोश्च समान एवानुराग इत्याह कांसीकृतेति। हे दमयन्ति! स्मरेण कामदेवेन, वां युवयोः नलस्य तव चेत्यर्थः, मिथोऽनुरागस्य परस्परप्रणयस्य, समीकृतौ तुलनाकरणे, संसक्तः संलग्नः रश्मिप्रकरः किरणसमूह एव रश्मिप्रकरः रज्जुसमूहो यस्याः सा तथोक्ता, इन्दोर्मण्डली चन्द्रमण्डलं खलु, कांसीकृता कांस्यपात्रीकृता; उभयोः समानशीलत्वात् गुणवत्त्वाच्चेति भावः। तथा निजैव स्वकीयैव कामसम्बन्धिन्येवेत्यर्थः, नाराचलता च लतातुल्यत्वात्प्रलम्बमानबाणविशेषश्च, तुला तोलनदण्डः, कृतासीदित्यन्वयः। तेन च त्वयि नलस्य यावाननुरागः, नले च तव तावानेवानुराग इति मापनेनावगतमिति भावः।

अत्र चन्द्रमण्डले कांस्यपात्रत्वारोपस्य किरणसमूहे रज्जुसमूहत्वारोपस्य नाराचलतायां तुलादण्डत्वारोपस्य च प्रकृतसमीकृतेरुपयोगित्वात् परिणामालङ्कारः, तुला-लतेत्यनेकव्यञ्जनस्य एकधा सकृत् साम्यात् छेकानुप्रासश्चानयोः संसृष्टिः। पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः।

"कांसी द्रव्यान्तरे स्मृतः। कांस्यं च कांस्यपात्रे च मानभेदेऽपि कीर्त्तितः।" इति विश्वः। "किरणप्रग्रहौ रश्मी" इत्यमरः।

कं सुखं स्यति दधातीति कांसं पात्रम्, अकांसं कांसं कृतेति कांसीकृता अभूततद्भावे च्वि प्रत्ययः ॥१२२॥

বাঙ্গালা—কামদেব তোমাদের দুই জনের পরস্পরানুরাগ মাপিবার জন্য, চন্দ্রমণ্ডলটীকে কাঁসার পাত্র (পালা—পাল্লা) করিয়াছেন, চন্দ্রমণ্ডলসংলগ্ন কিরণগুলিকে তাহার দড়ি করিয়াছেন এবং নিজেরই নারাচবাণটীকে তুলাদণ্ড (ডাটি—দাঁড়ি) করিয়াছেন ॥১২২॥

**अन्वयः**—मदनोत्सवेषु अस्व-स्रुत-स्वेद-मधूत्थ-सान्द्रे तत्पाणिपद्मे लग्नोत्थिताः त्वत्कुचपत्रलेखाः तन्निर्गताः (सत्यः) भूयः तं प्रविशन्तु ॥१२३॥

बन्धाढ्य-नाना-रत-मल्लयुद्ध-प्रमोदितैः केलिवने मरुद्भिः ।
प्रसूनवृष्टिं पुनरुक्तमुक्तां प्रतीच्छतं भैमि ! युवां युवानौ ॥१२४॥

---

नलस्य रतिनैपुण्यं प्रदर्शयन् तदर्थं दमयन्तीमतिशयेनोत्कण्ठयति सत्त्वेति । हे दमयन्ति ! मदनोत्सवेषु सुरतामोदेषु, सत्त्वेन सात्त्विकभावोदयेन स्रुतो निर्गतो यः स्वेदो घर्म्मजलं स एव मधूच्छिष्टं तुल्यतरलत्वात् गलितसिक्थकं तेन सान्द्रे स्निग्धे नैलाक्तप्राये इत्यर्थः । अतएव तव पत्रलेखानां लग्नत्वसम्भव इति भावः । तस्य नलस्य पाणिः पद्ममिव तस्मिन्, आदौ लग्ना मर्द्दनसंसर्गेण संसक्ताः पश्चादुत्थिताः पुनर्मर्द्दनकाले तस्मात् पाणिपद्मादुत्थायत्वत् कुचयोरेव स्थानान्तरं गता इति लग्नोत्थिताः, तव कुचस्य स्तनस्य पत्रलेखा रङ्गचित्रितपत्रावल्यः, तस्मात् कुचात् निर्गताः पाणिपद्मोत्तोलनकाले तस्मादुत्थिताः सत्यः, भूयः पुनरपि, तं कुचमेव, प्रविशन्तु गाढमर्द्दनकाले दृढं लगन्तु, पुनः पुनर्मर्द्दनवशात् लग्ना लग्ना उत्थिता भवन्त्वित्यर्थः ।

अत्र स्वेद मधूच्छिष्टेति निरङ्गं केवलरूपकम्, पाणिपद्म इति च लुप्तोपमेत्यनयोः परस्परनिरपेक्षतया संसृष्टिः । "अयं स रशनोत्कर्षी पीनस्तनविमर्द्दनः" इत्यादौ सम्भोगवर्णनया अतिशयेन शोकस्योदयात् यथा करुण एव रसः ; तथात्रापि सम्भोगवर्णनया दमयन्त्या अतिशयेन पूर्व्वरागस्योदयात् पूर्व्वराग एव रसः । एवं परत्रापि । प्रसादो गुणः, वैदर्भी च रीतिः ।

"मधूच्छिष्टं सिक्थकं समम्" इति बलः । "सान्द्रः स्निग्धस्तु स्तिमितः" इति शब्दरत्नावली ।

पाणिपद्म इति नलेति च आत्माभिप्रायादिकवचनम् । लग्नोत्थिता इति स्नातानुलिप्त इत्यादिवत् कर्म्मधारयः ॥१२३॥

বাঙ্গালা — দময়ন্তি ! মদনোৎসবের সময়ে সাত্ত্বিকভাব উপস্থিত হওয়ায় নলের পাণিকমল, নির্গত ঘর্ম্মজলরূপ মোমে স্নিগ্ধ (আটা) হইয়া যাইবে ; সুতরাং তোমার স্তনের পত্রাবলীগুলি, প্রথমে তাহাতে লাগিবে, পরে আবার তাহা হইতে উঠিয়া যাইবে ; এইভাবে সেই পত্রাবলীগুলি একবার স্তন হইতে উঠিবে, আবার তাহাতে লাগিবে ॥১২৩॥

अन्वयः—(हे) भैमि ! युवानौ युवां केलिवने बन्धाढ्य-नाना-रत-मल्लयुद्ध-प्रमोदितैः मरुद्भिः पुनरुक्तमुक्तां प्रसूनवृष्टिं प्रतीच्छतम् ॥१२४॥

बन्धाढ्येति । हे भैमि । भीमराजपुत्रि । युवानौ तरुणौ, युवां नलदमयन्त्यौ, केलिवने विहारोपवने, बन्धाढ्यं पद्मासन-नागपदादिबहुविधभङ्गीयुक्तं यत् नानारतं बहुप्रकाररमणं तदेव मल्लयुद्धं तेन प्रमोदितैः शरीरविमर्द्दनेन पुष्पशय्यातः समुत्थितसौरभयुक्तैः आनन्दितैश्च, मरुद्भिर्वायुभिः देवैश्च, पुनरुक्तमुक्तां द्विगुणेन पातितां, प्रसूनानां पुष्पाणां वृष्टिम्, प्रतीच्छतं गृह्णीतम् । अन्यावपि मल्लयोद्धारौ तद्युद्धदर्शनानन्दितैर्देवैर्निक्षिप्तां पुष्पवृष्टिं गृह्णीतः ।

अत्र श्लिष्टविशेषणानुप्राणितं निरङ्गकेवलरूपकमलङ्कारः द्वितीयतृतीयपादगतेन छेकानुप्रासेन संसृज्यते । पूर्व्वराग एव रसः, प्रसादो गुणः, वैदर्भी च रीतिः ।

बन्धा यथा रतिमञ्जरीग्रन्थे —

"पद्मासनो नागपदो लतावेष्टोऽर्द्धसम्पुटः । कुलिशं सुन्दरश्चैव तथा केशर एव च ॥
हिल्लोलो नरसिंहोऽपि विपरीतस्तथापरः । क्षुब्धो वै धेनुकश्चैव समुत्कण्ठस्ततः परम् ॥
सिंहासनो रतिनागो विद्याधरस्तु षोडश ।" एषां लक्षणानि तत्रैवोह्यानि ।

"मरुतौ पवनामरौ" इत्यमरः ।

पुनरुक्तशब्द एव द्विगुणार्थे कविरूढः । युवतिश्च युवा चेति युवानौ "पुमान् स्त्रिया" इत्येकशेषः ॥१२४॥

অন্যোন্যসঙ্গমবশাদধুনা বিভাতাং তস্যাপি তেঽপি মনসী বিকসদ্বিলাসে।
স্রষ্টুং পুনর্মনসিজস্য তনুং প্রবৃত্তমাদাবিব দ্ব্যণুককৃৎ পরমাণুযুগ্মম্ ॥১২৫॥
কামঃ কৌসুম-চাপ-দুর্জয়মমুং জেতুং নৃপং ত্বাং ধনু-
র্বল্লীমব্রণবংশজামধিগুণামাসাদ্য মাদ্যত্যসৌ।
গ্রীবালঙ্কৃতি-পট্টসূত্রলতয়া পৃষ্ঠে কিয়ল্লম্বয়া
ভ্রাজিষ্ণুং কচলেখয়েব বিলসৎসিন্দূরসৌন্দর্য্যয়া (১) ॥১২৬॥

---

বাঙ্গালা—দময়ন্তি! তোমরা দুই জনই যুবক; সুতরাং কেলিবনে যখন তোমাদের বক্ষযুক্ত নানাপ্রকার রমণরূপ মল্লযুদ্ধ চলিতে থাকিবে, তখন বায়ু তাহাতে আনন্দিত হইয়া, দ্বিগুণপরিমাণে পুষ্পবৃষ্টি করিবে; তোমরাও তাহা গ্রহণ করিবে ॥১২৪॥

অন্বয়ঃ—অধুনা অন্যোন্যসঙ্গমবশাৎ বিকসদ্বিলাসে তস্য অপি তে অপি মনসী মনসিজস্য তনুং পুনঃ স্রষ্টুং প্রবৃত্তম্ আদৌ দ্ব্যণুককৃৎ পরমাণুযুগ্মম্ ইব বিভাতাম্ ॥১২৫॥

যুবয়োর্মিথঃ প্রবৃত্তিম্ অন্যোন্যেতি। অধুনা অন্যোন্যসঙ্গমবশাৎ গুণশ্রুততয়া ঈশ্বরেচ্ছয়া চ পরস্পরসম্মিলনহেতোঃ, বিকসন্ প্রাদুর্ভবন্ বিলাসঃ কামবিকারবিশেষো যয়োস্তে তথোক্তে, তস্য নলস্যাপি, তে তবাপি, মনসী মনোদ্বয়ম্, মনসিজস্য মদনস্য, তনুং শরীরম্, পুনঃ স্রষ্টুং নির্মাতুম্, প্রবৃত্তমারভমাণম্, আদৌ দ্ব্যণুকং করোতীতি তাদৃশম্, পরমাণুযুগ্মং দ্বৌ পরমাণূ ইব, বিভাতাং শোভেতাম্। তথা চ অণুকারণবাদিভির্নৈয়ায়িকবৈশেষিকৈর্মন্যতে যথা জগৎসৃষ্টেঃ প্রাক্ ঈশ্বরেচ্ছয়া আদৌ পরমাণুদ্বয়ং সম্মিলিতং সৎ দ্ব্যণুকং করোতি, ততস্ত্রসরেণুম্, ততঃ ক্ষুদ্রং মৃৎপিণ্ডম্, ততো বৃহৎ মৃৎপিণ্ডমিত্যাদিক্রমেণ ভূমণ্ডলং সৃজতি; তথা যুবয়োর্মনোদ্বয়মপি পরস্পরং গুণশ্রুততয়া আদৌ সম্মিলিতং সৎ হরনয়নদগ্ধস্য মদনস্য মনসিজত্বেন মনোমাত্রজন্যতয়া প্রথমং তদ্দেহস্য দ্ব্যণুকমুৎপাদ্য ক্রমেণ তদ্দেহমেব সৃজত্বিতি সরলার্থঃ। যুবয়োর্দেহযুগলস্য মনোযুগলস্য চ সম্মেলনাৎ পরং কামো মূর্তিমানিব ভবন্ সব্যাপারো ভবিষ্যতীতি ভাবঃ।

অত্র মনোদ্বয়স্য মনসিজপুনঃস্রষ্টৃত্বপরমাণুদ্বয়ত্বেন সম্ভাবনাকরণাৎ বাচ্যা ভাবাভিমানিনী জাত্যুৎপ্রেক্ষালঙ্কারঃ। তথা মনসী ইত্যত্র ধর্মিণি দ্বিবচনাৎ পরমাণুযুগ্মমিত্যত্র চৈকবচনাৎ বচনভেদেন ভগ্নপ্রক্রমতাদোষ "জ্যোৎস্না ইব সিতা কীর্তিঃ" ইতি দর্পণোদাহরণবৎ। 'বিভাতং যুবকয়োর্মনো বিলাসম্" ইতি পাঠেনাস্য পরিহার্য্যঃ। যুবকয়োরিতি সর্বনামত্বাদেক। পূর্বরাগো রসঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ।

"অযৌগপদ্যাজ্জ্ঞানানাং তস্যাণুত্বমিহেষ্যতে" ইতি মনসোঽণুত্বাভিধানাৎ পরমাণূপমানতা সঙ্গচ্ছতে। বসন্ততিলকা বৃত্তম্ ॥১২৫॥

বাঙ্গালা—দময়ন্তি! পরস্পর সম্মেলনবশতঃ নলের ও তোমার মন দুইটীতে এখন নানাপ্রকার বিলাস আবির্ভূত হইবে। তাহাতে, প্রথমে দ্ব্যণুককারী দুইটী পরমাণুর ন্যায় তোমাদের সেই মন দুইটী, পুনরায় কামদেবের শরীর সৃষ্টি করিতে প্রবৃত্ত হইয়াই যেন শোভা পাইতে থাকিবে ॥১২৫॥

অন্বয়ঃ—অসৌ কামঃ কৌসুম-চাপ-দুর্জয়ম্ অমুং নৃপং জেতুম্ অব্রণ-বংশজাম্ অধিগুণাং পৃষ্ঠে

---

(১) কবরীস্রজয়েব নিষক্তসিন্দূরসৌন্দর্য্যয়া।

इत्यालपत्यथ पतत्त्रिणि तत्र भैमीं
सख्यश्चिरात्तदनुसन्धिपराः समीयुः (१)।
शर्मास्तु ते विसृज मामिति सोऽप्युदीर्य
वेगाज्जगाम निषधाधिपराजधानीम् ॥१२९॥

---

रौद्रं रुद्रसम्बन्धिनि, चक्षुषि च तत्समीप इत्यर्थः ; अन्यथा दग्धस्य पुनराश्रमाश्रयासम्भव इति ध्येयम्। तनुं शरीरम्, चिक्षिपे न्यस्तवान्। स जितसुरतः निर्वेदेन क्षमशरीरश्च, अधुना तस्य नलस्य जयाय, त्वामाश्रमं त्वत् स्वरूपं तपोवनम्, आश्रयत् तपस्यार्थमवलम्बितवान् ; तव उरोजौ स्तनावेव शैलौ पर्वतौ तावेव च निलयौ आश्रयौ यस्याः सा तादृशी, पत्रालिश्चित्रितपत्रश्रेणिः, तस्य कामस्य पर्णशालायते पर्णशालावदाचरति, सर्वथा कामोद्दीपकत्वादित्यभिप्रायः। तथा च यथा कश्चिद्वीरः अन्येन पराजितः सन् निर्वेदेन स्वकीयमस्त्रादिकं परित्यज्य अग्नौ शरीरं प्रतप्य पुनस्तज्जयाय तपोवनमाश्रयति पर्वतस्थपर्णशालायाञ्च वसति, तद्वत् काम इति भावः।

अतएवात्र प्रस्तुते कामे अप्रस्तुतस्य तादृशस्य वीरस्य व्यवहारसमारोपात् समासोक्तिः, चिक्षिपे इत्येकया क्रियया प्रस्तुताप्रस्तुतयोः कर्मतयाभिसम्बन्धात् तुल्ययोगिता, दमयन्त्याः केशस्थपुष्प-कामशरात्मकपुष्पयोः तद्भ्रूयुगल-कामधनुषोश्च भेदेऽपि अभेदाध्यवसायादतिशयोक्तिद्वयम्, अनुभ्राष्ट्रमिति आर्थोपमा, त्वामाश्रममिति उरोजशैलेति च निरङ्गं केवलरूपकद्वयम्, पर्णशालायत इति कण्ठगतोपमा, इत्यनुप्रासच्छेकानुप्रासश्चैषां संसृष्टिः। पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः।

"तत्त्वज्ञानापदीर्ष्यादेः निर्वेदः स्वावमानना" इति साहित्यदर्पणः।

अनुभ्राष्ट्रमिति सादृश्यार्थे अव्ययीभावः ॥१२८॥

**বাঙ্গালা**—দময়ন্তি! যে কামদেব, রূপে নলকর্ত্তৃক পরাজিত হইয়া, আত্মধিক্কারবশতঃ তোমার কেশকলাপে নিজের পুষ্পময় বাণগুলিকে ত্যাগ করিয়াছেন, তোমার ভ্রূযুগলে ধনু ফেলিয়া দিয়াছেন এবং ভাজিবার ভাণ্ডের মত শিবের তৃতীয় নয়নে শরীরটিকে ক্ষেপ করিয়াছেন ; সেই কামদেব এখন নলকে জয় করিবার জন্য, তোমারূপ তপোবন আশ্রয় করিয়াছেন ; তোমার স্তনরূপ পর্বতস্থিত পত্রবল্লীগুলিই তাঁহার পর্ণশালার ন্যায় আচরণ করিতেছে ॥১২৮॥

**अन्वयः**—तत्र पतत्त्रिणि इति आलपति (सति) चिरात् तदनुसन्धिपराः सख्यः भैमीं समीयुः। अथ सः अपि 'ते शर्म अस्तु, मां विसृज' इति उदीर्य वेगात् निषधाधिपराजधानीं जगाम ॥१२९॥

इतीति। तत्र पतत्त्रिणि पक्षिणि हंसे, इति पूर्वोक्तप्रकारम्, आलपति वदति सति, चिरात् दमयन्त्या चिरानवस्थानहेतोः, तस्याः दमयन्त्याः अनुसन्धिपराः अन्वेषणपरायणाः सख्यः, भैमीं दमयन्तीम्, समीयुः समागतवत्यः प्राप्ताः। अतएव अथ अनन्तरम्, स हंसोऽपि ते तव शर्म सुखमस्तु, मां विसृज त्यज इति उदीर्य उक्त्वा, वेगात् मनोजवकक्षावर्त्तेन जवात्, निषधाधिपस्य नलस्य राजधानीं नगरीम्, जगाम।

अत्र प्रथमपादे छेकानुप्रासोऽलङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः।

वसन्ततिलका वृत्तम् ॥१२९॥

**বাঙ্গালা**—সেই পক্ষী এইরূপ বলিতে লাগিলে, দময়ন্তী বিলম্ব করিতেছে দেখিয়া, তাঁহার সখীরা তাঁহার অনুসন্ধান করিতে করিতে আসিয়া তাঁহার নিকট উপস্থিত হইল।

---

(१) प्रतीयुः।

चेतोजन्मशरप्रसूनमधुभिर्व्यामिश्रतामाश्रयत्
प्रेयोदूत-पतङ्ग-पुङ्गव-गवी-हैयङ्गवीनं रसात्।
स्वादं स्वादमसीममिष्टसुरभि प्रापापि तृप्तिं न सा
तापं प्राप नितान्तमन्तरतुलामानञ्च मूर्च्छामपि ॥१३०॥

तस्या हंसो विशति बन्धुमनुज्ञमय्य (१) तं वाष्पवारि न चिरादवधीबभूव।
पार्श्वेऽपि विप्रचकृषे तदनेन दृष्टेः आरादपि व्यवदधे न तु चित्तवृत्तेः ॥१३१॥

---

তাহার পর, "দময়ন্তি! তোমার মঙ্গল হউক, আমাকে বিদায় দাও" এই কথা বলিয়া, সে হংসও, বেগে নলরাজার রাজধানীতে চলিয়া গেল। ১২৯।

**अन्वयः**—सा चेतोजन्म-शर प्रसून-मधुभिः व्यामिश्रताम् आश्रयत् इष्टसुरभि असीमं प्रेयो-दूत-पतङ्ग-पुङ्गव-गवी-हैयङ्गवीनं रसात् स्वादं स्वादं तृप्तिम् अपि न प्रापा; (प्रत्युत) अन्तः नितान्तं तापं प्राप अतुलां मूर्च्छाम् अपि आनञ्च ॥१३०॥

चेत इति। सा दमयन्ती, चेतोजन्मनो मनोभवस्य कामस्य यानि शरप्रसूनानि बाणरूपपुष्पाणि तेषां मधुभिर्मकरन्दैः, व्यामिश्रतां विशेषेण सम्मेलनम्, आश्रयत् प्राप्नुवत्, पतङ्गपुङ्गवगव्या विशेषेण तत्सम्बन्धादिति भावः, इष्टं वाञ्छनीयञ्च तत् सुरभि सुगन्धि मनोज्ञञ्चेति इष्टसुरभि, असीममतिबहुलम्, प्रेयसः प्रियतमस्य नलस्य दूतो यः पतङ्गपुङ्गवः पक्षिश्रेष्ठो हंसस्तस्य या गौः पूर्वोक्तरूपा वाणी सैव हैयङ्गवीनं ह्योगोदोहोद्भवं घृतं सद्यो-घृतमित्यर्थः तत्, रसादनुरागात्, स्वादं स्वादम् आस्वाद्यास्वाद्य सादरं श्रुत्वा श्रुत्वेत्यर्थः, तृप्तिमपि न प्रापा, भूयो भूय एव स्वादनाभिलाषादित्याशयः। प्रत्युत अन्तरन्तःकरणे, नितान्तं तापं विरहजनितसन्तापम्, प्राप, अतुला-मात्यन्तिकत्वात् तुलनारहिताम्, मूर्च्छां मोहमपि, आनञ्च जगाम प्राप्तवतीत्यर्थः। "मधुसर्पिर्यथा विषम्" इति ज्योतिषेण मधुमिश्रितघृतस्य विषतुल्यत्वाभिधानात् "मधुसर्पिषी मानतस्तुल्ये नाश्नीयात्" इति सुश्रुतेन तत्पान-निषेधाच्च तत्स्वादनेन दमयन्त्यास्तापमूर्च्छयोः प्राप्तिसम्भव एवेति भावः।

अत्र तादृशमधुभिः सह तादृशहैयङ्गवीनस्य मिश्रणासम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिः, गवीहैयङ्गवीनमिति निरङ्गं केवलरूपकम्, तथा तादृशहैयङ्गवीनपानस्य तृप्त्यभावेन वैफल्य, तापमूर्च्छाप्राप्तिरूपानर्थसम्भवाच्च विषमा-लङ्कारश्चेत्येतेषामङ्गाङ्गिभावेन सङ्करः; तथा प्रथमे पादे छेकानुप्रासः, द्वितीये छेकानुप्रासवृत्त्यनुप्रासयोरेका-श्रयानुप्रवेशरूपः सङ्करः, तृतीयचतुर्थयोश्च पुनश्छेकानुप्रास इति समुदाये संसृष्टिः। माधुर्यं गुणः, पाञ्चाली च रीतिः।

"तत्तु हैयङ्गवीनं यद् ह्योगोदोहोद्भवं घृतम्" इत्यमरः। "सुगन्धे च मनोज्ञे च वाच्यवत् सुरभिः स्मृतः" इति विश्वः।

गवीति "गौरतद्धिताभिधेये" इति राजादित्वादच्, ततः स्त्रियां ङी। स्वादं स्वादमिति "णम् आभीक्ष्ण्ये द्विश्च पदम्" इति णम् द्विर्भावश्च। आनञ्चेति गत्यर्थस्य अञ्चधातोः परोक्षाया अटि रूपम्।

शार्दूलविक्रीडितं वृत्तम् ॥१३०॥

**বাঙ্গালা**—প্রিয়তম নলের দূত পক্ষিশ্রেষ্ঠ সেই হংসের কথাগুলি, সদ্যোজাত ঘৃত-স্বরূপ ছিল এবং তাহাতে কামদেবের পুষ্পময় বাণের মধু মিশ্রিত ছিল, আর তাহা অভীষ্ট সুগন্ধি ও প্রচুর ছিল; দময়ন্তী, অনুরাগবশতঃ তাহা পান করিয়া করিয়া তৃপ্তি ত পাই-

---

(१) तस्या हयी नृपतिबन्धुम्…। तस्या हयाधिपतिबन्धुम्…। तस्या हंसोऽधिपतिबन्धुम्।

अस्तित्वं कार्य्यसिद्धेः स्फुटमथ कथयन् (१) पक्षयोः कम्पभेदै-
राख्यातुं वृत्तमेतद्‌ निषधनरपतौ सर्वमेकः प्रतस्थे।
कान्तारे निर्गतासि प्रियसखि! पदवी विस्मृता किन्नु मुग्धे!
मा रोदीरेहि यामीत्युपहृतवचसो निन्युरन्यां वयस्याः ॥१३२॥

কেনই না, অধিকন্তু মনে অত্যন্ত সন্তাপ ভোগ করিতে লাগিলেন এবং অতুলনীয় মূর্চ্ছার কষ্টও পাইতে থাকিলেন ।১৩০।

**अन्वयः**—वियति तं बन्धुम् अनुव्रजन्त्याः तस्याः दृशः बाष्पवारि न चिरात् अवधीबभूव। तत् अनेन पार्श्वे अपि दृष्टेः विप्रचक्रषे, तु आरात् अपि चित्तवृत्तेः न व्यवदधे ॥१३१॥

तस्या इति। वियति आकाशे, तं बन्धुं हितसाधनाय प्रवृत्तत्वात् बान्धवभूतं हंसम्, अनुव्रजन्त्या अनुगच्छन्त्याः तस्या दमयन्त्याः, दृशो दृष्टेः सम्बन्धि, बाष्पवारि अश्रुजलम्, न चिरादचिरात् शीघ्रमेव, अवधीबभूव सीमीभूतम्। तत्तस्मात्, अनेन हंसेन, पार्श्वेऽपि निकटेऽपि सता दृष्टेः दमयन्तीनयनस्य, विप्रचक्रषे विप्रकृष्टं दूरस्थीभूतम्; तु किन्तु, आरादपि दूरेऽपि सता अनेन हंसेनेति सम्बन्धः, चित्तवृत्तेर्मनोव्यापारस्य, न व्यवदधे न व्यवहितीभूतम्। तथा च "ओदकान्तं प्रियं पान्थमनुव्रजेत्" इति अरबात् दमयन्त्या दृष्टिः स्वाश्रुजलपर्य्यन्तमेव गगनगामिनं तं हंसमनुजगाम; ततः परन्तु तदश्रुजलावृततया निकटवर्त्तिनमपि तं न ददर्श; किन्तु चित्तवृत्तेः सर्वत्राप्रतिहतत्वात् दूरतया व्यवधाने सत्यपि तं सा चिन्तयामासेति सरलार्थो भावः।

अत्र दमयन्त्या दृशि बन्धुगमनानुगामिनी जनस्य व्यवहारसमारोपात् समासोक्तिः, तथा सन्निकृष्टस्य विप्रकृष्टत्वात् विप्रकृष्टस्य च सन्निकृष्टत्वात् विरोधः, नयनस्य अश्रुजलावृतत्वेन चित्तवृत्तेरप्रतिहतत्वेन च तत्समाधान मति विरोधाभासश्चेति एतेषां मिथो निरपेक्षतया संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः।

"पार्श्वमन्तिके। कक्षाधोऽवयवे चक्रपार्श्वपर्श्वसमूहयोः" इति हेमचन्द्रः। "आराद्दूरसमीपयोः" इत्यमरः। नचिरादिति अभावार्थेन नञ्शब्देन सुप्सुपेति समासः। विप्रचक्रषे व्यवदधे इत्युभयत्रापि भावे परोक्षा।
वसन्ततिलकं वृत्तम् ॥१३१॥

**বাঙ্গালা**—দময়ন্তীর বন্ধু সেই হংসটী আকাশে যাইতে লাগিল; দময়ন্তীর দৃষ্টিও তাহার পিছনে চলিল; কিন্তু হঠাৎ অশ্রুজল উপস্থিত হইয়া, তাঁহার দৃষ্টির সীমা হইয়া দাঁড়াইল। তাহাতে সেই হংস নিকটবর্ত্তী হইয়াও তাঁহার দৃষ্টির দূরবর্ত্তী হইল; কিন্তু দূরবর্ত্তী হইয়াও চিত্তবৃত্তির ব্যবহিত হইল না ॥১৩১॥

**अन्वयः**—अथ एकः पक्षयोः कम्पभेदैः कार्य्यसिद्धेः अस्तित्वं स्फुटं कथयन् (इव) निषधनरपतौ एतत् सर्वं वृत्तम् आख्यातुं प्रतस्थे। (हे) प्रियसखि! कान्तारे निर्गता असि, (हे) मुग्धे! किन्नु पदवी विस्मृता? मा रोदीः एहि, याम, इति उपहृतवचसः वयस्याः अन्यां निन्युः ॥१३२॥

अस्तित्वमिति। अथ दमयन्तीहंसयोर्नमतिसम्भाषणानन्तरम्, एकस्तयोर्मध्ये हंसः, पक्षयोः कम्पभेदैः चालनविशेषैः, कार्य्यस्य नलकर्तृकदमयन्तीलाभरूपस्य प्रयोजनस्य सिद्धेर्निष्पत्तेः, अस्तित्वं सद्भावम्, स्फुटम् व्यक्तम् कथयन्निव लोकेषु ज्ञापयन्निव, पक्षचालनविशेषैर्लोकेषु लोक इवेति भावः, निषधनरपतौ नले तत्समीप इत्यर्थः, एतत् दमयन्त्या सह सञ्जातम्, सर्वं वृत्तं वृत्तान्तम्, आख्यातुं वक्तुम्, प्रतस्थे नलसमीपं जगाम। हे प्रियसखि! कान्तारे प्रायेण लोकानां गमनागमनाभावात् दुर्गमे पथि, त्वं निर्गतासि, हे मुग्धे! नगर्य्याः स्वागाः

(१) ···स्फुटमनुकथयन्···।

**सरसि नृपमपश्यद् यत्र तत्तीरभाजः स्मरतरलमशोकानोकहस्योपमूलम् ।**
**किसलयदलतल्पग्लापिनं प्राप तं स ज्वलदसमशरेषुस्पर्द्धिपुष्पर्द्धिमौलेः ॥१३३॥**

---

सखि ! किमु पदवी प्रकृतः पन्थाः, विच्युता । अतएव च किं कान्तारनिर्गमनमित्याशयः । मा रोदीः कान्तारनिर्गमनात् ततोऽपि अपसरणपथालाभाद्भयेन रोदनं मा कुरु । अन्योऽन्यसखा विरहेणैव दमयन्त्या रुदितम्, किन्तु कान्तारनिर्गमनात् ततोऽपसरणपथालाभाच्च भयेनैव दमयन्ती रोदितीत्यवधार्य सखीभिरित्युक्तमिति बोध्यम् । एहि, याम गच्छाम इति इत्थम्, उपहृतानि दमयन्त्यै दत्तानि उक्तानीत्यर्थः वचांसि वाक्यानि याभिस्ताः, वयस्याः सख्यः, अन्या दमयन्तीम्, निन्युः तत्स्थानात् वसतिस्थानं प्रापयामासुः ।

अत्र हंसस्य पक्षसञ्चालनमात्रे कार्य्यसिद्धिसूचकभङ्गीविशेषस्य सम्भावनाकरणात् इवाद्यभावाच्च प्रतीयमाना क्रियोत्प्रेक्षालङ्कारः, निन्युरन्यामिति च्छेकानुप्रासश्चेत्युभयोः संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"महारण्ये दुर्गपथे कान्तारः पुंनपुंसकम्" इत्यमरः ।

अस्तीति क्रियाप्रतिरूपकमव्ययं सत्तार्थं इति शब्दशक्तिप्रकाशिकायां जगदीशः ।

स्रग्धरा वृत्तम् । "म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्" इति लक्षणात् ॥१३२॥

**বাঙ্গালা**—তাহার পর, তাহাদের মধ্যে একজন (হংস), পক্ষসঞ্চালনের ভঙ্গী দ্বারা 'কার্য্যসিদ্ধ হইয়াছে' ইহা স্পষ্টতঃ জানাইতে জানাইতেই যেন, নলরাজার নিকটে এই সকল বৃত্তান্ত বলিবার জন্য, প্রস্থান করিল; আর "প্রিয়সখি ! তুমি দুর্গম পথে আসিয়া পড়িয়াছ; মুগ্ধে ! প্রকৃত পথ ভুলিয়া গিয়াছ কি ? রোদন করিও না; আইস, আমরা যাই" এই কথা বলিয়া সখীরা অন্য জনকে (দময়ন্তীকে) লইয়া গেল ॥১৩২॥

**অন্বয়ঃ**—सः यत्र सरसि नृपम् अपश्यत्, तत्तीरभाजः ज्वलदसमशरेषु-स्पर्द्धि-पुष्पर्द्धि-मौलेः अशोकानोकहस्य उपमूलं स्मर-तरलं किसलय दल-तल्प ग्लापिनं तं प्राप ॥१३३॥

सरसीति । स हंसः, यत्र सरसि, नृपं नलम्, अपश्यत् पूर्वं दृष्टवान्; तस्यैव सरसस्तीरं भजति आश्रयतीति तस्य तत्तीरभाजः, ज्वलन्तो देदीप्यमाना ये असमशरस्य पञ्चबाणस्य कामस्य इषवो बाणाः तैः सह स्पर्द्धते या सा तादृशी पुष्पर्द्धिः कुसुमसमृद्धिः यत्र स तथाविधो मौलिरग्रभागो यस्य तस्य तथोक्तस्य, अशोकानोकहस्य अशोकवृक्षस्य, उपमूलं मूलसमीपे, स्मरेण कामेन तरलं चञ्चलीभूतम्, किसलयदलानां नवपल्लवपत्राणां यत् तल्पं शय्या तत् ग्लापयति शरीरतापेन म्लानं करोतीति तम्, तं नलम्, प्राप प्राप्तवान् ।

अत्र शरेषुपदयोरर्थस्य आपाततः पुनरुक्ततया प्रतीतिः, परन्तु असमशरस्य कामस्य इषव इति भेदावगमात् भिन्नाकारशब्दगतत्वाच्च पुनरुक्तवदाभासोऽलङ्कारः, स्पर्द्धिपदस्य सादृश्यबोधकत्वात् आर्थोपमा, तत्रैव च्छेकानुप्रासश्चेत्येतेषामेकाश्रयानुप्रवेशरूपः सङ्करः । तथा च इत्यन्ततृतीयपादेनैव वाक्यसमाप्तावपि पुनस्तदन्वयं तस्य अशोकानोकहस्येत्यस्य विशेषणतया चतुर्थपादोपादानात् समाप्तपुनरात्तता दोषः; चतुर्थपादं तृतीयपादस्थाने तृतीयपादञ्च चतुर्थपादस्थाने पठित्वासौ समाधेयः । अन्योन्यकर्षस्य आरोहावरोहाभ्याम् ओजो गुणः, गौडी च रीतिः ॥१৩৩॥

**বাঙ্গালা**—হংস পূর্বে যে সরোবরে নলকে দেখিয়াছিল; সেই সরোবরের তীরে একটি অশোকবৃক্ষ ছিল; তাহার মাথার ফুলগুলি, কামদেবের জ্বলন্ত বাণের ন্যায় প্রকাশ পাইতেছিল; তাহার মূলের নিকটে নলরাজা (নিজের শরীরের তাপে) নবপল্লবনির্মিত

परवति ! दमयन्ति ! त्वां न किञ्चिद्वदामि
द्रुतमुपनम किं मामाह सा शंस हंस ! ।
इति वदति नलेऽसौ तच्छशंसोपनम्रः
प्रियमनु सुकृतां हि स्वस्पृहाया विलम्बः ॥१२४॥
कथितमपि नरेन्द्रः शंसयामास हंसं
किमिति किमिति पृच्छन् भाषितं स प्रियायाः ।
अधिगतमथ सान्द्रानन्दमाध्वीकमत्तः
स्वयमपि शतकृत्वस्तत्तथाऽन्वाचचक्षे ॥१२५॥

শয্যা থানিকে ম্লান করতঃ, কামপীড়ায় চঞ্চল হইয়া অবস্থান করিতেছিলেন ; এই অবস্থায় হংস তাহাকে দেখিল ।১২৩।

**अन्वयः**—(हे) परवति ! दमयन्ति ! त्वां किञ्चित् न वदामि ; (हे) हंस ! (त्वं) द्रुतम् उपनम, सा मां किम् आह, (तत्) शंस । नले इति वदति (सति) असौ उपनम्रः (सन्) तं शशंस । हि सुकृतां प्रियम् अनु स्वस्पृहाया (एव) विलम्बः ॥१२४॥

परेति । हे परवति ! पित्राद्यधीनत्वात् पराधीने ! दमयन्ति ! त्वां किञ्चिन्न वदामि स्वयमागत्य किं न मामाश्रयसीत्यादि न ब्रवीमि, परवत्त्वादेव स्वयं किञ्चित् कर्त्तुमसमर्थत्वादिति भावः । किन्तु हे हंस ! त्वं द्रुतम् उपनम मत्समीपे उपस्थितो भव, सा दमयन्ती, मां किमाह ब्रवीति स्म, तत् शंस ब्रूहि । नले इति वदति सति, असौ हंसः, उपनम्रस्तत्समीपे उपस्थितः सन्, तत् दमयन्त्या सह आलापादिकं वृत्तान्तजातम्, शशंस उवाच । ननु न तस्य तादृश्या [illegible]मानन्तरमेव अजानन् हंस उपस्थाय तत् कथमुक्तवानित्यत आह । हि यस्मात्, सुकृतां पुण्यवतां जनानां सम्बन्धे, प्रियं स्वाभीष्टम्, अनु लक्ष्यीकृत्य, स्वस्पृहायाः स्वेच्छाकरणमात्रस्यैव विलम्बः कालक्षेपः, न तु तत्सिद्धेर्विलम्ब इति भावः ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, वदनाभावं प्रति परवतीति पदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, स्वस्पृहाया विलम्बः न पुनस्तत्सिद्धेरित्यन्यव्यपोहनादार्थी परिसंख्या चेत्येतेषां गुणप्रधानभावेनाङ्गाङ्गिभावात् सङ्करः ; शंस हंसेति पदगतेनान्त्यानुप्रासेन चासौ संसृज्यते । पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ।

"परतन्त्रः पराधीनः परवान्नाथवानपि" इत्यमरः ।

आहेत्यतीतसामीप्ये वर्त्तमाना । उपनम इति "दीपि-कम्प्रजसि" इत्यादिना नमते रप्रत्ययः । सुकृतामिति "कृञः सुपुण्य—" इत्यादिना क्विप् ।

मालिनी वृत्तम् ॥१२४॥

বাঙ্গালা—হে পরাধীনে ! দময়ন্তি ! আমি তোমাকে কিছু বলিতেছি না ; কিন্তু হে হংস ! তুমি শীঘ্র উপস্থিত হও ; দময়ন্তী আমাকে কি বলিয়াছেন, তাহা বল ; নল এইরূপ বলিতে লাগিলে, সেই হংস উপস্থিত হইয়া সেই বৃত্তান্ত সমুদায় বলিল । কারণ, পুণ্যবান্দিগের অভীষ্টলাভের বিষয়ে তাঁহাদের ইচ্ছা করিবার যে টুকু বিলম্ব, সেই টুকুমাত্রই বিলম্ব হইয়া থাকে (কিন্তু অভীষ্টলাভে বিলম্ব হয় না) ।১২৪।

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
तार्तीयीकतया मितोऽयमगमत्तस्य प्रबन्धे महा-
काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः ॥१३६॥

—०—

---

**अन्वयः**—सः नरेन्द्रः किमिति किमिति पृच्छन् कथितम् अपि प्रियाया भाषितं हंसं (पुनः पुनः) शंसयामास ; अथ सान्द्रानन्दमाध्वीकमत्तः (सन्) स्वयम् अपि अधिगतं तत् शतकृत्वः तथा अन्वाचचक्षे ॥१३५॥

कथितमिति । स नरेन्द्रो राजा नलः, किमिति किमिति प्रियया कीदृशं कीदृशमभिहितमिति पृच्छन्, कथितमपि हंसेनोक्तमपि, प्रियाया दमयन्त्या भाषितं वाक्यम्, हंसम्, शंसयामास पुनः पुनर्वादयामास ; श्रवणपिपासाया अनिवृत्तेरिति भावः । अथ अनन्तरम्, सान्द्रो निरन्तर आनन्द एव माध्वीकं मादकत्वान्मधु तेन मत्तः सन्, स्वयमात्मनापि, अधिगतं हंसमुखात् श्रुतम्, तत् दमयन्तीभाषितम्, शतकृत्वो बहुवारम्, तथा हंसवदेव, अन्वाचचक्षे अनुवदति स्म ; तद्भाषितस्य माधुर्यातिशयादित्याशयः ।

अत्र सान्द्रानन्दमाध्वीकेति निरङ्गं केवलरूपकं छेकानुप्रासश्चेत्यनयोः संसृष्टिः परस्परनिरपेक्षत्वात् — [illegible] अत्र सान्द्रानन्दमाध्वीकेति निरङ्गं केवलरूपकं छेकानुप्रासश्चेत्यनयोरेकाश्रयानुप्रवेशरूपः सङ्करः । पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ।

शतकृत्व इति "वारस्य संख्यायाः कृत्वसुच्" इति कृत्वसुच्प्रत्ययः ॥१३५॥

বাঙ্গালা—হংস দময়ন্তীর উক্তিগুলি বলিলেও, নলরাজা 'কিরূপ ? কিরূপ ?' এই ভাবে জিজ্ঞাসা করিতে থাকিয়া, হংসকে দিয়া বার বার তাহা বলাইয়াছিলেন ; তাহার পর, নিবিড় আনন্দরূপ মদ্যসেবনে মত্ত হইয়া নিজেও, সেই ভাবে শতবার সেই উক্তিগুলির অনুবাদ করিয়াছিলেন ॥১৩৫॥

श्रीहर्षमिति । तृतीय एव तार्तीयीकस्तस्य भावस्तया । "आख्यातात् तमादयः" इति तृतीयशब्दात् स्वार्थे ईकण्प्रत्ययः । अन्यत् सर्वं पूर्ववत् ।

सप्त-वेद-वसु चन्द्र सम्मिते वत्सरे शककर्मदीपनः शुचौ ।
भूरिकर्म्मनिरतेन निर्म्मिता श्रीमतेति हरिदासशर्म्मणा ॥

इति ᳚गदाधरविद्यालङ्कारभट्टाचार्य्यात्मज-श्रीहरिदाससिद्धान्त-
वागीशभट्टाचार्य्यविरचितायां नैषधचरितटीकायां
जयन्तीसमाख्यायां तृतीयः सर्गः ॥०॥

—✿—

# चतुर्थः सर्गः ।

—— ❀ ——

**अथ नलस्य गुणं गुणमात्मभूः सुरभि तस्य यशः कुसुमं धनुः ।**
**श्रुतिपथोपगतं सुमनस्तया तमिषुमाशु विधाय जिगाय ताम् ॥१॥**
**यदतनुज्वरभाक् तनुते स्म सा प्रिय-कथा-सरसी-रस-मज्जनम् ।**
**सपदि तस्य चिरान्तरतापिनी परिणतिर्विषमा समपद्यत ॥२॥**

---

**अन्वयः**—अथ आत्मभूः श्रुतिपथोपगतं नलस्य गुणं श्रुति-पथोपगतं कुसुमं गुणम्, श्रुतिपथोपगतं सुरभि (च) तस्य यशः कुसुमं धनुः, सुमनस्तया श्रुतिपथोपगतं तं (च) कुसुमम् इषुं विधाय, आशु तां जिगाय ॥१॥

अविताऽन्तकगर्वाय पर्वतेश्वरवर्त्तिने ।
अतिसर्वाय सर्वाय पार्वतीजानये नमः ॥

अथ निरतिशयपूर्वरागेण दुःसहं दमयन्त्या विरहं वर्णयिष्यन् चतुर्थसर्गमारभते अथेति । अथ हंसस्य प्रस्थानानन्तरम्, आत्मभूः कामः, श्रुतिपथोपगतं हंसमुखात् श्रुतम्, नलस्य, गुणं सौन्दर्य्यादिकम्, श्रुतिपथोपगतं कर्णान्ताकृष्टम्, कुसुमं पुष्पमयम्, गुणं मौर्वीं विधाय श्रुतिपथोपगतं बहुलोकादाकर्णितम्, सुरभि विख्यातं सुगन्धि च, तस्य नलस्य, यशः प्रशंसाम्, कुसुमं पुष्पमयम्, धनुः कार्म्मुकम्, विधाय, तथा सुमनस्तया मनस्वितया प्रकारेण, श्रुतिपथोपगतं हंसादिभ्यः श्रुतम्, तं नलञ्च, कुसुमं पुष्पमयम्, इषुं बाणम्, विधाय कृत्वा, आशु शीघ्रम्, तां दमयन्तीम्, जिगाय जितवान् आयत्तीकृतवानिति तात्पर्य्यम् । हंसमुखात् नलस्य सौन्दर्य्य-यशः-सहृदयत्वादिश्रवणेन निरतिशयपूर्वरागोदयात् तद्विरहाच्च दमयन्ती नितरां कामातुरा बभूवेति निष्कर्षः ।

अत्र नलगुणादौ आरोप्यमाणानां मौर्वीत्वादीनां प्रकृतजयोपयोगितया परिणामालङ्कारः, विधायेत्येकया क्रियया गुणधनुरिषूणां कर्म्मतयाभिसम्बन्धात् तुल्ययोगिता, गुणं गुणमिति छेकानुप्रासश्चेत्येतेषां मिथो निरपेक्षतया संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"विख्याते सचिवे धीरे चैत्रेऽपि च पुमानयम्" इति सुरभिशब्दे मेदिनी ।

जिगायेति जिधातोः परोक्षायां अटि "जेर्गिः सन् परोक्षयोः" इति गिरादेशः ।

अस्मिन् सर्गे द्रुतविलम्बितं नाम वृत्तम् । "द्रुतविलम्बितमाह नभौ भरौ" इति लक्षणात् ॥१॥

**বাঙ্গালা**—অনন্তর, কামদেব নলের গুণকে ধনুর গুণ করিয়া, নলের বিখ্যাত যশকে পুষ্পময় ধনু করিয়া, এবং মনস্বী বলিয়া শ্রুত নলকেই বাণ করিয়া, সত্বর দময়ন্তীকে জয় করিলেন ॥১॥

**अन्वयः**—सा अतनुज्वरभाक् (सती) यत् प्रिय-कथा-सरसी-रस-मज्जनं तनुते स्म, सपदि तस्य चिरान्तरतापिनी विषमा परिणतिः समपद्यत ॥२॥

यदिति । सा दमयन्ती, अतनुरनङ्गः कामस्तेन यो ज्वरः सन्ताप एव ज्वरः समानख्यातो रोगस्तं भजत इति सा तथोक्ता सती, यत्, प्रियस्य नलस्य कथा हंसकथितमुपाख्यानमेव सरसी तापहारित्वाज्जलाशयविशेषस्तस्य

ध्रुवमधीतवतीयमधीरतां दयित-दूत-पतङ्ग-वेगतः ।
स्थितिविरोधकरीं द्व्यणुकोदरी तदुदितः स हि, यो यदनन्तरः ॥३॥

रसः शृङ्गारादिरेव रसो जलं तत्र मज्जनमनुभव एव मज्जनमवगाहनम्, तनुते स्म विस्तारेण चकार; सपदि तत्क्षणात्, तस्य मज्जनस्य सम्बन्धिनी, चिरान्तरतापिनी दीर्घकालं यावत् अन्तःकरणे कामसन्तापजनिका शरीराभ्यन्तरे दाहजनिका च, विषमा दारुणा, परिणतिः परिपाकः, समपद्यत सम्पन्ना उपस्थितेत्यर्थः । यथा तरुणज्वरिणो कश्चन सरस्यामवगाहनात् परमेव तीव्रदाहजनको महान् ज्वरो जायते, तथा पूर्वत एव कामपीडाक्रान्ताया दमयन्त्या नलकथाप्रतिपादितशृङ्गारानुभवानन्तरमेव निरतिशयमनःसन्तापजनिका महती कामपीडा सञ्जातेति भावः ।

अत्र प्रियकथायां सरसीत्वारोप शृङ्गारादौ जलत्वारोपे निमित्तं स पुनरारोपः श्लिष्टशब्दनिबन्धन इति श्लिष्टपरम्परितं रूपकमलङ्कारः पूर्वार्द्धगतच्छेकानुप्रासेन संसृज्यते । मधुररचनाश्रयात् माधुर्यं गुणः, वैदर्भी च रीतिः ।

"रसो जलं रसो हर्षः रसः शृङ्गारपूर्वकः ।
रसः सालद्रुनिर्यासः पारदोऽपि रसो विषम् ।" इत्यनेकार्थध्वनिमञ्जरी ॥२॥

বাঙ্গালা—দময়ন্তী কামজ্বরে পীড়িত হইয়া যে নলকথারূপ সরোবরের জলে অবগাহন করিয়াছিলেন ; তৎক্ষণাৎ তাহার বিষম পরিণতি উপস্থিত হইয়াছিল। কেন না, সে পরিণতি তাঁহার অন্তরে বহুকাল যাবৎ সন্তাপ জন্মাইয়াছিল ॥২॥

अन्वयः—द्व्यणुकोदरी इयं दयित-दूत-पतङ्ग-वेगतः स्थितिविरोधकरीम् अधीरतां ध्रुवम् अधीतवती । हि यः यदनन्तरः सः तदुदितः ॥३॥

ध्रुवमिति । सम्मिलितं परमाणुद्वयं द्व्यणुकं तद्वत् उदरं यस्याः सा द्व्यणुकोदरी अतीवकृशोदरीत्यर्थः, इयं दमयन्ती, दयितस्य वल्लभस्य नलस्य दूतो यः पतन् पक्षी हंसस्तस्य गते गमने यो वेगो गमनजनितवेगाधिक्यं तस्मात्, स्थितिविरोधकरीं स्त्रीमर्य्यादाभङ्गकारिणीम् अवस्थानमपरित्यक्तुं रक्षणीय, अधीरतामधैर्यम्, ध्रुवं निश्चितम्, अधीतवती शिशिक्षे । हि यस्मात्, यः पदार्थः, यदनन्तरो यत्पदार्थोत्तरजातः, स पदार्थः, तस्मात् पूर्वपदार्थात् उदित उत्पन्नो मन्तव्यः । तथा च नियतपूर्ववर्त्तिनः कारणत्वाभ्युपगमात् हंसगमनवेगात् परमेव दमयन्त्या अधीरतोत्पत्तेः तामधीरतां प्रति स हंसगमनवेग एव कारणं निश्चीयत इति भावः ।

अत्र ध्रुवशब्दस्य उत्प्रेक्षावाचकत्वात् वाच्या क्रियोत्प्रेक्षा, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्च, अनयोरङ्गाङ्गिभावेन सङ्करः ; सोऽपि च छेकानुप्रासेन संसृज्यते । तथा द्व्यणुकोदरीत्यत्र उपमानगतस्य नत्वादिकोऽनुचितार्थत्वदोषः, उत्प्रेक्षितार्थसमर्थनाशापरोऽनुचितार्थत्वदोषः । 'स्थितिविरोधकरीं सुकृशोदरी विलुलिताङ्गलता विकलेन्द्रिया' इति पाठेन तयोः समाधानं विधेयम् । पूर्ववन्माधुर्यं गुणः, वैदर्भी च रीतिः ।

"पतत् पत्ररथाण्डजाः" इति पक्षिपर्य्याये अमरः ।
वेगत इति "आख्यातोपयोगे" इत्यपादानत्वात् पञ्चमी ॥३॥

বাঙ্গালা—অত্যন্ত কৃশোদরী দময়ন্তী, নিশ্চয়ই নলদূত হংসের গমনবেগ হইতে স্ত্রীলোকের মর্য্যাদাভঙ্গকারী অধৈর্য্য শিক্ষা করিয়াছিলেন। কারণ, যাহার পর যে হয়, সে তাহা হইতেই উৎপন্ন হয় ॥৩॥

अतितरां (१) समपादि जडाशयं स्मितलवस्मरणेऽपि तदाननम् ।
अजनि पङ्गुरपाङ्गनिजाङ्गन-भ्रमिकथास्वपि तदीयदृग्-खञ्जनः ॥४॥
किमु तदन्तरुभौ भिषजौ दिवः स्मरनलौ विशतः स्म विगाहितुम् ।
तदभिकेन चिकित्सितुमाशु तां मखभुजामधिपेन नियोजितौ ॥५॥
कुसुमचापज-ताप-समाकुलं कमल-कोमलमैक्षत तन्मुखम् ।
अहरहर्वहदभ्यधिकाधिकां रवि-रुचि-ग्लपितस्य विधोर्विधाम् ॥६॥

**अन्वयः**—तदाननं स्मितलवस्मरणे अपि अतितरां जडाशयं समपादि । तदीयदृग्खञ्जनः अपाङ्ग-निजाङ्गन-भ्रमि कथां अपि पङ्गुः अजनि ॥४॥

अतितरामिति । तस्या दमयन्त्या आननं कर्त्तृ, स्मितलवस्य ईषद्धास्यलेशस्य स्मरणेऽपि करणे का कथा चिन्तायामपि, अतितरामत्यन्तम्, जडाशयं जडमति, समपादि सम्पन्नं जातमित्यर्थः । तथा तस्या दमयन्त्या दृगेव चक्षुरेव खञ्जनः तद्वत् सुन्दरत्वात् खञ्जरीटः पक्षी, अपाङ्गः स्वप्रान्त एव निजम् अङ्गनं भ्रमणचत्वरं तत्र या भ्रमिर्भ्रमणं तस्याः कथायामपि लेशेऽपि स्वल्पमात्रतत्करणेऽपीत्यर्थः, पङ्गुः खञ्जः, अजनि जातः, स्वल्पोऽपि सविलासदृष्टिपातो न तया कृत इति तात्पर्यम् । उभयत्रापि दारुणविरहवेदनावशादिति भावः । अपरोऽपि जडमतिः पूर्वकृतं न स्मरति ; इतरः खञ्जोऽपि च निजाङ्गने स्वल्पमपि भ्रमणं कर्त्तुं नार्हति ।

अत्र अपाङ्गे निजाङ्गनत्वारोपं दृशां खञ्जनत्वारोपं प्रति निमित्तमिति श्लिष्टशब्दनिबन्धनं परम्परितरूपकालङ्कारो रसानुप्रासेन संसृज्यते । माधुर्यं गुणः, वैदर्भी च रीतिः ॥४॥

বাঙ্গালা—দময়ন্তীর মুখখানি হাস্যলেশ স্মরণ করিতেও অক্ষম হইয়াছিল এবং তাঁহার নয়নখঞ্জনও, নিজপ্রান্তরূপ অঙ্গনে (উঠানে) অল্পমাত্র ভ্রমণ করিতেও খঞ্জ হইয়াছিল ॥৪॥

**अन्वयः**—तदभिकेन मखभुजाम् अधिपेन ताम् आशु चिकित्सितुं नियोजितौ उभौ दिवः भिषजौ किमु स्मरनलौ तदन्तः विगाहितुं विशतः स्म ॥५॥

किमु इति । तस्या दमयन्त्या अभिकेन कामुकेन, मखभुजां देवानाम्, अधिपेन इन्द्रेण, तां दमयन्तीम्, आशु शीघ्रम्, चिकित्सितुं नियोजितौ उभौ दिवः स्वर्गस्य, भिषजौ वैद्यौ अश्विनीकुमारौ किमु, ताविवेत्यर्थः, स्मरनलौ कामनलनामानौ, तस्या दमयन्त्या अन्तरन्तःकरणम्, विगाहितुम् आलोडयितुं परीक्षितुञ्च, विशतः स्म प्रविष्टवन्तौ । दमयन्ती खलु तदानीं नलं नलविषयकं कामञ्च तावुभावपि सर्वदा चिन्तितवतीति तात्पर्यम् ।

अत्र किमुशब्दस्य उत्प्रेक्षावाचकत्वात् वाच्या द्रव्योत्प्रेक्षालङ्कारः । पूर्वरागो रसः । तथा च दमयन्त्या नलानुरागः स्थायी भावः, नल आलम्बनविभावः, तत्कथास्मरणमुद्दीपनविभावः, चिन्ता च व्यभिचारी भावः । एतमन्यत्रापूह्यम् । प्रसादो गुणः, वैदर्भी च रीतिः ।

"कम्रः कामयिताऽभीकः कमनः कामनोऽभिकः" इत्यमरः ।

अभिकामयत इत्यभिकः, अभिपूर्वात् कमेः "अनुकाभिकाभीकः कमिता" इति उपन्यासः ॥५॥

বাঙ্গালা—কাম ও নলরাজা অবগাহন করিবার জন্য দময়ন্তীর হৃদয়ে প্রবেশ করিয়া- ... হয় দময়ন্তীকামুক স্বয়ং দেবরাজই যেন তাঁহাকে চিকিৎসা করি- ... স্বর্গের অশ্বিনীকুমারদ্বয়কে পাঠাইয়া দিয়াছিলেন ॥৫॥

(१) अतितमाम् ।

**तरुणता-तरणि-द्युति-निर्म्मित-द्रढिम तत्कुच-कुम्भयुगं तदा ।**
**अनल-सङ्गति-तापमुपैतु नो ? कुसुमचाप-कुलाल-विलासजम् ॥७॥**

---

**अन्वयः**—कमलकोमलं तन्मुखं कुसुमचापजतापसमाकुलं (सत्) रविरुचि ग्लपितस्य विधोः अहरहः अभ्यधिकाधिकां विधां वहत् ऐक्ष्यत (सखीभिः) ॥६॥

कुसुमेति । कमलं पद्ममिव कोमलम् । अतएव तापेन म्लानतासम्भव इति भावः । तस्या दमयन्त्या मुखम्, कुसुमचापजेन कामानुतापजेन तापेन समाकुलं व्याप्तं सत्, रविरुच्या सूर्यकिरणेन ग्लपितस्य प्रभातकाले म्लानतां प्रापितस्य, विधोः कृष्णपक्षीयचन्द्रस्य सम्बन्धिनीम्, अहरहः प्रतिदिनम्, अभ्यधिकाधिकां क्रमेणातिरिक्ताम्, विधां प्रकारं म्लानतावस्थामित्यर्थः, वहत् धारयत्, ऐक्ष्यत सर्व्वाभिरदृश्यत ।

अत्र कमलकोमलमिति लुप्तोपमा, तथा अन्यस्य विधां कथमन्यो वहेदिति वस्तुसम्बन्धोऽसम्भवन् विधामिव विधामिति सादृश्यं बोधयतीत्यसम्भवद्वस्तुसम्बन्धा निदर्शनालङ्कारश्च छेकानुप्रासेन संसृज्यते । माधुर्यं गुणः, वैदर्भी च रीतिः ।

"विधा विधौ प्रकारे च" इत्यमरः । अभि सर्वतो भावेन अधिकाधिकेति अभ्यधिकाधिका ताम् ॥६॥

**বাঙ্গালা**—পদ্মের ন্যায় কোমল দময়ন্তীর মুখখানি, কামসন্তাপে আকুল হইয়া, সূর্য্যকিরণম্লান চন্দ্রের প্রত্যহবৃদ্ধিপ্রাপ্ত অবস্থা ধারণ করিতেছে ইহা সখীরা দেখিতে লাগল ॥৬॥

**अन्वयः**—तदा तरुणतातरणिद्युतिनिर्म्मितद्रढिम तत्कुचकुम्भयुगं कुसुमचापकुलालविलासजम् अनलसङ्गतितापं नो उपैतु ? ॥७॥

तरुणतेति । तदा तस्मिन् काले, तरुणता यौवनमेव तरणिः सन्तापकत्वात् सूर्यः तस्य द्युत्या तापेन निर्म्मितः कृतो द्रढिमा काठिन्यं शुष्कता च यस्य तत्, तस्या दमयन्त्याः कुचौ कुम्भाविव कुम्भौ स्थूलगोलोन्नतत्वात् कलशौ तयोर्युगं युगलं कर्त्तृ, कुसुमचापः काम एव कुम्भनिर्म्मापप्रयोजकत्वात् कुम्भकारस्तस्य विलासादाविर्भावात् प्रयत्नाच्च जायत इति तत्, अनलसङ्गतिर्नलसंयोगाभाव एव अनलसङ्गतिरग्निसंयोगस्तेन यस्तापो विरहज्वरो दाहश्च तम्, नो उपैतु न प्राप्नोतु ? इति काकुः ; ततश्च प्राप्नोत्वेवेत्यर्थः ; आदौ आमृत्तिकया निर्म्माणम्, ततः सूर्य्यतापेन शुष्कीकरणम्, परञ्च वह्नौ दहनमिति कुम्भनिर्म्माणप्रणाल्या दृष्टत्वादिति भावः ।

अत्र समस्तवस्तुविषयं साङ्गं श्लिष्टशब्दनिबन्धनं रूपकमलङ्कारश्छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते । तथा तृतीयपादेन वाक्यसमाप्तावपि पुनस्तदन्वगतस्य तापमित्यस्य विशेषणतया चतुर्थपादोपादानात् समाप्तपुनरात्तता-दोषः ; स च तृतीयचतुर्थपादयोः पाठपौर्वापर्य्यविपर्य्ययेण समाधेयः । न च तथात्वे मकारस्य परागमे सति तृतीयपादान्तिमाक्षरस्य लघुत्वापत्त्या पुनर्हतवृत्ततादोष इति वाच्यम्, सर्वपादान्तिमाक्षरस्यैव लघुत्वेऽपि विकल्पेन गुरुत्वाङ्गीकारस्य सार्वत्रिकत्वादिति बहुधा विवेचितमस्माभिः साहित्यदर्पणटीकायां हतवृत्तताप्रकरणे द्रष्टव्यम् । माधुर्य्यं गुणः, पाञ्चाली च रीतिः ।

नलस्य सङ्गतिः संयोग इति नलसङ्गतिस्तस्या अभाव इत्यनलसङ्गतिः । अभावार्थे अव्ययीभावः । अन्यत्र तु अनलस्य वह्नेः सङ्गतिः संयोग इति भेदः ॥७॥

**বাঙ্গালা**—সে সময়ে যৌবনরূপ সূর্য্যের তেজ, দময়ন্তীর কুচকুম্ভ দুইটীর কঠিনতা জন্মাইয়াছিল ; সুতরাং সে কুচকুম্ভ দুইটী, কন্দর্পরূপ কুম্ভকারের চেষ্টায় অনলসংযোগের তাপ পাইবে না কেন ? ॥৭॥

অধৃত যদ্বিরহোষ্মণি মজ্জিতং মনসিজেন তদূরুযুগং তদা।
স্পৃশতি তৎকদনং কদলীতরুঃ যদি মরুজ্জ্বলদূষরদূষিতঃ ॥৮॥
স্মর-শরাহতি-নির্ম্মিত-সংজ্বরং করযুগং হসতি স্ম দমস্বসুঃ।
অনতিধান-পতত্তপনাতপং তপ-নিপাত-সরঃ-সরসীরুহম্ ॥৯॥
মদন-তাপ-ভরেণ বিদীর্য্য নো যদুদপাতি হৃদা দমনস্বসুঃ।
নিবিড়-পীন-কুচ-দ্বয়-যন্ত্রণা তমপরাধমধাৎ প্রতিবধ্নতী ॥১০॥

অন্বয়ঃ—মনসিজেন বিরহোষ্মণি মজ্জিতং তদূরুযুগং তদা যৎ (কদনম্) অধৃত ; কদলীতরুঃ তৎ কদনং স্পৃশতি ; যদি (সঃ) মরু-জ্বলদূষর-দূষিতঃ (স্যাৎ) ॥৮॥

অধৃতেতি। মনসিজেন কামেন, বিরহোষ্মণি বিয়োগদাহে, মজ্জিতং প্রবেশিতম্, তস্যা দমযন্ত্যা ঊরুযুগং কর্ত্তৃ, তদা তস্মিন্ কালে যৎ কদনং গ্লানতাম্, অধৃত অবহৎ, কদলীতরুঃ তৎ কদনম্, স্পৃশতি প্রাপ্নোতি ; যদি স কদলীতরুঃ, মরৌ জলশূন্যদেশে, জ্বলতা দাহমুৎপাদয়তা, ঊষরেণ ক্ষারমৃত্তিকয়া, দূষিতঃ পীড়িতঃ স্যাৎ। অন্যথা তদূরুযুগস্য উপমানভূতোঽপি কদলীতরুস্তাদৃশং কদনং ন স্পৃশেদিতি ভাবঃ।

অত্র "যদি স্যাৎ" ইত্যাদিরূপং যদা ভবেৎ সম্বন্ধ সম্ভাবনা‌তিশয়োক্তিরলঙ্কারঃ পরার্দ্ধগতেন ছেকানুপ্রাসেন সংসৃজ্যতে। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ।

"ক্ষারমৃৎ ক্ষারমৃত্তিকা। ঊষরবান্ ঊষরো দ্বৌ" ইত্যমরঃ ॥৮॥

বাঙ্গালা—সে সময়ে কামদেব বিরহজ্বালার মধ্যে মগ্ন করিয়া দিলে, দময়ন্তীর ঊরুযুগল যে গ্লানিভোগ করিতেছিল ; সে গ্লানি কদলীতরু ভোগ করিত বটে, সে কদলীতরু যদি মরুভূমিতে জ্বলন্ত ক্ষারমৃত্তিকা দ্বারা পীড়িত হইত ॥৮॥

অন্বয়ঃ—স্মর শরাহতি নির্ম্মিত-সংজ্বরং দমস্বসুঃ করযুগম্ অনতিধান-পতত্তপনাতপং তপ-নিপাত-সরঃ-সরসীরুহং হসতি স্ম ॥৯॥

স্মরেতি। স্মরস্য কামস্য শরাহত্যা বাণাঘাতেন নির্ম্মিতঃ জাতঃ সংজ্বরঃ সন্তাপো যস্য তৎ তাদৃশম্, দমস্বসুর্দময়ন্ত্যাঃ, করযুগং হস্তদ্বয়ং কর্ত্তৃ, ন বিদ্যতে অভিধানম্ আচ্ছাদনং যস্মিন্ কর্ম্মণি তদ্যথা তথা পতন্ তপনস্য সূর্য্যস্য আতপো যত্র তৎ তথোক্তম্, তপেন গ্রীষ্মেণ নিপীতং শোষিতং জলং যৎ সরো বাপী তস্য সরসীরুহং পদ্মম্, হসতি স্ম তদপেক্ষয়া অপকৃষ্টমিতি মন্যতে স্মেত্যর্থঃ।

অত্র প্রতীপমলঙ্কারঃ, "বিহসতি সংহসতি অপলপতি" ইতি দণ্ডিনা সাদৃশ্যবাচকতয়া হসতীত্যাদিপঠিতত্বাৎ। ছেকানুপ্রাসশ্চ বৃত্ত্যনুপ্রাসশ্চ তাভ্যামুপমা সংসৃজ্যতে। মাধুর্য্যং গুণঃ, পাঞ্চালী চ রীতিঃ।

"সন্তাপঃ সংজ্বরঃ সমৌ" "গ্রীষ্ম উষ্মকঃ। নিদাঘ উষ্ণোপগম উষ্ণ উষ্মাগমস্তপঃ" ইত্যমরঃ ॥৯॥

বাঙ্গালা—কামদেব বাণাঘাত করিয়া, দময়ন্তীর হাত দুই খানিতে সন্তাপ জন্মাইয়াছিলেন ; সুতরাং উপরে আবরণ না থাকায় যাহাতে অনবরত সূর্য্যের তাপ পড়িতে থাকে, সেইরূপ গ্রীষ্মশোষিত সরোবরস্থ পদ্মকে সেই হাত দুইখানি হাসিয়াছিল ॥৯॥

অন্বয়ঃ—দমনস্বসুঃ হৃদা মদন তাপ ভরেণ বিদীর্য্য যৎ নো উদপাতি, নিবিড়-পীন-কুচ-দ্বয়-যন্ত্রণা প্রতিবধ্নতী (সতী) তম্ অপরাধম্ অধাৎ ॥১০॥

মদনেতি। দমনস্বসুর্দময়ন্ত্যাঃ, হৃদা হৃদয়েন কর্ত্রা, মদনতাপভরেণ কামসন্তাপাতিশয়েন হেতুনা, বিদীর্য্য স্ফুটিত্বা, যৎ নো ন, উদপাতি উৎপতিতম্ ; নিবিড়স্য ঘনস্য পীনস্য স্থূলস্য কুচদ্বয়স্য যন্ত্রণা

निविशते यदि शूकशिखा पदे सृजति सा कियतीमिव न व्यथाम्।
मृदुतनोर्वितनोतु कथं न तामवनिभृत्तु निविश्य हृदि स्थितः ॥११॥
मनसि सन्तमिव प्रियमीक्षितुं नयनयोः स्पृहयान्तरुपेतयोः।
दहनधाम्निरभूदितरोयथोः अपि न मग्न खरांशुनि वसुनि ॥१२॥

---

युगलस्य यन्त्रणा तत्कर्त्तृकनियमनमेव, प्रतिबध्नती प्रतिबन्धकतामाचरन्तीव सती, तं विदीर्य्यानुत्पतनरूपम्, अपराधम्, अधात् अवहत्। हृदयस्योत्पतनेन दुःसहकष्टनिवृत्तिसम्भवेऽपि तत्प्रतिबन्धकताचरणमपराध एवेति भावः। अन्यत्रापि स्थाल्युपरि भारिभाण्डनिधानेन, तदभ्यन्तरगतमौषधादिकं तापातिशयेनापि उपरिगतं बाधा-रयावरणादिकं विदार्य्य नोत्पततीति द्रष्टव्यम्।

अत्र स्तनयोरवस्थितिमात्रस्य हृदयोत्पतनप्रतिबन्धकतारूपेण सम्भावनाकरणात् इवाद्यभावाच्च प्रतीयमाना क्रियोत्प्रेक्षालङ्कारः चतुर्थपादगतेन वृत्त्यनुप्रासेन संसृज्यते। प्रसादो गुणः, पाञ्चाली च रीतिः।

"यन्त्रणं स्यान्नियमने बन्धने रक्षणेऽपि च" इति विश्वः ॥१०॥

বাঙ্গালা—দময়ন্তীর হৃদয় খানি, অত্যন্ত কামসন্তাপে বিদীর্ণ হইয়া যে উড়িয়া গিয়াছিল না; তাঁহার ঘন ও পীবর স্তনযুগলের আবরণই তাহার প্রতিবন্ধকতা জন্মাইয়া সেই অপরাধ বহন করিয়াছিল ॥১০॥

अन्वयः—यदि शूकशिखा (अपि) पदे निविशते, (तदा) सा कियतीम् इव व्यथां न सृजति ? तु अवनिभृत् मृदुतनोः हृदि निविश्य स्थितः (सन्) तां कथं न वितनोतु ? ॥११॥

निविशत इति। यदि, शूकशिखा धान्यादिकण्टकाग्रमपि, पदे अन्यत्राङ्गे का कथा चरणतलेऽपि, निविशते प्रविशति; तदा सा शूकशिखा, कियतीमिव किम्परिमाणाम्, व्यथां वेदनाम्, न सृजति नोत्पादयति ? अपि तु महतीमेव व्यथां सृजतीत्यर्थः। तु किन्तु अवनिभृत् पर्वतः राजा नलश्च, मृदुतनोः कोमलकलेवरायाः दमयन्त्याः, हृदि अन्याङ्गे न किन्तु हृदय एव, निविश्य प्रविश्य, स्थित एव सन्, न पुनर्निर्गत इत्याशयः; तां महतीं व्यथाम्, कथं न वितनोतु न विस्तारयतु नोत्पादयतु ? अपि तु वितनोत्वेवेत्यर्थः; दमयन्त्या मृदुतनुत्वात् तस्या अपि च हृदयत्वात्, नलोऽपि च अवनिभृत्त्वात् तस्यापि च स्थूलत्वादिति भावः।

अत्र पदनिविष्टशूकशिखाकर्त्तृकव्यथाजननरूपादप्राकरणिकादर्थात् हृदि निविष्टपर्वतकर्त्तृकव्यथाजननरूपस्य प्राकरणिकस्यार्थस्य दण्डापूपिकान्यायेनापतनादर्थापत्तिरलङ्कारः, नलपर्वतयोर्भेदेऽपि श्लेषेणाभेदाध्यवसायादतिशयोक्तिश्च; अनयोरङ्गाङ्गिभावेन सङ्करः; तृतीयचरणे छेकानुप्रासश्चेति समुदाये संसृष्टिः। अपि तदाप्रभृतिशब्दानामनुक्तावपि सामर्थ्यादेवावगतेर्न्यूनपदता दोषः। इवशब्दस्य वाक्यालङ्कारकत्वान्नाधिकपदता दोषश्च। उक्ताश्लेषेण च दमयन्ती सर्वदैव नलं चिन्तयतीति वस्तु व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः। मधुररचनाश्रयान्माधुर्य्यं गुणः, वैदर्भी च रीतिः।

"शूकोऽस्त्री श्लक्ष्णतीक्ष्णाग्रे" इत्यमरः।

निविशत इति "नेर्विशः" इति तङादित्वादात्मनेपदम्।

अहो ! परमचमत्कारिणी श्लिष्टिं रचनाचातुरी कविचूडामणेः ॥११॥

বাঙ্গালা—একটী ধানের আগাও যদি পায়ের তলায়ও প্রবেশ করে, তবে সে কতখানি বেদনা না জন্মায় ? কিন্তু একটা পাহাড়ই (নলরাজাই) কোমলাঙ্গী দময়ন্তীর হৃদয়ের ভিতরেই প্রবেশ করিয়া রহিয়াছিল; সুতরাং সে, গুরুতর বেদনা জন্মাইবে না কেন ? ॥১১॥

हृदि दमस्वसुरश्रुभरप्लुते प्रतिफलद्विरहात्तमुखानतिः।
हृदयभाजमराजत चुम्बितुं नलमुपेत्य किलागमि तन्मुखम् ॥१३॥
सुहृदमिन्दुमुदस्थयितुं स्मरं मनसि गन्धवहेन मृगीदृशः।
अकालि निश्वसितेन विनिर्गमानुमित-निष्कुत-वेगन-मायिना ॥१४॥

अन्वयः —मनसि सन्तं प्रियम् ईक्षितुम् स्पृहया इव अन्तः उपेतयोः दमीययोः नयनयोः सम्मुखवास्तुनि अपि वस्तुनि ग्रहणशक्तिः न अभूत् ॥१२॥

मनसीति। मनसि चित्ते, सन्तं सर्वदा चिन्त्यमानत्वात् विद्यमानम्, प्रियं नलम्, ईक्षितुं द्रष्टुम्, स्पृहया इच्छया इव अन्तरभ्यन्तरं मनःसमीपमित्यर्थः, उपेतयोर्गतयोः, दमीययोर्दमयन्तीसम्बन्धिनोः, नयनयोश्चक्षुषोः, सम्मुखे वास्तु भूमिः स्थानं यस्य तस्मिन् तादृशे अपि, वस्तुनि घटादौ पदार्थे, ग्रहणशक्तिर्ज्ञानोत्पादनसामर्थ्यम्, न अभूत् न आसीत्; अन्तरुपेतत्वेन संयोगाभावात् संयोगाभावे च ज्ञानोत्पादनासम्भवादिति भावः। अथ च नलचिन्तायामेव मनसो व्यापृततया तत्संयोगाभावेन नयनयोरपि संयोगाभाव इत्यवधेयम्।

अत्र उत्प्रेक्षा, ग्रहणशक्त्यभावं प्रति अन्तरुपेतपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, वास्तुनि वस्तुनीति छेकानुप्रासश्चैतेषां मिथो निरपेक्षतया संसृष्टिः। पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः।

"वास्तु स्याद् गृहभूपुंसोर्गृहे सौमतुरङ्गयोः" इति हेमचन्द्रः।

दमीययोरिति दमस्वसृशब्दादीयप्रत्ययः ॥१२॥

বাঙ্গালা—মনের ভিতরে বিদ্যমান প্রিয়তম নলকে দেখিবার ইচ্ছাবশতই যেন দময়ন্তীর নয়নযুগল ভিতরে প্রবেশ করিয়াছিল; সুতরাং সম্মুখবর্ত্তী বস্তুতেও সে নয়ন যুগলের জ্ঞান জন্মাইবার শক্তি ছিল না ॥১২॥

अन्वयः—दमस्वसुः अश्रुभरप्लुते हृदि विरहात्तमुखानतेः प्रतिफलत् तत् मुखं हृदयभाजं नलं चुम्बितुम् उपेत्य आगमि किल (सत्) अराजत ॥१३॥

हृदीति। दमस्वसुर्दमयन्त्याः, अश्रुणां भरेण प्रवाहेण प्लुते व्याप्ते, हृदि वक्षसि, विरहेण आत्ता आनीता या मुखस्य आनतिः सम्यगवनमनं तस्या हेतोः, प्रतिफलत् प्रतिबिम्बरूपेण पतत्, तत् प्रागुक्तं मुखम् कर्तृ, हृदयभाजं चिन्तावशात् हृदयवर्तिनं नलम्, चुम्बितुम् उपेत्य तत्समीपं गत्वा, आगमि किल पुनरागच्छदिव सत्, अराजत शुशुभे प्रतिबिम्बितस्य मुखस्य प्रत्यागमनकाले सम्मुखभागस्यैव दर्शनादिति भावः।

अत्र किलशब्दस्य सम्भावनावाचकत्वात् वाच्या क्रियोत्प्रेक्षालङ्कारः। तत्पदेनैव प्रक्रान्तं मुखमुपस्थापितम्, पुनर्मुखपदन्तु तद्व्याख्यानविधया प्रयुक्तमिति न कथितपदतादोषः। पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः।

आगमीऽस्यास्तीति आगमि; अस्त्यर्थे इन्प्रत्ययात् ॥१३॥

বাঙ্গালা—বিরহ দময়ন্তীর মুখখানিকে অত্যন্ত অবনত করিয়া দিয়াছিল; তাঁহার অশ্রুসিক্ত বক্ষের উপরে সেই মুখের প্রতিবিম্ব পড়িয়াছিল; সুতরাং বোধ হইতেছিল যে, হৃদয়বর্ত্তী নলকে চুম্বন করিতে যাইয়া, আবার যেন সেই মুখখানি ফিরিয়া আসিতেছে ॥১৩॥

**विरहपाण्डिम-राग-तमोमषी-शितिम-तन्निज-पीतिम-वर्णकैः ।**
**दश दिशः खलु तद्दृगकल्पयत् लिपिकरी नलरूपकचित्रिताः ॥१५॥**

---

**अन्वयः**—मृगीदृशः निश्वसितेन गन्धवहेन मनसि सुहृदं स्मरम् अग्निम् उदर्चयितुम् (इव) विनिर्गमानुमित-निह्नुत-वेशन-मायिता अकलि ॥१४॥

सुहृदमिति । मृगीदृशो हरिणीनयनायाः सुन्दरनयनाया दमयन्त्याः, निश्वसितेन निश्वासात्मकेन, गन्धवहेन वायुना अथ च दमयन्त्याः पद्मिनीत्वात् सौगन्ध्यशालिना निश्वासवायुना, मनसि हृदयाभ्यन्तरे विद्यमानमिति शेषः, सुहृदं सखायम्, स्मरं कामं कामस्वरूपमित्यर्थः, अग्निम्, उदर्चयितुमुज्ज्वलयितुमिव, विनिर्गमेण निश्वासरूपतया बहिर्गमनेन अनुमितं सखीभिरनुमानाख्यज्ञानविषयीकृतं निह्नुतं गुप्तं यत् वेशनं दमयन्त्या एव हृदयाभ्यन्तरे प्रवेशस्तदेव मायिता मायावित्वं कूटकौशलमित्यर्थः, अकलि आश्रिता । तथा च यथा कश्चित् विपक्षदुर्गाभ्यन्तरे प्रविष्टं निजसुहृदमुत्तेजयितुं गुप्तभावेन प्रविश्य पुनर्निर्गच्छति ; निर्गमकाले चान्यैः सोऽनुमीयते, प्रवेशं विना निर्गमासम्भवात् ; तथा दमयन्त्या हृदयगतं कामाग्निमुत्तेजयितुं वायुस्तत्र प्रविश्य पुनर्निश्वासभावेन तस्मान्निर्गतः ; निर्गमकाले च सखीभिरसौ अनुमित इति सरलार्थो भावार्थश्च । कामातिरेकेण दमयन्त्या निश्वासो जात इति तु निष्कर्षः । अग्निगन्धवहयोः परस्परं सखित्वन्तु प्रसिद्धमेव ।

अत्र प्रस्तुते गन्धवहे अप्रस्तुतस्य उक्तरूपप्रवेशनिर्गमकारिणो जनस्य व्यवहारसमारोपात् समासोक्तिः, स्मरमग्निमिति निरङ्गं केवलरूपकम्, उदर्चयितुमिवेति प्रतीयमाना फलोत्प्रेक्षा, तथा गन्धवहो निह्नुतवेशनवान् केवलनिर्गमकालेऽनुभवात् इत्यनुमानादनुमानालङ्कारश्च इत्येतेषामङ्गाङ्गिभावेन सङ्करः । वर्ण्यात्कर्षस्य चारोहावरोहाभ्याम् ओजो गुणः, गौडी च रीतिः ।

मायितेति मायाशब्दादस्त्यर्थे "मायाम् मेधास्रजो विनि स्याद्विजिगीषया" इतीनिप्रत्यय इति समन्वयः ॥१४॥

**বাঙ্গালা**—দময়ন্তীর হৃদয়বর্ত্তী নিজবন্ধু কামাগ্নিকে উত্তেজিত করিবার জন্যই যেন বায়ু গোপনে সেই হৃদয়ের ভিতর প্রবেশরূপ কূটকৌশল অবলম্বন করিয়াছিল ; নিশ্বাসরূপে নির্গম দেখিয়া সখীরা সেই বায়ুর গোপনপ্রবেশ অনুমান করিয়াছিল ॥১৪॥

**अन्वयः**—तद्दृक् लिपिकरी विरह-पाण्डिम राग-तमोमषी-शितिम-तन्निज-पीतिम-वर्णकैः दश दिशः नल-रूपक-चित्रिताः खलु अकल्पयत् ॥१५॥

विरहेति । तस्या दमयन्त्याः दृक् नेत्ररूपा, लिपिकरी चित्रकारिणी स्त्री, विरहेण पाण्डिमा पाण्डुत्वं मुखादीनां श्वेतत्वमिति यावत्, रागो नलानुराग एव रागो लौहित्यम्, तमो विरहजन्यादेव या मूर्च्छा सैव मषी तस्याः शितिमा कालत्वम्, तथा तस्या दमयन्त्याः निजः स्वकीयः स्वदेहस्थित इत्यर्थः पीतिमा पीतत्वम्, त एव वर्णका रञ्जकाः करणैः, दश दिशः फलकस्थानीया इत्याशयः, नलस्य रूपकाणि मूर्त्तयस्तैर्या चित्राण्यासु सञ्जातानीति नलरूपकचित्रिताः खलु नलमूर्त्तिचित्रविशिष्टा एव, अकल्पयत् कृतवती । दमयन्ती खलु भावनाप्रकर्षवशतया दश दिश एव नलमयीरपश्यदिति सरलार्थः ।

अत्र तद्दृक् लिपिकरीति तमोमषीति च निरङ्गं केवलरूपकम्, अनुरागलौहित्ययोर्भेदेऽपि श्लेषेणाभेदाध्यवसायादतिशयोक्तिः, ताद्दृशपाण्डिमादिवर्णैश्चित्रकरणासम्भवेऽपि तत्सम्बन्धाभिधानादपरा चातिशयोक्तिः, दश दिश इति च्छेकानुप्रासश्चेत्येतेषां मिथो निरपेक्षतया संसृष्टिः । पूर्वरागो रसः, समासबाहुल्यात् ओजो गुणः, गौडी च रीतिः ।

उदयति स्म तदद्भुतमालिभिः धरणिभृद्भुवि तत्र विमृश्य यत् ।
अनुमितोऽपि च बाष्पनिरीक्षणात् व्यभिचचार न तापकरो नलः ॥१८॥
हृदि विदर्भभुवः प्रहरन्शरैः रतिपतिर्निषधाधिपतेः कृते ।
कृत-तदन्तरग-स्व-हृद्-व्यथः फलदनीतिरमूर्च्छदनं खलु ॥१९॥

---

"नद्या अर्बुदन्यसमिननाच" इति विश्व । पीतवत्यपि "भूतपूर्वे चरट्" इति चरट् प्रत्ययः ॥१७॥

বাঙ্গালা --দময়ন্তীর হস্ত, পদ, মুখ ও নয়ননামক পদ্মগুলি পূর্বে বহুকাল যাবৎ প্রচুর-পরিমাণে যে সূর্য্যের তেজ পান করিয়াছিল; তাহাই সেই বিরহসন্তাপের সময়ে অনবরত সন্তাপচ্ছলে উদ্গীরণ করিয়া ফেলিতেছিল ॥১৭॥

**অন্বয়:**—तत् अद्भुतम् उदयति स्म, यत् आलिभिः तत्र धरणिभृद्भुवि बाष्पनिरीक्षणात् अपि च विमृश्य अनुमितः तापकरः नलः न व्यभिचचार ॥१८॥

उदयतीति । तत् अद्भुतमाश्चर्य्यम्, उदयति स्म उपस्थितं बभूव ; यत् आलिभिः सखीभिः, तत्र तस्याम्, धरणिभृत् पृथिवीपालकः राजा भीमस्तस्मात् भूकम्पनिर्यस्याः सा धरणिभृद्भूर्दमयन्ती तस्याम्, बाष्पनिरीक्षणादपि च साक्षात् कथने का कथा केवलाश्रुजलदर्शनादपि च, विमृश्य विविच्य, अनुमितः अनुमानज्ञानविषयीकृतः, तापकरः स्वविच्छेदेन सन्तापजनकः, नलो राजा, न व्यभिचचार तस्यामेव दमयन्त्याम् अस्थितो न बभूव । तथा च पुत्रशोकानुरागादावपि बाष्पनिरीक्षणरूपो हेतुः सम्भवति, नलस्तु तत्र न वर्त्तत एव ; किन्तु दमयन्त्या केवलबाष्पनिरीक्षणरूपहेतुनैव अनुमीयमानो नलो वर्त्तत एवेति सम्भवत्याश्चर्य्यमिति भावः ।

पक्षान्तरे तु आलिभिः अनुमानकारिभिर्ज्ञिभिः, तत्र प्रसिद्धायाम्, धरणिभृद्भुवि पर्वतभूमौ, बाष्पनिरीक्षणात् धूमवद्वाष्पदर्शनात्, विमृश्यापि "व्याप्तस्य पक्षधर्मत्वधीः परामर्श उच्यते" इत्युक्तलक्षणं परामर्शं कृत्वापि, अनुमितः अनुमानविषयीकृतः, तापकरस्तापकरतया यथार्थभूत एव, अनलो वह्निः, यत्र व्यभिचचार न अस्थितो बभूव, तदेवाद्भुतमुदयति स्मेत्यर्थः । तथा च जलादौ बाष्पनिरीक्षणादनुमीयमानो वह्निर्व्यभिचरत्येव तत्र तस्याभावात् ; किन्तु पर्वतभूमौ केवलबाष्पनिरीक्षणादप्यनुमीयमानो वह्निर्नियतसत्त्वात् यन्न व्यभिचरति, तदेवाश्चर्य्यमित्याशयः ।

अत्रोभयत्रापि हेतुसमानाधिकरणात्यन्ताभावप्रतियोगित्वमेव व्यभिचारो बोध्यः ।

अत्र लौकिक एव वस्तुनि नले लौकिकस्यैव वस्तुनः अनलस्य व्यवहारसमारोपात् श्लेषविशेषणोत्थापिता समासोक्तिरलङ्कारः । पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ।

"बाष्पमुष्मास्रु" इत्यमरः । उदयतीति अप्रयुक्तताविरुद्धस्य प्रयोगः ॥१८॥

বাঙ্গালা—সখীরা সেই রাজকন্যা দময়ন্তীতে কেবল বাষ্প দর্শন করিয়াই বিবেচনাপূর্বক সন্তাপকারী নলের অনুমান করিয়া থাকিলেও, সে নল যে ব্যভিচারী হইয়াছিলেন না; তাহাই আশ্চর্য্য উপস্থিত হইয়াছিল (টীকা দ্রষ্টব্য) ॥১৮॥

**অন্বয়:**—रतिपतिः निषधाधिपतेः कृते शरैः विदर्भभुवः हृदि प्रहरन् कृत-तदन्तरग-स्व हृद्-व्यथः फलदनीतिः (च सन्) अलम् अमूर्च्छत् खलु ॥१९॥

हृदीति । रतिपतिः कामः, निषधाधिपतेर्नलस्य, कृते निमित्ते, नलोद्देशेनेत्यर्थः, शरैर्बाणैः, विदर्भभुवो दमयन्त्याः, हृदि हृदये, प्रहरन् ताडयन्, कृत-तदन्तरगस्य दमयन्तीहृदयाभ्यन्तरवर्त्तिनः स्वस्य आत्मनः कामस्यैवेत्यर्थः हृद्व्यथा व्यथाताडनं येन स तादृश इव सन्, अतएव च फलन्ती सफलीभवन्ती अनीतिः स्वस्यैव दुर्नीतिर्यस्य स तथोक्तश्च सन्, अलमत्यर्थम्, अमूर्च्छत् तादृशताडनादेव मूर्च्छां प्राप्तवान्, इति प्रतीयते । खलुशब्दो

**विधुरमानि तया यदि भानुमान् कथमहो स तु तद्धृदयं तथा ।**
**अपि वियोगभरास्फुटनस्फुटीकृत-दृषत्त्वमजिज्वलदंशुभिः ॥२०॥**
**हृदय-दत्त-सरोरुहया तया क्व सहगस्तु वियोगनिमग्नया ।**
**प्रियधनुः परिरभ्य मृता रतिः किमनुमर्त्तुमचीत चितार्च्चिषि ॥२१॥**

---

वाक्यालङ्कारे । इयं हि नाम योधानां नीतिर्यत् लक्ष्यं स्थिरीकुर्व्वन्नेव प्रहरतीति ; कामस्तु तथा न कृत-वानित्यनीतिः । तथा च दमयन्त्या हृदये नलः कामः स्वयञ्च समानभावेनैव वर्त्तते स्म ; आकारौ चोभयोः समानावेव ; तत्र च कामः स्वैरिणं नलं प्रहर्त्तुं भ्रमेणात्मानमेव प्रहृतवान् ; तेन च स्वयमेव मूर्च्छामलभतेति भावः ।

अत्र प्रारब्धस्य नलप्रहारस्य वैफल्यात् आत्मताडनजनितमूर्च्छाप्राप्तिलक्षणस्य अनर्थस्य च सम्भवात् विषमा-लङ्कारः, हृतिर्मोहयोर्भेदेऽपि श्लेषेणाभेदाध्यवसायादतिशयोक्तिः, कृतेत्यादिविशेषणे इवाद्यभावात् प्रतीयमाना क्रियोत्-प्रेक्षा चेत्येतेषामङ्गाङ्गिभावेन सङ्करः । प्रसादो गुणः, वैदर्भी च रीतिः ।

व्यध इति "व्यधिजपोरनुपसर्गे" इति व्यधधातोरप् ॥१९॥

বাঙ্গালা—কামদেব নলের উদ্দেশে দময়ন্তীর হৃদয়ের ভিতরে বাণ দ্বারা প্রহার করিয়াছিলেন ; তাহাতে এই হইয়াছিল যে, সেই হৃদয়ের ভিতরে যে নিজে ছিলেন সেই নিজের শরীরেরই গুরুতর আঘাত করা হইয়াছিল, তাহাতে তিনি নিজেই সাতিশয় মূর্চ্ছিত হইয়াছিলেন ; সুতরাং কামদেবের দুর্নীতি করিয়াছিল ॥১৯॥

**অন্বয়:**—तया यदि विधुः भानुमान् अमानि, (तदा) नु सः अंशुभिः वियोगभरास्फुटनस्फुटीकृत-दृषत्त्वम् अपि तद्धृदयं कथं तथा अजिज्वलत् ; अहो ! ॥२०॥

विधुरिति । तया दमयन्त्या, यदि विधुश्चन्द्रः, भानुमान् सूर्य्यः, अमानि सन्तापजननात् सम्भावितः ; तदा नु स भानुमत्त्वेन मतो विधुः, अंशुभिः किरणैः, वियोगभरेण विरहातिरेकेण निरन्तरसन्तापातिशयेनेत्यर्थः यदस्फुटनम् अविदीर्णत्वं तेन स्फुटीकृतं प्रकाशितं दृषत्त्वं प्रस्तरत्वं यस्य तत्तादृशमपि, तस्या दमयन्त्या हृदयम्, कथं केन प्रकारेण, तथा तादृशं सातिशयमित्यर्थः, अजिज्वलत् ज्वलयति स्म सन्तापितवानिति तात्पर्य्यम् ; अहो आश्चर्य्यम् तथा च वास्तविकः सूर्य्य एव प्रस्तरं ज्वलयति, न पुनश्चन्द्रे आरोपितः सूर्य्यः, तस्यातात्त्विकत्वात् । नहि वाह्यारोपिता लता पुष्पं प्रसवति । इत्यञ्च सत्यपि, चन्द्रे आरोपितः सूर्य्यो यत् दमयन्त्या हृदयरूपं प्रस्तरं ज्वलयति स्म, तदाश्चर्य्यमेवेति भावः । चन्द्रकिरणास्पर्शेन दमयन्त्या हृदयं जज्वालेति तु निष्कर्षः ।

अत्र अमानीत्यस्य सम्भावनावाचकत्वात् उत्प्रेक्षा, दृषत्त्वं दृषत्तुल्यत्वमिति सादृश्याक्षेपादसम्बन्धेसम्बन्धरूपा निदर्शना, भानुमत्त्वेन मतोऽपि विधुर्ज्वलयतीति विरोधः विरहाग्निसन्तापसमाधानमिति विरोधाभासः, तृतीयचरणे छेकानुप्रासश्चेत्येतेषां संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत्" इत्यमरः ।

अजिज्वलदिति ज्वलतेर्णिजन्ताल्लुङि रूपम् ॥२०॥

বাঙ্গালা—বিরহের অত্যন্ত সন্তাপেও যে দময়ন্তীর হৃদয় বিদীর্ণ হইয়াছিল না, ইহাতেই সে হৃদয়ের পাষাণত্ব প্রকাশ পাইয়াছিল ; সুতরাং দময়ন্তী যদি চন্দ্রকে সূর্য্য বলিয়াই মনে করিয়াছিলেন, তবে সেই সূর্য্যরূপে অভিমত চন্দ্র, কিরণ দ্বারা কি প্রকারে যে দময়ন্তীর সেই হৃদয়পাষাণকে সেই ভাবে জ্বালাইয়াছিলেন ; তাহাই আশ্চর্য্য ॥২০॥

**हृदि विदर्भभुवोऽश्रुभृति स्फुटं विनमदास्यतया प्रतिबिम्बितम् ।**
**मुख-दृगोष्ठमरोपि मनोभुवा तदुपमा-कुसुमान्यखिलाः शराः ॥२५॥**

---

चरतीति सा तथाभूता सती, भवनात् गृहात्, अनिर्गतीं अनिर्गच्छन्तीम्, तां दमयन्तीम्, अवलम्बितुं सन्तापयितुम्, गृहस्य दमयन्तीवासभवनस्य जालावलिगवाक्षरन्ध्रैः अविशत् प्राविशदिव किम् । अयमाशयः— यथा कश्चित् शत्रुः स्वरूपेण प्रवेशोद्यमे गृहस्थितैर्वारयमाणत्वात् गृहान्तर्गतस्य कस्यचित् वेशं धृत्वा प्रविशति; तथा विधुरुचिरपि स्वरूपेण प्रवेशोद्यमे गृहस्थितसखीभिर्निवार्यमाणत्वात् दमयन्त्या एव तापशान्तये आनीतस्य गवाक्षरन्ध्रलम्बितस्य मृणालस्य वेशं धृत्वा प्राविशदिवेति भावः ।

अतएवात्र प्रस्तुतायां विधुरुचौ कार्य्यद्वारा अप्रस्तुतस्य शत्रुप्रवेशवृत्तान्तस्य समारोपात् समासोक्तिरलङ्कारः; वाच्या क्रियोत्प्रेक्षा चानयोरङ्गाङ्गिभावेन सङ्करः; सोऽपि च चतुर्थपादगतेन वेश-विशेति च्छेकानुप्रासेन संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ।

अविविक्षितीमिति इणधातोः शत्रन्ते "इणस्य" इति यादेशे रूपम् ॥२४

**বাঙ্গালা**—বিরহীদিগের অত্যন্তশত্রু চন্দ্রের কিরণ, স্বরূপে প্রবেশ করিতে গেলে বাধা দিবে এই আশঙ্কায়, মৃণালের বেশ ধারণ করিয়া, গৃহ হইতে অনির্গত দমযন্তীকে সন্তপ্ত করিবার জন্য, গবাক্ষরন্ধ্র দিয়াই যেন প্রবেশ করিয়াছিল ।২৪।

**अन्वयः**—मनोभुवा अश्रुभृति विदर्भभुवः हृदि विनमदास्यतया प्रतिबिम्बितं मुख-दृगोष्ठं तदुपमा-कुसुमानि अखिलाः शराः अरोपि स्फुटम् ॥२५॥

हृदीति । मनोभुवा कामेन, अश्रुभृति अतिरोदनादश्रुजलधारिणि, अतएव प्रतिबिम्बपातसम्भव इति भावः; विदर्भभुवो दमयन्त्याः, हृदि वक्षसि, विनमदास्यतया अत्यन्तमनोदुःखादवनतमुखतया हेतुना, प्रतिबिम्बितं प्रतिबिम्बभावेन पतितम्, मुखं वदनञ्च दृशौ नयनद्वयञ्च ओष्ठौ ओष्ठद्वयञ्चेति मुखदृगोष्ठम् एतत्प्रयकरूपाः इत्यर्थः, तस्य मुखदृगोष्ठस्य उपमाकुसुमानि उपमाभूतपुष्पाणि एक-पद्म-नीलोत्पलद्वय-बन्धूकद्वयात्मकपुष्पाणि तदात्मका इत्यर्थः, अखिलाः पञ्चवाणत्वात् समस्ता एव, शरा वाणाः, अरोपि रोपिताः स्फुटम्, तद्वक्षसीति भावः । तत्र मुखस्योपमा पद्मम्, नयनयोरुपमे नीलोत्पले, ओष्ठयोरुपमे च बन्धूके इति बोध्यम् ।

अत्र मुखदृगोष्ठे तदुपमाभूतकुसुमात्मकशरत्वारोपात् निरङ्गं केवलरूपकम्, स्फुटशब्दस्य सम्भावनाबोधकत्वात् वाच्या क्रियोत्प्रेक्षा चानयोरङ्गाङ्गिभावेन सङ्करः । प्रसादो गुणः, वैदर्भी च रीतिः ।

मुखदृगोष्ठमिति समाहारद्वन्द्वे प्राण्यङ्गत्वात् "प्राणितूर्य्यकाङ्गानाम्" इति नपुंसकत्वम् । शरा इति विधेयकर्मणः प्राधान्ये बहुत्वे च सत्यपि मुखदृगोष्ठमित्युद्देश्यकर्म्मण एकत्वात् "उद्देश्यविधेययोरुद्देश्यसमानवचनत्वमाख्यातस्य" इति कारिकोक्तेः अरोपीत्येकवचनम् ॥२५॥

**বাঙ্গালা**—দময়ন্তী রোদন করিতে থাকায় নয়নজল পড়িয়া তাঁহার বক্ষঃস্থল প্লাবিত করিয়াছিল এবং তিনি মুখ অবনত করিয়া রহিয়াছিলেন বলিয়া, তাঁহার মুখ, নয়ন দুইটী এবং ওষ্ঠ দুই খানির প্রতিবিম্ব সেই বক্ষঃস্থলে পড়িয়াছিল; তাহাতে বোধ হইয়াছিল যে, কামদেব সেই মুখের উপমাপুষ্প একটী পদ্ম, নয়ন দুইটীর উপমাপুষ্প দুইটী নীলোৎপল এবং ওষ্ঠ দুই খানির উপমাপুষ্প দুইটী বন্ধুজীবরূপ সমস্ত বাণ কয়টীই যেন তাঁহার বক্ষঃস্থলে প্রোথিত করিয়া দিয়াছিলেন ।২৫॥

विरह-पाण्डु-कपोलतले विधुः व्यधित भीमभुवः प्रतिबिम्बितः ।
अनुपलक्ष्य-सितांशतया मुखं निजसखं सुखमङ्कमृगार्पणात् ॥२६॥
विरहतापिनि चन्दनपांशुभिः वपुषि सार्पितपाण्डिममण्डना ।
विषधराभबिसाभरणा दधे रतिपतिं प्रति शम्भुविभीषिकाम् ॥२७॥

---

अन्वय.—विधुः भीमभुवः विरहपाण्डुकपोलतले प्रतिबिम्बितः (सन्) अनुपलक्ष्य-सितांशतया अङ्कमृगार्पणात् सुखं मुखं निजसखं व्यधित ॥२६॥

विरहेति । विधुश्चन्द्रः, भीमभुवो दमयन्त्याः, विरहेण पाण्डु श्वेतीभूतं यत् कपोलतलं तत्र, प्रतिबिम्बितः सन्, अनुपलक्ष्या उभयोः समानवर्णत्वात् पृथग्भावेनादृश्यः सितांशः शुभ्रभागो यस्य तस्य भावस्तया हेतुना, अङ्कमृगस्य क्रोडस्थहरिणस्य अर्पणात् दमयन्तीमुखाभ्यन्तरे विन्यासाद्धेतोः, सुखम् अनायासं यथा स्यात्तथा, मुखं दमयन्त्या वदनम्, निजसखं सर्वथासौसादृश्यात् आत्मनो मित्रम्, व्यधित विहितवान् । विरहात् पूर्वं दमयन्तीमुखस्य पूर्वमीलितकपोलतया श्वेतं चन्द्रमण्डलं सर्वथा तत्सदृशं नासीत्, तदानीन्तु विरहेण कपोलयोः श्वेततोदयात् कृष्णवर्णस्य अङ्कहरिणस्य च तन्मुखाभ्यन्तरे समर्पणादर्शनात् दमयन्तीमुखं चन्द्रमण्डलमुभयमेव सर्वथा सदृशमभवदिति भावः ।

अत्र प्रकृतस्य दमयन्तीमुखस्य तुल्यधर्मतगुणेन चन्द्रतादात्म्यात् सामान्यं नामालङ्कारः, अङ्कमृगार्पणासम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिश्च त्वनयोरङ्गाङ्गिभावेन सङ्करः ; तथा मुखं निजसखं सुखमिति छेकानुप्रास-वृत्त्यनुप्रासयोरेकाश्रयानुप्रवेशरूपः सङ्करः । इत्यर्थालङ्कारशब्दालङ्कारसङ्करयोः पुनः संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

निजश्च तत् सखि चेति निजसखं "राजाहःसखिभ्यष्टच्" राजादित्वात् टच् । व्यधितेति विपूर्वकधाधातोरात्मनेपदस्य तः, "स्थाघ्वोरिच्च" —इत्यादिना इकारादेशः, "ह्रस्वादङ्गात्" इति सिचो लुक् ॥२६॥

বাঙ্গালা—দময়ন্তীর গণ্ডযুগল বিরহবেদনায় শ্বেতবর্ণ হইয়া গিয়াছিল ; সুতরাং চন্দ্র যখন তাহাতে প্রতিবিম্বিত হইয়াছিলেন, তখন তাঁহার শুভ্রভাগ পৃথগ্‌ভাবে লক্ষ্য হইয়াছিল না এবং তিনি নিজের ক্রোড়ের হরিণটীকে দময়ন্তীর মুখের ভিতরে সমর্পণ করিয়াছিলেন ; তাহাতেই তিনি অনায়াসে দময়ন্তীর মুখখানিকে সর্বতোভাবে নিজের সখা করিতে পারিয়াছিলেন ॥২৬॥

अन्वयः—सा विरहतापिनि वपुषि चन्दनपांशुभिः अर्पितपाण्डिममण्डना, विषधराभ-बिसाभरणा (च सती) रतिपतिं प्रति शम्भुविभीषिका दधे (इव) ॥२७॥

विरहेति । सा दमयन्ती, विरहेण तापोऽस्यास्तीति तस्मिन् विरहतापिनि, वपुषि शरीरे, चन्दनस्य तापातिशयेन शुष्कीभूतस्य मलयजद्रवस्य पांशुभिर्धूलिभिः, अर्पितं विहितं पाण्डिमा शुभ्रतैव मण्डनं भूषणं यस्याः सा, तथा विषधरस्य अनन्तादिनागस्य आभा इव आभा यस्य तत् विषधराभम् अनन्तादिनागवत् शुभ्रवर्णमित्यर्थः बिसं मृणालमेव आभरणं यस्याः सा तादृशी च सती, रतिपतिं कामदेवम्, प्रति, शम्भुविभीषिका महादेववद्भयदातृत्वम् दधे धृतवतीव । अयमाशयः शम्भुः खलु कामस्य हन्ता ; तेन च शम्भुतुल्याकृतिदर्शनात् शम्भुभ्रमेण यथासौ निवर्ततेति । शम्भुरपि भस्मपांशुभिर्वपुषि अर्पितपाण्डिममण्डनः, मृणालतुल्यशुभ्रवर्णानन्तादिनागाभरणश्च । विरहतापप्रशान्तये सा चन्दनानुलेपनं मृणालधारणं धृतवतीति तु निष्कर्षः ।

अत्र विषधराभमिति शम्भुविभीषिकामिति च लुप्तोपमाद्वयम्, दधे इत्यत्र इवाद्यभावेऽपि सम्भावनाप्रतीतेः प्रतीय-

विनिहितं परितापिनि चन्दनं हृदि तया धृतबुद्बुदमाबभौ ।
उपनमन् सुहृदं हृदयेशयं विधुरिवाङ्कगतोडुपरिग्रहः ॥२८॥
स्मर-हुताशन-दीपितया तया बहु मुहुः सरसं सरसीरुहम् ।
श्रयितुमर्द्धपथे (१) कृतमन्तरा श्वसित-निर्म्मित-मर्म्मरमुज्झितम् ॥२९॥

---

माला क्रियोत्प्रेक्षा चेत्येतेषामङ्गाङ्गिभावेन सङ्करः ; सोऽपि च पाश्चिमस्येति च्छेकानुप्रासेन संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ॥२७॥

বাঙ্গালা—দময়ন্তীর বিরহসন্তপ্ত শরীরে চন্দনের রেণুসমূহ শুভ্রবর্ণরূপ ভূষণ জন্মাইয়া দিয়াছিল এবং তিনি অনন্তাদি সর্পতুল্য মৃণালের আভরণ ধারণ করিয়াছিলেন, সুতরাং তিনি যেন কামদেবের প্রতি মহাদেবের বিভীষিকা ধারণ করিয়াছিলেন ॥২৭॥

**অন্বয়:**—तया परितापिनि हृदि विनिहितं चन्दनं धृतबुद्बुदं (सत्) सुहृदं हृदयेशयम् उपनमन् अङ्कगतोडुपरिग्रहः विधुः इव आबभौ ॥२८॥

विनिहितमिति । तया दमयन्त्या, परितापिनि विरहेण सन्तापशालिनि, हृदि वक्षसि, विनिहितं स्थापितम्, चन्दनं चन्दनानुलेपनं धृतबुद्बुदं समन्तादङ्गीकृतस्फोटं सत्, सुहृदं मित्रम्, हृदयेशयं मनोभवम्, उपनमन् उपगच्छन्, अङ्कगताः समन्तात् समीपस्थिताः उडवो नक्षत्राण्येव परिग्रहाः परिजना यस्य स तादृशः, विधुश्चन्द्र इव, आबभौ शुशुभे । तत्र गोलभावेन वक्षसि लिप्तं चन्दनं चन्द्रतुल्यम्, बुद्बुदसमूहश्च नक्षत्रसमूहतुल्य इति भावः ।

अत्र वाच्या द्रव्योत्प्रेक्षालङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"परिग्रहः परिजने पत्न्यां स्वीकारमूलयोः" इति मेदिनी ।

हृदये शेते इति हृदयेशयः "शीङोऽधिकरणे च" इति शीधातोरच् । "शयवासवासिष्वकालात्" इति सप्तम्या अलुक् ॥२८॥

বাঙ্গালা—দময়ন্তী, বিরহসন্তপ্ত বুকের উপরে গোলাকারে চন্দন লেপিয়া দিয়াছিলেন এবং তাহার চারিদিকে বুদ্বুদ (বোট্কা, বুট্কুরি, ফোস্কা) জন্মিয়াছিল ; সুতরাং বোধ হইতেছিল যে, নক্ষত্ররূপ পরিজনবর্গে পরিবেষ্টিত হইয়া চন্দ্রই যেন, দময়ন্তীর হৃদয়মধ্যবর্তী সখা কামদেবের সঙ্গে দেখা করিতে আসিয়া শোভা পাইতেছেন ॥২৮॥

**অন্বয়:**—स्मर-हुताशन-दीपितया तया मुहुः श्रयितुम् अर्द्धपथे कृतं बहु सरसं सरसीरुहं श्वसित-निर्म्मित-मर्म्मरम् अन्तरा उज्झितम् ॥२९॥

स्मरेति । स्मरः काम एव हुताशनो वह्निस्तेन दीपितया अत्यन्तसन्तापितया, तया दमयन्त्या, मुहुर्वारं वारम्, श्रयितुं तत्तापशान्त्यर्थं वक्षसि अवलम्बितुम्, अर्द्धपथे कृतमानीतम्, बहु अनेकम्, सरसं सद्य आनीतत्वेन, आर्द्रम्, सरसीरुहं पद्मम् श्वसितेन अत्युष्णनिश्वासेन निर्म्मितः कृतः मर्म्मरः सर्वथैव शुष्कत्वात् मर्म्मरशब्दो येन तत् तथाविधं सत्, अन्तरा मध्यस्थानादेव, उज्झितं त्यक्तम्, शुष्कत्वेनानुपयोगित्वादिति भावः ।

अत्र शुष्कत्वेन तादृशमर्म्मरशब्दकरत्वासम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिरलङ्कारो द्वितीयचतुर्थपादगतेन च्छेकानुप्रासेन संसृज्यते । अतिशयोक्त्या च तापातिशयो व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"अथ मर्म्मरः । स्वनिते वस्त्रपर्णानाम्" इत्यमरः ॥२९॥

(१) अर्द्धपथम् ।

विरह-तप्त-तदङ्ग-निवेशिता कमलिनी निमिषद्दलमुष्टिभिः ।
किमपनेतुमचेष्टत किं पराभवितुमैहत तद्वथुं पृथुम् ॥२२॥
इयमनङ्ग-शरावलि-पन्नग-क्षत-विसारि-वियोग-विषावशा ।
शशिकलेव खरांशु-कराहिंता करुण-नीरनिधौ निदधौ न काम् ? ॥२३॥
ज्वलति मन्मथवेदनया निजे हृदि तयार्द्रमृणाललतार्पिता ।
स्वजयिनीस्त्रपया सविधस्थयोः मलिनतामभजद्भुजयोर्भृशम् ॥२४॥

---

**अन्वयः**—विरह तप्त-तदङ्ग निवेशिता कमलिनी निमिषद्दल-मुष्टिभिः किं पृथुं तद्वथुम् अपनेतुम् अचेष्टत, किं (वा) पृथुं तद्वथुं पराभवितुम् ऐहत ॥२२॥

विरहेति । विरहेण तप्तं तस्या दमयन्त्या अङ्गं, निवेशिता तत्तापशान्त्यर्थं सखीभिः स्थापिता, कमलिनी पद्मिनी, निमिषन्ति तापातिशयेन सङ्कुचन्ति दलान्येव मुष्टयस्तैः करणैः, किम्, पृथुम् विपुलम्, तस्या दमयन्त्या दवथुं सन्तापम्, अपनेतुं दूरीकर्तुम्, अचेष्टत उद्यमं कृतवती ; किं वा, पृथुं तद्वथुम्, पराभवितुं पराभवेन विनाशयितुम्, ऐहत अचेष्टत । अन्योऽपि मुष्टिप्रहारेण शत्रुं दूरीकर्तुं पराभवितुञ्च चेष्टते ।

अत्र शरीरतापनाशे च पद्मदलसङ्कोचसम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिः, सङ्कुचद्दलेषु मुष्टित्वा-रोपात् निरङ्गं केवलरूपकम्, किंशब्दद्वयसूचितम् च वाचकत्वात् वाच्या क्रियोत्प्रेक्षा च ; एषां तिलतण्डुलन्यायेन संसृष्टिः ; सोऽपि च तद्वथुं पृथुमिति छेकानुप्रासेन संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ॥२२॥

**বাঙ্গালা**—সখীরা দময়ন্তীর বিরহসন্তপ্ত অঙ্গে যে পদ্ম রাখিয়াছিল, সন্তাপবশতঃ সে পদ্মের দলগুলি বুজিয়া গিয়া মুষ্টিস্বরূপ হইয়াছিল ; সুতরাং বোধ হইতেছিল যে, সেই পদ্ম যেন সেই দলমুষ্টি দ্বারা দময়ন্তীর বিশাল সন্তাপকে দূর করিয়া দিবার চেষ্টা করিতেছিল এবং তাহাকে পরাজয় করিয়া মারিয়া ফেলিবারই উদ্যোগ করিতেছিল ॥৩২॥

**অন্বয়:**—अनङ्ग-शरावलि-पन्नग-क्षत-विसारि-वियोग-विषावशा इयम्, खरांशुकराहिंता शशिकला इव कां करुण-नीरनिधौ न निदधौ ॥२३॥

इयमिति । अनङ्गस्य मदनस्य शरावलिर्बाणश्रेणिरेव पन्नगाः कृष्णवर्णत्वात् दीर्घत्वात् क्रूरत्वाच्च सर्पास्तैर्यत् क्षतं विदारणमेव क्षतं दंशनं तेन विसारि क्रमविस्तारि वियोग एव विषं तेन अवशा समाकुला, इयं दमयन्ती, खरांशुकरैः सूर्यकिरणैः अर्हिता पीडिता, शशिकला चन्द्रलेखेव, कां जनम्, करुणानीरनिधौ शोकसागरे, न निदधौ न निमज्जयामास ? अपि तु सर्वमेव निदधाविन्यर्थः । कामपीडितां दमयन्तीमवलोक्य सर्व एव शुशुचुरिति निष्कर्षः ।

अत्र समस्तवस्तुविषयं साङ्गं रूपकमलङ्कारः श्रौतीपमा चानयोरङ्गाङ्गिभावेन सङ्करः ; सोऽपि च छेकानुप्रासेन संसृज्यते मधुररचनत्वान्माधुर्यं गुणः, पाञ्चाली च रीतिः ॥२३॥

**বাঙ্গালা**—কামদেবের বাণশ্রেণিরূপ সর্পগণের দংশনে দময়ন্তীর বিরহ-বিষ ছড়াইয়া পড়িয়াছিল ; তাহাতে তিনি অবশ হইয়া, সূর্য্যকিরণপীড়িত চন্দ্রকলার ন্যায় কোন্ ব্যক্তিকে শোকসাগরে নিমগ্ন করিয়াছিলেন না ? ।৩৩।

**অন্বয়:**—तया मन्मथ-वेदनया ज्वलति निजे हृदि अर्पिता मृणाललता स्वजयिनीः सविधस्थयोः भुजयोः त्रपया (इव) भृशं मलिनताम् अभजत् ॥२४॥

पिकरवश्रुतिकम्पिनि शैवलं हृदि तया निहितं विचलद्बभौ ।
सतत-तद्गत-हृच्छय-केतुना हतमिव स्वतनुघनघर्षिणा ॥३५॥
न खलु मोहवशेन तदाननं नल-मनः शशिकान्तमबोधि तत् ।
इतरथा शशिनोऽभ्युदये ततः कथमसुस्रवदस्रुमयं पयः ॥३६॥

---

ज्वलतीति । तया दमयन्त्या, मन्मथवेदनया कामपीड़या, ज्वलति सन्तप्यमाने, निजे हृदि वक्षसि, अर्पिता विन्यस्ता, मृणाललता, स्वजयिनोः सौन्दर्य्येणात्मपराजयकारिणोः, सविधस्थयोर्निकटवर्त्तिनोः, भुजयोर्दमयन्त्या एव बाह्वोः सकाशात्, त्रपया लज्जयेव, भृशं सातिशयं यथा स्यात्तथा, मलिनतां म्लानताम्, अभजत् प्रापयती । स्वजयिनः सन्निधिस्थितौ लज्जा सम्भवत्येवेति भावः ।

अत्र मृणाललतायाः कालकृतमलिनतायां लज्जाहेतुकत्वमुत्प्रेक्षितमिति हेतूत्प्रेक्षालङ्कारः भज भुजेति च्छेकानुप्रासेन संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ॥३४॥

বাঙ্গালা—কামবেদনায় দময়ন্তীর হৃদয় জ্বলিতেছিল ; সুতরাং সেই সন্তাপনিবৃত্তির জন্য তিনি সেই হৃদয়ের উপরে একটি মৃণাল রাখিয়াছিলেন ; কিন্তু সেই মৃণালটী নিজ-বিজয়ী নিকটবর্ত্তী বাহুযুগলের নিকট লজ্জাবশতই যেন মলিনতা প্রাপ্ত হইয়াছিল ॥৩৪॥

**অন্বয়ঃ**—तया पिक-रव-श्रुति कम्पिनि हृदि निहितं शैवलं सतत-तद्गत-हृच्छय-केतुना स्वतनु-घन-घर्षिणा (सता) हतम् इव (सत्) विचलत् बभौ ॥३५॥

पिकेति । तया दमयन्त्या, पिकरवश्रुत्या कोकिलकूजनश्रवणेन कम्पत इति तस्मिन्, हृदि वक्षसि, निहितं कामतापशान्तये स्थापितम् शैवलं शैवालं कर्त्तृ, सततं तद्गतस्तस्मिन् हृदि स्थितः यो हृच्छयः कामस्तस्य केतुना ध्वजभूतेन मीनेन, स्वतनुं निजशरीरं घनं निरन्तरं घर्षति मीनस्वभावादेव तस्मिन् शैवलमूले संघट्टयतीति तेन ताहृशेन सता, हतं ताड़ितमिव सत्, विचलत् कम्पमानं भवत्, बभौ शुशुभे ।

अत्र क्रियोत्प्रेक्षालङ्कारः, प्रसादो गुणः, वैदर्भी च रीतिः ।

"शैवलं शैवली न स्त्री शैपाली जलनीलिका" इति शब्दार्णवः ॥३५॥

বাঙ্গালা—দময়ন্তী কামতাপশান্তির জন্য বুকের উপরে একটি সেওলা রাখিয়াছিলেন ; কোকিলের রব শুনিয়া সে বুক কাঁপিতে থাকায় সে সেওলাটীও কাঁপিতেছিল ; সুতরাং বোধ হইতেছিল যে, তাঁহার বুকের ভিতরে সর্বদাই যে কামদেব অবস্থান করিতেছিলেন, তাঁহার ধ্বজের মৎস্যটী সেই সেওলার মূলে ঘন ঘন শরীর ঘর্ষণ করিতে থাকিয়া তাড়ন করায়ই যেন সেই সেওলাটী কাঁপিতে থাকিয়া শোভা পাইতেছিল ॥৩৫॥

**অন্বয়ঃ**—नलमनः तत् तदाननं न खलु मोहवशेन शशिकान्तम् अबोधि । इतरथा शशिनः अभ्युदये ततः कथम् अस्रुमयं पयः असुस्रवत् ॥३६॥

नेति । नलस्य मनश्चित्तं कर्त्तृ, तत् अतिसुन्दरतया प्रसिद्धम्, तस्या दमयन्त्या आननं मुखं कर्म्म, न खलु नैव मोहवशेन उन्मादवशेन, शशी चन्द्र इव कान्तं कमनीयमिति शशिकान्तं तदेव शशिकान्तं चन्द्रकान्त-मणिम्, अबोधि अवगच्छति स्म ; अपि तु यथार्थमेव शशिकान्तमणिमबोधीत्यर्थः । इतरथा अन्यथा तदाननं यथार्थमेव चन्द्रकान्तमणिं नाबोधि चेत्तदित्यर्थः, शशिनश्चन्द्रस्य, अभ्युदये उद्गमे सति, ततस्तदाननात् दमयन्तीमुखादित्यर्थः, कथं केन हेतुना, अस्रुमयं नयनजलस्वरूपम्, पयो जलम्, असुस्रवत् स्रवति

रतिपतेर्विजयास्त्रमिषुर्यथा जयति भीमसुतापि तथैव सा ।
स्वविशिखानिव पञ्चतया ततो नियतमैहत योजयितुं स ताम् ॥३७॥
अयमयं दहनास्त्रमुदित्वरं मनसिजस्य विमृश्य वियोगिनी ।
झटिति वारुणमस्त्रमिवादसौ तदुचितं प्रतियत्नमुपाददे ॥३८॥

---

श । चन्द्रोदये हि चन्द्रकान्तमणित एव जलं स्रवतीति प्रसिद्धिः, न पुनश्चन्द्रतुल्यसुन्दरमानादेव मुखादिति भावः । दमयन्ती खलु कार्य्यव्यापृततया यथं कथमपि दिनमतिवाहयति स्म, रात्रौ तु अत्यन्तकामोद्दीपकं चन्द्रमवलोक्य निरुपायतया श्रीवलमेव अश्रुजलं मुमोचेति तु निष्कर्षः ।

अत्र चन्द्रतुल्यकान्त-चन्द्रकान्तमण्योर्भेदेऽपि श्लिष्टकान्तपदश्लेषेणाभेदाध्यवसायादतिशयोक्तिः, "तारामयास्तव च फेनभराः" इति दर्पणोदाहरणवत् अश्रुमयं पय इत्यपह्नुतिः, तथा तदाननं चन्द्रकान्तमणिः चन्द्रोदये जलस्रवणादित्यनुमानादनुमानालङ्कारश्च ; इत्येतेषामङ्गाङ्गिभावेन सङ्करः ; सोऽपि च चतुर्थपादगतेन छेकानुप्रासेन संसृज्यते । पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ।

अस्रुस्रवदिति स्रु धातोरयतन्त्र्या दौ "णिश्रिद्रुस्रुकमिभ्यः कर्त्तरि" इति चङि द्विर्वचने रूपम् ॥३६॥

**বাঙ্গালা**—নলের চিত্ত যে দময়ন্তীর সেই মুখখানিকে মোহবশতই চন্দ্রকান্তমণি বলিয়া বুঝিয়াছিল, তাহা নহে ; (বস্তুতই সে মুখখানি চন্দ্রকান্তমণি ছিল) না হইলে, চন্দ্রের উদয় হইলে, সে মুখ হইতে অশ্রুরূপ জল নির্গত হইবে কেন ॥৩৬॥

**अन्वयः**—रतिपतेः विजयास्त्रम् इषुः यथा जयति, रतिपतेः विजयास्त्रं सा भीमसुता अपि तथा एव जयति । ततः सः स्वविशिखान् इव तां पञ्चतया योजयितुं नियतम् ऐहत ॥३७॥

रतिपतेरिति । रतिपतेर्मदनस्य, विजयास्त्रं विजयसाधनास्त्रभूतः, इषुर्बाणो यथा जयति सर्वोत्कर्षेण वर्त्तते ; रतिपतेर्विजयास्त्रं सा भीमसुता दमयन्त्यपि, तथैव जयति सर्वोत्कर्षेण वर्त्तते । ततस्तस्मात् तयोरुभयोरेव समानविजयास्त्रतया समानोत्कर्षाच्च तोरित्यर्थः, स मदनः, स्वविशिखान् निजबाणानिव, तां भीमसुताम्, पञ्चतया पञ्चत्वसंख्यया मरणेन च, योजयितुं मिश्रीकर्त्तुं निजबाणेष्विव दमयन्त्यामपि पञ्चत्वमारोपयितुमित्यर्थः, नियतं ध्रुवम्, ऐहत अचेष्टत । दमयन्ती खलु तव विरहे कामवेदनया मृतप्राया जातेति निष्कर्षः ।

अत्र स्वविशिखानिवेति श्रौतोपमा, पञ्चत्वसंख्या-मरणयोर्भेदेऽपि पञ्चतापदश्लेषेण तयोरभेदाध्यवसायादतिशयोक्तिः, ध्रुवमन्दवनियतशब्दस्योत्प्रेक्षावाचकत्वात् वाच्या क्रियोत्प्रेक्षा चेत्येतेषामङ्गाङ्गिभावेन सङ्करः । तथा इषुपदेन प्रक्रम्य विशिखानित्यभिधानात् पर्य्यायविषयो भग्नप्रक्रमता दोषः ; स च 'तत इषूनिव पञ्चतया निजान्' इति पाठेन समाधेयः । न च तथात्वे पुनः कथितपदतादोष इति वाच्यं तयोर्हि उद्देश्यप्रतिनिर्देश्यभिन्नविषयत्वात् । प्रसादो गुणः, वैदर्भी च रीतिः ।

"पञ्चता पञ्चभावः स्यात् पञ्चता मरणेऽपि च" इति विश्वः ॥३७॥

**বাঙ্গালা**—কামদেবের বাণ যেমন তাঁহার বিজয়ের অস্ত্র বলিয়া সর্বোৎকৃষ্ট ; তেমনই সেই দময়ন্তীও তাঁহার বিজয়ের অস্ত্র বলিয়াই সর্বোৎকৃষ্ট । সেই জন্য কামদেব নিজের বাণ কয়টীর ন্যায়, সেই দময়ন্তীকেও পঞ্চতার সহিত যোগ করিয়া দিবার জন্য, সত্যই চেষ্টা করিয়াছিলেন ॥৩৭॥

अतनुना नवमम्बुदमाम्बुदं सुतनुरस्त्रमुदस्तमवेक्ष्य सा ।
उचितमायतनिःश्वसितच्छलात् श्वसनमस्त्रममुञ्चदमुं प्रति ॥४९॥
रतिपतिप्रहितानिलहेतितां प्रतियती सुदती मलयानिले ।
तदुरुतापभयात्तमृणालिकामयमियं भुजगास्त्रमवादित ॥५०॥

---

अन्वय:—वियोगिनी असौ मनसिजस्य शशिमयं दहनास्त्रम् उदित्वरं विमृश्य झटिति अश्रुमिषात् तदुचितं वारुणं प्रतिशस्त्रम् उपाददे (इव) ॥४८॥

शशीति। वियोगिनी विरहिणी ; अतएव चन्द्रस्य दहनास्त्रतया विमर्ष इत्याशय: ; असौ दमयन्ती, मनसिजस्य कामदेवस्य, शशिमयं चन्द्रस्वरूपम् दहनास्त्रं विरहिजनदाहजननात् आग्नेयास्त्रम्, उदित्वरम् उद्गमनशीलम्, विमृश्य दर्शनात् पश्चैव विविच्य झटिति तत्क्षणात्, अश्रुमिषात् नयनजलच्छलात्, नयनजलस्वरूपमित्यर्थ:, तदुचितं दहनास्त्रयोग्यं तद्दहनास्त्रनिवर्त्तनसमर्थमिति तात्पर्य्यम्, वारुणं वरुणदैवतम्, प्रतिशस्त्रं प्रत्यस्त्रम्, उपाददे निवारणाय गृहीतवती। अन्योऽपि योद्धा शत्रोराग्नेयास्त्रप्रयोगदर्शने तत्क्षणादेव तत् प्रतिषेधकं वारुणास्त्रं गृह्णाति। उद्दीपकमुद्यन्तं चन्द्रमवलोक्यैव दमयन्ती भृशमरोदीदिति निष्कर्ष:।

अत्र शशिमयमित्युक्ता अपह्नुति:, अश्रुमिषादिति चापरा, तथा उपाददे इत्यत्र सम्भावनाप्रतीते: इवाद्यभावात् प्रतीयमाना क्रियोत्प्रेक्षेति सापह्नवा क्रियोत्प्रेक्षालङ्कार:। प्रसादो गुण:, वैदर्भी च रीति:।

शशिमयमिति स्वरूपार्थे मयट्। उदित्वरमिति "इण्नशजिसर्त्तिभ्य: क्वरप्" इति क्वरप्, "ह्रस्वस्य पिति कृति तुक्" इति तकारागम: ॥४८॥

বাঙ্গালা—বিরহিণী দময়ন্তী, কামদেবের চন্দ্রস্বরূপ আগ্নেয়াস্ত্র উঠিতেছে বিবেচনা করিয়া, তৎক্ষণাৎ অশ্রুজলচ্ছলে সেই আগ্নেয়াস্ত্রনিবারণের যোগ্য বারুণনামক প্রত্যস্ত্রই যেন গ্রহণ করিয়াছিলেন ॥৩৮॥

अन्वय:—सुतनु: सा अतनुना नवम् अम्बुदम् आम्बुदं अस्त्रम् उदस्तम् अवेक्ष्य, अमुं प्रति आयतनिःश्वसितच्छलात् उचितं श्वसनम् अस्त्रम् अमुञ्चत् (इव) ॥४९॥

अतनुनेति। सुतनु: सुन्दरशरीरा सा दमयन्ती, अतनुना अनङ्गेन कामेन, नवं नूतनम्, अम्बुदं मेघम्, आम्बुदं मेघसम्बन्धि अस्त्रम् उदस्तम् आत्मानं प्रति उत्क्षिप्तम् अवेक्ष्य दृष्ट्वा, अमुम् अतनुं कामं प्रति, आयतनिःश्वसितच्छलात् दीर्घनिश्वासव्याजात्, उचितं तदाम्बुदास्त्रयोग्यं तन्निवारणसमर्थमित्यर्थ:, श्वसनं वायुसम्बन्धि वायव्यमित्यर्थ:, अस्त्रं प्रत्यस्त्रम्, अमुञ्चत मुक्तवतीव। अन्योऽपि योद्धा आत्मानं प्रति परस्य मेघास्त्रनिक्षेपदर्शने तन्निवारणाय वायव्यास्त्रं निक्षिपति। नवमेघोदयमवलोक्य नितरां कामार्त्ता दमयन्ती विरहपाण्डुतया दीर्घनिःश्वासान् तत्याजेति निष्कर्ष:।

अत्रापि पूर्ववत् सापह्नवा प्रतीयमाना क्रियोत्प्रेक्षालङ्कार: छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते। तथा सुतनुरप्यसौ अतनुं जयतीति व्यज्यते इति वस्तुना वस्तुध्वनि:। मधुररचनाविशेषात् माधुर्य्यं गुण:, वैदर्भी च रीति: ॥४९॥

বাঙ্গালা—কামদেব নূতনমেঘরূপ মেঘাস্ত্র নিক্ষেপ করিয়াছেন ইহা দেখিয়া, সুতনু দময়ন্তীও যেন তাঁহার প্রতি দীর্ঘনিশ্বাস চ্ছলে উপযুক্ত বায়ব্যাস্ত্র নিক্ষেপ করিয়াছিলেন ॥৩৯॥

अन्वय:—इयं सुदती मलया नाम रतिपतिप्रहितानिलहेतितां प्रतियती (सती) तदुरुतापभयात् मृणालिकामयं भुजगास्त्रम् आदित इव ॥५०॥

व्यधित तद्धृदि शल्यमिव द्वयं विरहिताञ्च तथापि च जीवितम् ।
किमथ तत्र निहत्य निखातवान् रतिपतिः स्तनबिल्वयुगेन तत् ॥४१॥

---

दतीति । इयं सुदती सुन्दरदन्ता दमयन्ती, मलयानिलं दक्षिणदिग्गतवायुं, रतिपतिना कामदेवेन प्रहिता निक्षिप्ता या अनिलहेतिर्वायव्यास्त्रं तस्या आशङ्काम्, प्रतियती मन्यमाना सती, मलयवायुमेव कामदेवनिक्षिप्तं वायव्यास्त्रं बुध्यमाना सतीत्यर्थः, तस्मात् रतिपतेर्थ उत्कर्षात् तापकत्वात् भयेन आत्ता गृहीता या मृणालिका क्षुद्रं मृणालं तन्मयं तत्स्वरूपम्, भुजगास्त्रं सर्पास्त्रम्, आदित इव तद्वायव्यास्त्रनिवारणाय गृहीतवतीव । सर्पो हि वायुभुक् । तेन चान्योऽपि परस्य वायव्यास्त्रनिवारणाय सर्पास्त्रं निक्षिपति । मलयानिलो हि नितरां कामोद्दीपकः ; तेन च सा तदुद्दीपितकामतापशान्त्यर्थं मृणालं धृतवतीति स्थूलार्थः ।

अत्र मृणालिकामयमिति मृणालिकामपह्नुत्य भुजगास्त्रस्थापनादपह्नुतिः, वाच्या क्रियोत्प्रेक्षा चेत्यनयोरङ्गाङ्गिभावेन सङ्करः । मधुररचनावशान्माधुर्यं गुणः, पाञ्चाली च रीतिः ।

"रवेरर्चिश्च शस्त्रञ्च वह्निज्वाला च हेतयः" इत्यमरः ।

प्रतियतीति प्रतिपूर्वस्य इणः "इणश्च" इति य आदेशे रूपम् । शोभना दन्ता अस्या इति सुदती "वयसि दन्तस्य दतृ" इति दन्तशब्दस्य दत्रादेशः । तथा च तत्र दुर्गटीका—"सुसंख्याभ्याञ्च दन्तस्य नित्यं वयसि दत्तृ च ।" क्षुद्रं मृणालमिति मृणालिका क्षुद्रार्थे नदादित्वात् ईकारादौ प्रत्यये कप्रत्ययः । तथा चामरः "स्त्री स्यात् काचिन्मृणाल्यादि विवक्षापचये यदि ।" आदितेति आङ्पूर्वस्य दाधातोः अद्यतन्या आत्मनेपदस्य तं, "स्थादोरिरद्यतन्यामात्मने" इति आकारस्ये कारः, "ह्रस्वाच्चानिटः" इति सिचो लोपः ॥४०॥

**বাঙ্গালা**—সুন্দরদন্তা দময়ন্তী, মলয়বায়ুকে কামদেবনিক্ষিপ্ত বায়ব্যাস্ত্র মনে করিয়া, গুরুতর-কাম-তাপ শান্তির নিমিত্ত ক্ষুদ্র মৃণালরূপ সর্প অস্ত্র যেন গ্রহণ করিয়াছিলেন ॥৪০॥

**अन्वयः**—रतिपतिः तद्धृदि विरहिताञ्च तथापि जीवितञ्च द्वयं शल्यम् इव व्यधित । अथ तत् स्तननिहत्य बिल्वयुगेन तत्र किं निखातवान् ॥४१॥

व्यधितेति । रतिपतिः कामः कश्चित् शिल्पी च, तस्याः दमयन्त्याः हृदि हृदये, विरहिताञ्च नलवियोगित्वञ्च, तथापि तथैव तत्प्रकारेणैवेत्यर्थः जीवितञ्च जीवनञ्च, एतत् द्वयम्, शल्यं शङ्कुद्वयमिव, व्यधित निहितवान् आरोपितवानिति यावत् । विरहवेदनायास्तदनुभवकारणस्य जीवनस्य च सर्वथा दुःसहत्वात् आरोप्यमाणशल्यतुल्यत्वमित्याशयः । अथ अनन्तरं हृदि शल्यद्वयतुल्यविरहजीवितयोर्निधानात् परमित्यर्थः, तत् शल्यद्वयम्, स्तनावेव बिल्वे समानगोलत्वात् समानकठिनत्वाच्च बिल्वफलाकारलौहखण्डे तयोर्युगेन करणेन, निहत्य आहत्य, तत्र हृदि, किं निखातवान् पुनरुत्तोलननिवारणाय सुदृढं प्रवेशितवान् । तथा च यथा शिल्पी काष्ठे शल्यमारोप्य तदुपरि बिल्वाकारं लौहखण्डं दत्त्वा मुद्गरेणाहत्य पुनरुत्तोलननिवारणाय तत् शल्यं सुदृढं प्रवेशयति तद्वदिति भावः ।

अत एवात्र प्रस्तुते रतिपतौ कार्यद्वारा अप्रस्तुतस्य शिल्पिनो व्यवहारसमारोपात् समासोक्तिः, व्यधितेत्येकया क्रियया प्रस्तुतयोरेव विरहिताजीवितयोः कर्मतया अभिसम्बन्धात् तुल्ययोगिता, शल्यमिवेति श्रौतोपमा, स्तनबिल्वेति निरङ्गं केवलरूपकम्, किंशब्दस्य उत्प्रेक्षावाचकत्वात् वाच्या क्रियोत्प्रेक्षा चेत्येतेषामङ्गाङ्गिभावेन सङ्करः । शल्यमिवेत्युपमया च विरहिताजीवितयोरुभयोरपि अतिदुःसहत्वात् परित्यागेच्छा व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

द्वितीयपादे चकारद्वयं पादपूरणार्थम् ॥४१॥

**अतिशरव्ययता मदनेन तां निखिलपुष्पमयस्वशरव्ययात्।**
**स्फुटमकारि फलान्यपि मुञ्चता तदुरसि स्तनतालयुगार्पणा (१) ॥४२॥**
**अथ मुहुर्बहुनिन्दितचन्द्रया स्तुतविधुन्तुदया च तया पुनः।**
**पतितया स्मरतापमये गदे निजगदेऽस्रु-विमिश्र-मुखी सखी ॥४३॥**

---

বাঙ্গলা—কামদেব দময়ন্তীর হৃদয়ে দুইটী শঙ্কুর ন্যায় (দুটী পেরেক লোহার মত) বিরহ এবং সেই ভাবের জীবন এই দুইটীকে প্রবেশ করাইয়া দিয়াছিলেন; তার পরে আবার তাহার উপরে স্তনরূপ বিম্ব (গোলকলৌহখণ্ড) যুগল রাখিয়া, তাহার উপরে আঘাত করিয়া, সেই শঙ্কু দুইটীকে গাঢ়ভাবে প্রবেশ করাইয়া দিয়াছিলেন ॥৪১॥

**अन्वयः**—ताम् अतिशरव्ययता मदनेन निखिल-पुष्पमय-स्वशरव्ययात् फलानि अपि मुञ्चता (सता) तदुरसि स्तन-ताल-युगार्पणा अकारि स्फुटम् ॥४२॥

अतीति। तां दमयन्तीम्, अतिशरव्ययता अतिशयेन शरव्यां लक्ष्यां कुर्वता शरैरतितरां विध्यतेत्यर्थः, मदनेन कामदेवेन, निखिलानां पुष्पमयानां स्वशराणां व्ययात् क्षयप्राप्तेर्हेतोः, फलान्यपि मुञ्चता तरुस्थपुष्पाणां व्ययात् तत्सन्निहितफलान्यपि तां प्रति निक्षिपता सतेत्यर्थः, तस्या दमयन्त्या उरसि वक्षसि, स्तनावेव ताले समान-पीनगोलककठिनत्वात् तालफले तयोर्युगस्य अर्पणा निक्षेपः, अकारि कृता. एतत् स्फुटं स्पष्टम्। अपरोऽपि धनुर्धरः वीरस्वसमस्तशरव्यये सति लोष्ट्रफलादिनिक्षेपेणापि शत्रुं प्रहरति।

अत्र स्फुटशब्दस्योत्प्रेक्षावाचकत्वात् वाच्या क्रियोत्प्रेक्षा, स्तनतालेति निरङ्गं केवलरूपकञ्च, अनयोरङ्गाङ्गि-भावेन सङ्करः। प्रसादो गुणः, वैदर्भी च रीतिः।

"लक्षं लक्ष्यं शरव्यञ्च" इत्यमरः।

अतिशरव्यां कुर्वतेति शरव्यशब्दात् करोत्यर्थे णिजन्तात् शतृ, क्तिं रूपम् ॥४२॥

বাঙ্গলা—কামদেব বাণক্ষেপ করিয়া করিয়া দময়ন্তীকে অত্যন্ত বিদ্ধ করিতে-ছিলেন; তাহাতে তাঁহার পুষ্পময় সমস্ত বাণগুলিই ফুরাইয়া গিয়াছিল, সুতরাং তিনি বৃক্ষের ফলসমূহও নিক্ষেপ করিতে থাকিয়া, দময়ন্তীর বক্ষঃস্থলে স্পষ্টই স্তনরূপ দুইটী তাল-ফল নিক্ষেপ করিয়া রাখিয়াছিলেন ॥৪২॥

**अन्वयः**—अथ स्मरतापमये गदे पतितया मुहुः बहु-निन्दित-चन्द्रया पुनः स्तुत-विधुन्तुदया च तया अस्रु-विमिश्र-मुखी सखी निजगदे ॥४३॥

अथेति। अथ कामेन सह तादृशयुद्धानन्तरम्, स्मरतापमये कामजातसन्तापरूपे, गदे रोगे, पतितया निम-ग्नया, अत एव मुहुर्वारं वारम्, बहु प्रचुरं यथा स्यात्तथा निन्दितः कामोद्दीपकत्वाद् गर्हितश्चन्द्रो यया तया, पुनः स्तुतः कामोद्दीपनस्य उपपीडकस्य चन्द्रस्य पीडकत्वात् प्रशंसितः विधुन्तुदो राहुर्यया तया च, तया दमयन्त्या, अश्रुणा दमयन्त्या दुःखदर्शनेन रोदनान्निर्गतेन नयनजलेन विमिश्रं संयुक्तं मुखं यस्याः सा तादृशी, सखी काचिद्वयस्या, निजगदे ऊचे।

अत्र छेकानुप्रासवृत्त्यनुप्रासयोः संसृष्टिरलङ्कारः। माधुर्यं गुणः, वैदर्भी च रीतिः।

विधुन्तुद इति "विध्वरुषोस्तुदः" इति तुदतेः खश्, "अरुर्द्विषदजन्तस्य मुम्" इति मकारागमः। निजगदे इति कर्मणि परोक्षा ॥४३॥

---

(१) स्तनतालयुगार्पणम्।

**नर-सुराब्जभुवामिव यावता भवति यस्य युगं यदनेहसा ।**
**विरहिणामपि तद्रतवद्युवक्षणमितं न कथं गणितागमे ॥४४॥**
**अनुरधत्त सती स्मरतापिता हिमवतो न तु तन्महिमादृता ।**
**ज्वलति भालतले लिखितः सती-विरह एव हरस्य न लोचनम् ॥४५॥**

**বাঙ্গালা**—তার পর, কামসন্তাপরূপরোগে নিমগ্না দময়ন্তী, বার বার অনেক ভাবে চন্দ্রকে নিন্দা করিয়া, আবার রাহুকে প্রশংসা করিয়া, নয়নজলযুক্তমুখী কোন সখীকে বলিতে লাগিলেন ॥৪৩॥

**अन्वयः**—नर-सुराब्जभुवां (मध्ये) यस्य यावता अनेहसा यत् युगं भवति, तत् इव विरहिणाम् अपि तत् गणितागमे रतवद्युव-क्षण-मितं कथं न भवति ? ॥४४॥

किं निजगदे इत्याह नरेति । नरा मनुष्याः सुरा देवाः अब्जभूः पद्मयोनिर्ब्रह्मा च तेषां मध्ये, यस्य नरस्य सुरस्य अब्जभुवश्च वा, यावता यत्परिमाणेन क्षणादिनाद्यपेक्षेणेत्यर्थः, अनेहसा कालेन, यत् युगं भवति गणितागमे गणितमस्ति ; तदिव, विरहिणामपि स्त्रीपुरुषाणाम्, तद् युगम् । काकाक्षिगोलकन्यायेन तदित्यस्योभयत्रान्वयः । गणितागमे ज्योतिःशास्त्रे, रतवन्तः सुरतशालिनः संयोगिन इत्यर्थः ये युवानस्तरुणस्त्रीपुरुषास्तेषां क्षणेन कालेन मितं परिमितम्, कथं न भवति नास्ति । तथा च ब्रह्मणः कतिपयक्षणेन यथा देवानां मानुषाणाञ्च युगम्, देवानां कतिपयवत्सरैश्च यथा मानुषाणां युगं ज्योतिःशास्त्रे गणितमस्ति ; तथा संयोगिनां स्त्रीपुरुषाणां कतिपयक्षणेन विरहिणां स्त्रीपुरुषाणां युगमपि ज्योतिःशास्त्रे गणयितुमुचितमासीत् ; विरहिभिः स्वल्पस्यापि कालस्य सुदीर्घतया संयोगिभिश्च सुदीर्घस्यापि कालस्य स्वल्पतया अनुभूयमानत्वादित्याशयः ।

अत्र रतवद्युवक्षणमितत्वस्य कालस्य विरहियुगत्वासम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिः श्रौतोपमा चानयो-रङ्गाङ्गिभावेन सङ्करः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"कालो दिष्टोऽप्यनेहापि" इत्यमरः ।

"काकमयूरौ" इत्यादिवत् नरसुराब्जभुवामित्यत्रापि "अल्पाच्तरं द्वयोः" इति नियमपूर्वनिपातस्याभावः ॥४४॥

**বাঙ্গালা**—(সখি! বলিতে পার?) মানুষ, দেবতা ও ব্রহ্মা ইঁহাদের মধ্যে যাঁহার যত টুকু কালে যে যুগ হইয়া থাকে; তেমন বিরহীদিগেরও সেই যুগকে জ্যোতিষ-শাস্ত্রে সংযোগী যুবক-যুবতিদিগের একটীমাত্র ক্ষণের পরিমাণে পরিমিত করা হয় নাই কেন? ॥৪৪॥

**अन्वयः**—सती स्मरतापिता (सत्येव) हिमवतः जनुः अधत्त, तु तन्महिमादृता न । (तथा) हरस्य भालतले लिखितः सतीविरहः एव ज्वलति, लोचनं न ॥४५॥

अनुरिति । सती दाक्षायणी, स्मरेण कामेन तापिता सत्येव हिमवतो हिमालयपर्वतात्, जनुर्जन्म, अधत्त तस्मात्जन्म गृहीतवती ; तु किन्तु, तस्य हिमवतो महिम्नि माहात्म्ये आदृता आदरवती सती न ततो जनुरधत्त । तथा हरस्य महादेवस्य, भालतले ललाटदेशे लिखितो विधात्रा न्यस्तः, सत्या दाक्षायण्या विरहो विच्छेद एव, ज्वलति लोचनभावेन दीप्यते ; किन्तु वस्तुतो लोचनं न ज्वलति । उमामहेश्वरयो-रप्येतादृशी काम वेदनाऽऽसीत्, तत् का कथा मद्विधायां मानुषमात्रायामित्याशयः ।

अत्र सत्याः स्मरतापितत्वेन जन्मग्रहणासम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिः, विरहादेरपह्नवपूर्वं कथोपन्यासः

दहनजा न पृथुर्दवथुव्यथा विरहजैव पृथुर्यदि नेदृशम्।
दहनमाशु विशन्ति कथं स्त्रियः प्रियमपासुमुपासितुमुत्सुकाः (१) ॥४६॥
हृदि लुठन्ति कला नितरामभूः विरहिणीवधपङ्ककलङ्किताः।
कुमुदसख्यकृतस्तु बहिष्कृताः सखि! विलोकय दुर्विनयं विधोः ॥४७॥

पञ्चवादपञ्चतः, प्रथमार्द्धे अन्त्यानुप्रासः, द्वितीयचतुर्थपादयोरन्त्यनुप्रासश्च, इत्येतेषां मिथो निरपेक्षतया संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः।

"ललाटं नयनं भालं अलिकमथ गोधिका" इत्यमरः ॥४५॥

বাঙ্গালা---সতীদেবী কামসন্তাপে সন্তপ্ত হইয়াই হিমালয় হইতে জন্ম গ্রহণ করিয়াছিলেন, কিন্তু হিমালয়ের মাহাত্ম্যের প্রতি আদর করিয়া নহে; এবং মহাদেবের ললাটে বিধাতার লিখিত সতীদেবীর বিরহই জ্বলিয়া থাকে, কিন্তু তৃতীয় নয়ন নহে ॥৪৫॥

অন্বয়:—दहनजा दवथुव्यथा न पृथुः, विरहजा एव दवथुव्यथा पृथुः; यदि ईदृशं न (स्यात्, तदा) कथं स्त्रियः अपासुं प्रियम् उपासितुम् उत्सुकाः (सत्यः) आशु दहनं विशन्ति ॥४६॥

दहनजेति। दहनजा अग्निजाता दवथुव्यथा सन्तापपीडा, न पृथुः विरहजसन्तापपीडापेक्षया न महती; किन्तु विरहजा प्रियजनविच्छेदजाता एव दवथुव्यथा, पृथुः दहनजदवथुव्यथापेक्षया महती। तुल्यैव मम मतमिति भावः। यद् ईदृशं न स्यात्तदा, कथं स्त्रियः पतिव्रता योषितः, अपगता असवः प्राणा यस्य तम् अपासुं मृतम्, प्रियं पतिम्, उपासितुं सेवितुम्, उत्सुका उत्कण्ठिताः सत्यः, आशु शीघ्रं विलम्बमन्तरेण चेत्यर्थः, दहनं चितां वह्निम्, विशन्ति विरहसन्तापपीडापेक्षया दहनसन्तापपीडाया लाघवं नैव चेत् तदा कथमिति भावः। अत उक्तं मम मतमेव ध्रुवमित्याशयः।

अत्र कार्य्येण कारणसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारो वृत्त्यनुप्रासच्छेकानुप्रासाभ्यां संसृज्यते। पृथुविशेष्यस्य द्विरुक्तत्वेऽपि न कथितपदतादोषः, उद्देश्यप्रतिनिर्देश्यविषयत्वात्। न वा तदेत्यनुक्तावपि न्यूनपदतादोषः, तस्य सामर्थ्यादेवावगतेः। प्रसादो गुणः, वैदर्भी च रीतिः ॥४६॥

বাঙ্গালা—সখি! অগ্নিজাত সন্তাপের পীড়া গুরুতর নহে; কিন্তু বিরহজাত সন্তাপের পীড়াই গুরুতর। যদি এইরূপই না হইবে, তবে পতিব্রতা রমণীরা মৃত পতির সেবা করিবার জন্য উৎকণ্ঠিত হইয়া, তাড়াতাড়ি অগ্নিতে প্রবেশ করিবেন কেন ॥৪৬॥

অন্বয়:—विरहिणी-वध-पङ्क-कलङ्किताः अमूः कलाः हृदि नितरां लुठन्ति; तु कुमुद-सख्यकृतः बहिष्कृताः। (अत एव, हे) सखि! विधोः दुर्विनयं विलोकय ॥४७॥

पुनः अपि प्रतिश्लोकं चन्द्रं निन्दति। हृदीति। विरहिणीनां स्त्रीणां वधेन कामोद्दीपनया हननेन यत् पङ्कं पापं तेन कलङ्किताः अन्तःकलङ्का मलिनीकृता इत्यर्थः, अमूः दृश्यमानाः, कलाः अंशाः, हृदि मध्ये, नितरामत्यन्तम्, लुठन्ति विहरन्ति, तु किन्तु, कुमुदैः कैरवैः सह यत् सख्यं प्रकाशकत्वात् समानगुणत्वाद्वा सौहार्दं तत् कुर्वन्तीति ताः अतीवनिर्म्मला इत्यर्थः, कलाः, बहिष्कृताः कलङ्कितांशात् बहिरेव न स्थापिताः स्वहृदि स्थापिता इति शेषः। अतएव हे सखि! विधोश्चन्द्रस्य, दुर्विनयं दुष्टशिक्षां दुष्टशिक्षावशाद्-न्याय्यविचारित्वमित्यर्थः, विलोकय पश्य। यथा च यस्य पुरुषस्य हृदये स्त्रीहत्यापापकलङ्किताः स्त्रियो लुठन्ति, तेन च पुरुषेण परोपकारिण्यः स्त्रियो गृहाद्बहिष्कृताः; स पुरुषो यथा दुर्विनीतः, अयं चन्द्रोऽपि तथैव दुर्विनीत इति भावः।

(१) उद्धुराः।

अयि विधुं परिपृच्छ गुरोः कुतः स्फुटमशिक्ष्यत दाहवदान्यता।
ग्लपित-शम्भु-गलाद्गरलात्त्वया किमुदधौ जड़ ! वा वड़वानलात् ॥४८॥
अयमयोगि-वधू-वध-पातकैः भ्रमिमवाप्य दिवः खलु पात्यते।
शिति-शिला-दृषदि स्फुटदुत्पतत्कण-गणाधिक-तारकिताम्बरः ॥४९॥

---

अत एवाव प्रस्तुते चन्द्रे कार्य्यद्वारा अप्रस्तुतव्यवहारसमारोपात् समासोक्तिरलङ्कारः, चतुर्थ-चरणार्द्धे न तु पूर्ववयस्कत्वानामर्थौ हेतुरिति काव्यलिङ्गं चानयोरङ्गाङ्गिभावेन सङ्करः; सोऽपि च अर्थाला-नुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते। माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥४७॥

**বাঙ্গালা**—সখি ! চন্দ্রের দুর্ব্যবহার দেখ ;—যে কলাগুলি বিরহিণী রমণীগণকে হত্যা করিয়া সেই পাপে কলঙ্কিত হইয়াছে, সেই কলাগুলি উহার হৃদয়ে অত্যন্ত লুণ্ঠিত হইতেছে ; কিন্তু যে কলাগুলি কুমুদগণকে প্রকাশ করিয়া তাহাদের সহিত মিত্রতা করিয়াছে ; ও, সেই কলাগুলিকে বাহির করিয়া দিয়াছে ॥৪৭॥

**अन्वयः**—अयि। विधुं परिपृच्छ (हे) जड़ ! त्वया कुतः गुरोः दाहवदान्यता स्फुटम् अशिक्ष्यत ; किं ग्लपित-शम्भु-गलात् गरलात् ? किंवा उदधौ वड़वानलात् ॥४८॥

अयीति अयि सखि ! विधुं चन्द्रम्, परिपृच्छ। किं पृच्छामीत्याह— हे जड़ ! लोकव्यतिकर-विद्याशिक्षाकरणात्, हे निर्बोध चन्द्र ! त्वया कुतः कस्मात्, गुरोः सकाशात्, दाहवदान्यता दाहदातृत्वं सन्ताप-कारित्वमित्यर्थः, स्फुटं स्पष्टम् ; न पुनरविज्ञतमावेण ; येन शिक्षाल्पतया तत्कार्य्यकारित्वमप्यल्पं स्यादिति भावः, अशिक्ष्यत उपादीयत। ननु मया कुतो गुरोरशिक्ष्यतेति विषये त्वया किं सम्भाव्यत इत्याह— किं ग्लपितो ग्लानिं मालिन्यं प्रापितः शम्भोर्महादेवस्य गलः कण्ठदेशो येन तस्मात्, गरलात् कालकूटविषात्, अशिक्ष्यत। त्वं शम्भोः शिरसि तिष्ठसि, कालकूटविषञ्च तस्य कण्ठदेशे वर्त्तते ; अतः सान्निध्यात् तत्सर्वेयं शिक्षा सम्भाव्यत इति भावः। किंवा उदधौ समुद्रे, वड़वानलात् अशिक्ष्यत ?। त्वं समुद्रे जातः, वड़वानलश्च तत्रैव तिष्ठ-तीति सान्निध्यात् ततोऽपि तवेयं शिक्षा सम्भाव्यत इत्याशयः।

अत्र गरलाद्वड़वानलाच्च शिक्षाया असम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिरलङ्कारः, गलाद्गरलादिति वृत्त्यनु-प्रासः, जड़ वा वड़वेति च्छेकानुप्रासश्चेत्येतेषां संसृष्टिः। माधुर्य्यं गुणः, वैदर्भी च रीतिः।

"स्थूलदाम्य-स्थूललक्ष्या दानशौण्डा बहुप्रदे" इत्यमरः ॥४८॥

**বাঙ্গালা**—সখি ! তুমি চন্দ্রকে জিজ্ঞাসা কর যে, হে মূর্খ ! তুমি এই সন্তাপকারিতা গুণ কোন্ গুরুর নিকট হইতে স্পষ্টরূপে শিক্ষা করিয়াছ ? মহাদেবের কণ্ঠদেশকে যে মলিন করিয়াছে, সেই কালকূটবিষের নিকট হইতে ? কিম্বা সমুদ্রে বড়বানলের নিকট হইতে ? ॥৪৮॥

**अन्वयः**—अयोगि वधू-वध पातकैः अयं भ्रमिम् अवाप्य दिवः शिति-शिला-दृषदि पात्यते खलु। (अतएव) स्फुटदुत्पतत्-कण-गणाधिक-तारकिताम्बरः (इव भवति) ॥४९॥

अयमिति। अयोगिनीनां विरहिणीनां वधूनां स्त्रीणां वधैः कामोद्दीपनया मारणैः यानि पातकानि पापानि तैः कर्त्तृभिः, अयं चन्द्रः, भ्रमिं भ्रमणम्, अवाप्य प्रापय्य, दिव आकाशात्, शितिशिला कलङ्कराजिरेव दृषत् कृष्णतःसाम्यात् पाषाणस्तस्याम्, पात्यते खलु निक्षिप्यत इव। अतएव पाषाणपातनात् स्फुटन्तः इतस्ततो भग्नतया विक्षिप्यन्तः उत्पतन्तः तद्वेगेनैव उत्थिष्ठन्तः ये कणगणास्तन्मध्यस्थ खण्डसमूहास्तैः अधिकं सातिशयं

**त्वमभिधेहि विधुं सखि! मद्गिरा किमिदमीदृगधिक्रियते त्वया।**
**न गणितं यदि जन्म पयोनिधौ हरशिरः-स्थिति-भूरपि विस्मृता? ॥५०॥**
**निपततापि न मन्दरभूभृता त्वमुदधौ शशलाञ्छन! चूर्णितः।**
**अपि मुनेर्जठरार्चिषि जीर्णतां बत गतोऽसि न पीतपयोनिधेः ॥५१॥**

---

यथा स्यात्तथा तारकितं सञ्जाततारकम् अम्बरम् आकाशं यस्मात् स तथोक्त इव भवतीति शेषः। अत्रायं भावः, शुक्लपक्षे वर्द्धमानश्चन्द्रः खलु कामोद्दीपनतया विरहिणीः रमणीर्निहन्ति, तज्जनितश्च पापसमूहः कृष्णपक्षे तं चूर्णयित्वा आकाशात् कृष्णपक्षीयरात्रिरूपे पाषाणे दृढं पातयति; तेन चाघातेन चन्द्रमण्डलं भज्यते; ततश्च खण्डसमूहः समुत्थाय आकाशे नक्षत्रसमूहरूपेण विराजन्ते। ईदृशसम्भावनायाः कारणञ्च—शुक्लपक्षे रात्रौ चन्द्रकिरणैर्न नक्षत्राणि तिरोधीयन्ते; कृष्णपक्षे तु तादृशचन्द्रकिरणाभावात् नक्षत्राणि प्रकाशन्ते। चन्द्रस्य भङ्गश्च स्वाभाविकम्। अन्यानि च नीलपाषाणखण्डानि मूलपाषाणवदेव उज्ज्वलानि भवन्तीति।

अत्र प्रथमार्द्धे बाध्या क्रियोत्प्रेक्षा छेकानुप्रासश्च, द्वितीयार्द्धे निरङ्गं केवलरूपकं प्रतीयमाना क्रियोत्प्रेक्षा चेत्येतेषां मिथो निरपेक्षतया संसृष्टिः। मधुररचनावशान्माधुर्य्यं गुणः, पाञ्चाली च रीतिः।

"शितौ धवलमेचकौ" इत्यमरः।

अवापय्य इति इत्यन्ताद्वापेः क्त्वो ल्यप्, "आपः परस्य वा वक्तव्यम्" इति पक्षे अयादेशाभावः ॥४९॥

বাঙ্গালা—বিরহিণী রমণীগণকে বধ করায় চন্দ্রের যে পাপ জন্মে, সেই পাপই যেন চন্দ্রকে ভ্রমণ করাইয়া আকাশ হইতে কৃষ্ণপক্ষের রাত্রিরূপ পাথরের উপরে ফেলিয়া দেয়; (তাহাতে চন্দ্রমণ্ডল ভাঙ্গিয়া যায়) সুতরাং সেই চন্দ্রমণ্ডলের ছিন্ন খণ্ডগুলি আকাশে উঠিয়া, যেন অতি রক্ত নক্ষত্ররূপে বিরাজ করে ॥৪৯॥

**অন্বয়ঃ** – (हे) सखि! त्वं मद्गिरा विधुम् अभिधेहि; (हे चन्द्र!) त्वया ईदृक् इदं किम् अधिक्रियते। यदि पयोनिधौ जन्म न गणितम्, (तथापि) हर-शिरः-स्थिति भूः अपि विस्मृता! ॥५०॥

त्वमिति। शत्रुणा सह साक्षात्सम्लापो नोचित इति सखीं नियोजयतीति बोध्यम्। हे सखि! त्वं मद्गिरा मम वाक्येन, विधुं चन्द्रम्, अभिधेहि ब्रूहि। किमभिदधामीत्याह—हे चन्द्र! त्वया ईदृक् इत्थम्, इदं विरहिजनहननरूपं कार्य्यम्, किं कथम्, अधिक्रियते अधिकभावेन अनुष्ठीयते। अथ तव का नाम विप्रतिपत्तिरित्याह—यदि पयोनिधौ क्षीरोदसागरे, जन्म, न गणितं न विचारितम्, तथापि हरस्य शिवस्य शिरो मस्तकमेव स्थितिभूर्वासस्थानम्, विस्मृता न स्मरणविषयीकृता?। क्षीरोदसागरे जातस्य शिवशिरसि स्थितस्य च तव व्याधवदीदृशो निरपराधविरहिजनवधः कथमपि न सम्भवत इति भावः।

अत्र क्षीरोदसागरजन्म-हरशिरःस्थितिरूपमहागुणशालिनश्चन्द्रात् कारणात् निरपराधविरहिवधरूप-दूषितकार्य्योत्पत्तेर्विषमालङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः ॥५०॥

**বাঙ্গালা**—সখি! তুমি আমার বাক্য অনুসারে চন্দ্রকে বল যে, হে চন্দ্র! তুমি এইরূপ বিরহীদিগের হত্যাকার্য্য কর কেন; যদিও তুমি ক্ষীরোদসাগরে নিজের জন্মের বিষয় বিচার না কর; তথাপি শিবের মস্তকরূপ বাসস্থানটাও কি বিস্মৃত হইলে? ॥৫০॥

**অন্বয়ঃ**—(हे) शशलाञ्छन! त्वम् उदधौ निपतता मन्दरभूभृता अपि न चूर्णितः असि; पीतपयोनिधेः मुनेः जठरार्चिषि अपि जीर्णतां न गतः असि बत ॥५१॥

निपततेति। हे शशलाञ्छन! शशाङ्क! त्वम्, उदधौ समुद्रे, निपतता मन्थनकाले देवासुरकर्षणात्

**কিমসুভির্গলিতৈর্জড় ! মন্যসে (১) ময়ি নিমজ্জতু ভীমসুতামনঃ।**
**মম কিল শ্রুতিমাহ তদর্থিকাং নল-মুখেন্দুপরাং বিবুধঃ স্মরঃ॥৫২॥**

---

নিপত্য ঘূর্ণমানেনেত্যর্থঃ, মন্দরভূভৃতা মন্দরপর্বতেনাপি, ন ঘূর্ণিতোঽসি তস্য তলং গত্বা, ন নিষ্পিষ্টোঽসি ; তথা পীতঃ পয়োনিধিঃ সমুদ্রো যেন তস্য, মুনেরগস্ত্যস্য, জঠরার্চিষি উদরানলজ্বালায়ামপি, বাতাপিবৎ জীর্ণতাং ন গতোঽসি ; উভয়ত্রাপি মদুঃখী স্থিতত্বাদিতি ভাবঃ। অত উভয়মপি মাহাত্ম্যং বিদ্যাবতঃ ইত্যাশয়ঃ।

অত্র মন্দরঘূর্ণন-জঠরানলজ্বালাসম্পর্করূপকারণদ্বয়ে সত্যপি ঘূর্ণিততা জীর্ণতারূপকার্যদ্বয়াভাবাৎ বিশেষোক্তিদ্বয়ম্, তয়োশ্চ সংসৃষ্টিঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ॥৫১॥

**বাঙ্গালা**—হে চন্দ্র ! মন্দরপর্বত যখন সমুদ্রে পড়িয়া (দেবাসুরের আকর্ষণে) ঘুরিতেছিল, তখন তুমি তাহার ঘর্ষণেও চূর্ণিত হইয়া যাও নাই, আবার অগস্ত্য যখন সমুদ্র পান করিয়াছিলেন, তখন তাঁহার উদরানলের শিখায়ও জীর্ণ হইয়া যাও নাই। হায় ! কি দুঃখ ! ॥৫১॥

**অন্বয়ঃ**—(হে) জড় ! গলিতৈঃ অসুভিঃ ভীমসুতামনঃ ময়ি নিমজ্জতু (ইতি) কিং মন্যসে ? বিবুধঃ স্মরঃ তদর্থিকাং শ্রুতিং মম নলমুখেন্দুপরাম্ আহ কিল ॥৫২॥

কিমিতি। হে জড় ! মূর্খ ! চন্দ্র ! গলিতৈঃ ত্বৎপীড়নয়ৈব নির্গতৈঃ, অসুভিঃ প্রাণৈঃ হেতুভিঃ, ভীমসুতায়া দমযন্ত্যা মনঃ কর্তৃ, ময়ি চন্দ্রে, নিমজ্জতু প্রবিশতু, ইতি কিং ত্বং মন্যসে সম্ভাবয়সি। তথা চ জীবন্ত্যা দমযন্ত্যা মনঃ খলু নলমপহায় ময়ি ন প্রবিশেৎ, কিন্তু মৃতায়া অস্যা মনঃ "মনশ্চন্দ্রে নিলীয়তে" ইতি শ্রুতিপ্রামাণ্যাৎ ময়ি প্রবেক্ষ্যত্যেব ; অত এনাং নিতরাং পীড়য়ামি ইতি কিং বিচারিতবানিত্যর্থঃ। তদপ্যসম্ভবমিত্যাহ—বিবুধো দেবঃ পণ্ডিতশ্চ, স্মরঃ কামো বেদব্যাখ্যাতা চ, সঃ মৃতজনমনসশ্চন্দ্রে প্রবেশরূপঃ অর্থো যস্যাস্তাম্, শ্রুতিং "মনশ্চন্দ্রে নিলীয়তে" ইত্যেবং বেদবচনম্, মম সম্বন্ধে, নলস্য মুখেন্দুর্বদনচন্দ্র এব পরঃ প্রাধান্যেন প্রতিপাদ্যোঽর্থো যস্যাস্তাম্, আহ ব্রবীতি। কিলশব্দশ্চন্দ্রস্য পূর্ববিপরীতসম্ভাবনায়াম্। তথা চ সামান্যভূতায়া অপি উক্তশ্রুতের্বিশেষপরতয়া পণ্ডিতেন ব্যাখ্যাতত্বাৎ তস্য চ ত্বয়া অনবগতত্বাৎ ত্বং জড় এবেতি ভাবঃ।

অত্র সামান্যপরায়াঃ শ্রুতের্বিশেষপরতয়া যোজনাৎ শ্লেষবক্রোক্তিরলঙ্কারঃ। এতদুপপত্তিরস্মাভিঃ সাহিত্যদর্পণটীকায়াং বক্রোক্তিপ্রকরণে প্রদর্শিতা। বক্রোক্ত্যা চ 'ত্বৎপীড়নয়া মৃতায়া অপি মে মনস্ত্বয়ি ন প্রবেক্ষ্যতি, অপি তু নলমুখচন্দ্র এব স্থাস্যতি' ইতি বস্তু ব্যজ্যত ইত্যলঙ্কারেণ বস্তুধ্বনিঃ। তথা তাদৃশমনসা-সম্বন্ধেঽপি তৎসম্বন্ধাভিধানাদতিশয়োক্তিঃ, নলমুখেন্দোরিতরং কেবলরূপকমিত্যেতেষামঙ্গাঙ্গিভাবেন সঙ্করঃ। পূর্ববদ্রসো রসঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ।

"বিবুধঃ পণ্ডিতে সুরে" ইতি হেমচন্দ্রঃ। "স্মরঃ স্মৃতৌ স্মরঃ কামী বেদব্যাখ্যাতরি স্মরঃ" ইতি বলঃ॥৫২॥

**বাঙ্গালা**—হে মূর্খ ! চন্দ্র ! 'প্রাণ বাহির হইয়া গেলে, দময়ন্তীর মন আমাতে আসিয়া প্রবেশ করিবে' ইহা কি তুমি মনে করিতেছ ? (তাহা কখনই হইবে না ; কারণ) কামদেব, তাদৃশার্থবোধক শ্রুতিবাক্যটিকে আমার বিষয়ে নলের মুখচন্দ্রপর বলিয়া থাকেন ॥৫২॥

---

(১)···ত্যাপিতৈর্জড়···।

असमये मतिरुन्मिषति ध्रुवं करगतैव गता यदियं कुहूः।
पुनरुपैति निरुध्य निवास्यते सखि! मुखं न विधोः पुनरीक्ष्यते ॥५७॥
अपि (१) ममैष चकोरशिशुर्मुनेः व्रजति सिन्धुपिबस्य न शिष्यताम्।
अशितुमब्धिमधीतवतोऽस्य वा (२) शशिकराः पिबतः कति शीकराः ॥५८॥

---

"तुन्दिलस्तुन्दिकस्तुन्दी बृहत्कुक्षिः पिचण्डिलः" इत्यमरः।

तुन्दिलः जात इति तुन्दिलितः करोत्यर्थे णिजन्तात् तुन्दिलशब्दात् कर्मणि क्तः ॥५६॥

বাঙ্গালা—সখি! তুমি (আমাদের যে কোন ব্যক্তির) কাণের ক্ষুদ্র তমালদল, ঐ চন্দ্রের হরিণটীকে দাও, তাহাতে ঐ হরিণটী স্থূলোদর হইয়া যদি চন্দ্রকে একটুমাত্রও আবৃত করে; তাহা হইলে আমি ক্ষণকাল বাঁচিতে পারিব ॥৫৬॥

**अन्वयः**—मतिः असमये ध्रुवम् उन्मिषति; यत् इयं कुहूः करगता एव गता। (यदि) पुनः उपैति, (तदा) निरुध्य निवास्यते, (हे) सखि! विधोः मुखं पुनः न ईक्ष्यते ॥५७॥

असमय इति। मतिर्बुद्धिः, असमये, ध्रुवं निश्चितम्, उन्मिषति उदेति। यद् यस्मात्, इयम् अचिरदृष्टा, कुहूरमावास्या, करगता मम हस्तप्राप्ता एव सती, गता प्रस्थिता। पुनरागमे किं कुर्य्या इत्याह यदि पुनरुपैति सा कुहूरागच्छति, तदा निरुध्य आवध्य, निवास्यते अत्रैव मया स्थाप्यते। तेन किं फलमित्याह—हे सखि! विधोरुद्दीपकस्य चन्द्रस्य मुखम्, पुनर्न ईक्ष्यते मया न दृश्यते। तदा खल्वीदृशी यातना न स्यादिति भावः।

अत्र अमावास्याया निरोधपूर्वकनिवासासम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिरलङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः।

उपैति निवास्यते ईक्ष्यते इति त्रिष्वेव भविष्यत्सामीप्ये वर्त्तमाना ॥५७॥

বাঙ্গালা—সখি! নিশ্চয়ই অসময়ে বুদ্ধি উপস্থিত হয়; যে হেতু, এই অমাবস্যাটা হাতে আসিয়াই চলিয়া গেল। যদি আবার আইসে, তবে সে অমাবস্যাকে আবদ্ধ করিয়া এই স্থানেই রাখিয়া দিব; কেন না, তবে আর চন্দ্রের মুখ দেখিব না ॥৫৭॥

**अन्वयः**—एषः मम चकोरशिशुः सिन्धुपिबस्य मुनेः शिष्यतां न व्रजति अपि? अब्धिम् अशितुम् अधीतवतः अस्य पिबतः (सतः) शशिकराः कति वा शीकराः (भविष्यन्ति) ॥५८॥

अपीति। एष मम चकोरशिशुः, सिन्धुपिबस्य समुद्रपानकारिणः, मुनेरगस्त्यस्य, शिष्यता छात्रत्वम्, न व्रजति अपि न प्राप्नोति न प्राप्नुमर्हति किमित्यर्थः। शिशुत्वादेव शिष्यताप्राप्तिः सम्भवपरेति भावः। ननु तस्य शिष्यताप्राप्तौ किं फलमित्याह—अब्धिं समुद्रम्, अशितुं पातुम्, अधीतवतः अध्ययनं कृतवतः समुद्रपानकरणं शिक्षितवत इत्यर्थः, अस्य चकोरशिशोः, पिबतः शशिकराणामेव पाने प्रवृत्तस्य सत इति तात्पर्य्यम्, शशिकराश्चन्द्रकिरणाः, कति वा शीकरा बिन्दवो भविष्यन्ति। तथा च जलमयः किल चन्द्रः, तेन च तत्किरणा अपि जलमया एव। एवञ्च येन समुद्रस्यापि पानकरणं शिक्षितं तस्य कतिपयजलकणात्मकचन्द्रकिरणपानकरणं दण्डापूपिकान्यायात् सर्वथा सुकरमेव। ततश्च मादृशां ज्वालानिवृत्तिरित्याशयः।

अत्र एवात्र अर्थापत्तिरलङ्कारश्चतुर्थपादगतेन छेकानुप्रासेन संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः।

सिन्धुं पिबतीति सिन्धुपिबः "घ्रेङ्दृशिपाघ्राध्माः शः" इत्युपसर्गाभावेऽपि शप्रत्यये "सार्वधातुकवच्च" इति सार्वधातुकत्वभावात् "पः पिब" इति पिबादेशः। तथा च घेङित्यादौ दुर्गः—"कथं पयः सिन्धुपिबः" अप्यनुपसर्गेऽपीति वचनात् ॥५८॥

---

(१) अपि ममैषः... । (२)...मस्य च।

कुरु करे गुरुमेकमयोघनं बहिरितो मुकुरञ्च कुरुष्व मे।
विशति तत्र यदैव विधुस्तदा सखि! सुखादहितं जहि तं द्रुतम्॥৫৯॥
उदर एव धृतः किमुदन्वता न विषमो वडवानलवद्विधुः।
विषवदुज्झितमप्यमुना न स स्मरहरः किममुं बुभुजे विभुः॥৬০॥
असितमेकसुराशितमप्यभूत् न पुनरेष विधुर्विशदं विषम्।
अपि निपीय सुरैर्जनितक्षयं स्वयमुदेति पुनर्नवमार्णवम्॥৬১॥

---

বাঙ্গালা—সখি! আমার এই চকোরপাখীর শিশুটী, সমুদ্রপানকারী অগস্ত্যমুনির শিষ্য হইতে পারিবে কি? কেন না, সমুদ্রপান করা শিক্ষা করিয়া, ঐ, পান করিতে প্রবৃত্ত হইলে, ইহার নিকট চন্দ্রের কিরণভাগ কয়টী বা জলবিন্দু হইবে।৫৮॥

**अन्वयः**—(हे) सखि! करे गुरुम् एकम् अयोघनं कुरु, (ततः) इतः बहिः मे मुकुरञ्च कुरुष्व; (ततश्च) यदा एव विधुः तत्र विशति, तदा (एव) तम् अहितं द्रुतं जहि॥৫৯॥

कुर्विति। हे सखि! करे निजहस्ते, गुरुं बृहन्तम्, एकम्, अयोघनं लौहमुद्गरम्, कुरु गृहाण; ततः इतो गृहात्, बहिर्देशे, मे मम, मुकुरं दर्पणञ्च, कुरुष्व स्थापय; ततश्च यदैव विधुश्चन्द्रः तत्र मुकुरे विशति प्रतिबिम्बभावेन पतिष्यति, तदैव तम् अहितं मम शत्रुं चन्द्रम्, द्रुतं सत्वरम्, जहि तदयोघनाघातेन मारय। तदा मे सन्तापशान्तिरित्याशयः। उन्मादप्रलापोऽयम्।

अत्र प्रथमे चतुर्थे च पादे छेकानुप्रासवृत्त्यनुप्रासयोरेकाश्रयानुप्रवेशरूपः सङ्करः, द्वितीये तु छेकानुप्रासमात्रमिति समुदाये संसृष्टिः। मधुररचनाविशेषान्माधुर्यं गुणः, वैदर्भी च रीतिः।

अयो हन्यते अनेनेति अयोघनः "करणेऽयोविद्रुषु" इति हन्तेः करणे अप् प्रत्ययो घनादेशश्च॥৫৯॥

বাঙ্গালা—সখি! হাতে বড় রকমের একটা লোহার মুগুর লও, তার পর এই ঘরের বাহিরে আমার আয়না খানা রাখ; তারপর, সেই চন্দ্র তাহাতে প্রবেশ করিলে, সেই তাড়াতাড়ি সেই শত্রুকে মারিয়া ফেল।৫৯॥

**अन्वयः**—उदन्वता विषमः विधुः वडवानलवत् किम् उदरे एव न धृतः; (तथा) विभुः सः स्मरहरः अमुना उज्झितम् अपि अमुं विषवत् किं न बुभुजे॥৬০॥

उदर इति। उदन्वता समुद्रेण, विषमो मादृशविरहिजनानां सुदुःसहः, विधुश्चन्द्रः, वडवानलवत्, किम् उदरे एव स्वाभ्यन्तर एव, न धृतो न रक्षितः। तथात्वे वडवानलस्येवास्य प्रकाशाभावात् दाहो न स्यादिति भावः। चन्द्रस्य समुद्र एव जातत्वादियमुक्तिः सङ्गच्छते। तथा विभुः लोकरक्षाकारित्वात् प्रभुः, स प्रसिद्धः, स्मरहरः। विरहिपीडककामहन्ता शिवः, अमुना उदन्वता, उज्झितमपि जनयित्वा परित्यक्तमपि, अमुं विधुम्, विषवत् कालकूटगरलवत्, किं न बुभुजे, न भक्षितवान्। तथात्वेऽपि मादृशां पीडा न स्यादित्याशयः।

अत्र शीतापमयोः संसृष्टिः। ताभ्यां क्रमेण चन्द्रस्य दाहकत्वं यातनाकरत्वञ्च व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः। प्रसादो गुणः, वैदर्भी च रीतिः॥৬০॥

বাঙ্গালা—সমুদ্র এই দুঃসহ চন্দ্রটাকে বড়বানলের ন্যায় পেটের ভিতরেই রাখিয়া দিলেন না কেন এবং তিনি (জন্ম দান করিয়া) পরিত্যাগ করিয়া থাকিলেও, প্রভু সেই মহাদেব কালকূটবিষের ন্যায় ওটাকে ভক্ষণ করিয়া ফেলিলেন না কেন।৬০॥

विरहिवर्गवधव्यसनाकुलं कलय पापमशेषकलं विधुम्।
सुरनिपीतसुधाकमपापकं ग्रहविदो विपरीतकथाः कथम् ॥६२॥

---

**अन्वय:**—एक सुराशितम् अपि अमितम् आर्णवं विषं पुन: न अभूत्; (किन्तु) एष: विधु: विश्वदम् आर्णवं विषं सुरै: निपीय जनितक्षयम् अपि पुन: नवं (सत्) स्वयम् उदेति ॥६१॥

अशितमिति। एकेन न पुनर्बहुभिरिति भाव: सुरेण देवेन महादेवेन अशितं भक्षितमपि एकेनापि सुरेण अशितमित्यर्थ:, असितं कृष्णवर्णम्, आर्णवं समुद्रम्, विषं कालकूटनामकं गरलम्, पुनर्न अभूत् नोत्पन्नम्, महादेवेन कृत्स्नभक्षणेन निःशेषोपादित्याशय:। किन्तु एष प्रस्तुत:, विधुश्चन्द्र: चन्द्ररूपमिति तात्पर्यम्, विशदं शुभ्रवर्णम्, आर्णवं समुद्रम्, विषं दाहकत्वात् गरलम्, सुरैर्बहुभिरेव देवै: न पुनरेकेन साध्या बहुभिरित्यभिप्राय:, निपीय नि:शेषेण पीत्वा, जनित: समुत्पादितो क्षयो यस्य तत् तादृशमपि पुनर्नवं नूतनमपि पुनर्नवं सत्, स्वयमात्मनैव, उदेति उत्पद्यते। अत: कालकूटस्यासमुद्रविषापेक्षया चन्द्ररूपं समुद्रं विषं विरहिणां सर्वथा भयङ्करमिति भाव:।

अतएव चात्र व्यतिरेकालङ्कार:, एष विधुरिति समासोक्त्या "मुखं तव कुरङ्गाक्षि! सरोजमिव नान्यथा" इति दर्पणोदाहरणवत् निरङ्गं केवलरूपकं, जनितक्षयम् उदेतीति विरोधाभासश्चैतेषामङ्गाङ्गिभावेन सङ्कर:। प्रसादो गुण:, वैदर्भी च रीति: ॥६१॥

**বাঙ্গালা**—সমুদ্রজাত কৃষ্ণবর্ণ বিষকে (কালকূটবিষকে) কেবল একজন দেবতা (মহাদেব) পান করিয়াছিলেন; তথাপি সে বিষ আর উৎপন্ন হয় নাই; কিন্তু এই চন্দ্রস্বরূপ সমুদ্রজাত শুভ্রবর্ণ বিষকে বহুতর দেবতা নিঃশেষ ভাবে পান করিয়া, ক্ষয় করিয়া থাকেন; তথাপি এ চন্দ্রস্বরূপ বিষ আবার নূতন হইয়া নিজেই উৎপন্ন হয় ॥৬১॥

**अन्वय:**—अशेषकलं विरहि-वर्ग-वध-व्यसनाकुलं विधुं पापं कलय; (पुन:) सुर-निपीत-सुधाकं विधुम् अपापकं कलय। (किन्तु) ग्रहविद: कथं विपरीतकथा: (भवन्ति) ॥६२॥

विरहीति। अशेषा: समग्रा: कला यस्य तम् अशेषकलं पूर्णमण्डलमित्यर्थ:, तस्यैव कामोद्दीपकत्वमित्याशय:, अतएव विरहिवर्गस्य वियोगिस्त्रीपुरुषसमूहस्य वध एव व्यसनं कामजदोषस्तेन आकुलं व्यस्तम्, विधुं चन्द्रम्, पापं पापात्मानम् कलय अवेहि; कारणं विना विरहिवर्गवधादेवेति भाव:। पुन: सुरैर्देवै: निपीता सुधा अमृतम् अमृतमयांशो यस्य तम् विधुम्, अपापकम् अपापात्मानम् अपि तु पुण्यवन्तमेवेत्यर्थ:, कलय अवेहि, विरहिवर्गस्य अवधात् प्रत्युत सुरेभ्य: सुधादानाच्चेत्याशय:। किन्तु ग्रहविदो ग्रहशास्त्रज्ञा ज्योतिषिका:, विपरीता उक्तान्यथा कथा उक्तिर्येषां ते तादृशा: कथं भवन्ति। तथा च "अर्कोऽनिन्द्यकं सौराराः पापा: सौम्यास्तथापरे। पापयुक्तो बुध: पापो राहु: केतुश्च पापक:।" इति वचनात् ज्योतिषिकै: अर्द्धापेक्षया न्यूनमण्डलस्य चन्द्रस्य पापत्वं तदधिकमण्डलस्य च शुभत्वमुक्तम्; अत्र च उक्तयुक्त्या पूर्णमण्डलस्यैव चन्द्रस्य पापत्वं न्यूनमण्डलस्य तु पुण्यवत्त्वात् शुभत्वं सम्भवतीति ग्रहविदो विपरीतकथा एवेत्यभिप्राय:।

अत्र विधो: पापत्वं प्रति विरहीत्यादिपदस्यार्थ: अपापत्वं प्रति च सुरेत्यादिपदस्यार्थो हेतुरिति पदार्थहेतुककाव्यलिङ्गयो: परस्परनिरपेक्षतया संसृष्टि:; द्वितीयचतुर्थपादगतच्छेकानुप्रासयोश्च तस्यां प्रवेश:। तथा कथाया: प्राधान्येऽपि समासे गुणीभावाद्विधेयाविमर्शदोष:; स च 'विपरीतवद: कथम्' इति पाठेन समाधेय:। प्रसादो गुण:, वैदर्भी च रीति:।

सुधाकमपापकमित्युभयत्रापि "शेषाद्वा" इति कप्रत्यय: ॥६२॥

**বাঙ্গালা**—সখে! পূর্ণমণ্ডল চন্দ্র বিরহীদের হত্যাকার্য্যে ব্যস্ত থাকে বলিয়া,

**विरहिभिर्बहुमानमवापि यः स बहुलः खलु पक्ष इहाजनि ।**
**तदमितिः सकलैरपि यत्र तैर्व्यरचि सा च तिथिः किममीकृता ॥६३॥**
**स्व-रिपु-तीक्ष्ण-सुदर्शन-विभ्रमात् किमु विधुं ग्रसते स विधुन्तुदः ।**
**निपतितं वदने कथमन्यथा बलि-करम्भ-निभं निजमुज्झति ॥६४॥**

---

তাহাকেই বাস্তবিক পাপগ্রহ বলিয়া মনে কর ; আর দেবতারা যাহার অমৃত পান করিয়া থাকেন, সেই ক্ষীণচন্দ্রকেই বাস্তবিক শুভগ্রহ বলিয়া ধারণা কর। কিন্তু জ্যোতিষজ্ঞ পণ্ডিতেরা ইহার বিপরীত কথা বলেন কেন ।৬২।

**अन्वयः**—विरहिभिः यः बहुमानम् अवापि, सः पक्षः इह बहुलः खलु अजनि ; सकलैः अपि तैः यत्र तदमितिः व्यरचि, सा तिथिश्च अमीकृता किम् ॥६३॥

विरहिभिरिति । विरहिभिर्जनैः, यः पक्षः, बहुमानम् अत्यादरम्, अवापि प्रापितः, स्वल्पचन्द्रोदयेन कामपीडाया अपि स्वल्पत्वादिति भावः ; स कृष्णपक्षः, इह जगति, बहुलः बहुलनामा, खलु ध्रुवं अजनि जातः ; बहु बहुमानं लाति आदत्ते इति बहुल इति व्युत्पत्तेरिति भावः । तथा सकलैरपि तैर्विरहिभिः, यत्र तिथौ तस्य बहुमानस्य अमितिं अपरिमाणम् असीमत्वमित्यर्थः, व्यरचि कृता, सा अमावास्या तिथिश्च, अमीकृता किम् अमानाम्नी कृतैव योगार्थविद्भिः पण्डितैरिति शेषः । तथा च अमावास्यायां चन्द्रोदयाभावेन कामपीडाया अत्यन्ताभावात् न विद्यते मा मानं बहुमानस्य सीमा यस्यां सा अमेति व्युत्पत्तेरित्याशयः ।

अत्र खलु-किंशब्दयोरेव उत्प्रेक्षावाचकत्वात् वाच्योत्प्रेक्षयोरुभयोर्मिथो निरपेक्षतया संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"अमावास्या त्वमावस्या तथैवामावसीति च । अमावासी च दर्शः स्यात् अमा सूर्येन्दुसङ्गमः ।" इति शब्दरत्नावली । "बहुलः कृष्णपक्षेऽग्नौ स्त्रियां च बहुला गवि । एलायां नीलिकायाञ्च बहुला कृत्तिकासु च ; बहुलं प्राज्यनभसोः" इति विश्वः ।

अनमा अमा कृतेति अमीकृता, अभूततद्भावे च्विप्रत्ययः ॥६३॥

**বাঙ্গালা**—বিরহীরা যে পক্ষকে অত্যন্ত আদর করিত, নিশ্চয়ই জগতে সেই কৃষ্ণপক্ষই 'বহুল' নামে প্রসিদ্ধ হইয়াছে ; আর সকল বিরহীরাই যে তিথির অসীম আদর করিত, সেই তিথিকেই কি পণ্ডিতেরা অমানাম্নী করিয়াছিলেন ।৬৩।

**अन्वयः**—सः विधुन्तुदः स्व-रिपु-तीक्ष्ण-सुदर्शन-विभ्रमात् किमु विधुं ग्रसते । अन्यथा वदने निपतितं निजं बलि-करम्भ-निभं कथम् उज्झति ॥६४॥

स्वेति । सः प्रसिद्धः, विधुन्तुदो राहुः, स्वरिपोः शिरश्छेदकारित्वात् निजशत्रोर्नारायणस्य तीक्ष्णः सुधारो यः सुदर्शनसञ्ज्ञकं चक्रं तस्य विभ्रमात् भ्रान्तेः, किमु विधुं चन्द्रम्, ग्रसते कवलीकरोति । अन्यथा यथार्थचन्द्रज्ञानेनैव यदि ग्रसते तदा, वदने निपतितं ग्रासादेव मुखे प्रविष्टम्, निजं स्वकीयम्, बलिकरम्भं निजपूजोपहारीभूतदधिमिश्रितसक्तुसन्निभं तत्तुल्यम्, तं विधुमिति शेषः, कथमुज्झति ग्रसित्वापि त्यजति । तथा च राहुश्चन्द्रं विलोक्य सर्वो नारायणस्यैवेदं सुदर्शनचक्रम्, तदिदं भक्षयित्वा विनाशयामीति मत्वा प्रथमं चन्द्रं ग्रसते, परन्तु पूर्वकण्ठच्छेदवत् पुनरपि कण्ठच्छेदाशङ्कया तं त्यजतीत्याशयः ।

अत्र चन्द्रग्रसने राहोः सुदर्शनचक्रभ्रमात् भ्रान्तिमान्, वाच्या हेतूत्प्रेक्षा च, आर्थोपमा चैषां तेषामङ्गाङ्गिभावेन सङ्करः ; सोऽपि च विधुं विधुन्तुद इति लाटानुप्रासेन संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ।

स्मरसखौ रुचिभिः स्मरवैरिणा मखमृगस्य यथा दलितं शिरः।
सपदि सन्दधतुर्भिषजौ दिवः सखि! तथा तमसोऽपि करोतु कः॥६७॥
नल-विमस्तकितस्य रणे रिपोः मिलति किं न कबन्धगलेन वा।
मृतभिया भृशमुत्पततस्तमो-ग्रहशिरस्तदसृग्दृढबन्धनम्॥६८॥

---

राहुशिरश्छेदं वदन्ति, तेन ते ऋजुहृदय एव; कुटिलबुद्ध्या यदि अविष्यन्तदा तं विरहिमूर्द्धच्छेदमेव न्यरूपयिष्यन्निति भावार्थः, सरलार्थश्च।

अत्र चतुर्थचरणार्थं प्रति पूर्वचरणगतवाक्यार्थो हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः। तथा राहुशिरश्छेदो विरहिमूर्द्धच्छेद एवेति रूपकालङ्कारो व्यज्यत इति वस्तुनालङ्कारध्वनिः। प्रसादो गुणः, वैदर्भी च रीतिः॥६६॥

বাঙ্গালা—সরলবুদ্ধি ঐতিহাসিকগণ নারায়ণকে কেবল রাহুর মস্তকচ্ছেত্তা বলিয়া থাকেন; কিন্তু বিরহীদিগের মস্তকচ্ছেত্তা বলেন না। দেখ—যদি রাহুর উদরানল থাকিত, তাহা হইলে চন্দ্র কোথায় থাকিত।৬৬।

**अन्वयः**—(हे) सखि! रुचिभिः स्मरसखौ दिवः भिषजौ स्मरवैरिणा दलितं मखमृगस्य शिरः यथा सपदि सन्दधतुः तथा कः तमसः अपि करोतु॥६७॥

स्मरेति। (हे) सखि! रुचिभिः शरीरकान्तिभिः, स्मरसखौ कामदेवस्य सहायौ, दिवः स्वर्गस्य, भिषजौ चिकित्सकौ च अश्विनीकुमारौ, स्मरवैरिणा कामदेवस्य शत्रुणा महादेवेन, दलितं छिन्नम्, मखो यज्ञ एव मृगो हरिणस्तस्य हरिणरूपधारिणो यज्ञस्येत्यर्थः, शिरो मस्तकम्, यथा सपदि तत्क्षणात् केवलमौषधबलेन तात्पर्य्यम्, सन्दधतुः संयोजयामासतुः; तथा को जनः, तमसो नारायणकर्त्तृकच्छिन्नशिरस्कस्य राहोरपि, करोतु शिरःसन्धानं कुर्य्यात्, अपि तु कोऽपि नेत्यर्थः। यदि तथा कश्चिदकरिष्यत् तदा राहुः समग्रमेव चन्द्रं जीर्णं तथा तदुद्दीपनकारणं च मादृशामीदृशं कष्टं नाभविष्यदिति भावः।

अत्र श्रौतोपमालङ्कारः, प्रसादो गुणः, वैदर्भी च रीतिः।

"तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः" इत्यमरः।

पुरा किल हरिणरूपमाधाय पलायमानस्य दक्षयज्ञस्य मस्तकं महादेवोऽच्छिनदिति श्रीमद्भागवतवार्त्ता॥६७॥

বাঙ্গালা—সখি! কামশত্রু মহাদেব যখন হরিণরূপধারী যজ্ঞের মস্তকচ্ছেদন করিয়াছিলেন, তখন তুল্যসৌন্দর্য্যবশতঃ কামদেবের সখা অশ্বিনীকুমারদ্বয় যেমন তৎক্ষণাৎ সেই মস্তক সংযোজিত করিয়া দিয়াছিলেন; তেমন কোন্ ব্যক্তি রাহুরও মস্তকসংযোজন করিয়া দিবে ? ।৬৭।

**अन्वयः**—वा रणे नलविमस्तकितस्य मृतिभिया भृशम् उत्पततः रिपोः कबन्धगलेन (सह) तदसृग्दृढबन्धनं तमोग्रह-शिरः किं न मिलति॥६८॥

नलेति। वा अथवा, रणे युद्धे, नलेन विमस्तकितौ मस्तकशून्यीकृतस्य, मृतिभिया मरणातङ्केन, भृशमत्यन्तम्, उत्पततः ऊर्द्ध्वं गच्छतः, अतएव आकाशस्थराहुशिरसा मिलनसम्भव इति भावः; रिपोः शत्रोः, यत् कबन्धं स्पन्दमानं मस्तकशून्यकलेवरं तस्य गलेन कण्ठेन सह, तस्य कबन्धगलस्य असृजा रक्तेन दृढं बन्धनं संयोगो यस्य तादृशम्, अतएव मिलनस्य स्थायित्वमुक्तमित्याशयः; तमोग्रहस्य राहुग्रहस्य

**दहति कण्ठमयं खलु तेन किं गरुडवद्द्विजवासनयोज्झितः ।
प्रकृतिरस्य विधुन्तुद ! दाहिका मयि निरागसि का वद विप्रता ॥७१॥**

---

सखीति । हे सखि ! आख ! त्वं मदीरितैर्मद्वाक्यैः विधुन्तुदं राहुम्, वद । अहन्तु कामपीड़ाविक्लवादुर्बलत्वात् न शक्नोमीति भावः । किं वदामीत्याह—हे विधुन्तुद ! त्वम्, द्विजराजधिया ब्राह्मणश्रेष्ठज्ञानेन, किं विधुं चन्द्रम्, त्यजसि ग्रसित्वापि पुनर्जहासि । तन्न युक्तम् येन खल्वयं द्विजादिवत् चन्द्रनाममात्रेण द्विजराजः, न पुनर्वस्तुत एवेति यथेष्टमेनं ग्रसित्वा हन्तुमर्हसीति भावः । ब्राह्मणश्रेष्ठत्वाभावे प्रमाणं दर्शयति एष विधुः, यदि ईदृशो ब्राह्मणश्रेष्ठरूपो द्विजराजः स्यात्, तदा वारुणीं सुरां वरुणदेवतां पश्चिमां दिशञ्च, निषेव्य हि पीत्वैव गत्वैव च, पतितो महापातकित्वेन पातित्ययुक्तः अस्तं गतश्च सन्, किमु पुनः, दिवं स्वर्गम् आकाशञ्च, एति आगच्छति आगन्तुमर्हति ; कथमपि नेत्यर्थः, पतितत्वेन स्वर्गगमनानधिकारादिति भावः ।

अत्र सुरापश्चिमदिगादीनां भेदेऽपि वारुण्यादिपदश्लेषेणाभेदाध्यवसायादतिशयोक्तिः त्यागाभावं प्रति • पराद्धवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गञ्चानयोरङ्गाङ्गिभावेन सङ्करः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"वारुणी मदिरा ज्ञेया पश्चिमा दिक् च वारुणी" इत्यनेकार्थध्वनिमञ्जरी । "दिवं स्वर्गेऽन्तरीक्षे च" इति विश्वः ।

"ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । महान्ति पातकान्याहुः संसर्गश्चापि तैः सह ।" इति मनुना सुरापानस्य महापातकत्वाभिधानात् "पञ्चैतानि महापातकानि कृत्वा ब्राह्मणः सद्भिर्नाभिभाष्यो नानुयाज्यः अभिशस्तः सर्वकर्मविवर्जितः पतिततमो भवति" इत्यङ्गिरसा महापातकिनः पातित्यकथनात् "पतितो नरकं याति यावदाहूतसंप्लवम्" इति स्मृतेश्च पतितस्य स्वर्गगमनानधिकारो ज्ञेयः ॥७०॥

**বাঙ্গালা**—সখি ! তুমি আমার কথা অনুসারে রাহুকে বল যে, রাহু ! তুমি চন্দ্রকে (গ্রাস করিয়া) আবার কি ব্রাহ্মণশ্রেষ্ঠ মনে করিয়া পরিত্যাগ কর ! (তাহা কখনও উচিত নহে ; কেন না) এই চন্দ্র যদি ব্রাহ্মণশ্রেষ্ঠ হইত, তাহা হইলে বারুণী সেবন করিয়া, পতিত হইয়া, আবার কি স্বর্গে যাইতে পারে ? ॥৭০॥

**अन्वयः**—अयं खलु कण्ठं दहति, तेन गरुड़वत् द्विजवासनया किम् उज्झितः । (हे) विधुन्तुद ! अस्य प्रकृतिः दाहिका ; निरागसि मयि का विप्रता वद ॥७१॥

ननु वारुणीसेवनेन पातित्यमेव जायते न पुनर्ब्राह्मणत्वलोपः । तेन "ब्राह्मणो न च हन्तव्यः" इति निषेधात् कथमेनं हन्मीत्याह दहतीति । अयं चन्द्रः खलु, कण्ठं दहति गिलितो गलं ज्वलयति ; तेन हेतुना, गरुड़वत् वैनतेयेनेव, त्वया द्विजवासनया ब्राह्मणज्ञानेन, किम् उज्झितः, अस्त एव किं परित्यक्तः । वस्तुतो ब्राह्मणत्वाभावान्न परित्याज्य इति भावः । तर्हि कथं कण्ठदाह इत्याह हे विधुन्तुद ! राहो ! अस्य चन्द्रस्य, प्रकृतिर्दाहिका स्वभाव एव दाहकः । अग्निवत् स्वभावत एव कण्ठं दहति, न पुनर्ब्राह्मणत्वादित्याशयः । अथ ब्राह्मणत्वादेव दाहो भविष्यतीत्याह निरागसि निरपराधायां मयि, का विप्रता तीव्रदाहकरणात् कथं ब्राह्मणत्वं भवितुमर्हतीति त्वं वद । तथा च दयैव नाम ब्राह्मणस्वभावः । अयन्तु दयां न करोत्येव, प्रत्युत निरपराधामेव मां दहतीति नायं ब्राह्मणो भवितुमर्हतीति निःसन्देहमेवायं हन्तव्य इत्यभिप्रायः ।

अत्र कण्ठदाहासम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिः श्रौतोपमा चेत्यनयोर्मिथो निरपेक्षतया संसृष्टिः ; प्रसादो गुणः, वैदर्भी च रीतिः ।

सकलया कलया किल दंष्ट्रया समवधाय यमाय विनिर्म्मितः।
विरहिणीगण-चर्व्वणसाधनं विधुरतो द्विजराज इति स्मृतः (१) ॥७२॥
स्मरमुखं हरनेत्रहुताशनात् ज्वलदिदं चकृषे विधिना विधुः।
मधुविधेन वियोगिवधागसा मृगमिषादयं कालिकयाङ्कितः ॥७३॥

---

"वासनं वसने वीटासने स्थाने च धूपने" इति विश्वः।

पुरा किल निषादपुरीं निषादान् भक्षयता गरुडेन निषादीसंसर्गी पतितः कश्चिद् ब्राह्मणो निषाद-भ्रमेण भक्ष्यमाणः कण्ठं दहन् परित्यक्त इति महाभारतवार्त्ता ॥७१॥

বাঙ্গালা—রাহু! চন্দ্র কণ্ঠ দগ্ধ করে; সেই জন্যই কি গরুড়ের ন্যায় তুমি উহাকে ব্রহ্মজ্ঞানে পরিত্যাগ করিয়া থাক? (দেখ) উহার স্বভাবই দাহজনক। (না হইলে) বল দেখি—আমি নিরপরাধ; তথাপি আমার প্রতি কেমন ব্রাহ্মণতা ফলাইতেছে ॥৭১॥

अन्वयः—(विधात्रा) सकलया कलया दंष्ट्रया समवधाय विरहिणीगण-चर्व्वण-साधनं विधुः यमाय किल विनिर्म्मितः, अतः द्विजराजः इति स्मृतः ॥७२॥

ननु सत्यं विप्रत्वमेव यदि न स्यात्तर्हि कथं द्विजराज इति नामोपपद्यत इत्याह सकलयेति। सकलया समग्रया, कलया भागेन भागरूपया, दंष्ट्रया दन्तेन, षोडशसंख्यककलारूपैः षोडशदन्तैरित्यर्थः, समवधाय संयोज्य, विरहिणीनां स्त्रीणां गणस्य यत् चर्व्वणं तस्य साधनं कारणीभूतः, विधुश्चन्द्रः, यमाय यमार्थम्, किल यस्मात्, विनिर्म्मितः कृतः, विधात्रेति शेषः; अतो हेतोः, द्विजेषु दन्तेषु मध्ये राजा इति व्युत्पत्त्या द्विजराज इति स्मृतो लोकैः, न पुनर्द्विजेषु ब्राह्मणेषु राजेति व्युत्पत्त्या। तेन हि राहो! यथेष्टमेनं हन्तुमर्हसीति भावः।

अत्र कलया कलारूपया दंष्ट्रयेति निरङ्गं केवलरूपकम्, विधात्रा यमाय विधोर्निर्म्माणासम्बन्धेऽपि तत्-सम्बन्धाभिधानादतिशयोक्तिः, तथा ब्राह्मणरूपार्थे प्रसिद्धस्य द्विजराजपदस्य दन्तरूपार्थे योजनात् श्लेषवक्रोक्तिश्च तेषामङ्गाङ्गिभावेन सङ्करः; सोऽपि च कलया कलयेति प्रथमपादगतयमकेन संसृज्यते। तथा मनोयोगार्थवाच-कस्य अवपूर्वधाधातोरत्र संयोगार्थे प्रयोगात् "गौरिव कर्णमात्रे" इति दर्पणोदाहरणवत् अवाचकत्वदोषः, विनिर्म्मित इत्यस्य कर्त्तृतया विधात्रेति पदस्यानभिधानात् न्यूनपदत्वदोषश्च; तयोः समाधानाय 'प्रघटयन् यमनाय विधिर्व्यधात्' इति द्वितीयचरणम् विधुरित्यत्र विधुमिति च पठनीयम्। प्रसादो गुणः, वैदर्भी च रीतिः।

"दन्तविप्राण्डजा द्विजाः" इत्यमरः। कलया दंष्ट्रया इत्युभयमपि जातावेकवचनम् ॥७२॥

বাঙ্গালা—বিধাতা, সমস্ত কলারূপ দন্তসমূহ দ্বারা সংযুক্ত করিয়া, বিরহিণীগণকে চর্ব্বণ করিবার উপায়রূপে চন্দ্রকে যমের জন্য নির্ম্মাণ করিয়াছেন; এই জন্যই লোকে চন্দ্রকে দ্বিজরাজ বলিয়া মনে করে ॥৭২॥

अन्वयः—विधिना हरनेत्रहुताशनात् ज्वलत् इदं स्मरमुखं विधुः चकृषे; अथ मधुविधेन वियोगि-वधागसा मृग-मिषात् कालिकया अङ्कितः (इव वर्त्तते) ॥७३॥

स्मरेति। विधिना ब्रह्मणा, हरनेत्रहुताशनात्, ज्वलत् दग्धीभवत्, इदं गगने दृश्यमानम्, स्मरमुखं काम-देववदनं तद्रूप इत्यर्थः, विधुश्चन्द्र चकृषे आकृष्टः आकृष्य रचितः; गुरुतरपरिश्रमनिर्म्मितवस्तुत्वादिति भावः।

---

(१) इति स्मृतिः।

इति विधोर्विविधोक्ति-विगर्हणं व्यवसितस्य वृथेति विमृश्य सा ।
अतितरां दधती विरहज्वरं हृदयभाजमुपालभत स्मरम् ॥७४॥
हृदयमाश्रयसे यदि मामकं ज्वलयसीत्थमनङ्ग ! तदेव किम् ।
स्वयमपि क्षण-दग्ध-निजेन्धनः क्व भवितासि हताश ! हुताशवत् ॥७५॥

---

एतेन ज्वलद्रूपत्वादेव दहतीति सूचितम् । अथ स्मरमुखे कलङ्को नासीत् अत्र कथं कलङ्क इत्याह अथ आकृष्य रक्षणानन्तरम्, बहुविधेन नानाप्रकारेण, वियोगिनां जनानां वधेन यत् आगः अपराधस्तेन हेतुना, शशमिषात् शशकलङ्कव्यापनच्छलात्, कालिकया श्यामिकया अङ्कितश्चिह्नित इव वर्त्तते । अन्योऽप्यपराधी कालिकया चिह्न्यते ।

अत्र स्मरमुखं विधुरिति निरङ्गं केवलरूपकम्, विधेरागःवर्णनासम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिः, सापह्नवा प्रतीयमाना क्रियोत्प्रेक्षा, द्वितीयतृतीयपादयोश्छेकानुप्रासश्चेत्येतेषां संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥७३॥

বাঙ্গালা—কামদেবের মুখখানি মহাদেবের নয়নানলে দগ্ধ হইতেছিল ; তখন ব্রহ্মা উহা আকর্ষণ করিয়া আনিয়া রক্ষা করিয়াছিলেন ; তাহাই ঐ চন্দ্র। তাহার পর, নানাপ্রকার বিরহিবধের অপরাধে ব্রহ্মাই যেন শশচিহ্নচ্ছলে কালী দিয়া উহাকে চিহ্নিত করিয়া রাখিয়াছেন ॥৭৩॥

**अन्वयः**—अतितरां विरहज्वरं दधती सा व्यवसितस्य विधोः इति विविधोक्ति-विगर्हणं वृथा इति विमृश्य हृदयभाजं स्मरम् उपालभत ॥७४॥

इतीति । अतितरामत्यन्तम्, विरहज्वरं वियोगसन्तापम्, दधती सा दमयन्ती, व्यवसितस्य दूरवर्त्तिनः, विधोश्चन्द्रस्य, इति इत्थम्, विविधाभिरुक्तिभिः विगर्हणं निन्दा, वृथा निष्फला, व्यवहितत्वेन श्रवणाभावात् तत्-कर्त्तृकसन्तापनिवृत्त्यसम्भवादिति भावः ; इति विमृश्य विविच्य, हृदयभाजं हृदयमध्यवर्त्तिनम्, अतएव सन्नि-हितमित्याशयः, स्मरं कामम्, उपालभत अनिन्दत् ; तत्र श्रवणादेव तस्य निवृत्तिसम्भवादित्यभिप्रायः ।

अत्र वृथात्वं प्रति व्यवहितपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, प्रथमे पादे छेकानुप्रासः, द्विती-यार्द्धे चान्त्यानुप्रास इति संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥७४॥

বাঙ্গালা—অত্যন্তবিরহসন্তাপশালিনী দময়ন্তী, দূরবর্ত্তী চন্দ্রকে এই রূপ নানা কথায় নিন্দা করা নিষ্ফল ইহা বিবেচনা করিয়া হৃদয়বর্ত্তী কামকেই নিন্দা করিতে লাগিলেন ॥৭৪॥

**अन्वयः**—(हे) अनङ्ग ! यदि मामकं हृदयम् आश्रयसे, (तर्हि) तत् एव इत्थं किं ज्वलयसि । (हे) हताश ! हुताशवत् क्षण-दग्ध-निजेन्धनः (सन्) स्वयम् अपि क्व भवितासि ॥७५॥

हृतः पञ्चभिः श्लोकैः कामं निन्दति हृदयमिति । हे अनङ्ग ! काम ! यदि मामकं मदीयम्, हृद-यम्, आश्रयसे अवस्थानाय अवलम्बसे ; तर्हि तदेव हृदयम्, इत्थमेवम्प्रकारं स्वातिशयम्, किं ज्वलयसि दहसि । तेन को दोष इत्याह हे हताश ! विनष्टस्थायित्वप्रत्याश ! काम ! हुताशवत् अग्निरिव, क्षणेन दग्धं निजं स्वकीयम् इन्धनं दाह्यं येन स तादृशः सन्, त्वं स्वयमपि, क्व कस्मिन् स्थाने, भवितासि स्थास्यसि ; अपितु दाह्याभावात् कुत्रापि न, सर्वथा अग्निवदेव विनङ्क्ष्यसीत्यर्थः । अतो दाहमकृत्वैव मम हृदये वसेति भावः ।

अत्र श्रौतोपमामङ्गाङ्गचतुर्थचरणगतेन छेकानुप्रासेन संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ।

पुरभिदा गमितस्त्वमदृश्यतां त्रिनयनत्वपरिप्लुतिशङ्कया ।
स्मर ! निरैक्ष्यत कस्यचनापि न त्वयि किमक्षिगते नयनैस्त्रिभिः ॥७६॥
सहचरोऽसि रतेरिति विश्रुतिस्त्वयि वसत्यपि मे न रतिः कुतः ।
अथ न सम्प्रति सङ्गतिरस्ति वामनुमृता न भवन्तमियं किल ॥७७॥

---

मम इदमिति मामकम्, "तवकममकावेकवचने" इत्यणि ममकादेशः। भवितासीति विद्यमानार्थस्य अस् धातोः लुट्यां मध्यमपुरुषैकवचने "अस्तेर्भूः रसार्वधातुके" इति भूरादेशः ॥७५॥

বাঙ্গালা—হে কন্দর্প! তুমি যদি আমার হৃদয়ে আশ্রয় করিয়া থাক, তবে তাহাই এইভাবে দগ্ধ করিতেছ কেন?। হে হতাশ! তুমি অগ্নির ন্যায় ক্ষণকালের মধ্যেই নিজ দাহ্যকে দগ্ধ করিয়া, পরে আপনিই বা কোথায় থাকিবে? ।৭৫॥

**अन्वयः**—(हे) स्मर! त्वं पुरभिदा त्रिनयनत्व-परिप्लुति-शङ्कया अदृश्यतां गमितः। (येन) त्वयि अक्षिगते (सति) कस्यचन अपि किं त्रिभिः नयनैः न निरैक्ष्यत? ॥७६॥

पुरेति। हे स्मर! कामदेव! त्वं पुरभिदा त्रिपुरध्वंसकारिणा महादेवेन, त्रिनयनत्वस्य निजविलोचनत्रयस्य या परिप्लुतिर्विच्युतिस्तस्य शङ्कया भयेन मम प्रसिद्धं त्रिनयनत्वं नष्टं भविष्यतीत्याशङ्क्येत्यर्थः; अदृश्यतां चाक्षुषप्रत्यक्षायोग्यत्वम्, गमितः शरीरभस्मीकरणेन प्रापितः। ननु कथं तस्य त्रिनयनत्वपरिप्लुतिशङ्केत्याह येन त्वयि कामे, अक्षिगते प्रत्यक्षतां प्राप्ते सति मनसि तदाविर्भावे सतीत्यर्थः, कस्यचनापि कस्यचिदपि जनस्य, किं त्रिभिः स्वाभाविकं द्वे शास्त्रज्ञानरूपञ्च कामिति मिलित्वा त्रिभिरित्यर्थः नयनैः, न निरैक्ष्यत निर्गतैर्न भूतम् आत्मनः सर्वलिसैर्न जातम्, अपितु सर्वस्यैवेत्यर्थः। तथा च त्वयि प्रत्यक्षे सति सर्व एव लोकः कुरूपमपि सुरूपं पश्यति अयोग्यमपि सर्वथा योग्यमवलोकते इति स्वाभाविकनयनस्खलनम्, कुलं धर्मं लोकनिन्दाञ्च न गणयतीति शास्त्रज्ञाननयनस्खलनञ्च। तत्र च ब्रह्मेन्द्रादय एव दृष्टान्ता इति भावः। इत्थं यथाश्रुतार्थपरतयैवोपपत्तौ नान्या कष्टकल्पना सुधीभिश्चिन्तनीया।

अत्र त्रिनयत्वपरिप्लुतिशङ्कयैवेति प्रतीयमाना हेतूत्प्रेक्षा, पूर्वार्द्धं प्रति परार्द्धवाक्यार्थस्य हेतुत्वात् काव्यलिङ्गञ्च अर्थापत्तिश्चेत्येतेषां मिथो निरपेक्षतया संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः।

निरैक्ष्यतेति "ईक्ष गतौ" इत्यस्य भावे लङ्यां प्रयोगः ॥७६॥

বাঙ্গালা—হে কামদেব! মহাদেব তাঁহার তিনটি নয়ন নষ্ট হইবার আশঙ্কাতেই তোমাকে অদৃশ্য করিয়া ফেলিয়াছেন। যে হেতু, তুমি প্রত্যক্ষগত হইলে, কোন্ ব্যক্তির তিনটি নয়ন নষ্ট না হইয়াছিল? ।৭৬।

**अन्वयः**—(हे काम! त्वं) रतेः सहचरः असि इति विश्रुतिः, (अथ च) त्वयि वसति (सति) अपि मे कुतः न रतिः?। अथ सम्प्रति वां सङ्गतिः न अस्ति। इयं किल भवन्तं न अनुमृता ॥७७॥

सहेति। हे काम! त्वं रतेः स्वभार्याया एव रतेः रमणस्य, सहचर एकत्रावस्थायी असि, इति विश्रुतिर्लोकप्रसिद्धिः, दम्पतित्वात् प्रयोज्यप्रयोजकभावाच्चेति भावः। अथ च त्वयि कामे, वसत्यपि मयि विद्यमाने सत्यपि, मे मम कुतः कस्माद्धेतोः, न सा रतौ रमणं वर्तते; सहचरयोरेकस्यावस्थाने अपरस्याप्यवस्थानस्यावश्यकत्वादित्याशयः। स्वयमेव समाधत्ते अथेति पक्षान्तरे। सम्प्रति वां युवयो रतिकामयोः, सङ्गतिस्तत् साहचर्य्यम्, नास्ति। यतः, इयं रतिः किल, भवन्तं त्वाम्, न अनु लक्ष्यीकृत्य, मृता। अतो विभिन्नलोकवर्त्तित्वात् युवयोर्न सङ्गतिः, अतएव च मे न रतिरित्यभिप्रायः।

रतिवियुक्तमनात्मपरज्ञ ! किं त्वमपि मामिव तापितवानसि ।
कथमतापभृतस्तव सङ्गमात् इतरथा हृदयं मम दह्यति ॥३८॥
अनुममार न मार ! कथं नु सा रतिरतिप्रथितापि पतिव्रता ।
विरहिणी-गण-घातन-पातकी दयितयापि तयासि किमुज्झितः ॥३९॥

---

अत्र कामभार्य्योरमयोर्भेदेऽपि रतिशब्दस्य श्लेषाभेदाध्यवसायादतिशयोक्तिः, कामवासरूपे हेतौ सत्यपि रति-रूपतत्कार्य्याभावात् विशेषोक्तिः, तृतीयचरणार्थं प्रति चतुर्थचरणगतवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्य-लिङ्गञ्चेति तेषां मिथो निरपेक्षतया संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"रतिः स्त्री स्मरदारेषु रागे सुरतगुह्ययोः" इति मेदिनी ॥३७॥

বাঙ্গালা—হে কাম ! তুমি রতির সহচর ইহা জগতে প্রসিদ্ধি রহিয়াছে। অথচ তুমি আমাতে বাস করিতেছ, তথাপি আমার রতি নাই কেন ? অথবা এখন তোমাদের সে সাহচর্য্য নাই। কেন না, তুমি মরিলে পর, রতিদেবী অনুমৃতা হন নাই ॥৩৭॥

अन्वयः—(हे) अनात्मपरज्ञ ! (रतिवियुक्ता) । माम् इव रतिवियुक्तं त्वम् अपि किं तापितवान् असि ? इतरथा अतापभृतः तव सङ्गमात् मम हृदयं कथं दह्यते ॥३८॥

रतीति । आत्मानं परञ्च जानातीति आत्मपरज्ञः न आत्मपरज्ञः अनात्मपरज्ञस्तत्सम्बोधनम् । परस्येव आत्मनोऽपि तापितत्वात् हि नितान्तनिर्बोध । इति भावः । रतिवियुक्तां सुरतविहीनां मामिव, रतिवियुक्तं स्वप्रियाविहीनं सुरतविहीनञ्च, त्वम् आत्मानमपि, किं तापितवान् उष्णीकृतवानसि ? इतरथा अन्यथा, अतापभृतः असन्तापशालिनस्तव, सङ्गमात् संसर्गात्, मम हृदयं कर्म्म, कथं दह्यते दग्धीभवति । अतस्तव सङ्गमेन मम तापोत्पत्तेः त्वमात्मानमपि सन्तापितवानसीति प्रतीयत इत्याशयः ।

अतएवात्र अनुमानमलङ्कारः, श्रौतोपमा, पूर्ववदतिशयोक्तिश्चेत्यं तेषामङ्गाङ्गिभावेन सङ्करः । प्रसादो गुणः, वैदर्भी च रीतिः ।

दह्यत इति कर्म्मकर्त्तरि प्रयोगः ॥३८॥

বাঙ্গালা—হে আত্মপরজ্ঞানহীন ! রতিশূন্য আমার ন্যায় রতিশূন্য নিজেকেও কি তুমি সন্তাপিত করিয়াছ ? না হইলে, তোমাতে তাপ না থাকিলে, তোমার সংস্রবে আমার হৃদয় দগ্ধ হইবে কেন ॥৩৮॥

अन्वयः—नु मार ! अतिप्रथिता पतिव्रता अपि सा रतिः कथं न अनुममार । विरहिणी-गण-घातन-पातकी (त्वं) दयितया अपि तया किम् उज्झितः असि ॥३९॥

अन्विति । नुशब्दः सम्बोधने । हे मार ! काम ! अतिप्रथिता पतिव्रतापि सा रतिस्तव भार्य्या, कथं न अनुममार भवन्तमनुमृता । "मृते म्रियेत या पत्यौ साध्वी सा या पतिव्रता" इति स्मरणात् पत्यौ मृते पतिव्रतायाः अनुमरणस्य सहमरणस्य वा आवश्यकत्वमिति भावः । स्वयमेव तदभावं सम्भावयति विरहिणीति । विरहिणीनां स्त्रीणां गणस्य घातने मारणेन पातकमस्यास्तीति स तादृशस्त्वम्, दयितयापि प्रिययापि, तया रत्या, किम् उज्झितः परित्यक्तः, असि ; "पापदः सम्प्रतीक्ष्यो हि महापातकदूषितः" इति स्मरणात् विरहिणीगणवध ... महापातक-तुल्यत्वादित्याशयः ।

अत्र उज्झनं प्रति तृतीयपादरूपं कपदार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम् ... वाक्यार्थ-

**सुगत एव विजित्य जितेन्द्रियः स्त्वदुरुकीर्त्तितनुं यदनाशयत् (१) ।**
**तव तनूमवशिष्टवतीं ततः समिति भूतमयीमहरद्धरः ॥८०॥**
**फलमलभ्यत यत् कुसुमैस्त्वया विषमनेत्रमनङ्ग ! विगृह्णता ।**
**अलभ भीतिरवाप्तभया ततः न कुसुमैरपि विग्रहमिच्छति ॥८१॥**

त्वात् वाच्या क्रियोत्प्रेक्षा, तृतीयपादं विना सर्वत्र च्छेकानुप्रासश्चेति मिथो निरपेक्षतया सर्वेषां संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"मदनो मन्मथो मारः" इत्यमरः ॥७९॥

**বাঙ্গালা**—হে কামদেব ! সে রতিদেবী অত্যন্তপ্রসিদ্ধ পতিব্রতা হইয়াও তোমার অনুমরণ করিবেন না কেন ? তবে তুমি, শত শত বিরহিণী রমণীকে বধ করায় মহাপাতকী হইয়াছ বলিয়া সেই প্রিয়তমাকর্ত্তৃকও কি পরিত্যক্ত হইয়াছ ? ॥৭৯॥

**अन्वयः**—जितेन्द्रियः सुगतः एव विजित्य तव त्वदुरु-कीर्त्ति-तनुं यत् अनाशयत् ततः जितेन्द्रियः हरः समिति अवशिष्टवतीं भूतमयीं तव तनूम् अहरत् ॥८०॥

सुगत इति । जितेन्द्रियः सुगतो बुद्ध एव, विजित्य त्वां पराभूय, तव या प्रसिद्धा उर्वी महती कीर्त्ति-र्गर्वविजयजनिता सुख्यातिरेव तनुः अनायासेन सर्वैः प्रत्यक्षीकरणात् शरीरं ताम्, यत् अनाशयत् तव प्रभावपतिबन्धनेनैव नाशितवान्, ततः परम्, जितेन्द्रियो हरः शिव, समिति युद्धे पार्वतीसमक्षं त्वत्कृतकपट्प्रहारकाले इत्यर्थः, अवशिष्टवतीं कीर्त्तिं तन्वा अवशेषभावेन स्थिताम्, भूतमयीं क्षित्यादिपञ्चभूतारब्धाम्, तव तनुं शरीरम्, अहरत् दाहेनानाशयत् । मादृशेषु इन्द्रियपरतन्त्रेष्वेव जनेषु तव यावान् प्रभावः, न पुनर्जितेन्द्रियेष्विति तुच्छ एव त्वमिति भावः ।

अत्र कीर्त्तितनुमिति निरङ्गं केवलरूपकमलङ्कारः । तनुशब्दस्य विकल्पत्वेऽपि उद्देश्यप्रतिनिर्द्देश्यप्रविभक्तत्वात् कथितपदतादोषः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"भग्नं मारबलं येन" इत्यादिभिर्बुद्धकर्तृकः कामविजयः प्रसिद्धः । पूर्वकल्पीयबुद्धाभिप्रायेणाभिधानान्न इतिहासपौर्वापर्यविपर्ययदोषः ।

अवशिष्टवतीमिति क्तवतुः ॥८०॥

**বাঙ্গালা**—জিতেন্দ্রিয় বুদ্ধই তোমাকে জয় করিয়া, তোমার সেই বিশাল কীর্ত্তিময় দেহ যে, নাশ করিয়াছিলেন ; তাহার পরে আবার জিতেন্দ্রিয় মহাদেব যুদ্ধে তোমার অবশিষ্ট পাঞ্চভৌতিক দেহটাকেও ধ্বংস করিয়া ফেলিয়াছেন ॥৮০॥

**अन्वयः**—(हे) अनङ्ग ! त्वया कुसुमैः विषमनेत्रं विगृह्णता (सता) यत् फलम् अलभ्यत ; अहह ! ततः अवाप्तभया (इव) भीतिः कुसुमैः अपि विग्रहं न इच्छति ॥८१॥

फलमिति । हे अनङ्ग ! काम ! त्वया कुसुमैः कुसुमरूपास्त्रैः, विषमे अयुग्मे नेत्रे लोचने यस्य तं विषमनेत्रं त्रिलोचनम्, विगृह्णता युध्यमानेन प्रहरता सतेत्यर्थः, यत् आत्मविनाशरूपं फलम्, अलभ्यत प्राप्तम् । अहहेत्यद्भुते खेदे वा । ततः फलात् तत्फलदर्शनादित्यर्थः, अवाप्तं लब्धं भयं यया सा इव भीतिः "पुष्पैरपि न योद्धव्यं किं पुनर्निशितैः शरैः" इत्यं नीतिशास्त्रम्, कुसुमैः पुष्पैरपि करणैः, विग्रहं युद्धम्, न इच्छति नोपदिशतीति तात्पर्य्यम्, अन्यत्रापि तादृशफलसम्भवादिति भावः ।

अत्र अवाप्तभयेवेति प्रतीयमाना क्रियोत्प्रेक्षालङ्कारः । तथा पूर्णाङ्ग एव युध्यते, त्वं पुनरनङ्ग एव सन् यत्

(१) त्वदुरुकीर्त्तितनुं ।

अपि धयन्नितरामरवत् सुधां त्रिनयनात् कथमाप्थ तां दशाम्।
अथ रतेरधरस्य रसादरात् अमृतमात्तघृणः खलु नापिबम् (१) ॥८२॥
भुवनमोहनजेन किमेनसा तव परेत! बभूव पिशाचता।
यदधुना विरहाधिमलीमसाम् अभिभवन् भ्रमसि स्मर! मद्विधाम् ॥८३॥

विषमनेत्रं दुर्द्धर्षं युद्धनायकं विगृह्णीतवानसि, तत एव दारुणं फलमवाप्तवानसीति त्वं नितान्तनिर्बोध एवेति वस्तुना वस्तुध्वनिः। प्रसादो गुणः, वैदर्भी च रीतिः।

"नेत्री नेतरि नेत्रञ्च गुणे मूल्ये विलोचने" इति त्रिकाण्डशेषः ॥८१॥

বাঙ্গালা --কামদেব! তুমি পুষ্প দ্বারা মহাদেবকে প্রহার করিয়া, যে ফল পাইয়াছিলে, হায়! তাহা হইতে ভয় পাইয়াই যেন নীতিশাস্ত্র পুষ্প দ্বারাও যুদ্ধ করা ইচ্ছা করে না ॥৮১॥

**অন্বয়ঃ**—(হে কাম! त्वम्) इतरामरवत् सुधां धयन् अपि त्रिनयनात् तां दशां कथम् आप्थ। रतेः अधरस्य रसादरात् आत्तघृणः (अहम्) अमृतं न अपिबं खलु (इति भण) ॥८२॥

अपीति। हे काम! त्वम् इतरामरवत् इन्द्राद्यन्यदेववत्, सुधाममृतम्, धयन्नपि पिबन्नपि, त्रिनयनात् महादेवात्, तां मृत्युरूपाम्, दशामवस्थाम्, कथं केन प्रकारेण, आप्थ प्राप्तवानसि। अमृतपानेनामरत्वे सति मरणं नोपपद्यत इति भावः। अत्र स्वयमेव सिद्धान्तं विभाव्य तं वक्तुमुपदिशति भणेति। रतेः स्वभार्यायाः, अधरस्य ओष्ठस्य, रसे माधुर्ये आदरात् आग्रहातिशयात्, आत्ता धृता घृणा अमृते जुगुप्सा येन स आत्तघृणः अहम्, अमृतं, न अपिबं न पीतवानस्मि खलु, इति भण पूर्वप्रश्ने उत्तरं ब्रूहि। तथा च अमृतपानाभावेन अमरत्वाभावान्मम मरणं जातमित्याशयः।

अत्र अमृतापेक्षया रतेरधरस्य आधिक्यवर्णनात् व्यतिरेकालङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः।

धयन्निति "धेट् पा पाने" इति धेट्धातोः शत्रन्तं रूपम्। आप्थेति आप्नोतेः परोक्षायां थलि प्रयोगः ॥८२॥

বাঙ্গা.।—হে কামদেব! তুমি অন্য দেবতার ন্যায় অমৃত পান করিয়াও, মহাদেব হইতে সে মৃত্যুদশা প্রাপ্ত হইলে কেন? তবে ইহা বল যে আমি রতিদেবীর ওষ্ঠরসের মাধুর্যে বিশেষ আদরবশতঃ ঘৃণা করিয়া অমৃত পান করি নাই ॥৮২॥

**অন্বয়ঃ**—(হে) परेत! स्मर! भुवनमोहनजेन एनसा तव किं पिशाचता बभूव। यत् अधुना विरहाधिमलीमसां मद्विधाम् अभिभवन् भ्रमसि ॥८३॥

भुवनेति। हे परेत! मृत! स्मर! काम! भुवनानां त्रिभुवनस्थजनानां मोहनात् स्वाविर्भावेन मोहजननात् जायत इति तेन, एनसा पापेन, तव, किं पिशाचता बभूव। ननु कथमियं सम्भावनेत्याह—यद् यस्मात्कारणात्, अधुना विरहेण य आधिर्मनोव्यथा तेन मलीमसां स्नानमार्जनाद्यभावात् मलिनदेहाम्, मद्विधां मादृशीं स्त्रियम्, अभिभवन् स्वावेशेनाकुलीकुर्वन्, भ्रमसि भुवनेषु विचरसि। अपरोऽपि पिशाच एवं कुरुते।

अत्र किंशब्दस्य उत्प्रेक्षावाचकत्वात् पिशाचत्वजात्युत्प्रेक्षालङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः।

"परेतो व्यन्तरे भूतः स्यात् मृते भूताकारे पुमान्" इति मेदिनी ॥८३॥

বাঙ্গালা—হে মৃত! কামদেব! ত্রিভুবনের সমস্ত লোককে মুগ্ধ করার পাপে

(१) नापिबः।

मम ददासि न मृत्युमपि स्मर ! स्खलति ते कृपया न धनुः करात् ।
अथ मृतोऽसि मृतेन च मुच्यते न किल मुष्टिरुरीकृतबन्धनः ॥८४॥
द्रुगुपहत्यपमृत्युविरूपताः शमयतेऽपर-निर्ज्जर-सेविता ।
अतिशयान्ध्य-वपुःक्षति-पाण्डुताः स्मर ! भवन्ति भवन्तमुपासितुः ॥८५॥

---

তোমার কপোলচন্দ্র কাম্প্যাছিল। যে হেতু, এখন তুমি বিরহদুঃখে মলিনা আমার মত রমণীদিগকে আকুল করিয়া ভ্রমণ করিতেছ ।৮৩।

**অন্বয়:**—(हे) स्मर ! मृत्युम् अपि न ददासि बत, कृपया ते करात् धनुः न स्खलति । अथ मृतः असि, मृतेन च उरीकृतबन्धनः मुष्टिः न मुच्यते किल ॥८४॥

ममेति । हे स्मर ! काम ! त्वं मम मृत्युमपि न ददासि ; तथात्वे पीडाया निवृत्तिरिति भावः । बत खेदे । तथा कृपया ते तव करात् हस्तात्, धनुः न स्खलति न पतति । तथात्वेऽपि प्रहारसम्भवेन मम वेदनाया अप्यसम्भव इत्याशयः । अथ अथवा, त्वं मृतोऽसि, ततश्च मृतेन अनेन, उरीकृतं स्वीकृतं विहितं बन्धनमाकुञ्चनं यस्मिन् स तादृशः, मुष्टिः न मुच्यते न परित्यज्यते । किलेति लोकवार्त्तायाम् । अतएव तव करात् धनुःस्खलन-मप्यसम्भवमित्यभिप्रायः ।

अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥८४॥

**বাঙ্গালা**—হে কামদেব ! হায় তুমি আমার মৃত্যুও জন্মাইতেছ না এবং দয়াবশতঃ তোমার হাত হইতে ধনুখানাও পড়িয়া যাইতেছে না। অথবা তুমি মরিয়া গিয়াছ কি না; তাই মৃত ব্যক্তি, পূর্বনিবদ্ধ মুষ্টি পরিত্যাগ করে না ।৮৪।

**অন্বয়:**—(हे) स्मर ! अपर-निर्ज्जरसेविता द्रुगुपहत्यपमृत्युविरूपताः शमयते । (किन्तु) भवन्तम् उपासितुः अतिशयान्ध्य-वपुःक्षतिपाण्डुताः भवन्ति ॥८५॥

द्रुगिति । हे स्मर ! काम ! अपरान् त्वद्भिन्नान् निर्ज्जरान् सूर्य्यादीन् देवान् सेवितुं शीलं यस्य स तादृशो जनः, दृशोश्चक्षुषोः उपहतिर्नाशः अन्धतेत्यर्थः, अपमृत्युः रोगं विना आघातादिना मरणम्, विरूपता कुष्ठरोगादिना वैरूप्यम्, ताः, शमयते निवारयति । किन्तु भवन्तं कामम्, उपासितुराराधनशीलस्य जनस्य, अतिशयेना-न्ध्यम् अन्धता कार्य्याकार्य्यमूढता दृष्टिशक्तिराहित्यञ्च, वपुःक्षतिः शरीरक्षयता अपमृत्युश्च, पाण्डुता शरीरस्य मलिना पाण्डुरोगश्च ताः, भवन्ति जायन्ते । तथा च अपरदेवतोपासनया जातपूर्वाप्यन्धता सम्भाव्यमानोऽप्यपमृत्युः भूत-पूर्वापि कुष्ठादिजनितविरूपता च निवर्त्तते ; तवोपासनया तु निवृत्तिरास्तां दूरमास्तां प्रत्युत ता नूतनत्वेनैवोत्पद्यन्त इति सर्वदेवाधम एव त्वमिति भावः ।

अतएवात्र आरब्धवैफल्यादनर्थसम्भवाच्च विषमालङ्कारः, अपरदेवापेक्षया कामदेवस्य न्यूनत्ववर्णनात् व्यतिरेकः, कार्य्यव्यमूढतान्धतादीनां परस्परभेदेऽपि श्लेषेणाभेदाध्यवसायात् तिस्र एवातिशयोक्तयः, प्रथमचतुर्थपादयो-रन्त्यानुप्रासश्चेत्येषां मिथो निरपेक्षतया संसृष्टिः । बन्धोत्कर्षत्य आरोहावरोहाभ्याम् ओजो गुणः गौडी च रीतिः ।

सेवितेति उपासितुरिति चोभयत्रापि ताच्छील्ये तृन् । अतएव अपरनिर्ज्जरसेवितेत्यत्र द्वितीयातत्पुरुषः, भवन्तमित्यत्र च "न लोकाव्ययनिष्ठा" इति षष्ठीनिषेधात् कर्म्मणि द्वितीयैव ॥८५॥

**বাঙ্গালা**—কামদেব ! অন্য দেবতার উপাসকগণ, নিজের অন্ধতা, অপমৃত্যু ও বিরূপতার শান্তি করিয়া থাকে ; কিন্তু তোমার উপাসকের অত্যন্ত অন্ধতা, শরীরের ক্ষতি এবং শরীরের পাণ্ডুতা নূতন জন্মে ।৮৫।

स्मर ! नृशंसतमस्त्वमतो विधिः सुमनसः कृतवान् भवदायुधम् ।
यदि धनुर्दृढमाशुगमायसं तव सृजेत् प्रलयं त्रिजगद्व्रजेत् ॥८६॥
स्मररिपोरिव रोपशिखी पुरां दहतु ते जगतामपि मा त्रयम् ।
इति विधिस्त्वदिषून् कुसुमानि किं मधुभिरन्तरसिञ्चदनिर्वृतः ॥८७॥
विधिरनङ्गमभेद्यमवेक्ष्य ते (१) जनमनः खलु लक्ष्यमकल्पयत् ।
अपि स वज्रमदास्यत चेत्तदा त्वदिषुभिर्व्यदलिष्यदसावपि ॥८८॥

---

**अन्वयः**—(हे) स्मर ! त्वं नृशंसतमः, अतः विधिः सुमनसः भवदायुधं कृतवान् । यदि (विधिः) तव धनुः दृढम् आशुगं (च) आयसं सृजेत्, (तदा) त्रिजगत् प्रलयं व्रजेत् ॥८६॥

स्मरेति । हे स्मर ! काम ! त्वं नृशंसतमः अतिशयेन नृशंसो हिंस्रः ; अतः कारणात्, विधिर्विधाता, सुमनसः पुष्पाणि, भवत आयुधमस्त्रम्, कृतवान् । यदि विधि, तव धनुः, दृढं शृङ्गादिना निर्माय कठिनम्, सृजेत् कुर्य्यात्, आशुगं बाणञ्च, आयसं लौहमयम्, सृजेत्, तदा त्रिजगत् कर्त्तृ, प्रलयं नाशम्, व्रजेत् प्राप्नुयात् ; नृशंसतमस्य तव दृढप्रहारेण हन्यमानत्वादिति भावः ।

अत्र स्मरस्य नृशंसतमत्वादेव विधिना पुष्पाणां तदायुधत्वकरणासम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिरलङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ॥८६॥

**বাঙ্গালা**—হে কামদেব ! তুমি অত্যন্তনৃশংস কি না ; এই জন্যই বিধাতা ফুলগুলিকে তোমার অস্ত্র করিয়াছেন ; যদি তিনি তোমার ধনুখানাকে দৃঢ় করিতেন এবং বাণগুলিকে লৌহময় করিতেন ; তাহা হইলে ত্রিভুবনই নাশ পাইত ।৮৬॥

**अन्वयः**—स्मररिपोः रोपशिखी पुरां त्रयम् इव, ते रोपशिखी अपि जगतां त्रयं मा दहतु, इति अनिर्वृतः विधिः कुसुमानि त्वदिषून् अन्तः मधुभिः असिञ्चत् किम् ॥८७॥

स्मरेति । हे कामदेव ! स्मररिपोर्महादेवस्य, रोपशिखी बाणाग्निः, पुरां त्रयमिव त्रिपुरासुरस्य त्रीणि पुराणीव, ते तव, रोपशिखी अपि बाणाग्निरपि, जगतां त्रयम्, मा दहतु दग्धं मा कार्षीत्, इति विभाव्य, अनिर्वृतः असुस्थचित्तः, विधिर्विधाता, कुसुमानि कुसुममयान्, त्वदिषून् तव बाणान्, अन्तरभ्यन्तरे, मधुभिर्मकरन्दैः, असिञ्चत् किं सिक्तवानिति तर्कयामि, अग्न्युत्पत्तिनिवारणाय आर्द्रतानिधानार्थमिति भावः ।

अत्र श्रौतोपमा, वाच्या क्रियोत्प्रेक्षा चेत्यनयोरङ्गाङ्गिभावेन सङ्करः ; प्रथमचरणे छेकानुप्रासवृत्त्यनुप्रासयोरेकाश्रयानुप्रवेशरूपः सङ्करश्चेति समुदाये पुनः संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"वह्नी रोप इषुर्द्वयोः" इत्यमरः ॥८७॥

**বাঙ্গালা**—হে কামদেব ! মহাদেবের বাণাগ্নি যেমন ত্রিপুরাসুরের তিনটি পুরকে দগ্ধ করিয়াছিল ; সেইরূপ তোমার বাণাগ্নিও যেন ত্রিভুবনকে দগ্ধ না করে, ইহা ভাবিয়া অস্বস্থচিত্ত বিধাতা তোমার পুষ্পময় বাণগুলিকে মধু দ্বারা ভিতরে সিক্ত করিয়াছেন কি ? ।৮৭॥

**अन्वयः**—(हे कामदेव ! ) विधिः जनमनः अनङ्गम् अभेद्यम् अवेक्ष्य ते खलु लक्ष्यम् अकल्पयत् । सः चेत् वज्रम् अपि लक्ष्याम् अदास्यत, तदा असौ अपि त्वदिषुभिः व्यदलिष्यत् ॥८८॥

विधिरिति । हे कामदेव ! विधिर्विधाता, जनानां मनश्चित्तम्, अनङ्गम् अणुपरिमाणत्वात् निरवयवम्,

---

(१) विधिरनङ्गम्… ।

অপি বিধিঃ কুসুমানি তবাশুগান্ স্মর! বিধায় ন নির্বৃতিমাপ্তবান্।
অদিত পঞ্চ হি তে স নিয়ম্য তান্ তদপি তৈর্ব্বত জর্জ্জরিতং জগৎ ॥৮৯॥
উপহরন্তি ন কস্য সুপর্ব্বণঃ সুমনসঃ কতি পঞ্চ সুরদ্রুমাঃ।
তব তু হীনতয়া পৃথগেকিকাং ধিগিয়তাপি ন তেঽঙ্গবিধারণা (১) ॥৯০॥

---

অতএব অভেদ্যং ভেত্তুমশক্যম্, অবেক্ষ্য পর্য্যালোচ্য, তৎ তব খলু, লক্ষ্যং শরব্যম্, অকল্পয়ৎ নিরূপিতবান্। স বিধিঃ, চেৎ যদি, বজ্রং কুলিশমপি, অদাস্যত লক্ষ্যমকল্পয়িষ্যৎ, তদা অসৌ বজ্রোঽপি, ত্বদিষুভিস্তব বাণৈঃ, ব্যদলিষ্যৎ বিদীর্ণমভবিষ্যৎ। অতএব বিধিস্তব নিতান্তসূক্ষ্মত্বং তব বাণানামপ্যতিকঠিনত্বং বিচার্য্যৈব অভেদ্যং জনচিত্তং লক্ষ্যমকল্পয়দিতি ভাবঃ।

অত্র অভেদ্যত্বং প্রতি অনঙ্গপদস্যার্থো হেতুরিতি পদার্থহেতুকং কাব্যলিঙ্গম্, তাদৃশকল্পনায়া অসম্বন্ধেঽপি তৎসম্বন্ধাভিধানাদেকাতিশয়োক্তিঃ, অপরা চ বজ্রস্য বিদলনাসম্বন্ধেঽপি তৎসম্বন্ধাভিধানাদতিশয়োক্তিরিত্যেতেষাং মিথো নিরপেক্ষতয়া সংসৃষ্টিঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ।

"হ্রাদিনী বজ্রমস্ত্রী স্যাৎ কুলিশং ভিদুরং পবিঃ" ইত্যমরঃ ॥৮৮॥

বাঙ্গালা—হে কামদেব! লোকের চিত্ত সূক্ষ্ম বলিয়া নিরবয়ব; সুতরাং তাহা বিদীর্ণ করিবার যোগ্য নহে; ইহা বিবেচনা করিয়াই বিধাতা লোকের চিত্তকে তোমার লক্ষ্য কল্পনা করিয়াছেন। তিনি যদি বজ্রকেও তোমার লক্ষ্য কল্পনা করিতেন, তাহা হইলে, সে বজ্রও তোমার বাণে বিদীর্ণ হইয়া যাইত ।৮৮।

অন্বয়ঃ—(হে) স্মর! বিধিঃ কুসুমানি অপি তব আশুগান্ বিধায় নির্বৃতিং ন আপ্তবান্। হি সঃ তান্ পঞ্চ নিয়ম্য তে অদিত; বত, তদপি তৈঃ জগৎ জর্জ্জরিতম্ ॥৮৯॥

অপীতি। হে স্মর! কাম! বিধির্ব্রহ্মা, কুসুমান্যপি দৃঢ়েষু কা কথা অতিকোমলানি পুষ্পাণ্যপি, তব আশুগান্ বাণান্, বিধায় কৃত্বা, নির্বৃতিং সুস্থচিত্ততাম্, ন আপ্তবান্ ন লব্ধবান্। হি যস্মাৎ; স বিধিঃ, তান্ পুষ্পময়ান্ আশুগানপি, পঞ্চ নিয়ম্য পঞ্চসংখ্যকানেব নির্দ্দিশ্য, ন পুনস্তদধিকানিত্যাশয়ঃ, তে তুভ্যম্, অদিত দত্তবান্। বত খেদে। তদপি তথাপি, তৈঃ পঞ্চভিঃ পুষ্পময়ৈরেব বাণৈঃ, জগৎ সর্ব্বং ভুবনম্ জর্জ্জরিতং প্রহারযাতনাদানেন জর্জ্জরীকৃতম্। অতএব ত্বমতীবক্রূরোঽসীতি ভাবঃ।

অত্র বিধের্নির্বৃতিপ্রাপ্তিসম্বন্ধেঽপি তদসম্বন্ধাভিধানাদতিশয়োক্তিরলঙ্কারঃ। তথা তদপীতি তথাপীত্যর্থে অব্যক্তমিত্যবাচকত্বদোষঃ; স চ 'বত তথাপি চ তৈর্ব্যথিতং জগৎ' ইতি পাঠেন সমাধেয়ঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ।

জর্জ্জরং কৃতমিতি জর্জ্জরিতং করোত্যর্থে ণ্যন্তাৎ জর্জ্জরশব্দাৎ কর্ম্মণি ক্তঃ ॥৮৯॥

বাঙ্গালা—কামদেব! বিধাতা তোমার বাণগুলিকে পুষ্পময় করিয়াও নির্বৃত পাইয়াছিলেন না। যে হেতু, তিনি সে পুষ্পময় বাণও পাঁচটীমাত্র নির্দ্দিষ্ট করিয়াই তোমাকে দিয়াছিলেন; হায়! তথাপি তুমি সেই পাঁচটীমাত্র পুষ্পময় বাণ দ্বারাই সমস্ত জগৎটাকে জর্জ্জরিত করিয়াছ ।৮৯॥

অন্বয়ঃ—পঞ্চ সুরদ্রুমাঃ কস্য সুপর্ব্বণঃ কতি সুমনসঃ ন উপহরন্তি; তু তব হীনতয়া পৃথক্ একিকাম্ উপহরন্তি। ইয়তা অপি তে অঙ্গবিধারণা ন ধিক্? ॥৯০॥

---

[১] বিগর্হণা।

कुसुममप्यतिदुर्नयकारि ते (१) किमु वितीर्य विधिर्धनुरग्रहीत् ।
किमकृतैष तवैकतदास्पदे द्वयमभूदधुना हि नलभ्रुवौ ॥९१॥

---

उपहरन्तीति । पञ्च सुरद्रुमा मन्दारादयः पञ्चसंख्यका देवतरवः, कस्य सुपर्वणो देवस्य सम्बन्धे, कति सुमनसः पुष्पाणि, न उपहरन्ति उपहारभावेन न ददति ? अपि तु सर्वेषामेव सुपर्वणां प्राचुर्य्येणैव उपहरन्तीत्यर्थः । तु किन्तु, तव हीनतया अन्यान्यदेवेभ्यो निकृष्टतया हेतुना, पृथक् प्रत्येकम्, एकिकाम्, एकैकाम्, सुमनसं पुष्पम्, उपहरन्ति ते पञ्च सुरद्रुमा इति सम्बन्धः । अतएव पञ्चानां सुरद्रुमाणां प्रत्येकत एकैकपुष्पात्मकबाणग्रहणात् पञ्चबाणत्वमिति भावः । अतएव हे काम ! इयतापि एतावता अपमानेनापि, ते तव, अङ्गविधारणा अनङ्गीभूतस्यापि पुनरङ्गधारणम्, न धिक् न निन्दनीया ? इति काकुः, अपि तु धिगेवेत्यर्थः । अन्यः खलु मानी ईदृगपमानेनैव म्रियते, त्वन्तु मृतोऽपि पुनर्जीवित इति नितान्तनिर्लज्जत्वमिति भावः ।

अत्र अन्यान्यदेवेभ्यः कामदेवस्य न्यूनत्वप्रतिपादनात् व्यतिरेकोऽलङ्कारः । प्रसादो गुणः वैदर्भी च रीतिः ।

"पञ्चैते देवतरवो मन्दारः पारिजातकः । सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम् " "स्त्रियः सुमनसः पुष्पम्" इति चामरः ।

पृथगेकिकामिति अभीप्सितमपि शब्दद्वयं वीप्सार्थं गमयति सामर्थ्यात् । "बहुत्वाद्वसादिर्वस्तकर्थे काधिकरणाच्च" इति श्रीपतिसूत्रेण "पुष्पे च सुमनसो वा" इति तद्वृत्त्या च सुमनसमिति प्रयोगसम्भवात् तद्विशेषणतया एकिकामित्येकवचनं सङ्गच्छते । अन्यत्रापि प्रयोगो यथा—मृच्छकटिके—"वेश्या श्मशानसुमना इव वर्जनीया" ॥९०॥

বাঙ্গালা—মন্দারপ্রভৃতি পাঁচটী দেববৃক্ষ, কোন্ দেবতাকে কত ফুল উপহার না দিয়া থাকে ; কিন্তু কামদেব ! তুমি অন্যান্য দেবতা অপেক্ষা নিকৃষ্ট বলিয়া, সেই পাঁচটী দেববৃক্ষের প্রত্যেকে তোমাকে এক একটী করিয়া ফুল দেয় ; (তাহাতেই তুমি পঞ্চবাণ হও) এত অপমানেও তোমার পুনরায় অঙ্গ ধারণ করা নিন্দনীয় নহে কি ? ॥৯০॥

**अन्वयः**—(हे काम ! ) विधिः ते कुसुमम् अपि अतिदुर्नयकारि धनुः कार्म्मुकम्, वितीर्य्य किमु (पुनः) अग्रहीत् । ( तेन च ) एषः किम् अकृत ; हि अधुना तव एकतदास्पदे नलभ्रुवौ द्वयम् अभूत् ॥९१॥

कुसुममिति । हे काम ! विधिर्विधाता, ते तुभ्यं कुसुममपि पुष्पमयमपि, अतिदुर्नयकारि जगत्सु अतिशयेनात्याचारविधायि, धनुः कार्म्मुकम्, वितीर्य्य दत्त्वा, किमु पुनरग्रहीत् अतिदुर्नयकारित्वादेव किं पुनर्गृहीतवान् । अथ पुनरग्रहीदेवेत्याह—तेन च पुनर्ग्रहणेन एष विधिः, किं फलम्, अकृत कृतवान्, न किञ्चिदपीत्यर्थः । हि यस्मात्, अधुना तव एकस्य तत् तत् धनुश्चेति तस्य एकस्य तस्य धनुषः आस्पदे स्थाने नलस्य भ्रुवौ भ्रूद्वयम् द्वयं धनुर्द्वयम् अभूत् । विधिना जगतामुपकाराय एकं धनुर्गृहीत्वा नलस्य भ्रूद्वयनिर्म्माणेन तद्द्वयस्य च धनुर्द्वयकरणेन प्रत्युत जगतामपकार एव जात इति भावः ।

अतएवात्र आरब्धस्य वैफल्यादनर्थस्य सम्भवाच्च विषमालङ्कारः, धनुषः पुनर्ग्रहणं प्रति अतिदुर्नयकारिपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, वाच्या क्रियोत्प्रेक्षा, द्वयं धनुर्द्वयरूपमिति निरङ्गं केवलरूपकञ्चेत्येतेषामङ्गाङ्गिभावेन सङ्करः । पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥९१॥

বাঙ্গালা—হে কামদেব ! বিধাতা তোমাকে পুষ্পময় ধনু দিয়াছিলেন ; তথাপি সেই ধনুও জগতে অত্যন্ত অত্যাচার করিতে লাগিয়াছিল , তাই তিনি তাহা পুনরায়

---

(१) अतिदुर्णयकारि ते ।

ষড়্‌ঋতব: কৃপয়া স্বকমেককং কুসুমমক্রমনন্দিতনন্দনা:।
দদতি যদ্ভবতে কুরুতে ভবান্ ধনুরিবৈকমিষূনিব পঞ্চ তৈ: ॥৯২॥
যদতনুস্ত্বমিদং জগতে হিতং ক্ব স মুনিস্তব য: সহতে শরী:।
বিশিখমাশ্রবণং পরিপূর্য্য চেৎ অবিচলদ্ভুজমুজ্ঝিতুমীশিষে ॥৯৩॥

নিয়াছিলেন কি? তাহাতেই বা তিনি কি উপকার করিয়াছিলেন; কেন না, তোমার একখানা ধনুর জায়গায় এখন নলের দুইটী জ্র. দুইখানা ধনু হইয়াছে।৯১॥

**অন্বয়:**—অক্রমনন্দিতনন্দনা: ষট্ ঋতব: কৃপয়া ভবতে যৎ স্বকম্ এককং কুসুমং দদতি ভবান্ তৈ: একং ধনু: ইব কুরুতে, পঞ্চ (চ) ইষূন্ ইব কুরুতে ॥৯২॥

ষড়িতি। ন বিদ্যতে ক্রম: পৌর্ব্বাপর্য্যং যস্মিন্ কর্ম্মণি তদক্রমং যুগপদ্ যথা তথা নন্দিতং স্বস্বাবস্থানেন সম্ভোষিতং নন্দনম্ ইন্দ্রোপবনং যৈস্তে, ষট্ ঋতবো হেমন্তাদয়: কৃপয়া দয়য়া, ন পুনর্ভক্ত্যা ভবৎপ্রভাবগৌরবেণ বেত্যর্থ:; ভবতে তুভ্যম্ যৎ স্বকং স্বকীয়ম্ এককম্ একৈকম্ কুসুমং পুষ্পম্ দদতি সমর্পয়ন্তি ভবান্ তৈ: ষড়্‌ভ্য ঋতুভ্যো লব্ধৈ: ষড়্‌ভি: কুসুমৈ: করণৈ: একং ধনুরিব একেন কুসুমেন একং ধনুরিবেত্যর্থ: কুরুতে অবশিষ্টৈ: পঞ্চভি: কুসুমৈ: পঞ্চ ইষূন্ বাণানিব চ কুরুতে। তদন্যা: ষট্ ঋতব: খলু ভক্ত্যৈব অন্যেভ্যো দেবেভ্য: প্রত্যেকমেব প্রচুরাণি পর্য্যাপ্তানি দদতি ভবতে পুন: কৃপয়ৈব একৈকমিতি ভবান্ দেবেষু নিকৃষ্ট এব। তথা কশ্চিদ্দীনজনস্তিয়ো ভিক্ষয়া ষড়্‌ভ্যো গৃহস্থেভ্য: কৃপয়া লব্ধানাং ষণ্ণাং তণ্ডুলমুষ্টীনাং মধ্যে একেনান্নম্ একেন চিপিটকম্ একেন লাজান্ একেন শক্তূন্ একেন পায়সম্ একেন চ পিষ্টকং কুরুতে; ভবানপি তদ্বদেবেতি নিতান্তদরিদ্র এব ভবসিতি ভাব:।

অত্র প্রকৃতস্য পরাত্মনা সম্ভাবনায়া অভাবাদিবশব্দদ্বয়স্য তদ্বোধকত্বেঽপি নোৎপ্রেক্ষা। কিন্তু কুরুতে ইত্যেকয়া ক্রিয়য়া ধনুরিষূনিত্যুভয়ো: কর্ম্মতয়াভিসম্বন্ধাৎ তুল্যযোগিতালঙ্কার:; স চ নন্দিতনন্দনা ইতি ছেকানুপ্রাসেন সংসৃজ্যতে। প্রসাদো গুণ: বৈদর্ভী চ রীতি: ॥৯২॥

বাঙ্গালা—যুগপৎ নন্দনবনের আনন্দজনক ছয়টী ঋতু, দয়া করিয়া তোমাকে যে নিজেদের এক একটি ফুল দিয়া থাকে; তুমি তাহার একটি ফুল দিয়া একখানি ধনু, আর পাঁচটী ফুল দিয়া পাঁচটী বাণ করিয়া থাক।৯২।

**অন্বয়** (হে কাম!) ত্বং যৎ অতনু: ইদং জগতে হিতম্; (যত: ত্বং) চেৎ আশ্রবণং পরিপূর্য্য অবিচলদ্ভুজং বিশিখম উজ্ঝিতুম্ ঈশিষে (তদা) য: তব শরী: সহতে স: মুনি: ক্ব ॥৯৩॥

যদিতি। হে কাম! ত্বং যৎ অতনুর্হরেণৈব ভস্মীকরণাৎ শরীরশূন্যো জাত: ইদমতনুত্বম্ জগতে লোকায় হিতং মঙ্গলকরং ভূতম্। যতস্ত্বং চেৎ আশ্রবণং কর্ণপর্য্যন্তম্ পরিপূর্য্য ধনুরাকৃষ্য ন বিচলন্তৌ লক্ষ্যাস্থিরীকরণে ন ব্যতিক্রান্তৌ ভুজৌ যস্মিন্ কর্ম্মণি তদ্যথা তথা বিশিখং বাণম্ উজ্ঝিতুং নিক্ষেপ্তুম্ ঈশিষে শক্নোষি; তদা যস্তব শরীন্ বাণাঘাতান্, সহতে সোঢ়ুং শক্নোতি, স তাদৃশো মুনি: ক্ব কুত্রাপি ক্বাপি নেত্যর্থ:। তস্মাদস্মাকং কা কথেতি ভাব:।

অত্র জগতে হিতত্বং প্রতি ক্বেত্যাদিবাক্যার্থস্য হেতুত্বাৎ বাক্যার্থহেতুকং কাব্যলিঙ্গমর্থাপত্তিশ্চানয়োরঙ্গাঙ্গিভাবেন সঙ্কর:; সোঽপি চ সহতে শরীরিতি ছেকানুপ্রাসেন সংসৃজ্যতে। প্রসাদো গুণ: বৈদর্ভী চ রীতি:।

জগতে ইতি হিতশব্দযোগাৎ "চতুর্থী হিতসুখৈ:" ইতি চতুর্থী। ঈশিষে ইতি "ঈশ: সে" ইতীডাগম: ॥৯৩॥

বাঙ্গালা— কামদেব! তুমি যে শরীরশূন্য হইয়া গিয়াছ, এটা জগতের মঙ্গলের জন্যই হইয়াছে। কেন না, তুমি যদি কর্ণপর্য্যন্ত ধনু আকর্ষণ করিয়া, অবিচলিত হস্তে বাণক্ষেপ

सह तया स्मर! भस्म धगित्यभूः (१) पशुपतिं प्रति यामिषुमग्रहीः।
ध्रुवमभूदधुना वितनोः शरः तव पिकस्वर एव स पञ्चमः ॥२४॥
स्मर! स मद्दुरितैर्विफलीकृतः (२) भगवतोऽपि भवद्दहनश्रमः।
सुरहिताय हुतात्मतनुः पुनः ननु जनुर्दिवि तत्क्षणमापिथ ॥२५॥

---

করিতে পারিতে; তাহা হইলে, যিনি তোমার সে আঘাত সহ্য করিতে পারেন, সে রকম মুনিই বা কোথায় আছেন ॥২৩॥

**अन्वयः**—(हे) स्मर! (त्वं) पशुपतिं प्रति याम् इषुम् अग्रहीः, तया सह (त्वम्) धक् इति भस्म अभूः। अधुना (तु) पञ्चमः पिकस्वरः एव वितनोः तव सः शरः अभूत् ध्रुवम् ॥२४॥

सहेति। हे स्मर! काम! त्वं पशुपतिं शिवं प्रति याम् इषुं बाणम्, अग्रहीः सं हितवानसि, तया इष्वा सह त्वं "धक्" इति इत्यं शब्दं कृत्वा, भस्म अभूः तस्यैव पशुपतेर्नयनाग्निना भस्मीभूतवानसि। इत्थञ्चे-दानीं तव पराक्रमसम्भावना नास्त्येवेति भावः। तथापि किन्तु अधुना पञ्चमो निषादाद्यन्तर्गतपञ्चमाख्यः "कोकिलो रौति पञ्चमम्" इत्यभिधानात्, पिकानां कोकिलानां स्वरो ध्वनिरेव, वितनोर्भस्मीभूतत्वात् तनुशून्यस्यापि तव, स प्रसिद्धः शरः, अभूत्, इति ध्रुवं निश्चितम्। अतएव तदनुभवादिदानीमीदृशवेदनानुभव इति भावः। प्राञ्चस्तु पञ्चम इति शरविशेषणमपि व्याचक्षते।

अत्र ध्रुवशब्दद्योतितं वाच्यकत्वात् वाच्या जात्युत्प्रेक्षालङ्कारः आधारभूतस्य अनङ्गशरीरस्याभावेऽपि आधेयस्य तच्छरस्य सत्त्वाद्विशेषनामालङ्कारश्चानयोरङ्गाङ्गिभावेन सङ्करः। प्रसादो गुणः, वैदर्भी च रीतिः।

"पत्री रोप इषुर्द्वयोः" इत्यमरोक्तेः इषुशब्दस्य स्त्रीत्वमपि ॥२४॥

বাঙ্গালা—কামদেব! তুমি মহাদেবের প্রতি যে বাণ সন্ধান করিয়াছিলে, সেই বাণের সহিতই তুমি ধক্ করিয়া ভস্ম হইয়া গিয়াছিলে; কিন্তু এখন কোকিলের পঞ্চম স্বরই, শরীরহীন তোমার সেই বাণ হইয়াছে, ইহা নিশ্চয় ॥২৪॥

**अन्वयः**—(हे) स्मर! भगवतः अपि सः भवद्दहनश्रमः मद्दुरितैः विफलीकृतः। ननु सुरहिताय हुतात्मतनुः (त्वं) तत्क्षणं दिवि पुनः जनुः आपिथ ॥२५॥

स्मरेति। हे स्मर! भगवतो माहात्म्यशालिनः शिवस्यापि, स प्रसिद्धः, भवद्दहनश्रमः तव दाहकरणायासः, मम दुरितैः पापैः, विफलीकृतः। कथं विफलीकृत इत्याह—ननु हे स्मर! सुराणां देवानां हिताय शिव-सुतोत्पादनरूपमङ्गलार्थम्, हुता त्यक्ता आत्मनस्तनुः शरीरं येन स तादृशस्त्वम्, तत्क्षणं दहनक्षण एव दिवि स्वर्गे, पुनर्जनुर्जन्म, आपिथ प्राप्तवानसि। तवास्थितिर्ममाकं मङ्गलाय, किन्त्वसत्पापैस्त्वं पुनर्जातः, तेषामङ्गलमपि जातमिति भावः।

अत्र पूर्वार्द्धं प्रति परार्द्धवाक्यार्थस्य हेतुत्वादेकं काव्यलिङ्गम्, पुनर्जन्मलाभं प्रति सुरहिताय हुतात्मतनुरिति पदयोरर्थो हेतुरिति द्वितीयं काव्यलिङ्गम्, पुनर्जन्मासम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिरेषां तेषामङ्गाङ्गि-भावेन सङ्करः। सोऽपि च द्वितीयार्द्धगतच्छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः।

"जनुर्जननजन्मानि" इत्यमरः। आपिथेति आपधातोः परोक्षायाम्थलि रूपम् ॥२५॥

বাঙ্গালা—কামদেব! মহাদেবও যে তোমাকে দগ্ধ করায় সেই পরিশ্রম করিয়া-

---

(१) भस्म झटित्यभूः। (२) अफलीकृतः।

বিরহিণো বিমুখস্য বিধূদয়ে শমনদিক্‌পবনঃ স ন দক্ষিণঃ ।
সুমনসো নময়ন্নটনী ধনুঃ তব তু বাহুরসৌ যদি দক্ষিণঃ ॥৮৬॥
কিমু ভবন্তমুমাপতিরেককং মদমুদান্ধমযোগিজনান্তকম্ ।
যদজয়ত্তত এব ন গীয়তে স ভগবান্ মদনান্ধক-মৃত্যুজিৎ ॥৮৭॥

ছিলেন; তাহাও আমার পক্ষেই ব্যর্থ করিয়া দিয়াছে। কেন না, তুমি দেবগণের হিতের জন্য দেহত্যাগ করিয়া, সেই সময়েই পুনরায় স্বর্গে জন্মলাভ করিয়াছিলে ॥৮৫॥

**অন্বয়ঃ**—বিধূদয়ে বিমুখস্য বিরহিণঃ সঃ শমনদিক্‌পবনঃ ন দক্ষিণঃ। সুমনসঃ ধনুঃ অটনী নময়ন্ তব অসৌ বাহুঃ যদি তু দক্ষিণঃ (ভবতি) ॥৮৬॥

বিরহিণ ইতি। বিধোশ্চন্দ্রস্য উদয়ে সতি, বিমুখস্য উদ্দীপকতদ্দর্শনাসহিষ্ণুতয়া তস্মাদেব বিধুতঃ পরাঙ্মুখীভূতস্য, বিরহিণো জনস্য সম্বন্ধে, স প্রসিদ্ধঃ, শমনস্য যমস্য দিক্ দক্ষিণদিক্ তস্যাঃ পবনো বায়ুঃ মলয়ানিল ইত্যর্থঃ, ন দক্ষিণো ন দক্ষিণদিগ্বর্ত্তী ইতি বিরোধঃ, উত্তেজকত্বান্নানুকূল ইতি তৎসমাধানম্। অথ চ পূর্ব্বস্যাং দিশি চন্দ্রোদয়ে সতি, তদ্বিমুখীভূতো জনঃ পশ্চিমাভিমুখ এব ভবতি; তথাত্বে চ দক্ষিণপবনস্তস্য দক্ষিণো ন ভবতি, অপি তু বাম এবেতি ব্যজ্যতে। নন্বেবং কিং সর্ব্বত্রৈবেতি চেৎ তত্রাহ সুমনস ইতি। সুমনসো ধনুঃ পুষ্পময়ং কার্ম্মুকম্, অটনী অগ্রং, নময়ন্ আকর্ষণেন নম্রীকুর্ব্বন্, তব অসৌ বাহুঃ, যদি তু দক্ষিণো ভবতি; তদৈব শমনদিক্‌পবনো ন দক্ষিণঃ, অন্যত্র তু নৈবং রীতিরিত্যর্থঃ। তথা চ ধনুর্দ্ধরা হি প্রায়েণ দক্ষিণহস্তে নৈব ধনুর্নময়ন্তি। এবঞ্চ ত্বং যদি বিরহিণমুদ্দিশ্য দক্ষিণহস্তে ন ধনুর্নময়সি, তদৈব শমনদিক্‌পবনস্তস্য উত্তেজকতয়া দুঃখকরত্বাৎ অনুকূলাত্মকো দক্ষিণো ন ভবতি; সংযোগিনস্তু ভবত্যেবেতি ভাবঃ।

অর্থোক্তরীত্যা বিরোধাৎ তৎসমাধানাচ্চ বিরোধাভাসোঽলঙ্কারঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ।

"অটনির্ধনুষঃ কোটিঃ" ইতি অমরঃ ॥৮৬॥

বাঙ্গালা—চন্দ্রের উদয় হইলে, বিরহী লোক তাঁহার প্রতি পরাঙ্মুখ হয়; তখন সেই বিরহী লোকের পক্ষে প্রসিদ্ধ মলয় বায়ু দক্ষিণ (অনুকূল) হয় না। কিন্তু, তোমার দক্ষিণ হস্ত যদি তখন পুষ্পময় ধনু আকর্ষণ করিতে থাকে, (তাহা হইলেই ঐ নিয়ম জানিবে) ।৮৬।

**অন্বয়ঃ**—(হে কাম!) উমাপতিঃ মদমুদা অন্ধম্ অযোগিজনান্তকম্ এককং ভবন্তং যৎ অজয়ৎ, ততঃ এব সঃ ভগবান্ মদনান্ধকমৃত্যুজিৎ ন গীয়তে কিমু? ॥৮৭॥

কিমু ইতি। হে কাম! উমাপতিঃ শিবঃ, মদমুদা মত্ততা নিবন্ধনহর্ষেণ, অন্ধং মূঢ়ম্, অযোগিজনানাং বিরহিলোকানাম্ অন্তকং বিনাশকম্, এককম্ একমেব, ভবন্তং ত্বাম্, যৎ অজয়ৎ তৃতীয়নয়নতেজসা জিতবান্; তত এব কারণাৎ স ভগবান্ উমাপতিঃ, মদনান্ধকমৃত্যুজিৎ মদনজিৎ অন্ধকজিৎ মৃত্যুজিচ্চ, ন গীয়তে কিমু? লোকৈর্ন কথ্যতে কিম্? অপি তু গীয়ত এবেত্যর্থঃ। তথা চ মদনস্য তস্য অন্ধকস্যাসুরস্য মৃত্যোর্যমস্য চেতি ত্রয়াণামেব জয়েন ক্রমাৎ স ভগবান্ মদনজিৎ অন্ধকজিৎ মৃত্যুজিচ্চেতি নামত্রয়ং ন লব্ধবান্, কিন্তু একস্মিন্নেব ত্বয়ি মদনত্বান্ধকত্বমৃত্যুত্বরূপধর্ম্মত্রয়যোগাৎ একস্যৈব তব জয়েন তাদৃশং নামত্রয়ং লব্ধবান্। তেন চ ত্বমতীবদুর্দ্ধর্ষো দুঃখদশ্চেতি ভাবঃ।

অত্র মদাদীনাং মদনাদিভিঃ সহ ভেদেঽপ্যভেদাধ্যবসায়াদেকা অতিশয়োক্তিঃ তাদৃশকারণেন তাদৃশনামাসম্বন্ধেঽপি তৎসম্বন্ধাভিধানাদপরা চাতিশয়োক্তিঃ, তে চার্থাপত্ত্যুত্থাপিতে ইতি তয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৮৭॥

**त्वमिव कोऽपि परापकृतौ कृती न ददृशे न च मन्मथ ! शुश्रुवे ।**
**स्वमदहो दहनाज्ज्वलतात्मना ज्वलयितुं परिरभ्य जगन्ति यः ॥८८॥**
**त्वमुचितं नयनार्चिषि शम्भुना भुवन-शान्तिक-होम-हविः-कृतः ।**
**तव वयस्यमपास्य मधुं मधुं हतवता हरिणा वत किं कृतम् ॥८९॥**

**বাঙ্গালা**—কামদেব ! তুমি মত্ততার আনন্দে অন্ধ এবং বিরহীদিগের যম ; সুতরাং মহাদেব একমাত্র তোমাকেই যে জয় করিয়াছিলেন, তাহাতেই লোকে তাঁহাকে মদনজিৎ, অন্তকজিৎ এবং মৃত্যুঞ্জিৎ বলিয়া কীর্ত্তন করে না কি ? ।৮৭।

**অন্বয়ঃ**—(हे) मन्मथ ! त्वम् इव कः अपि परापकृतौ कृती न ददृशे न शुश्रुवे च । यः (त्वं) ज्वलता आत्मना परिरभ्य जगन्ति ज्वलयितुं दहनात् स्वम् अदहः ॥८८॥

त्वमिति । हे मन्मथ ! त्वमिव कोऽपि जनः, परेषामपकृतौ अपकारकरणविषये, कृती निपुणः, न ददृशे नास्माभिर्दृष्टः, न शुश्रुवे च नास्माभिः श्रुतश्च । कथमेतदित्याह—यस्त्वम्, ज्वलता अग्निज्वालावता, आत्मना स्वरूपेण, परिरभ्य जगन्त्यालिङ्ग्य, जगन्ति त्रीणि भुवनानि, ज्वलयितुं स्वाङ्गलग्नज्वालायाः सञ्चारणेन दग्धुम्, दहनात् हरनयनाग्निं प्राप्य, स्वमात्मानम्, अदहः दग्धवानसि । यः स्वस्यात्मनाशेनापि परापकारं करोति, स तत्र कृती एवेति भावः ।

अत्र पूर्वार्द्धं प्रति परार्द्धवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम्, जगन्ति ज्वलयितुं स्वदहनासम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिः, छेकानुप्रासश्चैत्येतेषां संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

दहनादिति "यपोऽध्यकरणकर्म्मणोरप्रयोगिणः" इति पञ्चमी ॥८८॥

**বাঙ্গালা**—কামদেব ! পরের অপকার করিবার পক্ষে নিপুণ, তোমার মত কোন লোককেই আমরা দেখি নাই, বা শুনিও নাই । কারণ, যে তুমি, জগৎ নিজ দেহ দ্বারা আলিঙ্গন করিয়া, ত্রিজগৎ দগ্ধ করিবার জন্য নিজেকে দগ্ধ করিয়াছ ।৮৮।

**অন্বয়ঃ**—(हे काम !) शम्भुना नयनार्चिषि त्वम् उचितं भुवनशान्तिक-होम-हविः कृतः । (किन्तु) हरिणा तव वयस्यं मधुम् अपास्य मधुं हतवता (सता) किं कृतं वत ॥८९॥

त्वमिति । हे काम ! शं जगतां मङ्गलकरो भवतीति शम्भुर्महादेवस्तेन, अतएव नयनार्चिषि निजनयनाग्निशिखायाम्, त्वम्, उचितं योग्यम्, भुवनानां शान्तिः प्रयोजनमस्येति भुवनशान्तिको यो होमस्तत्र हविर्द्रव्यस्वरूपः, कृतः प्रक्षेपात् विहितः । महामारीप्रभृत्युत्पातशान्त्यर्थं होमे यथा घृतादिकं हविः क्रियते, तेन चाशी उत्पातो निवर्त्तते ; तथा जगत्सन्तापशान्त्यर्थं होमे शिवेन त्वं हविःस्वरूपः कृतः, तेन च तत्सन्तापशान्त्या जगतां रक्षा सञ्जातेति शिवो जगन्मङ्गलकरत्वात् शम्भुरेवेति भावः । किन्तु हरिणा विष्णुना, तव वयस्यं वर्द्धकत्वात् सखायम्, मधुं वसन्तम्, अपास्य विहाय, मधुं मधुनामकं दैत्यम्, हतवता सता, किं कृतं जगतां क उपकारः कृतः ; अपि तु किमपि नेत्यर्थः । वत खेदे । यदि तु हरिर्वसन्तमनाशयिष्यत्, तदा विरहिजनसन्तापशान्त्या जगतामुपकारोऽभविष्यदेव ; किन्तु मधुदैत्यनाशने तादृशो नापकारः कश्चिज्जात इति भावः ।

अत्र हरितः शम्भोराधिक्यवर्णनात् व्यतिरेकः, निरङ्गं केवलरूपकं छेकानुप्रासश्चैत्येतेषां संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥८९॥

**বাঙ্গালা**—কামদেব ! ত্রিভুবনের শান্তির জন্য হোম করিতে প্রবৃত্ত হইয়া, মহাদেব তাঁহার নয়নাগ্নিতে তোমাকে উপযুক্ত হবিই করিয়াছেন । কিন্তু বিষ্ণু, তোমার সখা

इति कियदवसैव भृशं प्रियाधर-पिपासु तदाननमाशु तत् ।
अजनि पांशुलमप्रियवाग्‌ज्वलन्मदन-शोषण-बाण-हतेरिव ॥१००॥
प्रियसखीनिवहेन सहाथ सा व्यरचयद्गिरमर्द्धसमस्यया ।
हृदयमर्म्मणि मन्मथसायकैः क्षततमा बहुभाषितुमक्षमा ॥१०१॥
अशनिपातादिव सुनासीरात् सदृशजयापदि धीरतयात्मनः ।
असव एव ममाद्य विरोधिनः कथमरीन् सखि ! रक्षितुमात्थ माम् ॥१०२॥

---

বসন্তকে পরিত্যাগ করিয়া, হায়! মধুনামক দৈত্যকে বধ করিয়া, জগতের কি করিয়াছেন ॥৯৯॥

**অন্বয়:**—প্রিয়াধরপিপাসু তৎ তদাননম্ ইতি কিয়দবসা এব অপ্রিয়বাগ্‌-জ্বলন্মদন-শোষণ-বাণ-হতেঃ ইব আশু ভৃশং পাংশুলম্ অজনি ॥১০০॥

इतीति । प्रियस्य नलस्य अधरपिपासु ओष्ठचुम्बनाभिलाषि तत् सुन्दरतया प्रसिद्धम्, तस्या दमयन्त्या आननं मुखं कर्त्तृ, इति पूर्व्वोक्तप्रकारेण, कियदवसैव स्वल्पवाक्ये नैव, अप्रियया निन्दाबोधनादप्रीतिजनिकया वाचा दमयन्त्या वाक्येन ज्वलन् तां प्रत्येव क्रोधेन उत्तेजितो भवन् यो मदनः कामस्तस्य यः शोषणबाणस्तस्य हतेराघातादिव, आशु शीघ्रम्, भृशमत्यन्तम्, पांशुलं धूलीमत् शुष्कमित्यर्थः, अजनि जातम् । मुखस्य शुष्कतया का समस्तं वक्तुं नाशकदिति निष्कर्षः ।

अत्र हेतूत्प्रेक्षालङ्कारः । पूर्व्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥१००॥

**বাঙ্গালা**—নলের মুখচুম্বনাভিলাষী দময়ন্তীর সেই মুখখানি, এইরূপ কিছু বাক্য বলিয়াই সত্বর অত্যন্ত শুষ্ক হইয়া পড়িল; তাহাতে বোধ হইল যে, অপ্রিয় বাক্য শুনিয়া ক্রোধে জ্বলিত কামদেবের শোষণবাণের আঘাতেই যেন তাহার মুখখানি শুষ্ক হইয়াছিল ॥১০০॥

**অন্বয়:**—অথ মন্মথসায়কৈঃ হৃদয়মর্ম্মণি ক্ষততমা বহু ভাষিতুম্ অক্ষমা সা প্রিয়সখীনিবহেন সহ অর্দ্ধসমস্যয়া গিরং ব্যরচয়ৎ ॥১০১॥

प्रियेति । अथ मुखस्य शुष्कीभवनानन्तरम् मन्मथसायकैः कामबाणैः हृदयमेव मर्म्म प्रधानस्थानं तस्मिन् क्षततमा अतिशयेन क्षता अतएव बहु प्रचुरम् भाषितुमक्षमा सा दमयन्ती प्रियसखीनां स्वरहस्यवेदिनीनां स्निग्धवयस्यानां निवहेन समूहेन सह अर्द्धस्य सखीभिरुक्तस्य प्रथमार्द्धस्य समस्यया प्रत्युत्तरात्मक द्वितीयार्द्धपूरणेन गिरं काश्चित् वाक्प्रबन्धम् व्यरचयत् विरचितवती ।

अत्र बहुभाषणाक्षमत्वं प्रति मन्मथसायकैः क्षततमेति पदद्वयार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम् अर्द्ध-समस्यया गिरो विरचनं प्रति च बहु भाषितुमक्षमेति पदद्वयार्थो हेतुरित्यपरं तथैव काव्यलिङ्गमित्यनयोर्मिथः सापेक्षत्वात् सङ्करः । द्वितीयार्द्धं प्राक् पठित्वा समाप्तपुनरात्तत्तादोषः परिहार्य्यः । प्रसादो गुणः वैदर्भी च रीतिः ।

"समस्या एकदेशस्य पूरणम्" इति साङ्कः ।

समस्येति सं पूर्व्वादस्यतेः "समजास" — इत्यादिना स्त्रियां क्यप् ॥१०१॥

**বাঙ্গালা**—তাহার পর, হৃদয়ের মর্ম্মস্থানে কামবাণের আঘাতে দময়ন্তী অত্যন্ত বিদীর্ণ হইয়াছিলেন; তাই তিনি বহুতর কথা বলিতে না পারিয়া, প্রিয়সখীগণের সহিত অর্দ্ধসমস্যা দ্বারা কতক গুলি কথা বলিলেন ॥১০১॥

हितगिरं न शृणोषि किमाश्रवे ! प्रसभमप्यव जीवितमात्मनः ।
सखि ! हिता यदि मे भवसीदृशी मदरिमिच्छसि किं (१) मम जीवितम् ॥१०३॥
अमृतदीधितिरेष विदर्भजे ! भजसि तापममुष्य किमंशुभिः ।
यदि भवन्ति मृताः सखि ! चन्द्रिकाः शशभृतः क्व तदा परितप्यते ॥१०४॥

---

**अन्वयः**—[हे दमयन्ति ! त्वम्] आपदि सहजया आत्मनः धीरतया अकरुणात् सुमशरात् असून् अव । [हे] सखि ! अद्य असवः एव मम विरोधिनः कथम् अरीन् रक्षितुं माम् आत्थ ॥१०२॥

अर्द्धसमस्यया गिरा विरचननैव दर्शयति अकरुणादिति । हे दमयन्ति ! त्वम्, आपदि अस्यां विपदि, सहजया स्वाभाविक्या, आत्मनो धीरतया धैर्य्येण, अकरुणात् निर्दयात्, सुमशरात् पुष्पबाणात् कामात्, असून् आत्मनः प्राणान्, अव रक्ष । इति सखीवचनम् । दमयन्तीवचनन्त्वाह असव इति । एवमन्यत्रापि बोध्यम् । हे सखि ! अद्य इदानीम्, असवः प्राणा एव, मम विरोधिनः अरयः, दुःखानुभवप्रधानसाधनत्वादिति भावः । अतएव कथम् अरीन् तानेव शत्रून्, रक्षितुं माम्, आत्थ ब्रवीषि उपदिशसीत्यर्थः । लोके बन्धूनामेव रक्षणस्य, शत्रूणाम् हननस्य नियमात् युष्माकमयमुपदेशो न श्रेयानिति भावः । एतेन प्राणत्यागेच्छा व्यज्यते ।

अत्र रक्षणोपदेशस्य अन्याय्यत्वं प्रति विरोधिपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ।

आत्थेति ब्रूधातोः पञ्चम्या मध्यमपुरुषैकवचने निपातः ॥१०२॥

বাঙ্গালা—দময়ন্তি ! এই বিপদে নিজের স্বাভাবিক ধৈর্য্য দ্বারা, নির্দ্দয় কামদেব হইতে প্রাণ রক্ষা কর। সখি ! এখন প্রাণই আমার শত্রু ; সুতরাং তুমি শত্রুকে রাখিবার জন্য আমাকে বলিতেছ কেন ? ॥১০২॥

**अन्वयः**—(हे) आश्रवे ! (त्वं) हितगिरं किं न शृणोषि ? प्रसभम् अपि आत्मनः जीवितम् अव । (हे) सखि ! (त्वं) यदि ईदृशी मे हिता भवसि, (तर्हि) मदरिं मम जीवितं किम् इच्छसि ॥१०३॥

हितेति । हे आश्रवे ! अस्मद्वचनवश्ये ! हितगिरं हितकरवाक्यं किं न शृणोषि । तव श्रवण-मवश्यमुचितमिति भावः । कासौ हितगीरित्याह—प्रसभमपि बलादपि, आत्मनो जीवितं जीवनम्, अव रक्ष । हे सखि ! त्वं यदि ईदृशी, मे मम, हिता हितैषिणी भवसि, तर्हि मम अरिं शत्रुभूतम्, मम जीवितं जीवनम्, किम् इच्छसि रक्षितुमिति शेषः । एतेनापि जीवनत्यागेच्छा व्यज्यते । अरिरक्षणेच्छाया हितत्वाभाव-वात् त्वं मे अहितैषिण्येवेति भावः ।

अत्र सख्या गिरा विशेषणतया उपन्यस्तस्य हितशब्दस्य दमयन्त्या सखीजनविशेषणत्वे योजनात् श्लेषवक्रोक्तिर-लङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ।

“विधेयो विनयग्राही वचनेस्थित आश्रवः” इत्यमरः ॥१०३॥

বাঙ্গালা—দময়ন্তি ! তুমি ত আমাদের বাক্য অনুসারেই চলিয়া থাক ; তবে এই হিতবাক্য শুনিতেছ না কেন ? বলপূর্ব্বকও নিজের জীবন রক্ষা কর। সখি ! তুমি যদি আমার এই রকমই হিতৈষিণী হইয়া থাক, তবে আমারই শত্রু আমার জীবনকে রাখিতে ইচ্ছা করিতেছ কেন ? ॥১০৩॥

---

(१)···या···।

व्रज धृतिं त्यज भीतिमहेतुकाम् अयमचण्डमरीचिरुदञ्चति ।
ज्वलयति स्फुटमातपमुर्मुरैः अनुभवं वचसा सखि ! लुम्पसि ॥१०५॥
अयि शपे हृदयाय तवैव तत् यदि विधोर्न रुचेरसि गोचरः ।
रुचिफलं सखि ! दृश्यत एव यत् ज्वलयति त्वचमुल्ललयत्यसून् ॥१०६॥

---

**अन्वयः**—हे विदर्भजे ! एषः अमृतदीधितिः (वर्त्तते) ; अमुष्य अंशुभिः किं तापं भजसि ।
हे सखि ! शशभृतः चन्द्रिकाः यदि मृताः भवन्ति, तदा क्व परितप्यते ॥१०४॥

अमृतेति । हे विदर्भजे ! विदर्भराजनन्दिनि ! एष दृश्यमानः, अमृतदीधितिः शीतांशुः सुधारूपत्वात् अनष्टकिरणश्च चन्द्रो वर्त्तते । तत् अमुष्य अंशुभिः किरणैः, किं कथम्, तापं भजसि । हे सखि ! शशभृतश्चन्द्रस्य, चन्द्रिकाः किरणाः, यदि मृताः क्षणापचयतया ईश्वरेच्छया वा नष्टाः, भवन्ति ; तदा क्व कस्मिन् निमित्ते कुत इत्यर्थः, परितप्यते मया, अपितु कुतोऽपि नेत्यर्थः । शशभृतो जीवितचन्द्रिकत्वादेव परितप्यत इति भावः ।

अत्र सख्या सुधार्थे जलार्थे वा प्रयुक्तस्य अमृतपदस्य दमयन्त्या अनष्टार्थे योजनात् श्लेषवक्रोक्तिः, अमृतदीधितेस्तापोत्पत्तेर्विषमालङ्कारस्य, अनयोरङ्गाङ्गिभावेन सङ्करः । प्रसादो गुणः, वैदर्भी च रीतिः ॥१०४॥

**বাঙ্গালা**—দময়ন্তি ! এ, ত অমৃতাংশু চন্দ্র ; তবে তুমি ইহার কিরণে সন্তাপ অনুভব করিতেছ কেন ? সখি ! চন্দ্রের কিরণ যদি মরিয়া যাইত, তবে আর পরিতপ্ত হইব কেন ॥১০৪॥

**অন্বয়ঃ**—(हे दमयन्ति ! ) धृतिं व्रज, अहेतुकां भीतिं त्यज ; अयम् अचण्डमरीचिः उदञ्चति । (हे) सखि ! आतपमुर्मुरैः स्फुटं ज्वलयति ; (त्वन्तु) वचसा अनुभवं लुम्पसि ॥१०५॥

व्रजेति । हे दमयन्ति ! धृतिं धैर्य्यम्, व्रज लभस्व, अहेतुकां सूर्य्यभ्रमादेव अयथार्थकारणाम्, भीतिं भयम्, त्यज । तर्हि कोऽयमुदेतीत्याह – अयं दृश्यमानः, अचण्डमरीचिरतीक्ष्णदीधितिश्चन्द्रः, उदञ्चति उदेति । हे सखि ! आतपास्तीक्ष्णकिरणा एव मुर्म्मुरास्तुषाग्नयस्तैः, स्फुटं स्पष्टम्, ज्वलयति ममाङ्गानि दहति ; किन्तु त्वं वचसा अयमित्यादिवाक्येन, अनुभवं मम प्रत्यक्षम्, लुम्पसि उच्छिनत्सि । अहमेनं सन्तापातिशयजनकत्वात् सूर्य्यतयैव प्रत्यक्षीकरोमि ; त्वन्तु अयमित्यादिवाक्यमात्रेण तत् प्रत्यक्षमुच्छिनत्सीति महदाश्चर्य्यमेतदिति भावः ।

अत एवात्र चन्द्रे सूर्य्यभ्रमाद्भ्रान्तिमानलङ्कारः, धैर्य्यावलम्बनं भीतित्यागञ्च प्रति द्वितीयपादवाक्यार्थो हेतुरिति काव्यलिङ्गं निरङ्गं केवलरूपकञ्च, एषां तेषामङ्गाङ्गिभावेन सङ्करः । प्रसादो गुणः, वैदर्भी च रीतिः ।
"मुर्म्मुरस्तुषवह्नौ स्यात्मन्मथे रविवाजिनि" इति मेदिनी ॥१०५॥

**বাঙ্গালা**—দময়ন্তি ! তুমি ধৈর্য্য অবলম্বন কর এবং অকারণ ভয় পরিত্যাগ কর। কেন না, এ চন্দ্রই উদয় পাইতেছে। সখি ! উষ্ণকিরণরূপ তুষাগ্নি দ্বারা আমার অঙ্গ দগ্ধ করিতেছে ; কিন্তু তুমি কেবল বাক্য দ্বারা আমার সেই প্রত্যক্ষ লোপ করিতেছ ॥১০৫॥

**अन्वयः**—अयि ! तत् तव एव हृदयाय शपे, यदि (त्वं) विधोः रुचेः गोचरः न असि । (हे) सखि ! रुचिफलं दृश्यते एव, यत् त्वचं ज्वलयति, असून् उल्ललयति ॥१०६॥

अयीति । अयि दमयन्ति ! तत् तदा, तवैव हृदयाय शपे हृदयं स्पृष्ट्वा शपथं करोमि ; यदि त्वं विधोश्चन्द्रस्य रुचेः किरणस्य तेजसश्च, गोचरी विषयीभूता नासि । हे सखि ! रुचेस्तेजसः, फलं दृश्यत

विधुविरोधितिथेरभिधायिनीं ननु ! न किं पुनरिच्छसि कोकिलाम् ।
सखि ! किमर्थगवेषणया गिरं किरति सेयमनर्थमयीं मयि ॥१०७॥
हृदय एव तवास्ति स वल्लभः तदपि किं दमयन्ति ! विषीदसि ।
हृदि परं न बहिः खलु वर्त्तते सखि ! यतस्तत एव विषद्यते ॥१०८॥

---

एव ; यदसौ रुचिः, त्वचं मदीयं चर्म्म, ज्वलयति सन्तापयति ; तथा असून् मम प्राणान्, उन्मूलयति तापाधिक्येन उन्मूलयति । तामाह्वतेजस एव अयास्यत्वस्य स्वाभाविकतया त्वया यदुक्तं तत् सत्यमेवेति भावः ।

अत्र चन्द्रकिरणार्थे सख्या प्रयुक्तस्य रुचिपदस्य दमयन्त्या तेजोमात्रार्थे योजनात् श्लेषवक्रोक्तिरलङ्कारः 'रुचे ; चरे' इति छेकानुप्रासेन संसृज्यते । तथा तदिति तदार्थे अवाचकमित्यवाचकत्वदोषः ; स तु 'अयि शपे हृदयाय तवैव भीः' इति पाठेन समाधेयः । न चैतत्पाठे तदापदाभावात् पुनरुक्तपदत्वादोष इति वाच्यं यदीत्यस्य परवाक्यगतत्वेन तदित्यनपेक्षणात् । प्रसादो गुणः, वैदर्भी च रीतिः ।

शपे इति "शपथे शप" इति वचनादित्वादात्मनेपदम् । हृदयायेति "श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः" इति सम्प्रदानत्वात् चतुर्थी ॥१०६॥

বাঙ্গালা—দময়ন্তি ! তবে তোমারই হৃদয়স্পর্শ করিয়া শপথ করিতে পারি, যদি তুমি চন্দ্রের কিরণের মধ্যে না থাক । সখি ! কিরণের ফল ত দেখিতেছিই যে, আমার চর্ম্ম দগ্ধ করিতেছে এবং প্রাণ উন্মূলন করিতেছে ॥১০৬॥

অন্বয়ঃ—ননু ! विधु-विरोधि-तिथेः अभिधायिनीं कोकिलां किं पुनः न इच्छसि ? । (हे) सखि ! अर्थ-गवेषणया किम्, सा इयं मयि अनर्थमयीं गिरं किरति ॥१०७॥

विध्विति । ननु हे दमयन्ति ! विधोश्चन्द्रस्य विरोधिन्या अदर्शनप्रयोजकत्वात् शत्रुभूतायाः तिथेरमावस्यायाः, अभिधायिनीं कुहूशब्देन कथयित्रीम् आह्वानकारिणीमित्यर्थः, कोकिलां पक्षिणीम, किं पुनर्न इच्छसि । तथा च सा चेदागत्य कुहूशब्देन अमावस्यामाह्वयेत्, तेन च साप्यागच्छेत्, तदा चन्द्रस्यादर्शनेन तव दुःखनिवृत्तिर्भवेदिति भावः । हे सखि ! अर्थस्य त्वयोक्तरूपस्य विषयस्य, गवेषणया कोकिलागमनकामना द्वारा अन्वेषणेन, किं फलम् अपि तु किमपि नेत्यर्थः । कुत इत्याह—सा इयं कोकिला, मयि मद्विषये, अनर्थमयीम् अनर्थप्रचुराम् अत्यन्तानिष्टामित्यर्थः, गिरं कुहूशब्दात्मिकां वाचम्, किरति निक्षिपति प्रत्युत ब्रवीतीति तात्पर्य्यम् । तथा च कोकिलायाः कुहूशब्दो न खल्वमावस्याया अभिधायी तदिच्छया अनुच्चारितत्वात् । ततस्तु तेन अमावस्या तु नागच्छेदेव, प्रत्युत तस्यास्तत्कुहूशब्दः अतर्थेव ममोत्तेजनाजननेन दुःसहं दुःखमेव दास्यतीति भावः ।

अतएवात्र आरब्धवैफल्यादनर्थसम्भवाच्च विषमालङ्कारः, अर्थगवेषणायाः फलाभावं प्रति सेयमित्यादिवाक्यार्थस्य हेतुत्वात् काव्यलिङ्गम्, तच्चाप्यर्थापत्त्युत्थापितमित्येतेषामङ्गाङ्गिभावेन सङ्करः ; सोऽपि च चतुर्थपादगतच्छेकानुप्रासेन संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ।

"सा दृष्टेन्दुः सिनीवाली सा नष्टेन्दुकला कुहूः" इति "प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु" इति चामरः । गवेषणेति "गवेष मार्गणे" इति चौरादिकाद् गवेषधातोः "ण्यासश्रन्थो युच्" इत्यादिना स्त्रियां युप्रत्ययः ॥१०७॥

বাঙ্গালা—দময়ন্তি ! কোকিলা পক্ষিণী 'কুহূ'শব্দ দ্বারা চন্দ্রের বিরোধী অমাবস্যাতিথিকে ডাকিয়া থাকে ; সুতরাং তুমি সেই কোকিলার আগমন আবার কামনা কর না কেন ? । সখি ! সে বিষয় অন্বেষণ করায় ফল কি ? কেন না, সে কোকিলা আমার বিষয়ে অত্যন্ত-অনিষ্ট বাক্য উচ্চারণ করিয়া থাকে ॥১০৭॥

स्फुटति हारमणौ मदनोष्मणा हृदयमप्यनलङ्कृतमद्य ते ।
सखि ! हतास्मि तदा यदि हृद्यपि प्रियतमः स मम व्यवधापितः ॥१०९॥
इदमुदीर्य्य तदैव मुमूर्च्छ सा मनसि मूर्च्छित-मन्मथ-पावका ।
क्व सहतामवलम्ब-लव-च्छिदाम् अनुपपत्तिमतीमतिदुःखिता ॥११०॥

**अन्वयः**—(हे) दमयन्ति ! सः तव वल्लभः तव हृदये एव अस्ति ; तदपि किं विषीदसि ? । (हे) सखि ! यतः परं हृदि वर्त्तते, [किन्तु] बहिः न खलु वर्त्तते ; ततः एव विषद्यते ॥१०८॥

हृदय इति । हे दमयन्ति ! स तव वल्लभो दयितो नलः, तव हृदये एवास्ति सर्वदा चिन्त्यमानत्वादिति भावः । काकाक्षिगोलकन्यायेन तवेत्यस्योभयत्रैवान्वयः । तदपि तथापि, किं विषीदसि तदर्थं दुःखमनुभवसि ? । हे सखि ! यतो हेतोः, परं केवलम्, हृदि वर्त्तते, किन्तु बहिर्बाह्यप्रदेशे, न खलु वर्त्तते ; तत एव हेतोः, विषद्यते मया तदर्थं दुःखमनुभूयते, चिन्तासुखस्यैव लाभात् स्पर्शसुखादेरलाभादित्याशयः ।

अत्र सख्या 'शङ्खः पाण्डुर एव' इत्यादिवत् हृदये एवेत्यत्र एवकारस्य स्वयोगव्यवच्छेदार्थे प्रयुक्तस्य दमयन्त्या 'पार्थ एव धनुर्द्धरः' इत्यादिवत् इतरयोगव्यवच्छेदार्थे योजनात् श्लेषवक्रोक्तिरलङ्कारः । तथा तदपीति तथापीत्यर्थस्य न वाचकमित्यवाचकत्वदोषः ; स च 'किमु तथापि विषीदसि भीमजे !" इति पाठेन समाधेयः । पूर्ववाणी वृत्तः, प्रसादो गुणः, वैदर्भी च रीतिः ॥१०८॥

বাঙ্গালা—দময়ন্তি ! তোমার সে প্রিয়তম, তোমার হৃদয়েই রহিয়াছেন ; তথাপি তুমি দুঃখ করিতেছ কেন ? । সখি ! যে হেতু, তিনি কেবল হৃদয়েই রহিয়াছেন, কিন্তু বাহিরে নহে ; সেই জন্যই দুঃখ করিতেছি ॥১০৮॥

**अन्वयः**—(हे दमयन्ति ! ) मदनोष्मणा हारमणौ स्फुटति (सति) अद्य ते हृदयम् अपि अनलङ्कृतम् । (हे) सखि ! यदि सः मम प्रियतमः हृदि अपि व्यवधापितः, तदा हता अस्मि ॥१०९॥

स्फुटतीति । हे दमयन्ति ! मदनोष्मणा कामजनिततापेन, हारमणौ हारस्य मध्यरत्ने स्फुटति विदीर्य्यमाणे सति, हारमध्यमणेर्विदीर्णतया तस्य अव्यवहार्य्यत्वे सतीत्यर्थः ; अद्य ते तव हृदयमपि अन्यं कामाङ्गानां का कथा वक्षःस्थलमपि, अनलङ्कृतम् अभूषितं वर्त्तत इति शेषः । एतच्चातीवदुःखायेति भावः । पक्षान्तरे तु हृदयं मनः, न विद्यते नलो यस्मिन् तत् अनलम् नलरहितम्, कृतं विधिनेति शेषः । हे सखि ! यदि स मम प्रियतमो नलः, हृदि अपि नगरादौ का कथा मनसि अपि, व्यवधापितः विधिना अपसार्य्य व्यवहितीकृतः ; तदा हता तेनैव विधिना नाशिता अस्मि , सर्वतैव अभीष्टस्याभावादिति भावः ।

अत्र हारमणेः स्फोटनामन्यत्वेऽपि तन्मध्यस्थाभिधानादतिशयोक्तिः, सख्या अभूषितार्थे प्रयुक्तस्य अनलङ्कृतपदस्य दमयन्त्या नलरहितीकृतार्थे योजनात् श्लेषवक्रोक्तिः , अनयोरङ्गाङ्गिभावेन सङ्करः । पूर्ववाणी वृत्तः, प्रसादो गुणः, वैदर्भी च रीतिः ।

"उरस्यपि च वृक्कायां हृदयं मानसेऽपि च" इति त्रिकाण्डशेषः ॥१०९॥

বাঙ্গালা – দময়ন্তি ! কামসন্তাপে হারের মণিটী ফুটিয়া গেলে, আজ তোমার হৃদয়খানিও অনলঙ্কৃত হইয়াছে । সখি ! যদি বিধাতা আমার সে প্রিয়তমকে মন হইতেও ব্যবহিত করেন ; তবে তিনি আমাকে মারিয়াছেন ।১০৯।

**अन्वयः**—मनसि मूर्च्छित-मन्मथ-पावका सा इदम् उदीर्य्य तदा एव मुमूर्च्छ । अतिदुःखिता (सा) अनुपपत्तिमतीम् अवलम्ब-लव-च्छिदां क्व सहताम् ॥११०॥

**অধিত কাপি মুখে সলিলং সখী প্যধিত কাপি সরোজদলৈঃ স্তনৌ।**
**ব্যধিত কাপি হৃদি ব্যজনানিলং ন্যধিত কাপি হিমং সুতনোস্তনৌ ॥১১১॥**
**উপচচার চিরং মৃদুশীতলৈঃ জলজনাল-মৃণাল-জলাদিভিঃ।**
**প্রিয়সখীনিবহঃ স তথা ক্রমাৎ ইয়মবাপ যথা লঘু চেতনাম্ ॥১১২॥**

ইদমিতি। মনসি মূর্চ্ছিতমন্দ্রদয়মাদিনা উক্তিং প্রাপ্তঃ মন্মথঃ কাম এব পাবকো বহ্নির্যস্যাঃ সা, সা দময়ন্তী, ইদং পূর্বোক্তরূপম্, উদীর্য্য উক্ত্বা, তদৈব "অনলক্লমম্" ইতি সখীবাক্যস্য নলরাজসীক্লমমিত্যর্থসম্ভাবনাসময় এব, মুমূর্চ্ছ হতাশতয়া মূর্চ্ছিতা বভূব। ইত্যাদিব কথং মূর্চ্ছেত্যাহ—অতিদুঃখিতা কামেন বিরহেণ চ সন্তাপাত্যন্তদুঃখা সা দময়ন্তী, অনুপপত্তিমতীম্ অযুক্তিমতীমপি, স্মৃতিমাত্রেণৈব মনসি অরণীয়লাভে প্রতিবন্ধকাভাবেন নলস্যাপি তথা সম্ভবাদিতি ভাবঃ; অবলম্বস্য জীবনাশ্রয়স্য একমাত্রজীবনরক্ষণোপায়স্যেত্যর্থঃ যো লবঃ চিন্তামাত্রেণ মনসি নলপ্রাপ্তিরূপো লেশঃ তস্যাপি ছিদাং লোপম্, ক্ব কুতঃ সহতাম্, অপি তু ক্বাপীঽপি নৈষ্যতি। অতএব হতাশতয়া মুমূর্চ্ছেত্যাশয়ঃ।

অত্র সামান্যবিশেষভাবাভাবাদর্থান্তরন্যাসঃ; অপি তু মূর্চ্ছাং প্রতি পদার্থবাক্যার্থস্য হেতুত্বাৎ বাক্যার্থহেতুকং কাব্যলিঙ্গম্, নিরঙ্গং কেবলরূপকম্, ছেকানুপ্রাসশ্চ তেষাং মিথো নিরপেক্ষতয়া সংসৃষ্টিঃ। পূর্বরাগো রসঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ।

নশ্রিতস্য বহুলার্থত্বাৎ ক্তি ইতাবেব সম্ভর্থ্যমিতি দিক্ ॥১১০॥

বাঙ্গালা—মনে কামাগ্নি বৃদ্ধি পাওয়ায় দময়ন্তী এইরূপ বলিয়া তখনই মূর্চ্ছিত হইলেন। কারণ, তিনি স্বভাবতই তখন অতিদুঃখিত ছিলেন; তাহাতে তাঁহার জীবনের একমাত্র অবলম্বনের লেশ ছিল—মনে মনে নলের প্রাপ্তি; তাহার লোপটা অসম্ভব হইলেও, সে লোপের আশঙ্কা তিনি সহ্য করিতে পারিবেন কেন? ॥১১০॥

অন্বয়ঃ—কা অপি সখী সুতনোঃ মুখে সলিলম্ অধিত; কা অপি সখী সরোজদলৈঃ সুতনোঃ স্তনৌ প্যধিত; কা অপি সখী সুতনোঃ হৃদি ব্যজনানিলং ব্যধিত; কা অপি সখী সুতনোঃ তনৌ হিমং ন্যধিত ॥১১১॥

অধিতেতি। কাপি সখী, সুতনোঃ শোভনশরীরায়া দময়ন্ত্যাঃ, মুখে সলিলং জলম্, অধিত স্থাপিতবতী; মূর্চ্ছাপনোদনায়েতি ভাবঃ। অন্যত্রাপ্যেবম্। কাপি সখী, সরোজদলৈঃ পদ্মপত্রৈঃ, সুতনোর্দময়ন্ত্যাঃ, স্তনৌ, প্যধিত অপিহিতবতী আচ্ছাদিতবতীতি যাবৎ। কাপি সখী, সুতনোঃ হৃদি বক্ষসি, ব্যজনস্য তালবৃন্তস্য অনিলং বায়ুম্, ব্যধিত বিহিতবতী; কাপি চ সখী, সুতনোঃ তনৌ দেহে, হিমং তুষারম্, ন্যধিত অর্পিতবতী।

অত্র সুতনোস্তনাবিতি ছেকানুপ্রাসোঽলঙ্কারঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ।

প্যধিতেতি "বষ্টি ভাগুরিরল্লোপমবাপ্যোরুপসর্গয়োঃ" ইত্যপেরকারলোপঃ ॥১১১॥

বাঙ্গালা—কোন সখী দময়ন্তীর মুখে জল দিল; কোন সখী পদ্মপত্র দ্বারা তাহার স্তনযুগল আবৃত করিল; কোন সখী তাহার বুকে পাখার বাতাস করিতে লাগিল এবং কোন সখী তাহার শরীরে বরফ দিতে থাকিল ॥১১১॥

অন্বয়ঃ—সঃ প্রিয়সখীনিবহঃ জলজ-নাল-মৃণাল জলাদিভিঃ মৃদুশীতলৈঃ (বস্তুভিঃ) তথা চিরম্ উপচচার, যথা ইয়ং ক্রমাৎ লঘু চেতনাম্ অবাপ ॥১১২॥

উপেতি। সঃ প্রিয়সখীনাং নিবহঃ সমূহঃ, জলজস্য পদ্ম নালং মৃণালং জলঞ্চ তদাদিভিঃ মৃদূনি চ তানি শীতলানি চেতি তৈঃ, চন্দনাদিভির্বস্তুভিরিত্যর্থঃ তথা চিরম্ উপচচার শুশ্রূষিতবান্; যথা ইয়ং দময়ন্তী, ক্রমাৎ লঘু শীঘ্রম্, চেতনাং সংজ্ঞাম্, অবাপ প্রাপ্তবতী।

अयि कले! कलय श्वसिति स्फुटं चलति पक्ष्म चले! परिभावय।
अधर-कम्पनमुन्नय मेनके! किमपि जल्पति कल्पलते! शृणु॥११३॥
रचय चारुमते! स्तनयोर्वृतिं कलय केशिनि! केशमसंयतम्।
अवगृहाण तरङ्गिणि! नेत्रयोः जल-झराविति शुश्रुविरे गिरः॥११४॥

अत्र प्रथमपादे छेकानुप्रासोऽलङ्कारः, मधुररसभावशान्माधुर्यं गुणः, वैदर्भी च रीतिः॥११२॥

বাঙ্গালা—সেই প্রিয়সখীরা পদ্মের নাল, মৃণাল ও জলপ্রভৃতি কোমল ও শীতল বস্তু দ্বারা দীর্ঘকাল যাবৎ সেই ভাবে শুশ্রূষা করিল; যাহাতে দময়ন্তী ক্রমশঃ শীঘ্রই চৈতন্য লাভ করিলেন॥১১২॥

অন্বয়:—अयि (हे) कले! (इयं) स्फुटं श्वसिति (इति) कलय; (हे) चले! (अस्याः) पक्ष्म चलति (इति) परिभावय; (हे) मेनके! (अस्याः) अधरकम्पनम् उन्नय, [हे] कल्पलते! [इयं] किम् अपि जल्पति [इति] शृणु; [हे] चारुमते! [अस्याः] स्तनयोः वृतिं रचय; [हे] केशिनि! असंयतम् [अस्याः] केशं कलय; [हे] तरङ्गिणि! [अस्याः] नेत्रयोः जलझरौ अवगृहाण; इति गिरः शुश्रुविरे [बहिर्लोकैः]॥११३—११४॥

अर्थेति। युग्मकम्। कलादीनि सखीनां नामानि। तेन तेन च नाम्ना सखीभिरेव सख्यः सम्बोधिता इति ध्येयम्। अथ च तथाप्राप्तमप्यन्वयम्। हे कले! इयं दमयन्ती, स्फुटं स्पष्टम्, श्वसिति श्वासं मुञ्चति इति कलय आलोचय। अतएव चैतन्यं प्राप्तेति भावः। अन्यत्राप्येवम्। हे चले! पक्ष्म अस्या नेत्रलोम, चलति स्पन्दते, इति परिभावय सर्वथा पश्य। हे मेनके! अस्य अधरकम्पनम् ओष्ठस्पन्दनम्, उन्नय अवधारय। हे कल्पलते! इयं किमपि जल्पति कथयतीति शृणु। क्रमादिमायैतन्यावस्था इत्यवधेयम्।

हे चारुमते! अस्याः स्तनयोः वृतिं वस्त्रोत्सारणमावरणम्, रचय कुरु। अन्यथा सम्यक् चैतन्याभावादस्या लज्जा न जायते, पश्चात्तु जायत एवेति भावः। हे केशिनि! असंयतम् अबद्धम्, अस्याः केश्यं केशपाशम्, कलय संयमय। अन्यथा नेत्रादुपरिपातेनास्या महानुपद्रवः स्यादित्याशयः। हे तरङ्गिणि! अस्या नेत्रयोः जलझरौ अश्रुप्रवाहद्वयम्, अवगृहाण मार्जय, येन हि एतद्दर्शनमप्यस्माकं दुःखकरमेव वर्तत इति भावः। इति इत्थं गिरो वाक्यानि शुश्रुविरे बहिर्गतलोकैरपि श्रुताः।

अत्र प्रथमश्लोके छेकानुप्रासः; द्वितीये तु वृत्त्यनुप्रासः। अनयोरित्थमित्यादिपदानामनुक्तावपि वक्तॄणामुन्नायकत्वमप्रतया न न्यूनपदतादोषः। मधुररसभावशान्माधुर्यं गुणः, वैदर्भी च रीतिः।

"तद्वृन्दे कैशिकं कैश्यम्" इत्यमरः।

केशानां समूह इति कैश्यम् "यत् च प्रकीर्त्तितः" इति यत्। "कलिः कामधेनुः" इति मल्लिनाथः। अतएवैतत्कविनापि तदैव श्लोकद्वये कलयेति वर्योरिवार्थयोः प्रयुक्तम्॥११३—११४॥

বাঙ্গালা—তদনন্তর, কলা! দেখ—দময়ন্তী স্পষ্টই শ্বাস-প্রশ্বাস করিতেছে; চলা! ইহার চোখের লোম চলিতেছে দেখ; মেনকা! ইহার ওষ্ঠ কাঁপিতেছে অনুভব কর; কল্পলতা! দময়ন্তী কোন বিষয় বলিতেছে, শোন। চারুমতি! উহার স্তন দুইটীকে আবৃত কর; কেশিনী! ইহার খোলা চুলগুলিকে বাঁধিয়া দাও এবং তরঙ্গিণি! ইহার নয়নযুগল হইতে যে দুইটি অশ্রুজলের ধারা পড়িতেছে, তাহা মুছিয়া দাও—এই জাতীয় বাক্য সকল বাহিরের লোকেও শুনিল॥১১৩—১১৪॥

कलकलः स तदालिजनाननात् उदलसद्विपुलस्त्वरितेरितैः ।
यमधिगम्य सुतालयमीयिवान् (१) धृतदरः (२) स विदर्भपुरन्दरः ॥११५॥

कन्यान्तःपुरबाधनाय यदधीकारान्न दोषा नृपं
द्वौ मन्त्रिप्रवरश्च तुल्यमगदङ्कारश्च तावूचतुः ।
देवाकर्णय सुश्रुतेन चरकस्योक्तेन जानेऽखिलं
स्यादस्या नलदं विना न दलने तापस्य कोऽपि क्षमः ॥११६॥

---

**अन्वयः**—तदा त्वरितेरितैः विपुलः सः कलकलः आलिजनाननात् उदलसत्; यम् अधिगम्य धृतदरः [सन्] सः विदर्भपुरन्दरः सुतालयम् ईयिवान् ॥११५॥

कलकल इति । तदा त्वरितेरितैः 'कलि' इत्यादिवचनानां शीघ्रशीघ्रोच्चारणैः हेतुभिः, विपुलो विशालीकृतः, स कलकलः कोलाहलः, आलिजनानां दमयन्त्याः सखीजनानाम् आननाम्बुजात् उदलसत् उदभूत्; यं कलकलम्, अधिगम्य श्रुत्वा, धृतदरः दमयन्त्याः किं जातमित्याशङ्कितः सन्, स प्रसिद्धः, विदर्भपुरन्दरो विदर्भराजः, सुतायाः कन्याया दमयन्त्या आलयं भवनम्, ईयिवान् आगतवान् ।

अत्र तृतीयचतुर्थपादयोश्छेकानुप्रासोऽलङ्कारः, प्रसादो गुणः, वैदर्भी च रीतिः ॥११५॥

**বাঙ্গালা**—'কলি' ইত্যাদি বাক্যগুলি শীঘ্র শীঘ্র উচ্চারণ করায় বিশাল সেই কোলাহল সখীগণের মুখ হইতে উৎপন্ন হইল ; যে কোলাহল শুনিয়া আশঙ্কিত হইয়া, সেই বিদর্ভরাজ কন্যার ভবনে আগমন করিলেন ॥১১৫॥

**অন্বয়ঃ**—दोषाः यदधीकारात् कन्यान्तःपुरबाधनाय न [समर्थाः] तौ मन्त्रिप्रवरश्च अगदङ्कारश्च द्वौ नृपं तुल्यम् ऊचतुः । [हे] देव ! आकर्णय, सुश्रुतेन चरकस्य उक्तेन अखिलं जाने ; अस्याः तापस्य दलने नलदं विना कः अपि न क्षमः स्यात् ॥११६॥

कन्येति । दोषा व्यभिचारादयो रोगादयश्च, ययोर्मन्त्रिप्रवरागदङ्कारयोः अधीकारादाधिपत्यात् आधिपत्यसत्त्वेन सर्वदा तत्त्वावधानकरणादित्यर्थः, कन्यान्तःपुरस्य बाधनाय अन्तर्पीडनाय न समर्था बभूवुरिति शेषः । तौ मन्त्रिप्रवरः प्रधानमन्त्री च, अगदङ्कारश्चिकित्सकश्च, एतौ द्वौ, नृपेण सार्द्धमेवागताविति भावः ; नृपं राजानं भीमम्, तुल्यं समानम्, ऊचतुः उक्तवन्तौ उभावेकमेव वाक्यमुक्तवन्ताविति तात्पर्य्यम् । किं तद्वाक्यमित्याह—हे देव ! राजन् ! आकर्णय शृणु, सुश्रुतेन सम्यगाकर्णितेन चरएव न श्रवणक्षमसम्भव इति भावः । चर एव चरकः स्वार्थे कप्रत्ययात् गुप्तचर इत्यर्थः तस्य उक्तेन उक्त्या, अखिलम् अस्य कन्यान्तःपुरस्य सर्वं वृत्तान्तम्, जाने अवगच्छामि । इति मन्त्रिप्रवरवचनम् । सुश्रुतेन सुश्रुताख्यवैद्यकग्रन्थाध्ययनेन, चरकस्य चरकनाम्नो वैद्यकग्रन्थप्रणेतुर्मुनेः उक्तेन वचनेन तदीयवचनज्ञानेन चेत्यर्थः अखिलं जाने । इत्यगदङ्कारवचनम् । किं जानीषि इत्याह—अस्या दमयन्त्याः तापस्य कामसन्तापस्य दलने उपशमने नलं राजानं ददाति दीव्यादिद्वारा पतित्वेन अर्पयतीति नलदः पुरुषविशेषः तं विना कोऽपि अन्यः क्षमः समर्थः न स्यात् । इति मन्त्रिप्रवरवचनम् । अस्यास्तापस्य ज्वरस्य दलने निवारणे नलदम् उशीरं विना कोऽपि पदार्थः क्षमो न स्यात् । अस्मिन् रोगे ज्वरघ्नस्य नलदस्यैवोपयोगित्वादित्याशयः । इत्यगदङ्कारवचनम् । तेन सत्वरमेव नलदप्रयोजनमित्युभयोरेवाभिप्रायः ।

अत्र द्वयोरपार्थयोः प्रक्रान्तत्वात् पदश्लेषोऽलङ्कारश्चतुर्थपादगतेन वृत्त्यनुप्रासेन संसृज्यते । तथा प्रथमपादे दोषा

---

[१] सुतालयमेतवान् । [२] द्रुततरः ।

**ताभ्यामभूद्युगपदप्यभिधीयमानं भेदव्यपाकृति मिथः प्रतिघातमेव ।**
**श्रोत्रे तु तस्य पपतुर्न पतेर्न किञ्चित् भैम्यामनिष्टशत-शङ्कितयाकुलस्य ॥११७॥**
**द्रुत-विगमित-विप्रयोग-चिह्नाम् अपि तनयां नृपतिः पदप्रणम्राम् ।**
**अकलयदसमाशुगाधिमग्नां झटिति पराशयवेदिना हि विज्ञाः ॥११८॥**

---

इत्यस्य क्रियापदाभावात् न्यूनपदतादोषः, 'कन्यान्तःपुरबाधने समयकम् दोषा न यद्दोषणात् द्वौ मन्त्रिप्रवरौ भिषक् च सदृशं तावूचतुः पार्थिवम्' इति पाठे नासौ परिहार्य्यः । प्रसादो गुणः वैदर्भी च रीतिः ।

"रोगहार्य्यगदङ्कारो भिषग्वैद्यौ चिकित्सके" इति "स्यादीरणं वीरतरं मूलेऽस्योशी म स्त्रियाम् । अभयं नलदं सेव्यम्" इत्यादि चामरः ।

अधीकारादिति "क्रस्वस्य दीर्घता" इति क्वचिदधिकाराद्दीर्घः । अगदं करोतीति करोतेः कर्मण्यपि "खत्यागदास्तुनां कारि" इति मकारागमः । द्वितीयपादे चकारद्वयं प्रत्येकप्राधान्यसूचनार्थम् ।

शार्दूलविक्रीडितं वृत्तम् ॥११६॥

বাঙ্গালা—যাঁহারা সর্বদা তত্ত্বাবধান করিতে থাকায় দোষ সকল, কন্যান্তঃপুরের উপদ্রব করিতে সমর্থ হইয়াছিল না; সেই প্রধান মন্ত্রী এবং চিকিৎসক ইহাঁরা দুই জনেই রাজাকে এক কথা বলিলেন—"মহারাজ! শ্রবণ করুন—গুপ্তচরের উক্ত ভাব করিয়া শুনিয়া, আমি সমস্তই জানিয়াছি; যে, নলরাজার ঘটক লোক ভিন্ন, ইহার কামসন্তাপ নিবৃত্ত করিতে অন্য কোন লোকই সমর্থ হইবে না; (অন্য পক্ষে) সুশ্রুতসংহিতা ও চরকসংহিতা পড়িয়া আমি সমস্তই জানিয়াছি; যে, বিন্নার মূল ছাড়া অন্য কোন বস্তুই ইহার জ্বরের তাপ নিবৃত্ত করিতে সমর্থ হইবে না।" ॥১১৬॥

**অন্বয়ঃ**—ताभ्यां युगपत् अभिधीयमानं भेदव्यपाकृति अपि (तत्) मिथः प्रतिघातम् एव अभूत् । भैम्याम् अनिष्ट-शत-शङ्कितया आकुलस्य तस्य नृपतेः श्रोत्रे तु किञ्चित् न पपतुः ॥११७॥

मन्त्रिप्रवरवचनं लज्जाकरमिति तस्य राज्ञः श्रवणाभावमाह ताभ्यामिति । ताभ्यां मन्त्रिप्रवरागदङ्काराभ्याम्, युगपदेकदा, अभिधीयमानमुच्यमानम्, भेदस्य शब्दवैलक्षण्यस्य व्यपाकृतिर्निराकरणं यत्र तत् अभिन्नशब्दकमपीत्यर्थः, तद्वचनम्, मिथः परस्परं प्रतिघातः अर्थपार्थक्यं यत्र तत् तादृशमिवाभूत् । किन्तु भैम्यां दमयन्त्यां विषये, अनिष्टशतस्य बहुतरानर्थस्य शङ्कितया हेतुना, आकुलस्य विह्वलीभूतस्य, तस्य नृपतेर्भीमराजस्य, श्रोत्रे कर्णद्वयम् किञ्चित् एकतरस्यापि वचनम् न पपतुर्न शुश्रुवतुः ; भैम्यामनिष्टशतशङ्कितया आकुलत्वादेवेति भावः ।

अतएवात्र पदार्थहेतुकं काव्यलिङ्गमलङ्कारस्तृतीयपादगतश्छेकानुप्रासेन संसृज्यते । तथा पूर्वार्द्धे तत्पदस्य वाक्यवचनपदस्य वा अनभिधानात् न्यूनपदतादोषः ; स च "तद्भेदनिष्कृति मिथःप्रतिघातमेव" इति पाठेन समाधेयः । प्रसादो गुणः वैदर्भी च रीतिः ।

भेदाव्यपाकृतीत्यत्र व्यपाकृतिपदस्य जन्मादित्वाङ्गीकारात् व्यधिकरणबहुव्रीहिरङ्गीकृतः "सप्तम्यौ बहुव्रीहिव्यधिकरणौ जन्माद्युत्तरपदे" इति वामनवचनात् ।

वसन्ततिलका वृत्तम् ॥११७॥

বাঙ্গালা—প্রধানমন্ত্রী ও চিকিৎসক ইহাঁরা একদা এক রকমেরই কথা বলিলেও, সে কথার অর্থের পরস্পর ভেদ ছিল। কিন্তু ভীমরাজা দময়ন্তীর বহুতর অনিষ্ট আশঙ্কা করিয়া আকুল হইয়া পড়িয়াছিলেন; তাই তাঁহার কর্ণযুগল কোন কথাই শুনিয়াছিল না ॥১১৭॥

**व्यतरदथ पिताशिषं सुतायै नतशिरसे सहसोन्नमय्य मौलिम् ।**
**दयितमभिमतं स्वयंवरे त्वं गुणमयमाप्नुहि वासरैः कियद्भिः ॥११९॥**
**तदनु स तनुजासखीरवादीत् तुहिनऋतौ गत एव हीदृशीनाम् ।**
**कुसुममपि शरायते शरीरे तदुचितमाचरतोपचारमस्याः ॥१२०॥**

---

**अन्वयः**—नृपतिः पदप्रणतां द्रुत-विगमित-वियोग-चिह्नाम् अपि तनयाम् असमाशुगाधिमग्नाम् अकलयत् । हि विज्ञाः झटिति पराशयवेदिनः (भवन्ति) ॥११८॥

द्रुतेति । नृपतिर्भैमी राजा, पदयो राज्ञ एव चरणयोः प्रणामामवनताम्, द्रुतं विगमितानि राज्ञी दर्शनभयात् सखीभिरपसारितानि वियोगचिह्नानि विरहतापशान्तिनिमित्तदत्तपद्मदलादीनि यस्यास्तामपि स्वरूपेण स्थितामपीत्यर्थः तनयां दमयन्तीम्, असमाः पञ्चत्वादसमानसंख्यका आशुगा बाणा यस्य सः असमाशुगः कामस्तेन य आधिर्मानसी व्यथा तत्र मग्नाम्, अकलयत् अबुध्यत । ननु चिह्नाभावे कथमकलयदित्याह—हि यस्मात्, विज्ञा जनाः, झटिति चिह्नविलक्षणादर्शनेऽपि हठादेव, पराशयवेदिनः परमनोभावज्ञाः, भवन्तीति शेषः ; स्वबुद्धिनैपुण्यादेवेति भावः ।

अत्र कामचिह्नदर्शनरूपहेतोरभावेऽपि तदाधिमग्नत्वज्ञानोत्पत्तेर्विभावनालङ्कारः, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्च ; अनयोर्मिथोनिरपेक्षतया संसृष्टिः । प्रसादो गुणः वैदर्भी च रीतिः ।

इतः प्रभृति श्लोकचतुष्टये पुष्पिताग्रा वृत्तम् "अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा" इति लक्षणात् ॥११८॥

**বাঙ্গালা**—রাজা উপস্থিত হওয়ামাত্রই দময়ন্তী তাঁহার চরণে প্রণত হইলেন ; সখীরা পূর্ব্বেই তাঁহার পদ্মদলপ্রভৃতি বিয়োগচিহ্নগুলিকে তাড়াতাড়ি সরাইয়া ফেলিয়াছিল ; তথাপি রাজা তাঁহাকে কামপীড়ামগ্ন বলিয়া মনে করিলেন । কারণ, বিচক্ষণ লোকেরা সত্বরই পরের মনের ভাব বুঝিতে পারেন ॥১১৮॥

**অন্বয়:**—অথ পিতা সহসা মৌলিম্ উন্নময্য নতশিরসে সুতায়ৈ 'त्वं कियद्भिः वासरैः स्वयंवरे गुणमयम् अभिमतं दयितम् आप्नुहि' (इति) आशिषं व्यतरत् ॥११९॥

व्यतरदिति । अथ कामपीडामग्नत्वज्ञानानन्तरम्, पिता भीमः, सहसा प्रणामानन्तरमेव, आदराधिक्यादिति भावः, मौलिं दमयन्त्या मस्तकम्, उन्नमय्य स्पर्शनोत्तोल्य, नतशिरसे विनयादवनतशिरोभावेनावस्थितायै, सुतायै दमयन्त्यै, 'त्वं कियद्भिः वासरैर्दिवसैः, स्वयं व्रियते अस्मिन्निति स्वयंवरो वरसमाजस्तत्र, गुणमयं शौर्य्यसौन्दर्य्यादिगुणबहुलम्, अतएव अभिमतं स्वमनीनीनम्, दयितं प्रियं पतिम्, आप्नुहि लभस्व' इति आशिषं व्यतरत् दत्तवान् । एतेन कतिपयदिनमध्य एवात्मना स्वयंवरानुष्ठानं कर्त्तव्यमिति पिता सूचितम् ।

अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥११९॥

**বাঙ্গালা**—তাহার পর, পিতা বিদর্ভরাজ তৎক্ষণাৎ দময়ন্তীর মস্তক উত্তোলন করিলেন ; তখন দময়ন্তীও সেখানে অবনতমস্তকে দাঁড়াইয়া রহিলেন ; সেই সময়ে পিতা আশীর্ব্বাদ করিলেন যে তুমি কয়েক দিনের মধ্যেই স্বয়ংবরসভায় গুণবান্ মনোমত পতি লাভ করিবে ॥১১৯॥

**অন্বয়:**—तदनु सः तनुजा-सखीः अवादीत् तुहिनऋतौ गते एव हि ईदृशीनां शरीरे कुसुमम् अपि शरायते ; तत् उचितम् अस्याः उपचारम् आचरत ॥१२०॥

तदिति । तदनु आशीर्वादात् परम्, स विदर्भराजः, तनुजाया आत्मजाया दमयन्त्याः सखीः प्रधानानाम्

कतिपयदिवसैर्वयस्यया वः स्वयमभिलष्य वरिष्यते वरीयान् ।
क्लमिम-शमनयाऽनया तदाप्तुं रुचिरुचिताथ भवद्विधा-विधाभिः (१) ॥१२१॥
एवं यद्वदता नृपेण तनया नापृच्छि लज्जास्पदं
यच्चोदः स्मरभूरवाच्य वपुषः पाण्डुत्वतापादिभिः ।
यच्चान्योः कपटादवादि सुहृदो स्वासत्र या सान्त्वना
तन्मत्वाऽलिजनौ मनोऽभिमतनोदानन्द-मन्दाक्षयोः ॥१२२॥

अवादीत् । किमवादीदित्याह-तुहिनऋतौ शीतर्त्तौ गत एव, हि यस्मात्, ईदृशीनां कोमलाङ्गीनां नवयौवना-नाञ्च अबलानाम्, शरीरे, कुसुममपि पतितं पुष्पमपि, शरायते शरवत् तीक्ष्णं भवति ; शीतापगमेन त्वाच-प्रत्यक्षस्याधिक्याविर्भावात् कोमलाङ्गत्वाच्चेति भावः । अथच कुसुममपि कामबाणीभूतं पुष्पमपि, शरायते इतरधनुर्धरशरवदाचरति तद्वदेव वेदनां ददातीत्यर्थः, वसन्तकालस्योद्दीपकत्वात् नवयौवनत्वाच्चेति वस्तुना वस्तु-ध्वनिः । तत् तस्मात्, उचितं योग्यम्, अस्या दमयन्त्याः, उपचारं शुश्रूषाम्, आचरत यूयं कुरुत ; यथा कुसुमपातोऽपि न भवति तथा कुरुत ; अथच नलिनीदलादिभिः शीतोपचारं कुरुतेत्यर्थः ।

अत्र कथञ्चीपमालङ्कारश्छेकानुप्रासेन संसृज्यते । तथा तुहिनऋताविति सन्धिविश्लेषदोषः ; स च 'हिम-समये' इति पाठेन समाधेयः । प्रसादो गुणः, वैदर्भी च रीतिः ।

तुहिनऋताविति "ऋत्यकः" "अनित्यसमासेऽनुपसर्गसमासस्य ह्रस्वश्च" इति पक्षे प्रकृतिभावः ॥१२०॥

বাঙ্গালা—তাহার পরে, রাজা দময়ন্তীর সখীদিগকে বলিলেন যে, "শীতকাল অতীত হইলেই যে হেতু এই রকম স্ত্রীলোকদিগের শরীরে পুষ্পও বাণের মতই আচরণ করে ; সেই হেতু তোমরা ইহার উপযুক্ত শুশ্রূষা কর" ॥১২০॥

অন্বয়.—( হে সখ্যঃ ) বঃ বয়স্যয়া কতিপয়দিবসৈঃ স্বয়ম্ অভিলষ্য বরীয়ান্ বরিষ্যতে । তত্ অথ অনয়া ক্লমিম-শম নয়া রুচিঃ ভবদ্বিধা-বিধাভিঃ আপ্তুম্ উচিতা ॥১২১॥

कतिपयेति । एतदपि 'स तनुजासखीरवादीत्' इति पूर्वेणान्वीयते । हे सख्यः ! वो युष्माकम्, वय-स्यया सख्या दमयन्त्या, कतिपयदिवसैः, स्वयमात्मनैव, अभिलष्य अभिलाषेण निर्वाच्य, वरीयान् अतियुवा वरः, वरिष्यति वरीष्यते । तस्मात् वरस्यापि शोभनीयतया आवश्यकत्वादित्यर्थः ; अथ इतः परम्, अनया युष्मत् सख्या दमयन्त्या, क्लमिमः शरीरकृशतायाः शमं निवृत्तिं नयति स्थूलतासम्पादनेन प्रापयतीति क्लमिम-शम-नया रुचिरिच्छा पानभोजनादीनामभिलाष इति यावत्, भवद्विधानां भवादृशीनां स्निग्धसखीनां विधाभिः प्रकारैः ध्वनिर्व्याजरोधयुक्त्यादिभिरित्यर्थः, आप्तुं प्राप्तुम्, उचिता योग्या । युष्माकं चेष्टया यथेयमुपयुक्तपानभोजना-दिना पूर्ववदेव शरीरं लभेत तथा कुरुतेत्यर्थः ।

अत्र प्रथमचरणे वृत्त्यनुप्रासः, अन्यत्र तु छेकानुप्रास इत्यनयोः संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"वरीयानतियूनि स्यात् वरिष्ठे श्रेष्ठयोगयोः" इति "रुचिर्मयूखे शोभायामभिष्वङ्गाभिलाषयोः" इति "विधा गजान्ने ऋद्धौ च प्रकारे वेतने विधौ" इति च विश्वः ॥१२१॥

বাঙ্গালা—হে সখীগণ ! তোমাদের সখী কয়েক দিনের মধ্যেই নিজে মনোনীত করিয়া সুন্দর যুবা বরকে বরণ করিবে । অতএব ইহার পর, তোমাদের মত লোকের চেষ্টায় ইহার শরীরের কৃশতানাশক পানভোজনাদির ইচ্ছা করা উচিত ॥১২১॥

অন্বয়ঃ—एवं वदता नृपेण यत् तनया लज्जास्पदं न अपृच्छि वपुषः पाण्डुत्वतापादिभिः यत्

(१) भवद्विधाभिधाभिः ।

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।
तुर्यः स्थैर्यविचारणप्रकरणभ्रातर्ययं तन्महा-
काव्ये चारुणि नैषधीयचरिते (१) सर्गो निसर्गोज्ज्वलः ॥१२३॥

अरमुः मोहः अकल्पि, कपटात् यत् च आशीः अवादि, तत्र सदृशी या सान्त्वना स्यात् (सा च यत् अवादि) आलिजनः तत् मत्वा मनः आनन्द-मन्दाचयोः अब्धिम् अतनीत् ॥१२२॥

एवमिति। एवं पूर्वोक्तप्रकारम्, वदता नृपेण भीमेन, यत् तनया दमयन्ती, लज्जास्पदं लज्जाविषयीभूतां तस्या विरहवेदनाम्, न पृष्टा लज्जास्पदत्वादेव न पृष्टा। अत एव तदवगतमेवेति भावः। वपुषो दमयन्त्याः शरीरस्य, पाण्डुत्वतापादिभिः पाण्डुत्वदर्शनेन नलिनीदलादिदर्शनात् तापानुमानेन आदिपदात् क्लान्तेः प्रयत्नेन चत्वर्थः, यत्, अरात् कामाद्भवतीति अरभुः कामोत्पन्नः, मोहो निश्चितता, अकल्पि अनुमतापि। कपटात् यच्च आशीः "दयितमभिमतम्" इत्यादिकमाशीर्वचनम्, अवादि उक्ता। वस्तुतस्तु तत् स्वयं कर्तव्यानुष्ठानमारभ्य-मेव कृतमिति भावः। तत्र अरमुचि मोहे, सदृशी योग्या, या सान्त्वना आश्वासनं स्यात्, सा च "स्वयमभिलष वरीतान् वरः वरिष्यते" इत्यादिकञ्च यदवादीत्यन्वयः। आलिजनः सखीजनः, तत् सर्वम्, मत्वा बुद्ध्वा, मनः स्वस्व-चित्तं, आनन्दः प्रीतिः दमयन्त्याः स्वयंवरस्य भावित्वादिति भावः मन्दाक्ष लज्जा राज्ञः सर्वावगमादिति या-श्रयः, तयोः, अब्धिं समुद्रम्, अतनीत् अकरोत्। सखीनां मनसि महती प्रीतिर्लज्जा च जातेति निष्कर्षः।

अत्र प्रश्नाभावं प्रति लज्जास्पदपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, मनोऽब्धिमिति निरङ्ग केवल-रूपकम्, आनन्द-लज्जाख्यभावद्वयसन्धानात् भावसन्धिः, वृत्त्यनुप्रासच्छेकानुप्रासयोश्च तेषां संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः।

"कर्मण्यप्रधाने दुह्यादिभ्यः" इति तनयेत्यप्रधानकर्मणि उक्तता।

अतनदित्यादिना एतदन्तेन पद्यचतुष्टयेन भाविसर्गसूचनं वेदितव्यम्।

शार्दूलविक्रीडितं वृत्तम् ॥१२२॥

বাঙ্গালা—রাজা এইরূপ বলিয়া, দময়ন্তীকে যে লজ্জার বিষয় জিজ্ঞাসা করেন নাই; শরীরের পাণ্ডুতা ও সন্তাপপ্রভৃতি দেখিয়া যে কামজনিত মোহের অনুমান করিয়াছেন; ছল করিয়া যে আশীর্বাদ করিয়াছেন এবং সেই কামজনিত মোহের বিষয়ে উপযুক্ত যে আশ্বাস হইতে পারে, তাহাও যে বলিয়াছেন; তাহা সমস্তই বুঝিয়া, সখীরা আপন আপন মনকে আনন্দ ও লজ্জার সাগরস্বরূপ করিল ॥১২২।

श्रीहर्षमिति। स्थैर्यविचारणम् आत्मनः क्षणभङ्गुरत्वनिराकरणपूर्वकचिरस्थिरत्वविवेचनं यस्मिन् तदाख्यं यत् प्रकरणं ग्रन्थस्तस्य भ्रातरि अनुजे, तत्प्रकरणस्याप्यनेनैव जनितत्वादिति भावः। तुर्यश्चतुर्थः। अन्यत् सर्वं पूर्ववत्। चतुर्णां पूरण इति तुर्यः, "पूरणे यदीयौ चलोपश्च" इति चत्वारशब्दात् यत्प्रत्यय आदिचकारलोपश्च ॥१२३॥

सम-वेद-वसु-चन्द्र-सम्मिते वत्सरे शकजकोष आश्विने।
शाणपञ्चघटकाष्टमीतिथौ निर्मितेति हरिदासशर्मणा ॥

इति श्रीहरिदाससिद्धान्तवागीशभट्टाचार्यविरचितायां नैषधचरितटीकायां
जयन्तीसमाख्यायां चतुर्थः सर्गः ॥०॥

(१) ··· काव्येऽत्र ममलक्षणे चरिते

# पञ्चमः सर्गः ।

—:*:—

यावदागमयतेऽथ नरेन्द्रान् स स्वयंवर-महाय महीन्द्रः ।
तावदेव ऋषिरिन्द्रदिदृक्षुः नारदस्त्रिदशधाम जगाम ॥१॥
नात्र चित्रमनु तं प्रययौ यत् पर्वतः स खलु तस्य सपक्षः ।
नारदस्तु जगतो गुरुरुच्चैः विस्मयाय गगनं विललङ्घे ॥२॥

---

**अन्वयः**—अथ सः महीन्द्रः स्वयंवर-महाय यावत् नरेन्द्रान् आगमयते ; तावत् एव नारदः ऋषिः इन्द्रदिदृक्षुः (सन्) त्रिदशधाम जगाम ॥१॥

देव ! प्रभुत्व ! भयङ्करात्मनः प्रभुते प्रमनकिङ्करात्मन ।
भक्तिनाथ ! ननु मुक्तिदानतो भक्तिमन्तमव भक्तनिघ्न ! माम् ॥

पूर्वसर्गसूचितस्वयंवरानुष्ठानोपक्रमं प्रदर्शयन्नाह यावदिति । अथ दमयन्त्याः समाश्वासनानन्तरम् स महीन्द्रो राजा भीमः, स्वयंवरेण यो महः उत्सवस्तस्मै, यावत् नरेन्द्रान् आहूतान् नृपतीन्, आगमयते प्रतीक्षते ; तावदेव तत्कालमध्य एव, नारदो नाम ऋषिः, इन्द्रं दिदृक्षुः द्रष्टुमिच्छुः सन्, त्रिदशधाम स्वर्गलोकं जगाम ।

अत्र महाय महीन्द्र इति छेकानुप्रासः धाम जगामेति च अन्त्यानुप्रासः, अनयोः संसृष्टिः । तावदेव ऋषिरिति विसन्धिनिर्देशात् सन्धिविश्लेषो दोषः, स च ऋषिरित्यत्र मुनिरिति पाठेन समाधेयः । प्रसादो गुणः, वैदर्भी च रीतिः ।

आगमयत इति "गमेर् क्षान्तौ" इति कथादित्वादात्मनेपदम् । तावदेव ऋषिरिति "ऋत्यकः" इत्यसमासेऽगुण-सर्गसमानस्य ह्रस्वश्च" इति पक्षे प्रकृतिभावः । इन्द्रदिदृक्षुरिति द्वितीयातत्पुरुषः समासः । नारं नरसमूहं द्यति कलहघटनया अवखण्डयतीति नारदः ।

अस्मिन् सर्गे स्वागता नाम वृत्तम् । "स्वागतेति रनभाद्गुरुयुग्मम्" इति लक्षणात् ॥१॥

বাঙ্গালা—তাহার পর, সেই ভীমরাজা স্বয়ংবর উৎসবের জন্য, যাবৎকাল আহূত রাজগণের প্রতীক্ষা করিতেছিলেন ; তাহার মধ্যেই নারদমুনি ইন্দ্রের সঙ্গে সাক্ষাৎ করিবার জন্য স্বর্গলোকে গমন করিলেন ॥১॥

**अन्वयः**—तस्य सपक्षः खलु सः पर्वतः यत् तम् अनु प्रययौ अत्र चित्रं न ; तु जगतः उच्चैः गुरुः नारदः विस्मयाय गगनं विललङ्घे ॥२॥

नेति । तस्य नारदस्य सपक्षः ऋषित्वादेव सवर्ग्यः आत्मीय इत्यर्थः । खलु वाक्यालङ्कारे । स प्रसिद्धः पर्वतः पर्वतो नाम ऋषिः शैलश्च यत् तं नारदम् अनु पश्चात् प्रययौ गतवान् ; अत्र विषये चित्रं किञ्चिदाश्चर्यम् नासीत् ; आत्मीयानामात्मीयानुगमनस्य लोके प्रसिद्धत्वात् शैलत्वेऽपि पक्षशालित्वेन पक्षिवदेव गमनसम्भवादिति भावः । तु किन्तु जगतां मध्ये उच्चैः प्रधानः गुरुभारवान् नारदः विस्मयाय जगत एवाश्चर्याय गगनमाकाशं ।

**गच्छता पथि विनैव विमानं व्योम तेन मुनिना विजगाहे।**
**साधने हि नियमोऽन्यजनानां योगिनां तु तपसाखिलसिद्धिः॥३॥**
**खण्डितेन्द्रभवनाद्यभिमानान् लङ्घते स्म मुनिरेष विमानान्।**
**अर्थितोऽप्यतिथितामनुमेने नैव तत्पतिभिरद्धिविमर्शैः॥४॥**

गम्, निम्नमहि उल्लङ्घनेनातिचक्राम; प्रधानभारवान् पदार्थ उल्लङ्घनेन यदाकाशं लङ्घयति तद्विस्मयजनकमेव भवति अधिकभारवत्त्वेन पतनस्यैव सम्भवादिति भावः। अतएव विरोधः। अथ च गुरुः प्रधानयोगित्वात् पूजनीयः उपदेष्टृत्वात् शिक्षको वेति तत्समाधानम्।

अत्र एवात्र विरोधाभासोऽलङ्कारः चित्राभावं प्रति सपक्षपदस्यार्थौ हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, अत्र छिन्नमिति च्छेकानुप्रासश्चेत्येतेषां संसृष्टिः। प्रसादो गुणः वैदर्भी च रीतिः।

"पर्वतः शैलदेवर्ष्योः" इति "पक्षस्य परतो हन्दे बले सखिसहाययोः" इति च विश्वः।

लङ्घिरयं भौवादिक आत्मनेपदी ॥२॥

বাঙ্গালা—নারদের অ আত্মীয় প্রসিদ্ধ পর্বতমুনি যে তাঁহার অনুগমন করিয়াছিলেন, এবিষয়ে কোনই আশ্চর্য্য ছিল না; কিন্তু জগতের মধ্যে প্রধান গুরু (ভারী, উপদেষ্টা) নারদ যে আকাশ লঙ্ঘন করিয়াছিলেন, তাহাই আশ্চর্য্য হইয়াছিল ॥২॥

**अन्वयः**—विमानं विना एव पथि गच्छता तेन मुनिना व्योम विजगाहे। हि अन्यजनानां साधने नियमः, योगिनां तु तपसा अखिलसिद्धिः ॥३॥

गच्छतेति। विमानं व्योमयानं विनैव पथि आकाशमार्गे, गच्छता तेन मुनिना नारदेन, व्योम आकाशम्, विजगाहे आलोडयामास आलोड्य गमनेनातिचक्रामेत्यर्थः। हि यस्मात्, अन्यजनानां साधने गमनादिकार्य्यसम्पादने, नियमः यानवाहनाद्युपकरणानां व्यवस्था, किन्तु योगिनां तपसैव अखिलस्य कार्य्यस्य सिद्धिः सम्पादनं भवति।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः।

तपसा सर्वसिद्धिमाह—लिखितस्वधृतं मनुस्मृतिवचनम्—

"तपोभिः प्राप्यतेऽभीष्टं नासाध्यं हि तपस्यतः। दुर्भगत्वं वृथा लोको वहते सति साधने" ॥३॥

বাঙ্গালা—নারদমুনি বিমান ব্যতীতই আকাশপথে গমন করিতে থাকিয়া, সে আকাশ অতিক্রম করিতে লাগিলেন। কেন না, অন্য লোকেরই কার্য্যসম্পাদনের বেলায় বিশেষ বিশেষ উপায়ের নিয়ম থাকে; কিন্তু যোগিগণের একমাত্র তপস্যা দ্বারাই সমস্ত কার্য্যের সিদ্ধি হয় ॥৩॥

**अन्वयः**—एष मुनिः खण्डितेन्द्रभवनाद्यभिमानान् विमानान् लङ्घते स्म; (किन्तु) अद्धिविमर्शैः तत्पतिभिः अर्थितः अपि अतिथितां न एव अनुमेने ॥४॥

खण्डितेति। एष मुनिर्नारदः, खण्डितं स्वसौन्दर्य्याधिक्येन निराकृतम् इन्द्रभवनादीनाम् अभिमानं सौन्दर्य्यगर्वो यैस्तान्, विमानान् व्योमयानानि, लङ्घते स्म अतिक्रम्य गतवान्। किन्तु अद्धिविमर्शैः सत्यावमर्शैः, तत्पतिभिस्तेषां विमानानां स्वामिभिः, अर्थितोऽपि आतिथ्यस्वीकाराय याचितोऽपि, एष मुनिरित्यन्वयः, अतिथिताम् आतिथ्यम्, नैव अनुमेने विलम्बभयान्नानुमतवान्।

अत्र प्रथमार्द्धे प्रतीयमाना आर्थोपमालङ्कारश्छेकानुप्रासेन संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः ॥४॥

तस्य तापनभिया तपनः स्वं तावदेव समकोचयदर्च्चिः।
यावदेव दिवसेन शशीव द्रागतप्यत न तन्महसैव ॥५॥
पर्य्यभूद्दिनमणिर्द्विजराजं यत् करैरहह तेन तदा तम्।
पर्य्यभूत् खलु करैर्द्विजराजः कर्म्म कः स्वकृतमत्र न भुङ्क्ते ॥६॥

বাঙ্গালা—যে গুলি ইন্দ্রভবনাদিরও সৌন্দর্য্যগর্ব নষ্ট করিয়াছিল, সেই বিমানগুলিকে অতিক্রম করিয়া নারদ যাইতে লাগিলেন; কিন্তু সেই সকল বিমানের স্বামীরা চরণে প্রণত হইয়া প্রার্থনা করিলেও, তিনি তাঁহাদের আতিথ্য স্বীকার করিলেন না ।৪।

অন্বয়:—तपनः तस्य तापनभिया स्वम् अर्च्चिः तावत् एव समकोचयत्, यावत् एव दिवसेन शशी इव तन्महसा एव तपनः द्राक् न अतप्यत ॥५॥

तस्येति। तपनः सूर्य्यः, तस्य नारदस्य, यत् तापनं स्वाभाविकस्वतेजःप्रभावेण तापोत्पादनं तस्मात् भिया भयेन, स्वं स्वकीयम्, अर्च्चिस्तेजः, तावदेव तत्परिमाणमेव समकोचयत् सङ्कोचितवान् उपसंहृतवानिति यावत्; तद्गौरवात् तच्छापभयाच्चेति भावः। यावदेव यत्परिमाणसङ्कोचनेनैव, दिवसेन दिवसवर्त्तिना स्वतेजसा, शशी चन्द्र इव, तस्य नारदस्य महसैव तेजसैव, असौ तपनः स्वयं द्राक् द्रुतम्, न अतप्यत तप्तोऽभवत्; तथात्वे आत्मनोऽपि कष्टं स्यादिति भावः।

अत्र तपनस्य स्वार्च्चिःसङ्कोचन सम्बन्धेऽपि तदसम्बन्धाभिधानादतिशयोक्तिः, श्रौतीपमा, प्रथमपादे छेकानुप्रासश्चेत्येषां संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः ॥५॥

বাঙ্গালা—নারদ সন্তাপে কষ্ট পাইবেন এই আশঙ্কায় সূর্য্য, আপন তেজকে ততটুকু পরিমাণে সঙ্কোচিত করিলেন; যাহাতে দিনের বেলায় নিজের তেজে চন্দ্র যেমন তপ্ত হন; সেইরূপ নারদের তেজেই তিনি (সূর্য্য) শীঘ্র তপ্ত না হন ॥৫।

অন্বয়:—दिनमणिः करैः द्विजराजं यत् पर्य्यभूत् तेन तदा द्विजराजः खलु करैः तं पर्य्यभूत्; अहह! अत्र कः स्वकृतं कर्म्म न भुङ्क्ते ॥६॥

पर्य्यभूदिति। दिनमणिः सूर्य्यः, करैः किरणैर्हस्तैश्च, द्विजराजं चन्द्रमेव द्विजराजं ब्राह्मणश्रेष्ठम्, यत् यस्माद्धेतोः पर्य्यभूत् अन्यदा पराजितवान्; तेन हेतुना तदा तस्मिन् काले, द्विजराजाख्यः ब्राह्मणश्रेष्ठो नारद एव द्विजराजश्चन्द्र एव करैः किरणैः हस्तैश्च, तं दिनमणिम्, पर्य्यभूत् पराजितवान्; नारदस्य तापनभयेन तस्य तेजःसङ्कोचनात् नारदेनात्मतेजोवर्द्धनाच्चेति भावः। तथा च अत्र जगति, को जनः, स्वकृतं कर्म्म आत्मना यज्जातीयं कर्म्म कृतम् तज्जातीयं कर्म्मेत्यर्थः, न भुङ्क्ते नानुभवति, अपि तु सर्व एव भुङ्क्ते इत्यर्थः; । घातं कुर्वन् प्रतिघातं लभत एवेति भावः।

अत्र चन्द्रब्राह्मणयोर्भेदेऽपि द्विजराजपदश्लेषेणाभेदाध्यवसायादतिशयोक्तिरियम्, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः, अर्थापत्तिश्चेत्येषामङ्गाङ्गिभावेन सङ्करः। पर्य्यभूदिति द्विरुक्तावपि न कथितपदतादोषः, तस्येह ग्राह्यतिर्द्धिग्राभिन्नविषयत्वात्। अत्र तु तद्वत्त्वात्। प्रसादो गुणः वैदर्भी च रीतिः।

"अहहेत्यद्भुते खेदे" इत्यमरः।

भुङ्क्ते इत्यत्रानवनार्थत्वादेव "भुजोऽनवने" इत्यात्मनेपदम् ॥६॥

বাঙ্গালা—সূর্য্য আপন কিরণ দ্বারা যেহেতু দ্বিজরাজকে (চন্দ্রকে, ব্রাহ্মণশ্রেষ্ঠকে) পরাভূত করিয়াছিলেন; সেই হেতু তখন দ্বিজরাজই (ব্রাহ্মণশ্রেষ্ঠ নারদই, চন্দ্রই) কিরণ

**विष्टरं तटकुशालिभिरद्भिः पाद्यमर्घ्यमथ कच्छरुहाभिः।**
**पद्मवृन्दमधुभिर्मधुपर्कं स्वर्गसिन्धुरदितातिथयेऽस्मै ॥७॥**
**स व्यतीत्य वियदन्तरगाधं नाक-नायक-निकेतनमाप।**
**सम्प्रतीर्य्य भवसिन्धुमनादिं ब्रह्म शर्म्मभरचारु यतीव ॥८॥**

---

দ্বারা সেই সূর্য্যকে পরাভূত করিলেন। কারণ, এই জগতে কোন্ ব্যক্তি আপন কৃত কর্ম্মের অনুরূপ কর্ম্ম ভোগ না করে? ।৬।

**অন্বয়:**—অথ স্বর্গসিন্ধুঃ অস্মৈ অতিথয়ে তটকুশালিভিঃ বিষ্টরম্, অদ্ভিঃ পাদ্যং কচ্ছরুহাভিঃ অর্ঘ্যং, পদ্মবৃন্দমধুভিঃ মধুপর্কং (চ) অদিত ॥৭॥

বিষ্টরমিতি। অথ সূর্য্যপরিভবানন্তরম্, স্বর্গসিন্ধুঃ স্বর্নদী মন্দাকিনী, অস্মৈ অতিথয়ে নারদায়, তটে আত্মন এব তীরে যাঃ কুশানাম্ আলয়ঃ শ্রেণয়স্তাভিঃ, বিষ্টরমাসনম্, অদিত দত্তবতী, স্বতীরস্থকুশানেব কুশাসনত্বে নাকল্পয়দিত্যর্থঃ। এবমন্যত্রাপি বোধ্যম্। অদ্ভিঃ স্বজলৈঃ, পাদ্যং পাদপ্রক্ষালনার্থং জলম্, অদিত। কচ্ছরুহাভিঃ স্বজলপ্রায়দেশজাতাভির্দূর্বাভিরিতি তাৎপর্য্যম্, অর্ঘ্যম্, অদিত। তথা পদ্মবৃন্দস্য মধুভির্মকরন্দৈঃ, মধুপর্কম্, অদিত। মন্দাকিন্যাস্তটকুশাদীনবলোক্য নারদস্তুতোষেতি নিষ্কর্ষঃ।

অত্র অদিতেত্যেকয়া ক্রিয়য়া বিষ্টরাদীনাং কর্ম্মতয়াভিসম্বন্ধাৎ তুল্যযোগিতালঙ্কারঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ।

"জলপ্রায়মনূপং স্যাৎ পুংসি কচ্ছস্তথাবিধঃ" ইত্যমরঃ ॥৭॥

**বাঙ্গালা**—তাহার পর, স্বর্গনদী মন্দাকিনী অতিথি নারদকে তীরজাত কুশসমূহ দ্বারা আসন, জল দ্বারা পাদ্য, জলসমীপজাত দূর্বা দ্বারা অর্ঘ্য এবং পদ্মসমূহের মধু দ্বারা মধুপর্ক দান করিলেন ॥৭॥

**অন্বয়:**—যতী অনাদিং ভবসিন্ধুং সম্প্রতীর্য্য শর্ম্মভরচারু ব্রহ্ম ইব, সঃ অগাধম্ অন্তঃ বিয়ৎ ব্যতীত্য নাক-নায়ক-নিকেতনম্ আপ ॥৮॥

স ইতি। যতী যোগাভ্যাসেন জিতেন্দ্রিয়ো জনঃ, অনাদিং ভবসিন্ধুং সংসারসাগরম্, সম্প্রতীর্য্য যোগবলেন উত্তীর্য্য, শর্ম্মভরেণ সুখবাহুল্যেন সুখরূপত্বেনেত্যর্থঃ চারু মনোহরম্, ব্রহ্ম পরমাত্মানমিব; স নারদঃ, অগাধম্ অনন্তম্, অন্তঃ স্বর্গমর্ত্ত্যযোরন্তরালবর্ত্তি, বিয়ৎ আকাশম্, ব্যতীত্য অতিক্রম্য, নাকনায়কস্য স্বর্গাধিপতেরিন্দ্রস্য নিকেতনং ভবনম্, আপ প্রাপ্তবান্।

অত্র যতীবেতি শ্রৌতোপমা, ভবসিন্ধুমিতি নিরঙ্গং কেবলরূপকম্, নাক-নিকে ইতি ছেকানুপ্রাসশ্চ এতেষাং সংসৃষ্টিঃ। তথা যতী ব্রহ্ম আপ্নোতি, নারদস্তু নিকেতনমাপেতি কালভেদাৎ ভগ্নপ্রক্রমতাদোষঃ, "কাব্যমিথ্যা তয়োরাসীৎ" ইত্যাদিবদ্দোষোদাহরণবৎ। তেন "নাকনায়কনিকেতনমগচ্ছৎ।... ব্রহ্ম গচ্ছতি যতী মুক্তি যথা" ইতি পাঠেনাসৌ পরিহার্য্যঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ।

"সাদিঃ সংসারঃ" "অনাদিঃ সংসারঃ" ইতি মতদ্বয়ে সত্যপি অনাদিত্বমতস্যৈব বহুজনাদৃতত্বাৎ ভবসিন্ধুমনাদিমিত্যুক্তম্। "সত্যং জ্ঞানমানন্দং ব্রহ্ম" ইতি শ্রুত্যা ব্রহ্মণঃ সুখরূপত্বস্য বোধনত্বেঽপি শর্ম্মভরচারু ইতি রাহোঃ শির ইত্যাদিবৎ নির্দ্দিষ্টঃ ॥৮॥

**বাঙ্গালা**—যোগী জন যেমন অনাদি সংসার সাগর অতিক্রম করিয়া, অনন্তসুখমনো-

अर्घ्यनाभिरुचितोन्नतराभिः चारु तं सदकृतातिथिमिन्द्रः ।
यावदर्हकरणं किल साधोः प्रत्यवायधुतये न गुणाय ॥९॥
नामधेय-समता-सखमद्रेः अद्रिभिन्मुनिमथाद्रियत द्राक् ।
पर्वतोऽपि लभतां कथमर्घ्यां न द्विजः स विबुधप्रभुलम्भी ॥१०॥

হয় ব্রহ্ম পদার্থ লাভ করেন ; যেমন নারদ, স্বর্গ ও মর্ত্ত্যের অন্তরালবর্ত্তী অনন্ত আকাশ অতিক্রম করিয়া, স্বর্গরাজ ইন্দ্রের ভবন লাভ করিলেন ।৮।

**অন্বয়:**—इन्द्रः उचितोन्नताभिः अर्घ्यनाभिः तम् अतिथिं चारु सत् अकृत । साधोः यावदर्हकरणं प्रत्यवायधुतये किल, (किन्तु) गुणाय न (सम्पद्यते) ॥९॥

अर्घ्यनाभिरिति । इन्द्रः, उचिताभ्योऽपि योग्याभ्योऽपि अर्घ्यनाभ्यः उन्नतराभिः, अधिकाभिः अर्घ्यनाभिः पाद्यादिना पूजाभिः, तमतिथिं पर्वतमुनिसहचरं नारदम्, चारु मनोहरम् यथा स्यात्तथा, सदकृत सत्कृतवान् सम्मानितवानित्यर्थः । ननु अनुलब्धभवः स्वर्गभागी नाधिकं वैभवं कामयते अत न वा तद्विचितमर्हमपासीत् ; तथापि कथमीदृशं काम्यं कर्म कृतवानित्याह यावदिति । साधोः सज्जनस्यातिथेः, यावदर्हं यथायोग्यम् सत्कारकार्य्यं तस्य करणं सम्पादनम्, प्रत्यवायस्य पञ्चसूनाजनितपापस्य धुतये नाशाय, सम्पद्यते ; किन्तु गुणाय पुण्याय, न सम्पद्यत इति शेषः । तथा च उपात्तदुरितक्षयाय सन्ध्यावन्दनादिवत् नित्यविधयैव तादृशं सत्कारं कृतवान्, न पुनः काम्यविधयेति भावः ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः न गुणायेति शब्देनाभ्यर्थीदनात् शाब्दी परिसंख्या च अनयोरङ्गाङ्गिभावेन सङ्करः । प्रसादो गुणः वैदर्भी च रीतिः ।

अर्हं यावदिति यावदर्हम् अवधारणे अव्ययीभावः ।

पञ्चसूना मनुनोक्ता यथा—"पञ्चसूना गृहस्थस्य चुल्लीपेषण्युपस्करः ।
कण्डनी चोदकुम्भश्च बध्यते यास्तु वाहयन् ॥"

पञ्चमहायज्ञसत्त्वेऽप्युक्तं नैव यथा—
"अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् । होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥"
पञ्चैतान् यो महायज्ञान् न हापयति शक्तितः । स गृहेऽपि वसन्नित्यं सूनादोषैर्न लिप्यते ॥" ॥९॥

**বাঙ্গালা**—ইন্দ্র, যোগ্য অপেক্ষাও অতিরিক্ত পূজা দ্বারা সুন্দর ভাবে সেই অতিথি নারদের সৎকার করিলেন । কারণ, সাধু অতিথির উপযুক্ত সম্মান করাটা পাপক্ষয়ের জন্যই হইয়া থাকে ; কিন্তু পুণ্যের জন্য নহে ।৯।

**অন্বয়:**—अथ अद्रिभित् अद्रेः नामधेय-समता-सखं मुनिं द्राक् आद्रियत । पर्वतः अपि सः द्विजः विबुधप्रभुलम्भी (सन्) कथम् अर्घ्यां न लभताम् ॥१०॥

नामेति । अथ नारदस्य सत्कारानन्तरम्, अद्रिभित् पर्वतपक्षच्छेत्ता इन्द्रः, अद्रेः पर्वतस्य, नामधेयसमतया पर्वतेति नामसाम्यतया सखा इति नामधेयसमतासखस्तम्, मुनिं पर्वतर्षिम्, द्राक् शीघ्रम्, आद्रियत सत्कारेण आहृतवान् । ननु शत्रोः सखा शत्रुरेव भवति ; तत्कथं पर्वतभित्ता पर्वतस्यैव सखायमाद्रियतेत्युपपद्यत इत्याह पर्वत इति । पर्वतोऽपि नाममात्रेण पर्वतः सन्नपि स द्विजो ब्राह्मणः, विबुधप्रभुं देवराजं विवेचकमेतञ्च लभत इति स तथोक्तः सन्, कथमर्घ्यां पूजाम्, न लभतां न प्रप्नुयात्, अपितु लभतामेवेत्यर्थः । तथा च नारदसहचरोऽसौ ब्राह्मणः नाममात्रेणैव पर्वतः, न तु जात्या ; इत्यत देवराजोऽपि विवेचकमेव इति ज्ञात्वा तस्य अतिथिभूतस्य सत्कारादरलाभो ना सम्भव इति भावः ।

तद्भुजादतिवितीर्णसपर्य्यान् द्यु-द्रुमानपि विवेद मुनीन्द्रः ।
स्वः-सह-स्थिति-सुशिक्षितया तान् दान-पारमितयैव वदान्यान् ॥११॥
मुद्रितान्यजनसंकथनः सन् नारदं बलरिपुः समवादीत् ।
आकरः स्व-पर-भूरि-कथानां प्रायशो हि सुहृदोः सहवासः ॥१२॥

---

अत्र कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासोऽर्थापत्त्या सङ्कीर्य्यते, सोऽपि च सङ्करः पूर्व्वार्द्धगतश्लेषानुप्राणित संसृष्टः। प्रसादो गुणः, वैदर्भी च रीतिः ॥१०॥

**বাঙ্গালা**—তাহার পর, নারদের সহচর সেই মুনি, নামের তুল্যতানিবন্ধন পর্বতের সখা হইলেও, পর্বতভেদী ইন্দ্র শীঘ্রই সৎকার করিয়া তাঁহার আদর করিলেন। কারণ, তিনি পর্বত হইলেও ব্রাহ্মণ ছিলেন এবং বিবেচক শ্রেষ্ঠ দেবরাজের নিকট উপস্থিত হইয়াছিলেন ; সুতরাং তিনি পূজা পাইবেন না কেন ॥১০॥

**अन्वयः**—मुनीन्द्रः तान् द्यु-द्रुमान् अपि अतिवितीर्णसपर्य्यान् तद्भुजात् स्वः-सह-स्थिति-सुशिक्षितया दान-पारमितया एव वदान्यान् विवेद ॥११॥

तद्भुजादिति। मुनीन्द्रो नारदः, तान् प्रसिद्धान्, दिवः स्वर्गस्य द्रुमा इति द्युद्रुमाः पारिजातादयो वृक्षास्तानपि, अतिवितीर्णा अतिशयेन दत्ता सपर्य्या पूजा येन तस्मात्, तस्य इन्द्रस्य भुजात् हस्तात्। सुशिक्षापेक्षया अपादानत्वात् पञ्चमी। स्वः स्वर्गे या सहस्थितिरेकत्रावस्थानं तया हेतुना सुशिक्षिता सम्यगभ्यस्ता तया, दानपारमितयैव अतिरिक्तदानशक्त्यैव, वदान्यान् दानशीलान्, विवेद मेने। कल्पवृक्षादयो यदिच्छानुरूपं ददुः, तदिन्द्रहस्तकृतदानदर्शनादेवेति निष्कर्षः।

अत्र मेने इतिसमानार्थकेन विवेदेत्यनेन दानपारमितारूपहेतोरुत्प्रेक्षणात् वाच्या हेतूत्प्रेक्षालङ्कारः। बन्धोत्कर्षस्य आरोहावरोहाभ्याम् ओजो गुणः, पाञ्चाली च रीतिः।

"स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे" इत्यमरः।

परमस्य भाव इति पारमं दाने पारमं दानपारमं तदस्यास्तीति दानपारमी तस्य भावो दानपारमिता तया ॥११॥

**বাঙ্গালা**—ইন্দ্রের হস্ত সেই সময়ে অধিক পরিমাণে পূজা দান করিয়াছিল ; সুতরাং সেই হস্তের সহিত স্বর্গে একত্র বাস করাবশতঃ পারিজাতপ্রভৃতি স্বর্গীয় বৃক্ষগুলি যে সেই ইন্দ্রহস্ত হইতে অতিরিক্ত দানশক্তি শিক্ষা করিয়াছিল ; তাহাতেই যেন সেই বৃক্ষগুলি অতিশয় দাতা হইয়াছিল ইহা নারদ মনে করিলেন ॥১১॥

**अन्वयः**—बलरिपुः मुद्रितान्यजनसंकथनः सन् नारदं समवादीत्। हि सुहृदोः सहवासः प्रायशः स्व-पर-भूरि कथानाम् आकरः ॥१२॥

मुद्रितेति। बलरिपुरिन्द्रः, मुद्रितं निवारितम् अन्येन जनेन सह संकथनमालापो येन स तादृशः सन्, नारदं, समवादीत् उक्तवान्। हि यस्मात्, सुहृदोः वयस्ययोः, सहवास एकत्रावस्थानम्, प्रायशो बाहुल्येनैव स्वेषु आत्मीयेषु परेषु अनात्मीयेषु च या भूरयः प्रचुराः कथा आलापास्तासाम्, आकरः खनिरुत्पत्तिस्थानमित्यर्थः। अतएव इन्द्रः अन्येन सहालापं विहाय स्वपरभूरिकथाः प्रस्तौतुं नारदं समवादीदिति भावः।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः ॥१२॥

**বাঙ্গালা**—ইন্দ্র অন্য লোকের সহিত আলাপ পরিত্যাগ করিয়া নারদকে বলিতে

त्वं कथानुकथनप्रसृतायां दूरमालपनकौतुकितायाम्।
भूभृतां चिरमनागतिहेतुं ज्ञातुमिच्छुरवदच्छतमन्युः॥१३॥
प्रागिव प्रसुवते नृपवंशाः किं नु सम्प्रति न वीरकरीरान्।
ये परप्रहरणैः परिणामे विक्षताः क्षितितले निपतन्ति॥१४॥
पार्थिवं हि निजमाजिषु वीराः दूरमूर्द्धगमनस्य विरोधि।
गौरवाद्वपुरपास्य भजन्ते मत्कृतामतिथिगौरव-ऋद्धिम॥१५॥

লাগমেন। কারণ, দুইটী বন্ধুর একত্র অবস্থান, প্রায়শঃ আত্মীয় ও অনাত্মীয়ের বিষয়ে নানা কথার আকর হইয়া থাকে॥১২॥

**अन्वयः**—आलपनकौतुकितायां दूरं कथानुकथनप्रसृतायां (सत्याम्) शतमन्युः चिरं भूभृताम् अनागतिहेतुं ज्ञातुम् इच्छुः (सन्) त्वम् अवदत्॥१३॥

त्वमिति। आलपनकौतुकितायाम् परस्परालापकौतुके, दूरमत्यन्तम, कथानुकथनाभ्यां परस्परकथोपकथनाभ्याम् प्रसृतायां विस्तृतायां सत्याम्, शतमन्युरिन्द्रः, चिरं दीर्घकालं यावत्, भूभृतां मर्त्यवासिनां राज्ञाम्, अनागतेः स्वर्गं अनुपस्थितेः हेतुम्, ज्ञातुमिच्छुः सन्, त्वं नारदम्, अवदत्।

अत्र छेकानुप्रासोऽलङ्कारः, प्रसादो गुणः, वैदर्भी च रीतिः॥१३॥

**বাঙ্গালা**—কথোপকথন দ্বারা আলাপের কৌতূহল অত্যন্ত বিস্তৃত হইয়া পড়িলে, দীর্ঘকাল যাবৎ মর্ত্তলোকবাসী রাজাদের স্বর্গে না আসিবার কারণ জানিতে ইচ্ছা করিয়া ইন্দ্র নারদকে বলিলেন॥১৩॥

**अन्वयः**—नृपवंशाः प्राक् इव सम्प्रति वीर करीरान् किं नु न प्रसुवते; ये परिणामे परप्रहरणैः विक्षताः (सन्तः) क्षितितले निपतन्ति॥१४॥

प्रागिति। हे मुने। नृपाणां वंशाः कुलान्येव वंशा वेणवः, प्राक् पूर्वमिव, सम्प्रति इदानीम्, वीरा एव करीरा वंशाङ्कुरास्तान्, किन्नु न प्रसुवते उत्पादयन्ति। ये वीरकरीराः, परिणामे युद्धशिक्षावसाने परिपक्कतावस्थायाञ्च, परेषां शत्रूणां गजस्थानाञ्च, प्रहरणैः बाणादिभिः कुठारादिभिश्च अस्त्रैः, विक्षता विदीर्णाः छिन्नाश्च सन्तः, क्षितितले भूमिकोपरि, निपतन्ति लुठन्ति।

अत्र श्लिष्टवंशशब्देन नृपकुलेषु वेणुत्वारोपो वीरसन्तानेषु करीरत्वारोपे निमित्तमिति श्लिष्टपरम्परितरूपकमलङ्कारः परार्द्धगतच्छेकानुप्रासेन संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः॥१४॥

**বাঙ্গালা**—মহার্ষি! রাজবংশরূপ বাঁশঝাড় এখন কি আর পূর্ব্বের ন্যায় বীরসন্তানরূপ করীর উৎপাদন করে না? যাহারা পরিণামে অন্যের অস্ত্রপ্রহারে ছিন্ন হইয়া ভূতলে লুণ্ঠিত হইয়া থাকে॥১৪॥

**अन्वयः**—हि वीराः गौरवात् ऊर्द्धगमनस्य दूरं विरोधि निजं पार्थिवं वपुः आजिषु अपास्य मत्कृताम् अतिथिगौरवऋद्धिं भजन्ते॥१५॥

ननु नृपवंशानां वीरकरीरप्रसवेन किं नाम ते फलं यत्तत् पृच्छसीत्याह पार्थिवमिति। हि तथाहि, वीराः ते नृपवंशजाः शूराः, गौरवात् पार्थिवत्वेनैव भारवत्त्वात्, ऊर्द्धगमनस्य दूरमत्यन्तम्, विरोधि प्रतिबन्धकम्, निजं स्वकीयम्, पार्थिवं पाञ्चभौतिकत्वेऽपि पार्थिवांशबाहुल्यात् पृथिवीमयम्, वपुः शरीरम्, आजिषु युद्धेषु, अपास्य त्यक्त्वा, मत्कृताः मया विहिताम्, अतिथिगौरवऋद्धिम् अतिथिसत्कारसम्पत्सम्पन्नम्, भजन्ते स्वर्गमागत्य अनु-

साभिशापमिव नातिथयस्ते मां यदद्य भगवन्नुपयन्ति ।
तेन न श्रियमिमां बहु मन्ये स्वोदरैक-भृति-कार्य्य-कदर्य्याम् ॥१६॥
पूर्वपुण्य-विभव-व्यय-लब्धाः सम्पदो (१) विपद एव विमृष्टाः ।
पात्र-पाणिकमलार्पणमासां तासु शान्तिकविधिर्विधिदिष्टः (२) ॥१७॥

यन्ति । अतएव नृपवंशानां वीरकर्त्तीरप्रसवेन अतिथिसत्कारकरणामोदः एव मे फलं तेनैव च तत् पुष्णासीति भावः ।

अत्र पार्थिवशरीरत्यागं प्रति ऊर्द्ध्वगमनविरोधिपदार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । तथा गौरवस्फुितिमित्यत्रापि सन्धिविश्लेषदोषः ; 'गौरवपूजाम्' इति पाठेनास्य समाधेयः । प्रसादो गुणः, वैदर्भी च रीतिः ॥१५॥

বাঙ্গালা—পার্থিব শরীর ভারী বলিয়া উৰ্দ্ধগমনের পক্ষে প্রতিবন্ধক হয় ; এই জন্যই বীরগণ যুদ্ধে আপনাদের সেই পার্থিব শরীর পরিত্যাগ করিয়া (স্বর্গে আসিয়া) আমার কৃত আতিথ্য সৎকারের সম্পদ ভোগ করিতে থাকেন ॥১৫॥

अन्वयः—(हे) भगवन् ! ते अतिथयः अद्य यत् साभिशापम् इव मां न उपयन्ति, तेन स्वोदरैक-भृति-कार्य्य-कदर्य्याम् इमां श्रियं न बहु मन्ये ॥१६॥

ननु वीरास्त्वत्कृतामतिथिगौरवकार्त्तिं मा भजन्तां नाम, तथात्वे का तव क्षतिरित्याह साभिशापमिति । ते वीररूपा अतिथयः, अद्य इदानीम्, यद् यस्मात्, साभिशापमिव केनचिच्छप्तमिव अभिशप्तमिव माम्, न उपयन्ति नागच्छन्ति, "सन्निनाभुमार्य्यो नानुयाप्योऽभिशप्तः" इति स्मरणादिति भावः । तेन हेतुना, स्वोदरस्य एकं केवलं यत् भृतिकार्य्यं परिपूरणरूपं कर्म्म तेन कदर्य्यां कुत्सिताम्, इमां श्रियम् इन्द्रसम्पदम्, न बहु मन्ये न आद्रिये ।

अत्रापि श्रियो बहुमननाभावं प्रति स्वोदरेत्यादिपदार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारो गुणीन्द्रं साकाङ्क्षानुप्रासाभ्यां सङ्कीर्य्यते । तथा मन्य इत्यनेनैव वाक्यसमाप्तौ पुनस्तदन्तर्गतश्रियमित्यस्य विशेषणतया चतुर्थपादोपादानात् समाप्तपुनरात्ततादोषः , न च तृतीयपादस्थाने चतुर्थपादपाठेन समाधेयः । प्रसादो गुणः, वैदर्भी च रीतिः ।

उपयन्तीति उपपूर्वस्य इणधातोरन्ती "इणश्च" इति य आदेशः ॥१६॥

বাঙ্গালা—ভগবন্ ! সেই অতিথিরা যেহেতু এখন আর অভিশপ্তের ন্যায় আমার নিকটে উপস্থিত হন না ; সেই হেতু এই ইন্দ্রসম্পদকে আমি আদর করি না, কেন না এই সম্পদ দ্বারা এখন কেবল নিজের উদর পূরণই হইতেছে ; সুতরাং তাহা কদর্য্য বলিয়াই মনে করিতেছি ॥১৬॥

अन्वयः—पूर्व-पुण्य विभव-व्यय-लब्धाः सम्पदः विपदः एव विमृष्टाः । आसां पात्रपाणिकमलार्पणं तासु शान्तिकविधिः विधिदिष्टः ॥१७॥

वीराणामनागमने कारणान्तरमाह पूर्वेति । पूर्वपुण्यविभवानां पूर्वसञ्चितधर्म्मसम्पदां व्ययेन नाशेन लब्धाः सम्पद इमानि ऐश्वर्य्याणि विपद एव, विमृष्टा विवेचिताः ; वीराद्युर्द्ध्वगमनफलात् स्वर्गादौ अस्मद्वाक्यात्मेति भावः । आसां सम्पदाम्, पात्रस्य सम्प्रदानजनस्य पाणिकमले अर्पणं दानमेव, तासु विपत्सु विषयेषु, शान्तिः

(१) श्रीभराः । (२) विधिदृष्टः

तद्विमृज्य मम संशयशिल्पि स्फीतमत्र विषये बत पापम् ।
भूयतां भगवतः श्रुतिसारैरद्य वाग्भिरघमर्षण-ऋग्भिः ॥१८॥
इत्युदीर्य मघवा विनयार्द्रं वर्णयन्नवहितत्वभरेण ।
चक्षुषां दशशतीमनिमेषां तस्थिवान् मुनिमुखे प्रणिधाय ॥१९॥

---

प्रयोजनमस्येति शान्तिकः शान्तिकारीत्यर्थः स चासौ विधिर्होमादिव्यापारश्चेति शान्तिकविधिः, विधिदिष्टः शास्त्र-विधिनोपदिष्टः ; "आयासशतलब्धस्य प्राणेभ्योऽपि गरीयसः । एकैव गतिरर्थस्य दानमन्या विपत्तयः" इति व्यासश्रुतेरित्याशयः ।

अत्र सम्पदि विपत्त्वस्य पात्रपाणिकमलार्पणे शान्तिकविधित्वस्य चारोपात् निरङ्गं केवलरूपकद्वयं तेनानुप्राणिते तयोः संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥१७॥

বাঙ্গালা—পূর্বপুণ্যসঞ্চয়ের ব্যয়লব্ধ সম্পদগুলি বিপদ বলিয়াই বিবেচিত হইয়া থাকে ; তবে পাত্রের হস্তকমলে সেই সম্পদের সমর্পণ করাই, সেই বিপদের শান্তিকার্য্য ; ইহা শাস্ত্রবিধির উপদেশ ॥১৭॥

**অন্বয়ঃ**—(হে দেবর্ষে ! ) तत् अद्य श्रुतिसारैः भगवतः वाग्भिः अत्र विषये संशयशिल्पि स्फीतं मम अघं सहसा विमृज्य अघमर्षणऋग्भिः भूयताम् ॥१८॥

तदिति । हे देवर्षे ! तस्मात् महतां वीणायामनागमनात् दूतीः, अद्य अस्मिन्दिने, श्रुतिवत् वेदवाक्यवत् सारैः सत्यतया प्रबलाभिः, अन्यत्र तु श्रुतिषु वेदवाक्येषु मध्ये सारैः स्थिरांशभूताभिः उत्कर्षशालिनीभिरित्यर्थः, भगवतो माहात्म्यवतो भवतः, वाग्भिः वीराणामनागमनविषये तत्त्वप्रकाशकैर्वचनैः, अत्र वीराणामनागमन-रूपे विषये, संशयस्य मम पापाद्वा कारणान्तराद्वा अत्र वीरा नागच्छन्तीत्येवं सन्देहस्य शिल्पि उत्पादकम्, स्फीतं प्रवृद्धम्, मम अघं पापम् संशयस्य दुःखजनकतया संशयजनकस्यापि पापत्वम्, पापं विना दुःखासम्भवादिति भावः । सहसा हठादेव, विमृज्य प्रक्षाल्य अघमर्षणऋग्भिः "ऋतञ्च सत्यञ्चाभिध्यात्" इत्यादिमन्त्ररूपाभिः भूयताम् । अघमर्षणमन्त्रा यथा पापं नाशयन्ति तथा भवतो वाचो मम संशयं नाशयन्त्विति तत्त्वार्थः ।

अत्र मुनिवाक्ये आरोप्यमाणस्य अघमर्षणमन्त्रत्वस्य प्रकृतपापक्षयोपयोगितया परिणामालङ्कारः । तथा अघ-मर्षणऋग्भिरिति सन्धिविश्लेषदोषः "अघमर्षणमन्त्रैः" इति पाठेन समाधेयः । प्रसादो गुणः वैदर्भी च रीतिः ।

"सारो बले स्थिरांशे च मज्जि पुंसि जले धने । न्याय्ये क्लीबम् त्रिषु वरे" इति मेदिनी । अतएव बल-स्थिरांशयोः सारशब्दस्य पुंसि वर्त्तमानत्वादत्र वाग्विशेषणत्वेऽपि तस्य न स्त्रीलिङ्गता ; अघमेव महान् दुःख-हेतुरित्यादिवत् ॥१८॥

বাঙ্গালা—অতএব হে দেবর্ষি ! আজ বেদবাক্যের তুল্য প্রবল আপনার বাক্যগুলি, এই বিষয়ে আমার সন্দেহজনক বিশাল পাপকে শীঘ্রই নষ্ট করিয়া অঘমর্ষণমন্ত্রস্বরূপ হউক ॥১৮॥

**অন্বয়ঃ**—मघवा इति उदीर्य अवहितत्वभरेण विनयार्द्रं वर्णयन् (सन्) अनिमेषां चक्षुषां दशशतीं मुनिमुखे प्रणिधाय तस्थिवान् ॥१९॥

इतीति । मघवा इन्द्रः, इति पूर्वोक्तप्रकारम्, उदीर्य उक्त्वा, अवहितत्वस्य नारदवाक्यश्रवणविषये मनोयोग-दानस्य भरेण अतिशयेन, विनयार्द्रं म् आत्मनो नम्रतास्पदम्, वर्णयन्, अनिमेषां देवत्वात् अवहितत्वभराच्च निमेष-

वीक्ष्य तस्य विनये परिपाकं पाकशासन-पदं स्पृशतोऽपि।
नारदः प्रमद-गद्गदयोक्त्या विस्मितः स्मितपुरःसरमूचे ॥२०॥
भिक्षिता शतमखी सुकृतं यत् तत्परिश्रमविदः स्वविभूतौ।
तत्फले यदि परं तव हेला क्लेशलभ्यमधिकादरदं तु ॥२१॥

---

रहिताम्, चक्षुषा, दृशां शतानां समाहार इति दृशशती तां सहस्रमित्यर्थः, मुनेर्नारदस्य मुखे, प्रणिधाय संस्थाप्य, तस्थिवान् तूष्णीं स्थितः।

अत्र च्छेकानुप्रासोऽलङ्कारः, प्रसादो गुणः, वैदर्भी च रीतिः ॥१९॥

বাঙ্গালা—ইন্দ্র এই কথা বলিয়া, অতিরিক্ত মনোযোগ দান করায় অতিরিক্ত বিনয় প্রকাশ করতঃ, নির্নিমেষ সহস্র নয়ন নারদের মুখে স্থাপন করিয়া, নীরবে রহিলেন ॥১৯॥

अन्वयः—नारदः पाकशासनपदं स्पृशतः अपि तस्य विनये परिपाकं वीक्ष्य विस्मितः (सन्) प्रमद-गद्गदया उक्त्या स्मितपुरःसरम् ऊचे ॥२०॥

वीक्ष्येति। नारदः, पाकशासनपदम् इन्द्रस्थानम्, स्पृशतोऽपि अधितिष्ठतोऽपि, अगत्यतुलनीयैश्वर्यशालिनोऽपीत्यर्थः, तस्य देवराजस्य, विनये नम्रतायाम्, परिपाकं नैपुण्यम्, वीक्ष्य दृष्ट्वा, विस्मित आश्चर्यान्वितः सन्, प्रमदेन आनन्देन गद्गदया अस्पष्टया, उक्त्या वाचा, स्मितपुरःसरम् ईषद्धास्यपूर्वकम्, ऊचे उक्तवान्।

अत्र च्छेकानुप्रासोऽलङ्कारः, प्रसादो गुणः, वैदर्भी च रीतिः ॥२०॥

বাঙ্গালা—ইন্দ্রের পদে থাকা সত্ত্বেও দেবরাজের নম্রতাবিষয়ে নৈপুণ্য দেখিয়া নারদ, আশ্চর্য্যান্বিত হইয়া, ঈষৎ হাস্য করিয়া, আনন্দবশতঃ অস্পষ্ট বাক্যে বলিতে লাগিলেন ॥২০॥

अन्वयः—शतमखी सुकृतं यत् भिक्षिता, तत्परिश्रमविदः, तव तत्फले स्वविभूतौ हेला परं यदि। क्लेशलभ्यम् अधिकादरदं तु ॥२१॥

भिक्षितेति। हे इन्द्र! शतस्य मखानां समाहार इति शतमखी शतसंख्यकाश्वमेधयज्ञा इत्यर्थः, सुकृतं पुण्यम्, यत् भिक्षिता प्रार्थिता शतसंख्यकाश्वमेधयज्ञान् कृत्वा यत् पुण्यमर्जितमिति तात्पर्य्यम्, तस्य शतमखीभिक्षणस्य तदनुष्ठानस्येत्यर्थः परिश्रमविदः आयासाभिज्ञस्य तव, तस्य सुकृतस्य फले फलभूतायाम्, स्वविभूतौ अस्यामतुलनीयायां निजसम्पदि, हेला "नाभिशापमिव" इत्यादिना प्रकटिता अवज्ञा, परं यदि अत्यन्तं गर्हणीया। कुतोऽत्यन्तं गर्हणीयेत्याह क्लेशलभ्यं वस्तु, अधिकमादरं ददातीति अधिकादरदं तु स्वाभाविकाधिकादरजनकमेव। अतएव क्लेशलभ्यायां विभूतौ आदरस्थाने अवज्ञा गर्हणीयेति भावः।

अत्र हेलाया गर्हणीयतां प्रति चतुर्थपादवाक्यार्थो हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः। अस्यार्थस्य प्रगाढत्वादोजो गुणः, गौडी च रीतिः।

"यदि गर्हावितर्कयोः" इति मेदिनी। "हेलावज्ञाविलासयोः" इति विश्वप्रकाशः। "तु स्याद्भेदेऽवधारणे" इत्यमरः।

भिक्षधातोर्याचनार्थतया शतमखी सुकृतमिति कर्मद्वयम्। तत्र "कर्मण्यप्रधाने दुहादिभ्यः" इति गौणकर्मण्येवोक्तता ॥२१॥

বাঙ্গালা—ইন্দ্র! তুমি শত অশ্বমেধ যজ্ঞের নিকট যে পুণ্য ভিক্ষা করিয়া লইয়াছিলে, এই অতুলনীয় সম্পদ তাহারই ফল, আর সেই শত অশ্বমেধ যজ্ঞ করিবার পরিশ্রমও তুমি জান। এখন সেই নিজ সম্পদের প্রতি তোমার অবজ্ঞা করা অতিনিন্দনীয়। কারণ ক্লেশলব্ধ বস্তু, তাহাতে অত্যন্ত আদরই জন্মাইয়া থাকে ॥২১॥

सम्पदस्तव गिरामपि दूराः यत्र नाम विनयं विनयन्ते ।
श्रद्दधाति क इवेह न साक्षात् आह चेदनुभवः परमाप्तः ॥२२॥
श्रीभरानतिथिसात् करवाणि स्वोपभोगपरता न हितेति ।
पश्यतो बहिरिवान्तरपायं दृष्टिसृष्टिरधिका तव कापि ॥२३॥
याः स्वभावमधुरैरनुभावैः तावकैरतितरां तरलाः स्मः ।
त्वां प्रशाधि गलितावधिकालं साधु साधु विजयस्व बिडौजः ॥२४॥

---

**अन्वयः**—गिरां दूराः अपि सम्पदः तव विनयं यत् न विनयन्ते नाम। इह कः इव (तत्) श्रद्दधाति ; चेत् परमाप्तः साक्षात् अनुभवः न आह ॥२२॥

सम्पद इति। हे इन्द्र ! गिरां वाचाम्, दूरा अपि अगोचरा अपीत्यर्थः, सम्पदो धनसमृद्धयः, तव विनयं नम्रताम्, यत् न विनयन्ते नाम नापनयन्तीति स्वीकरोमि ; इह जगति, क इव जनः तत् श्रद्दधाति विश्वसिति ; अपि तु कोऽपि नेत्यर्थः, ; चेद्यदि परमाप्तः सर्वादिसम्मतत्वात् सर्वप्रमाणेषु मध्ये ज्येष्ठत्वाच्च अतीव विश्वस्तः, साक्षादनुभवः प्रत्यक्षज्ञानम्, न आह न ब्रवीति। अतुलनीया अपि सम्पदस्तव विनयं नापनीत-वत्य इति वयं सर्वथैव विश्वसिमः सम्प्रति प्रत्यक्षीकरणादिति भावः।

अत्र गिरां दूरत्वासम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिरलङ्कारो विनयं विनयन्तेति यमकेन संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः।

"नाम प्राकाश्यसम्भाव्यक्रोधोपगमकुत्सने" इति "आप्तः प्रत्ययितस्त्रिषु" इति चामरः ॥२२॥

**বাঙ্গালা**—তোমার সম্পদ, বাক্যের অগোচর হইলেও, তাহা যে নম্রতাকে নষ্ট করে নাই, ইহা এই জগতে কোন্ ব্যক্তি বিশ্বাস করিত ; যদি তাহা, অতিবিশ্বস্ত প্রত্যক্ষজ্ঞান বলিয়া না দিত ॥২২॥

**अन्वयः**—श्रीभरान् अतिथिसात् करवाणि स्वोपभोगपरता न हिता इति पश्यतः तव बहिः इव अन्तः अपि इयं का अपि अधिका दृष्टिसृष्टिः (वर्तते) ॥२३॥

श्रीति। श्रीभरान् सम्पत्त्यतिशयान्, अतिथिसात् अतिथिभ्यो देयान्, करवाणि ; किन्तु स्वस्य आत्मन उपभोग एव परः प्रधानं येषां श्रीभराणां तेषां भावः सा श्रीभराणामुपभोगमात्रमित्यर्थः, न हिता न माङ्ग-लिकी ; "आयासशतलब्धस्य" इत्यादिपूर्वोक्तवचनादिति भावः। इति पश्यतो जानतः अवलोकयतश्च तव सम्बन्धे, बहिरिव शरीरस्य बाह्यदेश इव, अन्तरपि अभ्यन्तरेऽपि इयम् अनुभूयमाना, कापि अनिर्वचनीया, अधिका गुरुत्वात् बहुतरा, सूक्ष्मत्वात् सातिशया च, दृष्टीनां नयनानां दृष्टेर्ज्ञानस्य च सृष्टिर्विधेर्निर्माणं वर्तत इति शेषः।

अत्र बहिरिवेति श्रौतोपमा, नयनज्ञानयोर्भेदेऽपि दृष्टिशब्दश्लेषेणाभेदाध्यवसायादतिशयोक्तिश्चानयोरङ्गाङ्गि-भावेन सङ्करः ; सोऽपि च दृष्टिसृष्टिरिति च्छेकानुप्रासेन संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः।

"दृष्टिर्ज्ञानेऽक्ष्णि दर्शने" इत्यमरः ॥२३॥

**বাঙ্গালা**—আমার এই ধনসমৃদ্ধিকে অতিথিদিগের ভোগে লাগাইব ; কিন্তু নিজের ভোগে লাগান মঙ্গলকর নহে ; তুমি এইরূপ বিবেচনা করিতেছ বলিয়া বাহিরের ন্যায় তোমার ভিতরেও এই অনির্বচনীয় অধিক দৃষ্টি রহিয়াছে ॥২৩॥

**সংখ্য-বিচলত-তনু-স্রবদস্র-ক্ষালিতাখিল-নিজাঘ-লঘূনাম্ ।**
**যস্ত্বিহানুপগমঃ শৃণু রাজ্ঞাং তজ্জগদ্‌যুবমুদন্তমুদন্তম্ ॥২৫॥**
**সা ভুবঃ কিমপি রত্নমনর্ঘং ভূষণং জয়তি তত্র কুমারী ।**
**ভীম-ভূপ-তনয়া দময়ন্তী নাম যা মদনশাস্ত্রমমোঘম্ ॥২৬॥**

---

**অন্বয়ঃ**—আঃ (বয়ম্) স্বভাবমধুরৈঃ তাবকৈঃ অনুভাবৈঃ অতিতরাং তরলাঃ স্মঃ। [হে] বিড়ৌজঃ! দ্যাং গলিতাবধিকালং সাধু প্রশাধি, সাধু বিজয়স্ব (চ) ॥২৪॥

আ ইতি। আ ইতি সন্তাপসূচকমব্যয়ম্। সন্তাপশ্চ মুনীনাং তারল্যানৌচিত্যাৎ। স্বভাবেনৈব মধুরাঃ প্রীতিকরাস্তৈঃ, তাবকৈস্ত্বদীয়ৈঃ, অনুভাবৈর্বিনয়ৌদার্য্যপ্রভাবৈঃ, অতিতরাম্ অতিশয়েন, তরলা বিষয়ব্যাসঙ্গচল-চিত্তাঃ, স্মো বয়ং ভবামঃ। অতএব হে বিড়ৌজঃ! ইন্দ্র! দ্যাং স্বর্গম্, গলিতো রহিতঃ অবধিঃ সীমা যস্য স গলিতাবধিঃ কালো যস্মিন্ কর্ম্মণি তদ্ যথা তথা, সাধু সম্যক্, প্রশাধি পরিপালয়; তথা সাধু সম্যক্, বিজয়স্ব সর্বোৎকর্ষেণ বর্ত্তস্ব। সন্তোষবশাদেবমাশাস্মহে প্রযচ্ছাম ইতি ভাবঃ।

অত্র দ্বিতীয়চরণে বৃত্ত্যনুপ্রাসঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ।

"আঃ স্মরণেঽপাকরণে কোপসন্তাপযোরপি" ইতি মেদিনী। "ইন্দ্রো মরুত্বান্ মঘবা বিড়ৌজাঃ পাকশাসনঃ" ইত্যমরঃ।

বেবেষ্টীতি বিট্ ব্যাপকম্ ওজো যস্য স বিড়ৌজাঃ। পৃষোদরাদিত্বাদোত্বম্ ॥২৪॥

বাঙ্গালা—আঃ! তোমার স্বভাবসুন্দর বিনয় ও ঔদার্য্যের প্রভাবে আমরা অত্যন্ত চঞ্চল হইয়াছি। অতএব ইন্দ্র! তুমি অসীমকালপর্য্যন্ত সুন্দরভাবে স্বর্গরাজ্য শাসন কর এবং সম্পূর্ণ রূপে সর্বাপেক্ষা উৎকর্ষ লাভ কর ॥২৪॥

**অন্বয়ঃ**—সংখ্য-বিচলত-তনু-স্রবদস্র-ক্ষালিতাখিল-নিজাঘ-লঘূনাং রাজ্ঞাম্ ইহ যস্তু অনুপগমঃ, তং জগদ্‌যুবমুদম্ উদন্তং তৎ শৃণু ॥২৫॥

প্রকৃতোত্তরং প্রস্তৌতি সংখ্যেতি। সংখ্যে যুদ্ধে বিচলতাভ্যঃ অস্ত্রবিদারিতাভ্যঃ তনুভ্যঃ শরীরেভ্যঃ স্রবন্তি নিঃ-সরন্তি যানি অস্রাণি রুধিরাণি তৈঃ ক্ষালিতানি ধৌতানি যানি অখিলানি নিজানি স্বানি স্বানি অঘানি পাপানি তৈর্হেতুভিঃ লঘূনাং ভারহীনানাং যুদ্ধে মৃতানামিত্যর্থঃ, রাজ্ঞাম্, ইহ স্বর্গে ভবনে, যত্ যস্মাত্ উদন্তাত্ তু তৈঃ, অনুপগমঃ অনুপস্থিতিঃ, তম্, জগদ্‌যূনাং ত্রিভুবনস্থতরুণানাং মুত্ আমোদো যস্মাত্ তং জগদ্‌যুবমুদম্, উদন্তং বৃত্তান্তম্, তত্ তস্মাত্ শ্রবণায় ব্যগ্রত্বাত্, শৃণু।

অত্র স্বর্গগমনযোগ্যতাং প্রতি লঘুপদস্যার্থো হেতুরিতি পদার্থহেতুকং কাব্যলিঙ্গম্, অর্থঃ পাপক্ষালনাসম্বন্ধেঽপি তৎসম্বন্ধাভিধানাদতিশয়োক্তিস্তয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ; সোঽপি চ স্রবদস্রেতি ছেকানুপ্রাসেন মুদন্ত-মুদন্তেতি যমকেন চ সংসৃজ্যতে। সমাসবাহুল্যাদোজো গুণঃ, গৌড়ী চ রীতিঃ।

"মৃধমাস্কন্দনং সংখ্যম্" ইতি যুদ্ধপর্য্যায়ে "বার্ত্তা প্রবৃত্তির্বৃত্তান্ত উদন্তঃ" ইতি চামরঃ ॥২৫॥

বাঙ্গালা—যুদ্ধে অস্ত্রাঘাতে রাজগণের শরীর ক্ষতবিক্ষত হইয়া থাকে; তাহাতে রক্ত নির্গত হইয়া তাঁহাদের স্ব স্ব সমস্ত পাপ প্রক্ষালন করিয়া দেয়; সুতরাং তখন তাঁহারা লঘু (হাল্কা) হইয়া থাকেন; তথাপি তাঁহাদের এই স্বর্গধামে যে আগমন হইতেছে না, ত্রিজগদ্বাসী যুবকদিগের আনন্দজনক সেই বৃত্তান্ত তুমি শোন। কেন না, তাহা শুনিবার জন্য তোমার চিত্ত ব্যগ্র হইয়াছে ॥২৫॥

सम्प्रति प्रतिमुहूर्त्तमपूर्व्वा कापि यौवनजवेन भवन्ती ।
आशिखं सुकृतसारभृते सा क्वापि यूनि भजते किल भावम् ॥२७॥
कथ्यते न कतमः स इति त्वं मां विवक्षुरसि किं चलदोष्ठः ।
अर्द्धवर्त्मनि रुणत्सि न पृच्छां निर्गमेण न परिश्रमयैनाम् ॥२८॥

---

**अन्वयः**—किम् अपि अनर्घं रत्नं भुवः भूषणं भीम-भूप-तनया दमयन्ती नाम सा कुमारी तत्र जयति ; या अमोघं मदनास्त्रम् ॥२६॥

किमिति । किमपि अनिर्व्वचनीयम्, अनर्घम् अमूल्यम्, रत्नं रत्नात्मकम्, भुवः पृथिव्याः, भूषणं भूषणस्वरूपा, भीमभूपस्य भीमनाम्नो राज्ञः, तनया आत्मजा, दमयन्ती नाम दमयन्तीति नाम्ना प्रसिद्धा, सा कुमारी, कन्या, अत्र भुवि, जयति सर्व्वोत्कर्षेण वर्त्तते, या कुमारी, अमोघम् अव्यर्थम्, मदनास्त्रं कामिजनजयाय कामास्त्ररूपा । भीमभूपतनयेत्यनेन सत्कुलजातत्वम्, किमपीत्यादिना अतुलनीयसौन्दर्य्यम्, जयतीत्यनेन सौभाग्यम्, कुमारीत्यनेन विवाहयोग्यत्वम्, मदनास्त्रमित्यनेन च यौवनं व्यज्यत इति वस्तुना वस्तुध्वनिः ।

अत्र किमपि अनर्घं रत्नं भूषणमिति अधिकारूढवैशिष्ट्यं रूपकं मदनास्त्रमिति च निरङ्गं केवलरूपकमनयोर्मिथो निरपेक्षतया संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥२६॥

**বাঙ্গালা**—ভূমণ্ডলের অনির্বচনীয় ও অমূল্য রত্নময়ভূষণস্বরূপা ভীমরাজার তনয়া দময়ন্তী নামে সেই কন্যাটি, সেই ভূমণ্ডলে সর্বশ্রেষ্ঠ অবস্থায় রহিয়াছেন; যিনি অব্যর্থ মদনাস্ত্রস্বরূপ হইয়া উঠিয়াছেন ॥২৬॥

**अन्वयः**—सम्प्रति सा यौवनजवेन प्रतिमुहूर्त्तं का अपि अपूर्व्वा भवन्ती (सती) आशिखं सुकृत-सार भृते क्व अपि यूनि भावं भजते किल ॥२७॥

सम्प्रतीति । सम्प्रति सा दमयन्ती, यौवनस्य जवेन वेगेन वर्द्धमानया यौवनश्रियेत्यर्थः, प्रतिमुहूर्त्तं प्रतिक्षणम्, कापि अनिर्व्वचनीया, अपूर्व्वा आश्चर्य्यरूपा, भवन्ती सती, शिखायाः आ इत्यव्ययीभावः चूडाया अवधि चरणाङ्गुष्ठपर्य्यन्तमित्यर्थः, सुकृतसारेण पुण्योत्कर्षेण भृते परिपूर्णे, पुण्योत्कर्षपूर्णतां विना तादृगनिन्द्यसौन्दर्य्यं न स्यादिति भावः ; क्वापि कस्मिन्नपि, यूनि तरुणे, भावमनुरागम्, भजते आश्रयते । किलेति लोकवार्त्तायाम् । एतेन न स्वल्पविषयमनायाससलभ्यमिति सूचितम् ।

अत्र पूर्व्वार्द्धे च्छेकानुप्रासोऽलङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ॥२७॥

**বাঙ্গালা**—বর্ত্তমান সময়ে সেই কন্যাটি, প্রতিমুহূর্ত্তে বেগে বর্দ্ধমান যৌবনের শোভায় অনির্বচনীয় আশ্চর্য্যমূর্ত্তি হইতে থাকায়, মস্তক হইতে চরণের অঙ্গুষ্ঠপর্য্যন্ত পুণ্যে পরিপূর্ণ কোন যুবকের প্রতি অনুরাগ বহন করিতেছে বলিয়া লোকবাদ শুনা যাইতেছে ॥২৭॥

**अन्वयः**—सः कतमः कथ्यते न ? इति चलदोष्ठः त्वं किं मां विवक्षुः असि ? पृच्छाम् अर्द्धवर्त्मनि न रुणत्सि ? निर्गमेण एनां न परिश्रमय ॥२८॥

कथ्यत इति । स युवा कतमो बहूनां मध्ये कः इति कथ्यते नेति काकुः नोच्यते किमित्यर्थः ; इति चलन्तौ स्फुरन्तौ ओष्ठौ यस्य स चलदोष्ठस्त्वम् किं मां विवक्षुर्वक्तुमिच्छुरसि । पृच्छां प्रश्नम् तत्कालकं प्रश्नवाक्यमित्यर्थः अर्द्धवर्त्मनि मुखमध्य एव न रुणत्सि इत्यपि काकुः किं नावरुणत्सीत्यर्थः ; निर्गमेण मुखान्निःसरणेन एनां पृच्छाम् न परिश्रमय न परिश्रान्तां कुरु । तं नाहं वक्तुमर्हामीति भावः ।

अत्र यतश्चलदोष्ठः अतएव विवक्षुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ॥२८॥

यत्पथावधिरणुः परमः सा योगिधीरपि न पश्यति यस्मात्।
बालया निजमनःपरमाणौ ह्री-दरी-शय-हरीकृतमेनम् ॥२९॥
सा शरस्य कुसुमस्य शरव्यं सूचिता विरहवाचिभिरङ्गैः।
तातचित्तमपि धातुरधत्त स्व-स्वयंवर-महाय सहायम् ॥३०॥

বাঙ্গালা—'সে যুবকটি কে হয়? আপনি বলিতেছেন না কেন' তোমার ওষ্ঠযুগল স্পন্দিত হইতে থাকায় উহা তুমি আমাকে বলিতে ইচ্ছা করিতেছ কেন? অৰ্দ্ধপথে ঐ প্রশ্নবাক্যকে রুদ্ধ কর না কেন? নির্গত করাইয়া ঐ প্রশ্নবাক্যকে পরিশ্রান্ত করিও না।২৮॥

अन्वयः—परमः अणुः यत्पथावधिः, सा योगिधीः अपि यस्मात् बालया निजमनःपरमाणौ ह्री दरी शय-हरीकृतम् एनं न पश्यति ( तस्मात् निर्गमय्य एनां न परिश्रमय ) ॥२९॥

तत्रार्थं प्रति हेतुमाह यत्पथेति। परमोऽणुः अतीवसूक्ष्मः पदार्थः, यस्याः योगिधियः पन्थाः मार्गस्य विषयस्येत्यर्थः अवधिः शेषसीमा; सा योगिनां महात्मनां योगाभ्यासशालिनां धीर्बुद्धिरपि, यस्माद्धेतोः, बालया प्रस्तुतया दमयन्त्या, निजं मन एव परमाणुः अत्यन्तसूक्ष्मः पदार्थस्तस्मिन्, ह्रीर्लज्जैव दरी सिंहाश्रयत्वात् गुहा तत्र शेते तिष्ठतीति ह्रीदरीशयः स चासौ हरिः सिंहश्चेति ह्रीदरीशयहरिः अतः स कृत इति ह्रीदरीशयहरीकृतस्तम्, एनं युवानम् न पश्यति न जानाति; तस्मात् निर्गमय्य एनां न परिश्रमयेति पूर्वेणान्वयः। अथ च योगिनां बुद्धिरपि परमाणुपर्यन्तमेव जानाति न पुनस्तस्मात् परम्। एवञ्च "अयुगपज्ज्ञानानां तस्याणुत्वमिहोच्यते" इति तार्किकसिद्धान्तात् सर्वेषामेव मनसामणुपरिमाणत्वेन दमयन्त्या मनसोऽप्यणुपरिमाणत्वमेवाङ्गीकर्तव्यम्, तत्पर्यन्तमेव च मद्बुद्धिर्गन्तुमर्हतीति न पुनस्तदन्तर्गतम्। तेन तन्मनसि लज्जा, तत्र च स्थितः स युवा इत्यतिरिक्तोपानयं कथं मद्बुद्धिर्जानीयात् कथं वा तमहं वक्तुं शक्नुयामिति भावः। सा तु लज्जावशात् किञ्चिद्ब्रवीति, तत्कथमन्यस्तन्मनोभावं वदेदिति न निष्कर्षः।

अत्र ह्रियां दरीत्वारोपो यूनि हरित्वारोपे निमित्तमिति श्लिष्टशब्दनिबन्धनं परम्परितरूपकमलङ्कारः तदेकाश्रयवर्त्तिना वृत्त्यनुप्रासेन सङ्कीर्यते। बन्धार्थस्य प्रगाढत्वादोजो गुणः, गौडी च रीतिः।

हरीकृतमित्यनेन तस्य यूनः सिंहवत् यत् बलं व्यज्यते इति रूपकाश्रयेण वस्तुध्वनिः ॥२९॥

বাঙ্গালা—যে যোগিবুদ্ধির জানিবার বিষয়ে শেষ সীমা হইল পরমাণু; সেই যোগিবুদ্ধিও ঐ যুবকটীকে জানিতে পারিতেছে না। কারণ, নিজের পরমাণু মনের ভিতর যে লজ্জা আছে, সেই লজ্জারূপ গুহার ভিতরে দময়ন্তী সেই যুবকটীকে সিংহ করিয়া রাখিয়াছে। যে হেতু এইরূপ হইয়াছে, (সে হেতু, তুমি আর ঐ প্রশ্নবাক্যকে নির্গত করাইয়া পরিশ্রান্ত করিও না) ॥২৯॥

अन्वयः—विरहवाचिभिः अङ्गैः कुसुमस्य शरस्य शरव्यं सूचिता सा स्व-स्वयंवर-महाय तातचित्तम् अपि धातुः सहायम् अधत्त ॥३०॥

सेति। विरहवाचिभिः पाण्डुताकृशतादिना लिङ्गेन विरहवेदनासूचकैः, अङ्गैः गण्डस्तनपदादिभिरवयवैः, कुसुमस्य कुसुममयस्य, शरस्य कामबाणस्य, शरव्यं लक्ष्यं सूचिता लक्ष्यत्वेन ज्ञापितेत्यर्थः, सा दमयन्ती, स्वस्वयंवरमहाय आत्मनः स्वयंवरोत्सवाय तदनुष्ठानायेति तात्पर्यम्, तातस्य पितुर्भीमस्य चित्तमपि, धातुर्ब्रह्मणः स्वयंवरानुष्ठानविधित्सोर्विधातुः, सहायं सहचरम्, अधत्त कृतवती, आत्मनो वेदनासूचनादिति भावः। पूर्वैरिष्टाः

**मन्मथाय यदथादित राज्ञां ह्रुति-दूत्य-विषये विधिराज्ञाम् ।**
**तेन तत्परवशाः पृथिवीशाः सङ्गरं गरमिवाकलयन्ति ॥३१॥**
**येषु येषु सरसा दमयन्ती भूषणेषु यदिवापि गुणेषु ।**
**तत्र तत्र कलयापि विशेषः यः स हि क्षितिभृतां पुरुषार्थः ॥३२॥**

---

व्यतिरिकैश्च किमपि कार्य्यं न सम्पद्यते । तेन च तदर्थमेव जायमानतत्स्वयंवरोत्सवसमये दमादर्शिना तत्पित्रे-त्यानुष्ठीयत इति सरलार्थः ।

अत्र च्छेकानुप्रासोऽलङ्कारः, प्रसादो गुणः, वैदर्भी च रीतिः ।

"लक्ष्यं लक्ष्यं शरव्यञ्च" इत्यमरः ॥३०॥

**বাঙ্গালা**—বিরহবেদনাসূচক অঙ্গ সকল, দময়ন্তীকে ( কামদেবের ) পুষ্পময় বাণের লক্ষ্য বলিয়া সূচনা করিয়াছিল ; তাই তিনি নিজের স্বয়ংবর উৎসবের জন্য পিতার চিত্তকেও বিধাতার সহায় করিয়াছেন ॥৩০॥

**অন্বয়ঃ**—अथ विधिः राज्ञां ह्रुति-दूत्य-विषये मन्मथाय यत् आज्ञाम् अदित, तेन तत्परवशाः पृथिवीशाः सङ्गरं गरम् इव आकलयन्ति ॥३१॥

मन्मथायेति । अथ स्वयंवरप्रस्तावानन्तरम्, विधिर्विधाता, राज्ञां या ह्रुतिः स्वयंवरे आगमनाय आह्वानं तत्र यत् दूत्यं दूतकार्य्यं तस्य विषये विधानाय, मन्मथाय कामाय, आज्ञामादेशम्, अदित दत्तवान् । काम एव तत्स्वयंवरगमनाय नृपान् प्रेरयामासेत्यभिप्रायः । तेन हेतुना, तत्परवशाः मन्मथाधीनाः, पृथिवीशा भूपाला राजानः, सङ्गरं युद्धम्, गरं विषमिव, आकलयन्ति मन्यन्ते । यथा खलु जना मरणसम्पादनेन ऐहिकसुख-भोगप्रतिबन्धकं विषं न पिबन्ति, तथा मर्त्यमण्डलस्था राजानश्च आमोदकरमपि मरणसम्पादनेन दमयन्तीलाभ-प्रतिबन्धकं युद्धं नानुतिष्ठन्ति । अतएव हि ते भवदीयभवनं नागच्छन्तीति भावः ।

अत्र पूर्वार्द्धे अन्त्यानुप्रासो यमकं वा मतभेदात्, परार्द्धे तु श्रौतोपमा च्छेकानुप्रासश्चेत्येतेषां संसृष्टिः । पृथिवीशपदं मर्त्यराजबोधकतया विशेषणम् । तेन राज्ञामिति प्रक्रम्य तदुपादानेऽपि न भग्नप्रक्रमता दोषः । माधुर्य्यं गुणः, वैदर्भी च रीतिः ।

"ह्रुतिराकारणाह्वानम्" इत्यमरः । "गरो व्याधावुपविषे विषे च करणे गरम्" इति विश्वः । "सङ्गरो युधि चापदि । क्रियाकारे विषे चाङ्गीकारे क्लीवं शमीफले" इति मेदिनी ॥३१॥

**বাঙ্গালা**—তাহার পর, রাজগণকে আহ্বান করিবার জন্য দৌত্যকার্য্য করিতে কামদেবকে যে হেতু বিধাতা আদেশ করিয়াছিলেন, সেই হেতু পৃথিবীর রাজারা কামাধীন হইয়া, যুদ্ধকে বিষের ন্যায় মনে করিতেছেন ॥৩১॥

**অন্বয়ঃ**—दमयन्ती येषु येषु भूषणेषु यदिवा गुणेषु अपि सरसा ( वर्त्तते ) तत्र तत्र कलया अपि यः विशेषः, सः हि क्षितिभृतां पुरुषार्थः ॥३२॥

येष्विति । दमयन्ती, येषु येषु भूषणेषु अलङ्कारेषु, यदिवा अथवा गुणेषु अपि शोभाविलासादिषु कलाविद्यासु वा, सरसा सानुरागा वर्त्तते ; तत्र तत्र तेषु तेषु दूतवन्यादिभ्यः श्रुतेष्वित्यर्थः, कलयापि लेशेनापि, यो विशेषः अन्यान्यापेक्षया आधिक्यम्, स हि स एव, क्षितिभृतां राज्ञाम्, पुरुषार्थो धर्म्मादिरूपः । राजानः खलु कार्य्या-न्तरमपहाय धर्म्मार्थादिपुरुषार्थमिव महायत्नेन तं विशेषमेवाभ्यस्यन्तो युद्धं न स्मरन्त्यपि ; तेन नागच्छ-न्तीति भावः ।

अत्र पुरुषार्थः पुरुषार्थरूप इति निरङ्गं केवलरूपकमलङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ॥३२॥

**शैशवव्ययदिनावधि तस्याः यौवनोदयिनि राजसमाजे ।**
**आदरादहरहः कुसुमेषोः उल्ललास मृगयाभिनिवेशः ॥३३॥**
**इत्यमी वसुमतीं कमितारः सादरास्त्वदतिथीभवितुं न ।**
**भीमभू-सुरभुवोरभिलाषे दूरमन्तरमहो नृपतीनाम् ॥३४॥**

---

বাঙ্গালা—যে যে অলঙ্কার কিম্বা যে যে গুণের প্রতি দময়ন্তী বিশেষ অনুরাগিণী আছেন; সেই সেই অলঙ্কার বা সেই সেই গুণের বিষয়ে অন্যান্য অপেক্ষা একটুমাত্র যে বিশেষ করা, তাহাই বর্ত্তমানে রাজাদের নিকট পরমপুরুষার্থ হইয়া দাঁড়াইয়াছে ॥৩২॥

**अन्वयः**—यौवनोदयिनि राजसमाजे तस्याः शैशव-व्यय दिना-वधि अहरहः कुसुमेषोः आदरात् मृगयाभिनिवेशः उल्ललास ॥३३॥

शैशवेति । यौवनस्य उदय आविर्भावोऽस्यास्तीति तस्मिन् यौवनोदयिनि यौवनशालिनि; यौवनवयस्येव सर्वेषां कामातिरेकादिति भावः; राज्ञां समाजे समूहे, तस्याः दमयन्त्याः, शैशवव्ययस्य बाल्यवयोऽपगमस्य यद्दिनं तदेव अवधिः प्रथमसीमा यस्मिन् कर्म्मणि तद् यथा तथा, अहरहः प्रतिदिनम्, कुसुमेषोः कामस्य, आदरात्, मृगयायां हिंसाव्यापारस्य अभिनिवेश आग्रहः, उल्ललास उद्बभूव । दमयन्ती युवती जातेति श्रुत्वैव युवकराजगणो नितरां कामातुरो बभूवेति सरलार्थः ।

अत्र दमयन्त्याः शैशवव्ययदिनावध्येव कामस्य मृगयाभिनिवेशासम्बन्धेऽपि तत् सम्बन्धाभिधानादतिशयोक्तिरलङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ॥३३॥

বাঙ্গালা—যে দিন দময়ন্তীর বাল্যবয়স অতীত হইয়াছে, সেই দিন অবধি প্রত্যহই যুবক রাজগণের প্রতি কামদেবের আদরপূর্ব্বক মৃগয়া করিবার আগ্রহ জন্মিয়াছে ॥৩৩॥

**अन्वयः**—इति वसुमतीं कमितारः अमी त्वदतिथीभवितुं सादराः न ( भवन्ति )। अहो ! नृपतीनाम् अभिलाषे भीमभू-सुरभुवोः दूरम् अन्तरम् ॥३४॥

प्रकृतीमर्थमुपसंहरति इतीति । इति हेतोः पृथिव्यामवस्थाने दमयन्त्या लाभसम्भवादित्यर्थः, वसुमतीं पृथिवीमेव, कमितारः अवस्थाने कामयमानाः, अमी नृपतयः, त्वदतिथीभवितुं युद्धमरणेन तवातिथिभवनाय, सादराः साग्रहाः, न भवन्तीति शेषः । ननु मह्यवनेऽपि सुरकन्यास्तान् नृपतीन् वरयितुं साग्रहा एव तिष्ठन्ति । तत् कथम् एकस्माद्दमयन्त्या एव लाभाशया बहव एव नृपतयो वसुमत्यां स्थातुमिच्छन्तीत्याह भीमेत्यादि । अहो इन्द्र ! नृपतीनाम् अभिलाषे विषये, भीमाद्भीमराजाद्भवतीति भीमभूर्दमयन्ती च सुराद्देवाद्भवतीति सुरभूः सुरकन्या च । जातावेकवचनम् । तयोः, दूरमत्यन्तम्, अन्तरं भेदः; दमयन्त्याः सौन्दर्य्यादिगुणानामनेकैर्नृपतिभिः प्रत्यक्षमेव दृष्टत्वात् अनेकेभ्य विश्वस्तदूतकन्यादिभ्यः साक्षादेव श्रुतत्वात्; देवकन्यानान्तु अनुमानात् पुराणमात्रेषु श्रवणादेवेति भावः । कामशास्त्रपुष्पायाः संस्कृतभाषायाः प्रायेण यथेष्टमर्थान् संग्रहीतुमसमर्थाः निपुणाः; न पुनरसौ स्वल्पार्थाः प्रायेण सहृदयसन्तोषाय प्रभवन्तीति व्याख्यान्तराण्युपेक्षितानि ।

अत्र कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः सुरकन्यापेक्षया भीमकन्याया आधिक्यवर्णनात् व्यतिरेकश्च; अनयोरङ्गाङ्गिभावेन सङ्करः । प्रसादो गुणः, वैदर्भी च रीतिः ।

कमितार इति ताच्छील्ये तृन्प्रत्ययात् "न लोकाव्यय" इति षष्ठीनिषेधेन वसुमतीमिति कर्म्मणि द्वितीयैव ॥३४॥

বাঙ্গালা—এই জন্যই রাজারা পৃথিবীতে থাকিবার ইচ্ছা করিয়া, তোমার অতিথি

তেন জাতদধৃতির্দিবমাগাং সাংযুগীন্যমনুসর্ত্তুমনু ত্বাম্ ।
যন্মৃধং ক্ষিতিভুজাং (১) ন বিলোকে তন্নিমগ্নমনসাং ভুবি লোকে ॥৩৫॥
বেদ যদ্যপি ন কোঽপি ভবন্তং হন্ত হন্তকলহং বিরুণদ্ধি ।
পৃচ্ছ্যসে তদপি যেন বিবেক-প্রোঞ্ছনায় বিষয়ে রসরেকঃ ॥৩৬॥

---

হইবার আগ্রহ করিতেছেন না। কারণ, রাজাদের হৃদয়ের ভিতরে ভীমকন্যা ও দেবকন্যা এই উভয়ের অত্যন্ত পার্থক্য রহিয়াছে ॥৩৪॥

**অন্বয়ঃ**—তন্নিমগ্নমনসাং ক্ষিতিভুজাং ভুবি লোকে মৃধং যৎ ন বিলোকে, তেন জাতদধৃতিঃ (সন্ অহং) সাংযুগীন্যম্ অনুসর্ত্তুং, ত্বাম্ অনু দিবম্ আগাম্ ॥৩৫॥

আত্মনঃ স্বর্গাগমনহেতুমাহ তেনেতি। তস্যাং দময়ন্ত্যাং নিমগ্নম্ অনুরাগাভিনিবিষ্টং মনো যেষাং তেষাং, ক্ষিতিভুজাং ভূপালানাম্, ভুবি লোকে মর্ত্ত্যে ভুবনে, মৃধং যুদ্ধম্, যৎ যস্মাদ্ধেতোঃ, ন বিলোকে নাবলোকয়ামি; তেন হেতুনা, জাতা অদৃষ্টমুৎপদ্যমানা অধৃতিরধৈর্য্যং যস্য সঃ তাদৃশঃ সন্নহম্, নারদস্য কলহপ্রিয়তয়া প্রতিক্ষণ্যা-দিতি ভাবঃ, সাংযুগীন্যং যুদ্ধদর্শনসুখম্, অনুসর্ত্তুমনুভবিতুম্, ত্বামনু লক্ষ্যীকৃত্য, দিবং স্বর্গম্, আগাম্ আগতবানস্মি; ত্রিভুবনাধিপতিনা ত্বয়া যত্র কুত্রাপি সম্ভাব্যমানস্য যুদ্ধস্য জ্ঞায়মানতয়া তদ্বার্ত্তাপ্রদানেন তদ্দর্শন-সুখানুভবসম্ভবাদিতি ভাবঃ।

অত্র যুদ্ধদর্শনাভাবং প্রতি তন্নিমগ্নমনঃপদার্থো হেতুরিতি পদার্থহেতুকং কাব্যলিঙ্গম্, 'বিলোকে বিলোকে' ইত্যন্ত্যযমকস্থানয়োঃ সংসৃষ্টিঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৩৫॥

**বাঙ্গালা**—পৃথিবীর রাজাদের মন দময়ন্তীতে নিমগ্ন হইয়া গিয়াছে; সুতরাং মর্ত্ত্যলোকে যে হেতু তাঁহাদের যুদ্ধ দেখিতে পাই নাই, সেই হেতু আমার মনে অধৈর্য্য উপস্থিত হইয়াছে; তাই আমি যুদ্ধদর্শনের সুখ অনুভব করিবার জন্য, তোমাকে লক্ষ্য করিয়া স্বর্গে আসিয়াছি ॥৩৫॥

**অন্বয়ঃ**—হন্ত কঃ অপি হন্তকলহং ভবন্তং ন বিরুণদ্ধি (ইতি) যদ্যপি (অহং) বেদ, তৎ অপি (ময়া ত্বং) পৃচ্ছ্যসে; যেন বিষয়ে রসরেকঃ বিবেকপ্রোঞ্ছনায় (ভবতি) ॥৩৬॥

বেদেতি। হন্তেতি খেদে। হৃদয়স্য হন্তব্যাকুলত্বাৎ। কোঽপি বীরঃ, হন্তেষু প্রহর্ত্তৃষু প্রতিস্থিত্যর্থঃ, হন্তকলহং নির্দ্দয়ং ভবন্তম্, ন বিরুণদ্ধি ন বিবদতে অদ্বিতীয়বীরতয়া নির্দ্দয়তয়া চ প্রতিযোদ্ধাভাবাদেব ভবতা সার্দ্ধং যুদ্ধং ন করোতীত্যর্থঃ; ইতি যদ্যপি অহং বেদ জানামি; তদপি তথাপি, পৃচ্ছ্যসে ত্বয়া সহ কস্যচিদ্‌যুদ্ধমস্তি ন বেতি ময়া ত্বং প্রশ্নবিষয়ীক্রিয়সে। কথং পৃচ্ছ্যসে ইত্যাহ— যেন হেতুনা, বিষয়ে অভীষ্টে পদার্থে, রসস্য অনুরাগস্য রেকঃ সম্বন্ধঃ, বিবেকস্য বিবেচনায়াঃ প্রোঞ্ছনায় মার্জ্জনায় বিনাশায়েত্যর্থঃ, ভবতীতি শেষঃ। তথা চ যুদ্ধদর্শনায় প্রবলানুরাগ এব মম তাদৃশং বিবেকং নাশিতবানিতি ভাবঃ।

অত্র সামান্যেন বিশেষসমর্থনরূপোঽর্থান্তরন্যাসশ্ছেকানুপ্রাসেন সংসৃজ্যতে। ইতি প্রভৃতীনাং গ্রন্থানামনুসারেণাপি অস্য নারদস্য যুদ্ধদর্শনেচ্ছাপ্রযত্নাসম্ভবতয়া ন ন্যূনপদতাদোষঃ। কিন্তু তথাপীত্যর্থে তদপীত্যস্য বাচকত্বাভাবাদবাচকত্বদোষঃ; তথাহি অপ্রয়োজনয়োরভাবেঽপি রেকপদস্য সম্বন্ধার্থে অপ্রসিদ্ধত্বাৎ নেয়ার্থতাদোষশ্চ। তেনো-ত্তরার্দ্ধমেবং পঠনীয়ম্ 'পৃচ্ছ্যসে ননু তথাপি বিবেক-প্রোঞ্ছনায় বিষয়ে অনুরাগঃ'। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৩৬॥

---

(১) ক্ষিতিভৃতাম্।

एवमुक्तवति देवऋषीन्द्रे द्रागभेदि मघवाननमुद्रा ।
उत्तरोत्तरशुभो हि विभूनां कोऽपि मञ्जुलतमः क्रमवादः ॥३७॥
कानुजे मम निजे दनुजारौ जाग्रति स्वशरणे रणचर्चा ।
यद्भुजाङ्कमुपधाय जयाङ्कं शर्मणा स्वपिमि वीतविशङ्कः ॥३८॥

---

বাঙ্গালা—হায়! তুমি শত্রুর প্রতি নির্দ্দয় বলিয়া, কেহই তোমার সঙ্গে বিরোধ করে না; ইহা যদিও আমি জানি, তথাপি 'যুদ্ধ আছে কিনা' ইহা তোমাকে জিজ্ঞাসা করিতেছি। কারণ, বিষয়ের প্রতি প্রবল অনুরাগ বিবেকশক্তিকে নষ্ট করে ।৩৬।

**अन्वयः**—देवऋषीन्द्रे एवम् उक्तवति (सति), मघवाननमुद्रा द्राक् अभेदि । हि मञ्जुलतमः कः अपि विभूनां क्रमवादः उत्तरोत्तरशुभः ॥३७॥

एवमिति । देवऋषीन्द्रे देवमुनिश्रेष्ठे नारदे, एवं पूर्वोक्तप्रकारम्, उक्तवति सति, मघोन इन्द्रस्य आनन-मुद्रा मुखमुद्रणम् तूष्णीम्भाव इति यावत्, द्राक् शीघ्रम्, अभेदि स्वयमेव भिन्ना, इन्द्रः पुनरवादीत्यर्थः । ननु इन्द्रस्य पुनः कथनं यदि सुन्दरं न स्यात्तदा मुनिद्वयं विरक्तमेव भवेदित्याह—हि तथाहि, मञ्जुलतमो युक्तियुक्ततया अतीवमनोहरः, कोऽपि अनिर्वचनीयः विभूनां महात्मनाम् क्रमवादः क्रमिककथोपकथनम्, उत्तरोत्तरशुभः सुश्राव्यत्वात् युक्तिपूर्णत्वाच्च क्रमिकमङ्गलकर एव भवति । अतो न मुनिद्वयस्य विरक्तिरभूदिति भावः ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः । देवमुनीन्द्रे इति पाठेन सन्धिविश्लेषदोषः परिहार्यः । प्रसादो गुणः, वैदर्भी च रीतिः ।

देवऋषीन्द्र इति "ऋत्यकः समासे—" इत्यादिना विकल्पेन सन्धिप्रकृतिः । अभेदीति कर्मकर्त्तरि प्रयोगः ॥३७॥

বাঙ্গালা—দেবর্ষিশ্রেষ্ঠ নারদ এইরূপ বলিলে, তৎক্ষণাৎ ইন্দ্রের মুখমুদ্রণ ছুটিয়া গেল। দেখ—অনির্ব্বচনীয় ও অতিমনোহর মহাত্মাদিগের ক্রমিক কথোপকথন, পর পর মঙ্গলকরই হইয়া থাকে ।৩৭।

**अन्वयः**—स्वशरणे दनुजारौ निजे अनुजे जाग्रति (सति) का मम रणचर्चा । जयाङ्कं यद्भुजाङ्कम् उपधाय वीतविशङ्कः (सन् अहं) शर्मणा स्वपिमि ॥३८॥

आननमुद्राभेदे सति मघवा किमुवाचेत्याह केति । स्वं आत्मीयानां शरणे रक्षितरि । अतो ममापि सहोदरतया आत्मीयत्वात् रक्षितृत्वमेवेति भावः । नन्वास्तां रक्षितृत्वं तथापि दुर्बलत्वे कथं तत्सम्भव इत्याह—दनुजारौ हन्तृत्वादसुरशत्रौ । इत्यनासुरशत्रौ महाबलत्वमेवेत्याशयः । अथास्तु आत्मीयरक्षितृत्वं महाबलत्वञ्च, तथापि तत्स्वल्पे आत्मीयेषु केवलं तस्यैव रक्षायां कथं तस्य व्यापृतत्वं स्यादित्याह निजे स्वकीये अनुजे कनिष्ठ-सहोदरे उपवामनरूपे नारायणे इत्यर्थः । तेन आत्मापेक्षया मम बाधिकात्मीयत्वमित्यभिप्रायः । एतेन आत्मावश्य-त्वमपि सूचितम् । जाग्रति मम रक्षणाय सावधाने तिष्ठति सति, का मम रणस्य युद्धस्य चर्चा आलोचना, अपितु न कापीत्यर्थः । तादृशानुजभयात् मया सह कोऽपि न योद्धुमिच्छतीति भावः । तर्हीदानीं किं करोषीत्याह जयाङ्कं विजयचिह्नभूतम्, यस्य अनुजभूतनारायणस्य भुजाङ्कं बाहुक्रोडम्, उपधाय उपधानमिवाश्रित्य, वीतविशङ्कः परित्यक्तोद्वेगः सन् अहम्, शर्मणा सुखेन स्वपिमि निद्रामि स्वपनकाल इव तिष्ठामीत्यर्थः ।

अत्र स्वशरणादिपदानां साभिप्रायप्रयोगात् परिकरो नामालङ्कारः, "उक्तिर्विशेषणैः साभिप्रायैः परिकरो

विश्वरूपकलनादुपपन्नं तस्य जैमिनिमुनित्वमुदीये ।
विग्रहं मखभुजामसहिष्णुः व्यर्थतां मदशनिं स निनाय ॥१९॥

---

मतः" इति लक्षणात् ; अर्थापत्तिर्व्यनयोरङ्गाङ्गिभावेन सङ्करः ; सोऽपि पुनश्छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते । माधुर्यं गुणः, वैदर्भी च रीतिः ॥१८॥

বাঙ্গালা—আত্মীয়রক্ষক দানবারি স্বকীয় কনিষ্ঠ ভ্রাতা জাগিয়া থাকিতে, আমার আবার একটা যুদ্ধের চর্চ্চা কি ? বিজয়চিহ্ন স্বরূপ যাঁহার বাহুক্রোড় আশ্রয় করিয়া আমি নিরুদ্বেগ হইয়া সুখে শয়ন করিয়া থাকি ॥৩৮॥

अन्वयः—तस्य विश्वरूपकलनात् उपपन्नं जैमिनिमुनित्वम् उदीये । (अतएव) सः मखभुजां विग्रहम् असहिष्णुः (सन्) मदशनिं व्यर्थतां निनाय ॥१९॥

अथ वीतविग्रहः स्वपिषि चेत् वज्रमिदानीं क्व स्थापितमित्याह विश्वेति । तस्य वामनात्मकस्य नारायणस्य, विश्वरूपकलनात् "सर्वं विष्णुमयं जगत्" इति श्रुतेः त्रिभुवनमयत्वरूपधारणाद्धेतोः, उपपन्नं युक्तियुक्तम्, जैमिनिमुनित्वम्, उदीये उन्नयामि अनुमिनोमीत्यर्थः ; जैमिनिमुनेरपि विश्वान्तर्गतत्वादिति भावः । अतएव स जैमिनिभावापन्नो वामनात्मको नारायणः, मखभुजां यज्ञीयहविर्भोजिनां देवानाम्, विग्रहं युद्धम्, असहिष्णुः असहमानशीलः सन्, आत्मवानसत्यादित्याशयः, मदशनिं मम वज्रम्, व्यर्थतां निष्प्रयोजनताम्, निनाय प्रापयामास ; वज्रकार्यस्य असुरवधस्य स्वयमेव करणात् । तेन च मया तत् वज्रं निष्प्रयोजनतया तुषवुसादिवदेव स्थानान्तरे स्थापितमित्यभिप्रायः । पक्षान्तरे तु मखभुजां यागीयह्व्यानां देवानाम्, विग्रहं शरीरम्, असहिष्णुः युक्त्या अप्रमाणत्वात् अनङ्गीकुर्वन्, स जैमिनिभावापन्नो नारायणः, मदशनिं मम वज्रम्, व्यर्थतां नीचत्वम् पात्रशून्यत्वमित्यर्थः, निनाय स्वनामोच्चारणमात्रेणैव प्रापयामास ।

अत्र परार्द्धं प्रति पूर्वार्द्धवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम्, तथा निष्प्रयोजनतापात्रशून्यतयोर्भेदेऽपि व्यर्थतापदश्लेषेणाभेदाध्यवसायादतिशयोक्तिः । ताभ्याञ्च कृता विच्छित्तिः । तेन च नारायणो जैमिनिमुनित्ववान् विश्वरूपधारणात् जैमिनेश्च विश्वरूपान्तर्गतत्वादित्यनुमानादनुमानालङ्कार इत्येतेषामङ्गाङ्गिभावेन सङ्करः ; सोऽपि च निनि-मुनीति छेकानुप्रासेन संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ।

"विग्रहः समरे काये विस्तारप्रविभागयोः" इति विश्वः ।

उदीये इति दैवादिकस्यात्मनेपदिनः "ईङ् गतौ" इति ईङ् धातोः कर्त्तरि वर्त्तमानायाः (लटः) एकवचने रूपम् । विग्रहमिति उप्रत्ययस्य निष्ठादित्वात् "न निष्ठादिषु" इति षष्ठीनिषेधात् कर्मणि द्वितीयैव ।

यागादिकाले जैमिनिरिन्द्रादीनां देवानां शरीरं नाङ्गीकुरुते । यथा पूर्वमीमांसायां सूत्रम्—"देवतार्थं तन्त्वासम्भवात्" इति । शरीराभावादेव च तत्वासम्भवः । किन्तु तदानीं "इन्द्राय स्वाहा" इत्याकारमन्त्रादीनामेव देवतात्वमिति तदाशयः । तथा च श्रुतिः—"प्रजेशं मन्त्रविग्रहम् ।" न्यायकुसुमाञ्जलावुदयनपादा अपि—"अपास्तत्वेन दैवित इति मीमांसकाः" । श्राद्धविवेके शूलपाणिरपि "विग्रहवतामिन्द्रादीनां सन्निधनस्य प्रत्यक्षबाधितत्वेन तथाविधानां पूज्यत्वासम्भवात् । अगत्या तदाकारतया ध्यातस्य मन्त्रस्य लक्षितस्य देवतात्वमिति रहस्यम्" । अत्र युक्तिश्च—"चेतनस्य सङ्कल्पादेर्देवतात्वे आवाहनेन ऐरावतारूढसहस्राक्षादेरधिष्ठाने घट-कुम्भ-मञ्चभङ्गः" इत्यभियुक्ताः । "वशिष्ठादिमहर्षीणां दशरथादिराजर्षीणाञ्च अन्नुपीष्टत्वेन श्रवणः पुराणभारतेषु श्रवणात् तैरपि वशिष्ठादिभिः पूजार्थमावाहनकाले विग्रहवतां सन्निधानाभावस्य प्रत्यक्षीकृतत्वात्" इति विवेकटीकायां श्रीकृष्णः ।

ঈদৃশানি মুনয়ে বিনয়াব্ধিঃ তস্থিবান্ স বচনান্যুপহৃত্য ।
প্রাগ্‌-নিশ্বসিত-পৃষ্ঠচরী বাক্‌ নারদস্য নিরিয়ায় নিরোজাঃ ॥৪০॥
স্বারসাতলভবাহবশৌণ্ডো নির্বৃণোমি ন বসন্ বসুমত্যাম্ ।
দ্যাং গতস্য হৃদি মে দুরুদর্কঃ ক্ষ্মাতল-দ্বয়-ভটাজি-বিতর্কঃ ॥৪১॥

---

জৈমিনের্বজ্রবারকত্বে প্রমাণং যথা । নারায়ণঃ—

"জৈমিনিশ্চ সুমন্তুশ্চ বৈশম্পায়ন এব চ । পুলস্ত্যঃ পুলহো জিষ্ণুঃ পঞ্চৈতে বজ্রবারকাঃ ॥"

অন্যত্র—"মুনেঃ কল্যাণমিত্রস্য জৈমিনেশ্চাপি কীর্ত্তনাৎ ।

বিদ্যুদগ্নিভয়ং নাস্তি লিখিতে চ গৃহোদরে" ॥৩৯॥

**বাঙ্গালা**—উপেন্দ্র বিশ্বরূপ ধারণ করিয়াছেন বলিয়া, তাহাতে যে জৈমিনিমুনিও আছে, তাহা যুক্তিযুক্ত হওয়ায় অনুমান করিতে পারি। তাই, তিনি দেবগণের যুদ্ধ সহ্য করিতে না পারিয়া আমার বজ্রটীকে নিষ্প্রয়োজন করিয়াছেন) যোগাদির বেলায় দেবতাদের শরীর স্বীকার করিতে অনিচ্ছু সেই জৈমিনি, আমার বজ্রপাত নিবারণ করিয়া থাকেন) ॥৩৯॥

**অন্বয়ঃ**—বিনয়াব্ধিঃ সঃ মুনয়ে ঈদৃশানি বচনানি উপহৃত্য তস্থিবান্ । (অথ) নারদস্য নিরোজাঃ প্রাগ্‌-নিশ্বসিত-পৃষ্ঠচরী বাক্‌ নিরিয়ায় ॥৪০॥

ঈদৃশানীতি । বিনয়াব্ধির্নম্রতায়াঃ সাগরঃ, স ইন্দ্রঃ, মুনয়ে নারদায়, ঈদৃশানি উক্তরূপাণি, বচনানি বাক্যানি, উপহৃত্য মধুরত্বাৎ সুধাবদুপহারীকৃত্য দত্ত্বেত্যর্থঃ, তস্থিবান্ তূষ্ণীং স্থিতঃ । পরঞ্চ, নারদস্য সম্বন্ধিনী, নিরোজাঃ যুদ্ধাভাবশ্রবণেন হতাশত্বাৎ নিস্তেজাঃ, প্রাগ্দীর্ঘং যৎ নিশ্বসিতম্ তেনৈব হতাশত্বাদেব নির্গতস্য নিশ্বাসস্যেত্যর্থঃ পৃষ্ঠচরী পশ্চাদ্বর্ত্তিনী বাক্‌ বাক্যম্, নিরিয়ায় মুখান্নির্জগাম ; নারদ উবাচেত্যর্থঃ ।

অত্র প্রথমে পাদে ছেকানুপ্রাসশ্চতুর্থে চ বৃত্ত্যনুপ্রাস ইত্যনয়োঃ সংসৃষ্টিঃ প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ।

পৃষ্ঠচরীতি "চরেষ্টঃ" ইতি চরতেষ্টপ্রত্যয়াদীপ্রত্যয়ঃ ॥৪০॥

**বাঙ্গালা**—বিনয়ের সাগর ইন্দ্র, নারদকে এইরূপ বাক্য উপহার দিয়া নীরবে রহিলেন। তাহার পর, নারদের মুখ হইতে দীর্ঘ নিশ্বাসের পর, নিস্তেজ বাক্য নির্গত হইল ॥৪০॥

**অন্বয়ঃ**—বসুমত্যাং বসন্ (অহং) স্বা-রসাতল-ভবাহব-শৌণ্ডী (সন্) ন নির্বৃণোমি ; (তথা) দ্যাং গতস্য মে হৃদি ক্ষ্মা-তলদ্বয়-ভটাজি-বিতর্কঃ দুরুদর্কঃ (ভবতি) ॥৪১॥

স্বেতি । বসুমত্যাং পৃথিব্যাম্, বসন্নহম্, স্বঃ স্বর্গশ্চ রসাতলং পাতালঞ্চ তয়োর্ভবতীতি স্বারসাতলভবঃ স চাসৌ আহবো যুদ্ধশ্চেতি স তথোক্তঃ তং শৌণ্ডত ইতি স তাদৃশঃ সন্, ন নির্বৃণোমি ন সুখ্যচিত্তো ভবামি ; যুদ্ধদর্শনেচ্ছাব্যাকুলত্বাদিতি ভাবঃ । তথা দ্যাং স্বর্গম্, গতস্যাপি মে মম, হৃদি চিত্তে, ক্ষ্মায়াঃ পৃথিব্যা যে তলে স্বরূপাধোদেশৌ তয়োর্দ্বয়ে ভূতল-পাতালয়োরিত্যর্থঃ যে ভটা যোদ্ধারস্তেষাম্ আজের্যুদ্ধস্য বিতর্কঃ সম্ভাবনা, দুর্দৃষ্টঃ অস্থিরতাজনকত্বাৎ অনিষ্টকারী উদর্কঃ উত্তরফলং যস্য স দুরুদর্কঃ ভবতীতি শেষঃ । ইদানীং কুত্রাপি যুদ্ধাদর্শনাৎ অস্থির এবাস্মি সংহৃত ইতি ভাবঃ ।

অত্র নির্বৃত্যভাবং প্রতি স্বেত্যাদিপদস্যার্থো হেতুরিতি পদার্থহেতুকং কাব্যলিঙ্গমলঙ্কারঃ, দ্বিতীয়ে পাদে ছেকানুপ্রাসঃ, দ্বিতীয়ার্দ্ধে চ অন্ত্যানুপ্রাস ইত্যেতেষাং সংসৃষ্টিঃ । বর্ণনীয়ত্বাদোজো গুণঃ, গৌড়ী চ রীতিঃ ।

वीक्षितस्त्वमसि मामथ गन्तुं तन्मनुष्यजगतेऽनुमनुष्व ।
किं भुवः परिवृढा न विवोढुं तत्र तामुपगता (१) विवदन्ते ॥४२॥
इत्युदीर्य स ययौ मुनिरुर्व्वीं स्वर्पतिं प्रतिनिवर्त्य बलेन ।
वारितोऽप्यनुजगाम मघवा तं कियन्त्यपि पदान्यपराधि ॥४३॥

---

"तलं स्वरूपेऽनुत्त्वेऽस्त्री क्लीवं ज्याघातवारणे । कानने कार्य्यवीजे च पुंसि तालमहीरुहे ।" इति मेदिनी । "उदर्कः फलमुत्तरम्" इत्यमरः ।

स्वारसःतलेति स्वःशब्दविसर्गस्य "रप्रकृतिः—" इत्यादिना रत्वे "रो रि लोपम्—" इत्यादिना रलोपो दीर्घश्च ॥४१॥

বাঙ্গালা—আমি যখন ভূতলে থাকি, তখন স্বর্গে ও পাতালে যুদ্ধ হইতেছে ইহা মনে করিয়া নিবৃত্তি লাভ করিতে পারি না। আবার যখন স্বর্গে আসি, তখন ভূতলে ও পাতালে যোদ্ধাদিগের যুদ্ধ সম্ভাবনা করা, পরে খারাপ ফল জন্মায় ॥৪১॥

**अन्वयः**—(हे इन्द्र ! मया) त्वं वीक्षितः असि, तत् अथ मनुष्यजगते गन्तुं माम् अनुमनुष्व । तत्र तां विवोढुम् उपगताः भुवः परिवृढाः किं न विवदन्ते ॥४२॥

वीक्षित इति । हे इन्द्र ! मया त्वं वीक्षितो दृष्टः असि । तत् तस्माद्वीक्षितत्वाद्धेतोः, अथ इतः परम्, मनुष्यजगते भूलोकाय, गन्तुं माम्, अनुमनुष्व अनुजानीहि । युद्धदर्शनार्थं स्वर्गमागतः ; किन्त्वत्र तदभावेऽपि तव दर्शनसुखं जातमेव । इदानीं युद्धदर्शनार्थं भूलोकगमनाय मामनुजानीहीत्याशयः । ननु तत्रापि कथं युद्धसम्भावनेत्याह किमिति । तत्र मनुष्यजगति, तां दमयन्तीम्, विवोढुं परिणेतुम्, उपगता उपस्थिताः, भुवः पृथिव्याः, परिवृढा अधिपा राजानः, किं न विवदन्ते तां विवोढुमेव अहमहमिकया विवादं न किं करिष्यन्ति अपि त्ववश्यमेव करिष्यन्तीत्यर्थः । तद्युद्धसम्भावनयैव तत्र गन्तुमिच्छामीति भावः ।

अत्र द्वितीयपादे वृत्त्यनुप्रासोऽलङ्कारः, प्रसादो गुणः, वैदर्भी च रीतिः ।

"अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः" इत्यमरः ।

मनुष्यजगते इति "गत्यर्थकर्म्मणि—" इत्यादिना चतुर्थी । विवदन्त इति "विमतौ" इति कथादित्वादात्मनेपदम् ॥४२॥

বাঙ্গালা—ইন্দ্র ! তোমার সহিত সাক্ষাৎ করা হইয়াছে ; অতএব ইহার পর মর্ত্ত্যলোকে যাইবার জন্য আমাকে অনুমতি কর। সেখানে দময়ন্তীকে বিবাহ করিবার জন্য উপস্থিত রাজারা কি বিবাদ করিবেন না ? ॥৪২॥

**अन्वयः**—सः मुनिः इति उदीर्य्य बलेन स्वर्पतिं प्रतिनिवर्त्य उर्व्वीं ययौ । (इन्द्रस्तु) वारितः अपि (सन्) अपराधि कियन्ति अपि पदानि तं मघवम् अनुजगाम ॥४३॥

इतीति । स मुनिर्नारदः, इति इत्थम्, उदीर्य्य उक्त्वा, बलेन वाक्सामर्थ्येन, स्वर्पतिं स्वर्गलोकाधीश्वरमिन्द्रम्, प्रतिनिवर्त्य प्रतिनिवृत्तये प्रयोज्य, उर्व्वीं पृथिवीम्, ययौ । इन्द्रस्तु वारितोऽपि स्वानुगमनाय निषिद्धोऽपि सन्, अपराधि कियन्त्यपि पदानि, तं नारदम्, मघवं सादरं यथा स्यात्तथा, अनुजगाम, बन्धुत्वेऽ्याकर्षणादिति भावः ।

अत्र प्रसादो गुणः, वैदर्भी च रीतिः ।

---

(१) उपगताः ।

पर्वतेन परिपीय गभीरं नारदीयमुदितं प्रतिनेदे।
स्वस्य कश्चिदपि पर्वत-पक्षच्छेदिनि स्वयमदर्शि न पक्षः॥४४॥
पाथये बलरिपोरथ भैमी-शीत-कोमल-कर-ग्रहमर्हम्।
भेषजं चिर-चिताग्नि-वास-व्यापदामुपदिदेश रतीशः॥४५॥

---

स्वर्पतिमिति "रप्रकृतिरनामिपरोऽपि" इत्यपेर्वृत्तार्थत्वात् विसर्गस्य रेफः। अपराणि कियन्त्यपि पदानि अपरिज्ञातपदपरिमितं पन्थानम् अत्यन्तसंयोगात् पदानीति "अभिविधौ कालाध्वमानात्" इति द्वितीया॥४३॥

বাঙ্গালা—নারদ এই কথা বলিয়া, বলপূর্বক ইন্দ্রকে ফিরিয়া যাইবার জন্য অনুরোধ করিয়া, পৃথিবীর দিকে যাইতে লাগিলেন, কিন্তু ইন্দ্রনিষিদ্ধ হইয়াও, অপর কয়েক পা পথ যত্নের সহিত তাঁহার অনুগমন করিলেন ॥৪৩॥

अन्वयः—पर्वतेन गभीरं नारदीयम् उदितं परिपीय प्रतिनेदे। (किन्तु) स्वयं कश्चित् अपि स्वस्य पक्षः पर्वतपक्षच्छेदिनि न अदर्शि॥४४॥

ननु नारदेन सहागतः पर्वतमुनिः कथं न किञ्चिदुक्तवानित्याह पर्वतेनेति। पर्वतेन तदाख्येन मुनिना शैलेन च, गभीरम् अर्थगौरवयुक्तं गभीरञ्च, नारदी मुनिः "आपो नारा इति प्रोक्ताः" इति मनुवचनात् नारं जलं ददातीति नारदो मेघश्च तस्येदं नारदीयम्, उदितं वाक्यं ध्वनिञ्च, परिपीय सादरं श्रुत्वा गुहाभ्यन्तरगतीकृत्य च, प्रतिनेदे भङ्ग्या स्वसम्मतत्वज्ञापनेन अनूदितम् प्रतिध्वनितञ्च। किन्तु स्वयमात्मना, कश्चिदपि, स्वस्य आत्मनः, पक्षो मतं पतत्रञ्च, पर्वतपक्षच्छेदिनि मध्याप्यमाननिजमतप्रत्याख्यायिनि शैलपतत्रच्छेदिनि च इन्द्रे, न अदर्शि न ज्ञापितः न प्रदर्शितश्च; स्वपक्षच्छेदनभयादिति भावः।

अत्र स्वपक्षदर्शनाभावं प्रति पर्वतपक्षच्छेदिपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, मुनि-शैलयोः मतपतत्रयोश्च भेदेऽपि पर्वत पक्षशब्दयोः श्लेषेणाभेदाध्यवसायादतिशयोक्तिश्च अनयोरङ्गाङ्गिभावेन सङ्करः। पूर्वार्द्धे तु अभिधायाः प्रकृतार्थनियन्त्रणान्न श्लेषः; किन्तु पर्वतेनेव पर्वतेनेत्यौपम्यसूचनादुपमालङ्कारध्वनिः "छिन्नमुक्तचन्द्ररुचिरः सपक्षकः" इत्यादिदर्पणोदाहरणवत्। प्रसादो गुणः, वैदर्भी च रीतिः॥४४॥

বাঙ্গালা—পর্বতমুনি, অর্থগৌরবযুক্ত নারদের বাক্য সাদরে শ্রবণ করিয়া, কেবল তাহার অনুবাদ করিলেন; কিন্তু পর্বতপক্ষচ্ছেদী ইন্দ্রের নিকট নিজের কোনও পক্ষ (মত) নিজে দেখাইলেন না ॥৪৪॥

अन्वयः—अथ रतीशः चिर-चिताग्नि-वास-व्यापदाम् अर्हं भैमी-शीत कोमल-कर ग्रहं भेषजं बलरिपोः पाथये उपदिदेश॥४५॥

पाथय इति। अथ नारदपर्वतयोर्गमनानन्तरम्, रतीशः कामः, चिरचिता अतिदीर्घकालादवधि सञ्चिता याः अग्निवासेन वज्राग्निस्थानेन व्यापदस्तापात्मकरोगास्तासाम्, अर्हं योग्यं तत्प्रतीकारसमर्थमित्यर्थः, सर्वथैव तापघ्नो शीतलवस्तुनः सामर्थ्यादर्शनादिति भावः; भैम्या दमयन्त्याः शीतः शीतलः कोमलश्च यः करः पाणिस्तस्य ग्रहं ग्रहणरूपम्, भेषजमौषधम्, बलरिपोरिन्द्रस्य, पाथये इन्द्राय उपदिदेश; अग्निदग्धहस्ताय शीतलप्रलेपमिवेति भावः। इन्द्रो नारदमुखात् दमयन्त्या गुणानाकर्ण्य तत्पाणिग्रहणेच्छां चकार इति सरलार्थः।

अत्र भैमीशीतकोमलकरग्रहे आरोप्यमाणस्य भेषजत्वस्य प्रकृततापरोगोपशमनोपयोगितया परिणामालङ्कारः। समस्तार्थस्य प्रसादत्वादोजो गुणः, गौडी च रीतिः।

शीतकोमलेति "भाव्यं प्रसन्नगम्भीरम्" इत्यादिवदेकतरस्य विधेयत्वविवक्षया कर्मधारयः॥४५॥

नाकलोकभिषजोः सुषमा या पुष्पचापमपि चुम्बति सैव ।
तेन तादृगभिषज्यदसौ तद्द्वार-संक्रमित-वैद्यक-विद्यः ॥४६॥
मानुषीमनुसरत्यथ पत्यौ स्वं भावमवलम्ब्य मघोनी ।
उज्झितं निजमसूचयदुच्चैः मानमानन-सरोरुह-नत्या ॥४७॥

---

বাঙ্গালা—দীর্ঘকাল যাবৎ বজ্র থাকায় ইন্দ্রের হস্তে সন্তাপ-রোগ জন্মিয়াছিল; তাই, নারদপ্রভৃতি চলিয়া গেলে পর কামদেব, সেই সন্তাপ-রোগ শান্তির উপযোগী দময়ন্তীর শীতল ও কোমল পাণির গ্রহণ রূপ ঔষধ, সেই ইন্দ্রহস্তের জন্য উপদেশ দিলেন ॥৪৫॥

**अन्वयः**—नाक-लोक-भिषजोः या सुषमा ( वर्त्तते ) सा एव पुष्पचापम् अपि चुम्बति । तद्द्वार-संक्रमित-वैद्यक-विद्यः असौ तादृक् अभिषज्यत् (इति) वेद्मि ॥४६॥

ननु चिकित्सककर्त्तव्यम् औषधोपदेशं कामदेवः कथं कृतवानित्याह नाकेति । नाकलोकस्य स्वर्गलोकस्य भिषजोश्चिकित्सकयोरश्विनीकुमारयोः, या सुषमा परमा शोभा वर्त्तते इति शेषः; सैव सुषमा, पुष्पचापं कामदेवमपि, चुम्बति गच्छति । तेन किमित्याह सा सुषमैव द्वारं तेन कर्त्रा संक्रमिता सञ्चारिता वैद्यकविद्या अश्विनीकुमारद्वयगतायुर्वेदविज्ञानं यस्मिन् स तथोक्तः, असौ पूर्वोक्तो रतीशः, तादृक् पूर्वोक्तप्रकारम्, अभिषज्यत् इन्द्रहस्तगतं सन्तापरोगं चिकित्सितवान्, इत्यहं वेद्मि मन्ये ।

अत्र वेद्मीतिशब्दस्यैव उत्प्रेक्षावाचकत्वात् वाच्या क्रियोत्प्रेक्षा, भिषक्क्रियां प्रति तद्द्वारेत्यादिपदस्यार्थो हेतुरिति काव्यलिङ्गञ्च, अनयोरङ्गाङ्गिभावेन सङ्करः; सोऽपि च वैद्यकविद्य इति च्छेकानुप्रासेन संसृज्यते । गुणरीती पूर्ववत् ।

अभिषज्यदिति भिषजमकरोदिति कण्ड्वादित्वाद्यकि लङन्तोऽयं प्रयोगः । "भिषज् चिकित्सायाम्" इति पाणिनीयाः । संक्रमितेति णिजन्तक्रमधातोः क्तः मानुबन्धत्वात् ह्रस्वः ॥४६॥

বাঙ্গালা—স্বর্গের চিকিৎসক অশ্বিনীকুমারদ্বয়ের যে পরম সৌন্দর্য্য আছে, তাহাই কামদেবের উপরেও গিয়াছে, সুতরাং সেই সৌন্দর্য্যই অশ্বিনীকুমারদ্বয়ের আয়ুর্বেদবিদ্যাকে কামদেবের উপরে সঞ্চারিত করিয়া দিয়াছিল; সেই জন্যই কামদেব ইন্দ্রের হাতের সন্তাপরোগের সেইরূপ চিকিৎসা করিতে পারিয়াছিলেন ॥৪৬॥

**अन्वयः**—अथ पत्यौ मानुषीम् अनुसरति (सति) मघोनी स्वं भावम् अवलम्ब्य आनन-सरोरुह-नत्या निजम् उच्चैः मानं उज्झितम् असूचयत् ॥४७॥

इन्द्रे दमयन्तीलाभाकाङ्क्षया मर्त्यलोकं यियासति शच्यादीनामवस्था षड्भिः श्लोकैराह मानुषीमिति । अथ दमयन्त्युद्देशेन इन्द्रस्य कामाविर्भावानन्तरम्, पत्यौ भर्त्तरि इन्द्रे, मानुषीं दमयन्तीम्, अनु लक्ष्यीकृत्य सरति मर्त्यलोकं गच्छति सति, मघोनी इन्द्राणी, स्वं भावं स्वत्वम् अपमानोदयात् शरीरसत्त्वमित्यर्थः, अवलम्ब्य आश्रित्य, आननसरोरुहस्य मुखपद्मस्य नत्या नमनेन करणेन, निजं स्वकीयम्, उच्चैः सातिशयम्, मानं सौन्दर्यगर्वम्, उज्झितं तेन पत्यैव लोकसमाजेषु त्यक्तम्, असूचयत् अज्ञापयत् । आत्मनः सौन्दर्ये यथापूर्वं स्थिते पतिः कथं निकृष्टामपि मानुषीमनुसरेदिति भावः ।

अत्र विषादाख्यभावोदयाद्भावोदयनामालङ्कारः, मुखमालिन्यादिना संलक्षितो मानत्यागरूपः सूक्ष्मोऽर्थः स्वभावावलम्बनाननसरोरुहनतिभ्यां भङ्ग्या सूचित इति सूक्ष्मं नामालङ्कारश्च, "संलक्षितस्तु सूक्ष्मोऽर्थ आकारेणेङ्गितेन वा । कयापि सूच्यते भङ्ग्या यत्र सूक्ष्मं तदुच्यते ।" इति दर्पणलक्षणात् । अनयोरङ्गाङ्गिभावेन

यो मघोनि दिवमुच्चरमाणे रम्भया मलिनिमालमलम्भि ।
वर्ण एव स खलूज्ज्वलमस्याः प्रान्तमान्तरमभावत भङ्ग्या ॥४८॥
जीवितेन कृतमप्सरसां तत् प्राणमुक्तिरिह युक्तिमती नः ।
इत्यनक्षरमवाचि घृताच्या दीर्घ-निश्वसित-निर्गमनेन (१) ॥४९॥

---

सङ्करः ; सोऽपि च च्छेकानुप्रासेन संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ।

मघोनीति पृषोदरादीत्वे "श्वयुवमघोनाञ्च" इति वकारस्योत्वे रूपम् ॥४७॥

বাঙ্গালা—তদনন্তর, পতি ইন্দ্র মনুষ্যকন্যাকে লক্ষ্য করিয়া মনুষ্যলোকে যাইতে আরম্ভ করিলে, শচীদেবী শরীরের খর্বভাব অবলম্বন করিয়া, মুখপদ্মের নয়ন দ্বারা, নিজের শান্তিপর সৌন্দর্য্যগর্ব যে নষ্ট হইয়াছে তাহার সূচনা করিতে লাগিলেন ॥৪৭॥

**अन्वयः**—मघोनि दिवम् उच्चरमाणे ( सति ) रम्भया यः मलिनिमा अलम् अलम्भि ; सः वर्णः एव भङ्ग्या अस्याः आन्तरम् उज्ज्वलं प्रान्तम् अभावत खलु ॥४८॥

य इति । मघोनि इन्द्रे, दिवं स्वर्गम्, उच्चरमाणे परित्यज्य दमयन्त्यर्थं मर्त्यलोकं गच्छति सति, रम्भया तदाख्यया इन्द्रभोग्यया कयाचित् स्वर्गवेश्यया, यो मलिनिमा दुःखजनितं देहमालिन्यम्, अलमत्यन्तम्, अलम्भि लब्धः ; स मलिनिमरूपः, वर्णो देहकान्तिरेव, भङ्ग्या मुखे आधिक्याद्याकारैव, अस्या रम्भायाः, अन्तरस्य अन्तःकरणस्यायमिति आन्तरस्तम्, उज्ज्वलम् इन्द्रविषयकं शृङ्गारम्, प्रान्तं तस्याभासकत्वाविरतम्, अभावत अचूचयत् ; अन्यासक्तत्वादेव तेन सह पुनः शृङ्गारव्यवहाराभावादिति भावः । खलुशब्दो वाक्यालङ्कारे । यथाश्रुतार्थपरतयैवोपपत्तौ दुष्कराण्यर्थान्तराणि उपेक्षितानि ।

अत्रापि पूर्ववदेव भावोदयसूक्ष्मयोः सङ्करः ; सोऽपि च द्वितीयपादगतवृत्त्यनुप्रासेन चतुर्थपादगतच्छेकानुप्रासेन च संसृज्यते । माधुर्यं गुणः, वैदर्भी च रीतिः ।

उच्चरमाणे इति "उदः सकर्मकात्" इति श्वादित्वादात्मनेपदम् ॥४८॥

বাঙ্গালা—ইন্দ্র স্বর্গ পরিত্যাগ করিয়া মর্ত্ত্যলোকে চলিলে, রম্ভা যে অত্যন্ত মালিন্য পাইয়াছিল ; সেই মলিনবর্ণই ভঙ্গীবিশেষ দ্বারা বলিয়া দিয়াছিল যে তাহার মনের শৃঙ্গার-ভাব নিবৃত্তি পাইয়াছে ॥৪৮॥

**अन्वयः**—इह अप्सरसां जीवितेन कृतम्, तत् नः प्राणमुक्तिः युक्तिमती ; इति घृताच्या दीर्घ-निश्वसित-निर्गमनेन अनक्षरम् अवाचि ॥४९॥

जीवितेनेति । इह अस्मिन् समये, अप्सरसां स्वर्गवेश्यानाम्, जीवितेन जीवनेन, कृतम् अलम् ; अस्मान् विहाय देवराजस्य मानुष्यामासक्तिपातेन लोकसमाजेऽस्माकं तुच्छताप्रतीतेरित्याशयः । तत्तस्मात्, नः अस्माकम् अप्सरसाम्, प्राणमुक्तिः प्राणत्याग एव, युक्तिमती युक्तिसङ्गता ; अवज्ञैव हि प्राणधारणस्य हृदयमर्म्मणि शल्यधारणस्येव दारुणकष्टकरत्वादिति भावः । इति इत्यं घृताच्या घृताचीनाम्न्या स्वर्गवेश्यया, दीर्घस्य निश्वसितस्य निश्वासस्य निर्गमनेन निःसारणेन, न विद्यते अक्षरं वर्णो यस्मिन् कर्म्मणि तद् यथा स्यात्तथा, अवाचि वचनवदेव स्पष्टं ज्ञापितम् ; निश्वासस्यैव प्राणरूपतया तत्त्यागेनैव सर्वथा प्राणत्यागसूचनस्य सम्भवपरत्वादित्यभिप्रायः ।

अत्र अत्यल्पहेतोरभावेऽपि वचनरूपकार्य्योत्पत्तेर्विभावना, पूर्ववद्भावोदयः सूक्ष्मञ्चेत्येतेषामङ्गाङ्गिभावेन सङ्करः ; सोऽपि च द्वितीयपादगतच्छेकानुप्रासेन संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ॥४९॥

---

(१) दीर्घनिःश्वसितनिर्गमितेन ।

साधु नः पतनमेवमितः स्यादित्यभण्यत तिलोत्तमयापि ।
चामरस्य पतनेन कराब्जात् तद्विलोलन-चलद्भुज-नालात् ॥५०॥
मेनका मनसि तापमुदीतं (१) यत् पिधित्सुरकरोदवहित्थाम् ।
तत् स्फुटं निजहृदः पुटपाके पङ्कलिपिमसृजदवहित्थाम् ॥५१॥

---

বাঙ্গালা—'এখন অপ্সরাদের বাঁচিয়া থাকিবার প্রয়োজন নাই; অতএব আমাদের এখন প্রাণত্যাগ করাই উচিত' ইহা ঘৃতাচী দীর্ঘ নিশ্বাস ত্যাগ করিয়া, বিনা অক্ষরে বলিল ॥৪৯॥

अन्वयः—'एवं नः इतः पतनं साधु स्यात्' इति तिलोत्तमया अपि तद्विलोलन-चलद्भुज-नालात् कराब्जात् चामरस्य पतनेन अभण्यत ॥५०॥

साध्विति । एवमित्थं चामरस्य पतनमिवेत्यर्थः, नः अस्माकमप्सरसाम्, इतः स्वर्गात्, पतनम् अवध्वंसनम्, साधु भद्रं स्यात्; अस्मत्प्रणयिनो देवराजस्य मानुष्या प्रणयपातेन अस्मास्ववज्ञापातादिति भावः । इति एतत्, तिलोत्तमयापि स्वर्वेश्यया, तस्य, चामरस्य विलोलनेन इन्द्रान्तिके आन्दोलनेन चलत् इतस्ततः प्रसरत् भुजो बाहुः नालमिव यस्य तस्मात्, करः पाणिः अब्जं पद्ममिव तस्मात्, चामरस्य बालव्यजनस्य, पतनेन भुजचलनादेव अवध्वंसनेन, अभण्यत भणनेनेव स्पष्टमसूच्यत; एकस्य पतनेन अन्यस्य पतनसूचनसम्भवादिति भावः ।

अत्र चामरपतनं प्रति तद्विलोलनेत्यादिपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, अत्राचामरपतनासम्बन्धेन कराब्जादित्यनयोरुपमितसमासाश्रयणात् लुप्तोपमाद्वयम्, पूर्ववत् भावोदयः सूक्ष्मश्च; इत्थं तेषामङ्गाङ्गिभावेन सङ्करः चतुर्थपादगतवृत्त्यनुप्रासेन पुनः संसृज्यते । माधुर्यं गुणः, वैदर्भी च रीतिः ॥५०॥

বাঙ্গালা—'এই চামরপতনের মতই আমাদেরও, এই স্বর্গ হইতে পতন হওয়া ভাল' ইহা তিলোত্তমাও নিজের পাণিকমল হইতে চামরপতন দ্বারা স্পষ্ট সূচনা করিল। চামর আন্দোলন করায় তিলোত্তমার বাহুনাল চলিতে থাকাই চামরপতনের কারণ ॥৫০॥

अन्वयः—मेनका मनसि उदीतं तापं पिधित्सुः (सती) यत् अवहित्थाम् अकरोत्, तत् निजहृदः पुटपाके अवहित्थया पङ्कलिपिम् असृजत् स्फुटम् ॥५१॥

मेनकेति । मेनका तदाख्या काचित् स्वर्गवेश्या, मनसि स्वहृदये उदीतमुत्पन्नम्, स्वप्रणयिनो देवराजस्य मानुष्या प्रणयपातादिति भावः; तापं विषादानलसन्तापम्, पिधित्सुः पिधातुमावरीतुम् इच्छुः सती, यत् अवहित्थां स्मितादिना आकारगुप्तिम् मुखमालिन्याद्याकारगोपनमिति यावत्, अकरोत्; तत् अवहित्थाकरणमेव कर्तृ, निजहृद आत्ममनसः, पुटाभ्यन्तरे पाकः पचनं पुटपाकस्तस्मिन्, अवहित्थया पुटस्येव बहिर्देशे आयमानाम्, पङ्कलिपिं कर्दमलेपम्, असृजत् अकरोदिति स्फुटं स्पष्टम् । तथा च रोदनप्रलापादिना प्रकाशेन मनोदुःखं क्रमशो ह्रासमापद्यते इति हि लोकानां स्वाभाविको नियमः । तेन च पुटस्य बहिः पङ्कलेपे सति यथा तदभ्यन्तरवर्तिनो वस्तुनः पाकः सुष्ठ्वमेव जायते; तथा बहिराकारगोपनेन मेनकाया मनस्तापः सुष्ठ्वमेव जात इत्याशयः ।

अत्र स्फुटशब्दस्योत्प्रेक्षावाचकत्वात् वाच्या क्रियोत्प्रेक्षालङ्कारः, मेनका मनसीति च्छेकानुप्रासः, द्वितीयचतुर्थपादयोरन्त्यानुप्रासश्च; इत्थं तेषां संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"अवहित्थाकारगुप्तिः" इत्यमरः ॥५१॥

---

(१) उदीर्णम् ।

उर्व्वशी गुणवशीकृतविश्वा तत्क्षण-स्तिमित-भाव-निभेन ।
मत्-सौहृद-समापन-सीम-स्तम्भ-कार्य्यमपुषद्वपुषेव ॥५२॥
कापि कामपि बभाष बुभुत्सुं शृण्वति त्रिदशभर्त्तरि किञ्चित् ।
एष काश्यपसुतामभिगन्ता पश्य कश्यपसुतः शतमन्युः ॥५३॥

---

বাঙ্গালা—মনে যে সন্তাপ জন্মিয়াছিল, তাহা আবৃত রাখিবার ইচ্ছা করিয়া, মেনকা যে বাহিরে আকার গোপন করিয়াছিল ; সেই আকার গোপনই, পুটের ভিতরে তাহার হৃদয়ের যে পাক হইবে, সেই পাকজনক পুটের বাহিরে স্পষ্টতঃ কর্দ্দমলেপই যেন জন্মাইয়াছিল ॥৫১॥

অন্বয়:—गुण वशीकृत-विश्वा उर्व्वशी तत्क्षण-स्तिमित-भाव निभेन वपुषा एव मत्-सौहृद-समापन-सीम-स्तम्भ-कार्य्यम् अपुषत् (इव) ॥५२॥

उर्व्वशीति । गुणैः सौन्दर्य्यकलाविद्यादिभिः वशीकृतं परिमोहनात् आयत्तीकृतं विश्वं जगद्यया सा ; अतएव तस्या निकृष्टाया मानुष्या प्रियतमस्येन्द्रस्यासक्तिदर्शनेन स्तिमितभावो युज्यत एवेति भावः ; उर्व्वशी तदाख्या काचित् स्वर्गवेश्या, तत्क्षणम् इन्द्रस्य मर्त्यलोकप्रस्थानसमये स्तिमितभावस्य दुःखविस्मयाभ्यां निश्चलत्वस्य निभेन व्याजेन, वपुषा निजशरीरेणैव, मत् इन्द्रे यत् सौहृदं प्रेम तस्य यत् समापनम् अवसानं तस्य या सीमा अवधिः तस्य स्तम्भकार्य्यं स्तम्भाकर्त्तव्यं लोकेषु तत्समापनज्ञापनम्, अपुषत् अकार्षीदिव । एतावत्पर्य्यन्तमेव त्वयि मम प्रेम स्थितम् ; अतः परन्तु न स्थास्यतीति ज्ञापितवतीत्यर्थः । अन्योऽपि स्तम्भारोपणेन भूम्यादिसमापनं ज्ञापयतीति भावः ।

अत्र सापह्नवा प्रतीयमाना क्रियोत्प्रेक्षालङ्कारस्यानुप्रासेन संसृज्यते । प्रसादो गुणः, पाञ्चाली च रीतिः ।
"स्तम्भव्याजयोर्निभः" इति त्रिकाण्डशेषः ॥५२॥

বাঙ্গালা—গুণ দ্বারা বিশ্বব্রহ্মাণ্ডকে যে বশীভূত করিয়াছিল সেই উর্বশী, সেই সময়ে নিশ্চলতার ছলে নিজের শরীর দ্বারাই, ইন্দ্রের প্রতি নিজের প্রেম যে সমাপ্ত হইল, তাহার সীমায় স্তম্ভের কার্য্য করিল ॥৫২॥

অন্বয়:—त्रिदशभर्त्तरि किञ्चित् शृण्वति (सति) का अपि बुभुत्सुं काम् अपि बभाष । एषः कश्यपसुतः काश्यपसुताम् अभिगन्ता (इति त्वं) पश्य ॥५३॥

दमयन्तीलाभाशया मर्त्यलोकं यियासुमिन्द्रं निवारयितुमप्सरसां व्यङ्ग्योक्तिमाह द्वाभ्याम् । कापीति । त्रिदशभर्त्तरि देवराजे, किञ्चित् शृण्वति यवनिकादिव्यवधानादल्पम् आकर्णयति सति ; अन्यथा उपहासोक्तिर्न स्यादिति भावः । कापि अप्सराः, बुभुत्सुम् इन्द्रः क गमिष्यतीति बोद्धुमिच्छुम्, कामपि अप्सरसम्, बभाष उवाच । किं बभाषेत्याह—एष कश्यपस्य मुनेः सुतः पुत्रः, शतमन्युः शताश्वमेधयज्ञकर्त्ता इन्द्रः, काश्यपसुतां काश्यपीं पृथिवीम्, कश्यपस्यैव मुनेः सुतामात्मजां तद्भगिनीमिव चेत्यर्थः, अभिगन्ता लक्ष्यीकृत्य गमिष्यति, रिरंसया सङ्गता गमिष्यति च ; इति त्वं पश्य । शतयज्ञकारितया महाधार्म्मिकोऽपि कश्यपस्य महर्षेः पुत्रोऽप्येष भगिनीं गमिष्यतीत्युपपत्तीनामप्सरसाम् इन्द्रं प्रत्युपहासो युज्यत एवेति भावः । अनेन च पृथिवीपर्य्यटनं यदैन्द्री निवर्त्तेतेति चाप्सरसामाशयः । व्याख्यान्तराणि च नातिमनोहराणीत्युपेक्षितानि ।

अत्र पृथिवी-काश्यपसुतयोर्भेदेऽपि काश्यपसुतापदश्लेषेणाभेदाध्यवसायादतिशयोक्तिरलङ्कारस्यानुप्रासेन संसृज्यते मधुरव्यञ्जनाधिक्यान्माधुर्य्यं गुणः, वैदर्भी च रीतिः ।

आलिमात्मसुभगत्वसगर्वा कापि शृण्वति मघोनि बभाषे।
वीक्षणेऽपि सघृणासि नृणां किं यासि न त्वमपि सार्थगुणेन ॥५४॥
अन्वयुर्द्युति-पयः-पितृ-नाथाः तं मुदाथ हरितां कमितारः।
वर्त्म कर्षति (१) पुरः परमेकः तद्गतानुगतिको न महार्घः ॥५५॥

---

परशुरामः पृथिवीं निःक्षत्रियां कृत्वा यज्ञदक्षिणात्वेन काश्यपाय ददौ; काश्यपश्च तां कन्यात्वेन अपालयदिति पुराणवार्त्ता। अतएव "धात्री क्ष्मा काश्यपी क्षितिः" इत्यमरः।

अभिगन्तेति सम्भावनाविभक्तौ प्रयोगः ॥५३॥

বাঙ্গালা—ইন্দ্র কিছু শুনিতে পান, এমন ভাবে কোন অপ্সরা; জিজ্ঞাসু কোন অপ্সরাকে বলিল, ( সখি ! ) দেখ, এই কশ্যপের পুত্র শতক্রতু (ইন্দ্র), কশ্যপসুতা গমন করিবেন ॥৫৩॥

अन्वयः—मघोनि शृण्वति (सति), आत्मसुभगत्व-सगर्वा का अपि आलिं बभाषे। ( हे आलि ! ) त्वं किं नृणां वीक्षणे अपि सघृणा असि ; (येन) सार्थगुणेन न यासि ॥५४॥

आलिमिति। मघोनि इन्द्रे, शृण्वति सति अन्यथा मनुष्यजातिं प्रति तस्य घृणाविर्भावो न स्यादिति भावः; आत्मनः सुभगत्वेन सौन्दर्यातिशयेन सगर्वा साहङ्कारा, कापि अप्सराः, आलिं सखीम् इन्द्रस्योपपत्नीमन्यामप्सर-समित्यर्थः, बभाषे उक्तवती। किं बभाषे इत्याह—हे आलि ! त्वं किं नृणां मानुषाणाम्, वीक्षणेऽपि का कथा साहचर्यादौ केवलदर्शनेऽपि, सघृणा मर्कटादिदर्शन इव गृहीतजुगुप्सा, असि भवसि ? येन सार्थस्य निरसङ्गिन इन्द्रस्य गुणेन सहचरभावेन, न यासि मानुषलोकं न गच्छसि। एतेन अप्सरःस्वर्गीयोत्कर्षशालिना देवराजेन नितान्तं सेविता मानुषीं लब्धुमिच्छया कथमपि मर्त्यलोको न गन्तव्य इति सूचितम्।

अत्र हृदयवचनभङ्ग्या गम्यस्य मनुष्यकुत्सितत्वस्य स्पष्टसूचनात् पर्य्यायोक्तं नामालङ्कारः "पर्य्यायोक्तं यदा भङ्ग्या गम्यमेवाभिधीयते" इति दर्पणलक्षणात्; तथा तृतीयचरणार्थं प्रति चतुर्थचरणवाक्यार्थस्य हेतुत्वात् काव्यलिङ्गञ्च, अनयोरङ्गाङ्गिभावेन सङ्करः। प्रसादो गुणः, वैदर्भी च रीतिः।

समानोऽर्थः प्रयोजनमस्येति सार्थः सङ्गी। तथा च मुद्रितस्वधृतमपि—

"सार्थः प्रवसतो मित्रं भार्य्या मित्रं गृहे सतः। आतुरस्य भिषक् मित्रं दानं मित्रं मरिष्यतः" ॥५४॥

বাঙ্গালা—দেবরাজ শুনিতে পান, এমন ভাবে নিজসৌন্দর্য্যগর্বিতা কোন অপ্সরা, নিজ সখীকে বলিল সখি ! তুমি মনুষ্যজাতির প্রতি দৃষ্টিপাত করিতেও কি ঘৃণা বোধ কর ? যে হেতু সার্থীর (ইন্দ্রের) সহচরভাবে মনুষ্যলোকে যাইতেছ না ॥৫৪॥

अन्वयः—अथ हरितां कमितारः द्युति-पयः-पितृ-नाथाः मुदा तम् अन्वयुः। परम् एकः पुरः वर्त्म कर्षति, तद्गतानुगतिकः न महार्घः (भवति) ॥५५॥

अन्वयुरिति। अथ इन्द्रस्य प्रस्थानानन्तरम्, हरितां दिशाम्, कमितारः कामयितारः पतय इति यावत्, द्युतिर्वह्निः पयो जलं पितरः पितृलोकास्तेषां नाथा अधिपतयः अग्नि-वरुण-यमा इति तात्पर्य्यम्, मुदा दमयन्तीलाभसम्भावनानन्देन, तम् इन्द्रम्, अन्वयुः अनुगतवन्तः। तथाहि परं केवलम्, एको जनः, पुरः प्रथमम्, वर्त्म कञ्चित् पन्थानम्, कर्षति वनपरिष्कारादिना दूरं प्रसारयति आविष्करोतीत्यर्थः, परञ्च तस्य वर्त्मकर्तु-र्गतम् गमनं अनु लक्ष्यीकृत्य गतिर्गमनं यस्य स तादृशो लोकः, न महार्घः न महामूल्यः न दुर्लभ इति तात्पर्य्यम्। अत एव दमयन्तीलिप्सया इन्द्रं मर्त्यलोकगामिनमवलोक्य अग्नि-वरुण-यमा अपि यथैव तमनु-रित्याशयः।

---

(१) कर्षतु।

**प्रेषिताः पृथगथो दमयन्त्यै चित्त-चौर्य्य-चतुरा निजदूत्यः ।**
**तद्गुरुं प्रति च तैरुपहाराः संख्य-सौख्य-कपटेन निगूढाः ॥५६॥**
**चित्रमत्र विबुधैरपि यत्तैः स्वर्विहाय बत भूरनुसस्रे ।**
**द्यौर्न काचिदथवास्ति निरूढा सैव सा चलति (१) यत्र हि चित्तम् ॥५७॥**

---

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः पुरः परमिति छेकानुप्रासेन संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ।

अन्वयुरिति अनुपूर्वस्य याधातोर्लङ्यन्या अपि "लङ उस् सिजभ्यस्तविदादिभ्योऽभुवः" इत्यनेन उसादेशे रूपम् ॥५५॥

**বাঙ্গালা**—তাহার পর, দিক্‌পতি অগ্নি, বরুণ ও যম ইহারা আনন্দে ইন্দ্রের অনু-গমন করিতে লাগিলেন। কেন না, কেবল এক ব্যক্তিই প্রথমে কোন পথ আবিষ্কার করে; তাহার পর তাহার পিছে যাইবার লোক দুর্লভ হয় না ॥৫৫॥

**अन्वयः**—अथो तैः निगूढाः चित्त-चौर्य्य-चतुराः निजदूत्यः दमयन्त्यै पृथक् प्रेषिताः ; तद्गुरुं प्रति च संख्य-सौख्य-कपटेन निगूढाः उपहाराः प्रेषिताः ॥५६॥

प्रेषिता इति । अथो अग्न्यादीनामनुगमनानन्तरम्, तैः इन्द्रवह्नि-वरुण-यमैः, निगूढा दूतीनामिव परस्परं सङ्गोपिताः, अन्यथा तासां परस्परज्ञाने स्वस्वकार्य्यस्यैव बाधा स्यादिति भावः ; चित्तचौर्य्ये वाग्विन्यासेन साधारण्यैव मनोऽपहरणे चतुरा निपुणाः, अन्यथा कथं दमयन्त्याश्चित्तमपहरेयुरित्याशयः ; निजदूत्यः स्वस्व-दूतीभूताः स्त्रियः, दमयन्त्यै तदर्थं तद्वशीकरणार्थमित्यर्थः ; पृथक् प्रत्येकम्, प्रेषिताः प्रेरिताः ; यथा दमयन्ती स्वयमेव स्वं स्वं वृणीयादित्यभिप्रायः । तस्याः दमयन्त्याः गुरुं पितरं भीमं प्रति च, संख्ये युद्धे यत् सौख्यं सन्तोषस्तत्कपटेन अमुकयुद्धे त्वया यादृशं वीरत्वं प्रदर्शितं तेन वयं सन्तुष्टाः स्म इति व्याजेने-त्यर्थः ; निगूढाः परस्परं गुप्ताः, अन्यथा तेष्वपि कपटप्रकाशः स्यादिति भावः, उपहारा मणिरत्नाद्युपाय-नानि, प्रेषिताः । येन सन्तुष्टो भीमोऽपि स्वयमेव स्वभ्यो दमयन्तीं दद्यादित्याशयः ।

अत्र प्रेषिता इत्येकया क्रियया निजदूत्य इति उपहारा इति चोभयोः कर्तृतयाभिसम्बन्धात् तुल्ययोगितालङ्कारः, वृत्त्यनुप्रासश्छेकानुप्रासश्चेत्येषां संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

तैरिति बहुवचनात् पृथगित्यत्र निजेत्यत्र च वीप्सा लक्षितव्या ॥५६॥

**বাঙ্গালা**—তাহার পর, ইন্দ্রপ্রভৃতি চারি জন দেবতাই, পরের মন অপহরণ করিতে নিপুণ নিজ নিজ দূতীকে গোপনভাবে দময়ন্তীর নিকট পৃথক্ পৃথক্ ভাবে পাঠাইয়া দিলেন; আর যুদ্ধে সন্তোষলাভ করার ছলে মণিরত্নাদি বিবিধ উপহার গোপন ভাবে দময়ন্তীর পিতার নিকট প্রেরণ করিলেন ॥৫৬॥

**अन्वयः**—तैः विबुधैः अपि स्वः विहाय बत यत् भूः अनुसस्रे, अत्र चित्रम् । अथवा निरूढा काचित् द्यौः न अस्ति ; (किन्तु) यत्र हि चित्तं चलति, सा एव सा ॥५७॥

चित्रमिति । तैः प्रकृतैः, विबुधैरपि देवैरपि पण्डितैरपि च, स्वः स्वर्गलोकं विहाय । बत खेदे । यत् भूः मर्त्यलोकः, अनुसस्रे अनुगता ; अत्र विषये, चित्रमाश्चर्य्यम्, वर्त्तत इति शेषः ; भुवोऽपेक्षया स्वर्ग-

---

(१) चलति ।

ग्रीष्मलङ्घितपथैरथ वाहैः लम्भिता भुवममी सुरसाराः।
वक्रितोन्नमितकन्धरबन्धाः शुश्रुवुर्ध्वनितमध्वनि दूरम्॥५८॥
किं घनस्य जलधेरथवैवं नैव संशयितुमप्यलभन्त।
स्यन्दनं परमदूरमपश्यन् निस्वनश्रुतिसहोपगतं ते (१)॥५९॥

---

स्वीतुष्टत्वात् मूर्खैरपि निकृष्टमपहाय उत्कृष्टस्यैवानुसरणात् अत्र तु पण्डितैरपि तदतिक्रमणकरणादिति भावः। ननु वस्तुत एव दिवि सत् कथं त्यक्तमित्याह निरूढ़ा नियमेन प्रसिद्धा, काचित् द्यौः स्वर्गो नास्ति; किन्तु यत्र हि स्थलाम्, चित्तं रमति कारणविशेषेण लगति, सा स्थल्येव, सा द्यौः स्वर्गः। तेन तदानीमिन्द्रादीनां दमयन्त्याश्रयतया भूलोक एव चित्तलगनात् स एव तेषां स्वर्गः। पुराणभारतादौ तु मेरुपृष्ठादीनां यत् स्वर्गतया वर्णनं तत् कल्पनामात्रमित्याशयः।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः चित्तमत इति च्छेकानुप्रासेन संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः॥५७॥

বাঙ্গালা—তাঁহারা দেবতা হইয়াও, স্বর্গলোক পরিত্যাগ করিয়া যে ভূলোকে গমন করিলেন; এবিষয়ে আশ্চর্য্য আছে বটে। অথবা প্রসিদ্ধ কোন স্বর্গ নাই; কিন্তু যে স্থানেই মন লাগিবে সেই স্থানেই স্বর্গ॥৫৭॥

অন্বয়:—অথ গ্রীষ্ম-লঙ্ঘিতপথৈঃ বাহৈঃ ভুবং লম্ভিতাঃ অমী সুরসারাঃ বক্রিতোন্নমিত-কন্ধর-বন্ধাঃ (সন্তঃ) অধ্বনি দূরং ধ্বনিতং শুশ্রুবুঃ॥৫৮॥

ग्रीष्मेति। अथ इन्द्रादीनां भुवोऽनुसरणानन्तरम्, ग्रीष्मं लङ्घिताः पन्थानो यैस्तैः, वाहयन्ति गन्तव्यदेशं प्रापयन्तीति वाहा व्योमयानानि तैः, भुवं मर्त्यलोकम्, लम्भिताः प्रापिताः, अमी सुरसारा इन्द्रादयश्चत्वारो देवश्रेष्ठाः आदौ वक्रिताः पार्श्वे वक्रीकृताः अनन्तरमुन्नमिता उत्तोलिताः कन्धरा ग्रीवा येषु ते तथोक्ता बन्धाः शरीरस्य भङ्गीविशेषा येषां ते तादृशाः सन्तः, अध्वनि पथि, दूरं पृष्ठदिशि दूरादागतम्, ध्वनितं शब्दितं शब्दमिति यावत्, शुश्रुवुः श्रुतवन्तः। नलस्य रथशब्दोऽयमित्यवधेयम्।

अत्र स्वभावोक्तिरलङ्कारो वृत्त्यनुप्रासच्छेकानुप्रासाभ्यां संसृज्यते। माधुर्यं गुणः, वैदर्भी च रीतिः॥५८॥

বাঙ্গালা—তাহার পর, ব্যোমযানগুলি তাড়াতাড়ি পথ অতিক্রম করিয়া, দেবশ্রেষ্ঠ ইন্দ্রপ্রভৃতিকে নিয়া ভূতলে উপস্থিত করিল; পরে, তাঁহারা প্রথমে গ্রীবাদেশ বক্র করিয়া, তাহার পর আবার উত্তোলন করিয়া, ভঙ্গীবিশেষে থাকিয়া, পথে দূর হইতে আগত কোন শব্দ শুনিতে পাইলেন॥৫৮॥

অন্বয়:—তে (ইদং) কিং ঘনস্য, অথবা জলধেঃ এবং সংশয়িতুম্ অপি (সময়ং) ন এব অলভন্ত পরং নিস্বনশ্রুতিসহোপগতম্ অদূরং স্যন্দনম্ অপশ্যন্॥৫৯॥

किमिति। ते इन्द्रादयो देवाः, इदं ध्वनितं किं घनस्य मेघस्य; अथवा जलधेः समुद्रस्य; एवमित्थं संशयितुमपि सन्देहं कर्त्तुमपि, नैव अलभन्त समयं नैव प्राप्नुवन; यतः परं केवलम्, निस्वनस्य तत्स्यन्दनध्वनेः श्रुत्या श्रवणेन सह उपगतमुपस्थितम्, अदूरं निकटवर्त्तिनम्, स्यन्दनं रथम्, अपश्यन्। इति तत्स्यन्दनस्य अतीववेगगामित्वं सूचितम्।

अत्र रथध्वनौ मेघध्वनेः समुद्रध्वनेश्च संशयात् तस्य चानवसानात् शुद्धसन्देहः, संशयकालालाभसम्बन्धेः

---

(१) निःस्वनश्रुतिसहोपगतं ते।

सूत-विश्रमद-कौतुकि-भावं भाव-बोध-चतुरं तुरगाणाम् ।
तत्र नेत्रजनुषः फलमेते नैषधं बुबुधिरे विबुधेन्द्राः ॥६०॥
वीक्ष्य तस्य वरुणस्तरुणत्वं यत्तदाप निबिडं जडभूयम् ।
औचिती जलपतेः किमु सास्य प्राज्यविस्मयरसस्तिमितस्य ॥६१॥

---

तदसम्बन्धाभिधानादतिशयोक्तिः, पूर्वार्द्धं प्रति परार्द्धवाक्यार्थस्य हेतुत्वात् काव्यलिङ्गम्, परार्द्धं सहोक्तिश्च ; इत्थं-मेषां मिथो निरपेक्षतया संसृष्टिः । तथा रथध्वनिबोधकशब्दोपादानाभावात् श्रवणस्य इत्यस्य कर्मपदोपादाना-भावाच्च न्यूनपदतादोषद्वयम् । तत्समाधानाय पूर्वार्द्धमेवं पठनीयम्—'किं घनस्य जलधेरिति येषां नैव संश-यितुमप्यवकाशः ।' प्रसादो गुणः, वैदर्भी च रीतिः ॥५९॥

বাঙ্গালা—ইহা কি মেঘের ধ্বনি ? না সমুদ্রের ধ্বনি ? এরূপ সন্দেহ করিবার অবসরও, তাঁহারা পাইলেন না। কেন না, শব্দ শুনিবার সঙ্গে সঙ্গেই রথখানা আসিয়া উপ-স্থিত হইল ; ইহাই কেবল তাঁহারা দেখিলেন ॥৫৯॥

অন্বয়ঃ—एते विबुधेन्द्राः तत्र सूतविश्रमद-कौतुकि-भावं तुरगाणां भाव-बोध-चतुरं नेत्रजनुषः फलं नैषधं बुबुधिरे ॥६०॥

सूतेति । एते पूर्वोक्ताः, विबुधेन्द्रा देवश्रेष्ठा इन्द्रादयः, तत्र स्यन्दने, सूताय सारथये विश्रमं विश्रामं ददातीति विश्रमदः कौतुकिभावः कौतुकं यस्य तम्, कौतुकात् स्वयमेवाश्वचालनेन सारथये विश्रामं ददतमित्यर्थः ; तथा तुरगाणामश्वानाम्, भावबोधे अभिप्रायज्ञाने चतुरं निपुणम् ; तथैवाश्वचालनादिति भावः । नेत्रजनुषः फलम् अद्वितीयसुन्दरत्वात् सर्वस्यैव नयनोत्पत्तेः सफलताजनकमित्यर्थः, नैषधं निषधदेशाधिपतिं नलम्, बुबुधिरे दर्शनमात्रेणैव ज्ञातवन्तः ; तुरगाणां भावबोधचतुरत्वात् अद्वितीयसुन्दरत्वाच्च त्याशयः ।

अत्र नैषधत्वेन बोधं प्रति तुरगाणां भावबोधचतुरमिति विशेषणपदार्थौ हेतुरिति पदार्थहेतुकं काव्यलिङ्ग-मलङ्कारश्छेकानुप्रासेन संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ॥६०॥

বাঙ্গালা—সেই ইন্দ্রপ্রভৃতি দেবশ্রেষ্ঠগণ, সেই রথের ভিতরের লোকটীকে নল বলিয়া বুঝিতে পারিলেন। কারণ, তিনি কৌতুকবশতঃ অশ্বচালনা করিয়া সারথিকে বিশ্রাম দান করিতেছিলেন এবং অশ্বের অভিপ্রায় বুঝিতে নিপুণ ছিলেন; আর তিনি সেই দেবগণের নয়নোৎপত্তির ফলস্বরূপ হইয়াছিলেন ॥৬০॥

অন্বয়ঃ—तदा वरुणः तस्य तरुणत्वं वीक्ष्य यत् निबिडं जडभूयम् आप ; सा प्राज्य विस्मय-रस-स्तिमितस्य अस्य जलपतेः किमु न औचिती ? ॥६१॥

वीक्ष्येति । तदा वरुणः, तस्य नलस्य, तरुणत्वं यौवनं यौवनश्रियमित्यर्थः, वीक्ष्य विशेषेण दृष्ट्वा, यत् निबिडं सातिशयम्, जडभूयं जडत्वम्, ईदृशमद्वितीयसुन्दरं युवानं विहाय दमयन्ती कथमपि मां न वरिष्यतीति दमयन्तीनैराश्यात् स्तब्धत्वमित्यर्थः ; जलत्वञ्च, आप प्राप्तवान् ; सा जडभूयप्राप्तिः, प्राज्येन प्रचुरेण विस्मय-रसेन जलपतेः जलाधिपस्य जडाधिपस्य च, किमु न औचिती न उचिता ? अपि तु औचित्यमेवेत्यर्थः, जलपते-र्जलत्वस्य जडपतेर्जडत्वस्य च सर्वथा सम्भवपरत्वादिति भावः ।

अत्र जडजलयोर्भेदेऽपि डलयोरैक्यात् नाभेदाध्यवसायादतिशयोक्तिरर्थापत्तिश्च ; अनयोरङ्गाङ्गिभावेन सङ्करः ; सोऽपि च प्रथमद्वितीयपादगताभ्यां छेकानुप्रास वृत्त्यनुप्रासाभ्यां संसृज्यते । माधुर्यं गुणः, वैदर्भी च रीतिः ।

**रूपमस्य विनिरूप्य तथाति-म्लानिमाप (१) रविवंशवतंसः ।**
**कीर्त्यते यदधुनापि स देवः काल एव सकलेन जनेन ॥६२॥**
**यं बभार दहनः खलु तापं रूपधेयभरमस्य विमृश्य ।**
**तत्र भूदनलता जनिकर्त्री मा तदप्यनलतैव तु हेतुः ॥६३॥**

---

जडभूयमिति "भावे भुवः" इति भवतेः क्यप् । उचितैव औचिती ब्राह्मणादित्वात् स्वार्थे ष्यञ्प्रत्ययादी-प्रत्ययः ॥६१॥

**বাঙ্গালা**—সেই সময়ে বরুণ, বিশেষ ভাবে নলের যৌবনশ্রী দর্শন করিয়া যে অত্যন্ত জড়তা প্রাপ্ত হইয়াছিলেন; তাহা কি সেই জলাধিপতি বরুণের পক্ষে সম্ভবপর হইয়াছিল না? (অবশ্যই হইয়াছিল)। কারণ, তিনি তখন অত্যন্ত আশ্চর্য্যবোধে নিশ্চল হইয়া গিয়াছিলেন ।৬১॥

**अन्वयः**—रविवंश-वतंसः अस्य रूपं विनिरूप्य तथा अतिम्लानिम् आप, यत् अधुना अपि सकलेन जनेन सः देवः कालः एव कीर्त्यते ॥६२॥

रूपमिति । रविवंशस्य सूर्यकुलस्य वतंसः प्रधानत्वाद्भूषणस्वरूपो यम इत्यर्थः, अस्य नलस्य, रूपं सौन्दर्यम्, विनिरूप्य विशेषेण दृष्ट्वा, तथा तादृशम्, अतिम्लानिम् अत्यन्तमालिन्यं दमयन्तीलाभनैराश्याद्दुःखातिशयेन नितान्तकालिमानमित्यर्थः, आप प्राप्तवान्; यद् यथा, अधुनापि सकलेन जनेन, न पुनरेकेन द्वाभ्यां वेति भावः, स देवो यमः, काल एव कृष्णवर्ण एव सर्वभूतकलनात् कालनामक एव च कीर्त्यते बुध्यते ।

अत्र तदानीन्तनमालिन्यप्राप्तिनिबन्धनकालत्वकीर्त्तनासम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिरलङ्कारः प्रथमचतुर्थपादयोश्छेकानुप्रासस्तयोः संसृष्टिः । तथा यदित्यस्य तथेत्यनेन सम्बन्धो न घटत इत्यभवन्मतसम्बन्धतादोषः; स च 'कीर्त्यते सुर इहापि यथासौ' इति पाठेन समाधेयः । प्रसादो गुणः, वैदर्भी रीतिः ।

"कालो दण्डधरः श्राद्धदेवो वैवस्वतोऽन्तकः" इत्यमरः ।

वतंस इति "अवस्य तंसे" इति अवस्य अकारलोपः ॥६२॥

**বাঙ্গালা**—সূর্য্যবংশের শিরোভূষণ যম, বিশেষ ভাবে নলের রূপ দেখিয়া সেইপ্রকার গুরুতর মালিন্য প্রাপ্ত হইলেন; যাহাতে এখনও সমস্ত লোক সে দেবতাকে কালই বলে ।৬২।

**अन्वयः**—दहनः अस्य रूपधेयभरं विमृश्य खलु यं तापं बभार; तत्र अनलता जनिकर्त्री मा भूत्; तु तदपि अनलता एव हेतुः ॥६३॥

यमिति । दहनः अग्निः, अस्य नलस्य, रूपधेयस्य सौन्दर्यस्य भरम् अतिशयम्, विमृश्य खलु दृष्ट्वा विविच्य स्वापेक्षया आधिक्यं मात्सर्य्येण, यं तापम् बभार धारयामास; तत्र तापविषये, अनलता आत्मनो वह्नित्वरूपा जनेरुत्पत्तेः कर्त्री जनिका जनकतावच्छेदिकेत्यर्थः, मा भूत् न भवतु; वह्नित्वस्य परकीयतापत्वावच्छिन्नजनकतावच्छेदकत्वात् आत्मतापं प्रति तु तथात्वाभावादिति भावः । तु किन्तु, तदपि तथापि, अनलतैव तद्वह्नित्वमेव, हेतुस्तत्र तापे कारणमिति विरोधः; अनलता नलभिन्नतैवेति च तत्समाधानम् । तथा च यद्यहं नलोऽभविष्यम् तदावश्यमेव दमयन्ती ममाभविष्यत्; किन्तु नलभिन्नस्य मे दमयन्ती कथमपि न भविष्यति, ममापेक्षया नलस्य सर्वथा रूपाधिक्यादिति भावः ।

---

(१) म्लानिमाप ।

कामनीयकमधःकृतकामं काममक्षिभिरवेक्ष्य तदीयम् ।
कौशिकः स्वमखिलं परिपश्यन् मन्यते स्म खलु कौशिकमेव ॥६४॥
रामणीयक-गुणाद्वयवादं मूर्त्तमुत्थितममुं परिभाव्य ।
विस्मयाय हृदयानि वितेरुः तेषु तेन न सुराः प्रबभूवुः ॥६५॥

---

अहो ! अत्र खलु कवेर्नलपदलाभेन महती सुविधा सञ्जाता । यदेतन्नलपदमहिम्ना स्थाने स्थाने असाधारणौ चमत्कारिता समावेशिता ।

अत्र विरोधाभासोऽलङ्कारः । तथा नदपीति तथापीत्यर्थस्य अवाचकत्वादवाचकत्वदोषः ; 'सा तथाप्यनलतैव तु हेतुः' इति पाठेनास्तौ परिहार्य्यः । बन्धोत्कर्षस्य आरोहावरोहाभ्यामोजो गुणः, गौडी च रीतिः ।

रूपधेयेति "नामरूपभागेभ्यः धेयच्" इति रूपशब्दात् स्वार्थे धेयच् प्रत्ययः ॥६३॥

বাঙ্গালা—অগ্নি, নলের অত্যন্ত সৌন্দর্য্য দেখিয়া যে সন্তাপ বহন করিয়াছিলেন ; সে সন্তাপের প্রতি তাঁহার অনলতা ( অগ্নিতা ) কারণ না হইতে পারে ; কিন্তু তথাপি তাঁহার অ-নলতাই (নলভিন্নতাই) কারণ ॥৬৩॥

**अन्वयः**—कौशिकः अक्षिभिः अधःकृतकामं तदीयं कामनीयकं कामम् अवेक्ष्य अखिलं स्वं परिपश्यन् (सन्) स्वं खलु कौशिकम् एव मन्यते स्म ॥६४॥

कामनीयकमिति । कौशिक इन्द्रः, अक्षिभिः सहस्रसंख्यकैरेव नेत्रैः । सर्वस्यैवाक्षिसहस्रस्य नियोजनम् अभ्यात्मावेक्षणार्थमिति भावः । अधःकृतः तिरस्कृतः कामः कन्दर्पो येन तत्, तदीयं नलसम्बन्धि, कामनीयकं कमनीयता सौन्दर्य्यातिशयमिति यावत्, कामं पर्य्याप्तं यथा स्यात्तथा, अवेक्ष्य दृष्ट्वा, अखिलं सकलम्, स्वं स्वदेहञ्च, परिपश्यन् तारतम्यकरणार्थं सर्वतो विलोकयन् सन्, स्वम् आत्मानम् । खलु वाक्यालङ्कारे । कौशिकमेव पेचकमेव, मन्यते स्म ; नलापेक्षया स्वस्य सर्वथा कुत्सितत्वादिति भावः ।

अत्र अधःकृतकाममित्यनेन कामापेक्षया नलस्याधिक्यप्रतिपादनात् व्यतिरेकः, कौशिकमेव मन्यते स्मेति मनधातोः प्रयोगात् वाच्या जात्युत्प्रेक्षा, पूर्वार्द्धे छेकानुप्रासः, शेषे वृत्त्यनुप्रासः, तेषां मिथो निरपेक्षतया संसृष्टिः । उत्प्रेक्षया च नलस्याधिक्यसूचनात् व्यतिरेकान्तरं व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः । माधुर्य्यं गुणः, वैदर्भी रीतिः ।

"कौशिकौ नकुले व्यालग्राहे गुग्गुलुघूकयोः । कोषज्ञे कथयोश्च स्याद्विश्वामित्रमुनावपि । कौशिकी चण्डिकायाञ्च नदीभेदे च योषिति" इति मेदिनी ।

कामनीयकमिति भावार्थे वुञ् । स्वमिति काकाक्षिगोलकन्यायेन उभयत्राप्यन्वयः ॥६४॥

বাঙ্গালা—ইন্দ্র সহস্র নয়ন দ্বারা, কামদেব অপেক্ষাও মনোহর নলের সৌন্দর্য্য পর্য্যাপ্তরূপে দেখিয়া এবং আপনার সমস্ত দেহ সর্বতোভাবে দেখিয়া, আপনাকে একটী পেচক-রূপকী বলিয়াই মনে করিলেন ॥৬৪॥

**अन्वयः**—सुराः अमुम् उत्थितं मूर्त्तं रामणीयकगुणाद्वयवादं परिभाव्य हृदयानि विस्मयाय वितेरुः ; तेन तेषु न प्रबभूवुः ॥६५॥

रामणीयकेति । सुरा इन्द्रादयो देवाः, अमुं नलम्, उत्थितम् आविर्भूतम्, मूर्त्तं मूर्त्तिमन्तम्, रामणीयकगुणस्य सौन्दर्य्यगुणस्य अद्वयवादम् अद्वितीयप्रवादम् अद्वितीयत्वेन लोकैरभिधीयमानं साक्षात् सौन्दर्य्यगुणमित्यर्थः, परिभाव्य सर्वतो भावेन सम्भाव्य, हृदयानि स्वस्वमनांसि, विस्मयाय आश्चर्य्याय, वितेरुर्ददुः आश्चर्य्यरद्ध

प्रैयरूपकविशेषनिवेशैः संवदद्भिरमराः श्रुतपूर्वैः ।
एष एव स नलः किमितीदं मन्दमन्दमितरेतरमूचुः ॥६६॥
तेषु तद्विध-वधू-वरणार्हं भूषणं स समयः स रथाध्वा ।
तस्य कुण्डिनपुरं प्रति सर्पन् भूपतेर्व्यवसितानि शशंसुः ॥६७॥

---

समर्पितानि चक्रुरित्यर्थः । तेन विस्मयाय दत्तत्वेन हेतुना, तेषु हृदयेषु विषयेषु, न प्रबभूवुः न प्रभवो भूताः ; दानस्य स्वस्वत्वध्वंसपूर्वकपरस्वत्वोत्पत्तिफलकत्यागरूपतया हृदयानां विस्मयायैव दत्तत्वात् तेषु च इन्द्रादीनां स्वत्वध्वंसात् विस्मयस्यैव च स्वत्वोत्पत्तेः कर्त्तव्यावधारणस्य च हृदयकार्य्यतया तत् कर्त्तव्यावधारणं कर्त्तुमिन्द्रादयो न शेकुरिति भावः ।

अत्र नलस्य मूर्त्तिरामणीयकगुणाश्रयवादत्वेन सम्भावनाकरणात् वाच्या गुणोत्प्रेक्षालङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ॥६५॥

বাঙ্গালা—ইন্দ্রপ্রভৃতি দেবগণ, নলকে, আবির্ভূত মূর্ত্তিমান্ অদ্বিতীয় সৌন্দর্য্যগুণ মনে করিয়া, আপন আপন চিত্তকে বিস্ময়ের নিকট সমর্পণ করিলেন ; সেই জন্য আর সে চিত্তগুলির প্রভু থাকিতে পারিলেন না ॥৬৫॥

**অন্বয়:**—অমরাঃ শ্রুতপূর্ব্বৈঃ সংবদদ্ভিঃ প্রৈয়-রূপক-বিশেষ-নিবেশৈঃ 'एष एव किमिति सः नलः' इदं मन्दमन्दम् इतरेतरम् ऊचुः ॥६६॥

प्रैयेति । अमरा इन्द्रादयो देवाः, पूर्वं श्रुतैः लोकमुखादाकर्णितैरिति श्रुतपूर्वैः, संवदद्भिः श्रुतैः सह सम्मिलद्भिः श्रुतानुरूपैरेवेत्यर्थः, प्रैयरूपकस्य प्रीतिकरसौन्दर्य्यस्य यो विशेषः अतिशयस्तस्य निवेशैः विधातुर्विन्यासैर्हेतुभिः, एष दृश्यमानः पुरुष एव, किमिति किमु, स श्रुतपूर्वो नलः, इदं मन्दमन्दम् अनुच्चैरुच्चैः, नलो यथा न शृणुयादिति भावः, इतरेतरं परस्परम्, ऊचुः उक्तवन्तः ।

अत्र प्रसादो गुणः, वैदर्भी च रीतिः ।

प्रियमेव प्रैयं प्रज्ञादित्वात् स्वार्थे अण् । रूपमेव रूपकम्, स्वार्थे कः ॥६६॥

বাঙ্গালা—সেই প্রীতিকর অসীম সৌন্দর্য্য, শ্রুতপূর্ব্ব সৌন্দর্য্যের সঙ্গে মিলিয়া গেল দেখিয়া, ইন্দ্রপ্রভৃতি দেবগণ পরস্পর পরস্পরকে আস্তে আস্তে এই কথা বলিলেন যে, "ইনিই কি সেই নল ?" ॥৬৬॥

**অন্বয়:**—तद्विध-वधू-वरणार्हं भूषणं, स समयः, कुण्डिनपुरं प्रति सर्पन् सः रथाध्वा, (इमानि) तस्य भूपतेः व्यवसितानि तेषु शशंसुः ॥६७॥

तेष्विति । तद्विधा अद्वितीयसुन्दरी या वधूः स्त्री दमयन्ती तस्या वरणार्हं वरणयोग्यम्, भूषणं महामूल्यालङ्कारः, स समयः स्वयंवरकालः, तथा कुण्डिनपुरं भीमराजधानीम्, प्रति लक्ष्यीकृत्य, गच्छन् प्रसरन्, स रथस्य नल-स्यन्दनस्य अध्वा पन्थाः प्रमाणमित्यर्थः, तस्य भूपतेर्नलस्य, व्यवसितानि अध्यवसायान् दमयन्तीविवाहं चिकीर्षतीति यावत्, तेषु इन्द्रादिषु देवेषु, शशंसुः स्पष्टं सूचयामासुः ; एभिर्लिङ्गैः नलोऽपि दमयन्तीपरिणयार्थमेव गच्छतीति ते देवा बुबुधिरे इत्यर्थः ।

अत्र तादृशशंसनं प्रति तादृशभूषणरूपे एकस्मिन् कारणे सत्यपि समयादिकारणान्तरसमुपन्यासात् समुच्चयोऽलङ्कारः । तत्कृता च विच्छित्तिः । ततश्च नलो दमयन्तीलिप्सावान् तद्वरणयोग्यभूषणधारणात् तत्कामुकनिर्भावात् तत्पुरं प्रति रथपथप्रवर्त्तनाच्चेत्यनुमानेन अनुमानालङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ॥६७॥

**धर्म्मराज-सलिलेश-हुताशैः प्राणतां श्रितममुं जगतस्तैः।**
**प्राप्य हृष्ट-चल-विस्तृत-तापैः चेतसा निभृतमेतदचिन्ति ॥६८॥**
**नैव नः प्रियतमोभयथासौ यद्यमुं न वृणुते वृणुते वा।**
**एकतो हि (१) धिगमूमगुणज्ञाम् अन्यतः कथमदःप्रतिलम्भः ॥६९॥**

---

**বাঙ্গালা**—দময়ন্তীর ন্যায় রমণীর বরণের যোগ্য অলঙ্কার, সেই সময় এবং রথের কুণ্ডিনপুরগামী সেই পথ—এই গুলি, মহারাজ নলের উদ্যমকে দেবগণের নিকট ব্যক্ত করিল ॥৬৭॥

**अन्वयः**—तैः धर्म्मराज-सलिलेश-हुताशैः जगतः प्राणतां श्रितम् अमुं प्राप्य हृष्ट-चल-विस्तृततापैः (सद्भिः) चेतसा निभृतम् एतत् अचिन्ति ॥६८॥

धर्म्मराजेति। तैः पूर्व्वोक्तैः, धर्म्मराजो यमः, सलिलेशो वरुणः, हुताशश्चाग्निस्तैः, जगतो जगद्वासिनः परि-पर्यवसितलोकमात्रस्य, प्राणतां श्रितं दयादाक्षिण्यादिसर्वगुणाकरत्वाद्विशेषतो लोकवत्सलत्वाच्च जीवनतुल्यत्वमवलम्ब-मानम्, अमुं नलम्, प्राप्य हृष्टा, हृष्टाः परमसुन्दरत्वात् परमसज्जनत्वाच्च प्रथममानन्दिताः, परं चलाः तस्य दमयन्तीलिप्सानुमानात् चास्थिरचित्ताः, ततपरञ्च विस्तृततापाः तादृशसौन्दर्य्येण तस्यैव दमयन्तीकर्त्तृकवरणा-वश्यम्भावानुमानेन तत्र स्वस्वनैराश्योदयात् बाहुल्येनोत्पन्नदुःखाश्च तैः सद्भिः, चेतसा स्वस्वचित्तेन, निभृतं गुप्तम्, एतत् वक्ष्यमाणप्रकारम्, अचिन्ति वितर्कितम्। अथ च सर्वप्राणापहारी यमः प्राणान् प्राप्य हृष्टो भवत्येव; वरुणश्च जलेशतया जलरूपत्वात् जगत्प्राणं वायुं प्राप्य चञ्चलो भवत्येव; अग्निश्च स्वभावं जगत्प्राणं वायुं प्राप्य प्रज्वलन्निव विस्तृततापो जायत एवेति भावः।

अत्र क्रमेण हर्ष-चपलता-विषादाख्यभावोदयात् भावोदयनामालङ्कारः, हृष्टत्वादिकं प्रति 'जगतः प्राणतां श्रितममुं प्राप्य' इति पदार्थो हेतुत्वात् काव्यलिङ्गञ्चानयोरङ्गाङ्गिभावेन सङ्करः। प्रसादो गुणः, वैदर्भी च रीतिः ॥६८॥

**বাঙ্গালা**—সর্বগুণাকর বলিয়া নল, জগতের সকলেরই প্রাণতুল্য ছিলেন; সুতরাং যম, বরুণ ও অগ্নি সেই নলকে পাইয়া, প্রথমে আনন্দিত হইলেন; তাহার পরে তাঁহাদের মন অস্থির হইল; তৎপরে আবার তাঁহাদের মনে গুরুতর সন্তাপ জন্মিল। তদনন্তর, তাঁহারা মনে মনে গোপনে এইরূপ চিন্তা করিতে লাগিলেন ॥৬৮॥

**अन्वयः**—असौ यदि अमुं न वृणुते वा वृणुते उभयथा (अपि) नः न एव प्रियतमा (भवेत्)। हि एकतः अगुणज्ञां अमूं धिक्; अन्यतः कथम् अदःप्रतिलम्भः ॥६९॥

नैति। असौ दमयन्ती, यदि अमुं नलम्, न वृणुते वा अथवा, वृणुते, उभयथापि एतदुभयपक्षेऽपि, असौ नः अस्माकम्, नैव प्रियतमा नैव विशेषप्रीतिकरी भवेत्। कथमित्याह-हि यस्मात्, एकतः एकस्मिन् पक्षे नलस्यावरणरूपे तयोः प्रथमपक्ष इत्यर्थः, अगुणज्ञां गुणानभिज्ञां गुणानभिज्ञतया मूर्खप्रायामित्यर्थः, अमूं दम-यन्तीम्, धिक् निन्दामि। सर्वगुणवन्तं नलं विहाय नलापेक्षया न्यूनगुणमस्मदादिष्वन्यतमं कञ्चित् यद्यसौ वृणुयात्, तदापि अगुणज्ञतया निन्दनीयत्वात् नैव नः प्रियतमा भवेदिति भावः। अन्यतः अन्यस्मिन् पक्षे नल-स्यैव वरणपक्ष इत्यर्थः, कथम् अदःप्रतिलम्भः अमुष्या लाभो भवेत, कथमपि नेत्यर्थः। तथा च नलापेक्षया न्यूनगुणकतयैव यदि नास्मान् वृणुयात्, तदास्मास्ववज्ञैव तावदस्याः प्रकाशेत। एवञ्च अवज्ञाकारिणी कथं

---

(१) एकतस्तु।

मां वरिष्यति तदा यदि मत्तो वेद नैयमियदस्य महत्त्वम् (१) ।
ईदृशी च कथमाकलयित्री मद्विशेषमपरात् नृपपुत्री ॥७०॥
नैषधे बत वृते दमयन्त्या व्रीडितो नहि बहिर्भवितास्मि ।
त्वां गृहेऽपि वनिता कथमास्यं क्लीनिमीलि खलु दर्शयिताहे ॥७१॥

प्रियतमा भवेदित्याशयः । केचित्तु इयं यमस्यैव चिन्तेति वदन्ति । तन्न न इति बहुवचनानुपपत्तेः । न च "वासवश" इति एकस्मिन्नेव वास्माकमादिभिदाबहुवचनमिति वाच्यम् शब्दार्थोभयसाधुत्वसम्भवे केवलशब्दसाधुत्वाश्रयस्यान्याय्यत्वात् तादृशबहुवचनस्य शब्दमात्रसाधुत्वस्यैवोपपादकत्वात् अन्यथा सर्वत्रैव तादृशबहुवचनापत्तेः । तेन परत्रापि वरयाणामेव कन्यालीयचिन्तेति बोध्यम् ।

अत्र पूर्वार्द्धे विकल्पो नामालङ्कारः, "विकल्पस्तुल्यबलयोर्विरोधश्चातुरीयुतः" इति लक्षणात् ; धिक्कारं प्रति अगुणज्ञापदस्यार्थो हेतुरिति काव्यलिङ्गञ्चानयोः परस्परनिरपेक्षतया संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥६९॥

বাঙ্গালা—দময়ন্তী যদি নলকে বরণ না করে, কিম্বা বরণ করে ; তবে সেই উভয়পক্ষেই সে আমাদের বিশেষ প্রীতিকারিণী হইবে না । কারণ, তাহার এক পক্ষে (নলের বরণ না করা পক্ষে), সে গুণগ্রাহিণী নহে বলিয়া তাহাকে ধিক্কার করিব ; আর অন্য পক্ষে ( নলের বরণ করা পক্ষে ) উহার লাভ হইবে কি করিয়া ? ( সুতরাং বিশেষ প্রীতিকারিণী হইবে না ) ॥৬৯॥

**अन्वयः**—इयं यदि मत्तः अस्य इयत् महत्त्वं न वेद, तदा मां वरिष्यति । ईदृशी च राजपुत्री अपरात् मद्विशेषं कथम् आकलयित्री ॥७०॥

मामिति । इयं दमयन्ती, यदि मत्तः मत् ममापेक्षयेति यावत्, अस्य नलस्य, इयत् एतावत्, महत्त्वं सौन्दर्यादिगुणवशात् प्राधान्यम्, न वेद न जानाति न ज्ञास्यतीत्यर्थः ; तदैव मां वरिष्यति, नान्यथेत्यभिप्रायः । अथ मुग्धतया यदीयं नलस्यैव गुणाधिक्यं जानीयात् तदातु त्वामेव वरिष्यतीत्याह ईदृशी चेति । अतिचतुरा चेत्यर्थः, राजपुत्री दमयन्ती, अपरात् नलात्, मद्विशेषं मम गुणाधिक्यम्, कथम्, आकलयित्री बोद्ध्री भविष्यतीति शेषः, अतिचातुर्य्यात् कथमपि नेत्यर्थः । अतएव मद्वरणसम्भावना आकाशकुसुमवदलीकैवेति भावः ।

अत्र परार्द्धे अन्यानुप्रासोऽलङ्कारः, प्रसादो गुणः, वैदर्भी च रीतिः ।

आकलयित्रीति ताच्छील्ये तृन्प्रत्ययस्य निष्ठादित्वात् मद्विशेषमित्यत्र "न निष्ठादिषु" इति षष्ठीनिषेधेन सामान्या द्वितीयैव ॥७०॥

বাঙ্গালা—যদি দময়ন্তী আমা অপেক্ষা নলের এত মহত্ত্ব জানিতে না পারে ; তাহা হইলেই আমাকে বরণ করিবে । অথ চ এইরূপ (সুচতুরা) রাজকন্যা, নল অপেক্ষা আমার গুণাধিক্য কি করিয়া বুঝিবে ॥৭০॥

**अन्वयः**—बत दमयन्त्या नैषधे वृते (सति), व्रीडितः (अहं) बहिः नहि भवितास्मि । गृहे अपि त्वां वनिता क्लीनिमीलि आस्यं कथं खलु दर्शयिताहे ॥७१॥

नैषध इति । बत खेदे । दमयन्त्या नैषधे नले, वृते सति, व्रीडितो लज्जितः अहम्, बहिः रथ्यादिबहिर्देशस्थः, नहि भवितास्मि न खलु भवितुं शक्ष्यामीत्यर्थः ; लोकोपहासभयादिति भावः । तर्हि गृह एव स्थास्यामीत्याह गृहेऽपि त्वां स्वकीयाम्, वनितां स्त्रियम्, क्लिशा दमयन्तीप्रत्याख्यानलज्जया निमीलति सङ्कुचतीति

(१) मामुपैष्यति तदा यदि मत्तो वेद नैयमिदमस्य महत्त्वम् ।

इत्यवेत्य मनसात्मविधेयं किञ्चन त्रिविबुधी बुबुधे न ।
नाक-नायकमपास्य तमेकं सा स्म पश्यति परस्परमास्यम् ॥७२॥
किं विधेयमधुनेति विमुग्धं स्वानुग-त्रयमवेक्ष्य ऋभुक्षाः ।
शंसति स्म कपटे पटुवर्ष्मा वञ्चनं समभिलष्य नलस्य ॥७३॥

---

तत्राहमपि, आस्यं मुखम्, कथं केन प्रकारेण खलु, दर्शयिताहे दर्शयिष्ये ; अपि तु न। अन्यदपत्रासभयात् कथमपि नेत्यर्थः । अतस्तदानीं का गतिर्भवितेति भावः ।

अत्र आस्यदर्शनासम्भवं प्रति ह्रीनिमीलितपदस्यार्थो हेतुरिति काव्यलिङ्गमर्थापत्त्या सङ्कीर्यते । प्रसादो गुणः, वैदर्भी च रीतिः ।

"दृशश्चाभिवादयोरात्मने" इति स्त्रो वनितामित्यस्य प्रयोज्यकर्तुः कर्मत्वम् । भविताऽस्मि दर्शयिताहे इत्युभयत्रापि भविष्यति लुट् ॥७१॥

**বাঙ্গালা**—হায়! দময়ন্তী নলকে বরণ করিলে, আমি লজ্জিত অবস্থায় বাহির হইতে পারিব না; আবার ঘরেও নিজের স্ত্রীকে লজ্জাসঙ্কুচিত মুখখানা কি করিয়া দেখাইব ? ॥৭১॥

**অন্বয়ঃ**—ত্রিবিবুধী মনসা ইতি অবেত্য কিঞ্চন আত্মবিধেয়ং ন বুবুধে । (পরঞ্চ) সা একং তং নাকনায়কম্ অপাস্য পরস্পরম্ আস্যং পশ্যতি স্ম ॥৭২॥

इतीति । त्रिविबुधी यम-वरुण-हुताशनात्मकास्त्रयो देवाः, मनसा इति पूर्वोक्तप्रकारम्, अवेत्य विचार्य्य, किञ्चन किञ्चिदपि, आत्मना विधेयं तदानीन्तनं कर्त्तव्यम्, न बुबुधे न निर्द्धारयामास । परञ्च सा त्रिविबुधी, एकं तं नाकनायकं स्वर्गाधिपतिमिन्द्रम्, अपास्य विहाय, तस्यातिचतुरत्वात् कर्त्तव्यमूढ़ता न जातेत्याशयः, परस्परम् आस्यं मुखम् पश्यति स्म ; कर्त्तव्यमूढत्वादिति भावः ।

अत्र पूर्वार्द्धे छेकानुप्रासः, तृतीयपादे च वृत्त्यनुप्रास इत्यनयोः संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

त्रयाणां विबुधानां समाहार इति त्रिविबुधी द्विगोर्नदादित्वात् ङीप्प्रत्ययः ॥७२॥

**বাঙ্গালা**—যম, বরুণ ও অগ্নি ইঁহারা তিন জনে মনে মনে এইরূপ আলোচনা করিয়া, নিজেদের কোন কর্ত্তব্যই স্থির করিতে পারিলেন না; তাহার পর, তাঁহারা একমাত্র সেই ইন্দ্রকে পরিত্যাগ করিয়া, পরস্পর পরস্পরের মুখাবলোকন করিতে লাগিলেন ॥৭২॥

**অন্বয়ঃ**—কপটে বর্ষ্মা পটুঃ ঋভুক্ষাঃ স্বানুগত্রয়ম্ 'অধুনা কিং বিধেয়ম্' ইতি বিমুগ্ধম্ অবেক্ষ্য নলস্য বঞ্চনং সমভিলষ্য শংসতি স্ম ॥৭৩॥

किमिति । कपटे छलकरणे, वर्ष्म देहम्, पटुर्निपुणः, ऋभुक्षा इन्द्रः, स्वानुगानां निजानुचराणां यमवरुणाग्नीनां त्रयम्, अधुना किं विधेयम् अस्माभिः कर्त्तव्यम्, इति विषये, विमुग्धं निर्णयाक्षमम्, अवेक्ष्य अवस्थादर्शनेन सम्भाव्य, नलस्य वञ्चनां प्रतारणाम्, समभिलष्य अभिप्रेत्य, शंसति स्म नलमेव वदति स्म ।

अत्र वञ्चनाभिलाषं प्रति कपटे पटुरिति पदार्थो हेतुरिति काव्यलिङ्गमलङ्कारश्छेकानुप्रासेन संसृज्यते । अवेक्ष्य ऋभुक्षा इति सन्धिविश्लेषदोषः ; स च ऋभुक्षा इत्यत शचीश इति पाठेन समाधेयः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"आखण्डलः सहस्राक्ष ऋभुक्षाः" इत्यमरः ॥७३॥

सर्वतः कुशलभागसि कच्चित् त्वं स नैषध इति प्रतिभा नः।
स्वासनार्द्धसुहृदस्त्वयि रेखां वीरसेननृपतेरिव विद्मः॥७४॥
क्व प्रयास्यसि नलेत्यलमुक्त्वा यात्रयात्र शुभयाजनि यन्नः।
तत्तयैव फलसत्वरया त्वं नाध्वनोऽर्द्धमिदमागमितः किम्॥७५॥

---

বাঙ্গালা—যম, বরুণ ও অগ্নিকে 'বর্ত্তমান সময়ে কি করা উচিত' ইহা নিশ্চয় করিতে অসমর্থ দেখিয়া, কপটাচরণে মহানিপুণ ইন্দ্র, নলকে প্রতারিত করিবার ইচ্ছা করিয়া বলিতে লাগিলেন॥৭৩॥

**अन्वयः**—सर्वतः कुशलभाक् असि कच्चित्? त्वं सः नैषधः इति नः प्रतिभा। त्वयि स्वासनार्द्धसुहृदः वीरसेननृपतेः इव रेखां विद्मः॥७४॥

सर्वत इति। हे पुरुष! त्वं सर्वतः सर्वेषु शरीरराज्यादिविषयेषु, कुशलभाक् मङ्गलशाली असि इति कच्चित् पृच्छामि। नन्वपरिचितस्य ईदृशः प्रश्नो नोपपद्यत इत्याह—त्वं स प्रसिद्धः, नैषधो निषधदेशाधिपतिर्नल इति नः अस्माकम्, प्रतिभा प्रतीतिः। ईदृश प्रतिभायां को हेतुरित्याह—त्वयि स्वस्य मम आसनार्द्धे सिंहासनार्द्धे सुहृदो मित्रस्य मित्रतयैव स्वासनार्द्धभागिन इत्यर्थः; वीरसेनस्य तन्नाम्नो नृपतेरिव, रेखां आभाम्, विद्मो दृष्ट्वा जानीमः। तेन च "आत्मच्छायावत् सुतम्" इति श्रुतेः प्रायेण पुत्रस्य पितृकान्तिग्राहित्वात् त्वयि च मित्रस्य वीरसेनस्य कान्तिदर्शनात् त्वं तस्यैव पुत्र इति प्रतीत्या परिचितत्वादेव तादृशः प्रश्नो नानुपपन्न इति भावः।

अत्र तादृशप्रतिभा प्रति पदार्थवाक्यार्थस्य हेतुत्वात् काव्यलिङ्गमलङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः। "प्रश्ने हर्षे मङ्गले च कच्चित् कामप्रवेदने" इत्यजयः। "उपमानोपमानं या भूषणस्यापि भूषणम्। आकर्षीः कथ्यते रेखा चक्षुःपीयूषवर्षिणी" इति नारायणभट्टः॥७४॥

বাঙ্গালা—তুমি সমস্ত বিষয়ে মঙ্গলে আছ ত? 'তুমি সেই নল' ইহাই আমাদের বিশ্বাস। কেন না, আমার সিংহাসনের অর্দ্ধাংশে যিনি উপবেশন করিতেন, সেই মিত্র বীরসেনরাজারই ছায়া যেন তোমাতে দেখিতেছি॥৭৪॥

**अन्वयः**—(हे) नल! (त्वं) क्व प्रयास्यसि इति उक्त्वा अलम्। यत् नः अत्र यात्रया शुभया अजनि, तत् फलसत्वरया तया एव किं त्वम् इदम् अध्वनः अर्द्धं न आगमितः?॥७५॥

क्वेति। हे नल! त्वं क्व कस्मिन् स्थाने, प्रयास्यसि इति उक्त्वा अलम् ईदृशं प्रश्नवाक्यं निष्प्रयोजनमित्यर्थः; तद्वगमेऽपि फलाभावादिति भावः। किन्तु यद् यस्मात्, नः अस्माकम्, अत्र पृथिव्याम्, यात्रया शुभया, अजनि जातम्, तस्मात् फलाय उद्देश्यसाधनाय सत्वरया त्वरान्वितया, तया यात्रयैव किं त्वम्, इदम् अध्वनः पथः, अर्द्धं न आगमितः न आनीतः, अपि तु आगमित एवेत्यर्थः। पुण्यश्लोकस्य तव दर्शनमेव यात्रायाः प्रथमं शुभफलमित्याशयः।

अत्र द्वितीयतृतीयपादयोः श्रुत्यनुप्रासच्छेकानुप्रासयोः संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः। उक्तं हि "अलं भूषणपर्याप्तिशक्तिवारणवाचकम्" इति ... प्रत्ययः॥७५॥

বাঙ্গালা—নল! তুমি কোথায় যাইবে? এইরূপ জিজ্ঞাসা করিবার প্রয়োজন নাই। কিন্তু পৃথিবীতে আমাদের যাত্রা যে হেতু শুভ হইয়াছে; সেই হেতু, সেই যাত্রাই সত্বর ফল জন্মাইবার জন্য তোমাকে এই অর্দ্ধপথ আনে নাই কি?॥৭৫॥

এষ নৈষধ! স দণ্ডধরেষ জ্বলনজালজটিলঃ স হুতাশঃ।
যাদসাং পতিরয়ং চ শেষং শাসিতারমবগচ্ছ (১) সুরাণাম্ ॥৭৬॥
অর্থিনো বয়মমী সমুপেমস্ত্বাং কিলেতি ফলিতার্থমবেহি।
অধ্বনঃ ক্ষণমপাস্য চ খেদং কুর্ম্মহে ভবতি কার্য্যনিবেদম্ ॥৭৭॥
ঈদৃশীং গিরমুদীর্য্য বিড়ৌজাঃ জোষমাপ (২) ন বিজিত্য বভাষে।
নাত্র চিত্রমভিধাকুশলত্বে শৈশবাবধি গুরুর্গুরুরস্য ॥৭৮॥

---

অন্বয়ঃ—(হে) নৈষধ! এষঃ সঃ দণ্ডভৃৎ, এষঃ সঃ জ্বালজাল-জটিলঃ হুতাশঃ, এষঃ চ যাদসাং পতিঃ, শেষং সুরাণাং শাসিতারম্ অবগচ্ছ ॥৭৬॥

গৌরবাতিশয়শালিতয়াত্মানং পরিচায়য়তি এষ ইতি। হে নৈষধ! নল! এষ দৃশ্যমানঃ, স প্রসিদ্ধঃ, দণ্ডভৃৎ কর্ম্মানুসারেণ সর্ব্বভূতদণ্ডকর্ত্তা যমঃ। অত এবাস্যানুরোধং লঙ্ঘয়ন্নবশ্যমেব দণ্ডং প্রাপ্স্যসীতি ভাবঃ। এষ প্রত্যক্ষীক্রিয়মাণঃ, স প্রসিদ্ধঃ, জ্বালজালেন শিখাসমূহেন জটিলো জটাভিরিব ব্যাপ্তঃ, হুতাশো বহ্নিঃ। তেন অস্যাপি প্রার্থনামতিক্রামন্ অন্তর্পাতিশয়ং লপ্স্যসে ইত্যাশয়ঃ। এষ নির্দ্দিশ্যমানশ্চ, যাদসাং জলজন্তূনাং পতিঃ বরুণঃ। ততশ্চাস্যাপ্যভ্যর্থনামুপেক্ষমাণো জলাবগাহনাদৌ জলজন্তুজনিতানিষ্টমনুভবিষ্যসীত্যভিপ্রায়ঃ। শেষম্ অবশিষ্টঞ্চ মাম্, সুরাণাং দেবানাম্, শাসিতারং শাসনকর্ত্তারমিন্দ্রম্, অবগচ্ছ বুধ্যস্ব। তেন চ তুষ্ণীমনুষ্ঠী ভূত্বা সুরাণাং শাসিতুর্দেবাদেশং লঙ্ঘয়ন্ উপযুক্তামেব শাস্তিং সর্ব্বথা প্রাপ্স্যসীতি ভাবঃ।

অত এবাত্র দণ্ডভৃদাদিবিশেষণানাং সাভিপ্রায়প্রয়োগাৎ পরিকরো নামালঙ্কারঃ—"উক্তির্বিশেষণৈঃ সাভিপ্রায়ৈঃ পরিকরো মতঃ" ইতি দর্পণলক্ষণাৎ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ।

"বহ্নের্দ্বয়োর্জ্বালকীলাবর্চ্চির্হেতিঃ শিখা স্ত্রিয়াম্" ইত্যমরঃ ॥৭৬॥

বাঙ্গালা—নল! ইনি সেই দণ্ডদাতা যম, ইনি সেই শিখাসমূহব্যাপ্ত অগ্নি, ইনিও সেই জলজন্তুদিগের অধিপতি বরুণ; আর অবশিষ্ট আমাকে দেবগণের শাস্তা ইন্দ্র বলিয়া জান ॥৭৬॥

অন্বয়ঃ—(হে নল!) অমী বয়ম্ অর্থিনঃ কিল (সন্তঃ) ত্বাং সমুপেমঃ, ইতি ফলিতার্থম্ অবেহি ক্ষণম্ অধ্বনঃ খেদম্ অপাস্য চ ভবতি কার্য্যনিবেদং কুর্ম্মহে ॥৭৭॥

পরিচয়াতিশয়েনালং যুষ্মাকমুদ্দেশ্যং তাবদভিধীয়তামিত্যাহ অর্থিন ইতি। হে নল! অমী বয়ম্, অর্থিনঃ কিল যাচকা এব সন্তঃ, ত্বাং সমুপেমঃ সম্প্রাপ্তাঃ স্মঃ, ইতি ফলিতার্থং নিষ্কৃষ্টার্থম্, অবেহি জানীহি। তদাস্তা-মুচ্যতামিত্যাহ—ক্ষণমল্পকালং ব্যাপ্য, অধ্বনঃ পথঃ, খেদং পরিশ্রমম্, অপাস্য অপনীয় চ, ভবতি ত্বয়ি ভবৎ-সমীপ ইত্যর্থঃ, কার্য্যনিবেদম্ অস্মাকমুদ্দেশ্যজ্ঞাপনম্, কুর্ম্মহে ইদানীমেব কুর্ম্মঃ। তেন ত্বরা নাবশ্যকীতি ভাবঃ।

পূর্ব্বপরার্দ্ধে পাদগতোঽন্ত্যানুপ্রাসোঽলঙ্কারঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৭৭॥

বাঙ্গালা—নল! তুমি এই ফলিতার্থ জান যে, এই আমরা তোমার নিকট প্রার্থী হইয়াই আসিয়াছি। তবে, ক্ষণকাল পথের পরিশ্রম দূর করিয়া, এখনই তোমার নিকট আমাদের উদ্দেশ্য জ্ঞাপন করিতেছি ॥৭৭॥

---

(১) অধিগচ্ছ। (২) বিড়ৌজাঃ জোষমাস।

अर्थि-नाम-हृषिताखिल-रोमा स्वं नृपः स्फुट-कदम्ब-कदम्बम्।
अर्चनार्थमिव तच्चरणानां स प्रणाम-करणादुपनिन्ये ॥७९॥
दुर्लभं दिगधिपैः किमनीभिः तादृशं कथमहो मदधीनम्।
ईदृशं मनसिकृत्य विरोधं नैषधेन समशायि चिराय ॥८०॥

---

अन्वयः—विडौजाः ईदृशीं गिरम् उदीर्य जोषम् आप, (किन्तु) विशिष्य न बभाषे। अस्य अभिधाकुशलत्वे चित्रं न (अस्ति; यतः) गुरुः (एव) अस्य शैशवावधि गुरुः (आसीत्) ॥७८॥

ईदृशीमिति। विडौजा इन्द्रः, ईदृशीमेवम्भूतां पूर्वोक्तरूपाम्, गिरं वाक्यम्, उदीर्य उक्त्वा, जोषं तूष्णीम्भावम्, आप प्राप्तवान्। किन्तु विशिष्य विशेषं कृत्वा, न बभाषे न उक्तवान्। हठादेव विशेषोक्तौ विवेचनावसरप्राप्त्यभावेन यदि नलेन प्रार्थनैव प्रत्याख्यायेत इत्याशङ्कयेति भावः। अत्र इत्थम्भूते, अभिधाकुशलत्वे वचननैपुण्ये, चित्रम् किञ्चिदप्याश्चर्यम्, नास्ति। यतः, गुरुर्बृहस्पतिरेव, अस्य इन्द्रस्य, शैशवावधि बाल्यकालात् प्रभृति, गुरुः शिक्षक आसीत्। बृहस्पतिशिष्यस्य अभिधाकुशलत्वं सर्वथा सम्भवपरमेवेति भावः।

अत्र अभिधाकुशलत्वे चित्राभावं प्रति शैशवेत्यादिवाक्यार्थो हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारस्तेनानुप्राणेन संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः।

"तूष्णीमर्थे सुखे जोषम्" इत्यमरः ॥७८॥

বাঙ্গালা।—ইন্দ্র এইরূপ বাক্য বলিয়া তূষ্ণীম্ভাব অবলম্বন করিলেন, কিন্তু বিশেষ করিয়া কিছু বলিলেন না। তবে, ইন্দ্রের এইরূপ বাক্চাতুর্য্যে কোনই আশ্চর্য্য নাই। কারণ, বৃহস্পতিই ইন্দ্রের বাল্যকালাবধি শিক্ষক ছিলেন ॥৭৮॥

अन्वयः—सः नृपः अर्थि-नाम-हृषिताखिल-रोमा (सन्) स्फुट-कदम्ब-कदम्बं स्वं प्रणामकरणात् तच्चरणानाम् अर्चनार्थम् इव उपनिन्ये ॥७९॥

अर्थीति। स नृपो नलः, अर्थिनाम्ना अर्थीतिनामश्रवणमात्रेण हृषितानि आनन्दादुद्गतानि अखिलानि रोमाणि यस्य स तथोक्तः सन्, अतएव स्फुटानां विकसितानां कदम्बानां कदम्बपुष्पाणां कदम्बं कदम्बस्वरूपं समूहस्वरूपमिति यावत्, स्वं स्वदेहम्, प्रणामकरणात् तच्चरणसमीपे प्रकृष्टनमस्कारकरणच्छलात्, तेषामिन्द्रादिदेवानां यानि चरणानि पादास्तेषाम्, अर्चनार्थमिव पूजनार्थमिव, उपनिन्ये उपस्थापयामास; भक्तिश्रद्धातिशयादिति भावः।

अत्र स्फुटकदम्बकदम्बस्वरूपत्वं प्रति अर्थीत्यादिपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, स्फुटकदम्बकदम्बमिति यमकं निरङ्गकेवलरूपकञ्च, प्रणामकरणच्छलादित्यपह्नुतिः, अर्चनार्थमिवेति फलोत्प्रेक्षा चैतेषां संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः।

"कदम्बं निकुरम्बे स्यात् नीपाख्यतरुपुष्पयोः पुमान्" इति मेदिनी। हृषितेति "हृषेर्लोमसु" इति इडविकल्पः ॥७९॥

বাঙ্গালা—প্রার্থীর নাম শুনিবামাত্রই নলের শরীর রোমাঞ্চিত হইল; সুতরাং তিনি প্রণাম করিবার ছলে প্রস্ফুটিত কদম্বপুষ্পসমূহস্বরূপ নিজ দেহটীকে ইন্দ্রপ্রভৃতির চরণের পূজার জন্যই যেন উপস্থাপিত করিলেন ॥৭৯॥

अन्वयः—अमीभिः दिगधिपैः किं दुर्लभम्, तादृशम् अदः कथं मदधीनम्, ईदृशं विरोधं मनसिकृत्य नैषधेन चिराय समशायि ॥८०॥

**जीवितावधि वनीयकमार्गैः याच्यमानमखिलं (१) सुलभं यत्।**
**अर्थिने परिवृढाय सुराणां किं वितीर्य्य मम तुष्यतु चेतः॥८१॥**
**भीमजा च हृदि मे परमास्ते जीवनादपि धनादपि गुर्वी।**
**न स्वमेव मम सार्हति यस्याः षोडशीमपि कलां किल नोर्व्वी॥८२॥**

---

दुर्लभमिति। अमीभिः दिगधिपैः इन्द्रादिभिर्दिक्पालैः, किं वस्तु दुर्लभम्, अपितु किमपि नेत्यर्थः। तथा तादृशम् अमीषां दुर्लभभूतम्, यद् इदं वस्तु, कथं वा मदधीनं ममायत्तम्; कथमपि नेति तात्पर्य्यम्। इत्थं विरोधमनुपपत्तिम्, मनसिकृत्य पर्य्यालोच्य, नैषधेन नलेन, चिराय दीर्घकालं यावत्, समशयि संशयितम्।

अत्र द्वितीयपादे छेकानुप्रासोऽलङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः।

मनसिकृत्येति "मध्ये पदे निवचने चमत्याधान उरसि मनसि" इति कृतिसंज्ञानात् "समासे ऽनञ्पूर्वे क्त्वो ल्यप्" इति क्त्वो ल्यप्॥८०॥

**বাঙ্গালা**—এই দিক্‌পালগণের কোন্ বস্তু দুর্লভ আছে? এবং ইহাদের দুর্লভ বস্তুই বা আমার অধীন থাকিবে কি করিয়া? এইরূপ বিরোধ মনে মনে পর্য্যালোচনা করিয়া, নল বহু কাল যাবৎ সংশয় করিলেন॥৮০॥

**अन्वयः**—वनीयकमार्गैः याच्यमानं जीवितावधि अखिलं यत् सुलभम्; (तत्) अर्थिने सुराणां परिवृढाय किं वितीर्य्य मम चेतः तुष्यतु॥८१॥

संशयानन्तरं मानसिकं वितर्कमाह—जीवितेति। वनीयकमार्गैः उत्तममध्यमादिसर्वप्रकारैरेव याचकैः, याच्यमानम्, जीवितावधि जीवनपर्य्यन्तम्, अखिलं वस्तु, यद् यस्मादर्थिभिः, सुलभम् मम सकाशादनायासेन लभ्यं स्यात्; तत् अर्थिने याचकाय, सुराणां देवानाम्, परिवृढाय अधिपाय इन्द्राय, किं वस्तु, वितीर्य्य दत्त्वा, मम चेतस्तुष्यतु, अपि तु किमपि नेत्यर्थः, इन्द्राधिकार्थिसमपात्रलाभासम्भवात् जीवनाधिकदानवस्त्वभावाच्चेति भावः।

अत्र अर्थापत्तिरलङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः।

"वनीयको याचनको मार्गणो याचनार्थिनौ" "प्रभुः परिवृढोऽधिपः" इत्यमरः।

वनुते याचत इति वनीयकः "क्यच्युटोऽन्यत्रापि" इति वनधातोः कर्त्तर्य्यनीयप्रत्यये स्वार्थे कप्रत्ययः॥८१॥

**বাঙ্গালা**—সকল প্রার্থীই প্রার্থনা করিয়া জীবনপর্য্যন্ত সমস্ত বস্তুই যেহেতু অনায়াসে পাইয়া থাকেন; সেই হেতু, প্রার্থী দেবাধিপতি ইন্দ্রকে কোন্ বস্তু দান করিয়া, আমার চিত্ত সন্তুষ্ট হইবে॥৮১॥

**अन्वयः**—उर्व्वी यस्याः षोडशीं कलाम् अपि न अर्हति; किल सा जीवनात् अपि धनात् अपि गुर्वी भीमजा च परं मे हृदि आस्ते; (किन्तु) सा मम न स्वम् एव॥८२॥

अथ दमयन्त्यात्मकं वस्त्वेव मम जीवनाधिकं वर्त्तते, तदेव तावदस्मै देवराजाय दीयतामित्याह भीमजेति। किञ्चेति चार्थः। उर्व्वी मदधिकृता पृथिवी, यस्या दमयन्त्याः, षोडशीं कलामपि षोडशभागैकभागमूल्यमपि, न अर्हति न प्राप्तुं योग्या भवति। किल सम्भावनायाम्। सा जीवनादपि धनादपि च, गुर्वी गौरववती आधिक्यवतीत्यर्थः, अधिकमूल्यत्वादिति भावः; भीमजा दमयन्ती, परं केवलम्, मे मम, हृदि चित्तमात्र एव, न पुनः क्वापि वस्त्वन्तर्न बहिरित्याशयः, आस्ते वर्त्तते; किन्तु सा भीमजा, मम न स्वमेव इदानीमपि परिणयाभावात् स्वत्वाभावदेव वर्त्तते; अतस्तां कथं दातुमर्हामि दानस्य स्वत्वमूलकत्वादिति भावः।

---

(१) अखिलैः।

मीयतां कथमभीप्सितमेषां दीयतां द्रुतमयाचितमेव।
तं धिगस्तु कलयन्नपि वाञ्छाम् अर्थिवागवसरं सहते यः ॥८३॥
प्रापितेन चटु-काकु-विडम्बं (१) लम्भितेन बहुयाचनलज्जाम्।
अर्थिना यदघमर्जति दानात् (२) तन्न लुम्पति विलम्ब्य ददानः ॥८४॥

---

अत्र पृथिव्यपेक्षया दमयन्त्या आधिक्यवर्णनात् व्यतिरेकालङ्कारः कला किमिति च काकुप्रादेन संसृष्टौ। प्रसादो गुणः, वैदर्भी च रीतिः ॥८२॥

বাঙ্গালা—যাহার ষোল ভাগের এক ভাগের মূল্যও পৃথিবীর হইতে পারে না, জীবন এবং ধন হইতেও অধিক মূল্যবতী সেই দময়ন্তীই কেবল আমার হৃদয়ে রহিয়াছে; কিন্তু এখনও তাহার উপরে আমার স্বত্ব জন্মে নাই, (সুতরাং তাহাকে আমি দান করিব কিরূপে) ॥৮২॥

अन्वयः—एषाम् अभीप्सितं कथं मीयताम्, (येन) अयाचितं एव द्रुतं दीयताम्। यः वाञ्छां कलयन् अपि अर्थि-वागवसरं सहते, तं धिक् अस्तु ॥८३॥

मीयतामिति। एषाम् इन्द्रादीनाम्, अभीप्सितम् अभीष्टं वस्तु, कथं केन प्रकारेण, मीयतां मया बुध्यताम्। येन अयाचितमेव एभिरप्रार्थितमेव, द्रुतं मया दीयताम्। एषा मभीप्सितं न ज्ञायते; तेन च अयाचितमेव द्रुतं दातुं न शक्यत इति भावः। नन्वेभिः प्राक् वाचैव प्रार्थ्यताम्, परञ्च त्वया दातव्यम्। कथमादावेव समाकुली भवसीत्याह—यो जनः, वाञ्छाम् अर्थिनो याचनेच्छाम्, कलयन्नपि जानन्नपि, अर्थिनो वाचः प्रार्थनावाक्यस्य अवसरं समयम्, सहते प्रतीक्षते, तं जनम्, धिगस्तु; प्रार्थनावाक्यप्रकाशेनार्थिनः कष्टोदयादित्याशयः।

अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥८३॥

বাঙ্গালা— আমি ইঁহাদের অভীষ্ট বস্তু কি প্রকারে জানিব যে, অযাচিত অবস্থায়ই শীঘ্র দান করিয়া ফেলিব। যে ব্যক্তি প্রার্থীর প্রার্থনেচ্ছা জানিয়াও তাহার প্রার্থনাবাক্যের অবসর প্রতীক্ষা করে, তাহার ধিক্কার হউক ॥৮৩॥

अन्वयः—विलम्ब्य ददानः (जनः) चटु-काकु-विडम्बं प्रापितेन बहुयाचनलज्जां लम्भितेन अर्थिना यत् अघम् अर्जति, तत् दानात् न लुम्पति ॥८४॥

प्रापितेनेति। विलम्ब्य प्रार्थितोऽपि बहुसमयक्षेपं कृत्वा, ददानो दानं कुर्वन् जनः, चटुः दानेन धन्यो भवामीत्यादिप्रियोक्तिः काकुः दानेन दीनं मामुद्धारयेत्यादिसानुनयोक्तिस्ताभ्यां विडम्बं विडम्बनां प्रापितेन, तथा बहुयाचनेन पुनःपुनः याच्ञावाक्योच्चारणेन या लज्जा तां लम्भितेन प्रापितेन। विलम्बेन दाने अर्थिनः तादृशी विडम्बना लज्जा चावश्यमेव भवति; तेनैव च अघमित्याशयः। अर्थिना याचकेन करणेन, यत् अघं पापम्, अर्जति आत्मन उत्पादयति; तदेव अघम्, दानात् तदर्थिन एव दानकरणात्, न लुम्पति नाशं परिमार्ष्टुं न शक्नोतीति। अधिकपुण्यलाभस्तु का कथेति भावः।

अत्र अघार्जनं प्रति पूर्वार्द्धगतपदार्थौ हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः ॥८४॥

বাঙ্গালা—(বিলম্ব করিয়া দান করিলে,) প্রার্থী ব্যক্তি, প্রিয়োক্তি ও দৈন্যোক্তি করায় বিড়ম্বনা ভোগ করে এবং বহুবার প্রার্থনা করায় লজ্জাও অনুভব করে; সুতরাং

---

(१) विलम्बम्। (२) दाता।

पङ्क-सङ्कर-विगर्हितमर्हं न श्रियः कमलमाश्रयणाय।
अर्थिपाणिकमलं विमलं तद्वासवेश्म विदधीत सुधीस्तत् ॥८७॥
याचमान-जन-मानसवृत्तेः पूरणाय बत जन्म न यस्य।
तेन भूमिरतिभारवतीयं न द्रुमैर्न गिरिभिर्न समुद्रैः ॥८८॥

---

क्रियया धनमात्रजीवनयोः कर्मतयाभिसम्बन्धात् तुल्ययोगिता, तृणवदित्युपमा च इत्येतेषां मिथो निरपेक्षतया संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः।

"त्यागो विहापितं दानमुत्सर्जनविसर्जने। विश्राणनं वितरणं स्पर्शनं प्रतिपादनम्" इत्यमरः ॥८६॥

বাঙ্গালা—যে বিধি, কুশযুক্ত জল দান করিবার জন্য দাতাকে প্রবর্ত্তিত করে; বাগ্‌ভঙ্গীনিপুণ সেই জলদানের বিধি, এইরূপই যেন বলে যে, 'প্রার্থীকে তৃণের ন্যায় কেবল ধন দান করিবে না; কিন্তু জীবনও দান করিবে' ॥৮৬॥

অন্বয়ঃ—पङ्क-सङ्कर विगर्हितं कमलं श्रियः आश्रयणाय न अर्हम्। तत् सुधीः विमलम् अर्थिपाणि-कमलं तद्वास-वेश्म विदधीत ॥८७॥

पङ्केति। पङ्कस्य पापस्य कर्दमस्य च सङ्करेण सम्बन्धेन मिश्रणेन च विगर्हितं निन्दितम्, कमलं स्थानविशेषः पद्मञ्च, श्रियः सम्पदो लक्ष्म्याश्च, आश्रयणाय अवस्थानाय, न अर्हं न योग्यं भवति; पङ्कसङ्करविगर्हितत्वादेवेति भावः। तत्तस्मात् हेतोः, सुधीर्विचक्षणो जनः, विमलं पापरहितं कर्दमरहितञ्च, अर्थिनो याचकस्य पाणिरेव कमलं पद्मम्, तस्याः सम्पदो लक्ष्म्याश्च वासवेश्म अवस्थानदेशं वासगृहञ्च, विदधीत विमलत्वादेव कुर्वीत। यथा पङ्किलस्थानं श्रीमतो जनस्य वासयोग्यं न भवति, तथा पापसम्बद्धमपि स्थानं सम्पदः स्थितियोग्यं न भवतीति पापत्वादेव विमलं सर्वदोषविवर्जितं प्रार्थिपाणिकमलं श्रियः स्थानं कल्पयेत् सर्वसम्पदमर्थिभ्य एव दद्यादिति सरलार्थो भावार्थश्च।

अत्र अनर्हत्वं प्रति पङ्केत्यादिपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, श्रियः कमलाश्रयणसम्बन्धेऽपि तदसम्बन्धाभिधानादेका अतिशयोक्तिः, अपरा च लक्ष्मीसम्पदोर्भेदेऽपि श्रीशब्देन तयोरभेदाध्यवसायादतिशयोक्तिः, छेकानुप्रासश्चेत्येतेषां मिथो निरपेक्षतया संसृष्टिः। माधुर्यं गुणः, वैदर्भी च रीतिः ॥८७॥

বাঙ্গালা—পদ্মগুলি কর্দ্দমের সংস্রবে বিশেষ নিন্দনীয় হয়, সুতরাং তাহা লক্ষ্মীর বাসযোগ্য নহে। সেই জন্য, বিচক্ষণ লোক, প্রার্থী জনের নির্ম্মল পাণিকমলকেই তাঁহার বাসস্থান করিবেন ॥৮৭॥

অন্বয়ঃ—बत यस्य जन्म याचमान-जन-मानसवृत्तेः पूरणाय न (भवति), तेन इयं भूमिः अतिभारवती; (किन्तु) द्रुमैः न, गिरिभिः न, समुद्रैः (च) न (अतिभारवती) ॥८८॥

याचमानेति। बत खेदे। यस्य पुरुषस्य जन्म, याचमानजनस्य प्रार्थयतो लोकस्य मानसवृत्तेरभिलाषस्य, पूरणाय, न भवति; तेनैव पुरुषेण, इयं भूमिः पृथिवी, अतिभारवती, तस्य निष्प्रयोजनतया दुर्वहत्वादिति भावः; किन्तु द्रुमैर्वृक्षैः नातिभारवती; गिरिभिः पर्वतैर्नातिभारवती; तथा समुद्रैश्च नातिभारवती; तेषामपि सप्रयोजनतया सुवहत्वादित्याशयः।

अत्र द्रुमादिभिर्भारवत्त्वसम्बन्धेऽपि तदसम्बन्धाभिधानादतिशयोक्तिरलङ्कारः, प्रथमपादस्थश्छेकानुप्रासेन संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः ॥८८॥

বাঙ্গালা—হায়! প্রার্থী লোকের অভিলাষ পূরণের জন্য যাহার জন্ম হয় নাই;

मा धनानि कृपणः खलु जीवन् तृष्णयार्पयतु जातु परस्मै।
तत्र नैष कुरुते मम चित्रं यत्तु नार्पयति तानि मृतोऽपि॥८९॥
मामभीभिरिह याचितवद्भिः दातृजातमवमत्य जगत्याम्।
यद्यशो मयि निवेशितमेतत् निष्क्रयोऽस्तु कतमस्तु तदीयः॥९०॥
लोक एष परलोकमुपेता हा विहाय निधने धनमेकः।
इत्यमुं खलु तदस्य निनीषत्यर्थिबन্धुरुदयद्दयचित्तः॥९१॥

---

সেই লোক দ্বারাই এই পৃথিবী অত্যন্তভারবতী হইয়া থাকে; কিন্তু বৃক্ষ দ্বারাও নহে, পর্বত দ্বারাও নহে এবং সমুদ্র দ্বারাও নহে ॥৮৮॥

**अन्वयः**—कृपणः जीवन् (सन्) तृष्णया खलु जातु परस्मै धनानि मा अर्पयतु; तु अत्र एषः एव मम चित्रं कुरुते, यत् मृतः अपि (सन्) तानि न अर्पयति ॥८९॥

मेति। कृपणोऽव्ययकुण्ठितो जनः, जीवन् सन्, तृष्णया खलु धनानां चिरस्थायित्वदुराशयैव, जातु कदाचिदपि, परस्मै अन्यस्मै जनाय, धनानि, मा अर्पयतु न ददातु। अत्र न चित्रमित्याशयः। तु किन्तु, अत्र च अस्मिन्नेव विषये, एष कृपणः, मम चित्रमाश्चर्य्यम्, कुरुते, यत् मृतोऽपि मर्त्तुमारभमाणोऽपि सन्, तानि धनानि, न अर्पयति न ददाति। स्वभोगसम्भावनैव जीवितावस्थायामदाने हेतुरास्ताम्, किन्तु मरणानन्तरं स्वभोगसम्भावनाया अभावात् मुमूर्षुरपि यन्न ददाति तदेवाश्चर्य्यमिति भावः। अथ च नृपस्य मानीति नार्पयति तानि करोतीति नार्पयति मरणानन्तरं स्वधनं नृपस्वत्वास्पदीभूतानि करोतीत्यर्थं, राज्ञोऽपि निःसन्तानादिजनधनाधिकारित्वस्य शास्त्रीयत्वादित्यभिप्रायः।

अत्र मृत इत्यतीते क्त प्रत्यये तथाविधस्य दानासम्भवाद्विरोधः, आदिकर्म्मणि क्तप्रत्यये तु तत्सम्भवान्निरिति विरोधाभासोऽलङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः ॥८९॥

বাঙ্গালা—কৃপণ ব্যক্তি জীবিত অবস্থায় লোভবশতঃ কখনও অন্য ব্যক্তিকে ধন দান না করুক; (এ বিষয়ে আমার কোনই আশ্চর্য্য জন্মায় না); কিন্তু এই বিষয়েই কৃপণ ব্যক্তি আমার আশ্চর্য্য জন্মায় যে, সে মরিতে বসিয়াও ধন দান করে না ॥৮৯॥

**अन्वयः**—अमीभिः इह जगत्यां दातृजातम् अवमत्य मां याचितवद्भिः (एभिः) मयि यत् एतत् यशः निवेशितम्, तदीयः तु कतमः निष्क्रयः अस्तु ॥९०॥

मामिति। अमीभिरिन्द्रादिभिर्देवैः, इह जगत्यां मर्त्त्यलोके, दातृजातम् अन्यं दातृसमूहम्, अवमत्य तद्याचनादवज्ञाय, मां याचितवद्भिः एभिः, मयि यदेतत् यशः, निवेशितं स्थापितम् अत इन्द्रादयोऽपि नलस्य याचकाः संवृत्ता इति सुख्यातिरुत्पादितेत्यर्थः, तदीयः तद्यशःसम्बन्धी तु, कतमो बहूनां मध्ये कः, निष्क्रयः प्रतिदेयम्, अस्तु भवतु। तन्निस्तारयितुं न शक्नोमीति भावः।

अत्र द्वितीये चतुर्थे च पादे छेकानुप्रासोऽलङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः ॥९०॥

বাঙ্গালা—এই ইন্দ্রপ্রভৃতি দেবতারা এই মর্ত্ত্য লোকে অন্য সকল দাতাকে অবজ্ঞা করিয়া, আমার নিকট যাচ্ঞা করিয়া, আমার উপরে এই যে যশ প্রবর্ত্তিত করিলেন; ইহার প্রতিদান কি হইতে পারে? ॥৯০॥

**अन्वयः**—हा! एषः लोकः निधने (सति) धनं विहाय एकः (सन्) परलोकम् उपेता; इति उदयद्दयचित्तः अर्थिबन्धुः तत् अस्य अमुं निनीषति खलु ॥९१॥

दानपात्रमधमर्णमिहैक-ग्राहि कोटिगुणितं दिवि दायि ।
साधुरेति सुकृतैर्यदि कर्त्तुं पारलौकिककुसीदमसीदत् ॥८१॥
एवमादि स विचिन्त्य मुहूर्त्तं तानवोचत पतिर्निषधानाम् ।
अर्थिदुर्लभमवाप्य सहर्षान् याच्यमान-मुखमुत्सवितश्रीः ॥८२॥

---

लोक इति । हा कष्टं । एष लोकः सर्वो जनः, निधने मरणे सति, धनं प्राणतुल्यमेव द्रव्यम्, विहाय परित्यज्य, एक एकाकी सन्, परलोकम्, उपेता उपैष्यति यास्यति ; इति हेतोः, उदयन्ती उत्पद्यमाना दया यस्मिन् तत् उदयद्दयं चित्तं यस्य स तादृशः, अर्थिबन्धुर्याचकरूपः सुहृत्, तत् धनम्, अस्य दातुर्लोकस्य, अमुं परलोकं तत्पार्श्वमित्यर्थः, निनीषति खलु दाननिमित्तकादृष्टद्वारा नेतुं प्रापयितुमिच्छतीव । अत-एव दातृणामर्थिबन्धुरर्जयितव्य इति भावः । अन्योऽपि बन्धुर्देशान्तरं गतस्य बन्धोर्धनं तत्र नयति ।

अत्र धनुमस्तस्य उत्प्रेक्षावाचकत्वात् वाच्या क्रियोत्प्रेक्षा, अर्थिबन्धुरिति निरङ्गं केवलरूपकम्, छेकानु-प्रासश्चेत्येतेषां मिथो निरपेक्षतया संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

उपेतेति उपपूर्वात् इणधातोः श्वस्तनी । नयतेर्द्विकर्मकत्वात् अमुं तदित्युभयोरपि कर्मत्वम् ॥८०॥

বাঙ্গালা—হায় ! এই সমস্ত লোকেই মৃত্যুর পর ধন পরিত্যাগ করিয়া, একাকী অবস্থায় পরলোকে যাইবে ; এই জন্যই প্রার্থিরূপ বন্ধুর মনে দয়া জন্মে ; তাই সেই প্রার্থিবন্ধু, ঐ দাতা লোকের জন্য তাহার প্রদত্ত ধন পরলোকে পাঠাইয়া দিবার ইচ্ছা করে ।৮০।

अन्वयः—साधुः असीदत् पारलौकिककुसीदं कर्त्तुम् इह एकग्राहि दिवि कोटिगुणितं दायि दान-पात्रम् अधमर्णं सुकृतैः एति यदि ॥८१॥

दानेति । साधुः सज्जन एव, असीदत् अनवसीदमानम्, परलोके भवं पारलौकिकञ्च तत् कुसीदं वृद्धि-जीविका चेति तत् कर्त्तुम्, इह लोके, एकं गृह्णातीति एकग्राहि, किन्तु दिवि स्वर्गे, कोटिगुणितं कोट्या-हत्या सङ्ख्यातं धनम्, दास्यतीति दायि दास्यत्, दानपात्रं दानोद्देश्यजनस्वरूपम्, अधमर्णम् ऋणग्रहीतारम्, सुकृतैः पुण्यैरेव, एति प्राप्नोति, इति यदि वितर्कयामि सम्भावयामीत्यर्थः । तथा च "कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहृता ।" इति मनुस्मरणात् इह लोके अधमर्णो द्विगुणादधिकं न ददाति ; किन्तु "सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे । अधीते शतसाहस्रम् अनन्तं वेदपारगे ।" इत्यादिस्मरणात् परलोके वेदपारग-दानपात्रस्वरूपः अधमर्णः कोटिगुणाधिकं ददाति । अतएव तत्र कुसीदवृत्तिर्नापचीयते, अपि तु अत्यन्तमेवो-पचीयते । तेन च तादृशदानपात्ररूपमधमर्णं संग्रहीतुं सर्वथा यतेतेति भावः ।

अत्रैहत्य धनाधमर्णात् दानपात्ररूपाधमर्णस्य आधिक्यवर्णनात् व्यतिरेकालङ्कारः, दानपात्रमधमर्ण-मिति समासाभावेऽपि निरङ्गं केवलरूपकं छेकानुप्रासश्चेत्येतेषां संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"यदि गर्हावितर्कयोः" इति मेदिनी । "कुसीदं वृद्धिजीविका" इत्यमरः ।

दायीति "भविष्यति गम्यादयः" इतीन् प्रत्ययः । तेन च कोटिगुणितमिति "इनि भविष्यदधमर्णयोः" इति षष्ठीनिषेधात् कर्मणि द्वितीयैव ॥८१॥

বাঙ্গালা—দানপাত্ররূপ অধমর্ণ (খাতক), ইহ লোকে একটিমাত্র ধন (টাকা) গ্রহণ করেন ; কিন্তু স্বর্গে তাহার কোটিগুণ ( কোটিটাকা ) দান করিয়া থাকেন । সুতরাং আমি মনে করি, সজ্জনেরা পরলোকে অক্ষয় কুসীদবৃত্তি (তেজারতী) করিবার জন্য, দানপাত্ররূপ অধমর্ণকে পুণ্য দ্বারাই লাভ করিয়া থাকেন ।৮১।

**नास्ति जन्य-जनक-व्यतिभेदः सत्यमन्नजनितो जनदेहः।**
**वीक्ष्य वः खलु तनुममृतादां दृङ्‌निमज्जनमुपैति सुधायाम्॥८४॥**

---

**अन्वयः**—सः निषधानां पतिः मुहूर्त्तम् एवमादि विचिन्त्य अर्थिदुर्लभम् उल्लसितश्रि याच्यमानमुखम् अवाप्य सहर्षान् तान् अवोचत ॥८३॥

एवमिति। स निषधानां निषधदेशस्य पतिर्नलः, मुहूर्त्तं कियन्तं कालं यावत्, एवमादि "जीविताबधि वनीयकमात्रैः" एतत्प्रभृति विचिन्त्य, अर्थिभिर्याचकैः दुर्लभम्, उल्लसिता प्रकाशिता श्रीः शोभा यत्र तथा-भूतम्, याच्यमानस्य प्रार्थ्यमानस्य नलस्य मुखम्, अवाप्य दर्शनेन लब्ध्वा, सहर्षान् आनन्दितान्, तानिन्द्रादीन्, अवोचत जगाद। प्रायेणैव हि दाता याच्यमानः सन् तत्क्षणादेव मलिनमुखो भवन् याचकं निराकरोति। अतएव उल्लसितश्रि याच्यमानमुखम् अर्थिभिर्दुर्लभमेव। अत्र तु याच्यमानोऽपि नल उल्लसितश्रीमुखः सञ्जात इत्यवश्यमेवाभीष्टं पूरयिष्यतीति मत्वा इन्द्रादयः सहर्षा जाता इति भावः।

अत्र सहर्षत्वं प्रति अवाप्येत्यन्तपदार्थौ हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः। तथा प्रथमार्द्धेन वाक्य-समाप्तावपि पुनस्तदन्तर्गतस्य तानित्यस्य विशेषणतया द्वितीयार्द्धोपादानात् समाप्तपुनरात्तत्वादोषः। स च द्वितीयार्द्धं प्राक् पठित्वा समाधेयः। प्रसादो गुणः, वैदर्भी च रीतिः।

निषधानामिति "बहुत्ववदस्यादिः" इत्यादिना बहुवचनम् ॥८३॥

**बाङ्गाला**—নল কিছুকাল এইরূপ চিন্তা করিয়া, ইন্দ্রপ্রভৃতি দেবগণকে বলিলেন। তখন নলের নিকট প্রার্থনা করিলেও, তাঁহার মুখশ্রী প্রফুল্লই হইয়াছিল; তাই ইন্দ্রপ্রভৃতিও আনন্দিতই হইয়াছিলেন। কেন না, প্রার্থনা করিলে পর, দাতার প্রফুল্ল মুখ লাভ করা প্রায়ই প্রার্থীর পক্ষে দুষ্কর ॥৮৩॥

**अन्वयः**—जन्य-जनक-व्यतिभेदः न अस्ति; जनदेहः अन्नजनितः, (इति) सत्यम्। खलु वः अमृतादां तनुं वीक्ष्य दृक् सुधायां निमज्जनम् उपैति ॥८४॥

किमवोचतेत्याह नेति। जन्यजनकयोः कार्य्यतदुपादानयोः व्यतिभेदः परस्परं भिन्नता नास्ति; तथैव सांख्यसिद्धान्तादिति भावः। तथा जनानां प्राणिनां देहः शरीरम्, अन्नेन खाद्यमात्रेण जनितः खाद्यवस्तुधर्म्मा जनदेहं संक्रामतीत्यर्थः; इत्यमयमपि सत्यम्। खलु यस्मात्, वो युष्माकं अमृतादां सुधाभक्षिणीम्, तनुं शरीरम्, वीक्ष्य दृष्ट्वा विद्यमानस्य ममेति शेषः, दृक् चक्षुः, सुधायां तद्विषये, निमज्जनं निमज्जनसुखम्, उपैति प्राप्नोति। तथा च जनाः खाद्यमन्नमेव खादन्ति; ततश्च तैरन्नात्मकेन भवतां शरीरं जन्यते। इत्यञ्च कार्य्यो-पादानयोर्जनशरीरान्नयोः परस्परभेदो नास्ति। तथा खाद्यमानामृतेनैव भवतां शरीरं जन्यते; ततश्चामृत-धर्म्मोऽपि भवतां शरीरे संक्रामति। एवञ्च भवतां शरीरं विलोक्य मम नयनं यत् अमृतह्रदावगाहनसुखं लभते, तत् सर्व्वथा सम्भवपरमेवेति भावः।

अत्र कार्य्येण कारणसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारश्छेकानुप्रासेन संसृज्यते। तथा अमृतपदेन प्रक्रम्य सुधापदाभिधानात् भग्नप्रक्रमतादोषः; स च 'दृक् निमज्जति परं मम तस्मिन्' इति पाठेन समाधेयः। प्रसादो गुणः, वैदर्भी च रीतिः।

यद्यपि "तस्य विकारविशेषोऽन्नम्" इति शूलपाणिना प्रायश्चित्तविवेके अन्नशब्दस्य ओदन एव शक्तिर्निरूपिता; तथाप्यत्र तत्सादृश्यवशात् खाद्यमात्रं प्रतिपाद्यते। अमृतादमिति "अदोऽनन्ने" इति क्विप्।

মত্তপঃ ক্ব নু তনু ক্ব ফলং বা যূয়মীক্ষণপথং ব্রজথেতি।
ঈদৃশান্যপি দদন্তি পুনর্নঃ (১) পূর্ব্ব-পূরুষ-তপাংসি জয়ন্তি ॥৯৫॥
প্রত্যতিষ্ঠিপদিমাং খলু দেবীং (২) কর্ম্ম সর্ব্ব-সহন-ব্রত-জন্ম।
যূয়মপ্যহহ পূজনমস্যা যন্নিজৈঃ সৃজথ পাদপয়োজৈঃ ॥৯৬॥

কার্য্যোপাদানয়োর্ভেদাভাবং প্রতি প্রমাণং যথা সাংখ্যকারিকা—
"অসদকরণাদুপাদানগ্রহণাৎ সর্ব্বসম্ভবাভাবাৎ। শক্তস্য শক্যকরণাৎ কারণভাবাচ্চ সৎ কার্য্যম্ ॥৯৪॥

বাঙ্গালা—কার্য্য ও উপাদানকারণের পরস্পর ভেদ নাই এবং প্রাণিগণের শরীর, খাদ্যবস্তুতেই জন্মাইয়া থাকে; এই উভয় বিষয়ই সত্য। কারণ, আপনাদের অমৃতভোজী শরীর দেখিয়া, আমার নয়ন, অমৃতে মগ্ন হওয়ার সুখ অনুভব করিতেছে ॥৯৪॥

অন্বয়ঃ—তনু মত্তপঃ ক্ব নু? যূয়ম্ ঈক্ষণপথং ব্রজথ ইতি ফলং বা ক্ব?। পুনঃ ঈদৃশানি অপি দদন্তি নঃ পূর্ব্ব পূরুষ-তপাংসি জয়ন্তি ॥৯৫॥

মদিতি। তনু অল্পম্, মত্তপো মম তপস্যা ক্ব নু বর্ত্তত ইতি শেষঃ, যূয়ং দেবশ্রেষ্ঠাঃ, ঈক্ষণপথং দৃষ্টিগোচরতাম্, ব্রজথ প্রাপ্নুথ ইত্যেবং মহৎ ফলং বা ক্ব বর্ত্ততে। ঈদৃশাল্পতপসা ঈদৃশং মহৎ ফলং জনয়িতুং কথমপি ন শক্যত ইতি ভাবঃ। তর্হি কথমস্মাকং দর্শনং তব জাতমিত্যাহ—পুনঃ কিন্তু, ঈদৃশান্যপি নিতরামসম্ভাবনীয়ানি ফলানীতি শেষঃ, দদন্তি দদানানি, নঃ অস্মাকং মমেতি তাৎপর্য্যম্, পূর্ব্বপূরুষাণাং পিতৃপিতামহাদীনাং তপাংসি তপস্যাঃ, জয়ন্তি উৎকর্ষেণ বর্ত্তন্তে। তৈরেব তপোভির্দুর্ঘটমিদং মম ঘটিতমিত্যাশয়ঃ।

অত্র অল্পমহতোস্তপঃফলয়োর্বিরূপয়োঃ সংঘটনয়া বিষমালঙ্কারো বৃত্ত্যনুপ্রাসেন সংসৃজ্যতে। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ।

দদন্তীতি "বা নপুংসকে" ইতি বিকল্পান্নকারলোপাভাবঃ। ন ইতি "বাস্মদঃ" ইতি বহুবচনম্ ॥৯৫॥

বাঙ্গালা—আমার অল্প তপস্যাই বা কোথায়, আর আপনারা দৃষ্টিপথে আসিয়াছেন এইরূপ বৃহৎ ফলই বা কোথায়। তবে, এইরূপ অসংখ্যফলজনক আমার পূর্ব্বপুরুষগণের তপস্যারই জয় ॥৯৫॥

অন্বয়ঃ—সর্ব্ব-সহন-ব্রত-জন্ম কর্ম্ম ইমাং দেবীং প্রত্যতিষ্ঠিপৎ খলু। অহহ! যৎ যূয়ম্ অপি নিজৈঃ পাদ-পয়োজৈঃ অস্যাঃ পূজনং সৃজথ ॥৯৬॥

প্রত্যতিষ্ঠিপদিতি। সর্ব্বেষাং পরকীয়মলমূত্রধারণাদিবহুবিধকষ্টানাং সহনং সহ্যকরণমেব ব্রতং নিয়মস্তস্মাজ্জন্ম যস্য তত্তাদৃশম্ কর্ম্ম পুণ্যমেব কর্ত্তৃ, ইমাং পৃথিবীম্, দেবীম্, প্রত্যতিষ্ঠিপৎ খলু প্রতিষ্ঠাপিতবদিব দেবীভাবেন প্রতিষ্ঠিতামকরোদিত্যর্থঃ; পুণ্যস্য দেবত্বস্থাপনে সর্ব্বথা সামর্থ্যসত্ত্বাদিতি ভাবঃ। নন্বস্যা দেবীভাবেন প্রতিষ্ঠায়াং কিং প্রমাণমিত্যাহ। অহহেত্যদ্ভুতে। যৎ যস্মাৎ, যূয়ং দেবশ্রেষ্ঠা অপি, নিজৈঃ স্বকীয়ৈরেব ন পুনঃ প্রেষিতপুরুষসম্বন্ধিভিরিত্যর্থঃ, পাদাম্বরাণ্যেব পয়োজানি পদ্মানি তৈঃ, অস্যা ইলাদেব্যাঃ, পূজনং সৃজথ উপরি সমর্পণেন পূজাং কুরুথ। অস্যা দেবীভাবাভাবে যুষ্মাভিরপি পূজা ন ক্রিয়েতেতি ভাবঃ। অন্যৈরপি প্রতিষ্ঠাপিতা দেবী পদ্মৈঃ পূজ্যতে।

অত্র খল্বহহশব্দয়োরুৎপ্রেক্ষাবাচকত্বাৎ বাচ্যা ক্রিয়োৎপ্রেক্ষা, পাদেষু আরোপ্যমাণস্য পয়োজত্বস্য প্রকৃতপূজনোপযোগিতয়া পরিণামঃ, চতুর্থপাদে বৃত্ত্যনুপ্রাসশ্চেত্যেষাং মিথো নিরপেক্ষতয়া সংসৃষ্টিঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ।

(১) ঈদৃশং পরিণমন্তি পুনর্নঃ। (২) ইমাং দেবীম্।

जीविताववधि किमप्यधिकं वा यन्मनीषितमितो नरडिम्भात्।
तेन वश्चरणमर्चतु सोऽयं ब्रूत वस्तु पुनरस्तु किमीदृक् ॥৯৭॥
एवमुक्तवति वीतविशङ्के वीरसेनतनये विनयेन।
वक्रभावविषमामथ शक्रः कार्य्य-कैतवगुरुर्गिरमूचे ॥৯৮॥

---

"इला भू-वाक्-सुराम्भः" इति त्रिकाण्डशेषः। "अचिरेण्या तु महिषी" इत्यमरः।
प्रत्यतिष्ठिपदिति "तिष्ठतेरित्" इति सूत्रधातोराकारस्य इकारः ॥৯৬॥

বাঙ্গালা—সর্ব প্রকার কষ্ট-সহ্য করণরূপ ব্রত-অর্জিত পুণ্যই যেন পৃথিবীকে দেবীরূপে প্রতিষ্ঠিত করিয়াছে। যে হেতু, আপনারাও স্বকীয় চরণকমল দ্বারা ইহার পূজা করিতেছেন ॥৯৬॥

अन्वयः—(भवद्भिः) इतः नरडिम्भात् जीविताववधि वा अधिकं यत् किमपि मनीषितम्, सः अयं तेन वः चरणम् अर्चतु; पुनः ईदृक् वस्तु किम् अस्तु, (तत्) ब्रूत ॥৯৭॥

जीवितेति। हे देवाः! भवद्भिः इतः अस्मात्, नरडिम्भात् मत्स्वरूपान्मनुष्यशिशोः सकाशात्, जीविताववधि जीवनपर्य्यन्तम्, वा अथवा, अधिकं जीवितादप्यतिरिक्तम्, यत् किमपि यत् किञ्चिद्वस्तु, मनीषितम् अभिलषितम्; स मत्स्वरूपः, अयं जनः, तेन वस्तुना, वो युष्माकम्, चरणम् एकमेव पादम्, न पुनर्द्वौ शक्त्यभावादिति भावः, अर्चतु पूजयतु। पुनः किन्तु, ईदृक् वस्तु, किम् अस्तु; तत् ब्रूत स्पष्टं कथयत।

अत्र शेषपादे छेकानुप्रासोऽलङ्कारः। तथा नरडिम्भादिति पदश्रवणं तया श्रुतिदुःखावहत्वात् पदाश्रयतो दुःश्रवत्वदोषः; स च 'नरपोतात्' इति पाठेन समाधेयः। प्रसादो गुणः, वैदर्भी च रीतिः।

"पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः" इत्यमरः।

मनसा ईषितमिति मनीषितम् "ईषिते च मनसः" इति मनःशब्दस्य अन्तिमाकारलोपे "संयोगान्तस्य लोपः" इति सलोपः। अर्च तिरयं भौवादिकः ॥৯৭॥

বাঙ্গালা—আপনারা এই মনুষ্যবালক হইতে, প্রাণপর্য্যন্ত, কিম্বা ততোঽধিক যাহা কিছু অভিলাষ করিয়াছেন; তাহা দ্বারাই এ ব্যক্তি আপনাদের চরণ পূজা করিবে; কিন্তু এমন বস্তু কি আছে, তাহা বলুন ॥৯৭॥

अन्वयः—वीतविशङ्के वीरसेनतनये विनयेन एवम् उक्तवति (सति) अथ कार्य्यकैतवगुरुः शक्रः वक्रभावविषमां गिरम् ऊचे ॥৯৮॥

एवमिति। वीता मनोबलेन त्यक्ता विशङ्का किं याचिष्यत इत्याशङ्का येन तस्मिन् तादृशे, वीरसेनस्य तदाख्यस्य राज्ञस्तनये पुत्रे नले, विनयेन नम्रतया, एवं पूर्वोक्तप्रकारम्, उक्तवति सति, अथ अनन्तरम्, कार्य्ये कार्य्यविषये कैतवगुरुः कपटाचरणबृहस्पतिः, शक्र इन्द्रः, वक्रभावेन कुटिलतया कुटिलाभिप्रायेणेत्यर्थः, विषमां नलपक्षे दुःसहाम्, गिरं वाचम्, ऊचे उक्तवान्। वक्रभावस्तु परश्लोक एव व्यक्तीभविष्यति।

अत्र कार्य्यकैतवगुरुरित्युपमारूपकयोः सन्देहसङ्करश्छेकानुप्रासेन पुनः संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः ॥৯৮॥

বাঙ্গালা—(ইঁহারা কি প্রার্থনা করিবেন) এই আশঙ্কা পরিত্যাগ করিয়া নল, বিনয়পুরঃসর এই প্রকার বলিলে; তাহার পর, কার্য্যে কপটাচরণ করিতে বৃহস্পতিতুল্য ইন্দ্র নিজের কুটিলভাবৰশতঃ নলের পক্ষে দুঃসহ বাক্য বলিলেন ॥৯৮॥

पाणिपीडनमहं दमयन्त्याः कामयेमहि महीमिहिकांशो ! (१) ।
दूत्यमत्र कुरु नः स्मरभीतिं निर्जितस्मर ! निरस्य चिरस्य ॥९९॥
आसते शतमधिक्षिति भूपाः तोयराशिरसि ते खलु कूपाः ।
किं ग्रहा दिवि न जाग्रति ते ते भास्करस्य कतमस्तुलयाऽऽस्ते (२) ॥१००॥

---

**अन्वयः**—(हे) महीमिहिकांशो ! (वयं) दमयन्त्याः पाणिपीडनमहं कामयेमहि । (हे) निर्जितस्मर ! चिरस्य स्मरभीतिं निरस्य अत्र नः दूत्यं कुरु ॥९९॥

पाणीति । मिहिका हिमा अंशवः किरणा यस्य स मिहिकांशुश्चन्द्रः । मह्यां पृथिव्यां मिहिकांशुरिव स महीमिहिकांशुस्तत्सम्बोधनम् । वयं दमयन्त्याः पाणिपीडनमहं परिणयोत्सवम्, कामयेमहि अभिलषाम । अतएव निर्जितः सौन्दर्य्याधिक्यात् जितेन्द्रियत्वाच्च निःशेषेण पराभूतः स्मरः कामो येन तत्सम्बोधनम् । चिरस्य चिरकालीनाम्, स्मरभीतिं कामभयम्, निरस्य दूत्यस्वीकारादाश्वासदानेन दूरीकृत्य, अत्र दमयन्त्याः पाणिपीडनघटनविषये, नः अस्माकम्, दूत्यं दूतकार्य्यम् कुरु । इत्थं चास्माकं प्रार्थनेति भावः ।

वक्रभावस्त्वयम्—मह उत्सव आनन्दोऽस्यास्तीति मही नित्ययोगे इन् ; तेन सदानन्द इत्यर्थः, स चासौ महीमिहिकांशुः पृथिवीचन्द्रश्चेति तत्सम्बोधनम् । नः अस्माकं चतुर्णां मध्ये, अहम्, दमयन्त्याः पाणिपीडनं कामये । अन्यत् समानम् ।

उभयत्राप्यर्थान्तरमेतत्—अत्र दूत्यं कुरु, कृत्वा च चिरस्य चिराय नः स्मरभीतिं निरस्य दूरीकुरु । स्मरनिर्ज्जयिनः स्मरभीतिनिरसने सर्वथा सामर्थ्यसम्भवादिति सर्वत्र भावः ।

स्वर्ग्गे त्वेतद्वृत्त्यास्वीकारे भीतिं शापभयं वज्राद्यस्त्रभयञ्च स्मरेति ।

अत्र स्मरभीतिनिरसनं प्रति निर्जितस्मरपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, वक्रभावविवक्षामित्त्वभीभयार्थस्य प्रस्तुतत्वात् श्लेषः. स्मरभीतिं निर्जितस्मरेति लाटानुप्रासः, द्वितीये पादे छेकानुप्रासः, निरस्य चिरस्येति च छेकानुप्रास इति सर्वेषां संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम् । प्रालेयं मिहिका च ।" "मह उद्धव उत्सवः" इत्यमरः ।

कामयेमहीति सप्तम्याः (विधिलिङः) इमहिविभक्तौ रूपम् । निरस्येति एकत्र क्त्वाप्रत्ययः अन्यत्र तु पञ्चम्याः (लोटः) हिविभक्तिः ॥९९॥

বাঙ্গালা—হে পৃথিবীচন্দ্র ! আমরা দময়ন্তীর পাণিগ্রহণোৎসব কামনা করিতেছি । অতএব হে কামবিজয়িন্ ! তুমি আমাদের চিরকালের জন্য কামভয় দূর করিবার আশ্বাস দিয়া, এই বিষয়ে দূত্যকার্য্য কর । ৯৯ ।

**अन्वयः**—अधिक्षिति शतं भूपाः आसते, (तेषु त्वं) तोयराशिः असि, ते खलु कूपाः । दिवि ते ते ग्रहाः किं न जाग्रति, (किन्तु) भास्करस्य तुलया कतमः आस्ते ॥१००॥

अथो ! विषयमेनमन्यं राजानं भवन्तो याचन्तामित्याह आसत इति । हे नल ! अधिक्षिति पृथिव्याम्, शतं बहुसंख्यकाः, भूपा राजानः, आसते विद्यन्ते । तेषु त्वं तोयराशिः समुद्रस्वरूपः असि ; गम्भीरत्वान्महाशयत्वाच्चेति भावः । ते त्वद्भिन्ना राजानः, खलु निश्चितम्, कूपाः कूपस्वरूपाः ; अगम्भीरत्वात् क्षुद्राशयत्वाच्चेत्याशयः । अन्ये राजानस्त्वत्समीपे नितरामेव तुच्छा इति "याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा" इति न्यायात्तान् विहाय भवन्तमेव याचामह इत्यभिप्रायः । ननु "समानाः सहचरा भवन्ति" इति न्यायात् चायमन्ये

---

(१) महीमहिकांशो ! । (२) भास्करस्य कतमस्तु तुलास्तु । भास्वतः कतमस्तुलयास्ते ।

विश्व-दृश्व-नयना वयमेव त्वद्गुणाम्बुधिमगाधमवेमः।
त्वामिहैवमनिवेश्य रहस्ये निर्वृतिं नहि लभेमहि सर्वे ॥१०१॥
सुवंशजनितोऽपि गुणस्य ख्यातताम् अनुभवन्नपि यस्तः।
येन मीनमकरध्वजमाशु सपक्षं (१) सायकं धनुरिवाजनि वक्रः ॥१०२॥

---

राजभिः सह मम तावत् पार्थक्यमित्याह—दिवि आकाशे, ते ते प्रसिद्धाः, ग्रहाः बुधबृहस्पतिप्रभृतीनि ज्योतींषि, किं न जायन्ति न सन्ति; अपितु जायन्त्येवेत्यर्थः; किन्तु भास्करस्य सूर्य्यस्य, तुलया साहश्येन, कतमो ग्रहः, भाति वर्त्तते; अपितु कोऽपि नेत्यर्थः। अतएव "समानाः सहचराः" इति न्याये प्रार्थनीयत्वमस्य असाम्यमिति भावः।

अत्र द्वितीयचरणे निरङ्गं केवलरूपकद्वयम्, पूर्वार्द्धे अन्त्यानुप्रासः, द्वितीयार्द्धे अर्थापत्तिश्च दृष्टान्तश्च, इति समुदाये संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः।

अधिदिवीति विभक्त्यर्थे अव्ययीभावः। "विंशत्याद्याः सदैकत्वे" इति नियमात् शतमित्येकवचनम्। अतएव शब्दशक्तिप्रकाशिकायाम्—

"या विंशत्यं तु दृश्यन्ते लिङ्गसंख्याविभक्तयः। प्रायस्ता एव कर्त्तव्याः समानार्थे विशेषणे"॥

प्राय इति किं "विंशतिर्घटाः शतं ब्राह्मणाः" इत्युक्तम् ॥१००॥

বাঙ্গালা—নল! পৃথিবীতে বহুতর রাজা আছেন; কিন্তু তাঁহাদের মধ্যে তুমি সমুদ্রস্বরূপ; আর অন্য রাজারা তোমার নিকট কূপস্বরূপ। আকাশে সেই সেই গ্রহ কি বিদ্যমান নহে? কিন্তু সূর্য্যের তুল্য কোন্ গ্রহ আছে? ॥১০০॥

অন্বয়:—विश्व-दृश्व-नयनाः सर्वे एव वयं त्वद्गुणाम्बुधिम् अगाधम् अवेमः। (अतएव) इह रहस्ये एवं त्वाम् अनिवेश्य निर्वृतिं नहि लभेमहि ॥१०१॥

नन्वत्र दूत्ये राजसामान्यमेवानिवेश्य साधारणजनान्तरनिवेशे का हानिरित्याह विश्वेति। विश्वानि सर्वाणि दृष्टवन्तीति विश्वदृश्वानि अन्तर्यामित्वात् सर्वदर्शीनीत्यर्थः नयनानि येषां ते। अतएवास्माकं त्वद्गुणाम्बुधेरगाधत्वज्ञानसामर्थ्यमस्त्येवेति भावः। सर्वे एव वयम्। एतेन "पाणिपीडनमहम्" इत्यादि पूर्वश्लोके अहमितिभङ्गीसम्भवेन अग्न्यादीनां त्रयाणां मनोमालिन्यशङ्कापि निरस्तेति बोध्यम्। अतएवाऽमपि वक्रभावोऽयं। तव गुणानां सत्यवादित्वादीनाम् अम्बुधिं समुद्रम्, अगाधम् अतलस्पर्शमसीममिति तात्पर्य्यम्, अवेमो जानीमः। अतएव इह दमयन्त्याः पाणिपीड़नरूपे रहस्ये गोपनीये विषये, एवं दूतभावेन, त्वाम् अनिवेश्य अनियोज्य, निर्वृतिम् आत्मद्वारादित्येन मनःस्वास्थ्यम्, नहि लभेमहि न खलु प्राप्नुयाम; जनान्तरनिवेशे तस्य मिथ्यावादित्वादिना अभिप्रायभङ्गप्रसङ्गादित्याशयः।

अत्र अवगमं प्रति विश्वदृश्वनयना इति पदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, परार्द्धं प्रति पूर्वार्द्धवाक्यार्थो हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गञ्च विश्वदृश्वेति च्छेकानुप्रासेन संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः।

दृश्वेति "दृशेः क्वनिप्" इति क्वनिप्प्रत्यये रूपम् ॥१०१॥

বাঙ্গালা—নল! আমাদের নয়নগুলি সমস্তই দেখিতে পায়; তাই আমরা সকলেই তোমার গুণসমুদ্রকে অগাধ বলিয়া জানি। সুতরাং এই গোপনীয় বিষয়ে তোমাকে এইভাবে নিযুক্ত না করিয়া আমরা শান্তিলাভ করিতেছি না ॥১০১॥

---

(१) विद्धुरीनम्···।

तेन तेन वचसैव मघोनः स स्म वेद कपटं पटुरुच्चैः ।
आचरत्तदुचितामथ वाणीमार्जवं हि कुटिलेषु न नीतिः ॥१०३॥
सेयमुच्चतरता दुरितानां जन्मजन्मनि मयैव कृतानाम् ।
युष्मदीयमपि या महिमानं जेतुमिच्छति कथापथपारम् ॥१०४॥

---

**अन्वयः**—शुद्ध-वंश-जनितः अपि गुणस्य स्थानताम् अनुभवन् अपि शक्रः सपक्षम् ऋजुम् एनं प्रेषुं सायकं धनुः इव आशुवक्रः अजनि ॥१०२॥

शुद्धेति । शुद्धेन पवित्रेण वंशेन मरीचिकुलेन कश्यपेन जनितोऽपि, अन्यत्र शुद्धेन घुणक्षतादिदोषरहितेन वंशेन वेणुना जनितोऽपि ; तथा गुणस्य शौर्य्यौदार्य्यादेः मौर्व्याश्च स्थानतामाश्रयताम्, अनुभवन्नपि अवलम्बमानोऽपि गुणवानपीत्यर्थः ; शक्र इन्द्रः, समानः पक्षो दमयन्तीलाभरूपं साध्यं यस्य तं सपक्षं स्वसमानं दमयन्तीलिप्सुमित्यर्थः, अन्यत्र सपक्षं कङ्कपत्रयुक्तम्, ऋजुं सरलचित्तम्, अन्यत्र सरलाकृतिम्, एनं नलम्, प्रेषुं दमयन्तीनिकटे दूतभावेन प्रेरयितुम्, अन्यत्र लक्ष्योपरि प्रेरयितुञ्च, सायकं बाणम्, प्रेषुं, धनुश्चाप इव, आशु शीघ्रम्, वक्रः कुटिलस्वभावः नतकोटिकश्च, अजनि जातः, पूर्व्वोक्तप्रकारेण दूत्ययाचनादिति भावः ।

अत्र पूर्णोपमालङ्कारः । वन्धार्थस्य प्रगाढ़त्वादोजो गुणः, गौड़ी च रीतिः ।

"पक्षो मासार्द्धके पार्श्वे गृहे साध्यविरोधयोः" इत्यादि विश्वः । "अथास्त्रियौ । धनुश्चापौ" इत्यमरः ॥१०२॥

**বাঙ্গালা**—ধনু যেমন বিশুদ্ধ বাঁশ দ্বারা নির্ম্মিত এবং গুণের আশ্রয় হইয়াও, কঙ্কপত্রযুক্ত এবং সরল বাণ ক্ষেপ করিবার জন্য বক্র হয় ; তেমন ইন্দ্র নির্দোষ কুলে জন্মিয়াও এবং গুণবান্ হইয়াও, দময়ন্তীলিপ্সু সরলস্বভাব নলকে শীঘ্রই দূতরূপে পাঠাইবার জন্য কপটাচারী হইলেন ॥১০২॥

**अन्वयः**—उच्चैः पटुः सः मघोनः तेन तेन वचसा एव कपटं वेद स्म ; अथ तदुचितां वाणीम् आचरत् । हि कुटिलेषु आर्जवं न नीतिः ॥१०३॥

तेनेति । उच्चैरत्यन्तम् पटुर्वक्रोक्तिबोधचतुरः, स नलः, मघोन इन्द्रस्य, तेन तेन "पाणिपीडनमहं दमयन्त्याः" इत्यादिरूपेण, वचसैव वाक्येनैव, कपटं छलम्, वेद स्म बुध्यते स्म । अथ अनन्तरम्, तदुचितां छलवचनैः पत्युः उपयुक्ताम्, वाणीं वाक्यम्, आचरत् अकरोदुक्तवानित्यर्थः । हि यस्मात्, कुटिलेषु वक्रेषु, आर्जवं सरलता, न नीतिः न नयानुगतम् ; "शठे शाठ्यं समाचरेत्" इति न्यायात् "व्रजन्ति ते मूढ़धियः पराभवं भवन्ति मायाविषु ये न मायिनः" इति न्यायाच्चेति भावः ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः 'कपटं पटु'रिति च्छेकानुप्रासेन संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ॥१०३॥

**বাঙ্গালা**—বক্রোক্তি বুঝিবার পক্ষে অত্যন্তনিপুণ নল, ইন্দ্রের সেই সেই বাক্য দ্বারাই তাঁহার কপটতা বুঝিতে পারিলেন ; তাহার পর তাহার উপযুক্ত বাক্য বলিলেন। কারণ, কুটিল লোকের সঙ্গে সরলতা করা নীতিসিদ্ধ নহে ॥১০৩॥

**अन्वयः**—मया एव जन्मजन्मनि कृतानां दुरितानां सा इयम् उच्चतरता ; या कथापथपारं युष्मदीयं महिमानम् अपि जेतुम् इच्छति ॥१०४॥

सेति । मयैव न पुनरन्यपुरुषेणेत्यर्थः, जन्मजन्मनि कृतानाम्, दुरितानां पापानाम्, सा इयम् उच्चतः

वित्थ (१) चित्तमखिलस्य न कुर्यां धुर्यकार्यपरिपन्थि तु मौनम् ।
ह्रीर्गिरास्तु वरमस्तु पुनर्मा स्वीकृतैव परवागपराद्धा ॥१०५॥
यत्र तौ विमलदर्पणिकायां सभ्रूविभ्रममखेलत तस्याम् ।
तेऽपि किं विततधैर्य्यममात्या या न यस्य सदृशी वितरीतुम् ॥१०६॥

एता अतीवप्रबलता प्रकाश्यत इति शेषः ; या दुरितानामुग्रतरता, कथापथं वाग्विषयं पारयतीति कथापथपारं वाक्पथातीतम् अत्याधिक्यात् वक्तुमशक्यामित्यर्थः, युष्मदीयं महिमानं माहात्म्यमपि, जेतुं कमितुमिच्छति । तथा च युष्माकं नियोगलाभः पुण्यैर्नैव सम्भवति, तत् पुण्यन्तु मम नास्त्येव ; प्रत्युत एतादृशैव गरीयः पापं वर्त्तते, येन प्राप्तमपि युष्माकं तं नियोगं लङ्घयितुमिच्छामीति भावः । अथ च दुःखेन तपःक्लेशेन इतानि प्राप्यानीति दुरितानि पुण्यानि तेषाम्, सेयमुग्रतरता युष्माकं पुण्यापेक्षया प्रबलतरता वर्त्तते या युष्मदीयं महिमानं तादृशं पुण्यजनितं माहात्म्यं जेतुमिच्छति ; प्रबलापेक्षया प्रबलतरस्य सामर्थ्यातिरेकेण जयसम्भवात् । तेन च पुण्यबलेनैव दमयन्तीमहमेव प्राप्स्यामीति तस्मात् यूयं विरमतेति नलस्यामि वक्रोक्तिः ।

अत्र प्रथमपादे च्छेकानुप्रासोऽलङ्कारः । तथा इत्यतीत्यर्थेन दाक्यसमाप्तावपि पुनरुक्तदर्शनं तस्य महिमानमित्यस्य विशेषणभावेन कथापथपारमित्यस्योपादानात् समाप्तपुनरात्ततादोषः ; स च तृतीयचतुर्थपादयोः पाठपौर्वापर्य्यविपर्य्ययेण समाधेयः । प्रसादो गुणः वैदर्भी च रीतिः ॥१०४॥

বাঙ্গালা—আমিই অন্য জন্মে যে সকল পাপ করিয়াছিলাম, এই সেই পাপের প্রবলতা প্রকাশ পাইতেছে ; যে প্রবলতা, বাক্যের অগোচর আপনাদের মহাত্মাকেও জয় করিবার ইচ্ছা করিতেছে ॥১০৪॥

অন্বয়:—(হে দেবাः ! यद्यपि यूयम्) अखिलस्य चित्तं वित्थ, (तथापि) तु धुर्य्यकार्य्यपरिपन्थि मौनं न कुर्य्याम् । गिरा वरं ह्रीः अस्तु, पुनः अपराद्धा परवाक् स्वीकृता एव मा अस्तु ॥१०५॥

वित्थेति । हे देवाः ! यद्यपि यूयम् अखिलस्य सर्वस्यैव जनस्य, चित्तं चित्तवृत्तिम्, वित्थ जानीथ ; तथापि तु, धुर्य्यकार्य्यस्य दमयन्तीसमीपे दूत्यरूपस्य प्रधानकार्य्यस्य परिपन्थि विरोधि, मौनं तूष्णीम्भावावलम्बनम्, न कुर्य्याम् । दमयन्तीसमीपे युष्माकं दूत्यं न करोमीति मम चित्तवृत्तिं विश्वहृदयज्ञत्वात् यद्यपि यूयं जानीथैव, तथापि तत्र मौनावलम्बनं न करोमि, किन्तु स्पष्टमेव ब्रवीमीति सरलार्थः । ननु स्पष्टवादेन परप्रार्थनानिरासे वदान्यस्य ते न किं लज्जा भवेदित्याह—गिरा युष्मत्प्रार्थनानिरासकस्पष्टवाक्येन, वरं मनाक् प्रिया, ह्रीर्लज्जा अस्तु, पुनः किन्तु, अपराद्धा स्पष्टवादेन अप्रत्याख्याता, परवाक् युष्मत्प्रार्थनावाक्यम्, स्वीकृतैव "अप्रतिषिद्धं परमतमनुमतं भवति" इति न्यायात् अङ्गीकृतैव, मा अस्तु न भवतु ।

अत्र मौनाकरणं प्रति पराद्धवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारश्छेकानुप्रासेन संसृज्यते । बहूनां पदानामनुक्तावपि न न्यूनपतादोषः, प्रत्युत गुण एव ; वक्तुर्न्नस्य विषादमयत्वात् "ग्लानिवानन्दमग्नादिः स्यान्न्यूनपदता गुणः" इति साहित्यदर्पणात् । मधुररचनावशान्माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥१०५॥

বাঙ্গালা—দেবগণ ! যদিও আপনারা সকলেই মনোবৃত্তি জানেন, তথাপি আমি প্রধানকার্য্যের প্রতিকূল মৌনাবলম্বন করিব না । কারণ আপনাদের প্রার্থনাবাক্যের স্পষ্ট নিষেধ দ্বারা বরং আমার লজ্জাই হউক ; কিন্তু অপ্রত্যাখ্যাত পরবাক্য যেন স্বীকৃত হয় না ।১০৫।

(१) वित्थ ।

यामि यामिह वरीतुमहो तद्दूततान्तु (१) करवाणि कथं वः ।
ईदृशां न महतां बत जाता वञ्चने मम तृणस्य घृणापि ॥१०७॥
उद्भ्रमामि विरहात्मुहुरस्याः मोहमेमि च मुहुर्त्तमहं यः ।
ब्रूत वः प्रभवितास्मि रहस्यं रक्षितुं स कथमीदृगवस्थः ॥१०८॥

अन्वयः—अखिलं खलु तत्त्वं विमलदर्पणिकायां यन्मतौ सम्मुखस्थं (भवति) ; ते अपि (यूयम्) ईदृशम् आज्ञां किं वितरथ ; या यस्य वितरीतुं न सदृशी ॥१०६॥

प्रस्तुतामेव स्पष्टां गिरमाह यन्मताविति । अखिलं खलु सर्वमेव, तत्त्वं वस्तु, विमलदर्पणिकायां निर्म्मल-दर्पणस्वरूपायाम्, येषां युष्माकं मतौ बुद्धौ, सम्मुखस्थं प्रतिविम्बितं प्रत्यक्षञ्च भवति ; तेऽपि यूयं सर्वान्तर्यामिणो देवाः स्थ, ईदृशमाज्ञां दूत्यकरणादेशम् किं कथम्, वितरथ मम दत्थ ; या आज्ञा, यस्य सम्बन्धे, वितरीतुं दातुम्, न सदृशी न योग्या । यूयं सर्वान्तर्यामितया मम मनोवृत्तिमपि जानीथैवेति ईदृगयोग्याऽऽदानं युष्माकं कथमपि नौचितमिति भावः ।

अत्र विमलदर्पणिकायां यन्मताविति निरङ्गं व्यस्तं केवलरूपकमलङ्कारः ; अखिलं खल्विति च्छेकानुप्रासेनाऽसौ संसृष्टः । प्रसादो गुणः, वैदर्भी च रीतिः ।

दर्पण एव दर्पणिका स्वार्थे कप्रत्ययः, "क्वचित् स्वार्थिकाः प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिक्रम्य वर्त्तन्ते" इति स्त्रीत्वम् । ईदृशमिति क्विबन्तं पदम् । वितरीतुमिति "वृतो वा" "ऋत इडीऽपि वा दीर्घः" इति दीर्घः ॥१०६॥

বাঙ্গালা---নির্ম্মলদর্পণস্বরূপ যাঁহাদের বুদ্ধিতে জগতের সমস্ত বস্তুই প্রত্যক্ষ হইয়া থাকে ; সেই আপনারাও কি করিয়া এইরূপ আদেশ দিতেছেন, যে আদেশ যাহাকে দেওয়া উচিত নহে ॥১০৬॥

अन्वयः—इह यां वरीतुं यामि, वः तद्दूततां तु कथं करवाणि ; बत ईदृशां महतां तृणस्य मम वञ्चने घृणा अपि न जाता ? अहो ! ॥१०७॥

यामीति । इह अस्मिन् समये, यां दमयन्तीम्, वरीतुं भार्य्यात्वेन ग्रहीतुम्, यामि तत्पितृभवनं गच्छामि ; वो युष्माकम्, तस्या दमयन्त्या दूततां दौत्यम्, कथं केन प्रकारेण, करवाणि, कथमपि कर्त्तुं न शक्नोमीत्यर्थः ; प्रवृत्तिविरोधात् मनस एव प्रतिकूलत्वात् हेयतापातादिति भावः । अतएव बत खेदे ईदृशां महतां लोकपालश्रेष्ठानां युष्माकम्, तृणस्य तृणस्वरूपस्य तृणवदेव तुच्छस्येत्यर्थः मम, वञ्चने प्रतारणायाम् घृणापि जुगुप्सापि, न जाता ? इत्यहो आश्चर्य्यम् ।

अत्र तृणस्य तृणस्वरूपस्येति निरङ्गं केवलरूपकमलङ्कारश्छेकानुप्रासेन संसृज्यते । पूर्व्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥१०७॥

বাঙ্গালা—বর্ত্তমান সময়ে আমি যাঁহাকে বরণ করিবার জন্য যাইতেছি, তাহারই নিকটে আপনাদের দৌত্য করিতে পারিব কি করিয়া ? হায় ! তৃণস্বরূপ আমার বঞ্চনা করিবার পক্ষে এইরূপ মহাপুরুষদিগেরও যে ঘৃণা জন্মিল না, ইহাই আশ্চর্য্য ॥১০৭॥

अन्वयः—यः अहम् अस्याः विरहात् मुहुः उद्भ्रमामि, मुहूर्त्तं मोहम् एमि च ; सः ईदृगवस्थः अहं वः रहस्यं रक्षितुं कथं प्रभवितास्मि (इति) ब्रूत ॥१०८॥

"त्वामिहैं कमनिवेद्य रहस्ये" इत्यनेन यदुक्तमित्योर्भी रहस्यरक्षणमेव युक्तिकृता तदोत्तरमाह उद्भ्रमामीति ।

(१) दूततां नु ।

यां मनोरथमयीं हृदि कृत्वा यः श्वसिम्यथ कथं स तदग्रे ।
भावगुप्तिमवलम्बितुमीशे दुर्जया हि विषया विदुषापि ॥१०९॥
यामिकाननुपरुध्य च मादृक् तां निरीक्षितुमपि क्षमते कः ।
रक्षि-लक्ष-जय-यज्ञ-चरित्रे पुंसि विश्वसिति कुत्र कुमारी ॥११०॥

---

योऽहम्, यस्याः दमयन्त्याः, विरहात्, मुहुर्वारं वारम्, उद्भ्रमामि उद्भ्रान्त उन्मत्तो भवामि ; मुहुः प्रतिक्षणम्, मोहं मूर्च्छाम्, एमि प्राप्नोमि च ; सः, ईदृशी अवस्थे उन्मादमूर्च्छारूपे कामदशे यस्य स तादृशः अहम्, वो युष्माकम् गोपनीयं विषयम्, रक्षितुं गोपयितुम्, कथं केन प्रकारेण, प्रभविताऽस्मि समर्थो भविताऽस्मि, इति ब्रूत यूयं कथयत । उन्मादवशेनावश्यमेव रहस्यप्रकाशसम्भवात् मूर्च्छावशेनावश्यमेव रहस्यविस्मरणसम्भवाच्च युष्माकं रहस्यं रक्षितुं कथमपि न प्रभविताऽस्मीति भावः ।

अत्र यत ईदृगवस्थः अतो न प्रभविताऽस्मीति पदार्थहेतुकं काव्यलिङ्गं तदनुप्राणिता अर्थापत्तिरित्यनयोरङ्गाङ्गिभावेन सङ्करः ; सोऽपि पुनर्द्वितीयपादगतेन छेकानुप्रासेन संसृज्यते । पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥१०८॥

বাঙ্গালা—যে আমি দময়ন্তীর বিরহে বার বার উন্মত্ত হই এবং ক্ষণে ক্ষণে মূর্চ্ছিত হই, এইরূপ অবস্থাপন্ন সেই আমি কি করিয়া আপনাদের গোপনীয় বিষয় রক্ষা করিতে সমর্থ হইব ? বলুন ॥১০৮॥

अन्वयः—यः (अहं) मनोरथमयीं यां हृदि कृत्वा श्वसिमि ; सः (अहम्) अथ तदग्रे भावगुप्तिम् अवलम्बितुं कथम् ईशे । हि विदुषा अपि विषयाः दुर्जयाः ॥१०९॥

दौत्ये अनुपपत्तिमाह यामिति । योऽहम्, मनोरथमयीं सङ्कल्पात्मिकाम्, यां दमयन्तीम्, हृदि कृत्वा मनसि निधाय, श्वसिमि जीवामि ; सोऽहम्, अथ दौत्यस्वीकारानन्तरम्, तस्या एव साक्षाद्दमयन्त्याः अग्रे सम्मुखे, भावानां रोमाञ्चादीनां सात्त्विकभावाख्यकामविकाराणां गुप्तिं गोपनम्, अवलम्बितुं कर्त्तुम्, कथं केन प्रकारेण, ईशे शक्नोमि ; कथमपि नेत्यर्थः । हि यस्मात् विदुषा ज्ञानिना जनेनापि, विषयाः कामिनीकाञ्चनादयो भोग्यपदार्थाः, दुर्जया दुःखेन जेतुमायत्तीकर्त्तुं शक्याः ; तत् का कथा मादृशानां कामकिङ्कराणामिति भावः ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः अर्थापत्त्या सङ्कीर्य्यते । पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥१०९॥

বাঙ্গালা—সঙ্কল্পময়ী যে দময়ন্তীকে হৃদয়ে স্থাপন করিয়া, যে আমি জীবন ধারণ করিতেছি ; সেই আমি আপনাদের দৌত্য স্বীকারের পর তাহারই সম্মুখে রোমাঞ্চপ্রভৃতি কামবিকার গোপন করিতে কি প্রকারে সমর্থ হইব ?। কারণ, কামিনীকাঞ্চন প্রভৃতি বিষয়গুলিকে জয় করা, জ্ঞানী ব্যক্তির পক্ষেও দুষ্কর ॥১০৯॥

अन्वयः—मादृक् कः च यामिकान् अनुपरुध्य तां निरीक्षितुम् अपि क्षमते ? रक्षि-लक्ष-जय-यज्ञ-चरित्रे कुत्र पुंसि कुमारी विश्वसिति ॥११०॥

दौत्यस्यासम्भवतामेव दर्शयति यामिकानिति । किञ्चेति चार्थः । मादृक् परमसुन्दरः, कः पुमान्, यामिकान् प्रहरिणो द्वारपालान्, अनुपरुध्य अनिवार्य्य, तां दमयन्तीम्, निरीक्षितुं द्रष्टुमपि, क्षमते शक्नोति ;

आदधीचि किल दातृकृतार्घं प्राणमात्रपणसीम यशो यत्।
आददे कथमहं प्रियया तत् प्राणतः शतगुणेन पणेन ॥१११॥
अर्थना मयि भवद्भिरिवास्यै कर्त्तुमर्हति मयापि भवत्सु।
भीमजार्थपरयाचनवाचे (१) यूयमेव गुरवः करणीयाः ॥११२॥

अपि तु कोऽपि नेत्यर्थः ; कामिनीनां कामविकारानुकारकस्य कुत्सितपुरुषस्य प्रवेशसम्भवेऽपि माहृशस्य परम-सुन्दरपुरुषस्य तदन्तःपुरे द्वारपालबाधया प्रवेशासम्भवात्। निरीक्षणासम्भवेन च आलपनस्य सर्वथैवासम्भव इति भावः। अथ यामिकान् निर्जित्यैव तत्र प्रवेक्ष्यसीत्याह— रक्षिलक्षस्य द्वारपालसमूहस्य जयेन चण्डं भयङ्करं चरित्रं स्वभावो यस्य तस्मिन् तादृशे, कुत्र कस्मिन्, पुंसि पुरुषे, कुमारी कौमार्य्येण च लज्जाशीलस्वभावा नारी विश्वसिति विश्वासं करोति ; अपि तु कुत्रापि नैवेत्यर्थः ; रक्षिषु चण्डाचरणदर्शनेन अन्यत्रापि तत्सम्भावना-करणात्। अतएव च दौत्यासम्भव इति भावः।

अत्र विश्वासाभावं प्रति रक्षीत्यादिपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गमर्थापत्तिश्च ; अनयोरङ्गाङ्गि-भावेन सङ्करः ; सोऽपि पुनश्छेकानुप्रासेन संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः ॥११०॥

বাঙ্গালা—আমার মত কোন্ পুরুষ দ্বারপালদিগকে পরাস্ত না করিয়া দময়ন্তীকে দেখিতেও সমর্থ হইবে? তার পর, দ্বারপালদিগকে পরাস্ত করায় যাহার ভয়ঙ্কর স্বভাব প্রকাশ পাইবে, সেরূপ কোন পুরুষের প্রতি বালিকা বিশ্বাস করিবে ॥১১০॥

अन्वयः—प्राणमात्रपणसीम यत् यशः आदधीचि दातृकृतार्घं किल ; अहं प्राणतः शतगुणेन प्रियया पणेन तत् कथम् आददे ॥१११॥

ननु यशोलाभाय दधीचिना प्राणपर्य्यन्तमेव दत्तम्, त्वया तु प्राप्तिसम्भावनामात्रविषयीभूता काचिद्बालिकापि दातुं न शक्यत इति कीदृशो नाम दाता त्वमित्याह आदधीचीति। प्राणमात्रं केवलं जीवनमेव पणस्य मूल्यस्य सीमा अन्तावधिर्यस्य तत्तादृशम्, यद् यशः सुख्यातिः, आदधीचि दधीचिमुनिपर्य्यन्तम्, दातृभिः कृतो निरूपितः अर्घो मूल्यं यस्य तत्तथोक्तम्, किलेति प्राचीनवार्त्ता। किन्तु अहं प्राणतो जीवनात्, शतगुणेन अत्यधिकेन, प्रियया प्रियारूपेण दमयन्त्यात्मकेनेति यावत्, पणेन मूल्येन, तद् यशः, कथं केन प्रकारेण, आददे गृह्णामि ; कथमपि नेत्यर्थः। प्राणपर्य्यन्तमूल्यस्य यशसः प्राणतोऽत्यधिकमूल्येन क्रयणं सर्वथैवासङ्गतमिति तदयशोऽर्थं दौत्येन प्रियाया दानमसम्भवमेवेति भावः।

अत्र चतुर्थपादे छेकानुप्रासोऽलङ्कारः ; रूपकं विषमं परिवृत्तिश्चालङ्कारः प्राचीनैरुक्ताः। पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥१११॥

বাঙ্গালা। দাতারা যে যশের মূল্য নিরূপণ করিয়াছেন প্রাণপর্যন্ত ; এবং তাহাও দধীচিমুনিপর্যন্তই শুনা যায় ; কিন্তু আমি প্রাণ অপেক্ষা শতগুণ প্রিয়া (দময়ন্তী) রূপ পণ দ্বারা সে যশ গ্রহণ করিব কি রূপে ॥১১১॥

अन्वयः—मयि भवद्भिः इव मया अपि भवत्सु अस्यै अर्थना कर्त्तुमर्हति। भीमजार्थ-पर-याचन-वाचे (मया) यूयम् एव गुरवः करणीयाः ॥११२॥

पक्षान्तरमाह अर्थनेति। मयि मत्समीपे, भवद्भिरिव, मयापि भवत्सु भवतां समीपेषु, अस्यै दमयन्त्यै दमयन्त्यर्थमित्यर्थः अर्थना याच्ञा, कर्त्तुम्, अर्हति योग्या भवति ; एकोद्देशेनैव सर्वेषामस्माकं तत्र गमना-

(१) याचनवाटी।

**अर्थिताः प्रथमतो दमयन्तीं यूयमन्वहमुपास्य मया यत् ।**
**ह्रीर्न चेद्व्यतियतामपि तद्वः सा ममापि सुतरां न तदस्तु ॥११३॥**
**कुण्डिनेन्द्रसुतया किल पूर्वं मां वरीतुमुररीकृतमास्ते ।**
**व्रीडमेष्यति परं मयि दृष्टे स्वीकरिष्यति न सा खलु युष्मान् ॥११४॥**

---

त्वयापि च समानन्यायादिति भावः ननु त्वया तु पूर्वं कदापि न याचितम्, तदिदानीं कथं याचितुं शक्यत इत्याह भीमजेति । भीमजा दमयन्त्यै च अर्थः प्रयोजनं तत्परा तद्विषयिका या याचनवाक् तस्यै तच्छिक्षार्थं इत्यर्थः, मया यूयमेव गुरवः शिक्षकाः, करणीयाः । चिरादप्ययाचकानां भवतामिदानीं याचनवाक्श्रवणात् अयाचित-पूर्वेण मयापीदानीं सा शिक्ष्यते । तेन च भवन्तो यथा मां तां याचन्ते, तथा अहमपि भवतस्तां याचे इत्याशयः ।

अत्र श्रौतोपमालङ्कारः । पूर्वरागी रसः, प्रसादो गुणः, वैदर्भी च रीतिः ।

अर्थे इति तादर्थ्ये चतुर्थी । कर्तुमिति "कालसमयवेलासु तुमुन्" इति तुम् । तस्य चाव्ययतया निष्ठादित्वात् "न लोकाव्ययनिष्ठा" इति कर्त्तरि षष्ठीनिषेधेन 'मया' 'भवद्भिः' इत्युभयत्रापि सामान्या तृतीयैव । अर्थनेत्यस्य कर्तुमित्यनेन योगे कर्मतया द्वितीयाप्राप्तौ, चर्तीत्यनेन योगे च कर्तृतया सामान्यतस्तृतीया-प्राप्तौ "नाव्ययकृद्विधिः क्रियान्तरकारके" इति तुम् निबन्धनविधिनिषेधेन पारिशेष्यादुक्ते कर्तरि प्रथमैवेति सर्वं समञ्जसम् ॥११२॥

**বাঙ্গালা—**আপনারা যেমন দময়ন্তীর নিমিত্ত আমার নিকট প্রার্থনা করিতে পারেন। আমিও তেমন তাঁহার নিমিত্ত আপনাদের নিকট প্রার্থনা করিতে পারি। তার পর, দময়ন্তীর প্রার্থনাবাক্য শিক্ষার জন্য, আমার পক্ষে আপনাদিগকেই গুরু করা উচিত ॥১১২॥

**अन्वयः—** प्रथमतः मया अन्वहम् उपास्य यूयं यत् दमयन्तीम् अर्थिताः, तत् व्यतियताम् अपि वः चेत् न ह्रीः, तत् ( तत् व्यतियतः ) मम अपि सा सुतरां न अस्तु ॥११३॥

नन्वस्माकं प्रार्थनातिक्रमे तव लज्जा किं न स्यादित्याह अर्थिता इति । प्रथमत आदौ, मयैव अन्वहं प्रत्यहम्, उपास्य युष्मानेवाराध्य, यूयं यत् दमयन्तीम् अर्थिता भार्य्याभावेन लभ्यतया याचिताः ; तत् अर्थनम्, व्यतियतां लङ्घयतामपि, वो युष्माकम्, चेद्यदि, न ह्रीर्लज्जा स्यात् ; तत् तदा, ममापि, तद्युष्मदर्थनं व्यति-यत इत्यर्थः, सा ह्रीः, सुतरां सर्वथैव, नास्तु न स्यात् ; समानन्यायादिति भावः ।

अत्र चेदित्यनेन तदित्यस्य सम्बन्धो न घटत इति अभवन्मतसम्बन्धतादोषः "कुरुषे यत् कटाक्षेण तदा धन्वी मनोभवः" इति दर्पणोदाहरणवत् । तदास्त्विति पाठेन वास्तो परिहार्य्यः । पूर्वरागी रसः, प्रसादो गुणः, वैदर्भी च रीतिः ।

"कर्मण्यप्रधाने दुहादिभ्यः" इत्यप्रधाने कर्मणि प्रत्ययस्य नियमनात् यूयमित्यस्यौक्तार्थता । व्यतियतामिति व्यतिपूर्वस्य इणः शतृ, कृति "इणो यण्" इति य आदेशे रूपम् ॥११३॥

**বাঙ্গালা—**আমিই প্রথমে প্রতিদিন আরাধনা করিয়া আপনাদের নিকটে যে দময়ন্তীকে প্রার্থনা করিয়াছি ; তাহা অতিক্রম করিয়াও আপনাদের যদি লজ্জা না হয় ; তাহা হইলে আপনাদের প্রার্থনা অতিক্রম করিয়া আমারও কোন রূপেই লজ্জা হইতে পারে না ॥১১৩॥

**तत् प्रसीदत विधत्त न खेदं दूत्यमत्यसदृशं हि ममेदम् ।**
**हास्यतैव सुलभा न तु साध्यं तद्विधित्सुभिरनौपयिकेन ॥११५॥**
**ईदृशानि गदितानि तदानीम् आकलय्य स नलस्य बलारिः ।**
**अंसति स्म किमपि स्मयमानः स्वानुगानन-विलोकन-लोलः ॥११६॥**

---

**अन्वयः** - कुण्डिनेन्द्रसुतया पूर्वं मां वरीतुम् उररीकृतम् आस्ते किल । (तेन) सा मयि दृष्टे (सति) परं व्रीडम् एष्यति ; (किन्तु) युष्मान् न खलु स्वीकरिष्यति ॥११४॥

युष्माकं दौत्यकारं मे व्यर्थमेवेत्याह कुण्डिनेति । कुण्डिनेन्द्रसुतया दमयन्त्या, पूर्वमेव मां वरीतुं पतित्वेन ग्रहीतुम्, उररीकृतम् अङ्गीकृतम्, आस्ते वर्त्तते । किलेति लोकवार्त्तायाम् । तेन हेतुना सा कुण्डिनेन्द्रसुता मयि दृष्टे दौत्यकरणाय गमनानन्तरमवलोकिते सति, परं केवलम्, व्रीडं लज्जामेव, एष्यति प्राप्स्यति कम्प-रोमाञ्चादिकामविकाराविर्भावादिति भावः ; किन्तु युष्मान् न खलु नैव स्वीकरिष्यति मया दौत्ये कृतेऽपि पतित्वेन नाङ्गीकरिष्यति ; पूर्वमेव मनसा मम वरणेन सतीत्वभङ्गभयादिति भावः ।

अत्र परार्द्धं प्रति पूर्व्वार्द्धवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारो वृत्त्यनुप्रासेन संसृज्यते । पूर्व्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ।

व्रीडशब्दः पुंस्यपि । तथा चामरटीकायां रघुनाथः "घञि व्रीडश्च ।" प्रयोगोऽप्यत्रच यथा— "व्रीडा-दिवाभ्यासगतैः" इति माघे । "व्रीडमावहति मे" इति रघौ । "व्रीडविभ्रान्तनेत्रम्" इति महानाटके च ॥११४॥

**বাঙ্গালা**—আমাকে বরণ করিবেন বলিয়া পূর্ব্বেই দময়ন্তীর অঙ্গীকার করা আছে। সুতরাং আমাকে দেখিলে পর, তিনি কেবল লজ্জাই পাইবেন, কিন্তু আপনাদিগকে কিছুতেই স্বীকার করিবেন না ॥১১৪॥

**अन्वयः**—तत् प्रसीदत खेदं न विधत्त, हि इदं दूत्यं मम अत्यसदृशम् । अनौपयिकेन तत् विधित्सुभिः (भवद्भिः) हास्यता एव सुलभा, तु साध्यं न (सुलभम्) ॥११५॥

स्पष्टमेव दूत्यं प्रत्याचष्टे तदिति । तत् तस्मात् ममापराधाभावात् युष्माकञ्च स्वभावत एव दयालुत्वात्, प्रसीदत मयि प्रसन्ना भवत ; खेदं मया युष्मत्प्रार्थनाया निराकृतत्वात् दुःखम्, न विधत्त न कुरुत । हि यस्मात्, इदं दूत्यं मम अत्यसदृशम् अत्यन्तानुचितम् ; अतएवेदं प्रत्याख्यातमिति भावः । किञ्च अनौपयिकेन अयुक्त-भावेन, तत् दूत्यम्, विधित्सुभिर्मया द्वारा विधातुमिच्छुभिर्भवद्भिः, हास्यतैव अत्यन्तासङ्गत-विधानादुपहास्यतैव, सुलभा ; किन्तु साध्यं दमयन्तीलाभरूपं सम्पादनीयं कार्य्यम्, न सुलभम् । तत्कारणमन्यत्कुरुतेत्याशयः ।

अत्र द्वितीयचरणे च्छेकानुप्रासोऽलङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"युक्तमौपयिकं लभ्यम्" इत्यमरः ।

औपयिकमिति "उपायाद् ह्रस्वश्च" इतीकण् ह्रस्वश्च ॥११५॥

**বাঙ্গালা**—অতএব আপনারা প্রসন্ন হউন ; মনেও দুঃখ করিবেন না। কারণ; এই দৌত্য করা আমার পক্ষে অত্যন্ত অসঙ্গত। তার পর, আপনারাও অন্যায্য ভাবে আমা দ্বারা সেই দৌত্য করাইতে ইচ্ছা করিয়া, অনায়াসে উপহাসই লাভ করিবেন, কিন্তু উদ্দেশ্য বিষয় অনায়াসে লাভ করিতে পারিবেন না ॥১১৫॥

**अन्वयः**—सः बलारिः तदानीं नलस्य ईदृशानि गदितानि आकलय्य स्वानुगानन-विलोकन-लोलः (सन्) किमपि स्मयमानः अंसति स्म ॥११६॥

नाध्यगायि नृपते! भवतेदं रोहिणीरमणवंशभुवेव (१)।
लज्जते न रसना तव वाल्यादर्थिषु स्वयमुरीकृतकाम्या ॥११७॥

अङ्कुरं न वितथं न कथं वा जीवलोकमवलोकयसीमम्।
येन धर्म्मयशसी परिहातुं धीरहो चलति (२) धीर! तवापि ॥११८॥

---

ईदृशानीति। स बलारिरिन्द्रः, नलस्य ईदृशानि चातुर्य्यचमत्कारीणि, गदितानि वचनानि, आकलय्य श्रुत्वा, स्वानुगानां निजानुचराणां यमाग्निवरुणानाम् आननविलोकनेन तन्मुखावलोकनेन वक्रस्मेरमेव शीलयन्नवलम्बमानः सन्, किमपि अनिर्वचनीयं यथा स्यात्तथा, अयमान ईषद्धास्यं कुर्वन्, शंसति स्म कथयामास वदति स्म।

अत्र अयमानाश्चर्यं प्रति आकलय्येति पदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारस्तच्छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते। तथा शंसति स्मेत्यन्तेन वाक्यसमाप्तावपि तदन्तर्गतस्य बलारिरित्यस्य विशेषणभावेन अयमान इत्यादिपदद्वयस्योपादानात् समाप्तपुनरात्तत्वादोषः; स च परार्द्धं प्राक् पठित्वा समाधेयः। प्रसादो गुणः, वैदर्भी च रीतिः ॥११६॥

বাঙ্গালা—সেই ইন্দ্র তখন নলের এই রূপ বাক্য শুনিয়া, নিজের অনুচরদিগের মুখের দিকে বিদ্রূপসূচক দৃষ্টিপাত করিয়া, এবং অনির্বচনীয় ঈষৎ হাস্য করিয়া বলিতে লাগিলেন ॥১১৬॥

अन्वयः—(हे) नृपते! रोहिणीरमणवंशभुवा इव भवता इदं न अध्यगायि। अर्थिषु स्वयम् उरीकृतकाम्या तव रसना वाल्यात् न लज्जते? ॥११७॥

किं शंसति स्मेत्याह नेति। हे नृपते! रोहिणीरमणश्चन्द्रस्तस्य वंशे भवतीति रोहिणीरमणवंशभूस्तेनेव, भवता, इदं "स्थिरमुन्नतरता" इत्यादि "अनौपयिकेन" इत्यन्तं वाक्यजातम्, नाध्यगायि नाभिहितम्; चन्द्रवंशप्रसूतस्य जनस्य परप्रार्थनाप्रत्याख्यानासम्भवादिति भावः। किञ्च, अर्थिषु याचकेष्वस्मासु, स्वयमात्मनैव, न पुनः परद्वारा इत्याशयः, उरीकृतम् "जीवितावधि किमप्यधिकं वा" इत्यादिना दातुमङ्गीकृतं काम्यमभिलषणीयं वस्तु यया सा तादृशी, तव रसना जिह्वा, वाल्यात् इदानीं प्रातिकूल्यात् "दूत्यमत्रासहम्" इत्यादिना पुनः प्रत्याख्यानादित्यर्थः, न लज्जते? इति काका अपि तु लज्जतामेवेत्यर्थः; द्विधाऽभिधानेनाभिधातुरनृततापातादित्यभिप्रायः। "अथ च" इत्यादिकं नारायणादीनां व्याख्यान्तरन्तु हेयम्, कवेस्तादृशतात्पर्याभावात् अप्रामाण्यात् अनुचितार्थतादोषापाताच्चेति सुधीभिर्विभावनीयम्।

अत्र परार्द्धे अन्त्यानुप्रासोऽलङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः ॥११७॥

বাঙ্গালা—রাজা! তুমি, চন্দ্রবংশসম্ভূত লোকের মত এ কথাগুলি বল নাই। বিশেষতঃ, যে জিহ্বা প্রার্থিগণের নিকটে নিজেই অভিলাষ পূরণ করিবে বলিয়া অঙ্গীকার করিয়াছিল, তোমার সে জিহ্বা এখন তাহার প্রতিকূলতা করা নিবন্ধন লজ্জিত হইতেছে না কি? ॥১১৭॥

अन्वयः—(हे नृपते!) इमं जीवलोकं कथं अङ्कुरं न वितथं वा न अवलोकयसि। येन (हे) धीर! तव अपि धीः धर्म्मयशसी परिहातुं चलति अहो! ॥११८॥

दौत्य एव प्रवर्त्तयितुमाह अङ्कुरमिति। हे नृपते! इमं जीवलोकं प्राणिजगत्, कथं केन हेतुना,

---

(१)···भुवैव! (२) चलति···।

कः कुलेऽजनि जगन्मुकुटे वः प्रार्थकेप्सितमपूरि न येन ।
इन्दुरादिरजनिष्ट कलङ्की कष्टमत्र स भवानपि मा भूत् ॥११९॥
यापदृष्टिरपि या मुखमुद्रा याचमानमनु या च न तुष्टिः ।
त्वादृशस्य सकलः स कलङ्कः शीतभासि शशकः परमङ्कः ॥१२०॥

---

भङ्गुरं स्वयमेव विनश्वरम्, नावलोकयसि न विचारयसि, वितथं मायाकल्पितत्वान्मिथ्याभूतं वा, नावलोकयसि येन भङ्गुरवितथानवलोकनेन हेतुना, हे धीर ! हेयोपादेयविचारविचक्षण ! तवापि धर्म्मो वा का कथा तादृश-धीरस्य भवतोऽपि, धीर्बुद्धिः, धर्म्मयशसी, परिहातुं सर्वतो भावेन वर्जयितुम्, चलति प्रवर्त्तते ; अङ्गीकृतप्रत्या-ख्यानादिति भावः । इत्यहो आश्चर्य्यम् । तदङ्गीकृतरक्षणाय दीर्घ्ये प्रवर्त्तस्वेत्याशयः ।

अत्र च्छेकानुप्रासोऽलङ्कारः, प्रसादो गुणः, वैदर्भी च रीतिः ॥११८॥

বাঙ্গালা—নল ! এই জীবলোকটাকে অচিরস্থায়ী বলিয়া কিম্বা একেবারেই মিথ্যা বলিয়া পর্য্যালোচনা করিতেছ না কেন ? হে বিচক্ষণ ! যে হেতু তোমার বুদ্ধিও চির-স্থায়ী ধর্ম্মও যশ পরিত্যাগ করিতে প্রবৃত্ত হইতেছে ; কি আশ্চর্য্য ! ॥১১৮॥

**अन्वयः**—जगन्मुकुटे वः कुले कः अजनि, येन प्रार्थकेप्सितं न अपूरि । अत्र आदिः इन्दुः कलङ्की अजनिष्ट, कष्टम् भवान् अपि सः मा भूत् ॥११९॥

क इति । जगतां मुकुटे उत्कर्षेणोपर्य्यवस्थानात् मुकुटस्वरूपे, वो युष्माकम्, कुले चन्द्रवंशे, ईदृशः कः अजनि जातः, येन प्रार्थकानां याचकानाम् ईप्सितं लिप्सितम्, न अपूरि न पूरितम् । किन्तु अत्र कुले, आदिः प्रथमः, इन्दुश्चन्द्र एव, कलङ्की हरिणचिह्नमेवापवादः सोऽस्यास्तीति कलङ्की, अजनिष्ट केनापि कारणेन जातः ; तत् कारणन्तु तवाप्रियत्वान्नाभिधीयत इति भावः । कष्टं तत्र कलङ्कीभवनमेव कष्टकरमित्यर्थः । भवानपि स कलङ्की अङ्गीकृतप्रत्याख्यानेनापवादवान्, मा भूत् न भवतु ।

अत्र जगन्मुकुट इति निरङ्गं केवलरूपकम्, चिह्नापवादयोर्भेदेऽपि कलङ्कपदश्लेषाभेदाध्यवसायादति-शयोक्तिः, द्वितीयार्द्धे च्छेकानुप्रासश्चेत्येतेषां मिथो निरपेक्षतया संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥११९॥

বাঙ্গালা—জগতের মুকুটস্বরূপ তোমাদের বংশে এমন কোন্ ব্যক্তি জন্ম গ্রহণ করিয়াছেন, যিনি প্রার্থীদিগের অভিষ্ট পূরণ করেন নাই । তবে, এই বংশে প্রথম চন্দ্রই কেবল কলঙ্কী জন্মিয়াছিলেন ; হায় ! তুমিও সেইরূপ কলঙ্কী হইও না ॥১১৯॥

**अन्वयः**—याचमानम् अनु या अपदृष्टिः, या मुखमुद्रा, या च न तुष्टिः ; सः सकलः त्वादृशस्य कलङ्कः ; (किन्तु) शीतभासि शशकः परम् अङ्कः ॥१२०॥

असौ चन्द्रे यादृशः कलङ्कस्तादृशः कलङ्की ममास्त्वेव, न तेन कामपि क्षतिं मन्य इत्याह येति । याच-मानं जनम्, अनु लक्ष्यीकृत्य, या अपदृष्टिरनादरेण दातुर्दृष्टिपातः, या मुखमुद्रा दातुर्मुखमुद्रणं मौनावलम्बन-मिति यावत्, या च न तुष्टिरसन्तोषः ; स सकलः सर्व एव, त्वादृशस्य भवद्विधस्य महावदान्यतया विख्यातस्य जनस्येत्यर्थः, कलङ्कः अपवादः । किन्तु शीतभासि चन्द्रे, शशको मृगः, परं केवलम्, अङ्कश्चिह्नम् । अतश्चन्द्र-कलङ्कापेक्षया भवत्कलङ्कस्य नितान्तमेव गुरुतरत्वमिति भावः ।

अत्र उपमानाच्चन्द्रादुपमेयस्य त्वादृशस्य न्यूनत्ववर्णनया व्यतिरेकालङ्कारः, परम् अङ्क एव न पुनः कलङ्क

**नाक्षराणि पठता किमपाठि विस्मृतोऽथ (१) भवता पठितोऽपि।**
**इत्थमर्थिचयसंशयदोलाखेलनं खलु चकार नकारः॥१२१॥**
**अब्रवीत्तमनलः क्व नलेदं लभ्यमुज्झसि यशः शशिकल्पम्।**
**कल्पवृक्षपतिमर्थिनमित्थं नाप कोऽपि शतमन्युमिहान्यः॥१२२॥**

---

इत्यवध्यापीडनादार्थौ परिवं व्याख्यानयोरङ्गाङ्गिभावेन सङ्करः; द्वितीये पादे च्छेकानुप्रासः, तृतीये खकलः खल-ङ्केति यमकम्, द्वितीयार्द्धे वृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः। माधुर्यं गुणः, वैदर्भी च रीतिः॥१२०॥

**বাঙ্গালা**—প্রার্থী ব্যক্তিকে লক্ষ্য করিয়া অনাদরে যে দৃষ্টিপাত করা, কিম্বা মৌন অবলম্বন করা, অথবা অসন্তোষ প্রকাশ করা, এই সমস্তই তোমার মত লোকের পক্ষে কলঙ্ক। কিন্তু চন্দ্রের হরিণটা কেবল চিহ্ন॥১২০॥

**अन्वयः**—भवता अक्षराणि पठता (सता) नकारः किं न अपाठि; अथ पठितः अपि नकारः विस्मृतः। नकारः इत्थम् अर्थि-चय-संशय-दोला-खेलनं चकार खलु॥१२१॥

दीयमङ्गीकारयितुमद्भुतं स्तौति नेति। भवता त्वया, अक्षराणि अकारादीन् वर्णान्, पठता शैशवकाले पाठशालायां शिक्षमाणेन सता, नकारः "न" इति वर्णः, किं न अपाठि न गुरुसमीपादशिक्षि। येनासौ नकारो भवता प्रार्थिषु कदापि नोच्चार्यत इति भावः। एवमुत्तरत्रापि। ननु केवलस्य नकारस्यापाठे को हेतुरित्याह—अथ किंवा, पठितोऽपि गुरुसमीपात् शिक्षितोऽपि नकारः, भवता विस्मृतः। नकारो निषेधबोधकः 'न' इति वर्णः, इत्थम् उक्तरूपः अर्थिचयस्य याचकसमूहस्य संशय एव दोला दोलनयन्त्रं तत्र खेलनम् इतस्ततो दोलनात्मिकां क्रीडाम्, चकार। अतएव दीयार्थिस्वत्रापि 'न करिष्यामि" इति नोच्यतामित्याशयः। खलु वाक्यालङ्कारे।

अत्र नाक्षरस्य संशयासम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिरलङ्कारः, संशयदोलेति निरङ्गं केवलरूपकञ्चान-योरङ्गाङ्गिभावेन सङ्करः; सोऽपि च चतुर्थपादगतेन च्छेकानुप्रासेन संसृज्यते। न पुनः सन्देहालङ्कारोऽपि प्राचीनैरुक्तो युक्तः, उपमेये उपमानसंशयस्यैव तद्विषयत्वात् अत्र तु उपमानोपमेयभावस्यैवाभावात्। प्रसादो गुणः, वैदर्भी च रीतिः।

नकार इति "वर्णात् कारः" इति नात् कारप्रत्ययः॥१२१॥

**বাঙ্গালা**—নল! তুমি বর্ণ শিক্ষা করিবার সময়ে 'ন' বর্ণটা কি মোটেই শিক্ষা কর নাই; কিম্বা শিক্ষা করিয়াও বিস্মৃত হইয়া গিয়াছ, এইরূপ প্রার্থীদিগের সন্দেহ-দোলাতে 'ন' এই বর্ণটী দোলনখেলা করিয়া আসিতেছে॥১২১॥

**अन्वयः**—अनलः तम् अब्रवीत्—(हे) नल! लभ्यं शशिकल्पम् इदं यशः क्व उज्झसि। इह अन्यः कः अपि कल्पवृक्षपतिं शतमन्युम् एतम् अर्थिनं न आप॥१२२॥

इदानीमप्रियमवक्तॄणामेकैकस्य प्रीत्याह्नोक्तिं क्रमशः प्रदर्शयति। तत्रादावग्नेराह द्वाभ्याम् अब्रवीदिति। अनलोऽग्निः, तं नलम्, अब्रवीत्। किमब्रवीदित्याह—हे नल! लभ्यम् अनायासेन लभ्यत्वात् हस्तलब्धप्रायम्, शशिकल्पं परमशुभ्रत्वात् चन्द्रतुल्यम्, इदं देवराजप्रार्थनापूरणनिबन्धनम्, यशः सुख्यातिम्, क्व कस्मिन् स्थाने एतत्सम्पादके कस्मिन् जन इत्यर्थः, उज्झसि त्यजसि वितरसीति यावत्; नैतदुचितमिति भावः। नन्वत्र को विशेष इत्याह—इह अस्मिन् मर्त्यलोके, अन्यस्त्वद्भिन्नः, को जनः, कल्पवृक्षस्य पतिं स्वामिनम्, शतं मन्यवोऽस्येति-

---

(१) प्रस्मृतोऽपि।

न व्यहन्यत कदापि मुदं यः स्वःसदामुपनयन्नभिलाषः ।
तत्पदे त्वदभिषेककृता नः स त्यजत्वसमतामदमद्य ॥१२३॥
अब्रवीदथ यमस्तमनुष्टं वीरसेनकुलदीप ! तमस्त्वाम् ।
यत् किमप्यभिबुभूषति तत् किं चन्द्रवंशवसतेः सदृशं ते ॥१२४॥

---

यथा यस्त नम्, एतं देवराजम्, अर्थिनं याचकम्, न आप न प्राप्तवान् । तथा च स्वयमेव देवराजः प्रार्थनामात्रे च सर्वाभीष्टपूरकम् आत्मन एवायत्तं कल्पवृक्षमप्यसमत्य अन्यं याचति, विशेषतश्च शतमख्, तया महाविभवतामपि अन्यं प्रार्थयति । अत एवेहप्रार्थिलाभः अन्यस्य दुष्कर एवेति दौत्याङ्गीकारेणास्य प्रार्थनां पूरयन् अलौकिकं यशो लभस्व त्याशयः । एतेन त्वया दौत्येऽङ्गीकृते देवराजोऽयं कल्पवृक्षमेव प्रार्थयन् दैन्यं साधयिष्यतीति ध्वनितम् ।

अत्र यशसिकल्पमित्यार्थोपमा, अन्यस्य इन्द्रार्थिलाभाभावं प्रति कल्पवृक्षपति·शतमख्यादिपदद्वयार्थौ हेतुरिति पदार्थहेतुकं काव्यलिङ्गं च्छेकानुप्रासश्चेत्येतेषां संसृष्टिः । माधुर्यं गुणः, वैदर्भी च रीतिः ॥१२२॥

বাঙ্গালা—অগ্নি নলকে বলিলেন—"নল! শঙ্খপ্রায় চন্দ্রতুল্য এই যশ কাহাকে দান করিতেছ। এই জগতে তুমি ভিন্ন অন্য কোন ব্যক্তিই, কল্পবৃক্ষের স্বামী এবং শতাশ্বমেধকারী এই দেবরাজকে প্রার্থী পান নাই ॥১২২॥

**অন্বয়ঃ**—स्वःसदां मुदम् उपनयन् यः अभिलाषः कदापि न व्यहन्यत, तत्पदे त्वदभिषेककृतां नः सः अद्य असमतामदं त्यजतु ॥१२३॥

नेति । स्वःसदां देवानाम्, मुदमानन्दम्, उपनयन् अभीष्टसम्पादनेन उपस्थापयन्, यः अभिलाष इच्छा, कदापि न व्यहन्यत केनापि न व्याहतः; देवत्वेन प्रकृष्टैश्वर्य्यरूपत्वादिति भावः । तस्य अभिलाषस्य पदे स्थाने, तव अस्मदभीष्टपूरयितुर्भवतः अभिषेकं स्थापनं कुर्वन्तीति तेषाम्, नः अस्माकम्, सः अभिलाषः, अद्य, असमतामदम् आत्मसादृश्याभावनिबन्धनं गर्वम्, त्यजतु; तत्पदे तवाभिषेककरणेनैव त्वय्येव तत्सादृश्यसत्त्वादित्याशयः । एतेन त्वया दौत्येऽनङ्गीकृते स्वाभिलाषमात्रेणैव दमयन्तीलाभं सम्पादयाम इति सूचितम् ।

अत्र असमतामदत्यागं प्रति तत्पदे त्वदभिषेककृतामिति पदस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"मुदामन्दमित्यत्राभिधानम्:" इति शाश्वतश्च कौमुद्यामष्टविधैश्वर्य्यनिरूपणे माधवप्रतिनिम्नाः । स्वः स्वर्गे सीदन्ति तिष्ठन्तीति स्वःसदो देवाः "सत्सूद्विष—" इत्यादिना क्विप् ॥१२३॥

বাঙ্গালা—দেবগণের ইচ্ছাই তাঁহাদের অভীষ্ট পূরণ করিয়া আনন্দ জন্মাইয়া থাকে এবং কখনও কেহই সে ইচ্ছার ব্যাঘাত করিতে পারে না; আজ সেই ইচ্ছার জায়গায় তোমাকে আমরা স্থাপিত করিয়াছি; সুতরাং সে ইচ্ছা আজ নিজের অতুলনীয়তার অহঙ্কার পরিত্যাগ করুক ॥১২৩॥

**অন্বয়ঃ**—अथ यमः अनुष्टं तम् अब्रवीत्—(हे) वीरसेनकुलदीप ! किमपि तमः यत् त्वाम् अभिबुभूषति, तत् किं चन्द्रवंशवसतेः ते सदृशम् ? ॥१२४॥

अथ चतुर्भिः पद्यैर्यमोक्तिमाह अब्रवीदिति । अथ अग्निवचनानन्तरम्, यमः, अनुष्टं दमयन्त्यप्राप्तिसम्भावनया विषण्णम्, तं नलम्, अब्रवीत् हे वीरसेनकुलस्य दीप ! उज्ज्वलताविधायकत्वात् दीपस्वरूप ! किमपि अनिर्वचनीयम् तमः दमयन्त्यप्राप्तिसम्भावनानिमित्तकः शोक एव तमोऽन्धकारः, यत् त्वाम्, अभिबुभूषति अभि-

रोहणः किमपि यः कठिनानां कामधेनुरपि या पशुरेव ।
नैतयोरपि वृथाऽभवदर्थी हा विधित्सुरसि वत्स ! किमेतत् ॥१२५॥
याचितश्चिरयति क्व नु धीरः प्राणने क्षणमपि प्रतिभूः कः ।
ग्रंसति छिन्नयनी हठनिद्रां द्राङ् निमेष-मिष-घूर्णन-पूर्णा ॥१२६॥

---

भवितुमिच्छति, तत् किं चन्द्रवंशे वसतिरवस्थानं यस्य तस्य तादृशस्य, ते तव, सहनम् उचितम् ? अपि तु एकतो दीपरूपस्य द्वितीयतश्च चन्द्रवंशप्रसूतेश्च तमसाभिभवनमत्यन्तमेवानुचितमित्यर्थः अतएव दमयन्त्याप्राप्तिसम्भावनानिमित्तकं शोकं विहाय धैर्यावलम्बनात् हृष्टचित्तं मामाकं दौत्याङ्गीकारमेव कुर्वित्याशयः ।

अत्र कुलदीपेति निरङ्गं केवलरूपकम्, शोकान्धकारयोर्भेदेऽपि तमःशब्देन श्लेषादभेदाध्यवसायादतिशयोक्तिः, अर्थापत्तिः, साहस्याभावं प्रति चन्द्रवंशप्रसूतेरिति पदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गञ्च, इत्थं तेषामङ्गाङ्गिभावेन सङ्करः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"तमोऽन्धकारे स्वर्भानौ तमः शोके गुणान्तरे" इति विश्वः ॥१२४॥

**बाङ्गाला**—তাহার পর যম, বিষণ্ণচিত্ত নলকে বলিলেন—হে বীরসেনকুলপ্রদীপ ! অনির্বচনীয় শোকান্ধকার যে তোমাকে অভিভূত করিবার ইচ্ছা করিতেছে ; তাহা কি চন্দ্রবংশস্থায়ী তোমার পক্ষে সঙ্গত ? ॥১২৪॥

**अन्वयः**—यः रोहणः (सोऽपि) कठिनानां (मध्ये) किमपि, या अपि कामधेनुः (सापि) पशुः एव ; एतयोः अपि अर्थी वृथा न अभवत् । हा वत्स ! एतत् किं विधित्सुः असि ॥१२५॥

रोहण इति । यः, रोहन्ति प्रार्थिकामाः प्रादुर्भवन्त्यस्मादिति रोहणो विदूरपर्वतः अस्तीति शेषः ; सोऽपि कठिनानां पाषाणमयत्वात् कर्कशानां मध्ये, किमपि अनिर्वचनीयः अतिशयकठिन इत्यर्थः ; तथा यापि कामधेनुरस्ति, सापि पशुरेव गौरेव पशुवत् मूर्खेव च । किन्तु एतयोरपि सकाशात्, अर्थी याचकजनः, वृथा निष्फलकामः, नाभवत् ; तयोः प्रार्थिकामपूरणप्रसिद्धेरिति भावः । हा हे वत्स ! एतत् प्रार्थिप्रत्याख्यानम्, किं कस्मात्, विधित्सुर्विधातुमिच्छुरसि । तथा च सुकठिनो रोहणपर्वतः पशुभूता कामधेनुश्च प्रार्थिनः प्रार्थनां पूरयति ; त्वन्तु सुकोमलः सुपण्डितश्च सन्नपि प्रार्थिनः प्रार्थनां निरस्यसीति महदेवेदमनुचितमित्याशयः ।

अत्र उपमानाभ्यां रोहणकामधेनुभ्याम् उपमेयस्य नलस्य आक्षेपलभ्याधिक्यप्रतिपादनात् व्यतिरेकोऽलङ्कारः स च तुर्थपादगतच्छेकानुप्रासेन संसृज्यते । बहूनां पदानामनुक्तावपि न न्यूनपदतादोषः, तस्य तत्र कण्ठाक्षमपत्वात् । प्रसादो गुणः, वैदर्भी च रीतिः ॥१२५॥

**बाङ्गाला**—বিদূরনামে যে পর্বত আছে, সেও কঠিন পদার্থের মধ্যে সর্বপ্রধান ; আবার কামধেনুনামে যে ধেনু আছে, সেও পশুই । কিন্তু তাহাদের নিকট হইতেও প্রার্থী বিফলকাম হয় নাই ; হায় ! বৎস ! তুমি এরূপ কেন করিতে ইচ্ছা করিতেছ ॥১২৫॥

**अन्वयः**—धीरः याचितः (सन्) क्व नु चिरयति, क्षणम् अपि प्राणने कः प्रतिभूः । निमेष-मिष-घूर्णन पूर्णा छिन्नयनी द्राक् हठनिद्रा ग्रंसति ॥१२६॥

याचित इति । धीरो विवेचको जनः, याचितः सन्, क्व कुत्र नु चिरयति दातुं विलम्बते ; अपि तु क्वापि नेत्यर्थः । यस्मात् क्षणमपि प्राणने जीवने, को जनः, प्रतिभूर्लग्नको भवेत्, अपि तु कोऽपि नेत्यर्थः ; अन्यप्राणने वा किं निदर्शनमित्याह ग्रंसतीति । निमेषमिषेण नयनावरणसङ्कोचच्छलेन यद् घूर्णनं मरणकालीनवदक्षमणं तेन पूर्णा, छिन्नयनी नयनद्वयम्, द्राक् शीघ्रमेव, हठनिद्रा महानिद्रा मरणम्, ग्रंसति सूचयति ;

अभ्रपुष्पमपि दित्सति शीतं चार्थिना विमुखता यदभाजि ।
स्तोककस्य खलु चञ्चुपुटेन म्लानिरुल्लसति तद्घनसङ्घे ॥१२७॥
ऊचिवानुचितमक्षरमेतं पाशपाणिरपि पाणिमुदस्य ।
कीर्त्तिरेव भवतां प्रियदारा दान-नीर-झर-मौक्तिकहारा ॥१२८॥

---

हृढ़निद्राकालवत् सर्वदापि घूर्णनसत्त्वादिति भावः। एतेन दीर्घानग्नीकारे स्वकर्त्तव्या हृढ़निद्रापि सूचिता ।

अत्र प्रथमचरणार्थं प्रति द्वितीयचरणगतवाक्यार्थो हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गम्, क्षणमात्रघूर्णनसत्त्वेन विनयन्त्या हृढ़निद्राया सने सामर्थ्यं सम्भवत्यवेति सम्बन्धमुत्तम्भरूपा निदर्शना, अपस्तुतिच्छेकानुप्रासश्चेत्येतेषां मिथो निरपेक्षतया संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः। "स्युर्लग्नकाः प्रतिभुवः" इत्यमरः।

चिरयतीति चिरं करोतीतीमा चिरम् । नयोर्नयनयोः समाहार इति विनयनी द्विगोर्नदादित्वादीप्रत्ययः ॥१२६॥

বাঙ্গালা—বিবেচক ব্যক্তি প্রার্থিত হইয়া কোথায় বিলম্ব করিয়া থাকেন? কেন না, মানুষ ক্ষণকালও যে জীবিত থাকিবে, সে বিষয়ে জামিন হইবে কে? দেখ, নিমেষচ্ছলে ঘূর্ণনপরিপূর্ণ নয়নযুগলই শীঘ্র মৃত্যুর সূচনা করিয়া থাকে ।১২৬।

अन्वयः—अर्थिना स्तोककस्य चञ्चुपुटेन यत् सा विमुखता अभाजि, तत् खलु शीतम् अभ्रपुष्पं दित्सति अपि घनसङ्घे म्लानिः उल्लसति ॥१२७॥

अभ्रेति। अर्थिना जलयाचकेन, स्तोककस्य चातकस्य, चञ्चुपुटेन चञ्चुद्वयेन, यद् यस्मादितीः, सा प्रसिद्धा, विमुखता जलदानविलम्बेन मेघात् पराङ्मुखत्वम्, अभाजि अवलम्बिता ; तत् खलु तस्मादितीरिव, शीतं शीतलम्, अभ्रपुष्पं वृष्टिजलम्, दित्सत्यपि दातुमिच्छत्यपि, घनसङ्घे मेघसमूहे, म्लानिर्मालिन्यम्, उल्लसति स्फुरति। चातकेन जले प्रार्थिते मेघस्य तद्दानेच्छायां सत्यामपि विलम्बकरणात् श्यामवर्णरूपमयशो जातम्, तेन त्वमपि तादृशायशोभयेन अवलम्बितमेवास्माकं प्रार्थनां पूरयेति भावः।

अन्यत्र तु अर्थिना याचकेन, स्तोककस्य नितान्तनिकृष्टस्यापि जनस्य मुखेन, यत् सा विमुखता विलम्बजनितं वैमुख्यम्, अभाजि प्राप्तम् ; तत् खलु शीतं चित्तशीतलताजनकम्, अभ्रपुष्पम् आकाशकुसुमं तद्वत् असम्भवं वस्त्वपि, दित्सति घनसङ्घे घनसङ्घवत् उन्नते जने, म्लानिरयशोजनितं मालिन्यम्, उल्लसति प्रकाशते ; तत् का कथा सर्वप्रधानपुरुषस्य इन्द्रस्य अर्थिना मुखेन विमुखतायां प्राप्तायां तवायशोनिबन्धनस्य मालिन्यस्येति अन्द्यशक्तिमूलो वस्तुध्वनिः।

अत्र तत् खलु तदिवेत्यर्थात् हेतूत्प्रेक्षालङ्कारः। अन्धार्थस्य प्रगाढ़त्वादोजो गुणः, गौड़ी च रीतिः।

"मेघपुष्पं घनरसः" "अभ्रं मेघो वारिवाहः" "अभ्रं व्योम पुष्करमम्बरम्" "अथ सारङ्गः स्तोककश्चातकः समाः" इत्यमरः ॥१२७॥

বাঙ্গালা—মেঘ শীতল বৃষ্টির জল দিতে ইচ্ছা করিয়াও বিলম্ব করায়, প্রার্থী চাতকের চঞ্চুপুট যে হেতু বিমুখতা অবলম্বন করিয়াছিল ; সেই হেতুই যেন সেই মেঘে মলিনতা প্রকাশ পাইতেছে ।১২৭।

अन्वयः—पाशपाणिः अपि पाणिम् उदस्य एतम् उचितम् अक्षरम् ऊचिवान्। दान-नीर-झर-मौक्तिक-हारा कीर्त्तिः एव भवतां प्रियदाराः ॥१२८॥

इदानीं नवभिः श्लोकैर्वरुणोक्तिमाह ऊचिवानिति। पाशपाणिर्वरुणोऽपि, पाणिमुदस्य याचकाश्वासनात् करमुत्तोल्य, एतं वक्ष्यमाणम्, उचितं द्वितीयादिवाक्यार्थस्य सर्वथा दर्शनाद् योग्यम्, अक्षरम् अक्षरघटितं वाक्यम्, ऊचिवान् उक्तवान्। किमित्याह—दाने दानकरणसमये यो नीरझरो जलप्रवाहः स एव मौक्तिकहारः शुभ्रत्वात् स्वच्छत्वाच्च मुक्तामाला यस्याः सा तथोक्ता, कीर्त्तिरेव दाननिबन्धना सुख्यातिरेव, भवतां युष्माकं श्रीयाणां

**चर्म्म वर्म्म किल यस्य न भेद्यं यस्य वज्रमयमस्थि च तौ चेत् ।**
**स्थायिनाविह न कर्णदधीचौ तन्न धर्म्ममवधीरय धीर ! ॥१२९॥**
**अद्य यावदपि येन निबद्धौ न प्रभू विचलितुं बलिविन्ध्यौ ।**
**आस्थितावितथतागुणपाशः त्वादृशा स विदुषा दुरपासः ॥१३०॥**

---

दाराम्, प्रियदारा दयिता भार्य्या, न पुनः स्त्रीजातिः, तथैव सर्वत्र दर्शनादिति तात्पर्य्यम् । अतएव तादृश-कीर्त्तिदारसंग्रहाय अस्माकं दौत्यमेवाङ्गीकुरु, न पुनर्दमयन्तीसंग्रहाय दौत्यानङ्गीकारेणाकीर्त्तिमित्याशयः । पाशपाणिरित्यनेन दौत्यानङ्गीकारे पाशबन्धनमङ्गादि सूचिता ।

अत्र साङ्गं रूपकमलङ्कारः, कीर्त्तिरेवेत्यनेन चान्यव्यपोहनादार्थी परिसंख्या चानयोरङ्गाङ्गिभावेन सङ्करः ; सोऽपि च द्वितीयपादगतलाटानुप्रासेन द्वितीयार्द्धगतान्त्यानुप्रासेन च संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ।

"प्रचेता वरुणः पाशी" इत्यमरः ॥१२८॥

বাঙ্গালা—বরুণও হস্ত উত্তোলন করিয়া নলকে উপযুক্ত কথা বলিলেন "নল ! কীর্ত্তিই তোমাদের প্রিয়তমা ভার্য্যা ; দানকালীন জলধারাই আবার তাহার মুক্তাময় হার" ॥১২৮॥

**অন্বয়:**—यस्य चर्म्म न भेद्यं वर्म्म (आसीत्), यस्य च अस्थि वज्रमयम् (आसीत्) किल ; तौ कर्णदधीचौ इह चेत् न स्थायिनौ ; तत् (हे) धीर ! धर्म्मं न अवधीरय ॥१२९॥

चर्म्मेति । यस्य कर्णस्य, चर्म्म त्वगेव, न भेद्यम् अस्त्रादिना भेत्तुमशक्यम्, वर्म्म कवचं कवचस्वरूप-मासीत् ; यस्य दधीचेश्च, अस्थि वज्रमयं कठिनत्वे वज्रस्वरूपमासीत् । किलेति पुराणवार्त्तायाम् । तौ कर्णदधीचौ अपि, इह जगति, चेत् न स्थायिनौ स्थिरतरौ जातौ, तत्तदा, हे धीर ! जगदवस्थाविवेचन-कुशल ! धर्म्मम् अङ्गीकृतपालनीयं पुण्यम्, न अवधीरय न अवजानीहि । जगति धर्म्म एवैकः स्थायी, न पुनरन्यत् किञ्चिदिति विविच्य अस्माकं दौत्यग्रहणेन "जीवितावधि किमप्यधिकं वा" इत्यादिनाङ्गीकृतं पालयन् धर्म्मं रक्षेति भावः । कल्पान्तरीयकर्णोपाख्यानस्य पुराणे श्रवणादिदमविरुद्धम् ।

अत्र निरङ्गं केवलरूपकम् अभेद्यचर्म्मात्मकवर्म्मरूपे कारणे वज्रमयास्थिरूपे कारणे च सत्यपि स्थायित्वरूपतत्-फलाभावात् विशेषोक्तिश्चालङ्कारस्तेन च्छेकानुप्रासेन संसृज्यते । तथा तदित्यस्य चेदित्यनेन सम्बन्धोऽभीमतोऽपि न घटत इत्य-भवन्मतसम्बन्धतादोषः, 'तर्हि धर्म्ममवधीरय न त्वम्' इति पाठेन परिहार्य्यः । प्रसादो गुणः, वैदर्भी च रीतिः ॥१२९॥

বাঙ্গালা—যাঁহার চর্ম্মই অভেদ্যবর্ম্মস্বরূপ ছিল এবং যাঁহার অস্থি বজ্রস্বরূপ বলিয়া লোকে জানিত ; সেই কর্ণ এবং সেই দধীচিও যদি এই জগতে স্থায়ী হইলেন না ; তবে, হে বিচক্ষণ ! নল ! তুমি ধর্ম্মকে অবজ্ঞা করিও না ॥১২৯॥

**অন্বয়:**—येन निबद्धौ बलिविन्ध्यौ अद्य यावत् अपि विचलितुं न प्रभू सः आस्थितावितथतागुणपाशः त्वादृशा विदुषा दुरपासः ॥१३०॥

अद्येति । येन पाशेन, निबद्धौ बलिविन्ध्यौ बलिराज-विन्ध्यपर्वतौ, अद्य यावदपि अद्यपर्य्यन्तमपि, विच-लितुं सत्यात् भ्रष्टौ भवितुम्, न प्रभू न समर्थौ भवतः । बलिः पाताल एव तिष्ठति, विन्ध्यश्च अवनतमस्तक एवास्ते इति भावः । सः, आस्थितः अङ्गीकृतः अवितथतागुणः सत्यात्मकधर्म्म एव पाशो रज्जुः, त्वादृशा भवद्विधेन, विदुषा धर्म्माधर्म्मज्ञानवता जनेन, दुःखेन अपास्यते छिद्यत इति दुरपासः । तथा च असुरत्वात् पाषाणमयत्वाच्च अज्ञानिनौ बलिविन्ध्यावपि यं सत्यपाशं छेत्तुम् अद्यापि न शक्तौ ; त्वं धर्म्माधर्म्मज्ञानी भवन्नपि तं सत्यपाशं छेत्तुं कथं शक्ष्यसीति अस्माकं दौत्यमङ्गीकृत्य "जीवितावधि किमप्यधिकं वा" इत्यादिसत्यं पालयेति भावः ।

अत्र बलिविन्ध्यापेक्षया नलस्याधिक्यप्रतिपादनात् व्यतिरेकः, अवितथतागुणपाश इति निरङ्गं केवलरूपकम्,

प्रेयसी जितसुधांशुमुखश्रीः या न मुञ्चति दिगन्तगतापि ।
भङ्गि-सङ्गम-कुरङ्ग-दृगर्थे कः कदर्थयति तामपि कीर्त्तिम् ॥१३१॥
यान् परं (१) प्रति परेऽर्थयितारः तेऽपि यं वयमहो स पुनस्त्वम् ।
नैव नः खलु मनोरथमात्रं शूर ! पूरय दिशोऽपि यशोभिः ॥१३२॥

---

गुणपाश इति शब्दार्थयोरापाततः पुनरुक्ततयाऽवभासनात् परञ्च गुणो धर्म्म इत्यर्थभेदात् भिन्नाकारशब्दगतत्वाच्च पुनरुक्तवदाभास इत्येतेषामङ्गाङ्गिभावेन सङ्करः । प्रसादो गुणः, वैदर्भी च रीतिः ।

वामनदेवेन याचितो बलिः पाताले स्थातुं प्रतिश्रुत्य अद्यापि तत्रैव तिष्ठतीति श्रीमद्भागवतादिवार्त्ता ।

पुरा किल सुमेरुं प्रति स्पर्द्धया वर्द्धमानो विन्ध्याचलः सूर्य्याचन्द्रमसोरपि गमनपथमवरुन्धन् अगस्त्यं महर्षिमागतं शिरोनमनेन नमस्कुर्व्वन् "पुनर्मदागमनं यावदेवमेव तिष्ठ" इत्यगस्त्येनादिष्टस्तथैव स्थातुं प्रतिश्रुत्य अद्यापि शिरो नीचीकृत्य तिष्ठतीति स्कन्दपुराणीय काशीखण्डवार्त्ता ॥१३०॥

বাঙ্গালা—যে সত্যপাশে বদ্ধ হইয়া বলিরাজা ও বিন্ধ্যপর্বত, অদ্যপর্য্যন্তও তাহা হইতে ভ্রষ্ট হইতে পারেন নাই ; তোমার মত জ্ঞানী লোকের পক্ষে সেই অবলম্বিত সত্য-পাশকে ছেদন করা দুষ্কর ॥১৩০॥

अन्वय —प्रेयसी जितसुधांशुमुखश्रीः या दिगन्तगता अपि ( सती ) न मुञ्चति, ताम् अपि कीर्त्तिं कः भङ्गि सङ्गम-कुरङ्ग दृगर्थं कदर्थयति ॥१३१॥

प्रेयसीति । प्रेयसी सुखसम्पादकत्वात् प्रियतमा, तथा जिता धावल्यातिशयेन पराभूता सुधांशुमुखानां चन्द्रप्रभृतीनां श्रीः शोभा यया सा ; अन्यत्र तु जितः सौन्दर्य्येण पराभूतः सुधांशुश्चन्द्रो यया सा तादृशी मुखश्रीर्वदनकान्तिर्यस्याः सा, या कीर्त्तिः, दिशाम् अन्तेषु प्रान्तदेशेषु गता लोकमुखैः सञ्चरितापि सति, न मुञ्चति तत्सम्बन्धिनं जनं न त्यजति सर्व्वदैव तत्सम्बन्धसत्त्वादिति भावः ; अन्यत्र तु या पत्नी, दिगन्तगतापि राजविप्लवादिना बहुदूरं गतापि सती, न मुञ्चति पतिं न त्यजति, पातिव्रात्यादित्याशयः । तामपि कीर्त्तिं दानादिनिबन्धनां सुख्यातिं पत्नीञ्च, कः विवेकवान् जनः, भङ्गी विनाशोऽस्यास्तीति भङ्गी अचिरस्थायी सङ्गमः सम्भोगः यस्याः सा तादृशी या कुरङ्गदृक् हरिणनयना सामान्या स्त्री उपपत्नी च तस्या अर्थे निमित्ते, कदर्थयति परित्यजति, कोऽपि नेत्यर्थः । अतएव त्वमपि तादृश्या एव सामान्याया दमयन्त्या अर्थे तादृशीं कीर्त्तिं न कदर्थयेति भावः ।

अत्र कुरङ्गदृगपेक्षया कीर्त्तेराधिक्यवर्णनात् व्यतिरेकः, कीर्त्तेः कुरङ्गदृशश्च विशेषणसाम्यात् पत्न्या उपपत्न्याश्च प्रतीतेः समासोक्तिरर्थापत्तिश्चेत्येतेषामङ्गाङ्गिभावेन सङ्करः ; सोऽपि च तृतीयचरणगतच्छेकानुप्रासेन संसृज्यते । माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥१३१॥

বাঙ্গালা—যে কীর্ত্তি প্রিয়তমা এবং ধবলতার গুণে চন্দ্র, কুন্দ ও কুমুদপ্রভৃতিকে জয় করিয়া থাকে, আবার দিগন্তপর্য্যন্ত গমন করিয়াও মানুষকে পরিত্যাগ করে না ; সেই কীর্ত্তিকেও অস্থায়িমেলনা হরিণনয়না রমণীর জন্য, কোন্ ব্যক্তি পরিত্যাগ করিয়া থাকে ? ॥১৩১॥

अन्वयः—परे याम् प्रति परम् अर्थयितारः, ते अपि वयं यम् अर्थयितारः, अहो ! सः पुनः त्वम् । (हे) शूर ! नः मनोरथमात्रं न एव पूरय, यशोभिः दिशः अपि पूरय खलु ॥१३२॥

यानिति । परे त्वदन्ये जनाः, यान् अस्मान् प्रति, परं केवलम्, अर्थयितारो याचितार एव, न पुनर्दातार इत्यर्थः ; तेऽपि वयं देवाः, यं त्वाम्, अर्थयितारो दमयन्तीं याचितारः संवृत्ताः । अहो आश्चर्य्यं । स जनः पुनस्त्वम् । अतस्त्वं कीदृशो महानिति विचारयेति भावः । हे शूर ! दानवीर ! नः अस्माकम्,

(१) परं

**अर्थितां त्वयि गतेषु सुरेषु म्लान-दान-जनितोरु-यशःश्रीः (१)।**
**अद्य पाण्डु गगनं सुरशाखी केवलेन कुसुमेन विधत्ताम् ॥१३३॥**
**प्रवसते भरतार्जुनवैन्यवत् श्रुतिधृतोऽपि नल ! त्वमभीष्टदः।**
**स्वगमनाफलतां यदि गच्छसे तदफलं निखिलं खलु मङ्गलम् ॥१३४॥**

---

मनोरथमात्रं केवलमभीष्टमेव, नैव पूरय दौत्याङ्गीकारेण सफलय ; किन्तु यशोभिः नलेन दैवानामप्यभीष्टं सम्पूरितमिति सुख्यातिभिः, दिशोऽपि पूरय व्याप्नुहि। खलु वाक्यालङ्कारे।

अत्र परापेक्षया दैवानां दैवापेक्षया च नलस्य उत्कर्षप्रतिपादनात् सारो नामालङ्कारः, "उत्तरोत्तरमुत्कर्षो वस्तुनः सार उच्यते" इति लक्षणात्, अर्थयितारं इत्येकया क्रियया परे वयमित्यनयोः कर्त्तृतया, तथा पूरयेत्येकया क्रियया च मनोरथमात्रं दिश इत्यनयोः कर्म्मतयाभिसम्बन्धात् तुल्ययोगितादयम्, परं परे इति छेकानुप्रासश्चेत्येतेषां संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः।

अर्थयितार इति ताच्छील्ये तृन्। तस्य च निष्ठादित्वात् कर्म्मणि षष्ठी निषेधेन यानिति द्वितीयैव ॥१३२॥

**বাঙ্গালা**—অন্যে যাঁহাদের নিকট কেবল প্রার্থনাই করিয়া থাকে, কিন্তু দান করে না ; সেই আমরাও যাহার নিকট প্রার্থনা করিতেছি, সেই নলই তুমি !। অতএব হে দানবীর ! দৌত্য স্বীকার করিয়া কেবল আমাদের অভিলাষ পূর্ণ কর, (ইহা বলিতেছি না) ; কিন্তু যশ দ্বারা সমস্ত দিকও পূর্ণ কর ॥১৩৩॥

**अन्वयः**—सुरेषु त्वयि अर्थितां गतेषु (सत्सु) म्लान-दान-जनितोरु-यशः-श्रीः सुरशाखी अद्य केवलेन कुसुमेन गगनं पाण्डु विधत्ताम् ॥१३३॥

अर्थितामिति। सुरेषु इन्द्रादिषु देवेषु, त्वयि त्वत्समीपे, अर्थितां याचकत्वम्, गतेषु प्राप्तेषु सत्सु, म्लाना त्वद्दानमहत्त्वसम्भावनयैव मलिनीभूता दानजनिता उर्वी महती यशःश्रीः सुख्यातिशोभा यस्य स तथोक्तः, सुरशाखी कल्पवृक्षः अद्य इदानीम्, केवलेन एकमात्रेण, कुसुमेन स्वकीयशुभ्रपुष्पसमूहेन, गगनम् आकाशम्, पाण्डु शुभ्रवर्णम्, विधत्तां करोतु ; यशःश्रियो म्लानत्वेन कारणतया तदुपादानासम्भवादिति भावः।

अत्र यशःश्रियो म्लानत्वासम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिः, कुसुमस्य केवलत्वं प्रति म्लानेत्यादिपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, केवलेन कुसुमेनेत्यनेन यशःश्रियो व्यपोहनादार्थी परिसंख्या चेत्येतेषां मिथो निरपेक्षतया संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः ॥१३३॥

**বাঙ্গালা**—ইন্দ্রপ্রভৃতি দেবগণ তোমার নিকট প্রার্থী হইলে, কল্পবৃক্ষের দানজনিত বিশাল যশের শোভা মলিন হইয়া যাইবে ; সুতরাং সে কল্পবৃক্ষ আজ কেবল পুষ্প দ্বারাই আকাশমণ্ডলকে শুভ্রবর্ণ করুক ॥১৩৩॥

• **अन्वयः**—(हे) नल ! त्वं भरतार्जुनवैन्यवत् श्रुतिधृतः अपि (सन्) प्रवसते अभीष्टदः (भवसि) ; (किन्तु सः त्वं) यदि स्वगमनाफलतां गच्छसि, तत् निखिलं खलु मङ्गलम् अफलं (भवेत्) ॥१३४॥

"श्रूयतैव सुलभा न तु साध्यम्" इति नलोक्तपूर्वं खण्डयति प्रवसत इति। हे नल ! त्वम्, भरतो दुष्मन्तपुत्रः अर्जुनः कार्त्तवीर्य्यः वैन्यः पृथुस्तद्वत्, श्रुतिधृतोऽपि प्रवसतेव जनेन श्रवणविषयीकृतोऽपि सन्, प्रवसते प्रवासं कुर्वते विदेशगमनाय यात्रां कुर्वते जनायेत्यर्थः, अभीष्टं ददातीति अभीष्टदो भवसीति शेषः। किन्तु स त्वं यदि, स्वस्य आत्मन एव गमनस्य अस्माकं दूतरूपेण प्रस्थानस्य अफलतां निष्फलताम्, गच्छसि प्राप्नोषि ; तत्तदा, निखिलं खलु सर्वमेव, मङ्गलं शुभसूचकं भरतादिस्मरणात्मकं यात्राकालीनं मङ्गलाचरणम्, अफलं

(१) म्लान दानज निजोरु यशःश्रीः।

इष्टं नः प्रति ते प्रतिश्रुतिरभूद् याद्या सुराह्लादिनी (१)
धर्म्मार्थ्या, सृज तां श्रुतिप्रतिभटीकृत्यान्विताख्यापदाम् ।
त्वत् कीर्त्तिः पुनती पुनस्त्रिभुवनं शुभ्राश्रयादेशनात्
द्रव्याणां क्षिति-पीत-लोहित-हरित्सामान्यं लुम्पतु ॥१२५॥

---

निष्फलम्, भवेत्; यात्राप्रसङ्गेनैव गमनं यदि तस्य निष्फलम्, तदा तस्य अरणमन्यस्य किमुतेति कैमुतिक-न्यायादिति भावः । अतोऽस्माकं दूतरूपेण गच्छ, आत्मनो नलत्वादेव कार्य्यं साधयिष्यसीत्यभिप्रायः ।

अत्र उत्तरूपेणार्थान्तरापतनादर्थापत्तिरलङ्कारश्चतुर्थपादगतेन छेकानुप्रासेन संसृज्यते । तथा यदीत्यनेन तदित्यस्य सम्बन्धासम्भवात् अभवन्मतसम्बन्धतादोषः; "विफलमेव तदा निखिलं शुभम्" इति पाठेनास्य समाधेयः । माधुर्य्यं गुणः, वैदर्भी च रीतिः ।

"यात्राकाले भरतादिस्मरणस्य मङ्गलजनकत्वमुक्तं शाकुने । यथा—

"वैण्यं पृथुं हैहयमर्ज्जुनञ्च शाकुन्तलेयं भरतं नलञ्च ।
एतान् नृपान् यः स्मरति प्रयाणे तस्यार्थसिद्धिः पुनरागमश्च ॥

द्रुतविलम्बितं वृत्तम् ॥१२४॥

**বাঙ্গালা**—নল! মানুষ যদি যাত্রার সময় ভরত, কার্ত্তবীর্য্যার্জ্জুন এবং পৃথুরাজার ন্যায় তোমাকে স্মরণও করে, তাহা হইলেও তুমি তাহার অভীষ্ট পূরণ করিয়া থাক; এ অবস্থায় তুমি নিজেই যদি নিজের গমনের নিষ্ফলতা আশঙ্কা কর; তাহা হইলে যাত্রাকালীন সকল মঙ্গলাচরণই নিষ্ফল হইবে ।১২৪॥

**अन्वयः**—(हे नल!) नः इष्टं प्रति सुराह्लादिनी धर्म्मार्थ्या आद्या या ते प्रतिश्रुतिः अभूत्, तां श्रुतिप्रतिभटीकृत्य अन्विताख्यापदां सृज । पुनः त्वत्कीर्त्तिः त्रिभुवनं पुनती (सती) शुभ्राश्रयादेशनात् द्रव्याणां क्षिति-पीत-लोहित-हरित्सामान्यं लुम्पतु ॥१२५॥

इष्टमिति । हे नल ! नः अस्माकम्, इष्टिम् इच्छां यज्ञञ्च, प्रति लक्ष्यीकृत्य, सुरान् अस्मान् इन्द्राग्नियम-वरुणान् सामान्यदेवांश्च आह्लादयति दमयन्तीलाभाशाजननेन हविर्दानोपदेशेन च आनन्दयतीति सुराह्लादिनी, अत-एव धर्म्मार्थ्या परोपकारजननेन यागोपदेशेन च धर्म्मप्रयोजना, आद्या इत आदौ भवा कल्पादौ भवा च, या ते तव, प्रतिश्रुतिः प्रतिश्रवः "जीवितावधि किमप्यधिकं वा" इत्यादिरूपः अङ्गीकार इति यावत्, अभूत्, तां प्रतिश्रुतिम्, श्रुतेर्वेदस्य प्रतिभटीकृत्य प्रतिपक्षीकृत्य सत्यतया सदृशीकृत्येत्यर्थः, अन्वितं श्रुतेः प्रतिनिधिरिति प्रतिश्रुतिः इत्यं यौगार्थयुक्ताम् आख्यापदं प्रतिश्रुतिरिति संज्ञापदं यस्यास्तां तथोक्ताम्, सृज कुरु । अङ्गीकृतं सर्वथा पालयेति भावः । ननु तेन मम किं फलमित्याह । पुनरप्रयमे । त्वत्कीर्त्तिः अङ्गीकृतपालनजनिता तव सुख्यातिः, त्रिभुवनं त्रैलोक्यम्, पुनती धर्म्मसंसृष्टतया पवित्रं कुर्वती सती, शुभ्राश्रयस्य अद्वितीयशुभ्रगुणस्य केवलशुक्लगुणस्ये-त्यर्थः आदेशनात् आत्मनः शुभ्रतया सर्वत्र सम्पादनात्, द्रव्याणां सम्बन्धपरत्वात् क्षिति जल-तेजसाम्, क्षितिः कृष्णः पीतो हरिद्राभः लोहितो रक्तः हरित् पालाशश्च तेषां सामान्यं सम्बध्यमानं सम्बन्धं समवायसम्बन्धमित्यर्थः, लुम्पतु उच्छिनत्तु, सर्वत्रैव अद्वितीय शुभ्रगुणसमावेशेन कृष्णो घटः, पीतं जलं लोहितो वह्निः हरित्पत्रम् इत्या-दिव्यवहारं विनाशयत्वित्यर्थः । व्याख्यान्तराणि असामञ्जस्यादुपेक्षितानि ।

अत्र पूर्वार्द्धे आर्थी पूर्णोपमा, परार्द्धे तादृशान्वयस्योपासम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिः, प्रथमतृतीय पादयोश्छेकानुप्रासश्चेत्येतेषां मिथोनिरपेक्षतया संसृष्टिः । बन्धार्थस्य प्रगाढत्वादोजो गुणः, गौडी च रीतिः ।

---

(१) इष्टं नः प्रति ते प्रतिश्रुतिरभूद् याद्य सुराह्लादिनी ।

यं प्रासूत सहस्रपादुदभवत् पादेन खञ्जः कथं
स च्छायातनयः, सुतः किल पितुः सादृश्यमन्विष्यति (१)।
एतस्योत्तरमद्य नः समजनि त्वत्तेजसां लङ्घने
साहस्रैरपि पङ्गुरङ्घ्रिभिरभिव्यक्तीभवन् भानुमान् ॥१२६॥

---

"श्वेती धवलमेचकौ" इत्यमरः। हरितमिति वर्णविशेषे क्ती प्रयोगः। शार्दूलविक्रीडितं छन्दः ॥१२५॥

বাঙ্গালা—নল ! আমাদের আকাঙ্ক্ষাকে লক্ষ্য করিয়া, আমাদেরই আহ্লাদজনক এবং ধর্ম্মসঙ্গত প্রথম যে তোমার অঙ্গীকার হইয়াছিল ; সেই অঙ্গীকারবাক্যটীকে (সত্যের দিক্ দিয়া) বেদের তুল্য করিয়া, যোগার্থ সম্পন্ন কর। তাহাতে তোমার কীর্ত্তি, ত্রিভুবনকে, পবিত্র করতঃ, সর্বত্রই একমাত্র শুভ্রবর্ণ সন্নিবেশিত করিয়া, দ্রব্যের উপরে যে কৃষ্ণ, পীত, রক্ত এবং হরিৎ বর্ণের সম্বন্ধ আছে, তাহার লোপ করিয়া ফেলুক ।১২৫॥

अन्वयः—सहस्रपात् यं प्रासूत, सः छायातनयः कथं पादेन खञ्जः उदभवत् ; सुतः पितुः सादृश्यम् अन्विष्यति किल। एतस्य अद्य साहस्रैः अङ्घ्रिभिः अपि त्वत्तेजसां लङ्घने पङ्गुः अभिव्यक्तीभवन् भानुमान् नः उत्तरं समजनि ॥१२६॥

दौत्ये प्रवर्त्तयितुमद्भुतं स्तौति यमिति। सहस्रं पादाः किरणा एव पादाश्चरणा यस्य स सहस्रपात् सूर्य्यः, यं शनिम्, प्रासूत उत्पादितवान् ; स च्छायायास्तदाख्यायाः सूर्य्यपत्न्यास्तनयः पुत्रः शनिः, "छायाया गर्भसम्भूतम्" इति व्यासवचनात् ; कथं केन हेतुना, पादेन चरणेन, खञ्जः पङ्गुः सन्, उदभवत् उत्पन्नः। ननु पितापुत्रयोर्वैसादृश्ये का नामानुपपत्तिर्यदेवं पृच्छसीत्याह—सुतः पुत्रः, पितुः सादृश्यम् आनुरूप्यम्, अन्विष्यति प्राप्नोति। किलेति शास्त्रवार्त्तायां लोकवार्त्तायाञ्च। तत्र शास्त्रं तावत् "आत्मच्छायासमं सुतम्" इति श्रुतिः। लोकवार्त्ता च "कारणगुणा हि कार्य्यगुणमारभन्ते" इति। अतः पिता सूर्य्यः सहस्रपात्, पुत्रः शनिस्तु पादखञ्ज एवेति शास्त्रलोकविरुद्धत्वान्महत्येवानुपपत्तिरिति पृच्छामीति भावः। एतस्य प्रश्नस्य, अद्य, साहस्रैः सहस्रसंख्यकैः, अङ्घ्रिभिः किरणात्मकचरणैरपि, तव तेजसां प्रतापानाम्, लङ्घने अतिक्रमे विषये, पङ्गुः अशक्तत्वात् खञ्जः, अभिव्यक्तीभवन् लोकेषु प्रकाशीभवन्, भानुमान् सूर्य्यः, नः अस्माकं मनसि, उत्तरम् उत्तरसाधकः, समजनि सञ्जातः। तथा च सूर्य्यो यदा त्वत्तेजसां लङ्घने पङ्गुर्जातस्तदैवासौ शनिं छायागर्भे उत्पादितवान् ; अतएव हि शनिः पङ्गुः सन्नेवोत्पन्नः। तेन च उक्तशास्त्रलोकवार्त्तानुसरणान्न काप्यनुपपत्तिरित्याशयः।

अत्र किरणचरणयोर्भेदेऽपि पादशब्देनैवाभेदाध्यवसायादतिशयोक्तिः, सहस्रचरणत्वरूपात् कारणगुणात् खञ्जत्वरूपविरुद्धकार्य्यगुणोत्पत्तेर्विषमालङ्कारः, कथमिति प्रश्नार्थं प्रति सुतः किलेत्यादिवाक्यार्थस्य हेतुत्वात् काव्यलिङ्गम्, भानुमतः पङ्गुत्वासम्बन्धेऽपि तत्सम्बन्धाभिधानादपरा अतिशयोक्तिः, प्रथमे पादे छेकानुप्रासश्चतुर्थे च वृत्त्यनुप्रास इत्येतेषां संसृष्टिः। द्वितीयातिशयोक्त्या च सूर्य्यतेजोऽपेक्षया नलतेजस आधिक्यसूचनात् व्यतिरेको व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः। तथा अन्विष्यतीत्यस्य अन्वेषणार्थवाचकतया प्राप्त्यर्थस्यावाचकत्वादवाचकत्वदोषः ; स च आपद्यत इति पाठेन समाधेयः। प्रसादो गुणः, वैदर्भी च रीतिः।

"पादा रश्म्यङ्घ्रितुर्य्यांशाः" इत्यमरः। सहस्रपादिति "बहुव्रीहावकर्मकादि" इत्यादिना पादस्य पाद्भावः। पादेनेति "कुत्सितेऽङ्गे" इति तृतीया। शार्दूलविक्रीडितं छन्दः ॥१२६॥

বাঙ্গালা—সহস্রচরণ সূর্য্য যাঁহাকে উৎপাদন করিয়াছিলেন, ছায়ার গর্ভজাত সেই শনি কেন খঞ্জচরণ হইয়া উৎপন্ন হইলেন ; কেন না, পুত্র পিতার সাদৃশ্য লাভ করিয়া থাকে।

---

(१)···सादृश्यमन्विच्छति।

इत्याकर्ण्य क्षितीशस्त्रिदशपरिषदस्ता गिरश्चाटुगर्भाः
वैदर्भीकामुकोऽपि प्रसभविनिहितं दौत्यभारं बभार।
अङ्गीकारं गतेऽस्मिन्नमरपरिवृढः संभृतानन्दमूचे
भूयादन्तर्द्धिसिद्धेरनुविहितभवच्चिन्तता यत्र तत्र ॥१३७॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।
तस्य श्रीविजयप्रशस्तिरचनातातस्य नव्ये महा-
काव्ये चारुणि नैषधीयचरिते सर्गोऽगमत् पञ्चमः ॥१३८॥

---

এই প্রশ্নের উত্তর আজ আমাদের মনে উৎপন্ন হইয়াছে; কারণ, সূর্য্য সহস্র চরণদ্বারাও তোমার তেজ লঙ্ঘনবিষয়ে পঙ্গুরূপে ব্যক্ত হইয়া ঐ উত্তরের সাধক হইয়াছেন ॥১৩৬॥

**অন্বয়ঃ**—क्षितीशः वैदर्भीकामुकः अपि (सन्) त्रिदशपरिषदः इति चाटुगर्भाः ताः गिरः आकर्ण्य प्रसभविनिहितं दौत्यभारं बभार। अस्मिन् अङ्गीकारं गते (सति) अमरपरिवृढः संभृतानन्दम् ऊचे, यत्र तत्र अन्तर्द्धिसिद्धेः अनुविहितभवच्चिन्तता भूयात् ॥१३७॥

इतीति। क्षितीशो राजा नलः, वैदर्भीकामुकोऽपि दमयन्तीमभिलाषुकोऽपि सन्, त्रिदशपरिषदो देवसभाया इन्द्रादिदेवगणस्येति यावत्, इति पूर्वोक्तरूपाः, चाटुगर्भाः प्रियोक्तिमध्याः, ता गिरो वाक्यानि, आकर्ण्य श्रुत्वा, प्रसभविनिहितम् इन्द्रादिभिरेव बलादारोपितम्, दौत्यभारं बभार धृतवान् अङ्गीकृतवानित्यर्थः। अस्मिंश्च नले, अङ्गीकारं गते 'भवतां दौत्यं करिष्यामि' इत्यङ्गीकारं प्राप्ते सति, अमरपरिवृढो देवाधिपतिरिन्द्रः, संभृतो धृतः आनन्दो यस्मिन् कर्म्मणि तद् यथा तथा, ऊचे उक्तवान्। किमूचे इत्याह— यत्र तत्र स्थाने समये वा, अन्तर्द्धिसिद्धेः अन्तर्द्धाननिष्पत्तेः, अनुविहितम् अनुसृतं भवतस्तव चित्तं चित्तवृत्तिरिच्छा यया सा तथोक्ता तस्या भावस्तत्ता भूयात् भवेत्, भवदिच्छामात्रेणैव अन्तर्द्धानसिद्धिर्भविष्यतीत्यर्थः। अत "यामिकाननुपलक्ष्य च गाहक" इत्यादिग्रन्थो न कर्त्तव्य इति भावः। एतेन भाविसर्गस्य सूचनं वेदितव्यम्।

अत्र दौत्यभारं बभार इत्यर्थं प्रति प्रसभविनिहितामिति पदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, तदेव च च्छेकानुप्रास इत्यनयोरेकाश्रयानुप्रवेशरूपः सङ्करः। प्रसादो गुणः, वैदर्भी च रीतिः। स्रग्धरा वृत्तम् ॥१३७॥

বাঙ্গালা—নল রাজা দময়ন্তীকে লাভ করিবার ইচ্ছু হইয়াও, দেবগণের এই প্রকার সেই সকল চাটুগর্ভ বাক্য শুনিয়া, বলপূর্ব্বক আরোপিত দৌত্যভার গ্রহণ করিলেন। তখন তিনি দৌত্য করিবার অঙ্গীকার করিলে, দেবরাজ আনন্দের সহিত বলিলেন যে, "নল! যখনই তোমার ইচ্ছা হইবে, তখনই যেখানে সেখানে তোমার অন্তর্দ্ধান সিদ্ধি হইবে" ॥১৩৭॥

श्रीहर्षमिति। श्रीविजयप्रशस्तिसदाख्यस्य ग्रन्थस्य रचनया हेतुना तातस्य जनकस्य। विजयप्रशस्तिग्रन्थोऽपि श्रीहर्षेण रचित इत्यर्थः। विजयप्रशस्तिग्रन्थस्य साध्यतया तदादौ श्रीशब्दप्रयोगः, "देवं गुरुं गुरुस्थानं क्षेत्रं क्षेत्राधिपं तथा। साध्यं सिद्धाधिकारांश्च श्रीपूर्वं समुदीरयेत्" इति स्मृतेः। पञ्चमः सर्गः अगमत् समाप्तमिति शेषः।

शर-वेद-वसु-चन्द्र-सम्मिते वत्सरे शकनृपस्य मार्गके।
कृष्णपक्षगतपञ्चमीतिथौ पञ्चमस्य विवृतिः समापिता ॥

इति श्रीहरिदास सिद्धान्तवागीशविरचितायां नैषधचरितटीकायां
जयन्तीसमाख्यायां पञ्चमसर्गविवरणं समाप्तम् ॥०॥

## षष्ठः सर्गः ।

-:*:—

दौत्याय (१) दैत्यारिपतेः प्रवृत्तः द्विषां निषेद्धा निषधप्रधानम् ।
स भीमभूमीपतिराजधानीं लक्षीचकाराथ रथस्यदस्य ॥१॥
भैम्या समं नाजगणद्वियोगं स दूतधर्म्मे स्थिरधीरधीशः ।
पयोधिपाने मुनिरन्तरायं दुर्वारमप्यौर्वमिवौर्वशेयः ॥२॥

---

**अन्वयः**—अथ दैत्यारिपतेः दौत्याय प्रवृत्तः द्विषां निषेद्धा निषधप्रधानं सः भीम भूमीपति-राजधानीं रथस्यदस्य लक्षीचकार ॥१॥

हरीऽसि हर दुःखं मे शिवोऽसि देहि मे शिवम् ।
आशुतोषोऽसि तेनाशु तोषो भवतु ते मयि ॥

अथ "दौत्यभारं बभार" इत्यनेन पूर्वसर्गान्तसूचितं दौत्यं वर्णयिष्यन् षष्ठसर्गमारभते दौत्यायेति । अथ दौत्यस्वीकारानन्तरम्, दैत्यारिपतेर्देवराजस्य इन्द्रस्य, दौत्याय दूतकर्म्मकरणाय, प्रवृत्त उपक्रममाणः, द्विषां शत्रूणाम्, निषेद्धा स्वबाहुबलेनैव निवारयिता, अतएव भीमराजधानीगमने न शङ्कितवानित्याशयः । निषधप्रधानं निषधदेशवासिश्रेष्ठः, स नलः, भीमो नाम भूमीपतिः राजा तस्य राजधानीं कुण्डिननगरीम्, रथस्यदस्य निजरथवेगस्य, लक्षीचकार उद्देश्यां कृतवान्, तामेव नगरीं प्रति रथं चालयामासेत्यर्थः । इन्द्राग्नियमवरुणानां चतुर्णामेव दौत्ये प्रवृत्तावपि केवलेन्द्रोपादानं तद्दौत्यस्यैव प्राधान्यज्ञापनार्थम् । अथवा दैत्याविभिः प्रकृतत्वाद्दैत्यभक्षणे युक्तः पतिस्तेषामेव दैत्यारीणामधिप इन्द्रस्तस्य । शाकपार्थिवादित्वान्मध्यपदलोपः ।

अत्र काव्यलिङ्गोऽलङ्कारः, प्रसादो गुणः, वैदर्भी च रीतिः ।

दूतस्य कर्म्म दौत्यं ब्राह्मणादित्वात् कर्म्मार्थे ष्यञ् । प्रधानशब्दस्य पक्षे अजहल्लिङ्गत्वाद्विशेषणत्वेऽपि नपुंसकत्वम् । तथा च श्रीपतिः "प्रधानस्यापि द्वयी गतिः" । भूमीति "कृदिकारादक्तिनः" इति वैभाषिक ईप्रत्ययः । स्यदस्येति "स्यदो जवे" इति निपातः ।

अस्मिन् सर्गे इन्द्रवज्रा उपेन्द्रवज्रा तयोरुपजातिश्च वृत्तमुक्तं यम् ॥१॥

**বাঙ্গালা**—তদনন্তর, ইন্দ্রপ্রভৃতির দৌত্যকার্য্য করিতে প্রবৃত্ত, শত্রুনিবারক এবং নিষধদেশবাসীদিগের মধ্যে শ্রেষ্ঠ সেই নল, কুণ্ডিননগরীকে রথবেগের লক্ষ্য করিলেন ॥১॥

**अन्वयः**—और्वशेयः मुनिः पयोधिपाने दुर्वारम् और्वम् अपि अन्तरायम् इव, स्थिरधीः सः अधीशः दूतधर्म्मे दुर्वारं भैम्या समं वियोगम् अपि अन्तरायं न अजगणत् ॥२॥

भैम्येति । और्वशेयः उर्वशीपुत्रः, मुनिरगस्त्यः, पयोधिपाने समुद्रपानविषये, दुर्वारं समुद्रस्य स्वाभाविकत्वाद्वारयितुमशक्यम्, और्वं वाडवानलात्मकमपि, अन्तरायं विघ्नमिव, स्थिरधीः अविचलितबुद्धिः, सः अधीशो राजा नलः, दूतधर्म्मे दौत्यकार्य्यविषये, दुर्वारम् इन्द्राद्यन्यतमप्राप्तेरिव सम्भाव्यमानत्वान्निवारयितुमशक्यम्, भैम्या सम-

---

(१) दूत्याय ।

नलप्रणालीमिलदम्बुजाक्षी-संवादपीयूषपिपासवस्ते।
तदध्ववीक्षार्थमिवानिमेषा देशस्य तस्याभरणीबभूवुः ॥३॥
तां कुण्डिनाख्यापदमात्रगुप्ताम् इन्द्रस्य भूमेरमरावतीं सः।
मनोरथः सिद्धिमिव क्षणेन रथस्तदीयः पुरमाससाद ॥४॥

---

यस्या, सम सह, वियोगं चिरविच्छेददुःखमपि, अन्तरायं विघ्नम्, न अजगणत् न चिन्तितवान्, स्थिरधीत्वादेवेति भावः।

अत्र श्रौतोपमा, गणनाभावं प्रति स्थिरधीपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गञ्च, अनयोरङ्गाङ्गिभावेन सङ्करः, सोऽपि च च्छेकानुप्रासेन संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः।

"और्वस्तु वाड़वो वड़वानलः" इत्यमरः। दीक्षितयोर्मिथावरुणयोर्वस्याँ जातोऽगस्त्य इति पुराणवार्त्ता।

अजगणदिति "गण सङ्ख्याने" इति धातोः लुङि चङ्॥२॥

**बाङ्गाला**—(पूर्वकाले) अगस्त्यमुनि येमन समुद्रपानेर बेलाय दुर्निवार बड़वानल-केओ विघ्न बलिया मने करेन नाइ; तेमन अविचलितबुद्धि नलराजा, दुर्निवार दमयन्तीर सहित चिरविच्छेददुःखकेओ विघ्न बलिया मने करियाछिलेन ना॥२॥

**अन्वयः**—नल-प्रणाली-मिलदम्बुजाक्षी-संवाद-पीयूष-पिपासवः ते तदध्व-वीक्षार्थम् इव अनिमेषाः (सन्तः) तस्य देशस्य आभरणीबभूवुः ॥३॥

नलेति। नल एव प्रणाली निःसरणनलिका तया द्वारा मिलत् आगच्छत् यत् अम्बुजाक्ष्याः पद्मनयनायाः दमयन्त्याः संवादो वार्त्तैव पीयूषम् अमृतं तत् पिपासवः पातुमिच्छवः, ते इन्द्रादियमवरुणाः, तस्य नलस्य यः अध्वा प्रत्यागमनपथस्तस्य वीक्षार्थं दर्शनार्थमिव, अनिमेषाः सन्तः, तस्य देशस्य यस्मिन् स्थाने नलेन सह तेषा-मिन्द्रादीनामालापोऽभूत् तस्य स्थानस्य, आभरणीबभूवुः शोभाजनकत्वादलङ्कारस्वरूपा भूताः; प्रत्यागताप्रश्नात् दमयन्तीसंवादश्रवणार्थं तत्रैव स्थिता इत्यर्थः।

अत्र नले प्रणालीत्वारोपः संवादे पीयूषत्वारोपस्य निमित्तमिति परम्परितं रूपकम्, देवत्वात् स्वाभाविका-निमिषत्वमपि तदध्ववीक्षार्थत्वेनोत्प्रेक्षितमिति फलोत्प्रेक्षा, वृत्त्यनुप्रासश्च, इत्येतेषां मिथो निरपेक्षतया संसृष्टिः। मधुररचनात्वान्माधुर्यं गुणः, पाञ्चाली च रीतिः॥३॥

**बाङ्गाला**—दमयन्तीर संवादरूप अमृत आसिया नलरूप नल दिया उपस्थित हइबे, ताहा पान करिते इच्छु इन्द्रप्रभृति देवगण, नलेर प्रत्यावर्त्तनेर पथ देखिबार जन्यइ येन निर्निमेष हइया, सेइ स्थानेरइ अलङ्कारस्वरूप हइया रहिलेन॥३॥

**अन्वयः**—तदीयः सः रथः मनोरथः सिद्धिम् इव क्षणेन कुण्डिनाख्यापदमात्रगुप्तां तां भूमेः इन्द्रस्य अम-रावतीं पुरम् आससाद ॥४॥

तामिति। तदीयो नलसम्बन्धी, स रथः, मनोरथो योगिनामभिलाषः, सिद्धिं कार्य्यनिष्पत्तिमिव, क्षणेन अत्यन्तद्रुतगामित्वादत्यल्पकालेन, कुण्डिनाख्यापदमात्रेण केवलेन कुण्डिनेतिसंज्ञापदेन गुप्तां पृथग्भावेन रक्षिताम् ऐश्वर्य्यसौन्दर्य्यादिभिस्तु सर्वथैवाभिन्नामित्याशयः, तां पूर्ववर्णिताम्, भूमेरिन्द्रस्य पृथिवीन्द्रस्य भीमस्य, अमरावतीं तद्रूपाम्, पुरं नगरीम्, आससाद प्राप। अमरावती स्वर्गेन्द्रस्य नगरी, इयमपि भूमीन्द्रस्य नगरी, अमरावत्यपि यादृगैश्वर्य्यसौन्दर्य्यादिमती इयमपि तथैवेति नाममात्रेणैव कुण्डिननगर्य्या भेद इति भावः।

अत्र अमरावतीकुण्डिनयोर्भेदेऽपि अभेदाध्यवसायादतिशयोक्तिः, रूपकमित्यन्ये, श्रौतोपमा चानयोर्मिथो निर-

**भैमीपदस्पर्शकृतार्थरथ्या सेयं पुरीत्युत्कलिकाकुलस्ताम् ।**
**नृपो निपीय क्षणमीक्षणाभ्यां भृशं निशश्वास सुरैः हताशः ॥५॥**
**स्विद्यत्प्रमोदाम्बुलवेन वामं रोमाञ्चभृत्पक्ष्मभिरस्य चक्षुः ।**
**अन्यत् पुनः कम्प्रमपि स्फुरत्त्वात् तस्याः पुरः प्राप नवोपभोगम् ॥६॥**

---

पेक्षतया संसृष्टिः । साधारणमनोरथस्य क्षणेन सिद्धिलाभासम्भावादव मनोरथपदं योगिमनोरथपरम् । अत एव न न्यूनपदतादोषः । प्रसादो गुणः, वैदर्भी च रीतिः ॥४॥

**বাঙ্গালা**—যোগিগণের অভিলাষ যেমন ক্ষণকালের মধ্যেই সিদ্ধিলাভ করে, সেই রূপ নলের সেই রথ ক্ষণকালের মধ্যেই সেই কুণ্ডিননগরী লাভ করিল; সে কুণ্ডিননগরী বাস্তবিকপক্ষে ভূমীন্দ্র ভীমরাজের অমরাবতীই ছিল; তবে "কুণ্ডিন" এই নামটী দ্বারাই কেবল তাহার ভেদ ছিল ॥৪॥

**अन्वयः**—भैमी-पद-स्पर्श-कृतार्थ-रथ्या सा इयं पुरी इति उत्कलिकाकुलः सुरैः हताशः नृपः ईक्षणाभ्यां क्षणं तां निपीय भृशं निशश्वास ॥५॥

भैमीति । भैम्या दमयन्त्याः पदस्पर्शेन कृतार्था निष्पादितजन्मलाभप्रयोजना रथ्या राजपथो यस्याः सा तथोक्ता, सा इयं पुरी, इति विज्ञाय उत्कलिकया उत्कण्ठया आकुलो व्यग्रः, सुरैः प्रकृतत्वादिन्द्रादिभिर्देवैः, हता दौत्यारोपणेन नाशिता आशा दमयन्तीप्राप्तिप्रत्याशा यस्य सः, नृपो नलः, ईक्षणाभ्यां नयनाभ्याम्, क्षणम्, तां पुरीम्, निपीय भैम्याश्रयत्वादेव सादरं दृष्ट्वा, भृशमत्यन्तम्, निशश्वास निश्वसितवान्; सुरैः हताशत्वादेव दारुणदुःखोदयादिति भावः ।

अत्र निश्वासं प्रति हताशपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, औत्सुक्यविषादाख्यभावद्वयस्य क्रमेणोदयात् भावोदयनामालङ्कारश्च, अनयोरङ्गाङ्गिभावेन सङ्करः; सोऽपि पुनश्छेकानुप्रासेन संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ॥५॥

**বাঙ্গালা**—'দময়ন্তীর চরণস্পর্শে যে নগরীর রাস্তাগুলি কৃতার্থ হইয়াছিল, এই সেই কুণ্ডিননগরী' ইহা জানিয়া নল উৎকণ্ঠায় আকুল হইলেন; আবার দেবতারা দৌত্যভার অর্পণ করিয়া তাঁহার দময়ন্তীলাভের আশা ভঙ্গ করিয়া দিয়াছিলেন বলিয়া তিনি অত্যন্ত দুঃখিতও হইলেন; তাই তিনি নয়নযুগল দ্বারা সেই নগরীর দিকে সাদরে দৃষ্টিনিক্ষেপ করিয়া অত্যন্ত নিশ্বাস ত্যাগ করিতে লাগিলেন ॥৫॥

**अन्वयः**—प्रमोदाम्बुलवेन स्विद्यत् पक्ष्मभिः रोमाञ्चभृत् अस्य वामं चक्षुः, पुनः स्फुरत्त्वात् कम्प्रम् अन्यत् चक्षुः अपि तस्याः पुरः नवोपभोगं प्राप ॥६॥

स्विद्यदिति । प्रमोदेन दमयन्त्याश्रयनगरीदर्शनजनितानन्देन यः अम्बुलव उद्गतः अश्रुकणस्तेन, स्विद्यत् स्वेदं भजत् तादृशाश्रुकणरूपं स्वेदाख्यं सात्त्विकं भावं बिभ्रदित्यर्थः, तथा पक्ष्मभिरुद्गतैर्नेत्ररोमभिः रोमाञ्चं बिभर्तीति रोमाञ्चभृत् उद्गतपक्ष्मरूपरोमाञ्चधारीत्यर्थः, अस्य नलस्य वामं चक्षुः, पुनः स्फुरत्त्वात् स्पन्दमानत्वात्, कम्प्रं कम्पनशीलं स्पन्दनरूपकम्पाख्यसात्त्विकभावयुक्तमित्यर्थः, अन्यत् दक्षिणं चक्षुरपि, तस्याः कुण्डिनाख्यायाः, पुरो नगर्याः कस्याश्चित् सुन्दर्याश्च, नव उपभोगो दर्शनरूपो यः सम्भोगस्तम्, प्राप लेभे; कुण्डिननगरीदर्शनेन तस्य वामं चक्षुः आनन्दाश्रु समुद्गतम्, दक्षिणचक्षुश्च स्पन्दितमासीदिति निष्कर्षः । तत्र स्पन्दनं स्त्रीलाभसूचकमित्याशयः ।

रथादसौ सारथिना सनाथात् राजावतीर्य्याथ पुरं विवेश ।
निर्गत्य बिम्बादिव भानवीयात् सौधाकरं मण्डलमंशुसङ्घः ॥७॥
चित्रं तदा कुण्डिनवेशिनः सा नलस्य मूर्त्तिर्ववृते न दृश्या ।
बभूव तच्चित्रतरं तथापि विश्वैकदृश्यैव यदस्य मूर्त्तिः ॥८॥

---

अत्र अश्रुलवे स्वेदत्वारोपात् पक्ष्मसु रोमाञ्चत्वारोपाच्च निरङ्गं केवलरूपकम्, कार्य्यद्वारा अन्तःपुरीनायकना-यिकाव्यवहारसमारोपात् समासोक्तिस्तयोरङ्गाङ्गिभावेन सङ्करः । प्रसादो गुणः, वैदर्भी च रीतिः ।

अश्रुलवेन पक्ष्मभिरित्युभयत्रापि प्रकृत्यादित्वादभेदे तृतीया । कम्प्रमिति "दीपिकम्प्रादिभ्यश्च—" इत्यादिना रप्रत्ययः ॥६॥

वाङ्गाला— আনন্দাশ্রুরূপ-ঘর্ম্মযুক্ত এবং লোমরূপ রোমাঞ্চধারী নলের বাম চক্ষু, আর স্পন্দনানিবন্ধন কম্পশালী তাঁহার দক্ষিণ চক্ষু সেই কুণ্ডিননগরীর দর্শনরূপ নূতনসম্ভোগসুখ লাভ করিল ॥৬॥

अन्वयः— अथ अंशुसङ्घः भानवीयात् बिम्बात् निर्गत्य सौधाकरं मण्डलम् इव, असौ राजा सारथिना सनाथात् रथात् अवतीर्य्य पुरं विवेश ॥७॥

रथादिति । अथ पुरी दर्शनानन्तरम्, अंशुसङ्घः किरणसमूहः, भानोः सूर्य्यस्यायमिति भानवीयस्तस्मात्, बिम्बान्मण्डलात्, निर्गत्य, सुधाकरस्य चन्द्रस्येदमिति सौधाकरं मण्डलमिव, असौ राजा नलः, सारथिना सना-थात् युक्तात् सारथिं रथ एव संस्थाप्य स्वयं, रथादवतीर्य्य, पुरं कुण्डिननगरम्, विवेश प्रविष्टवान् ।

अत्र श्रौतपमालङ्कारस्य्वानुप्रासेन संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ।

सूर्य्यकिरणस्य चन्द्रमण्डलप्रवेशे प्रमाणं यथा सूर्य्यसिद्धान्तः—

"तरणिकिरणसङ्गादेष पीयूषपिण्डो दिनकरदिशि चन्द्रश्चन्द्रिकाभिश्चकास्ति ।
तदितरदिशि बालाकुन्तलश्यामलश्रीर्घट इव निजमूर्त्तिच्छाययैवातपस्थः" ॥७॥

वाङ्गाला—তদনন্তর, সূর্য্যের কিরণসমূহ যেমন সূর্য্যমণ্ডল হইতে নির্গত হইয়া চন্দ্র-মণ্ডলে প্রবেশ করে; তেমন নলরাজা সারথিযুক্ত রথ হইতে অবতীর্ণ হইয়া কুণ্ডিননগরে প্রবেশ করিলেন ॥৭॥

अन्वयः—तदा कुण्डिनवेशिनः नलस्य सा मूर्त्तिः ( यत् ) दृश्या न ववृते ( तत् ) चित्रम्; तथापि अस्य मूर्त्तिः यत् विश्वैकदृश्या एव बभूव, तत् चित्रतरम् ॥८॥

ननु कुण्डिननगरप्रवेशकाले लोकैरसौ दृष्टो न वेत्यात्र चित्रमिति । तदा कुण्डिनवेशिनः कुण्डिननगरं प्रविशतः, नलस्य सा प्रसिद्धा, मूर्त्तिः शरीरम्, यत् दृश्या लोकानां नयनपात्री रमणीया च, न ववृते न जाता; तत् चित्रमाश्चर्य्यम्; तत्रोपपत्तः परमरमणीयस्य च शरीरस्य यददृश्यत्वं यच्चारमणीयत्वं तदाश्चर्य्यमेवेति भावः । अथ च "भूयादन्तर्हितिस्ते—" इत्यादीन्द्रवरालब्धस्यान्तर्धानादेव अन्तर्हिततया अदृश्यत्वं जातमित्यवधेयम्; तथापि अदृश्यत्वेऽपि, अस्य नलस्य सा मूर्त्तिः, यत् विश्वेषां सर्वेषामेव लोकानाम् एका मुख्या दृश्या नयनपात्री, बभूव, तत् चित्रतरं पूर्व्वाश्चर्य्यादप्यधिकं चित्रम् आश्चर्य्यम् । इति विरोधः । अथ च स्वयंवरोपयोगिविचित्रवेश-विन्यासेन सर्वेषामेव चक्षुषि परमरमणीयैवासीदिति तत् समाधानम् ।

अतएवात्र विरोधाभासोऽलङ्कारः । तथा मूर्त्तिशब्दस्य द्विःपाठात् कथितपदतादोषः, स च 'विश्वैकदृश्यैव यदस्य साऽऽसीत्' इति पाठेन समाधेयः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"दृश्यं दर्शनयोग्यं स्यात् रमणीयेऽपि चेष्यते" इति मलः ॥८॥

जनैर्विदग्धैर्भवनैश्च मुग्धैः पदे पदे विस्मयकल्पवल्लीम् ।
विगाहमाना पुरमस्य दृष्टिः स्म आददे राजकुलातिथित्वम् (१) ॥९॥
हेलां दधौ रक्षिजनेऽस्त्रसज्जे लीनश्चरामीति ह्रिया ललज्जे ।
द्रक्ष्यामि भैमीमिति सन्तुतोष दूतं (२) विचिन्त्य स्वमसौ शुशोच ॥१०॥

বাঙ্গালা—নল যখন কুণ্ডিননগরে প্রবেশ করেন, তখন তাঁহার সেই আকৃতি যে অদৃশ্য হইয়াছিল, তাহা আশ্চর্য্য বটে। কিন্তু তাহা হইলেও তাঁহার আকৃতি যে সকলেরই একমাত্র দৃশ্য হইয়াছিল, তাহা পূর্ব্বাপেক্ষাও অধিক আশ্চর্য্য ॥৮॥

**अन्वयः**—अस्य दृष्टिः विदग्धैः जनैः मुग्धैः भवनैश्च पदे पदे विस्मय-कल्पवल्लीं पुरं विगाहमाना (सती) अथ राजकुलातिथित्वम् आददे ॥९॥

जनैरिति । अस्य नलस्य दृष्टिः, विदग्धैः सर्वकार्य्येषु निपुणैर्जनैः, मुग्धैः सुन्दरैः, भवनैः प्रासादैश्च करणैः, पदे पदे स्थाने स्थाने, विस्मयस्य आश्चर्य्यस्य कल्पवल्लीं कल्पलतास्वरूपां नानाप्रकाराश्चर्य्यजनिकामित्यर्थः, पुरं कुण्डिननगरीम्, विगाहमाना संचरन्ती पश्यन्ती सतीति तात्पर्य्यम्, अथ अनन्तरम्, राज्ञो भीमस्य यत् कुलं भवनं तस्य अतिथित्वम् आतिथ्यं विषयकारित्वम्, आददे जग्राह राजभवनं ददर्शेत्यर्थः ।

अत्र विस्मयकल्पवल्लीमिति निरङ्गं केवलरूपकमलङ्कारश्छेकानुप्रासेन संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ।

"मुग्धः सुन्दरमूढयोः" इति विश्वः । "कुलं जनपदे गोत्रे सजातीयगणेऽपि च । भवने च तनौ क्लीवं कायट-कार्य्योर्विधौ कुली" इति मेदिनी ॥९॥

বাঙ্গালা—নলের দৃষ্টি কুণ্ডিননগরীর সর্বত্র বিচরণ করিতে লাগিল; তখন সে কুণ্ডিননগরী, সর্বকার্য্যনিপুণ লোক ও সুন্দর সুন্দর অট্টালিকা দ্বারা স্থানে স্থানে তাঁহার বিস্ময় জন্মাইতে থাকিল; তাহার পর তাঁহার দৃষ্টি রাজবাড়ীর উপরে যাইয়া পড়িল ॥৯॥

**अन्वयः**—असौ अस्त्रसज्जे रक्षिजने हेलां दधौ, लीनः (सन्) चरामि इति ह्रिया ललज्जे, भैमीं द्रक्ष्यामि इति सन्तुतोष, स्वं दूतं विचिन्त्य शुशोच ॥१०॥

हेलामिति । असौ नलः, अस्त्रैः कृपाणादिभिः सज्जा सन्नाहो यस्य तस्मिन् अस्त्रसज्जे, रक्षिजने द्वारपालादौ पुरीरक्षकलोके, हेलामवज्ञाम्, दधौ एते तुच्छा मे किं कर्त्तुमर्हन्तीति गर्वं धृतवानित्यर्थः । अत्र गर्वः । लीनो लुक्कायितः सन् चरामि महावीरो भूत्वापि भ्रमामि इति विभाव्य, ह्रिया मनसा, ललज्जे लज्जितवान् । अत्र लज्जा । भैमीं चिराकाङ्क्षितां दमयन्तीं द्रक्ष्यामि इति मत्वा सन्तुतोष । अत्र हर्षः । स्वमात्मानम्, दूतं विचिन्त्य, शुशोच शोकं कृतवान् दृष्टायामपि भैम्यां दूतस्य मे किं फलमिति विषादं बभारित्यर्थः । अत्र च विषादः ।

अतएवात्र गर्वलज्जाहर्षविषादानां चतुर्णामिव भावानां मिश्रणात् भावशबलतानामालङ्कारः प्रथमार्द्धगतान्त्यानुप्रासेन संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ॥१०॥

বাঙ্গালা—নল, অস্ত্রশস্ত্রে সজ্জিত রক্ষীদিগের প্রতি অবজ্ঞা ধারণ করিলেন; 'আমি লুক্কায়িত হইয়া বিচরণ করিতেছি' ইহা ভাবিয়া মনে মনে লজ্জিত হইলেন; 'আজ দময়ন্তীকে দেখিব' ইহা মনে করিয়া সন্তোষ লাভ করিলেন এবং আপনাকে দূত ভাবিয়া বিষণ্ণ হইলেন ॥১০॥

(१) तां गाहमानाऽस्य चिरं नलस्य दृष्टिर्ययौ राजकुलातिथित्वम् । (२) दूत्यम् ।

अथोपकार्याममरेन्द्रकार्यात् कक्षासु रक्षाधिकृतैरदृष्टः।
भैमीं दिदृक्षुर्बहु दिक्षु चक्षुः दिशन्नसौ तामविशद्विशङ्कः ॥११॥
अयं क इत्यन्यनिवारकाणां गिरा विभुर्द्वारि विभुज्य कण्ठम्।
दृशं ददौ विस्मयनिस्तरङ्गां स लङ्घितायामपि राजसिंहः ॥१२॥
अन्तःपुरान्तः स विलोक्य बालां काञ्चित् समालब्धुमसंवृतोरुम्।
निमीलिताक्षः परया भ्रमन्त्या संघट्टमासाद्य चमत्चकार ॥१३॥

---

**अन्वयः**—अथ कक्षासु रक्षाधिकृतैः अदृष्टः विशङ्कः असौ भैमीं दिदृक्षुः दिक्षु चक्षुः बहु दिशन् (सन्) अमरेन्द्रकार्यात् ताम् उपकार्याम् अविशत् ॥११॥

अथेति। अथ हेलाधारणानन्तरम्, कक्षासु प्रकोष्ठेषु, रक्षायाम् अधिकृतैर्नियुक्तैर्जनैः, अदृष्ट इन्द्र-वरादनवलोकितः, अतएव विशङ्को निरुद्वेगः, असौ नलः, भैमीं दमयन्तीम्, दिदृक्षुर्द्रष्टुमिच्छुः, दिक्षु चक्षुः दिशन्नर्पयन्, बहु अनेकवारम्, दिशन् प्रेरयन् सन्, अमरेन्द्राणां देवश्रेष्ठानामिन्द्रादिप्रियतमचतुर्णां कार्यात् कार्यं दौत्यमुद्दिश्य, तां प्रसिद्धाम्, उपकार्यां राजभवनम्, अविशत् प्रविष्टवान्।

अत्र विशङ्कत्वं प्रति अदृष्टपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, तृतीये चरणे वृत्त्यनुप्रासः, अन्यत्र तु छेकानुप्रास इति सर्वेषां संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः।

"उपकार्या राजगेहमुपकारोचितापि च" इति हेमचन्द्रः। "कक्षा प्रकोष्ठे हर्म्यादेः" इत्यमरः।

अमरेन्द्रकार्यादिति "यपोऽधिकरणकर्मणोरप्रयोगिणः" इति पञ्चमी ॥११॥

**বাঙ্গালা**—তাহার পরে, রক্ষীরা প্রকোষ্ঠের ভিতরে নলকে দেখিতে পাইল না; তাই তিনি নিঃশঙ্কচিত্ত হইয়া, দময়ন্তীকে দেখিবার ইচ্ছা করিয়া, সকল দিকে বার বার দৃষ্টি নিক্ষেপ করতঃ, ইন্দ্রপ্রভৃতির দৌত্যকার্য্যের জন্য, রাজবাটীতে প্রবেশ করিলেন ॥১১॥

**অন্বয়ঃ**—विभुः सः राजसिंहः अयं कः इति अन्यनिवारकाणां गिरा कण्ठं विभुज्य लङ्घितायाम् अपि द्वारि विस्मयनिस्तरङ्गां दृशं ददौ ॥१२॥

अयमिति। विभुर्धैर्यवान्, स राजसिंहो राजश्रेष्ठो नलः, 'अयं को जनः प्रविशति' इति अनेन प्रकारेण, अन्यनिवारकाणां नलेतरपुरुषनिषेधकानां द्वारपालानाम्, गिरा वाक्येन, कण्ठं ग्रीवाम्, विभुज्य पश्चा-द्दिशि वक्रीकृत्य, लङ्घितायाम् आत्मना अतिक्रान्तायामपि, द्वारि राजभवनद्वारदेशे, विस्मयेन 'अदृश्योऽप्यहं कथ-मभिहितः' इत्याश्चर्येण निस्तरङ्गां निश्चलाम्, दृशं दृष्टिम्, ददौ दत्तवान्। सिंहोऽपि ग्रीवां वक्रीकृत्य पश्चाद्दिशि दृष्टिं ददाति।

अत्र स्वभावोक्तिरलङ्कारः विभुर्विभुज्येति छेकानुप्रासेन संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः। सिंह इत्यनेन सिंहवत्त्वं व्यज्यत इति वस्तुना वस्तुध्वनिः।

विभुज्येति "भुज कौटिल्ये" इत्यस्य प्रयोगः ॥१२॥

**বাঙ্গালা**—ধৈর্য্যশালী রাজশ্রেষ্ঠ নল যে দ্বারদেশ অতিক্রম করিয়া দূরে চলিয়া গিয়া-ছিলেন, সেই দ্বারদেশেই 'এ কে প্রবেশ করে হে' এই বলিয়া দ্বারপালেরা যখন অন্য কোন লোককে বারণ করিতেছিল, তখন নল আপন কণ্ঠদেশ বক্র করিয়া সেই অতীত দ্বারদেশের দিকে বিস্ময়নিশ্চল দৃষ্টি নিক্ষেপ করিলেন ॥১২॥

अनादिसर्गस्रजि वानुभूता चित्रेषु वा भीमसुता नलेन।
जातेव यद्वा जितशम्बरस्य सा शाम्बरीशिल्पमलक्षि दिक्षु ॥१४॥

अन्वयः — सः अन्तःपुरान्ते समालब्धुम् असंवृतीरुं काञ्चित् बालां विलोक्य निमीलिताक्षः (सन्) भ्रमन्त्या परया संघट्टम् आसाद्य चमत् चकार ॥१३॥

अन्तःपुरेति। नलः, अन्तःपुरस्य अन्तमध्ये, समालब्धुं विलेपनं लेपनम्, असंवृती अनावृती अपसारितवस्त्री ऊरू यया तां तादृशीम्, काञ्चित् बालां स्त्रियम्, विलोक्य सहसा दृष्ट्वा, निमीलिते "नग्नां परस्त्रियं न वीक्षेत" इति निषेधवचनात् मुद्रिते अक्षिणी चक्षुषी येन स तादृशः सन्, भ्रमन्त्या इतस्ततो विचरन्त्या, परया अन्यया बालया, संघट्टं गात्रसंघर्षम्, आसाद्य प्राप्य निमीलिताक्षतया तस्याः प्राग्दर्शनाभावात् नलस्य च अदृश्यत्वादिति भावः, चमत्चकार किमेतदिति चकितः सञ्जातः। एतेन नलस्य सत्पुरुषत्वं दर्शितम्।

अत्र संघट्टासादनं प्रति निमीलिताक्षपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गं प्रथमपादगतेन छेकानुप्रासेन संसृज्यते। माधुर्यं गुणः, वैदर्भी च रीतिः ॥१३॥

বাঙ্গালা—অন্তঃপুরের মধ্যে কোন যুবতি উরুযুগলে বিলেপন দিবার জন্য তাহার কাপড় সরাইয়া ফেলিয়াছিল; এই অবস্থায় নল তাহাকে দেখিয়া তৎক্ষণাৎ নয়নযুগল মুদ্রিত করিলেন; অমনি অন্য কোন যুবতি ভ্রমণ করিতে করিতে আসিয়া তাঁহার গায়ের উপর পড়িল; তাহাতে নল ধাক্কা খাইয়া চমক পাইলেন ॥১৩॥

अन्वयः—नलेन अनादिसर्गस्रजि अनुभूता वा, चित्रेषु अनुभूता वा यद्वा जितशम्बरस्य शाम्बरीशिल्पं जाता इव सा भीमसुता दिक्षु अलक्षि ॥१४॥

अनादीति। नलेन दिक्षु प्रतिदिशम्, सा भीमसुता दमयन्ती, अलक्षि अदर्शि सर्वत्रैव दमयन्तीभ्रमः अभूदित्यर्थः। ननु अननुभूतपूर्वस्य वस्तुनो भ्रमासम्भवात् दमयन्त्याश्च पूर्वमननुभूतत्वात् कथं तस्य भ्रम इत्याह— अनादिः अविद्यमानपूर्वावधिर्या सर्गस्रक् सृष्टिपरम्परा तस्याम्, अनुभूता अनुभवविषयीकृता। जन्मान्तरीयानुभवात् तदानीं भ्रमः सम्भवपर एवासीदिति भावः। अथ जन्मान्तरीयसंस्कारस्य प्रायेणोद्बोधासम्भवात् कथं तदानीं तस्याः स्मरणं येन तन्मूलको भ्रमः समभवदित्याह— चित्रेषु आलेख्येषु, अनुभूता वा। तन्मूलक एवायं भ्रम इत्याशयः। ननु चित्रेषु प्रायशो नैव दृष्टा, दिक्षु तु सर्वत्रैवालोकः; तेन भ्रमस्य अनुभवानुरूपतया एव सर्वत्र दर्शनात् कथमत्र तर्कणमित्याह— यद्वा अथवा, जितः शम्बरो नाम दैत्यो येन तस्य शम्बरारेः कामदेवस्य, या शाम्बरी निहतशम्बरदैत्यसम्बन्धिनी माया तस्याः शिल्पं निर्माणकौशलस्वरूपा जातेव। तथा च महामायाविनं शम्बरदैत्यं निहत्य तस्य माया कामदेवेन गृहीता; तया च तदानीं तेन नलाय अलीकार्थमीदृशं दर्शितमिति भावः। तदानीं नलस्य तन्मयता नाम कामदशा उपस्थिता इति तु निष्कर्षः।

अत्र विशेषणानां साभिप्रायत्वात् परिकरालङ्कारः, शाम्बरीशिल्पमिति निरङ्गं केवलरूपकम्, जातेवेति क्रियोत्प्रेक्षा च, इत्येतेषामङ्गाङ्गिभावेन सङ्करः; तस्य च अलक्षि दिक्ष्विति छेकानुप्रासेन सह पुनः संसृष्टिः। पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः।

"अनादिः संसारः" इति सांख्यसिद्धान्तः ॥१४॥

বাঙ্গালা—নল দময়ন্তীকে অনাদিসৃষ্টিপরম্পরার মধ্যে পূর্বে কখনও দেখিয়াছিলেন, কিম্বা চিত্রে দেখিয়াছিলেন; অথবা দময়ন্তীই কামদেবের শাম্বরী মায়ার অপূর্ব শিল্পস্বরূপ

अलीकभैमीशतदर्शनाच्च तस्यान्यकन्याप्सरसो रसाय।
भैमीभ्रमस्यैव ततः प्रसादात् भैमीभ्रमस्तेन न तास्वलम्भि ॥१५॥
भैमीनिराशे हृदि मन्मथेन दत्तस्वहस्ताद्विरहाद्विहस्तः।
स तामलीकामवलोक्य तत्र क्षणादपश्यन् व्यषददि्वबुद्धः ॥१६॥

---

হইয়াই যেন জন্মিয়াছিলেন; তাই নল তখন দময়ন্তীকে সকল দিকেই লক্ষ্য করিতে লাগিলেন ॥১৪॥

**अन्वयः**—अलीकभैमीशतदर्शनात् अन्यकन्याप्सरसः तस्य रसाय अनुरागाय न (जाताः)। ततः भैमीभ्रमस्य एव प्रसादात् तेन तासु भैमीभ्रमः न अलम्भि ॥१५॥

अलीकेति। अलीकस्य भ्रमविषयतया मिथ्याभूतस्य भैमीशतस्य दमयन्तीसमूहस्य दर्शनात् चाक्षुषप्रत्यक्षीकरणाद्धेतोः, अन्यकन्या अप्सरस इवेत्यन्यकन्याप्सरसः, तस्य नलस्य, रसाय अनुरागाय, न जाता इति शेषः; कल्पनया तासां भैमीतो हीनत्वावधारणादिति भावः। ननु तास्वेव कथं भैमीभ्रमो न कृत इत्याह ततस्तस्य, भैमीभ्रमस्यैव, प्रसादादनुग्रहात् सामर्थ्याद्धेतोरित्यर्थः, तेन नलेन, तासु अन्यकन्याप्सरःसु, भैमीभ्रमो दमयन्तीभ्रान्तिः, न अलम्भि न लब्धः; साहश्यादेव भ्रमोत्पत्तेः तासाञ्च भैमीतो हीनत्वकल्पनया साहश्याभावादिति आशयः।

अत्र अन्यकन्याप्सरस इति साधकबाधकप्रमाणाभावात् उपमारूपकयोः सन्देहसङ्करः, द्वितीयपादे च्छेकानुप्रासयमकयोः संसृष्टिः। तथा भैमीपदस्य वारत्रयोपादानादनवीकृतत्वदोषः; 'तस्या भ्रमस्यैव ततः प्रसादात् न तद्भ्रमस्तेन तु तास्वलम्भि' इति पाठेनास्य परिहार्यः। न च भ्रमपदस्य त्रिरुपादानात् कथितपदतादोषोऽपीति वाच्यम्, तस्योद्देश्यप्रतिनिर्द्देश्यभिन्नविषयत्वादत्र तु तथात्वात्। प्रसादो गुणः, वैदर्भी च रीतिः।

तत इति "सर्वविभक्तिभ्यस्तसिः" इति षष्ठ्यास्तसिः ॥१५॥

**বাঙ্গালা**—(কল্পনার বলে) অলীক শত শত দময়ন্তী দর্শন করায়, অপ্সরার ন্যায় অন্যান্য কন্যারা নলের অনুরাগ জন্মাইতে সমর্থ হইল না, আবার সেই দময়ন্তীভ্রমেরই বলে, নল সে কন্যাগুলির উপরেও দময়ন্তীভ্রম করিতে পারিলেন না ॥১৫॥

**अन्वयः**—भैमीनिराशे हृदि (विद्यमानेन) मन्मथेन दत्तस्वहस्तात् विरहात् विहस्तः सः तत्र अलीकां ताम् अवलोक्य क्षणात् विबुद्धः (सन्) ताम् अपश्यन् व्यषदत् ॥१६॥

भैमीति। भैमीनिराशे दौत्यस्वीकारात् दमयन्तीलाभाशारहितेऽपि, हृदि चित्ते, चिरन्तनाशावशाद्विद्यमानेनेति शेषः, मन्मथेन दमयन्तीविषयकेणैव कामेन, दत्त उत्पादकभावेन समर्पितः स्वहस्तो निजकरो यस्य तस्मात् कामेनोत्पादितादित्यर्थः, विरहात् दमयन्त्या एव विच्छेददुःखाद्धेतोः, विहस्तो व्याकुलः, स नलः, तत्र अन्तःपुरे, अलीकां भ्रमविषयत्वेन मिथ्यारूपाम्, तां भैमीम्, अवलोक्य क्षणात् परमेव, विबुद्धो दोषापगमेन भ्रमरहितः सन्, तां भैमीम् अपश्यन् अनवलोकयन्, व्यषदत् तस्या अदर्शनादेव विषण्णोऽभूत्।

अत्र विषादं प्रति अपश्यन्निति पदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गं विषादाख्यभावोदयात्भावोदययोरङ्गाङ्गिभावेन सङ्करः; सोऽपि च्छेकानुप्रासेन संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः।

"विहस्तव्याकुलौ समौ" इत्यमरः।

व्यषददिति विपूर्वस्य सदेर्लङ्यन्त्या दौ प्रादित्वादषि "सदेरप्रतेः" इति षत्वम् ॥१६॥

**বাঙ্গালা**—দৌত্য স্বীকার করায় নলের মন, দময়ন্তীর আশাবিহীন হইয়াছিল; তথাপি তাহাতে কাম থাকিয়া যে বিরহবেদনা জন্মাইয়াছিল, তাহাতেই তিনি আকুল

प्रियां विकल्पोपहृतां स यावत् दिगीशसन्देशमजल्पदल्पम्।
अदृश्यवाग्भीषितभूरिभीरु-भवो रवस्तावदचेतयत्तम्॥१७॥
पश्यन् स तस्मिन् मरुतापि तन्व्याः स्तनौ परिस्प्रष्टुमिवात्तवस्त्रौ।
अत्यान्तपद्मान्तमृगाङ्कमास्यं दधार तिर्य्यग् वलितं विलक्षः॥१८॥
अन्तःपुरि विस्तृतवागुरेऽपि बालावलीनां वलितैर्गुणौघैः।
न कालसारं हरिणं तदक्षि-द्वयं प्रभुर्बद्धुमभून्मनोभूः॥१९॥

হইয়া, ভ্রমবশতঃ সেই অন্তঃপুরে অলীক দময়ন্তী দেখিয়া, ক্ষণকালপরেই আবার সে ভ্রমশূন্য হইয়া, দময়ন্তীকে না দেখিয়া বিষণ্ণ হইলেন ।১৬।

**अन्वयः**—सः यावत् विकल्पोपहृतां प्रियाम् अल्पं दिगीशसन्देशम् अजल्पत्, तावत् अदृश्य-वाग्भीषित-भूरि-भीरु-भवः रवः तम् अचेतयत्॥१७॥

पुनरपि भ्रमक्रियामाह प्रियामिति। स नलः, यावत् विकल्पेन भ्रमवशात् कल्पनामात्रेण उपहृताम् उपस्थापिताम्, प्रियां दमयन्तीम्, भ्रमात् दमयन्तीत्वेन निरूपितां काञ्चित् तत्सखीमित्यर्थः, अल्पं कियन्तम्, दिगीशानामिन्द्रादीनां सन्देशम् वाचिकं अजल्पत् अवदत्; तावत्, अदृश्यस्य मन्त्रबलेन द्रष्टुमशक्यस्य तस्य नलस्य वाचा तेन वाक्येन भीषिता भयं प्रापिता भूर्य्यः अनेका या भीरवो भयशीला रमण्यस्ताभ्यः भवः उत्पन्नः, रवः 'किमिदं किमिदम्' इति कोलाहलः, तं नलम्, अचेतयत् 'ममायं भ्रम एव' इत्युद्बोधितवान्। महत् कौतुकमिदम्।

अत्र तथात्वाभावेऽप्ययथार्थज्ञानाख्यालङ्कारस्य कार्य्यकारणभावादनुप्रासाख्यः संसृज्यते। मधुररचनात्वान्माधुर्य्यं गुणः, पाञ्चाली च रीतिः।

भीरुरिति "भियो रुक्‌लुकौ च" इति ताच्छील्ये भीधातोः रुक्। भव इति भवतेः पचादित्वादच्॥१७॥

**বাঙ্গালা**—ভ্রমকল্পিত দময়ন্তীর নিকটে যেই নল দিক্‌পালদিগের খবর একটু একটু বলিতে আরম্ভ করিলেন; সেই ভয়শীল বহুতর রমণী অদৃশ্য ব্যক্তির বাক্যে ভীত হইয়া কোলাহল করিয়া উঠিল; সেই কোলাহলই নলকে ভ্রম হইতে উদ্বুদ্ধ করিল ।১৭।

**अन्वयः**—तस्मिन् मरुता अपि परिस्प्रष्टुम् इव आत्तवस्त्रौ तन्व्याः स्तनौ पश्यन् सः विलक्षः (सन्) अत्यान्त पद्मान्त-मृगाङ्कम् आस्यं तिर्य्यक् वलितं दधार॥१८॥

पश्यन्निति। तस्मिन् अन्तःपुरे, मरुतापि का कथा अर्थ्यमनानाम् अचेतनेन वायुनापि परिस्प्रष्टुमिव आह्लादयितुमिव, आत्तम् अपसार्य्य नीतं वस्त्रं ययोस्तौ तन्व्याः कस्याश्चित् कृशाङ्ग्याः, स्तनौ, पश्यन्, स नलः, विलक्षः अप्रतिभः सन्, अत्यन्तः मृगाङ्कत्वेन कलङ्कित्वादेव सादृश्यविषये अतीतः पद्मान्तमृगाङ्कः पूर्णिमाचन्द्रो येन तत् तादृशम्, आस्यं वदनम्, तिर्य्यक् भावेन वलितं परिवर्त्तितम्, दधार धृतवान्। एवञ्च सति उन्मुखनयोर्न दर्शनमिति भावः।

अत्र परिस्प्रष्टुमिवेति वाच्या क्रियोत्प्रेक्षा अत्यन्तापेक्षया मुखस्य आधिक्यवर्णनात् व्यतिरेकः, द्वितीयार्द्धे कार्य्यानुप्रासश्च; इत्यं तेषां मिथो निरपेक्षतया संसृष्टिः। माधुर्य्यं गुणः, वैदर्भी च रीतिः॥१८॥

**বাঙ্গালা**—সেই অন্তঃপুরে স্পর্শ করিবার জন্যই যেন বায়ুও, কোন কৃশাঙ্গীর স্তনযুগল হইতে বসন অপসৃত করিয়াছিল; তাই নল হঠাৎ সেই স্তন দুইটী দর্শন করিয়া, অপ্রতিভ হইয়া, পূর্ণিমার চন্দ্র অপেক্ষাও সুন্দর নিজ মুখখানিকে তেরচাভাবে ফিরাইয়া ধরিলেন ।১৮।

दोर्मूलमालोक्य कचं करुत्सो: ततः कुचौ तावनुलेपयन्त्याः ।
नाभीमथैष श्लथवाससोऽनु मिमील दिक्षु क्रमकृष्टचक्षुः ॥२०॥

---

अन्वयः—मनोभूः अन्तःपुरे वलितैः बालावलीनां गुणौघैः विस्तृतवागुरः अपि (सन्) कालसारं हरिणं तदक्षिद्वयं बद्धुं प्रभुः न अभूत् ॥१९॥

अन्तःपुर इति । मनोभूः काम एव क्रूरस्वभावः कश्चित् व्याधः, अन्तःपुरे तस्मिन्नवरोध एव मृगमारण्ये, वलितैः प्रसृतैरेव विगुणीकृतैः, बालावलीनां नवीनरमणीश्रेणीनामेव कैश्रश्रेणीनाम्, गुणौघैः सौन्दर्य्यविलासादिधर्म्मसमूहैरेव रज्जुसमूहैः करणैः, विस्तृता बन्धनाय प्रसारिता वागुरा बन्धनोपाय एव मृगबन्धनजालं येन स तादृशः सन्नपि, कालः कृष्णवर्णः सारस्ताराकृपः श्रेष्ठभागो यस्य तत् कालसारं तदेव च कालसारनामकम्, हरिणम् उभयप्रान्तभागे हरिणवर्णं पाण्डुरवर्णमिति यावत्, तस्य नलस्य अक्षिद्वयं चक्षुर्द्वयम्, अन्यत्र तु तदक्षिद्वयमिव हरिणं मृगम्, बद्धुम् आयत्तीकर्त्तुं संयमितुञ्च, प्रभुः समर्थो नाभूत् ; एकत्र नलस्य महासत्पुरुषत्वेन परस्त्रीषु लोभाभावात्, अन्यत्र तु क्रूरस्वभावस्य व्याधस्य क्षमताया एवाभावादिति भावः ।

अत्र मनोभुवि व्याधत्वस्य अन्तःपुरे मृगमारण्यत्वस्य आरोप आर्थः, बालावल्यादौ कैशश्रेण्याद्यारोपस्तु शाब्द इत्येकदेशविवर्त्ति रूपकमेव, न पुनः समासोक्तिः ; रूपकप्रतीतेर्व्यापितया समासोक्तिप्रतीतेस्तिरोधायकत्वात् एवमेव सर्वत्रालङ्कारिकैर्व्यवस्थापितत्वात् । तथा विस्तृतवागुरत्वरूपे कारणे सत्यपि बन्धनरूपतत्कार्य्याभावात् विशेषोक्तिः, पदश्लेषः, द्वितीये पादे छेकानुप्रासः, चतुर्थे च वृत्त्यनुप्रासः ; इत्येतेषां मिथो निरपेक्षतया संसृष्टिः । बन्धोत्कर्षस्य आरोहावरोहाभ्याम् ओजो गुणः, गौड़ी च रीतिः ।

"वागुरा मृगबन्धिनी" इत्यमरः ॥१९॥

বাঙ্গালা—কামদেব সেই অন্তঃপুরের মধ্যে তরুণীগণের গুণসমূহ দ্বারা বন্ধন করিবার উপায় বিস্তৃত করিয়াও, কৃষ্ণবর্ণতারাযুক্ত এবং দুই প্রান্তে পাণ্ডুরবর্ণ নলের চক্ষু দুইটীকে বন্ধন করিতে সমর্থ হইলেন না ॥১৯॥

অন্বয়— एषः कचं करुत्सोः दोर्मूलम् आलोक्य, ततः कुचौ अनुलेपयन्त्याः तौ आलोक्य, अथ श्लथवाससः नाभीम् आलोक्य, अनु दिक्षु क्रम-कृष्ट-चक्षुः मिमील ॥२०॥

दोर्मूलमिति । एष नलः, कचं केशपाशम्, करुत्सोः उत्तोलितहस्ताभ्यामात्मनैव रोद्धुम् मस्तकोपरि बद्धुमिच्छोः कस्याश्चित्तरुण्या इति शेषः, दोर्मूलं बाहुमूलम्, आलोक्य दृष्ट्वा, ततः परम्, अन्यस्यां दिशि कुचौ स्तनौ, अनुलेपयन्त्याः सख्या चन्दनादिना लिप्तौ कारयन्त्याः, कस्याश्चिदपरस्यास्तरुण्याः, तौ कुचौ आलोक्य, अथ अनन्तरम्, अपरस्यां दिशि श्लथवाससं नाभ्या एव नीपनीदर्योगात् पतितप्रायवस्त्रायाः, अन्यस्याः कस्याश्चित्तरुण्याः, नाभीमालोक्य, अनु पश्चात्, दिक्षु उक्तक्रमेण तिसृषु आशासु, क्रमेण कृष्टम् अपसार्य्य नीतञ्च तत् चक्षुश्चेति तत्, मिमील मुद्रयामास ; अन्यस्यां दिश्यपि चक्षुःकर्षणे सम्पूर्णनग्नाया एव दर्शनसम्भवादिति भावः ।

अत्र एकस्यैव चक्षुषः क्रमेण तिसृषु दिक्षु करणात् पर्य्यायो नामालङ्कारः ;

"क्वचिदेकमनेकस्मिन् अनेकञ्चैकगं क्रमात् । भवति क्रियते वा चेत् तदा पर्य्याय इष्यते ॥" इति लक्षणात् । आलोक्येत्येकया क्रियया कच-कुच-नाभीनां कर्म्मतयाभिसम्बन्धात् तुल्ययोगिता, प्रथमचतुर्थपादयोश्छेकानुप्रासश्चेत्येतेषां संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥२०॥

বাঙ্গালা—এক দিকে কোন যুবতি হাত তুলিয়া চুল বাঁধিতে ইচ্ছা করিয়াছিল;

मीलन् स शेकेऽभिमुखागताभ्यां धर्त्तुं निपीड्य स्तनसान्तराभ्याम् ।
स्वाङ्गान्यपेतो विजगौ स पश्यन् (१) पुमङ्गसङ्गोत्थपुलके ततस्ते (२) ॥२१॥
निमीलनस्पष्टविलोकनाभ्यां कदर्थितस्ताः कलयन् कटाक्षैः ।
स रागदर्शीव भृशं ललज्जे स्वतः सतां ह्रीः परतोऽपि गुर्वी (३) ॥२२॥

---

নল তাহার বাহুমূল দেখিয়া, অন্য দিকে চোখ ফিরাইলেন ; সে দিকে আবার কোন যুবতি সখীকে দিয়া স্তনযুগলে অনুলেপন মাখাইতেছিল ; তাহার সেই স্তনযুগল দেখিয়া নল অন্য দিকে নয়ন আকর্ষণ করিলেন ; সে দিকে আবার কোন যুবতির বসন প্রায় পড়িয়া গিয়াছিল, তাহার নাভি দেখিলেন ; এইভাবে ক্রমে তিন দিকে চোখ আকর্ষণ করিয়া পরে নল সে চোখ মুদ্রিত করিলেন ॥২০॥

**अन्वयः**—अभिमुखागताभ्यां स्तनसान्तराभ्यां (काभ्याञ्चित् तरुणीभ्यां) मीलन् सः निपीड्य धर्त्तुं न शेके । ततः सः अपेतः (सन्) ते पुमङ्गसङ्गोत्थपुलके पश्यन् स्वाङ्गानि विजगौ ॥२१॥

मीलन्निति । अभिमुखम् सम्मुखञ्च यथा स्यात्तथा आगताभ्यां नलस्य सम्मुखदेशात् पश्चाद्देशाच्च आगताभ्यामित्यर्थः, स्तनाभ्यां सान्तरे सव्यवधाने ताभ्याम्, काभ्याञ्चित्तरुणीभ्यामिति शेषः, मीलन् पूर्वोक्तकारणात् नयनद्वयं मुद्रयन्, अतएव नलोऽपि ते द्रष्टुं न शक्त इति भावः ; स नलः, निपीड्य गाढ़भावेन आश्लिष्य, धर्त्तुं न शेके न पारितः ; स्तनस्तनाभ्यामेव व्यवधानादित्याशयः । ततः परम्, स नलः, अपेतः केनापि प्रकारेण तयोर्मध्यान्निर्गतः सन्, ते तरुण्यौ, पुंसः पुरुषस्य नलस्य अङ्गसङ्गेन गात्रस्पर्शेन उद्गताः पुलका रोमाञ्चा ययोस्ते तथोक्ते, पश्यन्, स्वाङ्गानि निजगात्राणि, विजगौ निनिन्द, परस्त्रीस्पर्शकरणादित्यभिप्रायः ।

अत्र निपीड़नपूर्वकधरणाशक्तिं प्रति स्तनसान्तराभ्यामिति पदार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारश्चतुर्थपादगतच्छेकानुप्रासेन संसृज्यते । माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥२१॥

**বাঙ্গালা**—নল নয়ন মুদ্রিত করিয়া দাঁড়াইয়া ছিলেন ; এমন সময়ে তাঁহার সম্মুখের দিক্ হইতে একটী এবং পিছনের দিক হইতে আর একটী যুবতি আসিয়া তাঁহাকে গাঢ় আলিঙ্গন করিয়া ধরিতে পারিল না ; কারণ, তাহাদের অত্যুচ্চ স্তনই তাহাদের ব্যবধান করিয়াছিল । তাহার পর, নল তাহাদের মধ্য হইতে কোন প্রকারে নির্গত হইয়া, পুরুষের অঙ্গসংস্পর্শবশতঃ তাহাদের অঙ্গে রোমাঞ্চ জন্মিয়াছে দেখিয়া, নিজের অঙ্গের নিন্দা করিলেন ॥২১॥

**अन्वयः**—निमीलन-स्पष्ट-विलोकनाभ्यां कदर्थितः सः रागदर्शी इव कटाक्षैः ताः कलयन् (सन्) भृशं ललज्जे । सतां स्वतः ह्रीः परतः अपि गुर्वी (भवति) ॥२२॥

निमीलनेति । निमीलनं नग्नपरस्त्रीदर्शनभयेन नयनमुद्रणम्, स्पष्टविलोकनं सङ्घट्टभयेन सुव्यक्तदर्शनं ताभ्याम्, कदर्थितः वारं वारं जायमानत्वात् विरक्तीकृतः, स नलः, रागीव अनुरागीव द्रष्टुं शीलमस्येति रागदर्शी परस्त्रीलम्पटः स इव, कटाक्षैः नयनप्रान्तभागैः ; एवञ्च न परस्त्रीणां सर्वाङ्गदर्शनं नवा सङ्घट्टप्राप्तिरित्याशयः । ता युवतीः, कलयन्नवलोकयन् सन्, भृशमत्यन्तम्, ललज्जे लज्जितो बभूव । ननु नलस्याद्दुष्टतयैव, तद्घटनाया अप्यन्यैरदर्शनात् कथं तस्य लज्जा सञ्जातेत्याह सतां साधूनाम्, स्वत आत्मनः, ह्रीर्लज्जा, परतोऽपि अन्यस्माज्जनादपि, गुर्वी महती भवतीति शेषः । अतएव अदृष्टस्यापि नलस्य आत्मत एव महती लज्जा जातेति भावः ।

---

(१)…विजगौ स पश्चात् । (२)…पुनस्ते । (३) अतिगुर्वी ।

रोमाञ्चिताङ्गीमनु तत्कटाक्षैः भ्रान्तेन कान्तेन रतेर्विसृष्टः (१) ।
मोघः शरौघः कुसुमानि नाभूत् तद्धैर्य्यपूजां प्रति पर्य्यवस्यन् ॥२३॥
छित्त्वैकवर्त्मैव मिथो भ्रमन्त्याः (२) स्वर्गः स्त्रियाः सुत्यज इत्यवेत्य ।
चतुष्पथस्याभरणं (३) बभूव लोकावलोकाय सतां स दीपः ॥२४॥

---

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः, रागदर्शीविति श्रौतोपमा, लज्जां प्रति कारणत्रितयपदार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गञ्च ; इत्येतेषामङ्गाङ्गिभावेन सङ्करः । प्रसादो गुणः, वैदर्भी च रीतिः ॥२२॥

বাঙ্গালা—বার বার নয়নমুদ্রণ এবং বার বার স্পষ্ট সন্দর্শন দ্বারা নল বিরক্ত হইলেন ; পরে, পরস্ত্রীলম্পটের ন্যায় তিনি কটাক্ষপাত দ্বারা সেই যুবতিদিগকে দেখিতে থাকিয়া অত্যন্ত লজ্জিত হইলেন । কারণ, সাধুলোকের আপনা হইতে যে লজ্জা জন্মে, তাহা অন্য হইতে উৎপন্ন লজ্জা অপেক্ষাও গুরুতরই হইয়া থাকে ॥২২॥

অন্বয়:—রোমাঞ্চিতাঙ্গীম্ অনু তৎকটাক্ষৈঃ ভ্রান্তেন রতেঃ কান্তেন বিসৃষ্টঃ কুসুমানি শরৌঘঃ তদ্ধৈর্য্যপূজাং প্রতি পর্য্যবস্যন্ (সন্) মোঘঃ ন অভূত্ ॥২৩॥

रोमेति । रोमाञ्चितानि नयनमुद्रणसमये नलस्यैव देहसंघट्टात् सञ्जातरोमाञ्चानि अङ्गानि यस्यास्तां तादृशीं काञ्चित् युवतिम्, अनु लक्ष्यीकृत्य, तस्य नलस्य कटाक्षैः कटाक्षपातदर्शनैः करणैः, भ्रान्तेन नलः स्वस्यामनुरक्तः सन्नेव कटाक्षपातान् करोतीति भ्रान्तिमता । वस्तुतस्तु पूर्वं स्त्रीकौतुकैरिव नलस्य कटाक्षा इति भावः । रतेः कान्तेन पत्या कामदेवेन, किन्तु तद्धैर्य्यभङ्गाय निक्षिप्तः, कुसुमानि कुसुमसमूहात्मकः, शरौघो बाणसमूहः, तस्य नलस्य यत् धैर्य्यं तादृशस्त्रीदर्शनेऽपि स्थिरचित्तत्वं तस्य पूजां प्रति पूजनविषये, पर्य्यवस्यन् सर्वथैव पर्य्यवसितः सन्, मोघो व्यर्थः, नाभूत् ; पूजायां कुसुमानां प्रयोजनवत्त्वादित्याशयः ।

अत्र पूर्वोक्तहेतुकेषु नलस्य कटाक्षेषु कामस्य अनुरागप्रयुक्तकटाक्षत्वभ्रमात् भ्रान्तिमानलङ्कारः ; तथा नलस्य धैर्य्यभङ्गाय प्रयुक्तस्य शरौघस्य तद्धैर्य्यपूजाकपानर्थं प्रति पर्य्यवसानात् विषमालङ्कारः, मोघत्वाभवनं प्रति चतुर्थपादगतपदानां हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम् ; द्वितीये पादे छेकानुप्रासः, तृतीये च वृत्त्यनुप्रास इत्येतेषां मिथो निरपेक्षतया संसृष्टिः । तृतीयचतुर्थपादयोः पाठपौर्वापर्य्यविपर्य्ययेण समाप्तपुनरात्ततादोषः परिहार्य्यः । प्रसादो गुणः, वैदर्भी च रीतिः ॥२३॥

বাঙ্গালা—নলেরই অঙ্গসংস্পর্শে কোন যুবতির অঙ্গে রোমাঞ্চ জন্মিয়াছিল ; আবার তাহার প্রতিই নল কটাক্ষপাত করিতেছিলেন । তাহাতে কামদেবের এইরূপ ভ্রম জন্মিয়াছিল যে, নল অনুরাগবশতই বুঝি কটাক্ষপাত করিতেছেন ; তাই তিনি নলের ধৈর্য্যভঙ্গের নিমিত্ত পুষ্পময় বাণসমূহ নিক্ষেপ করিয়াছিলেন ; কিন্তু সে বাণগুলি নলের ধৈর্য্যভঙ্গ করিতে না পারিয়া, প্রত্যুত তাঁহার ধৈর্য্যপূজার প্রতিই পর্য্যবসিত হইয়া, ব্যর্থ হইয়াছিল না ॥২৩॥

অন্বয়:—অত্র ভ্রমন্ত্যাঃ স্ত্রিয়াঃ স্বর্গঃ এবং সুত্যজঃ ইতি অবেত্য সতাং দীপঃ সঃ একবর্ত্ম ছিত্ত্বা লোকাবলোকায় চতুষ্পথস্য আভরণং বভূব ॥২৪॥

छित्त्वेति । अत्र अन्तःपुरे, भ्रमन्त्या विचरन्त्याः स्त्रियाः स्वर्गः, एवम् अनेन प्रकारेण, सुत्यजः सुखेन

---

(१)···रतेर्निदिष्टः । (२) छित्त्वैव वर्त्मैकमिह भ्रमन्त्याः । (३) आभरणः ।

उद्वर्त्तयन्त्या हृदये निपत्य नृपस्य दृष्टिर्न्यवृतद्द्रुतैव ।
वियोगिवैरात् कुचयोर्नखाङ्कैः, अर्द्धेन्दुलीलैर्गलहस्तितेव ॥२५॥
तन्वीमुखं द्रागधिगत्य चन्द्रं वियोगिनस्तस्य निमीलिताभ्याम् ।
द्वयं द्रढीयः क्षतमीक्षणाभ्यां तदिन्दुता च स्वसरोजता च ॥२६॥

---

त्यक्तुं शक्यः, न पुनरन्यथा इत्यर्थः, इति चेतसा मनसा निश्चित्य, सतां मध्ये दीपः प्रतीपोज्ज्वलत्वात् दीपस्वरूपः, स नलः, एकमत्यं एकपदीम् एकमात्रं पन्थानमिति यावत्, हित्वा त्यक्त्वा, लोकानां तत्रत्यानां जनानाम् अवलोकनाय दर्शनाय, चतुर्णां पथां समाहार इति चतुष्पथं तस्य यस्मात् स्थानात् चत्वारः पन्थानः चतसृषु दिक्षु प्रयान्ति तादृशस्य स्थानस्येत्यर्थः, आभरणं शोभाजनकत्वात् आभरणस्वरूपः, बभूव, तत्रैव गत इत्यर्थः ।

अत्र निरङ्गं केवलरूपकमर्थं छेकानुप्रासश्चानयोः संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥२४॥

बाङ्गाला—এই অন্তঃপুরে ভ্রমণকারিণী রমণীদিগের সংস্পর্শ এইভাবে অনায়াসে ত্যাগ করা যাইবে এইরূপ মনে মনে নিশ্চয় করিয়া সজ্জনের মধ্যে প্রদীপস্বরূপ নল, একটী মাত্র পথ পরিত্যাগ করিয়া, জনসাধারণকে দেখিবার জন্ত, যাইয়া চতুষ্পথের অলঙ্কারস্বরূপ হইলেন ॥২৪॥

**अन्वयः**—नृपस्य दृष्टिः उद्वर्त्तयन्त्याः हृदये निपत्य अर्द्धेन्दुलीलैः कुचयोः नखाङ्कैः वियोगिवैरात् गलहस्तिता इव (सती) द्रुता एव न्यवृतत् ॥२५॥

उद्वर्त्तयन्त्या इति । नृपस्य नलस्य दृष्टिः उद्वर्त्तयन्त्याः कुङ्कुमादिना स्तनावनुलिम्पन्त्याः कस्याश्चित् युवत्याः, हृदये वक्षसि, निपत्य हठात्पतित्वा, अर्द्धेन्दोरर्द्धचन्द्रस्येव लीला विलासो येषां तैः अर्द्धचन्द्राकारैरित्यर्थः, कुचयोस्तस्या एव स्तनयोः, नखाङ्कैर्नखक्षतचिह्नैः, वियोगिनो जनस्य वैरात् शत्रुत्वाद्धेतोः । चन्द्रस्य वियोगिशत्रुत्वात् तदाकाराणामपि वियोगिशत्रुत्वमिति भावः । गली कण्ठदेशे हस्तो निष्कासनाय हस्तदानमिति गलहस्तः स सञ्जातोऽस्या इति गलहस्तिता सा तादृशीव सती, द्रुता सत्वरैव न्यवृतत् प्रत्यावृत्ता । वस्तुतस्तु परस्त्रीस्तनदर्शनमयुक्तमिति न्यवृतदिति भावः । अत्रापि व्यतिरेकेण हस्तार्पणार्थाः विवर्त्तन्ते ।

अत्र अर्द्धेन्दुलीलैरिति समासगता लुप्तोपमा, गलहस्तितेवेति वाच्या क्रियोत्प्रेक्षा चानयोरङ्गाङ्गिभावेन सङ्करः । प्रसादो गुणः, वैदर्भी च रीतिः ।

न्यवृतदिति "द्युतादीनामद्यतन्याम्" इति यजादित्वाण्णिकारात् परस्मैपदम्, "पुषादिद्युताद्ि—" इत्यादिना च अङ् । गलहस्तितेति तारकादित्वादितच् ॥२५॥

बाङ्गाला—কোন যুবতি নিজের স্তনযুগলে অঙ্গলেপন দিতেছিল ; এমন সময়ে নলের দৃষ্টি তাহার বক্ষের উপরে পড়িয়া সত্বরই ফিরিয়া আসিয়াছিল । কারণ, তাহার স্তনযুগলের অর্দ্ধচন্দ্রাকার নখচিহ্নগুলি যেন বিরহিগণের প্রতি শত্রুতাবশতঃ নলের সেই দৃষ্টিকে গলাধাক্কা দিয়াছিল ॥২৫॥

**अन्वयः**—वियोगिनः तस्य ईक्षणाभ्यां तन्वीमुखं चन्द्रम् अधिगत्य द्राक् निमीलिताभ्यां (सद्भ्याम्) तदिन्दुता च स्वसरोजता च (एतत्) द्वयं द्रढीयः क्षतम् ॥२६॥

तन्वीति । वियोगिनो विरहिणः, तस्य नलस्य; ईक्षणाभ्यां नयनाभ्यां कर्तृभ्याम्, तन्व्याः कस्याश्चित् कृशाङ्ग्याः स्त्रियाः मुखं वदनम्, चन्द्रम्, अधिगत्य अवधार्य, चन्द्रस्वरूपं तन्वीमुखम् अधिगत्य प्राप्य दृष्ट्वा च, द्राक् झटिति,

चतुष्पथे तं विनिमीलिताक्षं चतुर्दिगेताः सुखमग्रहीष्यन् ।
संघट्य तस्मिन् भृशभीनिवृत्ताः ता एव तद्वर्त्म न चेददास्यन् ॥२७॥
संघट्टयन्त्यास्तरसात्मभूषा-हीराङ्कुरप्रोतदुकूलहारी ।
हिया नितम्बं परिधाप्य तन्व्याः तत्पापसन्तापमवाप भूपः ॥२८॥

---

निमीलिताभ्यां मुद्रिताभ्यां सद्भ्याम्, एकत्र चन्द्रावधारणे पद्ममुद्रणस्य स्वाभाविकत्वात् अन्यत्र परस्त्रीमुखदर्शनस्य अयुक्तत्वादिति भावः ; तस्य तन्वीमुखस्य इन्दुता च चन्द्रत्वञ्च, स्वयोरात्मनोः सरोजता च पद्मत्वञ्च, एतत् द्वयम्, द्रढीयः सुदृढं विनिश्चितमित्यर्थः, कृतम् ; पद्मस्य चन्द्रप्राप्तिसत्त्वे सङ्कोचसत्त्वमित्यन्वयात् तदसत्त्वे च तदसत्त्वमिति व्यतिरेकाच्चेत्याशयः ।

अत्र चन्द्रमिति निरङ्गं केवलरूपकम्, तादृग्दृढीकरणासम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिः । ताभ्याञ्च सृष्टा विच्छित्तिः । ततश्च तन्वीमुखं चन्द्रः स्वप्राप्त्या पद्ममुद्रणजनकत्वात् तथा नलेक्षणं पद्मं चन्द्रप्राप्त्या मुद्रितत्वादित्यनुमानादनुमानालङ्कार इति सङ्करः । तेन च तन्वीमुखेन्दोः नलेक्षणसरोजयोश्च भेदेऽपि तदभेदाध्यवसायरूपातिशयोक्तिर्व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः । तथा वियोगिपदं मुख्यं प्रति न किञ्चिदुपकुर्वत इत्यपुष्टार्थतादोषः 'नखात्मनस्तस्य' इति पाठेन समाधेयः ॥२६॥

**বাঙ্গালা**—বিরহী নলের নয়ন দুইটী, কোন কৃশাঙ্গীর মুখচন্দ্র প্রাপ্ত হইয়া, তৎক্ষণাৎ মুদ্রিত হইল ; তাহাতে সেই নয়ন দুইটী, সেই মুখের চন্দ্রত্ব এবং আপনাদের পদ্মত্ব এই দুইটীই সুদৃঢ় করিল ॥২৬॥

**अन्वयः**— चतुर्दिगेताः ( युवतयः ) चतुष्पथे विनिमीलिताक्षं तं सुखम् अग्रहीष्यन्, चेत् ताः एव तस्मिन् संघट्य भृश-भी-निवृत्ताः (सत्यः) तद्वर्त्म न अदास्यन् ॥२७॥

चतुष्पथ इति । चतसृभ्यो दिग्भ्यः एता आगता युवतय इति शेषः, चतुष्पथे, विनिमीलिताक्षं नयपरस्त्रीदर्शनभयात् विशेषेण मुद्रितनयनम्, तं नलम्, सुखमनायासं यथा स्यात्तथा, अग्रहीष्यन् गृहीतुमशक्ष्यन् ; चेत् यदि, ता एव युवतयः, तस्मिन् नले, संघट्य गात्रसंघट्टं प्राप्य, भृशया अत्यन्तया भिया भूतादिसम्भावनाजनितभयेन निवृत्ताः पराङ्मुखाः सत्यः, तस्य नलस्य वर्त्म अपसरणपथम्, न अदास्यन् न दत्तवत्यः । तथा च तदपसरणपथदानादेव तं न ग्रहीतुमशक्नुवन्निति भावः ।

अत्र सुखेन ग्रहणं प्रति विनिमीलिताक्षपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ॥२७॥

**বাঙ্গালা**—চারি দিক হইতে আগত যুবতিরা চতুষ্পথে ( চৌরাস্তায় ) মুদ্রিতনয়ন নলকে অনায়াসেই ধরিতে পারিত ; যদি তাহারাই তাঁহার গায়ে সংঘর্ষ পাইয়া, অত্যন্ত ভয়বশতঃ প্রতিনিবৃত্ত হইয়া, তাঁহাকে সরিয়া যাইবার পথ না দিত ॥২৭॥

**अन्वयः**—भूपः तरसा संघट्टयन्त्याः तन्व्याः आत्मभूषा-हीराङ्कुर-प्रोत-दुकूल-हारी (सन्) हिया नितम्बं परिधाप्य तत्पाप-सन्तापम् अवाप ॥२८॥

संघट्टयन्त्या इति । भूपो नलः, तरसा वेगेन, संघट्टयन्त्या नलस्यैव शरीरे संघट्टं दत्तवत्याः, तन्व्याः कस्याश्चित् कृशाङ्ग्या युवत्याः । दुकूलेत्यनेनास्याः सम्बन्धः । आत्मनः स्वस्य नलस्यैव भूषासु अलङ्कारेषु ये हीराङ्कुरा हीरकखण्डानां सूक्ष्माग्राणि तेषु प्रोतं सम्बद्धं दुकूलं सूक्ष्मपट्टवस्त्रं हरति परस्त्रीस्पर्शभयेन आत्मनोऽपि वेगेनापसरणात् आकृष्य नयतीति स तादृशः सन्, हिया त्रपया, नितम्बं तस्या एव तन्व्याः श्रोणिदेशम्, परिधाप्य



হতঃ কয়াচিৎ পথি কন্দুকেন সংঘট্য ভিন্নঃ করজৈঃ কয়াপি।
কয়াচনাক্তঃ কুচকুঙ্কুমেন সম্ভুক্তকল্পঃ স বভূব তাভিঃ ॥২৯॥
ছায়াময়ঃ প্রৈক্ষি কয়াপি হারে নিজে স গচ্ছন্নথ নেক্ষ্যমাণঃ।
তচ্চিন্তয়ান্তর্নিরচায়ি চারু স্বস্যৈব তন্ব্যা হৃদয়ং প্রবিষ্টঃ ॥৩০॥

আচ্ছাদ্য তাং দিগম্বরীং কৃত্বা সম্মুখং নয়ামীব বিধায়েত্যর্থঃ, তস্মাৎ ঠিয়া পরস্ত্রিয়া নিতম্বপরিধাপনাৎ যৎ পাপং তেন যঃ সন্তাপঃ 'হা কিঞ্চিদং ময়া কৃতম্' ইতি পরিতাপস্তম্, অবাপ অনুবভূব।

অত্র ঠিয়া নিতম্বপরিধাপনং প্রতি আক্ষিপ্যাদিপদস্যার্থো হেতুরিতি পদার্থহেতুকং কাব্যলিঙ্গম্, দ্বিতীয়ে পাদে ছেকানুপ্রাসঃ অন্যত্র চ বৃত্ত্যনুপ্রাস ইত্যেতেষাং সংসৃষ্টিঃ। বন্ধোৎকর্ষস্য আরোহাবরোহাভ্যামোজো গুণঃ, গৌড়ী চ রীতিঃ ॥২৮॥

বাঙ্গালা—কোন কৃশাঙ্গী যুবতি বেগে আসিয়া নলের শরীরে সংঘর্ষ পাইল; তখন নলের অলঙ্কারের ভিতরের হীরার আগায় সেই যুবতির পট্টবস্ত্র খানি জড়াইয়া পড়িল; সেই সময়ে নল বেগে সরিয়া যাইতে থাকিয়া, সে পট্টবস্ত্রখানি একেবারে খুলিয়া নিয়া, সে যুবতির নিতম্বযুগলকে দিকের দ্বারা আবৃত করিয়া, সেই পাপের সন্তাপ অনুভব করিলেন ॥২৮॥

**অন্বয়ঃ**—সঃ পথি কয়াচিৎ কন্দুকেন হতঃ, কয়া অপি সংঘট্য করজৈঃ ভিন্নঃ, কয়াচন কুচকুঙ্কুমেন অক্তঃ (চ সন্) তাভিঃ সম্ভুক্তকল্পঃ বভূব ॥২৯॥

হত ইতি। স নলঃ, পথি গমনমার্গে, কয়াচিৎ যুবত্যা, কন্দুকেন অন্যায়ং নিক্ষিপ্তয়া খেলাগুটিকয়া, হতস্তাড়িতঃ; কয়াপি যুবত্যা, সংঘট্য বেগেনাগমনাৎ নলশরীরে সংঘর্ষং প্রাপ্য, করজৈর্নখৈঃ, ভিন্নো বিদ্ধঃ; আত্মনঃ পরাক্পতনসম্ভাবনয়া হঠাৎ করাভ্যামবলম্বনাদিত্যাশয়ঃ। কয়াচন কয়াপি যুবত্যা, কুচয়োঃ কুঙ্কুমেন, অক্তো লিপ্তবক্ষাঃ সন্, বক্ষসা বক্ষসি সংঘর্ষে পতনশঙ্কয়া সহসা বাহুভ্যামাবেষ্ট্য ধারণাদিত্যভিপ্রায়ঃ, তাভির্যুবতিভিঃ, সম্ভুক্তকল্পঃ প্রায়েণ কৃতসম্ভোগঃ, বভূব। ক্রিয়ানিষ্পত্তিরূপমুখ্যসম্ভোগাভাবাদিতি ভাবঃ। তাভিরিতি কর্তৃনির্দেশাৎ নলস্য অজ্ঞানকৃতদোষোঽপি নাসীদিতি সূচিতম্।

অত্র সম্ভুক্তকল্পভবনং প্রতি কন্দুকহতত্বাদিবহূনাং কারণানামভিধানাৎ সমুচ্চয়ো নামালঙ্কারঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ।

সম্ভুক্তকল্প ইতি "ঈষদসমাপ্তৌ কল্পব্দেশ্যদেশীয়রঃ" ইতি কল্পপ্রত্যয়ঃ ॥২৯॥

বাঙ্গালা—পথে কোন যুবতি খেলার গুটি দিয়া নলকে আঘাত করিল; কোন যুবতি সংঘর্ষ পাইয়া নখ দ্বারা নলকে ক্ষত-বিক্ষত করিল এবং কোন যুবতি স্তনকুঙ্কুম দ্বারা নলের বক্ষঃস্থল রঞ্জিত করিয়া দিল; সুতরাং নল তাহাদের দ্বারা প্রায় সম্ভুক্ত হইলেন ॥২৯॥

**অন্বয়ঃ**—কয়া অপি তন্ব্যা নিজে হারে ছায়াময়ঃ সঃ প্রৈক্ষি, অথ গচ্ছন্ নেক্ষ্যমাণঃ সঃ তচ্চিন্তয়া স্বস্য এব হৃদয়ং প্রবিষ্টঃ (ইতি) অন্তঃ চারু নিরচায়ি ॥৩০॥

ছায়েতি। কয়াপি তন্ব্যা কৃশাঙ্গ্যা যুবত্যা, নিজে স্বকীয়ে, হারে স্বচ্ছায়াং মুক্তামালায়াম্, ছায়াময়ঃ প্রতিবিম্বভূতঃ, স নলঃ, প্রৈক্ষি প্রথমং দৃষ্টঃ; অথ অনন্তরম্, গচ্ছন্ তৎস্থানাদপসরন্ নেক্ষ্যমাণঃ অদৃশ্যমানঃ সঃ তচ্চিন্তয়া ইদানীমেব হারে প্রতিবিম্বরূপেণ দৃষ্টঃ সুন্দরঃ স যুবা ক্ব গত ইতি তস্যৈব নলস্য ভাবনয়া, স্বস্য আত্মন এব হৃদয়ং প্রবিষ্টঃ সামীপ্যাদন্তর্গত ইতি, অন্তঃ অন্তঃকরণে, চারু সম্যক্, নিরচায়ি নিশ্চিতঃ। নলস্য অদৃশ্যত্বেঽপি কৌতুকেন স্বং স্বস্যৈব প্রতিবিম্বোৎপাদনাৎ তৎসম্ভব ইতি বোধ্যম্।

तच्छायसौन्दर्य्यनिपीतधैर्य्याः प्रत्येकमालिङ्गदमूः रतीशः ।
रतिप्रतिच्छन्दिततमासु नूनं नामूषु निर्णीतरतिः कथञ्चित् ॥२१॥
तस्मादहस्मादपि नातिबिभ्युः तच्छायरूपाहितमोहलीलाः ।
मन्यन्त एवाहतमन्मथाज्ञाः प्राणानपि स्वान् सुहृदस्तृणानि ॥२२॥

---

अत्र तादृशनिश्चयासम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिरलङ्कारस्तृतीयपादगतश्छेकानुप्रासस्त्यनुप्रासाभ्यां संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ।

"छाया सूर्य्यप्रिया कान्तिः प्रतिबिम्बमनातपः" इत्यमरः ॥२०॥

বাঙ্গালা—কোন কৃশাঙ্গী, নিজের হারের ভিতরে প্রথমে প্রতিবিম্বময় নলকে দেখিতে পাইল; পরে তিনি সরিয়া গেলে আর তাঁহাকে দেখিতে পাইল না; তাহার পর নলের চিন্তা দ্বারা ইহাই সে মনে মনে স্থির নিশ্চয় করিল যে, তিনি নিজেরই হৃদয়ে প্রবেশ করিয়াছেন ।৩০।

**অন্বয়ঃ**—रतीशः रति-प्रतिच्छन्दिततमासु अमूषु कथञ्चित् नूनं न निर्णीतरतिः (सन्) तच्छाय-सौन्दर्य्य-निपीत-धैर्य्याः अमूः प्रत्येकम् आलिङ्गत् ॥२१॥

तदिति । रतीशः कामः, रतेः स्वभार्य्यायाः प्रतिच्छन्दिततमासु अतिशयेन प्रतिच्छन्दिनीषु सर्व्वथैव रतितुल्यास्वित्यर्थः अमूषु अन्तःपुरसुन्दरीषु मध्ये, कथञ्चित् केनापि प्रकारेण, नूनं निश्चितमेव, न निर्णीता इदन्तया न निश्चिता रतिः स्वभार्य्या येन स तादृशः सन्, तच्छायस्य हारकेयूरादौ निपतितस्य नलप्रतिबिम्बस्य सौन्दर्य्येण निपीतं निःशेषेण नाशितं धैर्य्यं यासां ताः, अमूः अन्तःपुरसुन्दरीः, प्रत्येकं सर्व्वा एवेत्यर्थः, आलिङ्गत् आलिङ्गितवान् । अर्थोऽपि स्ववस्तुसन्देहे तत्सदृशानि सर्व्वाण्येव वस्तूनि गृह्णातीति कामोऽपि स्वरतिसन्देहादेव तत्सदृशीः सर्व्वा एवान्तःपुरसुन्दरीरालिङ्गदिति न दोष इति भावः । स्वस्वहारकेयूरादौ नलप्रतिबिम्बमावदर्शनादेव सर्व्वा कामवश्या जाता इति तु निष्कर्षः ।

अत्र तच्छायमात्रसौन्दर्य्येण धैर्य्यनाशासम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिः, रतिनिर्णयाभावं प्रति रतिप्रतिच्छन्दिततमास्विति पदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, तत्र च आर्थोपमा, नूनमित्युपादानात् वाच्या क्रियोत्प्रेक्षा चेत्येतेषामङ्गाङ्गिभावेन सङ्करः; सोऽपि च प्रथमपादगतेन छेकानुप्रासेन संसृज्यते । अर्थोत्कर्षस्य आरोहावरोहाभ्यामोजो गुणः, गौड़ी च रीतिः ।

तच्छायेति "विभाषा सेनासुरा—" इत्यादिना नपुंसकत्वम् । अतिशयेन प्रतिच्छन्दिन्य इति प्रतिच्छन्दिततमाः "तसिलादिषु—" इत्यादिना पुंवद्भावः ॥२१॥

বাঙ্গালা—নলের প্রতিবিম্বের সৌন্দর্য্যই সেই অন্তঃপুরস্থ রমণীগণের ধৈর্য্যনাশ করিয়াছিল এবং তাহারা সর্ব্বপ্রকারেই রতিদেবীর সদৃশী ছিল; তাই কামদেব তাহাদের মধ্যে নিজের স্ত্রীকে নির্ণয় করিতে না পারিয়াই তাহাদের প্রত্যেককে আলিঙ্গন করিয়াছিলেন ।৩১।

**অন্বয়ঃ**—तच्छायरूपाहित-मोह लीलाः अहस्मात् अपि तस्मात् न अतिबिभ्युः सुहृदः आहतमन्मथाज्ञाः (सत्यः) स्वान् प्राणान् अपि तृणानि एव मन्यन्ते ॥२२॥

तस्मादिति । तच्छायस्य नलप्रतिबिम्बस्वरूपेण सौन्दर्य्येण आहितौ जनितौ यौ मोहौ विचित्तताख्यः काम-विकारस्तेन लीलायमाना विनष्टस्वाभाविकभीरुभावा इत्यर्थः, अन्तःपुरसुन्दर्य्य इति शेषः, अहस्मादपि इन्द्रादीनां

आगर्त्ति तच्छायदृशां पुरा यः स्पृष्टे च तस्मिन् विससर्प कम्पः ।
द्रुतं द्रुते तत्पदशब्दभीत्या स्वहस्तितश्चारुदृशां परं सः ॥३३॥
उल्लासयन्तां स्पृष्टनलाङ्गसङ्गं तासां नलच्छायपिबापि दृष्टिः ।
यस्मैव रत्यास्तदनल्पि पत्या छेदेऽप्यबोधं यदहर्षि लोम ॥३४॥

---

यदिव दर्शनादीप्त्यादपि, तस्मात् नलात्, न प्रतिबिम्बात् नातिरिक्तं भयं प्रापुः ; प्रतिबिम्बं दृश्यते मूलपुरुषस्तु न दृश्यत इति भूतादिसम्भावनया अतिभयसम्भवेऽपीति भावः । ननु तथात्वेऽपि कथं नातिबिभ्युरित्याह— सुदृशः सुन्दरनयना युवत्यः, आदृताः सादरमङ्गीकृता मन्मथाज्ञाः कामादेशा याभिस्ताः तथोक्ताः सत्यः कामातुराः सत्य इत्यर्थः, स्वान् स्वकीयान्, प्राणानपि, तृणान्येव तृणस्वरूपाण्येव तृणवत् तुच्छान्येवेत्यर्थः, मन्यन्ते । तथा च याः कामार्त्ताः सत्यः स्वान् प्राणानपि तृणवदेव तुच्छान् मन्यन्ते, ताः कथं भूतादिसम्भावनामात्रेणैव अतिबिभीयुः, भयस्य प्राणान्तावधिकत्वादिति भावः ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः, अतिभयकारणादपि तदनुत्पत्तेर्विशेषोक्तिः, अतिभयाभावं प्रति तच्छायेत्यादिपदद्वयार्थौ हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, तृणानीति निरङ्गं केवलरूपकञ्च, इत्येतेषामङ्गाङ्गिभावेन सङ्करः । प्रसादो गुणः, वैदर्भी च रीतिः ॥३२॥

বাঙ্গালা—নলের প্রতিবিম্বের সৌন্দর্যই সেই সুন্দরীগণের মোহ জন্মাইয়াছিল এবং সেই মোহেই তাহারা চঞ্চল হইয়া পড়িয়াছিল ; তাই তাহারা অদৃশ্যমূর্ত্তি নল হইতেও অধিক ভয় পাইল না। দেখ— সুন্দরীরা কামের আদেশ গ্রহণ করিয়া, আপনাদের প্রাণকেও তৃণস্বরূপই মনে করিয়া থাকে ॥৩২॥

**অন্বয়ঃ**—তচ্ছায়দৃশাং চারুদৃশাং পুরা যঃ কম্পঃ আগর্ত্তি, তস্মিন্ স্পৃষ্টে চ যঃ কম্পঃ বিসসর্প, পরং সঃ কম্পঃ তস্মিন্ দ্রুতং দ্রুতে (সতি) তৎপদ-শব্দ-ভীত্যা স্বহস্তিতঃ ॥৩৩॥

आगर्त्तीति । तच्छायदृशां नलप्रतिबिम्बदर्शिनीनाम्, चारुदृशां सुन्दरनयनानां युवतीनाम्, पुरा पूर्वम्, यः कम्पः सात्त्विकभावविशेषः, आगर्त्ति इत्यवैयाकरणादौ नलस्य प्रतिबिम्बदर्शनादेव उदैति उदभूदित्यर्थः ; अनन्तरञ्च तस्मिन् नले, स्पृष्टे करकमलादालिङ्गिते च सति, यः सात्त्विकभावात्मकः कम्पः, विससर्प वृद्धिं प्रापः, दर्शनात् स्पर्शनस्याधिक्येन तत्कार्य्यस्य कम्पस्यापि तथैव युक्तत्वादिति भावः । परं तदनन्तरञ्च, स कम्पः, तस्मिन् नले, द्रुतं शीघ्रम्, द्रुते पुनरालिङ्गनसम्भावनाभयेन तत्स्थानादपसृते सति, तस्य नलस्य पदशब्दात् भीत्या अदृश्यस्यापि पदशब्दात् भूत एवायमिति भयेन, स्वहस्तित आयत्तीकृतः पूर्वं यः कम्पः सात्त्विकभावरूप आसीत् इदानीं स एव कम्पो भयजनित एव जात इत्यर्थः ।

अत्र कम्परूपस्य सात्त्विकभावस्य तादृशसुन्दरीगतरतिभावाङ्गत्वात् प्रेयो नामालङ्कारः द्रुतं द्रुत इति छेकानुप्रासेन संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ।

आगर्त्तीति पुराशब्दयोगात् "पुरीयागतस्य" इत्यतीते वर्त्तमाना । स्वहस्तितोऽस्य सञ्जात इति तारकादित्वादितच् प्रत्ययः ॥३३॥

বাঙ্গালা—সুন্দরীরা পূর্ব্বে যখন কেবল নলের প্রতিবিম্ব দেখিয়াছিল, তখন তাহাদের যে কম্প জন্মিয়াছিল এবং নলকে স্পর্শ করিলে পর যে কম্প বৃদ্ধি পাইয়াছিল ; পরে আবার সেই কম্পকেই তিনি দ্রুত সরিয়া গেলে তাঁহার পদশব্দের ভয়ে আয়ত্ত করিল ॥৩৩॥

यस्मिन्नलस्पृष्टकमेत्य हृष्टा भूयोऽपि तं देशमगान्मृगाक्षी ।
निपत्य तत्रास्य धरारजःस्थे पदे प्रसीदेति शनैरवादीत् ॥३५॥

अन्वयः—रत्याः पत्या स्पृष्टनलाङ्गं तासां अङ्गम् उल्लास्यताम्, नलच्छायपिबा तासां दृष्टिः अपि उल्लास्यताम्, (तत्र न आश्चर्य्यम्, किन्तु) छिन्ने अपि अबोधं लोम यत् अहर्षि, तत् अश्मा एव अनर्त्ति ॥३४॥

उल्लास्यतामिति । रत्यः रतिदेव्याः पत्या स्वामिना कामेन, स्पृष्टं नलस्य अङ्गं येन तत् तादृशम्, तासाम् अन्तःपुरसुन्दरीणाम्, अङ्गम्, उल्लास्यतां निरतिशयसुखोदयात् स्फीतीक्रियताम् ; तथा नलच्छायं नलस्य प्रतिबिम्बं पिबति सादरं पश्यतीति सा तादृशी, तासामन्तःपुरसुन्दरीणाम्, दृष्टिरपि, उल्लास्यतां भूयोदर्शनाशया विकास्यताम् नाम । तत्र न किञ्चिदाश्चर्य्यं सम्भवपरत्वादिति भावः । किन्तु छेदे नलेन सह तासां विच्छेदे एव च्छेदः कर्त्तनं तस्मिन् सत्यपि, अबोधम् अचेतनमेव अबोधं स्वल्पबोधम्, लोम तासां रोम, यत् अहर्षि रोमाञ्चभावेन उद्गमितं तदेव च हर्षितं तेनैव कामेन हर्षं प्रापितमिति यावत्, तत् अश्मा प्रस्तर एव, अनर्त्ति नर्त्तितः कामेन नृत्यं प्रापितः । तथा च अचेतनस्य प्रस्तरस्य नर्त्तनं यथा अतीवाश्चर्य्यम्, तथा दारुणदुःखदायके कर्त्तने जातेऽपि अचेतनस्यैव लोम्नो हर्षजननम् अतीवाश्चर्य्यमित्याशयः । नलाङ्गस्पर्शप्रतिबिम्बदर्शनादिना तासां रोमाञ्चोऽपि जात इति स्थूलार्थः ।

अत्र उल्लास्यतामित्येकया क्रियया अङ्गदृष्ट्योः कर्म्मतयाभिसम्बन्धात् तुल्ययोगिता, वस्तुतस्तत्र पाषाणनर्त्तनाभावात् 'अहर्षि अनर्त्ति' इत्यनयोरेककर्त्तृत्वसम्बन्धोऽसम्भवन् पाषाणनर्त्तनमिव लोमहर्षणमिति सादृश्यं बोधयतीत्यसम्भवद्वस्तुसम्बन्धा निदर्शना, विच्छेदकर्त्तनयोः रोमाञ्चजननानन्दजननयोश्च भेदेऽपि च्छेदाहर्षिपदयोः श्लेषेणाभेदाध्यवसायादतिशयोक्तिः, अचेतने आनन्दजननमिति विरोधात् उद्गमजननमिति च तत्समाधानाद्विरोधाभासश्च ; इत्येतेषामङ्गाङ्गिभावेन सङ्करः । सोऽपि तृतीयपादगतच्छेकानुप्रासेन संसृज्यते । अन्यार्थस्य दुरूहत्वादोजो गुणः, गौड़ी च रीतिः ।

पिबेति उपसर्गाधिकारस्यानादरणात् "घेट्दृशिपाघ्राध्मः शः" इति पिबतेः शप्रत्यये सार्वधातुकत्वाभावात् "पः पिब" इति पिबादेशः ॥३४॥

বাঙ্গালা—কামদেব সেই অন্তঃপুরস্থ সুন্দরীগণের নলস্পর্শী অঙ্গকে স্ফীত করুন, কিম্বা নলের প্রতিবিম্বদর্শী দৃষ্টিকেও প্রসারিত করুন ; ( তাহাতে কোনই আশ্চর্য্য ছিল না ; কিন্তু ) ছেদ ( বিয়োগ এবং কর্ত্তন ) হইলেও, তাহাদের অচেতন লোমগুলিকে যে হর্ষিত করিয়াছিলেন, তাহা পাথরই নাচাইয়াছিলেন ( সুতরাং তাহাই আশ্চর্য্য হইয়াছিল ) ॥৩৪॥

अन्वयः—मृगाक्षी यस्मिन् नलस्पृष्टकम् एत्य हृष्टा (जाता), भूयः अपि तं देशम् अगात् ; (गत्वा च ) तत्र धरारजःस्थे अस्य पदे निपत्य 'प्रसीद' इति शनैः अवादीत् ॥३५॥

यस्मिन्निति । मृगाक्षी हरिणलोचना काचित् युवतिः, यस्मिन् देशे, नलस्य स्पृष्टकम् आलिङ्गनविशेषम्, एत्य प्राप्य, हृष्टा आनन्दिता जाता ; भूयः पुनरपि, तं देशम्, अगात् तादृशस्यैवालिङ्गनस्य पुनर्लाभाशया गतवती । गत्वा च तत्र देशे, धरारजःस्थे भूतलधूलिस्थिते, अस्य नलस्य, पदे पदचिह्ने, निपत्य पतित्वा, प्रसीद यस्येदं पदचिह्नं स त्वं मां प्रति प्रसन्नो भव इति शनैः अन्यैः श्रवणाशङ्कया मन्दम्, अवादीत् उक्तवती ।

अत्र हर्षाख्यभावोदयाशाबोदयः, तादृशवदनासम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिस्तानयोरङ्गाङ्गिभावेन सङ्करः प्रथमार्द्धगतच्छेकानुप्रासेनासौ संसृष्टः । प्रसादो गुणः, वैदर्भी च रीतिः ।

स्पृष्टकमुक्तं कामशास्त्रे— "सम्मुखागतायां प्रयोज्यायामन्यापदेशाद्गच्छतो नरस्य । गात्रेण गात्रं घट्टते यदेतत् आलिङ्गनं स्पृष्टकमाहुराचार्य्याः" ॥३५॥

ভ্রমন্নমুষ্যামুপকারিকায়াম্ আয়স্য ভৈমীবিরহাৎ ক্রশীয়ান্।
অসৌ মুহুঃ সৌধপরম্পরাণাং ব্যধত্ত (১) বিশ্রান্তিমুপত্যকাসু (২) ॥৩৬॥
উল্লিখ্য হংসেন দলে নলিন্যাঃ তস্মৈ যথাদর্শি তথৈব ভৈমী।
তেনাভিলিখ্যোপহৃতস্বহারা কস্যা ন হৃষ্টাজনি বিস্ময়ায় ॥৩৭॥
কৌমারগন্ধীনি নিবারয়ন্তী বৃত্তানি রোমাবলিবৈন্নবিদ্ধা।
সালিখ্য তেনৈক্ষত যৌবনীয়-দ্বাঃস্থামবস্থাং পরিবেতুকামা ॥৩৮॥

---

বাঙ্গালা—হরিণনয়না কোন রমণী যে স্থানে নলের আলিঙ্গন লাভ করিয়া আনন্দিত হইয়াছিল; আবারও সে সেই স্থানে গেল; যাইয়া সেই স্থানে ধূলির উপরে স্থিত নলের পদচিহ্নের নিকটে বসিয়া আস্তে আস্তে বলিল যে, "তুমি আমার প্রতি প্রসন্ন হও" ॥৩৫॥

অন্বয়ঃ—ভৈমীবিরহাৎ ক্রশীয়ান্ অসৌ অমুষ্যাম্ উপকারিকায়াং ভ্রমন্ আয়স্য সৌধপরম্পরাণাম্ উপত্যকাসু মুহুঃ বিশ্রান্তিং ব্যধত্ত ॥৩৬॥

ভ্রমন্নিতি। ভৈম্যা দময়ন্ত্যা বিরহাৎ বিরহদুঃখাৎ, ক্রশীয়ান্ অতিশয়েন কৃশঃ; অতএব চ দুর্বলত্বাদায়াসী মুহুর্বিশ্রান্তিবিধানঞ্চেতি ভাবঃ; অসৌ নলঃ, অমুষ্যাং তস্যাম্, উপকারিকায়াম্ অন্তঃপুরে, ভ্রমন্ দময়ন্ত্যা দর্শনায় বিচরন্, আয়স্য পরিশ্রম্য, সৌধপরম্পরাণাম্ অট্টালিকাশ্রেণীনাম্, উপত্যকাসু আসন্নভূমিষু। এতেন সৌধানাং পর্বতসমানোচ্চত্বং সূচিতম্। মুহুর্বারং বারং, বিশ্রান্তিং বিশ্রামম্, ব্যধত্ত অকরোৎ।

অত্র আয়াসং বিশ্রামবিধানঞ্চ প্রতি ক্রশীয়ানিতি পদস্যার্থো হেতুরিতি পদার্থহেতুকং কাব্যলিঙ্গমলঙ্কারঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ।

"সৌধোঽস্ত্রী রাজসদনমুপকার্য্যোপকারিকা" ইত্যমরঃ ॥৩৬॥

বাঙ্গালা—দময়ন্তীর বিরহে অত্যন্ত কৃশ নল, সেই অন্তঃপুরে ভ্রমণ করিতে করিতে পরিশ্রান্ত হইয়া, অট্টালিকাশ্রেণীর নিকটবর্ত্তি ভূমিতে বার বার বিশ্রাম করিতে লাগিলেন ॥৩৬॥

অন্বয়ঃ—হংসেন নলিন্যাঃ দলে উল্লিখ্য তস্মৈ যথা আদর্শি, তেন তথা এব অভিলিখ্য উপহৃত-স্বহারা ভৈমী হৃষ্টা (সতী) কস্যাঃ বিস্ময়ায় ন অজনি ॥৩৭॥

উল্লিখ্যেতি। হংসেন পক্ষিণা, নলিন্যা দলে পদ্মিন্যাঃ পত্রে, উল্লিখ্য চিত্রয়িত্বা, তস্মৈ নলায়, যথা অদর্শি পূর্বং দর্শিতা; তেন নলেন, তথৈব তদ্রূপৈব অভিলিখ্য হৃষ্টাদিনা ভূমৌ চিত্রয়িত্বা, উপহৃত উপহারভাবেন দত্তঃ স্বহারো নিজমুক্তামালা যস্যাঃ সা তাদৃশী, ভৈমী দময়ন্তী, হৃষ্টা সতী, কস্যা অন্তঃপুরস্ত্রিয়াঃ, বিস্ময়ায় আশ্চর্য্যমিত্যাশ্চর্য্যায়, ন অজনি জাতা, অপি তু সর্বাসামেবাজনীত্যর্থঃ। নলঃ খলু বিশ্রামকালে চিত্তবিনোদনায় এবং কৃতবানিতি ভাবঃ।

অত্র অর্থাপত্তিরলঙ্কারঃ, পূর্বরাগো রসঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৩৭॥

বাঙ্গালা—পূর্বে হংস পদ্মপত্রে চিত্র করিয়া নলকে যেমন দেখাইয়াছিল; নলও তেমন ভাবেই ভূমিতে দময়ন্তীকে চিত্র করিয়া, তাহার গলদেশে নিজের হার দিয়া রাখিলেন, সেই প্রতিমূর্ত্তি দেখিয়া কোন্ রমণীর বিস্ময় না জন্মিল? ॥৩৭॥

---

(১) আধত্ত। (২) অধিত্যকাসু।

**पश्याः पुरन्ध्रीः प्रति सान्द्र-चन्द्र-रजः-कृत-क्रीड़-कुमार-चक्रे ।**
**चित्राणि चक्रेऽध्वनि चक्रवर्त्ति-चिह्नं तदङ्घ्रिप्रतिमासु चक्रम् ॥३९॥**

---

**अन्वयः** —तेन यौवनीय-द्वास्थाम् अवस्थां परिचेतुकामा रोमावलि-वेत्र-चिह्ना कौमारकर्म्माणि कृतानि निवारयन्ती सा आलिख्य ऐक्ष्यत ॥३८॥

कौमारेति । तेन नलेन, यौवनीयायां यौवनसम्बन्धिन्यां द्वारि द्वारदेशे यौवनप्रादुर्भावप्रारम्भ इत्यर्थः अथवा पुरोद्वारदेशे तिष्ठतीति ताम् अवस्थां क्रमकटित्वस्य् अनितम्बत्वादिदशाम् अथवा यातायातकारिणीं भावम्, परिचेतुमनुभवितुम् अवगन्तुञ्च कामोऽभिलाषो यस्याः सा, रोमावलिर्लोमश्रेणिरेव वेत्रं क्रमत्वात् सरलत्वाच्च वेतसलता सैव चिह्नं यस्याः सा, तथा कौमारस्य बाल्यवयसः गन्धो लेशोऽपि एषामस्तीति तानि, कृतानि खेलासरलतादि-व्यवहाराम् बालकानामपि प्रवेशादिषेधाय, निवारयन्ती परित्यजन्ती प्रतिषेधन्ती च, सा दमयन्ती प्रतिहारिणी च, आलिख्य चित्रयित्वा, ऐक्ष्यत अदृश्यत ; अनुरागाधिक्यादिति भावः ।

अत्र रोमावल्या वेत्रत्वारोपः श्राब्दः, दमयन्त्यां प्रतिहारित्वारोपस्तु आर्थ इत्येकदेशविवर्त्ति रूपकमलङ्कारः, चतुर्थपादे च्छेकानुप्रासश्चेत्यनयोः संसृष्टिः । पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ।

"स्त्री द्वार्द्वारं प्रतिहारः" इत्यमरः ।

परिचेतुकामेति "तुमः काममनसोः" इति तुमो मलोपः ॥३८॥

**বাঙ্গালা**—যৌবনের প্রথমদ্বারস্থিত অবস্থা অনুভব করিতে ইচ্ছু, লোমশ্রেণীরূপ-বেত্রচিহ্নধারিণী এবং বাল্যব্যবহারের লেশও থাকে এমন সমস্ত ব্যবহারের পরিত্যাগকারিণী দময়ন্তীকে চিত্র করিয়া, নল তাহাকে দেখিতেছিলেন ॥৩৮॥

**अन्वयः**—सान्द्र-चन्द्र-रजः-कृत-क्रीड़-कुमार-चक्रे अध्वनि तदङ्घ्रिप्रतिमासु चक्रवर्त्ति-चिह्नं चक्रम्, पश्याः पुरन्ध्रीः प्रति चित्राणि चक्रे ॥३९॥

पश्या इति । सान्द्राणि घनानि यानि चन्द्ररजांसि कर्पूरपरागास्तैः कृता क्रीड़ा कणिकायां समविन्यासरूपा खेला येन तादृशं कुमारचक्रं बालकसमूहो यत्र तस्मिन् तथोक्ते, अध्वनि पथि, तस्य नलस्य अङ्घ्रिप्रतिमासु पादतलप्रतिमूर्त्तिषु, चक्रवर्त्तिनः सार्वभौमस्य चिह्नं लक्षणस्वरूपम्, चक्रं चक्राकारा रेखा कर्त्तृ, पश्यात्सदेव पश्यन्तीः, पुरन्ध्रीः प्रौढ़ा गृहिणीः, प्रति लक्ष्यीकृत्य, चित्राणि आश्चर्य्याणि, चक्रे चकार, केन सार्वभौमेनाव विचरितमिति विस्मयाम् जनयामासेत्यर्थः । दर्शनाभावे आश्चर्य्यासम्भवात् पश्या इत्युक्तम् । बालिकानां युवतीनाञ्च चक्ररेखादर्शनमात्रेणैव चक्रवर्त्ति विचरणज्ञानासम्भवात् प्रौढ़त्वज्ञापनाय पुरन्ध्रीरित्यभिहितम् । सान्द्रत्वाभावे रेखापातासम्भवात् सान्द्रपदमुपात्तम् । पार्थिवरजसि रेखायाः सुस्पष्टानु-भवासम्भवात् चन्द्रपदञ्च प्रयुक्तम् ।

अत्रपञ्चम परिकरालङ्कारश्छेकानुप्रासो वृत्त्यनुप्रासश्चेति तेषां संसृष्टिः । बन्धार्थस्य प्रगाढ़त्वादोजो गुणः, गौड़ी च रीतिः ।

"स्यात् कुटुम्बिनी । पुरन्ध्री" "अथ कर्पूरमस्त्रियाम् । घनसारश्चन्द्रसंज्ञः" "चक्रवर्त्ती सार्वभौमः" इत्यमरः ।

पश्या इति उपसर्गाभावेऽपि "घ्रेड़्दृशिपाघ्राध्माः शः" इत्यनेनैव शप्रत्ययः । तथा च तत्र दुर्गः—"कथं पश्यः अन्यत्रापीतिवचनात्" ॥३९॥

**বাঙ্গালা**—রাজকুমারগণ ঘন কর্পূরের রেণু সকল সমান ভাবে সাজাইয়া সাজাইয়া যে

तारुण्यपुण्यामवलोकयन्त्योः अन्योन्यमेणीनयनयोरभिख्याम् ।
मध्ये मुहूर्त्तं स बभूव गच्छन् आकस्मिकाच्छादनविस्मयाय ॥४०॥
पुरःस्थितस्य क्वचिदस्य भूषा-रत्नेषु नार्यः प्रतिबिम्बितानि ।
व्योमन्यदृश्येषु निजान्यपश्यन् विस्मित्य विस्मित्य सहस्रकृत्वः ॥४१॥
तस्मिन् विवस्त्रार्यपथात्तपातं तदङ्गरागच्छुरितं निरीक्ष्य ।
विश्वं रतामापुरपि स्मरस्याः (१) स्थितं मिथः कन्दुकमिन्दुमुख्यः ॥४२॥

---

পথে খেলা করিয়াছিল, সেই পথে সেই রেণুরাশির উপরে নলের চরণতলের প্রতিমূর্তিগুলিতে চক্রবর্তীর লক্ষণস্বরূপ চক্রাকার রেখা সকল, তাহা দেখিবার সময়ে গৃহিণীগণের বিস্ময় জন্মাইয়াছিল ॥৩৯॥

**অন্বয়ঃ**—তারুণ্যপুণ্যাম্ অভিখ্যাম্ অন্যোন্যম্ অবলোকয়ন্ত্যোঃ এণীনয়নয়োঃ মধ্যে মুহূর্তং গচ্ছন্ সঃ আকস্মিকাচ্ছাদন বিস্ময়ায় বভূব ॥৪০॥

তারুণ্যেতি । তারুণ্যেন যৌবনেন পুণ্যাং মনোহরাম্, অভিখ্যাম্ উভয়োরেব শোভাম্, অন্যোন্যং পরস্পরম্, অবলোকয়ন্ত্যোঃ পশ্যন্ত্যোঃ, এণীনয়নয়োঃ হরিণনয়নয়োঃ কয়োশ্চিত্ যুবত্যোঃ, মধ্যে মুহূর্তং অল্পকালম্, গচ্ছন্ সঃ নলঃ, আকস্মিকেন হঠাদুৎপন্নেন আচ্ছাদনেন পরস্পরাবরণেন বিস্ময়ায় কিমিদমিতি তয়োরাশ্চর্য্যায় বভূব । অদৃশ্যোঽপি নলেন কৌতুকাদ্যনৈব স্বেচ্ছয়া তয়োরাচ্ছাদনং কৃতমিত্যবধেয়ম্ ।

অত্র তারুণ্যপুণ্যামিতি ছেকানুপ্রাসোঽলঙ্কারঃ । প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ।

"পুণ্যং মনোজ্ঞেঽভিহিতং তথা সুকৃতধর্ময়োঃ" ইতি বিশ্বঃ ॥৪০॥

**বাঙ্গালা**—হরিণনয়না দুইটী যুবতি পরস্পর আপনাদের যৌবনের মনোহর শোভা দেখিতেছিল, এমন সময়ে নল তাহাদের মধ্য দিয়া ক্ষণকাল যাইতে থাকিয়া, অকস্মাৎ দুই জনেরই আবরণ করায় তাহাদের বিস্ময় জন্মাইয়াছিলেন ॥৪০॥

**অন্বয়ঃ**—ক্বচিৎ নার্য্যঃ পুরঃস্থিতস্য অস্য অদৃশ্যেষু ভূষারত্নেষু নিজানি প্রতিবিম্বিতানি বিস্মিত্য বিস্মিত্য সহস্রকৃত্বঃ ব্যোমনি অপশ্যন্ ॥৪১॥

পুর ইতি । ক্বচিৎ স্থানে, নার্য্যঃ বদনাঃ পুরস্থিতঃ, পুরঃস্থিতস্য সম্মুখবর্তিনঃ, অস্য নলস্য, দৃশ্যরহিতেষ্বপি, ভূষারত্নেষু অলঙ্কারমণিষু নিজানি স্বকীয়ানি, প্রতিবিম্বিতানি প্রতিবিম্বানি, বিস্মিত্য বিস্মিত্য শূন্যে কথমত্র প্রতিবিম্বানি বর্তন্ত ইতি বিস্ময়ং প্রাপ্য প্রাপ্য, সহস্রকৃত্বঃ সহস্রবারম্, ব্যোমনি আকাশে অপশ্যন্ ।

অত্র নারীপক্ষে আধারভূতানাং প্রতিবিম্বানামাধারেয়ত্বেন বর্ণনাৎ বিশেষো নামালঙ্কারঃ ; "যদ্বাধেয়মনাধারম্" ইত্যাদিলক্ষণাৎ । প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ।

কৌতুকাৎ মণিরেব প্রতিবিম্বানাং করণানীতি প্রতিবিম্বিতানি, করোত্যর্থে নসাৎ প্রতিবিম্বশব্দাৎ ভাবে ক্তঃ । সহস্রকৃত্ব ইতি "বারস্য সংখ্যায়াঃ কৃত্বস্" ইতি কৃত্বসুপ্রত্যয়ঃ ॥৪১॥

**বাঙ্গালা**—কোন স্থানে রমণীরা, সম্মুখস্থিত নলের অলঙ্কারের অদৃশ্য রত্নসমূহের মধ্যে আপনাদের প্রতিবিম্বগুলিকে, বিস্মিত হইয়া হইয়া, সহস্রবার শূন্যে দেখিল ॥৪১॥

**অন্বয়ঃ**—ইন্দুমুখ্যঃ তস্মিন্ বিবস্ত্র অর্যপথাত্তপাতং তদঙ্গরাগচ্ছুরিতং কন্দুকং নিরীক্ষ্য মিথঃ স্থিতং স্মরস্যাঃ অপি বিশ্বং রতাম্ আপুঃ ॥৪২॥

---

(১) অবিস্মরন্ত্যঃ ।

पुंसि स्वभर्त्तुर्व्यतिरिक्तभूते भूत्वाप्यनीक्षानियमव्रतिन्यः ।
छायासु रूपं भुवि वीक्ष्य तस्य फलं दृशोरानशिरे महिष्यः ॥४३॥
विलोक्य तच्छायमतर्कि ताभिः पतिं प्रति स्वं वसुधापि धत्ते ।
यथा वयं किं मदनं तथैनं त्रिनेत्र-नेत्रानल-कील-नीलम् ॥४४॥

---

तस्मिन्निति । इन्दुमुख्यश्चन्द्रवदना युवत्यः, तस्मिन् सम्मुखवर्त्तिनि नले, विषज्य लगित्वा, अर्द्धपथ एव आत्तो गृहीतः पातः पतनं येन तम्, तथा तस्य नलस्य अङ्गरागेण कुङ्कुमादिना चर्च्चितं रञ्जितम्, कन्दुकं लीलागुटिकाम्, निरीक्ष्य दृष्ट्वा, मिथः परस्परं प्रति, क्षिप्तं स्वयं स्वयमेव सञ्चालितम्, अस्मार्षुः अपि अयमेव मया त्वां प्रति क्षिप्त इति पूर्व्वानुभवादेव अस्मार्षुरित्यर्थः, विस्मेरतां कथमयं यां प्रति क्षिप्तस्तत्र न गत्वा अर्द्धपथ एव पतितः स्वयं वा अङ्गरागेण रञ्जित इति विस्मयम्, आपुः प्रापवत्यः ।

अत्र द्वितीयार्द्धे च्छेकानुप्रासोऽलङ्कारः । माधुर्य्यं गुणः, वैदर्भी च रीतिः ।

द्वितीयपादे अपिशब्दः समुच्चये । विस्मेरतामिति विपूर्व्वस्य स्मिधातोः "दीपिकम्प्यजसिहिंसिकमिस्मिनमां रः" इति रप्रत्यये रूपम् ॥४२॥

বাঙ্গালা—চন্দ্রবদনা যুবতিরা পরস্পরের প্রতি পরস্পর খেলার গুটি নিক্ষেপ করিয়াছিল; কিন্তু সে গুটি নলের গায়ে লাগিয়া, তাঁহার অঙ্গরাগে রঞ্জিত হইয়া, অর্দ্ধপথেই পড়িয়া গিয়াছিল; তাহা দেখিয়া তাহারা 'ইহা আমরাই পরস্পর নিক্ষেপ করিয়াছিলাম' এইরূপ স্মরণ করিয়া বিস্ময়াপন্ন হইল ॥৪২॥

**अन्वयः** — महिष्यः स्वभर्त्तुर्व्यतिरिक्तभूते पुंसि अनीक्षानियमव्रतिन्यः भूत्वा अपि भुवि तस्य छायासु रूपं वीक्ष्य दृशोः फलम् आनशिरे ॥४३॥

पुंसीति । महिष्यो भीमराजभार्य्याः, स्वभर्त्तुर्निजपतेर्भीमराजात् व्यतिरिक्तभूते भिन्नरूपे, पुंसि पुरुषे, अनीक्षा अदर्शनमेव नियमस्तद्रूपं व्रतमासामस्तीति तास्तथोक्ताः, भूत्वापि, भुवि मणिमयभूतले, अतएव प्रतिबिम्बपातसम्भव इति बोध्यम्; तस्य नलस्य, छायासु प्रतिबिम्बेषु, रूपं सौन्दर्य्यम्, वीक्ष्य दृष्ट्वा, दृशोश्चक्षुषोः, फलं साफल्यम्, आनशिरे प्रापवत्यः । छायायाः पुरुषत्वाभावान्न तद्दर्शने तासां व्रतभङ्ग इति भावः ।

अत्र दृशोः फलप्राप्तिं प्रति वीक्ष्येति पदार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ।

ननु अनीक्षानियम एव व्रतं यासामिति बहुव्रीहिणैवोपपत्तौ "न कर्म्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेदर्थप्रतिपत्तिकरः" इत्युक्तेर्व्रतिन्य इति कथं मत्वर्थीय इन्प्रत्ययः । सत्यम्, अत्र प्रशंसायां मत्वर्थीय इन्प्रत्ययः । स च प्रशंसार्थो बहुव्रीहिणा प्रतिपादयितुं न शक्यते तस्यान्यार्थमात्रप्रतिपादने पर्य्यवसितत्वात् । अतएवात्र "बहुव्रीहिश्चेदर्थप्रतिपत्तिकरः" इत्युक्तम् । आनशिरे इति "अश व्याप्तौ" इत्यस्माद्धातोः परोक्षाया इरे, "अश्नोतेश्च" इत्यभ्यासान्नुडागमे रूपम् ॥४३॥

বাঙ্গালা—রাজমহিষীরা, নিজপতিভিন্ন অপর পুরুষের অদর্শনরূপ ব্রতশালিনী হইয়াও, মণিময় ভূতলে নলের প্রতিবিম্বগুলিতে তাঁহার সৌন্দর্য্য দেখিয়া, চোখ দুইটীর ফল লাভ করিয়াছিলেন ॥৪৩॥

**अन्वयः**—ताभिः तच्छायं विलोक्य 'यथा वयं स्वं पतिं प्रति मदनं (दध्महे) तथा वसुधा अपि स्वं पतिं प्रति त्रिनेत्र-नेत्रानलकील-नीलं एनं मदनं किं धत्ते' (इति) अतर्कि ॥४४॥

रूपं प्रतिच्छायिकयोपनीतम् आलोकि ताभिर्यदि नाम कामम् ।
तथापि नालोकि तदस्य रूपं हारिद्रभङ्गाय वितीर्णभङ्गम् ॥४५॥
भवत्यहय्याः प्रतिविम्बदेह-व्यूहं वितन्वन् मणिकुट्टिमेषु ।
पुरं परस्य प्रविशन् वियोगी योगीव चित्रं स रराज राजा ॥४६॥

---

विलोक्येति । ताभिर्भैमीरजनसखीभिः, तच्छायं तस्य नलस्य छाया तच्छायम्, विलोक्य दृष्ट्वा, यथा वयं भैमीराजमहिष्यः स्वं निजम्, पतिं भैमम्, प्रति उद्दिश्य, मदनं कामं दधाहे इति शेषः, तथा वसुधा पृथिव्यपि, स्वं पतिं भैममिव, प्रति उद्दिश्य, विनेत्रस्य महादेवस्य यो नेत्रानलो नयनाग्निस्तस्य कीलेन ज्वालया नीलं श्याम-वर्णीभूतम्, अतएव नीलायाम्छायायाः सादृश्यमिति भावः, एनं छायात्मकम्, मदनं कामम्, किं धत्ते धारयति, इति अतर्कि मनसा तर्कितम्, तच्छायमदनयोः समानसौन्दर्यादित्याशयः ।

अत्र वाच्या क्रियोत्प्रेक्षा श्रौतीपमा चानयोरङ्गाङ्गिभावेन सङ्करः ; चतुर्थचरणे लाटानुप्रासश्छेकानुप्रासौ छन्दनुप्रासश्चेत्येतेषामेकाश्रयानुप्रवेशरूपः सङ्करः ; तयोः सङ्करयोरपि मिथो निरपेक्षतया संसृष्टिः । पुसादो गुणः, वैदर्भी च रीतिः ।

"नक्रे हंश्रीज्वालकीलौ" इत्यमरः ॥४४॥

বাঙ্গালা—রাজমহিষীরা ভূতলে নলের ছায়া দেখিয়া মনে মনে এইরূপ তর্ক করিলেন যে, আমরা যেমন নিজের পতিকে লক্ষ্য করিয়া কাম ধারণ করিয়া থাকি ; তেমন পৃথিবীও কি নিজের স্বামীকে লক্ষ্য করিয়া, মহাদেবের নয়নাগ্নির দাহে শ্যামবর্ণ এই কামকে ধারণ করিতেছেন ॥৪৪॥

**অন্বয়:**—यदि नाम ताभिः प्रतिच्छायिकया उपनीतं रूपं कामम् आलोकि, तथापि हारिद्रभङ्गाय वितीर्णभङ्गम् अस्य तत् रूपं न आलोकि ॥४५॥

रूपमिति । यदि नाम यद्यपि, ताभिर्महिषीभिः, प्रतिच्छायिकया प्रतिबिम्बेन, उपनीतम् उपस्थापितम्, रूपं नलस्य सौन्दर्यम्, कामं प्रतिबन्धकाभावात् पर्याप्तं यथा स्यात्तथा, आलोकि दृष्टम् ; तथापि, हरिद्राया अयमिति हारिद्रः स चासौ भङ्गश्छेदश्चेति तस्मै, हरिद्रायाश्छिन्नखण्डायेत्यर्थः । अच्छिन्नहरिद्राया मालिन्यदर्शनात् भङ्गपदम् । वितीर्णो दत्तः भङ्गः पराजयो येन तत्तादृशम् अतीवगौरमिति तात्पर्य्यम्, अस्य नलस्य, तत् प्रसिद्धम्, रूपम् आकारः, न आलोकि प्रत्यक्षाभावात् न दृष्टम् । तेन प्रतिबिम्बदर्शनमात्रेणैव महिषीणामेतावानानन्दः, न जाने प्रत्यक्षरूपदर्शनेन कियान् भवेदिति भावः ।

अत्र हारिद्रभङ्गाय भङ्गवितरणासम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिः, यद्यपि रूपमालोकि तथापि रूपं नालोकीति विरोधात् रूपस्य प्रतिच्छायाभावेन मूलभावेन च तत्समाधानाद्विरोधाभासश्च ; अनयोरङ्गाङ्गिभावेन सङ्करः ; सोऽपि पुनश्चतुर्थपादगतच्छेकानुप्रासेन संसृज्यते । बन्धोत्कर्षस्य आरोहावरोहाभ्यामोजो गुणः, गौडी च रीतिः ।

"भङ्गः पलायनं वीचिर्भङ्गः प्रभेद भञ्जनम्" इत्यनेकार्थध्वनिमञ्जरी ॥४५॥

বাঙ্গালা—যদিও রাজমহিষীরা প্রতিবিম্বকর্তৃক আনীত নলের রূপটীকে পর্য্যাপ্ত ভাবেই দেখিয়াছিলেন ; তথাপি তাঁহারা ছিন্ন হরিদ্রার পরাজয়কারী নলের সেই মূল আকৃতি দেখেন নাই ॥৪৫॥

**অন্বয়:**—वियोगी स राजा योगी इव अहय्याः भवन्, मणिकुट्टिमेषु प्रतिबिम्बदेहव्यूहं वितन्वन्, परस्य पुरं प्रविशन्, चित्रं रराज ॥४६॥

पुमानिवास्पर्शि मया भ्रमन्त्या छाया मया पुंस इव व्यलोकि ।
ब्रुवन्निवातर्कि मयापि कश्चित् इति स्म स स्त्रैणगिरः शृणोति ॥४७॥
अम्बां प्रणत्योपनता नताङ्गी नलेन भैमी पथि योगमाप ।
स भ्रान्तिभैमीषु न तां व्यविक्त (१) सा तञ्च नादृश्यतया ददर्श ॥४८॥

---

भवन्निति । वियोगी दमयन्तीविरहदुःखी स राजा नलः, योगी योगसिद्धो मुनिरिव, अदृश्य इन्द्रादीनां वरात् अणिमाद्यैश्वर्यवशेनान्तर्धानाच्च दर्शनायोग्यो भवन्, मणिकुट्टिमेषु मणिबद्धभूमिषु, प्रतिबिम्बभूता ये देहास्तेषां व्यूहं समूहं कृत्रिमदेहसमूहञ्च, वितन्वन् चलनात् प्रयोजनविशेषाच्च विस्तारयन्नुत्पादयन्, परस्य भीमराजस्य जनान्तरस्य च, पुरं गृहं शरीरञ्च, प्रविशन् दमयन्त्यन्वेषणाय कार्य्यविशेषाय च अन्तर्गच्छन्, चित्रमाश्चर्यं यथा स्यात्तथा, रराज शुशुभे । वियोगी भवन्नपि यद् योगी सन् योगीव रराज, तच्चित्रमिति व्यज्यते ।

अत्र पूर्णोपमालङ्कारो द्वितीयार्द्धगतच्छेकानुप्रासेन संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ।

"पुरं शरीरे नगरे गृहपाटलिपुत्रयोः । पुरस्तु गुग्गुलौ" इति हेमचन्द्रः ॥४६॥

বাঙ্গালা—দময়ন্তীর বিরহে দুঃখী সেই রাজা নল, যোগী পুরুষের ন্যায় অদৃশ্য হইয়া, মণিময় ভূমিতে প্রতিবিম্বরূপ দেহসমূহ বিস্তৃতভাবে উৎপাদন করিয়া, অন্যের গৃহে (শরীরে) প্রবেশ করতঃ, আশ্চর্য্যরূপে শোভা পাইতে লাগিলেন ॥৪৬॥

अन्वयः—भ्रमन्त्या मया पुमान् इव अस्पर्शि, मया पुंसः इव छाया व्यलोकि, मया अपि कश्चित् ब्रुवन् इव अतर्कि, इति स्त्रैणगिरः सः शृणोति स्म ॥४७॥

पुमानिति । भ्रमन्त्या पथि विचरन्त्या मया, पुमान् कश्चित् पुरुष इव, अस्पर्शि स्पृष्टः, तदङ्गस्पर्शानुभवादिति भावः । इति कस्याश्चिद्वाक्यम् । मया पुंसः पुरुषस्येव, छाया प्रतिबिम्बम्, व्यलोकि मणिमयभूमौ विलोकिता ; स्त्रीप्रतिबिम्बापेक्षया तत्प्रतिबिम्बस्य वैलक्षण्यादित्याशयः । इत्यपरस्या वचनम् । मयापि, कश्चित् पुरुषः, ब्रुवन्निव किञ्चित् कथयन्निव, अतर्कि तर्कितः सम्भावितः ; तद्वचनानुभवादित्यभिप्रायः । इत्यन्यस्या वाक्यम् । इति इत्यम्भूताः, स्त्रैणस्य स्त्रीसमूहस्य गिरो वाक्यानि, स नलः, शृणोति स्म विचरन् श्रुतवान् ।

अत्र इवशब्दानां सादृश्यबोधकत्वाभावान्नोपमा, परात्मना सम्भावनाया अभावाच्च नोत्प्रेक्षा । प्रसादो गुणः, वैदर्भी च रीतिः ।

स्त्रीणां समूह इति स्त्रैणः "स्त्रीपुंसाभ्यां नञ्स्नञौ" इति नञ् ॥४७॥

বাঙ্গালা—আমি ভ্রমণ করিতে করিতে কোন পুরুষকেই যেন স্পর্শ করিয়াছি ; আমি কোন পুরুষের প্রতিবিম্বই যেন দেখিয়াছি ; আমিও কোন পুরুষ যেন কিছু বলিতেছিল এইরূপ ধারণা করিয়াছি ; নল স্ত্রীলোকদিগের এইরূপ বাক্য শুনিতে লাগিলেন ॥৪৭॥

अन्वयः—नताङ्गी भैमी अम्बां प्रणत्य पथि उपनता (सती) नलेन योगम् आप । सः भ्रान्तिभैमीषु तां न व्यविक्त ; सा च अदृश्यतया तं न ददर्श ॥४८॥

इदानीं दमयन्त्या सह नलस्य योगमाह अम्बामिति । नताङ्गी स्तनभारेण किञ्चिदवनतपूर्वकाया, भैमी दमयन्ती, अम्बां निजमातरम्, प्रणत्य प्रकर्षेण भक्तिश्रद्धासहकारेण नत्वा, पथि स्वभवनमार्गे, उपनता उपस्थिता सती, नलेन सह, योगं सामीप्यसम्बन्धम्, आप प्राप्तवती । किन्तु स नलः, भ्रान्तिभैमीषु भ्रमकल्पितहृदयस्थदमयन्तीषु मध्ये, तां तात्त्विकीमपि भैमीम्, न व्यविक्त तात्त्विकतया न विविक्तवान् न पृथग् ज्ञातवानित्यर्थः ; तस्य

---

(१) स भ्रान्तिभैमीं विविचे न ताञ्च ।

प्रसू-प्रसादाधिगता प्रसून-माला नलस्य भ्रमवीक्षितस्य ।
क्षिप्तापि कण्ठाय तयोपकण्ठ-स्थितं तमालम्बत सत्यमेव ॥४९॥
स्रग् वासनादृष्टजनप्रसादः सत्येयमित्यद्भुतमाप भूपः ।
क्षिप्तामदृश्यत्वमिताथ मालाम् आलोक्य तां विस्मयते स्म बाला ॥५०॥

---

अपि भ्रान्तिभैमीत्वेनावधारणादिति भावः । तथा सा भैमी च, अदृश्यतया नलस्य देववरादृश्यत्वादिति हेतुना, तं नलम्, न ददर्श । अतः साक्षात्सम्मेलनफलं नाभूदिति भावः ।

अत्र तात्त्विकभैमीत्वेन विवेचनाभावं प्रति भ्रान्तिभैमीष्विति पदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः प्रथमपादगतच्छेकानुप्रासेन संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ।

व्यविक्तेति विपूर्वस्य विचधातोर्लङस्तन्या आत्मनेपदस्य तविभक्तौ "घुटश्च घुटि" इति सिचो लोपेन रूपम् ॥४८॥

বাঙ্গালা—অবনতাঙ্গী দময়ন্তী, মাতাকে নমস্কার করিয়া, নিজ গৃহের পথে উপস্থিত হইয়া, নলের সহিত সম্মেলন লাভ করিলেন; কিন্তু নল, ভ্রমকল্পিত সহস্র সহস্র দময়ন্তীর মধ্যে সেই যথার্থ দময়ন্তীকেও যথার্থ বলিয়া বিবেচনা করিতে পারিলেন না; আবার দময়ন্তীও, দেবতার বরে নল অদৃশ্য ছিলেন বলিয়াই তাঁহাকে দেখিতে পাইলেন না ॥৪৮॥

**অন্বয়:**—तया भ्रमवीक्षितस्य अपि नलस्य कण्ठाय क्षिप्ता प्रसूप्रसादाधिगता प्रसूनमाला सत्यम् एव उपकण्ठस्थितं तम् आलम्बत ॥४९॥

प्रस्विति । तया दमयन्त्या, भ्रमवीक्षितस्यापि भ्रमदृष्टतया निर्णीतस्यापि नलस्य, कण्ठाय गलाय गलदेशमुद्दिश्य, क्षिप्ता प्रेरिता, प्रसूप्रसादेन मातुरनुग्रहेण अधिगता प्राप्ता प्रसन्नाया मातुः सकाशात् लब्धेत्यर्थः, प्रसूनमाला उत्कृष्टपुष्पमाला, सत्यमेव उपकण्ठस्थितं निकटवर्त्तिनम्, तं नलं तत्कण्ठं वा, आलम्बत अवलम्बितवती ।

अत्र दैवादेव मालायाः सत्यनलकण्ठाश्रयणाद्विषमो नामालङ्कारः "किञ्चित् प्रकुर्वतः कार्य्यम्" इत्यादि दर्पणलक्षणात्; तथा प्रथमे पादे वृत्त्यनुप्रासः तृतीये च च्छेकानुप्रास इत्येतेषां संसृष्टिः । परस्परदर्शनात् सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥४९॥

বাঙ্গালা—দময়ন্তী মাতার নিকট হইতে অনুগ্রহলব্ধ এক ছড়া ভাল ফুলের মালা লইয়া আসিতেছিলেন; এমন সময়ে নলকে ভ্রমবশতই তিনি দেখিতেছেন ইহা নিশ্চয় ভাবিয়াও তিনি সেই মালাছড়াটীকে নলের কণ্ঠ উদ্দেশে নিক্ষেপ করিলেন; কিন্তু দৈববশতঃ সত্য সত্যই সে মালাছড়াটী যাইয়া নলের কণ্ঠদেশেই আশ্রয় লইল ॥৪৯॥

**অন্বয়:**—भूपः वासना-दृष्ट-जन प्रसादः इयं स्रक् सत्या (भूता) इति अद्भुतम् आप । बाला च क्षिप्तां तां मालाम् अदृश्यत्वम् इताम् आलोक्य विस्मयते स्म ॥५०॥

स्रगिति । भूपो राजा नलः, वासनया मिथ्याज्ञानेन भ्रमेणेति यावत् दृष्टो यो जनो दमयन्तीस्वरूपो लोकस्तस्य प्रसादः प्रसादेनानुग्रहेण दत्तेत्यर्थः, इयं स्रक् माला सत्या भूता इति शेषः, तथैव प्रत्यक्षीकरणादिति भावः; इति हेतोः, अद्भुतं विस्मयम्, आप प्राप्तवान् । नहि रज्जौ भ्रमविषयतया दृष्टः सर्पो दशतीत्याशयः । तथा बाला दमयन्ती च, क्षिप्ताम् आत्मनैव समर्पिताम्, तां मालाम्, अदृश्यत्वम् इतां हठादेव गताम्, आलोक्य, विस्मयते स्म विस्मयं प्राप्नोति स्म; पश्यन्त्या एवादर्शनादित्यभिप्रायः ।

अत्र विस्मयं प्रति आलोक्येति पदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गं छेकानुप्रासेन संसृज्यते । मधुररचनाबाहुल्यान्माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥५०॥

अन्योन्यमन्यत्रवदीक्षमाणौ परस्परेणाध्युषितेऽपि देशे ।
आलिङ्गितालीकपरस्परान्तः तथ्यं मिथस्तौ परिषस्वजाते ॥५१॥
स्पर्शं तमस्याधिगतापि भैमी मेने पुनर्भ्रान्तिमदर्शनेन ।
नृपः स पश्यन्नपि तामुदीतस्तम्भो न धर्तुं सहसा शशाक ॥५२॥

---

বাঙ্গালা—ভ্রমক্রমেই যে দময়ন্তীকে দেখিলাম, তাঁহারই অনুগ্রহদত্ত এই মালা সত্য হইয়া গেল। ইহা ভাবিয়া নল বিস্ময়াপন্ন হইলেন; আবার নিজেরই নিক্ষিপ্ত সেই মালা অদৃশ্যতা পাইল। ইহা দেখিয়া দময়ন্তীও বিস্ময়াপন্ন হইলেন ॥৫০॥

**अन्वयः**—परस्परेण अध्युषिते देशे अपि अन्यत्रवत् अन्योन्यम् ईक्षमाणौ तौ आलिङ्गितालीकपरस्परान्तः मिथः तथ्यं परिषस्वजाते ॥५१॥

अन्योन्यमिति । परस्परेण अध्युषिते आश्रिते, देशे एकस्मिन्नेव स्थानेऽपि, अन्यत्रवत् अन्यान्यस्थान इव, अन्योन्यं परस्परम्, ईक्षमाणौ पश्यन्तौ ; चिरादेव भ्रमजातप्रतारणया अत्यन्ताविश्वासवशादिति भावः । एतेन नलो दमयन्त्यै किञ्चिद्दर्शनं तदा ददाविति मन्तव्यम् । तौ दमयन्तीनलौ, आलिङ्गितमाश्लिष्टं यत् अलीकं मिथ्याभूतं मिथ्यात्वेनैवावधृतं परस्परं तस्य अन्तर्मध्ये, मिथः परस्परम् तथ्यं दैववशात् सत्यमेव, परिषस्वजाते आलिलिङ्गतुः । परस्परेण परस्परमलीकमेव मत्वा अलीकमेव च यदालिङ्गितम्, तत् सर्वमेव दैववशात् सत्यमेवाभूदिति भावः ।

अत्र एवालापि विशेष एवालङ्कारः । सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥५१॥

বাঙ্গালা—নল ও দময়ন্তী ইঁহারা পরস্পর এক জায়গায় থাকিয়াও, (বহুকাল যাবৎ ভ্রমের প্রতারণাবশতঃ বিশ্বাস না হওয়ায়) পরস্পরকে বিভিন্নস্থানস্থিতের ন্যায় দেখিতে লাগিলেন; আর পরস্পর পরস্পরকে মিথ্যা মনে করিয়াও যে আলিঙ্গন করিলেন, ঈশ্বরের ইচ্ছায় পরস্পরের তাহা সত্য হইয়া গেল ॥৫১॥

**अन्वयः**—भैमी अस्य तं स्पर्शम् अधिगता (सती) अपि अदर्शनेन पुनः भ्रान्तिं मेने । सः नृपः (च) तां पश्यन् अपि उदीतस्तम्भः (सन्) सहसा तां धर्तुं न शशाक ॥५२॥

ननु सत्यमेव परस्परमालिङ्गनं जातञ्चेत्तदा यथेष्टालापादिकरणाय कथं न परस्परं धृतवन्ताविस्याह स्पर्शमिति । भैमी दमयन्ती, अस्य नलस्य, तम् आलिङ्गनजनितम् स्पर्शम्, अधिगता प्राप्ता सत्यपि, अदर्शनेन नलस्य साक्षाद्दर्शनाभावेन, पुनर्भ्रान्तिं पूर्ववदेव भ्रमविषयोऽयं नल इति भ्रममेव, मेने निश्चितवती । अतो न सा तं धर्तुं चेष्टितवतीति भावः । तथा स नृपो नलश्च, तां दमयन्तीम्, पश्यन्नपि आलिङ्गनात् परं चक्षुषा प्रत्यक्षीकुर्वन्नपि, उदीतो दमयन्त्याः स्पर्शादेव उत्पन्नः स्तम्भः स्तम्भाख्यः सात्त्विकभावविशेषो यस्य स तादृशः, सन्, सहसा तां दमयन्तीम्, धर्तुं न शशाक ।

अत्र धरणाशक्तिं प्रति उदीतस्तम्भपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ॥५२॥

বাঙ্গালা—দময়ন্তী নলের সেই স্পর্শসুখ লাভ করিয়াও, তাঁহাকে দেখিতে না পাওয়ায় আবার ভ্রম বলিয়াই মনে করিলেন; আবার নল রাজা দময়ন্তীকে দেখিতে পাইয়াও, আলিঙ্গনবশতঃ স্তব্ধতা উৎপন্ন হওয়ায় হঠাৎ তাঁহাকে ধরিতে পারিলেন না ॥৫২॥

स्पर्शातिहर्षाहृतसत्यमत्या प्रवृत्य मिथ्यामतिलब्धबाधौ ।
पुनर्मिथस्तथ्यमपि स्पृशन्तौ न श्रद्दधाते पथि तौ विमुग्धौ ॥५३॥
सर्वत्र संवाद्यमबाधमानौ रूपश्रियातिथ्यकरं परं तौ ।
न शेकतुः केलिरसाद्विरन्तुमलीकमालोक्य परस्परन्तु ॥५४॥

---

**अन्वयः**—विमुग्धौ तौ पथि स्पर्शातिहर्षाहृत-सत्य-मत्या प्रवृत्य मिथः तथ्यं स्पृशन्तौ अपि पुनः मिथ्या-मतिलब्ध-बाधौ (सन्तौ) न श्रद्दधाते ॥५३॥

स्पर्शेति । विमुग्धौ कामवेगातिशयाविर्भावेन विशेषमूढौ चिरं तत्त्वनिर्णयासमर्थावित्यर्थः, तौ दमयन्तीनलौ, पथि, स्पर्शेन पूर्वालिङ्गनेन योऽतिहर्षः अतीवसुखं तेन आहृता स्वीकृता या सत्यमतिः सत्य एवायं नलः सत्येयं दमयन्ती चेति सत्यबुद्धिस्तया, प्रवृत्य पुनरप्यालिङ्गनादौ प्रवृत्तिमन्तौ भूत्वा, मिथः परस्परम्, तथ्यं सत्यं सत्य एवायं स जन इति सत्यत्वप्रकारकज्ञानप्रयुक्तं यथा स्यात्तथा, स्पृशन्तौ आलिङ्गन्तावपि, पुनर्मिथ्यामत्या तूष्णीम्भावादर्शनाभ्यां भ्रम एवायमिति मिथ्यात्वनिश्चयेन लब्धः प्राप्तो बाधः सत्यालिङ्गनस्य अप्रामाण्यं याभ्यां तौ तादृशौ सन्तौ, न श्रद्दधाते सत्यत्वेन न विश्वसतुः । आश्चर्यमेव तदिति भावः ।

अत्र प्रथमार्द्धे हत्यनुप्रासोऽलङ्कारः । बन्धार्थस्य दुरूहत्वादौजो गुणः, गौडी च रीतिः ॥५३॥

বাঙ্গালা—অত্যন্তমুগ্ধচিত্ত নল ও দময়ন্তী, পূর্বের আলিঙ্গনে যে অত্যন্তস্পর্শসুখ লাভ করিয়াছিলেন, তাহাতেই পরস্পর পরস্পরকে সত্য বলিয়া নিশ্চয় করিলেন; তাহাতেই আবারও তাঁহাদের আলিঙ্গন করিবার প্রবৃত্তি জন্মিল; তাই তাঁহারা পরস্পর আবারও সত্য সত্যই আলিঙ্গন করিলেন; কিন্তু দময়ন্তী নীরব ছিলেন, নলকেও দেখা যাইতেছিল না; তাই তাঁহাদের আবারও মিথ্যা বলিয়াই ধারণা জন্মিল এবং সে আলিঙ্গনকেও মিথ্যা বলিয়াই মনে করিলেন; পরে পরস্পর পরস্পরকে সত্য বলিয়া বিশ্বাস করিলেন না ॥৫৩॥

**अन्वयः**—तौ सर्वत्र संवाद्यं रूपश्रिया परम् आतिथ्यकरं परस्परम् अलीकम् आलोक्य तु अबाधमानौ (सन्तौ) केलिरसात् विरन्तुं न शेकतुः ॥५४॥

सर्वत्रेति । तौ दमयन्तीनलौ, सर्वत्र सर्वेषु मुखकरचरणादिषु अङ्गेषु, संवाद्यं लोकमुखात् श्रुतानुरूपतया चित्रे दृष्टानुरूपतया च संवादार्हं सम्मिलितमित्यर्थः, तथा रूपश्रिया सौन्दर्यशोभया, परम् अत्यन्तम्, आतिथ्यकरं मनस्तुष्टिजनकं चित्ताकर्षकमिति यावत् परस्परमन्योन्यम्, अलीकं नलस्यागमनासम्भवात् दमयन्त्याश्च पूर्वपूर्ववद्भ्रमविषयत्वेनैव निश्चयात् मिथ्याभूतम्, आलोक्य तु स्वस्वमनसा पर्यालोच्यापि, अबाधमानौ सर्वत्र संवाद्यत्वादिहेतोरेव तात्त्विकत्वे बाधामकुर्वन्तौ सत्यतयैव विश्वसन्तौ सन्तावित्यर्थः, केलिरसात् आलिङ्गनादिक्रीडासुखास्वादात्, विरन्तुं विरतौ भवितुम्, न शेकतुः न समर्थौ बभूवतुः अपितु तादृशं केलिरसं चक्रतुरेवेत्यर्थः ।

अत्र अबाधमानत्वं प्रति संवाद्यपदार्थस्य आतिथ्यकरपदार्थस्य च हेतुत्वादेकं काव्यलिङ्गम्, विरामाभावं प्रति अबाधमानपदार्थस्य हेतुत्वादपरञ्च काव्यलिङ्गम्, द्वितीयार्द्धे अन्त्यानुप्रासश्छेकानुप्रासश्च इत्येतेषां संसृष्टिः । सम्भोगशृङ्गारो रसः, माधुर्यं गुणः, वैदर्भी च रीतिः ॥५४॥

বাঙ্গালা—পূর্বে লোকমুখে যেমন শুনিয়াছিলেন, কিম্বা চিত্রে যেমন দেখিয়াছিলেন; তাহা পরস্পরের সমস্ত অঙ্গেই মিলিয়া গিয়াছিল এবং সৌন্দর্য্যের শোভায় পরস্পরই পরস্পরের অত্যন্ত চিত্তাকর্ষক হইয়াছিলেন; সুতরাং মনে মনে মিথ্যা বলিয়া আলোচনা করি-

परस्पर-स्पर्श-रसोर्म्मि-सेकात् तयोः क्षणं चेतसि विप्रलम्भः ।
स्नेहातिदानादिव दीपिकार्च्चिः निमिष्य किञ्चिद्द्विगुणं दिदीपे ॥५५॥
वेश्माप सा धैर्य्यवियोगयोगात् बोधञ्च मोहञ्च मुहुर्दधाना ।
पुनः पुनस्तत्र पुरः स पश्यन् बभ्राम तां सुभ्रुवमुद्भ्रमिष्णुः ॥५६॥

স্বাও, নল এবং দময়ন্তী ইহারা পরস্পর কোলস্থখাস্বাদ হইতে বিরত হইতে পারিলেন না ॥৫৪॥

अन्वयः—दीपिकार्च्चिः स्नेहातिदानात् इव तयोः चेतसि विप्रलम्भः परस्पर-स्पर्श-रसोर्म्मि-सेकात् क्षणं किञ्चित् निमिष्य (परमेव) द्विगुणं दिदीपे ॥५५॥

परस्परेति । दीपिकार्च्चिः प्रदीपशिखा, स्नेहस्य तैलस्य अतिदानात् बाहुल्येन मल्लिकायां प्रक्षेपादिव, तयोर्दमयन्तीनलयोः, चेतसि विद्यमानः, विप्रलम्भः पूर्वरागकालीन एव विच्छेदः, परस्परस्य यः स्पर्शः तस्य आलिङ्गनस्य आस्वादः स एव रसो जलं तस्य या ऊर्म्मिः तरङ्गस्तस्याः सेकात् सेचनात् संयोगसुखातिरेकलाभादित्यर्थः, क्षणं किञ्चित्, निमिष्य अल्पीभूय, परमेव द्विगुणं यथा स्यात्तथा दिदीपे ववृधे । आलिङ्गनात् परमेव तौ पूर्वापेक्षयापि द्विगुणमेव विरहदुःखं प्राप्तवन्ताविति निष्कर्षः ।

अत्र श्रौतोपमालङ्कारः प्रथमपादगतच्छेकानुप्रासेन संसृज्यते । तथा दीपिकार्च्चिर्दीप्यते विप्रलम्भस्तु दिदीपे इति कालभेदात् भग्नप्रक्रमतादोषः ; स च 'दीपार्च्चिरात्म्यादतितैलदानात्' इति तृतीयचरणपाठेन समाधेयः । पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ।

"रसभेदे च विच्छेदे विप्रलम्भस्तु वञ्चने" इति शाश्वतः । "स्नेहः स्यात् पुंसि तैलादिरसद्रव्ये च सौहृदे" इति मेदिनी ॥५५॥

বাঙ্গালা—মুছিতে বেশী তৈল দেওয়ায় দীপের শিখা যেমন ক্ষণকালে অল্প একটু-মাত্র কমিয়া, পরে দ্বিগুণ জ্বলিয়া উঠে ; সেইরূপ নলও দময়ন্তীর মনের বিরহদুঃখ, পরস্পর আলিঙ্গনসুখ বেশী লাভ করায় ক্ষণকালের জন্য একটুমাত্র কমিয়া, পরেই আবার দ্বিগুণ জ্বলিয়া উঠিল ॥৫৫॥

अन्वयः—सा धैर्य्य-वियोग-योगात् मुहुः बोधञ्च मोहञ्च दधाना (सती) वेश्म आप । सः (च) तत्रैव पुरः तां सुभ्रुवं पुनः पुनः पश्यन् (सन्) तत्र बभ्राम ॥५६॥

वेश्मेति । सा दमयन्ती, धैर्य्यस्य चित्तस्थिरतायाः वियोगस्य तद्धैर्य्यविलोपस्य च योगात् सम्बन्धात् निज-गुणेन धैर्य्यलाभात् कामप्रभावेण तदसत्त्वे तद्धैर्य्यलोपाच्चेत्यर्थः, मुहुर्वारं वारम्, बोधञ्च धैर्य्ययोगात् कुतोऽत्र नलस्य सम्भव इति सम्यग्ज्ञानञ्च, मोहञ्च धैर्य्यलोपात् नल एवायमिति मिथ्याज्ञानञ्च, दधाना धारयन्ती सती, वेश्म निजगृहम्, आप प्राप्तवती गतवतीत्यर्थः । स नलश्च, तत्रैव उपस्थितभ्रान्त्या, पुरः सम्मुखे, तां सुभ्रुवं दमयन्तीम्, पुनः पुनः पश्यन् सन्, तत्रैव स्थाने, बभ्राम पुनरप्यालिङ्गनाशया विचचार ।

अत्र पूर्वार्द्धे यथासंख्यमलङ्कारः, छेकानुप्रासश्च ; परार्द्धे तु वृत्त्यनुप्रास इत्येतेषां संसृष्टिः । पूर्वरागो रसः, माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥५६॥

বাঙ্গালা—দময়ন্তী ধৈর্য্যবশতঃ যথার্থ জ্ঞান এবং ধৈর্য্যলোপবশতঃ মিথ্যাজ্ঞান বার বার পোষণ করতঃ নিজগৃহে গমন করিলেন ; আবার নলও, ভ্রমবশতঃ সম্মুখে সেই সুভ্রূ দময়ন্তীকে বার বার দেখিতে থাকিয়া, সেই স্থানেই ভ্রমণ করিতে লাগিলেন ॥৫৬॥

पद्भ्यां नृपः सञ्चरमाण एव चिरं परिश्रम्य कथं कथञ्चित् ।
विदर्भराजप्रभवाभिरामं प्रासादमभ्रङ्कषमाससाद ॥५७॥
सखीमतानां सरसैर्विलासैः स्मरावरोधभ्रममावहन्तीम् ।
विलोकयामास सभां स भैम्याः तस्य प्रतोलीमणिवेदिकायाम् ॥५८॥
कण्ठः किमस्याः पिकवेणुवीणाः तिस्रो जिताः सूचयति त्रिरेखः ।
इत्यन्तरसूयत यत्र काचित् (१) नलेन बाला कलमालपन्ती ॥५९॥

---

**अन्वयः**—चिरं पद्भ्यां सञ्चरमाणः एव नृपः परिश्रम्य कथं कथञ्चित् विदर्भराजप्रभवाभिरामम् अभ्रङ्कषं प्रासादम् आससाद ॥५७॥

पद्भ्यामिति । चिरं पद्भ्यां चरणाभ्याम्, वाहनानयनासम्भवादिति भावः, सञ्चरमाणो विचरन्, एव नृपो नलः, परिश्रम्य पद्भ्यां सञ्चरणादेव परिश्रान्तो भूत्वा, कथं कथञ्चिदतिकष्टेन, विदर्भराजप्रभवया दमयन्त्या अभिरामम् अधिष्ठानादेव सुन्दरम्, अभ्रमाकाशं कषति अत्युच्चतया विलिखतीति तम्, प्रासादं दमयन्त्या भवनम्, आससाद प्राप्तवान् ।

अत्र श्लेषादि स्फुटं काव्यलिङ्गमलङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ।

सञ्चरमाण इति "समस्तृतीयया युक्तः" इति वार्त्तिकादात्मनेपदविषयतया शानच् । अभ्रङ्कष इति "सर्वकूलाभ्रकरीषेषु कषः" इति खच्प्रत्ययः ॥५७॥

বাঙ্গালা—নলরাজা বহুকাল যাবৎ চরণ দ্বারা বিচরণ করিতে করিতে পরিশ্রান্ত হইয়া, অতিকষ্টে, আকাশস্পর্শী এবং দময়ন্তী দ্বারা পরিশোভিত অট্টালিকায় উপস্থিত হইলেন ॥৫৭॥

**अन्वयः**—सः तस्य प्रतोलीमणिवेदिकायां सरसैः सखीमतानां विलासैः स्मरावरोधभ्रमम् आवहन्तीं भैम्याः सभां विलोकयामास ॥५८॥

सखीति । स नलः, तस्य दमयन्तीप्रासादस्य, या प्रतोली सन्निहिता रथ्या तस्यां या मणिवेदिका मणिबद्धपरिष्कृतभूमिस्तस्याम्, सरसैः शृङ्गाररससूचकैः, सखीमतानां विलासैर्विभ्रमैः व्यवहारविशेषैः, स्मरस्य कामदेवस्य अवरोधभ्रमम् इदं कामदेवस्यान्तःपुरं शृङ्गारालोचनाप्रवाहसत्त्वादिति लोकानां भ्रान्तिम्, आवहन्तीं जनयन्तीम्, भैम्या दमयन्त्याः सभाम्, विलोकयामास ददर्श ।

अत्र भीमराजावरोधे स्मरावरोधभ्रमाद्भ्रान्तिमानलङ्कारः । किन्तु शृङ्गारार्थकरसशब्दस्योक्तावपि न रसस्य स्वशब्दोक्तिदोषः ; रसतया अनुभूयमानस्यैव स्वशब्देनोक्तौ तद्दोषाङ्गीकारात् अत्र तु तद्रसतया अनुभवाभावात् ; अन्यथा "शृङ्गारवीरकरुणाद्भुत—" इत्यमरगणनादावपि तद्दोषप्रसङ्गात् । प्रसादो गुणः, वैदर्भी च रीतिः ।

"रथ्या प्रतोली विशिखा" इत्यमरः ॥५८॥

বাঙ্গালা—দময়ন্তীর অট্টালিকার রাস্তায় মণিময় বেদির উপরে নল, দময়ন্তীর একটী সভা দেখিতে পাইলেন ; সে সভাটী, সখীগণের শৃঙ্গারসূচক ব্যবহারে কামদেবের অন্তঃপুরের ভ্রম জন্মাইতেছিল ॥৫৮॥

**अन्वयः**—यत्र नलेन कलम् आलपन्ती काचित् बाला 'त्रिरेखः अस्याः कण्ठः तिस्रः पिक-वेणु-वीणाः जिताः सूचयति किम्' इति अन्तः असूयत ॥५९॥

---

(१) कापि ।

एतं नलं तं दमयन्ति ! पश्य त्यजार्त्तिमित्यालिकुलप्रबोधात् ।
श्रुत्वा स नारी-कर-वर्त्ति-शारी-मुखात् स्वमाशङ्कत यत्र दृष्टम् ॥६०॥
यत्रैकयालीक-नलीकृतालो-कण्ठे मृषाभीमभवीभवन्त्या ।
तद्दृक्पथे दौहृदिकोपनीता शालीनमाधायि मधूकमाला ॥६१॥

---

अथ पञ्चदशभिः श्लोकैः सभां वर्णयति कवय इति । यत्र सभायाम्, नवीन कण्ठी, कलं मधुरास्फुटम्, आलपन्ती अन्यया बालया सह कथोपकथनं कुर्वती, काचित् बाला नवीनवयस्का दमयन्त्याः सखी, तिस्रो रेखा यत्र स त्रिरेखः, अस्या बालायाः, कण्ठो गलः, तिस्रः पिकः कोकिलः, वेणुर्वंशी, वीणा स्वनामख्याता च एताः, जिताः स्वरमाधुर्य्येण आत्मनैव पराभूताः, सूचयति ताभिस्तिसृभी रेखाभिर्व्यनक्ति किम्, इति इत्यम्, अमंस्त नलः, अमन्यत शुश्राव ; तादृशजयसूचनव्यतिरेकेण तासां तिसृणां रेखाणां स्थितेः प्रयोजनाभावादित्याशयः ।

अत्र तादृशसूचनं प्रति त्रिरेखपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, तादृशसूचनोत्प्रेक्षया च क्रियोत्प्रेक्षा, इत्यनुप्रासश्च, इत्येतेषां संसृष्टिः । मधुरवचनावस्थान्माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥५९॥

বাঙ্গালা—কোন নবীনা মধুরস্বরে আলাপ করিতেছিল ; নল তাহা শুনিয়া মনে মনে তাহাকে এইরূপ প্রশংসা করিলেন যে, 'তিনটী রেখাযুক্ত ইহার কণ্ঠদেশ কোকিল, বংশী ও বীণা এই তিনটীকে যে জয় করিয়াছে, তাহা সূচনা করিতেছে কি ?' ॥৫৯॥

**अन्वयः**—यत्र सः नारी-कर-वर्त्ति-शारी-मुखात् 'दमयन्ति ! एतं तं नलं पश्य, आर्त्तिं त्यज' इति आलिकुलप्रबोधात् श्रुत्वा स्वं दृष्टम् आशङ्कत ॥६०॥

एतमिति । यत्र सभायाम्, स नलः, नार्य्याः कस्याश्चित् दमयन्तीसख्याः करवर्त्तिनी हस्तस्थिता या शारी पक्षिणी तस्या मुखाद्वदनात्, हे दमयन्ति ! एतं सम्मुखे वर्त्तमानम्, तं तव प्रियतमं नलम्, पश्य, अतएव आर्त्तिं विरहपीड़ाम्, त्यज, इति इत्यम्, आलिकुलस्य सखीगणस्य प्रबोधात् सान्त्वनाः सान्त्वनावादानुवादानित्यर्थः, श्रुत्वा, स्वमात्मानम्, दृष्टं देववरभ्रमात् शारीपक्षिण्या अवलोकितम्, आशङ्कत । दमयन्ती यदा यदैव नलविरहखेद-भरा मूर्च्छिता अभूत्, तदा तदैव तत्सखीगण इत्थं तां प्रबोधयति स्म यत्, 'हे दमयन्ति ! एतं तं नलं पश्य, आर्त्तिं त्यज' इति । तन्निकटवर्त्तिनी शारी तु अविकलमेव ताम् शिक्षितवती, तदानीञ्च तानेव सान्त्वनावादान् अभ्यासवशादुच्चारितवती । नलस्तु तदानीं तानेव श्रुत्वा एते अनुवादा इत्यविदित्वा तया शारिकया आत्मानं दृष्टमाशङ्कितवानिति सरलार्थः ।

अत्र नलस्य शङ्काख्यभावोदयात्भावोदयनामालङ्कारश्छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृष्टः । माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥६०॥

বাঙ্গালা—"দময়ন্তি ! এই সেই নলকে দেখ ; সুতরাং বিরহদুঃখ ত্যাগ কর" এইরূপ, কোন সখীর হস্তস্থিত শারীপক্ষিণীর মুখ হইতে সখীগণের সান্ত্বনাবাদ শুনিয়া, যে সভায় নল, আপনাকে দেখিয়াছে বলিয়া আশঙ্কা করিয়াছিলেন ॥৬০॥

**अन्वयः**—यत्र तद्दृक्पथे मृषाभीमभवीभवन्त्या एकया अलीकनलीकृताली-कण्ठे दौहृदिकोपनीता मधूकमाला शालीनम् आधायि ॥६१॥

यत्रेति । यत्र सभायाम्, तस्य नलस्य दृक्पथे दृष्टिगोचरस्थाने, मृषा मिथ्या अभीमभवा भीमभवा भव-न्तीति भीमभवीभवन्ती तया कृत्रिमदमयन्तीरूपं धारयन्त्या इत्यर्थः, एकया सख्या, अलीकनलीकृता कृत्रिमनलरूपीकृता या आली अपरा काचित् सखी तस्याः कण्ठे गलदेशे, इच्छायां दोहदेन पुष्पिकारद्रव्ये च संदृष्ट इति दौहृदिकी

चन्द्राभमाभ्रं तिलकं ददाना (१) तद्बिम्बितास्येन्दुकृतानुबिम्बम् ।
सखीमुखे चन्द्रसखे (२) ससर्ज चन्द्रानवस्थामिव कापि यत्र ॥६२॥
दलोदरे काञ्चनकेतकस्य क्षणान्मसीभावुकवर्णलेखम् ।
तस्यैव यत्र स्वमनङ्गलेखं लिलेख भैमी नखलेखनीभिः ॥६३॥

---

मालाकारस्त्रेण उपनीता आनीता, मधूकानां पुष्पविशेषाणां माला, आलीनं सम्पूर्णानुकरणस्य कर्त्तृत्वात् सलज्जं यथा तथा, आधायि स्थापिता । दमयन्त्या विनोदनाय सखीभिरित्थं खेला कृता, ताञ्च पश्यन् नलोऽप्यानन्द इति बोध्यम् ।

अत्र वृत्त्यनुप्रासोऽलङ्कारः, पूर्वरागो रसः, माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥६१॥

**বাঙ্গালা**—যে সভায় নলের দৃষ্টিপথে থাকিয়া কোন সখী কৃত্রিম দময়ন্তী হইয়া, কৃত্রিমনলরূপধারিণী অন্য কোন সখীর কণ্ঠদেশে মালীর আনীত মহুয়া ফুলের মালা লজ্জার সহিত সমর্পণ করিতেছিল ॥৬১॥

**অন্বয়:**—যত্র কা অপি চন্দ্রসখে সখীমুখে চন্দ্রাভম্ আভ্রং তিলকং তদ্বিম্বিতাস্যেন্দুকৃতানুবিম্বং ददाना (सती) चन्द्रानवस्थां ससर्ज इव ॥६२॥

चन्द्रेति । यत्र सभायाम्, कापि सखी, चन्द्रस्य सखि समानसौन्दर्य्यात् सुहृत् तस्मिन् चन्द्रतुल्ये इत्यर्थः, सख्या अन्यस्या वयस्याया मुखे मुखैकदेशे ललाटे, चन्द्राभं स्वच्छत्वाच्चन्द्रतुल्यम्, अभ्रस्येदमित्याभ्रम् अभ्रनिर्म्मितम्, तिलकं गोलतिलकाकारमलङ्कारम्, तस्य चन्द्राभाभ्रतिलकयुक्तं निजं स्वकीयं यत् आस्यं दासीमुखं तदेव इन्दुः सुन्दरत्वादाह्लादकत्वाच्च चन्द्रः तेन कृतानि तत्र कृतानि च अनुबिम्बानि प्रतिबिम्बानि यस्मिन् कर्म्मणि तद्यथा तथा, ददाना अर्पयन्ती सती, चन्द्रस्य अनवस्थाम् इयत्तया अनिर्द्देश्यत्वं दुरवस्थां वा, ससर्ज इव चकारेव । तथा च यदा स्वसम्मुखवर्त्तिनि सखीमुखे अपरा सखी तदभिमुखीभूय गोलाकारमभ्रखण्डमर्पयति स्म ; तदा तस्याः सख्या मुखमेकश्चन्द्रः, आभ्रतिलकञ्च द्वितीयश्चन्द्रः, दासीमुखं तृतीयश्चन्द्रः, दासीधृताभ्रतिलकञ्च चतुर्थश्चन्द्रः, एवमाभ्रतिलकयुक्तमुभयोरेव मुखम् उभयमुखद्वयस्य ललाटे आभ्रतिलके नासिकायां कपोलादौ च प्रतिबिम्बितमिति तानि च बहूनि प्रतिबिम्बानि बहव एव चन्द्रा इति चन्द्राणामियत्तया अनिर्द्देश्यत्वम् ; तथा यद्वस्तु बहुतरं भवति, तत्र लोकानामादरविशेषाभावात्तस्य दुरवस्थैव भवतीति भावार्थः सरलार्थश्च ।

अत्र चन्द्राभं चन्द्रसखे इत्यार्थोपमाद्वयम्, निजास्येन्दिति निरङ्गं केवलरूपकम्, ससर्जेवेति क्रियोत्प्रेक्षा चैषां तेषामङ्गाङ्गिभावेन सङ्करः ; सोऽपि च वृत्त्यनुप्रासेन संसृज्यते । माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥६२॥

**বাঙ্গালা**—যে সভায় কোন সখী, অন্য সখীর চন্দ্রতুল্য মুখখানিতে চন্দ্রেরই তুল্য অভ্রের (আবের) টিপ লাগাইয়া দিয়া, চন্দ্রকে যেন ইয়ত্তাশূন্য করিয়া দিয়াছিল । কেন না, তাহার মুখচন্দ্রেও সে অভ্রের টিপ ছিল এবং সেই টিপের সহিত সেই মুখচন্দ্রের প্রতিবিম্ব যাইয়া অন্য সখীর মুখের সকল জায়গায় পড়িয়াছিল ; আবার অন্য সখীর সেই টিপযুক্ত মুখচন্দ্রের প্রতিবিম্ব আসিয়া তাহার মুখের সকল জায়গায় পড়িয়াছিল ॥৬২॥

**অন্বয়:**—যত্র ভৈমী নখলেখনীভিঃ काञ्चनकेतकस्य दलोदरे तस्य एव स्वम् अनङ्गलेखं क्षणात् मसीभावुकवर्णलेखं लिलेख ॥६३॥

दलोदर इति । यत्र सभायाम्, भैमी दमयन्ती, नखा एव लेखन्यस्ताभिः, काञ्चनकेतकस्य काञ्चनवर्णकेत-

(१) दधाना । (२) चन्द्रसमे ।

विलेखितुं भीमभुवो लिपीषु सख्याति-विख्यातिभृतापि यत्र ।
अशाकि लीलाकमलं न पाणिः अपारि कर्णोत्पलमक्षि नैव ॥६४॥
भैमीमुपावीणयदेत्य यत्र कलिप्रियस्य प्रियशिष्यवर्गः ।
गन्धर्ववध्वः स्वरमध्वरीणा-तत्कण्ठनालैकधुरीणवीणः ॥६५॥

---

कीपुष्पस्य, दलोदरे पत्रगर्भे, तस्यैव नलस्य सम्बन्धे, स्वं स्वकीयम्, अनङ्गलेखं 'प्राणेश्वर ! किमश्चिरयसि' इत्यादिरूपां कामलिपिम्, अथात् लिखनवशात् एव मसीभावुका श्यामवर्णीभवनशीला वर्णानामक्षराणां लेखा यस्मिन् कर्मणि तद् यथा तथा, लिलेख लिखितवती । केतकीदले नखादिक्षता रेखा स्वभावादेव श्यामवर्णा भवतीति नलस्यापि तत्पाठसम्भव इति भावः ।

अत्र नखलेखनीभिरिति निरङ्गं केवलरूपकं छेकानुप्रासेन संसृज्यते । माधुर्यं गुणः, वैदर्भी च रीतिः ।
भावुकेति "शृ-कमगमहनवृषभू—" इत्यादिना भवतेरुकञ् ॥६३॥

বাঙ্গালা—যে সভায় দময়ন্তী নিজেরই নখরূপ লেখনী (কলম) দ্বারা স্বর্ণবর্ণ কেতকী-পুষ্পের পত্রের উপরে নলেরই সম্বন্ধে নিজের কামলিপি লিখিতেন এবং স্বভাবতই তৎক্ষণাৎ সেই অক্ষরলেখাগুলি কৃষ্ণবর্ণ হইয়া যাইত ॥৬৩॥

**অন্বয়:**—यत्र लिपीषु अतिविख्यातिभृता अपि सख्या भीमभुवः लीलाकमलं विलेखितुम् अशाकि, (किन्तु) पाणिः विलेखितुं न अशाकि ; (तथा) कर्णोत्पलं विलेखितुम् अपारि, (किन्तु) अक्षि विलेखितुं न एव अपारि ॥६४॥

विलेखितुमिति । यत्र सभायाम्, लिपीषु चित्रकार्येषु, अतिविख्यातिम् अत्यन्तप्रसिद्धिं बिभर्तीति तया अतीवनिपुणया सख्यापीत्यर्थः, सख्या दमयन्त्या एव वयस्यया, भीमभुवो दमयन्त्याः, लीलाकमलं खेलापद्मम्, विलेखितुं पटे चित्रयितुम्, अशाकि शक्तम्, नातिसुन्दरत्वेन अनतायत्तत्वात् ; किन्तु पाणिर्दमयन्त्या हस्तः, विलेखितुं चित्रयितुम्, न अशाकि शक्तम्, अतिसुन्दरत्वेन अनतावद्भिर्भूतत्वादिति भावः । तथा कर्णोत्पलं विलेखितुं चित्रयितुम्, अपारि पारितम्, नातिसुन्दरत्वेन योग्यतासाध्यत्वात् ; किन्तु अक्षि दमयन्त्या नयनम्, विलेखितुं चित्रयितुम्, नैव अपारि न खलु पारितम्, अतिसुन्दरत्वेन योग्यताया असाध्यत्वादित्याशयः ।

अत्र लीलाकमलापेक्षया पाणेः कर्णोत्पलापेक्षया चाक्ष्णः आधिक्यप्रतिपादनात् व्यतिरेकोऽलङ्कारः ; द्वितीयपादगतच्छेकानुप्रासेन चासौ संसृष्टः । प्रसादो गुणः, वैदर्भी च रीतिः ॥६४॥

বাঙ্গালা—যে সভায় কোন সখী চিত্রকার্যে অত্যন্ত প্রসিদ্ধ হইয়াও, দময়ন্তীর লীলা-পদ্মকে অবিকল চিত্র করিতে সমর্থ হইয়াছিল, কিন্তু তাঁহার হাতখানিকে অবিকল চিত্র করিতে সমর্থ হইয়াছিল না ; আবার তাঁহার কর্ণোৎপল অবিকল চিত্র করিতে পারিয়াছিল, কিন্তু চক্ষু অবিকল চিত্র করিতে পারিয়াছিল না ॥৬৪॥

**অন্বয়:**—गन्धर्ववध्वः स्वर-मध्वरीण-तत्-कण्ठ-नालैक-धुरीण-वीणाः कलिप्रियस्य प्रियशिष्यवर्गः यत्र एत्य भैमीम् उपावीणयत् ॥६५॥

भैमीमिति । गन्धर्वाणां वध्वः स्त्रिय एव प्रियशिष्यवर्ग इति सम्बन्धः । स्वरमधुना स्वरामृतेन अरीणाम् अरिक्ताम् अपि तु पूर्णामित्यर्थः यत् तस्या दमयन्त्याः कण्ठनालं गलनालं तेन एकधुराम् एकनिष्ठभारं वहतीति एकधुरीणा तत्तुल्येत्यर्थः वीणा यस्य स तथोक्तः, कलिः कलहस्तस्य प्रियः कलिप्रियस्तस्य नारदमुनेः, प्रियशिष्यवर्गः, यत्र सभायाम्, एत्य आगत्य, भैमीं दमयन्तीम्, उपावीणयत् वीणया उपागायत् । तथा च नारदेन प्रथमं गन्ध-

नावा स्मरः किं हरभीतिगुप्ते पयोधरे खेलति कुम्भ एव ।
इत्यर्धचन्द्राभनखाङ्कचुम्बि-कुचा सखी यत्र सखीभिरूचे ॥६६॥
स्मराशुगीभूय विदर्भसुभ्रूवक्षो यदक्षोभि खलु प्रसूनैः ।
व्रणं कुजन्मा तदयोधि तेषु यत्रैकया सूचिशिखां निखाय ॥६७॥

---

गन्धर्वबधूजनरूपप्रियशिष्यवर्गे वीणावादनप्रिया दत्ता ; तेन च स गन्धर्ववधूगणस्तत्र गुणातिशयप्रदर्शनेन नारदस्य प्रियो भूत्वापि ततोऽप्यधिकतरपुण्यलाभाय दमयन्त्या गानस्वरेण सह स्वकीयवीणावादनं संवादयितुं तत्सभाया-मागत इति सरलार्थः । दमयन्त्याः कण्ठस्वरो वीणास्वरादपि मधुरतर इति भावः ।

अत्र गन्धर्ववधूर्वा दमयन्त्या उपवीणनासम्बन्धेऽपि तत्सम्बन्धातिशयोक्तिः, एककार्येत्यनेन साहश्याक्षेपादा-दीपका चानयोरङ्गाङ्गिभावेन सङ्करः ; सोऽपि छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते । माधुर्यं गुणः, पाञ्चाली च रीतिः ।

"उभावेकधुरीणैकधुरावेकधुरावहे" इत्यमरः ।

वीणया उपागायदिति उपावीणयत् "इन् कारितं धात्वर्थे" इतीनि रूपम् । वीणायिनीति "रो मतिरेपवर्याः" इति रीयातोः नः "स्वाद्यौदनुबन्धाय" इति तस्य नकारः ॥६५॥

বাঙ্গালা—গন্ধর্ব রমণীগণরূপ নারদের প্রিয়শিষ্যগণ যে সভায় আসিয়া দময়ন্তীর নিকটে বীণা দ্বারা গান করিত। কারণ, স্বররূপ অমৃত দ্বারা পরিপূর্ণ দময়ন্তীর কণ্ঠনাল এবং তাহা-দের বীণা সুমধুরগানরূপ এককার্য্য করিত ॥৬৫॥

अन्वयः—यत्र सखीभिः अर्धचन्द्राभ-नखाङ्क-चुम्बि-कुचा सखी 'स्मरः हरभीतिगुप्ते पयोधरे एव कुम्भे नावा खेलति किम्' इति ऊचे ॥६६॥

नावेति । यत्र सभायाम्, सखीभिः, अर्धचन्द्राभं तिर्य्यग्वक्रत्वात् अर्धचन्द्राकारं नखाङ्कं पतितनखक्षत-चिह्नं चुम्बति स्पृशतीति च तादृशः कुचः स्तनो यस्याः सा तथोक्ता, सखी अपरा वयस्या, 'स्मरः कामः, हरान्न-लाद्दाहात् भीत्या दाहभयेन गोपायति आत्मानं रक्षतीति हरभीतिगुप् सन् ; अन्यत्र तु हरतीति हरश्चौरस्तस्मात् भीत्या अपहरणभयेन गुप्ते तदर्शनाय वस्त्रमावरणेन रक्षिते ; ते तव, पयो अन्नमिव पयो दुग्धं तत् धरतीति तस्मिन् पयोधरे स्तने. कलसरूपे एव, कुम्भे कलसे, नावा नखाङ्करूपया नौकया, खेलति किं क्रीडतीति तर्क-यामि' इति ऊचे उपहासाय उक्ता । अन्योऽपि चपलो वह्निदाहभयेन सुरक्षितं जलाशयमागत्य आत्मानमेव नौकया क्रीडति ।

अत्र वितर्कबोधककिंशब्दोपादानात् वाच्या क्रियोत्प्रेक्षा, पयोधरे कुम्भत्वारोपः शाब्दः नखाङ्के नौत्वारोपस्तु आर्थः इत्येकदेशविवर्ति रूपकम्, अर्धचन्द्राभनखाङ्केति चार्थोपमा, इत्येतेषामङ्गाङ्गिभावेन सङ्करः । माधुर्य्यं गुणः, वैदर्भी च रीतिः ।

पयान्सि हरभीतिगुप् इति क्विप् ॥६६॥

বাঙ্গালা—যাহার স্তন, অর্দ্ধচন্দ্রাকার নখচিহ্নে চিহ্নিত ছিল ; সেই সখীকে অন্যান্য সখীরা যে সভায় এইরূপ বলিত যে. "হে সখি ! কামদেব মহাদেবের ভয়ে আপনাকে রক্ষা করিবার জন্য, তোমার স্তনরূপ কুম্ভে নৌকা দ্বারা খেলা করিতেছেন কি ?" ॥৬৬॥

अन्वयः—यत्र प्रसूनैः स्मराशुगीभूय विदर्भसुभ्रू-वक्षः यत् अक्षोभि, तेषु सूचिशिखां निखाय व्रणं कुजन्मा एकया तत् अयोधि खलु ॥६७॥

यत्रावदत्तामतिभीय भैमी त्यज त्यजेदं सखि ! साहसिक्यम् ।
त्वमेव कृत्वा मदनाय दत्से बाणान् प्रसूनानि गुणेन सज्जान् ॥६८॥
आलिख्य सख्याः कुचपत्रभङ्गी-मध्ये सुमध्या मकरीं करेण ।
यत्रालपत्तामिदमालि ! यानं मन्ये त्वदेकावलिनाकनद्याः ॥६९॥

---

यदिति । यत्र सभायाम्, प्रसूनैः पद्मादिभिः पुष्पैः, शरायुगीभूय कामबाणीभूय, विदर्भसुभ्रुवो दमयन्त्या वक्षो हृदयम्, यत् अबीभिदत् आलोडि प्राहारीति यावत्; तेषु प्रसूनेषु, सूचेः शिखाग्रमग्रम्, निखाय सूत्रप्रवेशार्थम् आरोप्य, स्रजं मालाम्, सृजन्त्या रचयन्त्या, एकया सख्या, तत् दमयन्त्या वक्षःप्रहाररूपं वैरम्, अस्त्रोघि प्रतिशोधितम् । खल्वित्युत्प्रेक्षायाम् । अन्योऽपि शत्रुनिधिमनाकं स्वकीयास्त्रेण प्रतिहन्ति । यत्र सख्या पुष्पमाला ग्रथितेति स्थूलार्थः ।

अत्र खलुशब्दस्योत्प्रेक्षावाचकत्वात् वाच्या क्रियोत्प्रेक्षा, वैरशोधनं प्रति सूचिशिखानिखातेति पदयोरर्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गमनयोरङ्गाङ्गिभावेन सङ्करः; सोऽपि च च्छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ॥६७॥

बाङ्गाला—যে সভায় পদ্মপ্রভৃতি পুষ্প সকল কামের বাণ হইয়া দময়ন্তীর হৃদয়ে যে প্রহার করিয়াছিল; একটী সখী সেই পুষ্প সকলের ভিতরে সূচের অগ্রদেশ বিদ্ধ করিতে থাকিয়া মালানির্ম্মাণ করতঃ, সেই শত্রুতার প্রতিশোধ দিয়াছিল ॥৬৭॥

अन्वयः—यत्र भैमी अतिभीय ताम् अवदत्—“( हे ) सखि ! इदं साहसिक्यं त्यज त्यज । त्वम् एव प्रसूनानि बाणान् गुणेन सज्जान् कृत्वा मदनाय दत्से ! ॥६८॥

यत्रेति । यत्र सभायाम्, भैमी दमयन्ती, अतिभीय मदनादतिशयेन भयं प्राप्य, तां स्रजं सृजन्तीं सखीम्, अवदत् । किमवददित्याह—‘हे सखि ! इदं मालाग्रथनरूपम्, साहसिक्यम् अविचारितं कर्म, त्यज त्यज । त्वमेव मम प्रभावित्र्यसीति भावः, प्रसूनानि पद्मादिपुष्पस्वरूपान् बाणान्, गुणेन सूत्रेण च गुणेन मौर्व्या, सज्जान् सन्नद्धान् कृत्वा, मदनाय कामाय, दत्से ददासि ! । या खलु शत्रुं सज्जं कृत्वा स्वजनस्यैव ददाति, सा कथं तस्य स्वजनस्य सखी स्यादिति पुष्पमालाग्रथनमिदं त्यज त्यजेति भावः ।

अत्र मालासूत्र धनुर्मौर्व्योर्भेदेऽपि गुणशब्देनैव तयोरभेदाध्यवसायादतिशयोक्तिरलङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ॥६८॥

बाङ्गाला—যে সভায় দময়ন্তী অতিশয় ভয় পাইয়া, মালাকারিণী সেই সখীকে এই কথা বলিয়াছিলেন যে, “সখি ! এই অবিবেচনার কার্য্য পরিত্যাগ কর পরিত্যাগ কর । কেন না, তুমিই, পুষ্পরূপ বাণসমূহকে গুণযুক্ত করিয়া, কামদেবকে দিতেছ ।”॥৬৮॥

अन्वयः—यत्र सुमध्या सख्याः कुचपत्रभङ्गीमध्ये करेण मकरीम् आलिख्य ताम् अलपत्—“( हे ) आलि ! त्वदेकावलि-नाकनद्याः इदं यानं मन्ये ॥६९॥

आलिख्येति । यत्र सभायाम्, सुमध्या सुन्दरकटीदेशा काचित् सखी, सख्याः कुचयोः स्तनयोरुपरि या पत्रभङ्गी पत्रावलिरचना तस्या मध्ये मध्यदेशे, करेण हस्तेन, मकरीं तदाख्यजलजन्तुस्त्रियम्, आलिख्य चित्रयित्वा, तां सखीम्, अलपत् अभाषत । किमलपत्तदाह—हे आलि ! सखि ! तव एकावलिः एकयष्टीका मुक्तामालैव नाकनदी निर्मलधवलत्वात् गङ्गा तस्याः, इदं मकरीस्वरूपम्, यानं वाहनम्, मन्ये “गङ्गा मकरवाहिनी” इति शास्त्रात् सम्भावयामि । परिहासमात्रमिदम् ।

तामेव सा यत्र जगाद भूयः पयोधियादः कुचकुम्भयोस्ते ।
सेयं स्थिता तावकहृच्छयाङ्क-प्रियास्तु विस्तारयशःप्रशस्तिः ॥७०॥
शारीं चरन्तीं सखि ! मारयैताम् इत्यक्षदाये कथिते कयापि ।
यत्र स्वघातभ्रमभीरुशारी-काकूत्यसाकूतहसः स जज्ञे ॥७१॥

---

अत्र कायस्था नाकनदीत्वारोपात् निरङ्गं केवलरूपकमलङ्कारः प्रथमार्धगतश्चच्छेकानुप्रासेन संसृष्टः । प्रसादो गुणः, वैदर्भी च रीतिः ॥६९॥

বাঙ্গালা—যে সভায় ক্ষীণকটী কোন সখী অপর সখীর স্তন দুইটীর উপরে যে পত্ররচনা ছিল, তাহার মধ্যে হস্ত দ্বারা একটী মকরী চিত্র করিয়া তাহাকে বলিয়াছিল "হে সখি! তোমার একলহরী মুক্তামালারূপ গঙ্গার এইটী বাহন বলিয়া আমি মনে করি" ॥৬৯॥

अन्वयः—यत्र सा ताम् एव भूयः जगाद— "पयोधि यादः तावक-हृच्छयाङ्क-प्रिया ते कुचकुम्भयोः स्थिता सा इयं ते कुचकुम्भयोः विस्तारयशःप्रशस्तिः अस्तु ॥७०॥

तामिति । यत्र सभायाम्, सा पूर्वोक्ता चित्रकारिणी सुमध्या सखी, तामेव पूर्वोक्ताम् एकावलिधारिणीं सखीम्, भूयः पुनरपि जगाद उवाच । किं जगादेत्याह— पयोधेः समुद्रस्य यादो जलजन्तुरूपा, तावकस्त्वदीयो यो हृच्छयो हृदयान्तरवर्त्ती कामः तस्य अङ्कं ध्वजत्वात् चिह्नभूतो यो मकरस्तस्य प्रिया प्रणयिनी, ते तव कुचकुम्भयोरुपरि स्थिता, सा मच्चित्रिता, इयं मकरी, ते तव कुचकुम्भयोः, विस्तारस्य पीनोन्नतत्वस्य यद्यशः सुख्याति-स्तस्य प्रकर्षेण शिष्यते अनयेति प्रशस्तिः शासनं निदर्शनम्, अस्तु भवतु । अत्रायं भावः उद्दामयौवनवशात्तव हृदये ध्रुवमेव कामो वर्त्तते ; तेन च तस्य ध्वजभूतो मकरोऽपि तत्र विद्यत एव । किन्तु इयन्तं कालं यावत् तव कुचयोर्विशेषविस्तारानुत्पत्त्या स्थान लाभासम्भवात् तन्मकरप्रिया मकरी अगत्या तस्मिन् क्षुद्रसमुद्र एव स्थिता । इदानीन्तु तव कुचयोर्विशेषविस्तारोत्पत्त्या स्थानलाभसम्भवात् सा प्रियमकरसङ्गमार्थं मच्चित्ररूपेण तव कुचयोरेवागता । अतएव कुचयोर्विस्तारयशः प्रशस्तीभवनं तस्या मकर्य्याः सम्भवपरमेवेति । इदमपि परिहासमात्रम् ।

अत्र श्लेषवशे हस्त्यनुप्रासोऽलङ्कारः । वन्धार्थस्य दुरूहत्वादोजो गुणः, गौडी च रीतिः ।

"यादांसि जलजन्तवः" इत्यमरः । ते कुचकुम्भयोरिति पदमाप्यनुसन्धानीयम् ॥७०॥

বাঙ্গালা—যে সভায় সেই সুমধ্যা সখী, অপর সখীকে পুনরায় বলিয়াছিল যে, সখি! তোমার হৃদয়ে কামদেব রহিয়াছেন; সুতরাং তাঁহার ধ্বজ মকরও রহিয়াছে; অতএব সেই মকরের প্রিয়তমা, সমুদ্রের জলজন্তু এই সেই মকরী আসিয়া, তোমার স্তন-কুম্ভ দুইটীর উপরে অবস্থান করতঃ, এখন সে দুইটীর বিশালতাসুখ্যাতির নিদর্শন হউক ।৭০॥

अन्वयः—(हे) सखि ! एतां चरन्तीं शारीं मारय इति यत्र अक्षदाये कया अपि कथिते (सति), सः स्व-घात-भ्रम-भीरु-शारी-काकूत्य-साकूत-हसः जज्ञे ॥७१॥

शारीमिति । हे सखि ! एतां निर्दिश्यमानाम्, चरन्तीं कोष्ठात् कोष्ठान्तरं व्रजन्तीम् अन्तरे भ्रमन्तीम्, शारीम् अक्षगुटिकां पक्षिणीविशेषञ्च, मारय स्वपक्षगुटिकास्थापनेन उत्सारय अपराधसत्त्वेन प्रहर च, इति इत्थम्, यत्र सभायाम्, अक्षदाये पाशकगुटिकादाने, कयापि पाशकक्रीडां कुर्वत्या सख्या, कथिते सति, स नलः स्वघातस्य आत्मन एव प्रहारस्य यो भ्रमः द्वितीयार्थस्य ग्रहणात् मामेव मारयितुमियमादिशतीति भ्रान्तिस्तेन

भैमीसमीपे स निरीक्ष्य यत्र ताम्बूलजाम्बूनदहंसलक्ष्मीम् ।
ज्ञातप्रियादूत्यमहोपकार-मरालमोहद्रढ़िमानमूहे ॥७२॥
तस्मिन्नियं सेति सखीसमाजे नलस्य सन्देहमथ व्युदस्यन् ।
अपृष्ट एव स्फुटमाचचक्षे स कोऽपि रूपातिशयः स्वयं ताम् ॥७३॥

---

भीरुम् अधीला या शारी पक्षिणी तस्याः काकोदुःखसूचकविकृतस्वरस्य उत्थेन उत्थानेन साकूतः 'आश्चर्यमेव' स्फुटतमाषाभिन्ना शारिका' इत्यभिप्रायसहिती हसी मन्दहास्यं यस्य स तादृशः जन्ये जातः ।

अत्र सख्या अक्षगुटिकार्थं प्रयुक्तस्य शारीपदस्य शारिकया आत्मार्थं योजनात् श्लेषवक्रोक्तिरलङ्कारः सर्वत्र छत्त्यनुप्रासश्चानयोः संसृष्टिः । माधुर्यं गुणः, पाञ्चाली च रीतिः ।

"पर्य्यायोऽक्षोपकरणे शारिः शकुनिकान्तरे" इति त्रिकाण्डशेषः । "दायी दाने यौतुकादिधने ज्ञोत्रु-कृत्या-अर्थे । विभक्तव्यपितृद्रव्ये" इति हेमचन्द्रः ।

उत्थमिति "उत्थानीनिषिधति—" इत्यादिना उत्पूर्वस्य तिष्ठतेः रूपम् । हस इति "स्वनहसोर्वा" इति हसतेः अल् प्रत्ययः ॥७१॥

বাঙ্গালা—"সখি ! এই শারীটা (গুটিটা, টিয়াপক্ষিণীটা) চলিয়াছে, সুতরাং এটাকে মার" এইরূপ কোন সখী গুটি দেওয়ার কথা বলিলে, ভ্রমবশতঃ টিয়াপক্ষিণীটা মনে করিল যে 'আমাকেই মারিবার আদেশ করিয়াছে'; তাই সে টিয়াপক্ষিণীটা ভীত হইয়া দুঃখবিকৃতস্বরে রব করিয়া উঠিল; তাহাতে যে সভায় নল 'ইহা আশ্চর্য্য বটে' এইরূপ মনোবৃত্তির সহিত হাস্য করিলেন ॥৭১॥

अन्वयः—यत्र सः भैमीसमीपे ताम्बूल-जाम्बूनद-हंस-लक्ष्मीं निरीक्ष्य ज्ञात-प्रिया-दूत्य-महोपकार-मराल मोह-द्रढ़िमानम् ऊहे ॥७२॥

भैमीति । यत्र सभायाम्, स नलः, भैम्या दमयन्त्याः समीपे, ताम्बूलस्य पर्णस्य यो जाम्बूनदहंसः स्वर्ण-निर्मितहंसाकारपात्रं तस्य लक्ष्मीं शोभाम्, निरीक्ष्य दृष्ट्वा, ज्ञातः प्रियाया दमयन्त्याः समीपे दूत्यं दूतकार्य्यमेव महानुपकारो येन तस्य तादृशस्य मरालस्य स्वर्णवर्णराजहंसस्य यो मोहः 'स एवायं राजहंसः' इत्येवं भ्रमस्तस्य द्रढ़िमानं दृढत्वं तादृशं निश्चयात्मकं भ्रमनित्यर्थः, ऊहे कृतवान्, तस्य पुनरप्यागमनसम्भवात् तदा-कारत्वादिति भावः ।

अत्र स्वर्णमयताम्बूलपात्रे तात्त्विकहंसभ्रमात् भ्रान्तिमानलङ्कारश्छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते । समासबाहुल्यादोजो गुणः, गौड़ी च रीतिः ॥७२॥

বাঙ্গালা—যে সভায় দময়ন্তীর নিকটে স্বর্ণনির্ম্মিত হংসাকার একটী তাম্বূলের পাত্র ছিল; তাহার শোভা দেখিয়া নল এইরূপ নিশ্চিত ভ্রম করিলেন যে, যে হংস পূর্ব্বে দময়ন্তীর নিকটে আমার দৌত্যরূপ গুরুতর উপকার করিয়াছিল, এই সেই রাজহংস ॥৭২॥

अन्वयः—अथ तस्मिन् सखीसमाजे 'इयं सा ?' इति नलस्य सन्देहं व्युदस्यन् कः अपि सः रूपा-तिशयः अपृष्टः एव स्वयं तां नलस्य स्फुटम् आचचक्षे ॥७३॥

तस्मिन्निति । अथ उक्तानिषव्यापारावलोकनानन्तरम्, तस्मिन् सखीनां समाजे समूहमध्ये, इयं दृश्यमाना, सा दमयन्ती ? इति काक्वा प्रश्नो गम्यते, इति इत्थम्, प्रतिसखि जायमानमित्याशयः, नलस्य सन्देहम्, व्युद-स्यन् प्रश्नापेक्षया विपरीतलक्षणादिव निराकुर्वन्, कोऽपि अनिर्वचनीयः, स रूपातिशयः सौन्दर्य्यातिरेकः, अपृष्ट एव

भैमीविनोदाय मुदा सखीभिः तदाकृतीनां भुवि कल्पितानाम्।
नातर्कि मध्ये स्फुटमप्युदीतं तस्यानुबिम्बं मणिवेदिकायाम् ॥७४॥
हुताश-कीनाश-जलेश-दूतीः निराकरिष्णोः कृतकाकुयाच्ञाः।
भैम्या वचोभिः स निजां तदाशां न्यवर्त्तयद्दूरमपि प्रयाताम् ॥७५॥

---

अत्र का दमयन्तीति अजिज्ञासितः सन्नेव, स्वयम् आत्मनैव, तां दमयन्तीम्, नलस्य समीपे, स्फुटं स्पष्टम्, आच-ख्यौ आख्यातवान् आख्यानवत् सूचितवानित्यर्थः। नलः सर्वोत्तमं रूपातिशयं विलोक्य दमयन्तीं निश्चितवानिति स्फुटार्थः।

अत्र 'इयमेव दमयन्ती सर्वोत्तमरूपवत्त्वात् तथैव दूतवन्द्यादिभिः कथितत्वात्' इत्यनुमानात् सन्देहस्योद्घाटेन विच्छित्तेश्च अनुमानमलङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः ॥७३॥

**বাঙ্গালা**—তাহার পর, সেই সখীগণের মধ্যে 'ইনিই কি সেই দময়ন্তী?', এইরূপ প্রত্যেক সখীর উপরেই নলের দময়ন্তী সন্দেহ জন্মিতেছিল; কিন্তু কোন একটীর অনির্বচ-নীয় এবং সর্বোত্তম রূপই সে সন্দেহ দূর করিল এবং সে রূপকে জিজ্ঞাসা না করিলেও, সে রূপ নিজেই নলের নিকট দময়ন্তীকে স্পষ্টভাবে চিনাইয়া দিল ॥৭৩॥

**অন্বয়ঃ**—भैमीविनोदाय सखीभिः मुदा भुवि कल्पितानां तदाकृतीनां मध्ये मणिवेदिकायां स्फुटम् उदीतम् अपि तस्य अनुबिम्बं न अतर्कि ॥७४॥

ननु मणिमयभूमौ पतितं नलप्रतिबिम्बमालोक्य सख्यः कथं न चकिता जाता इत्याह भैमीति। भैम्या दमयन्त्या विनोदाय मनोरञ्जनाय, सखीभिः, मुदा हर्षेण, भुवि मणिमयभूमौ, कल्पितानां चित्रितानाम्, तस्य नलस्य आकृतीनां प्रतिमूर्त्तीनां मध्ये, मणिवेदिकायां नलस्य सम्मुखवर्त्तिन्यां मणिबद्धपरिष्कृतभूमौ, स्फुटं स्पष्टम्, उदीतमुत्पन्नमपि, तस्य नलस्य, अनुबिम्बं प्रतिबिम्बम्, न अतर्कि सखिभिः पृथक्तया न लक्षितं; समान-तया प्रतिबिम्बस्यापि चित्रितत्वभ्रमादिति भावः।

अत एवात्र सामान्यं नामालङ्कारः; "सामान्यं प्रकृतस्यान्यतादात्म्यं सदृशैर्गुणैः" इति दर्पण-लक्षणात्। न च केचिदुक्तो मीलितं नामालङ्कार इति युक्तम्, "मीलिते उत्कृष्टगुणेन निकृष्टगुणस्य तिरोधानम्, इह तु उभयोस्तुल्यगुणतया भेदाग्रहः" इति दर्पणकृतैव व्यवस्थापितत्वात् अत्र तूभयोस्तुल्यगुणत्वात् उत्कर्ष-निकर्षाभावात्। सामान्यालङ्कारेण च प्रतिबिम्बे चित्रितमूर्त्तित्वभ्रमाद् भ्रान्तिमानलङ्कारो व्यज्यत इत्यलङ्कारेणाल-ङ्कारध्वनिः। प्रसादो गुणः, वैदर्भी च रीतिः ॥७४॥

**বাঙ্গালা**—দময়ন্তীর মনোরঞ্জনের নিমিত্ত সখীরা মণিময় ভূমিতে বহুতর নলের প্রতি-মূর্ত্তি চিত্র করিয়া রাখিয়াছিল; সুতরাং তাহার মধ্যে মণিবেদিকার উপরে নলের প্রতি-বিম্ব স্পষ্ট পড়িয়া থাকিলেও, তাহা সখীরা লক্ষ্য করিতে পারিয়াছিল না ॥৭৪॥

**অন্বয়ঃ**—सः कृत-काकु-याच्ञाः हुताश-कीनाश-जलेश-दूतीः निराकरिष्णोः भैम्याः वचोभिः दूरं प्रयाताम् अपि निजां तदाशां न्यवर्त्तयत् ॥७५॥

हुताशेति। स नलः, कृता काकुः अनुनयसूचकविकृतस्वरेण याच्ञा वह्निं भजेत्यादिप्रार्थना याभिस्ताः, हुताशो वह्निः कीनाशो यमः, जलेशो वरुणश्च तेषां दूतीः, निराकरिष्णोः साधु प्रत्याचक्षाणायाः, भैम्या दमयन्त्याः, वचोभिः 'भूलोकवर्त्तिनि कस्मिंश्चिदद्वितीये नरे स्वान्तमनुरक्तमिति न वह्न्यादीनां कस्यचिदपि इच्छामि' इत्यादिभि-र्वाक्यैः, दूरं प्रयातामपि दौत्याङ्गीकारेण तिरोहितामपि, निजां स्वकीयाम्, तदाशां दमयन्तीप्राप्त्याशाम्, न्यवर्त्तयत् पुनः प्रत्यावर्त्तितवान्। अन्योऽपि वचोभिरेव दूरप्रयातं सुहृदादिं निवर्त्तयति।

विभ्रमिमन्तः सभयः स भैम्यां (१) मध्येसभं वासवसम्भलीयाम् ।
सम्भालयामास मृषं क्षमाशः तदालिवृन्दैरभिनन्द्यमानाम् ॥७६॥
लिपिर्न दैवी सुपठा भुवीति तुभ्यं मयि प्रेषितवाचिकायाः ।
इन्द्रस्य दूत्याः रचय प्रसादं विज्ञापयन्त्यामवधानदानैः (२) ॥७७॥

---

अत्र प्रथमपादे छेकानुप्रासोऽलङ्कारः । तथा अवर्त्तयदित्यन्ते न वाक्यसमाप्तावपि पुनस्तदन्वयं तस्य तदाद्यामिलस्य विशेषणभावेन "दूरमपि प्रयाताम्" इत्यस्योपादानात् समाप्तपुनरात्ततादोषः ; स च परपादद्वयपाठविपर्यासेन समाधेयः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"क्षीणाशः काव्ये घुद्रे क्षतान्तोपायघातिनीः" इति विश्वः ।

निराकरिष्णोरिति "भ्राज्यल ङ्कञ्" इत्यादिना इष्णुच् । तस्य च निष्ठादित्वात् दूतीरित्यत्र "न लोकाव्ययनिष्ठादिषु" इति षष्ठीनिषेधात् द्वितीयैव ॥७५॥

বাঙ্গালা—অগ্নি, যম ও বরুণের দূতীরা অনুনয়সূচক স্বরে সেই সকল দেবতাকে বরণ করিবার জন্য দময়ন্তীর নিকট প্রার্থনা করিতেছিল ; দময়ন্তীও উপযুক্ত বাক্য দ্বারা তাহাদিগকে প্রত্যাখ্যান করিতেছিলেন । এদিকে দৌত্যস্বীকার করায় নলের দময়ন্তীলাভের আশা পূর্বে দূরে গিয়াছিল ; কিন্তু তখন নল দময়ন্তীর সেই সকল বাক্য শুনিয়া নিজের সেই আশাকে ফিরাইয়া আনিলেন ॥৭৫॥

**अन्वयः**—सः मध्येसभं तदालिवृन्दैः अभिनन्द्यमानां वासवसम्भलीयां भैम्यां विभ्रमिम् अन्तःसभयः मृषं क्षमाशः (च सन्) सम्भालयामास ॥७६॥

विभ्रमिमिति । स नलः, मध्येसभं तस्याः सभाया मध्ये, तस्या दमयन्त्या आलिवृन्दैः सखीगणैः, अभिनन्द्यमानाम् 'इयं युक्तं हितञ्च वदति' इत्येवं प्रशस्यमानाम्, वासवस्य इन्द्रस्य सम्भलीयां कुट्टिनीसम्बन्धिनीं तद्दूत्यामित्यर्थः, भैम्यां तत्समीपे, विभ्रमिम् इन्द्रविज्ञापनम्, अन्तर्मनसि सभयः तदालिवृन्दैरेवाभिनन्द्यमानतया भैम्याश्चाभिमतेरिव स्वीकारसम्भावनात् भयसहितः, अतएव भृशमत्यन्तं क्षमा क्षीणीभूता आशा भैमीलाभाशा यस्य स तादृशश्च सन्, सम्भालयामास आकर्णयामास ।

अत्र सभयत्वं प्रति तदालिवृन्दैरभिनन्द्यमानामिति पदार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गं छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते । पूर्ववत् समाप्तपुनरात्ततादोषः, पूर्ववच्च समाधानम् । माधुर्यं गुणः, वैदर्भी च रीतिः ।

"सम्भली कुट्टिनी समे" इत्यमरः ।

सभाया मध्ये इति मध्येसभं, "पारे मध्ये षष्ठ्या वा" इत्यव्ययीभावे निपातः । सम्भालयामासेति "भल आभण्डने" इति चौरादिकस्य भल धातो रूपम् । धातूनामनेकार्थत्वाच्च श्रवणार्थत्वम् ॥७६॥

বাঙ্গালা—ইন্দ্রের দূতী সভার মধ্যে থাকিয়াই ইন্দ্রের নিবেদন দময়ন্তীর নিকটে জানাইতেছিল ; দময়ন্তীর সখীরাও তাহার প্রশংসা করিতেছিল ; তাহাতে নলের মনে আশঙ্কা জন্মিল এবং তাঁহার দময়ন্তী লাভের আশা অত্যন্ত ক্ষীণ হইয়া গেল ; এই অবস্থায় নল সেই নিবেদন শুনিতে লাগিলেন ॥৭৬॥

---

(१)…भैम्या । (२)…अवधानदानम् ।

सलीलमालिङ्गनयोपपीड्म् अनामयं पृच्छति वासवस्त्वाम् ।
शेषस्त्वदाश्लेषकथापनिद्रैः तद्रोमभिः सन्दिदिशे भवत्यै ॥७८॥
यः प्रेर्थ्यमाणोऽपि हृदा मघोनः त्वदर्थनायां क्रियमापदागः ।
स्वयंवरस्थानजुषस्तमस्य बधान कण्ठं वरणस्रजाद्य ॥७९॥

---

**अन्वयः**—भुवि दैवी लिपिः न सुपठा इति तुभ्यं प्रेषितवाचिकस्य इन्द्रस्य दूत्या विज्ञापयन्त्यां मयि अवधानदानैः प्रसादं रचय ॥७७॥

अप्रधानत्वादप्रियमवकथानां दूतीनिरासं संक्षेपेणोक्त्वा प्रधानत्वादिन्द्रदूतीनिरासं विस्तरेण वक्ष्ये, तत्र यथा-प्रश्नं। ननु त्वमेवेन्द्रदूती, तर्हि विशेषविश्वासाय तदीयलिपिरानेतव्या सा कुत इत्याह लिपिरिति। भुवि मर्त्यलोके, दैवी देवसम्बन्धिनी देवलिखितेत्यर्थः, लिपिरक्षरावली, न सुपठा न अनायासेन पाठ्या। यदि केनापि पठितुं शक्यते इत्यतः अपाठ्येत्यनभिधाय न सुपठेत्यभिहितमिति बोध्यम्। इति हेतोः, तुभ्यं त्वदर्थम्, प्रेषितं मया प्रेरितं वाचिकं सन्देशवाक्यं येन तस्य इन्द्रस्य, दूत्यां विज्ञापयन्त्यां तस्येन्द्रस्य मनोभावं निवेदयन्त्यां मयि, अवधानदानैः मनोयोगार्पणैः, प्रसादमनुग्रहम्, रचय कुरु। सावधाना सती इन्द्रवाक्यमाकर्णयेति स्थूलार्थः।

अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥७७॥

**বাঙ্গালা**—দেবলোকের অক্ষর, মর্ত্তালোকে অনায়াসে পড়া যাইবে না ; এই জন্য ইন্দ্র আমা দ্বারা আপনার নিকট খবর পাঠাইয়া দিয়াছেন ; আমি ইন্দ্রের দূতী ; সুতরাং আমি আপনার নিকট ইন্দ্রের অভিপ্রায় জানাইতেছি ;আপনি মনোযোগ দান করিয়া আমার প্রতি অনুগ্রহ করুন ॥৭৭॥

**अन्वयः**—वासवः सलीलम् आलिङ्गनया उपपीड्य त्वाम् अनामयं पृच्छति। त्वदाश्लेषकथापनिद्रैः तद्रोमभिः शेषः भवत्यै सन्दिदिशे ॥७८॥

किं त्वया विज्ञापनीयं यदवधानं मया देयमित्याह सलीलमिति। वासव इन्द्रः, सलीलं प्रियतमाक्रीडितसाभिनिवेशं सविलासं यथा स्यात्तथा, आलिङ्गनया तवाश्लेषेण, उपपीड्मुपपीड्य गाढ़मालिङ्ग्येत्यर्थः, त्वाम् अनामयम् आरोग्यम्, पृच्छति नीरोगासि किमिति जिज्ञासते। तव आश्लेषकथया आलिङ्गनप्रसङ्गश्रवणेनेत्यर्थः अपनिद्रैः जागरितैरुत्थितैरिति तात्पर्यम्, तस्य वासवस्य रोमभिः कर्त्तृभिः, शेषः अवशिष्टो विषयः, भवत्यै तुभ्यम्, सन्दिदिशे सन्दिष्टः ; तवालिङ्गनस्मरणमात्रेणैव जायमानं रोमाञ्चं त्वयि तस्य गरीयाननुरागः प्रकटित इत्यभिप्रायः।

अत्र रोमाञ्चाख्यभावोदयात् भावोदयो नामालङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः।

आलिङ्गनयेति "लिगि चित्रीकरणे" चौरादिकात् स्वार्थे णन्तात् लिङ्गधातोः "ण्यासश्रन्थो युच्—" इत्यादिना स्त्रियां युच्प्रत्ययः। उपपीड़मिति "उपपीड़रुधकर्षः स" इति णमुल्प्रत्ययः।

दमयन्त्याः क्षत्रियकन्यात्वादेव अनामयप्रश्नः। यथा मनुः—

"ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम्। वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च" ॥७८॥

**বাঙ্গালা**—ইন্দ্র বিলাসের সহিত গাঢ় আলিঙ্গন করিয়া, আপনার নিকট আরোগ্য জিজ্ঞাসা করিতেছেন। আর আপনার আলিঙ্গনের বিষয় স্মরণমাত্রেই তাঁহার রোমাঞ্চ উত্থিত হইয়া, অবশিষ্ট বিষয় আপনার নিকট বলিয়া দিয়াছে ॥৭৮॥

नैनं त्यज क्षीरधिमन्थनाद्यैः अस्यानुजायोपगमितामरैः श्रीः।
अस्मै विमथ्येक्षुरसोदमन्यां श्राम्यन्तु नोत्थापयितुं श्रियं ते ॥८०॥
लोकस्रजि द्यौर्दिवि चादितेयाः अप्यादितेयेषु महान् महेन्द्रः।
किं क्रष्टुमर्थी यदि सोऽपि रागात् जागर्त्ति कक्षा किमतः पराऽपि ॥८१॥

---

अन्वयः—यः मघोनः हृदा प्रार्थ्यमानः अपि (सन्) त्वदर्थनायां ह्रियम् आगः आपत्, (त्वं) स्वयंवरस्थानजुषः अस्य तं कण्ठं वरणस्रजा आशु बधान ॥७९॥

य इति। यो मघोन एव कण्ठः, मघोन इन्द्रस्य, हृदा मनसा, प्रार्थ्यमानोऽपि 'याहि ब्रूहि" इत्येवं नियोज्यमानोऽपि सन्, तव अर्थनायां 'मामेव वृणु" इति याञ्चायाम्, ह्रियं लज्जारूपम्, आगः अपराधम्, आपत् प्राप्तवान्; हे भैमि! त्वम्, स्वयंवरस्थानजुषः स्वयंवरसभोपस्थितस्य, अस्य मघोनः, तं कण्ठं गलदेशम, वरणस्रजा वरणमालया, आशु शीघ्रम्, बधान बन्धनं प्रापय। त्वं मघोनः प्रभुः, तस्य कण्ठस्तु लज्जावशात्त्वत्प्रार्थनाभावरूपमपराधं कृतवान्; तेन च त्वं वरणमालया तस्य कण्ठस्य बन्धनरूपं दण्डं विधेहीति भावः।

अत्र बन्धनरूपप्रतिकूलाचरणस्य पतित्वप्राप्तिरूपानुबन्धित्वात् अनुकूलं नामालङ्कारः; "अनुकूलं प्रातिकूल्यमनुकूलानुबन्धि चेत्" इति दर्पणलक्षणात्। प्रसादो गुणः, वैदर्भी च रीतिः ॥७९॥

বাঙ্গালা—ভীমরাজনন্দিনি! ইন্দ্রের যে কণ্ঠ তাঁহার মন দ্বারা প্রেরিত হইয়াও, আপনাকে প্রার্থনা করিবার বিষয়ে লজ্জারূপ অপরাধ করিয়াছিল; ইন্দ্র স্বয়ংবরস্থানে উপস্থিত হইলে, আপনি বরণমালা দ্বারা শীঘ্রই ইন্দ্রের সেই কণ্ঠদেশকে বন্ধন করুন।৭৯।

अन्वयः—(हे दमयन्ति!) एनं न त्यज। यैः अमरैः क्षीरधिमन्थनात् अस्य अनुजाय श्रीः उद्गमिता, ते इक्षुरसोदं विमथ्य अस्मै अन्यां श्रियम् उत्थापयितुं न श्राम्यन्तु ॥८०॥

नेति। हे दमयन्ति! एनमिन्द्रम्, न त्यज, अपि तु एनमेव वृणु इत्याशयः। तेन च न केवलमस्योपकारः, किन्तु सर्वेषामेव देवानामुपकारः कृतः स्यादित्याह— यैरमरैर्देवैः, क्षीरधिमन्थनात् क्षीरोदसागरमथनात्, अस्य इन्द्रस्य, अनुजाय कनिष्ठसहोदराय उपेन्द्राय नारायणाय, श्रीर्लक्ष्मीः, उद्गमिता पूर्वमुत्थापिता; ते अमराः, इक्षुरसोदम् इक्षुरससागरम्, विमथ्य मथित्वा, अस्मै इन्द्राय, अन्यां श्रियं लक्ष्मीम्, उत्थापयितुम्, न श्राम्यन्तु आयस्यन्तु। तथा च त्वं चेदिन्द्रं न वरिष्यसि, तदा ये देवाः क्षीरोदसागरं मथित्वा लक्ष्मीदेवीमुत्थाप्य उपेन्द्राय दत्तवन्तः, त एव देवा ज्येष्ठत्वादुपेन्द्रापेक्षया उत्कृष्टतराय इन्द्राय दातुं क्षीरोदसागरापेक्षया उत्कृष्टतरमिक्षुरसोदसागरं मथित्वा अन्यां लक्ष्मीमुत्थापयिष्यन्ति। त्वद्वरणे च तेषां देवानां तत् परिश्रमनिवृत्तिरिति भावः।

अत्र देवानामिक्षुरससागरमथनपूर्वकापरलक्ष्म्युत्थापनपरिश्रमासम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिरलङ्कारः। तेन च दमयन्ती लक्ष्मीतोऽप्युत्कृष्टतरेति व्यतिरेको व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः। प्रसादो गुणः, वैदर्भी च रीतिः ॥८०॥

বাঙ্গালা—রাজনন্দিনি! আপনি ইন্দ্রকে পরিত্যাগ করিবেন না। কেন না, তাহা হইলে, যে দেবতারা ইন্দ্রের কনিষ্ঠ সহোদর নারায়ণের জন্য, ক্ষীরোদসাগর মন্থন করিয়া লক্ষ্মীদেবীকে উঠাইয়াছিলেন; তাঁহারাই আবার ইন্দ্রেরই জন্য, ইক্ষুরসসাগর মন্থন করিয়া, আর একটী লক্ষ্মীকে উঠাইবার জন্য পরিশ্রম করিবেন না।৮০।

पदं शतेनाप मखैर्यदिन्द्रस्तस्मै स ते याचनचाटुकारः ।
कुरु प्रसादं तदलङ्कुरुष्व स्वीकारकृद्भ्रूनटनश्रमेण ॥८२॥

---

**अन्वयः**—लोकस्रजि द्यौः महती, दिवि च आदितेयाः महान्तः, आदितेयेषु अपि महेन्द्रः महान् । सः अपि रागात् यदि किङ्करत्वम् अर्थी (भवति), तदा अतः परा अपि कथा किं जागर्त्ति ॥८१॥

लोकेति । लोकस्रजि भुवनपरम्परामध्ये, द्यौः स्वर्ग एव महती ; तेन तव स्वर्गे एवावस्थानमुचितमिति भावः । दिवि स्वर्गे च, आदितेया अदितिनन्दना देवा एव महान्तः । तेन च स्वर्गस्थानपि गन्धर्वादीनपहाय कश्चिद्देव एव त्वया वरणीय इत्याशयः । आदितेयेषु देवेष्वपि, महेन्द्रो देवराज एव महान् । ततश्च अग्निप्रभृतीनपरानपि देवान् विहाय महेन्द्र एव पतित्वे नाश्रयणीय इत्यभिप्रायः । स महेन्द्रोऽपि रागादनुरागात्, यदि किङ्करत्वं तव किङ्करीभवितुम्, अर्थी प्रार्थी भवति, तदा अतः परापि, कथा सौन्दर्यश्लाघा, किं जागर्त्ति तव वर्त्तते, अपितु नैवेत्यर्थः । दमयन्ति ! धन्यासि त्वम्, तादृशेन महेन्द्रेणापि सानुनयमेव प्रार्थितत्वादिति भावः ।

अत्र महत्त्वरूपैकगुणेन द्युप्रभृतीनामभिसम्बन्धात् तुल्ययोगिता, उत्तरोत्तरमुत्कर्षात् सारं नामालङ्कारश्च ; अनयोरेकाश्रयानुप्रवेशरूपः सङ्करः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"कथा स्यादन्तरीयस्य पश्चादञ्चलपल्लवे । स्वर्ज्जिस्यदे ना दीर्मूर्ति कच्छवीरस्त्रियेऽपि च ।" इति मेदिनी ॥८१॥

**বাঙ্গালা**—যত গুলি ভুবন আছে, তাহার মধ্যে স্বর্গই প্রধান ; স্বর্গে আবার দেবতারাই প্রধান এবং দেবতাদের মধ্যেও আবার দেবরাজই প্রধান। সুতরাং সেই দেবরাজও যদি অনুরাগবশতঃ আপনার দাস হইবার জন্য প্রার্থী হইলেন ; তাহা হইলে, ইহার পরও আর রূপের স্পর্দ্ধা কি থাকিতে পারে ? ॥৮১॥

**अन्वयः**—इन्द्रः शतेन मखैः यत् पदम् आप, तस्मै स ते याचनचाटुकारः (सञ्जातः) ; प्रसादं कुरु, स्वीकारकृद्भ्रूनटनश्रमेण तत् अलङ्कुरुष्व ॥८२॥

पदमिति । इन्द्रः, शतेन मखैः शताश्वमेधयज्ञैः, यत् इन्द्रत्वरूपं पदम्, आप प्राप्तवान् ; तस्मै पदाय तत्पदप्रदानायेत्यर्थः, स इन्द्रः, ते तव, याचने प्रार्थनायां चाटु प्रियोक्तिं करोतीति स तथोक्तः सञ्जातः । अतएव प्रसादं तस्मिन्ननुग्रहं कुरु ; स्वीकारकृत् तत्प्रार्थनाया अङ्गीकारसूचकं यद्भ्रुवो नटनं सञ्चालनं तस्य श्रमेण तत्करणायासेन, तत् इन्द्रत्वपदम्, अलङ्कुरुष्व आयत्तीकृत्य परिशोभय । इन्द्रः शताश्वमेधकरणपरिश्रमेण यत् पदं लब्धवान् तदिन्द्रत्वपदं त्वं भ्रूसञ्चालनमात्रेण लभस्वेत्यर्थः । इन्द्रः खलु त्वां प्राप्य स्वस्यापि स्वामिनीं करिष्यतीति भावः ।

अत्र प्रसादकरणं प्रति द्वितीयपादगतवाक्यार्थो हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ॥८२॥

**বাঙ্গালা**—ইন্দ্র, শত অশ্বমেধ যজ্ঞ করিয়া যে ইন্দ্রত্বপদ লাভ করিয়াছিলেন ; সেই ইন্দ্রত্বপদ দিবার জন্য তিনি এখন আপনার নিকট প্রার্থনার প্রিয়োক্তি করিতেছেন। সুতরাং আপনি তাঁহার প্রতি অনুগ্রহ করুন এবং তাঁহার প্রার্থনার স্বীকারসূচক ভ্রূনর্ত্তনের পরিশ্রম দ্বারাই আপনি সেই ইন্দ্রত্বপদকে অলঙ্কৃত করুন ॥৮২॥

मन्दाकिनीनन्दनयोर्विहारे देवे धवे (१) देवरि माधवे वा।
श्रेयः श्रियां यातरि यच्च सख्यां तच्चेतसा भाविनि! भावयस्व ॥८३॥
रज्यस्व राज्ये जगतामितीन्द्रात् याञ्चाप्रतिष्ठां लभसे त्वमेव।
लघूकृतस्वं बलियाचनेन यत्प्राप्तये वामनमामनन्ति ॥८४॥

अन्वयः—देवे धवे (सति), मन्दाकिनी-नन्दनयोः विहारे, माधवे देवरि (सति) वा, श्रियां यातरि सख्यां (सत्यां) वा, यत् श्रेयः (भवेत्) (हे) भाविनि! चेतसा तत् भावयस्व ॥८३॥

मन्दाकिनीति। देवे प्रकरणादिन्द्रे, धवे पत्यौ सति, मन्दाकिनी स्वर्गगङ्गा नन्दनञ्च इन्द्रोद्यानं तयोर्विहारे जलकेलौ वनकेलौ च, यत् श्रेयो मङ्गलं भवेत्; माधवे वामनरूपे स्वयं नारायणे, देवरि पत्युः कनिष्ठभ्रातरि सति वा, यत् श्रेयो मङ्गलं भवेत्; अतएव श्रियां स्वयं लक्ष्मीदेव्याम्, यातरि पतिभ्रातृपत्न्याम् अतएव च सख्याञ्च सत्यां वा, यत् श्रेयो मङ्गलं भवेत्; हे भाविनि! भावनानिपुणे! तारतम्यविचारचतुरे! इति यावत्, चेतसा तत् सर्वम्, भावयस्व विचारय। नृपा च मानुषवरणे मन्दाकिनीविहारादीनां किमपि न स्यात्। अग्निप्रभृतीनां देवानां वरणे च मन्दाकिनीविहारसुखमात्रं भवेत्; किन्तु नन्दनविहारनिबन्धनं माधवस्य देवरत्वनिबन्धनं श्रियो यातृत्वनिबन्धनं सखित्वनिबन्धनञ्च सुखं न भवेत्, अग्निप्रभृतीनां नन्दनवनादिषु सम्बन्धाभावात्। तस्मात् सर्वप्रकारनिरतिशयसुखलाभायेन्द्रमेव वृणुष्वेति भावः।

अत्र एकं श्रेयः प्रति मन्दाकिनीनन्दनविहारादीनां बहूनां कारणानामापातात् समुच्चयोऽलङ्कारः; सर्वपादगतश्छेकानुप्रासेनास्य संसृज्यते। माधुर्यं गुणः, वैदर्भी च रीतिः।

"धवः प्रियः पतिर्भर्त्ता" "श्यालाः स्युर्भ्रातरः पत्न्याः स्वामिनो देवृदेवरौ" "भार्य्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम्" इत्यमरः ॥८३॥

বাঙ্গালা—হে বিচারচতুরে! রাজনন্দিনি! দেবরাজ আপনার পতি হইলে, মন্দাকিনীর জলবিহারে, নন্দনকাননের ভ্রমণবিহারে, অথবা স্বয়ং নারায়ণ দেবর হইলে এবং স্বয়ং লক্ষ্মীদেবী যা ও সখী হইলে, যে কি সুখ হইবে, তাহা আপনি মনে মনে ভাবিয়া দেখুন ॥৮৩॥

अन्वयः—(हे भैमि!) जगतां राज्ये रज्यस्व, इति इन्द्रात् याञ्चाप्रतिष्ठां त्वमेव लभसे। यत्प्राप्तये बलियाचनेन लघूकृतस्वं वामनम् आमनन्ति ॥८४॥

रज्यस्वेति। हे भैमि! जगतां स्वर्गमर्त्यपातालात्मकानां त्रयाणां भुवनानाम्, राज्ये राजत्वपदे, इन्द्रस्य त्रैलोक्याधीशत्वादिति भावः, रज्यस्व पतितया मद्वरणेन अनुरक्ता भव, इति इत्थम्, इन्द्रात् देवराजात्, याञ्चया प्रतिष्ठां गौरवम्, त्वमेव लभसे, न पुनरन्या, असाधारणसौन्दर्य्यादिति भावः। ननु तथात्वे इन्द्रस्य वा किं लाघवम्, येन मम गौरवं मन्यसे इत्याह—यस्य जगतां राज्यस्य प्राप्तये सहोदरेन्द्रकर्त्तृकलाभाय, बलेर्विरोचनसुतात् याचनेन प्रार्थनया, लघूकृतम् अपमानास्पदीकृतं खर्व्वीकृतञ्च स्वम् आत्मा येन तं नारायणम्, वामनं लघुं खर्वञ्च तदाख्यमुपेन्द्रम्, आमनन्ति पुराणज्ञाः कथयन्ति। अतस्त्वदन्तिके याचनादिन्द्रस्य लाघवं तव च गौरवमित्याशयः।

अत्र लघुखर्वयोर्भेदेऽपि यच्छब्दोपात्तयोरभेदाध्यवसायादिका अतिशयोक्तिः ताद्वृशकारणेन वामनाख्यानात्मकर्थेऽपि तत्सम्बन्धादपरा चातिशयोक्तिः, अतिरिक्तेव इन्द्रान्तरेऽपि तेषामङ्गाङ्गिभावेन सङ्करः; सोऽपि च छेकानुप्रासेन संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः ॥८४॥

(१) देवे भवेत्…।

यानेव देवान् नमसि त्रिकालं न तत्कृतघ्नीकृतिरौचिती ते।
प्रसीद तानप्यनृणान् विधातुं पतिष्यतस्त्वत्पदयोस्त्रिसन्ध्यम्॥८५॥
इत्थं कृतवत्या निहितादरेण भैम्या गृहीता मघवत्प्रसाद:।
स्रक् पारिजातस्य ऋते नलाख्यां वासैरमीषामपुपूरदाशाम्॥८६॥

বাঙ্গালা—(দময়ন্তি! তুমি আমাকে পতিত্বে বরণ করিয়া) ত্রিভুবনের রাজত্বের প্রতি অনুরক্তা হও, এইরূপ ইন্দ্রের নিকট হইতে প্রার্থনালাভের গৌরব আপনিই পাইতেছেন। দেখুন—(ইন্দ্রের জন্য) যে রাজ্যলাভের নিমিত্ত, উপেন্দ্ররূপী নারায়ণ বলিরাজার নিকট প্রার্থনা করিয়া, আপনাকে লঘু করিয়াছিলেন বলিয়া, লোকে তাঁহাকে বামন বলে॥৮৪॥

অন্বয়:—(হে দময়ন্তি! त्वं) यान् एव देवान् त्रिकालं नमसि, तत् कृतघ्नीकृति: ते न औचिती। (तेन) त्रिसन्ध्यं त्वत्पदयो: पतिष्यत: तान् अपि अनृणान् विधातुं प्रसीद॥८५॥

इन्द्रस्य वरणे गुणमुक्त्वा इदानीं तदवरणे दोषमाह यानिति। हे दमयन्ति! त्वं यानेव देवान्, त्रिकालं त्रिसन्ध्यम्, नमसि; तेषां देवानां कृतघ्नीकृति: कृतघ्नीकरणम्, ते तव, न औचिती। तेन हि त्रिसन्ध्यं तव पदयोश्चरणयो:, पतिष्यतो नमस्करिष्यत:, तान् देवानपि, अनृणान् ऋणरहितान्, विधातुं कर्त्तुम्, प्रसीद प्रसन्ना भव। तेषां च इयन्तं कालं यावत् त्वं त्रिसन्ध्यं देवान् नमस्करोषि, देवाश्च तं नमस्कारं गृह्णन्ति; इदानीन्तु देवास्त्वयि प्रतिप्रणामदानेन तत् नमस्कारग्रहणरूपम् ऋणं परिशोध्य कृतार्था भवितुमिच्छन्ति। तच्च त्वया मनुष्ये वृते न सम्भवति, देवैर्मनुष्यस्य अनमस्यत्वात्; देवान्तरवरणे च न सम्भवति, अन्यैर्देवैरनमस्यत्वात्। इन्द्रे वृते तु सर्व एव देवा राजत्वात्तं प्रणम्य भवतीमपि प्रणमिष्यन्ति; तथा तत्प्रणामग्रहणे तु ते देवा अनृणा: कृतार्थाश्च भविष्यन्ति। इतरथा तु नमस्कारग्रहणेन उपकारकाणां देवानां कामनापूरणस्याकरणात् "अकामान् करोति य:" इति याज्ञवल्क्यदीपकलिकाधृतस्कन्दपुराणात् त्वया देवानां कृतघ्नीकरणमेव स्यात्। अतस्त्वमिन्द्रमेव वृणुष्वेति भाव:।

अत्र पर्यायं प्रति पूर्वार्द्धवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कार:। प्रसादो गुण:, वैदर्भी च रीति:।

त्रिकालं त्रिसन्ध्यमिति अत्याद्यर्थविग्रु:, पात्रादित्वात् ङीप्प्रत्ययाभाव:॥८५॥

বাঙ্গালা—দময়ন্তি! আপনি যে সকল দেবতাকে তিন বেলা নমস্কার করিয়া থাকেন; সেই সকল দেবতাকেই আবার কৃতঘ্ন করা আপনার উচিত নহে। সুতরাং সেই সকল দেবতারাও আবার তিন বেলাই আপনার চরণযুগলে পতিত হইবেন; তাঁহাদিগকে ঋণমুক্ত করিবার জন্য আপনি প্রসন্ন হউন॥৮৫॥

অন্বয়:—इति उक्तवत्या (इन्द्रदूत्या) आदरेण निहिता भैम्या गृहीता मघवत्प्रसाद: पारिजातस्य स्रक् वासै: नलाख्याम् ऋते अमीषाम् आशाम् अपुपूरत्॥८६॥

इतीति। इति पूर्वप्रकारम्, उक्तवत्या इन्द्रदूत्या, आदरेण निहिता दमयन्त्या हस्ते स्थापिता, भैम्या दमयन्त्यापि गृहीता, "अयाचिताहृतं ग्राह्यम् अपि दुष्कृतकर्मण:" इति स्मरणात् उदासीनवदादानवदिति भाव:, मघवत इन्द्रस्य प्रसाद: प्रसन्नतया दानरूपा, पारिजातस्य पुष्पस्य, स्रक् माला, वासा दमयन्त्या हस्ते अवस्थानात्मैव वासा: सौरभाणि तै:, नलस्य आशा दमयन्ती प्राप्स्यामीत्याकाङ्क्षैव आशा दिक् ताम्, ऋते विना, अमीषां सर्वेषाम्,

आर्य्ये ! विचार्य्यालमिहेति कापि योग्यं सखि ! स्यादिति काचनापि ।
ओङ्कार एवोत्तरमस्तु वस्तु मङ्गल्यमत्रेति च काप्यवोचत् ॥८७॥
अनाश्रवा वः किमहं कदापि वक्तुं विशेषः परमस्ति शेषः ।
इतीरिते भीमजया न दूतीम् आलिङ्गदालीव मुदामियत्ता ॥८८॥

---

आशा इन्द्रदूत्याः सखीनाश्चाकाङ्क्षेव आशा दिक् तान्, अपूपुरत् निर्वाहितवती व्याप्तवती च। दमयन्ती इन्द्रानु-विधप्रलोभनवचनादिन्द्रे समनुरक्ता; कथमन्यथा तेनानुरागदत्तां मालां गृह्णीयादिति विभाव्य जातास्था प्रीता सञ्जाता; तत एव च इन्द्रदूत्याः सखीनाञ्चाशा पूर्णा भूतेति भावः।

अत्र आकाङ्क्षादिशोर्भेदेऽपि आशापदश्लेषाभेदाध्यवसायादतिशयोक्तिर्विभेदिकाऽनयोरङ्गाङ्गिभावेन सङ्करः। पारिजातस्य स्रजो, इति सन्धिविश्लेषदोषः 'विना' इति पाठेनैव समाधेयः। माधुर्य्यं गुणः, वैदर्भी च रीतिः।

"आशा वेश्मन्यवस्थाने वासा स्यादाटरूषके" इति हेमचन्द्रः। "आशा तृष्णादिशोः स्त्रियाम्" इति त्रिकाण्डशेषः।

पूरणं पूर इति "पूरी आप्यायने" इत्यस्माद् घञ्। ततश्च पूरमकार्षीदिति "इन् कारितं धात्वर्थे" इतीनि समानलोपेन सन्वद्भावाभावात् "दीर्घो लघोः" इति नाभ्यासदीर्घः, न वा "ह्रस्वसमानलोपोपधायाः" इत्यादिना मुञ्जतश्च ॥८६॥

বাঙ্গালা—ইন্দ্র, প্রসন্ন হইয়া এক ছড়া পারিজাতফুলের মালা দূতীর সঙ্গে পাঠাইয়া দিয়াছিলেন; ইন্দ্রের দূতী উক্তরূপ বলিয়া আদরপূর্ব্বক সেই মালা ছড়া দময়ন্তীর হস্তে সংস্থাপন করিল; দময়ন্তীও তাহা গ্রহণ করিলেন। সুতরাং সেই মালাছড়া, সৌরভ দ্বারা নলের আশা ব্যতীত সমস্ত দিক পরিপূর্ণ করিল ॥৮৬॥

अन्वयः—का अपि (हे) आर्य्ये ! इह विचार्य्य अलम् इति अवोचत्; काचन अपि (हे) सखि ! योग्यं स्यात् इति अवोचत्; का अपि च अत्र ओङ्कारः एव वस्तु मङ्गल्यं (च) उत्तरम् अस्तु इति अवोचत् ॥८७॥

आर्य्ये इति। कापि सखी, हे आर्य्ये ! राजकन्यात्वान्माननीये ! इह इन्द्रवरणविषये, विचार्य्य अलम् अविचार्य्यैव अङ्गीकुरु, इत्यवोचत्। काचनापि सखी, हे सखि ! दमयन्ति ! योग्यम् इन्द्रस्य वरणमेव तवो-चितं स्यात्, अनुरूपत्वादिति भावः इत्यवोचत् कापि च सखी, अत्र दूतीवाक्ये, ओङ्कार एव अङ्गीकारसूचकस्य 'ओम्' शब्दस्य प्रयोग एव, वस्तु वास्तविकम्, मङ्गल्यं मङ्गलजननयोग्यञ्च, उत्तरमस्तु इत्यवोचत्।

अत्र अवोचदित्येकया क्रियया कापीत्यादीनां त्रयाणां कर्त्तॄणामभिसम्बन्धात् तुल्ययोगिताऽलङ्कारः प्रथमतृतीय-पादगतच्छेकानुप्रासेन संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः।

"ओं प्रणवेऽङ्गीकृतावपि" इति हेमचन्द्रः।

विचार्य्येति "अलंखल्वोः प्रतिषेधयोः क्त्वा वा" इति क्त्वाप्रत्ययः ॥८७॥

বাঙ্গালা—তখন কোন সখী বলিল—"আর্য্যে ! এ বিষয়ে আর বিচার করিও না"। কোন সখী বলিল—"সখি ! ইন্দ্রকে বরণ করাই তোমার উচিত।" আবার অন্য কোন সখী বলিল—"এ বিষয়ে হঁ্যা।" বলিয়া উত্তর করাই বাস্তবিক এবং তোমার পক্ষে মঙ্গল-জনক ॥৮৭॥

अन्वयः—(हे सख्यः !) अहं किं कदापि वः अनाश्रवा परं शेषः विशेषः वक्तुम् अस्ति। भीम-जया इति ईरिते (सति) मुदाम् इयत्ता दूतीम् आलीव न आलिङ्गत् ॥८८॥

**भैमीच दूत्यच न किञ्चिदापम् इति स्वयं भावयतो नलस्य।**
**आलोकमात्राद् यदि तन्मुखेन्दोः अभूत भिन्नं हृदयारविन्दम्॥८९॥**
**ईषत्स्मितच्छालितकृक्कभागा दृक्संज्ञया वारितसत्सदालिः।**
**स्रजा नमस्कृत्य तयैव शक्रं तां भीमभूरुत्तरयाञ्चकार (१) ॥९०॥**

अनाश्रवेति। हे सख्यः! अहं किं कदापि, वो युष्माकम्, अनाश्रवा वचने न स्थिता नाहिमपालिनी-त्यर्थः; परं केवलम्, शेषः अवशिष्टः, विशेषः अतिरिक्तः कश्चिद्विषयः, वक्तुमस्ति। भीमजया दमयन्त्या, इति ईरिते उक्ते सति, मुदामानन्दानाम्, इयत्ता परिमितता शेष इति यावत्, दूतीम्, आलीर्दमयन्त्याः सखीश्च, न आलिङ्गन् न आश्रितवती। ताः खल्वनन्तमेवानन्दं लेभिरे इत्यर्थः।

अत्र द्वितीयपादे च्छेकानुप्रासोऽलङ्कारः। तथा चिरं किमहं वः अनाश्रवा, किन्तु कदापि अनाश्रवा। स आयमेव काल इति वस्तु व्यज्यत इति वस्तुना वस्तुध्वनिः। प्रसादो गुणः, वैदर्भी च रीतिः।

"विधेयो विनयग्राही वचने स्थित आश्रवः" इत्यमरः ॥८८॥

বাঙ্গালা—সখীগণ! আমি কি কখনও তোমাদের বাক্যের অনধীন হইয়াছি? তবে এ বিষয়ে অবশিষ্ট কিছু বলিবার আছে। দময়ন্তী এই কথা বলিলে, ইন্দ্রদূতীর এবং সখীগণের আনন্দের পরিসীমা রহিল না।॥৮৮॥

অন্বয়:—(অহং) ভৈমীঞ্চ দূত্যঞ্চ কিঞ্চিৎ (অপি) ন আপম্, ইতি স্বয়ং ভাবয়তঃ নলস্য হৃদয়ারবিন্দং যদি ভিন্নং ন অভূত্, (তথাপি তত্) তন্মুখেন্দোঃ আলোকমাত্রাত্ (এব অভূত্) ॥৮৯॥

भैमीमिति। अहं भैमीं दमयन्तीञ्च, दूत्यम् इन्द्रादीनां दूत्यकरणनिबन्धनं यशश्च, किञ्चित् अनयोरेक-तरमपि, न आपं न प्राप्तवानस्मि; भैम्या इन्द्रे च लग्नत्वात् दूत्यस्य च तद्दूत्यैव प्राप्तत्वादिति भावः। इति स्वयम् अद्वितीयत्वादात्मनैव भावयतश्चिन्तयतः नलस्य, हृदयारविन्दं चित्तकमलम्, यदि भिन्नं विदीर्णं विकसितञ्च नाभूत्, तथापि तत्,तस्या भैम्या एव मुखेन्दोर्मुखचन्द्रस्य, आलोकमात्रात् केवलदर्शनादेव अभूत्। तथा च दमयन्त्या मुखचन्द्रदर्शनजनितानन्देन तादृशविषादस्य तिरोहितप्रायत्वात् हृदयारविन्दस्य अविदीर्णता, चन्द्रस्य समीपे अरविन्दस्य अविकसितिश्च सम्भवपरैवेति भावः।

अत्र तन्मुखेन्दोरिति हृदयारविन्दमिति च निरङ्गं केवलरूपकद्वयम् प्रथमे पादे छन्त्यनुप्रासः, चतुर्थे च च्छेकानुप्रास इत्येतेषां संसृष्टिः। माधुर्यं गुणः, वैदर्भी च रीतिः ॥८९॥

বাঙ্গালা—'দময়ন্তী কিম্বা দৌত্যনিবন্ধন যশ, ইহার কোনটাই আমি পাইলাম না' এই রূপ নল আপনি আপনি চিন্তা করিতেছিলেন; তখন তাঁহার হৃদয়পদ্ম, বিষাদে যদিও বিদীর্ণ হইয়াছিল না, তথাপি তাহা দময়ন্তীর মুখচন্দ্র দর্শনবশতই হইয়াছিল।॥৮৯॥

অন্বয়:—भीमभूः ईषत्-स्मित-च्छालित-सृक्क-भागा दृक्-संज्ञया वारितसत्सदालिः (च सती) तया एव स्रजा शक्रं नमस्कृत्य ताम् उत्तरयाञ्चकार ॥९०॥

ईषदिति। भीमभूर्दमयन्ती, ईषदल्पं यथा स्यात्तथा स्मितेन मन्दहास्येन क्षालितौ धवलीकृतौ सृक्कभागौ ओष्ठप्रान्तदेशौ यया सा, तथा दृग्व्यञ्जकः संज्ञया सङ्केतेन वारिताः पुनः प्रतीषयितुं निषिद्धाः तासां "आर्ये! विचार्यतालम्" इत्यादिवादिन्यः आलयः सख्यो यया सा तादृशी च सती, तयैव स्रजा पारिजातपुष्पमालया, शक्र-

(१) ··· उत्तरयाञ्चभूव।

स्तुतौ मघोनस्त्यज साहसिक्यं वक्तुं कियत्तं यदि वेद वेदः।
तथोत्तरं साक्षिणि हृत्सु नृणाम् अज्ञातविज्ञापि ममापि तस्मिन्॥९१॥
आज्ञां तदीयामनु कस्य नाम नकारपारुष्यमुपैति जिह्वा।
प्रह्वा तु तां मूर्ध्नि निधाय मालां बालापराध्यामि विशेषवाग्भिः॥९२॥

---

मिन्द्रम्, नमस्कृत्य, तामिन्द्रदूतीम्, उत्तरयाञ्चकार उत्तरमाचष्टे स्म। मालाया ग्रहणमिन्द्रस्य वचनानामङ्गीकारार्थम्, पुनस्तस्या एव मालाया: प्रतिसमर्पणेन नमस्कार इन्द्रस्य प्रस्तावप्रत्याख्यानसूचक इत्यवधेयम्।

अत्र प्रसादो गुणः, वैदर्भी च रीतिः।

उत्तरमाचचक्षे इत्युत्तरयाञ्चकार "तत्करोति तदाचष्टे" इतीण्नन्तात् परोक्षा॥९०॥

**বাঙ্গালা**—দময়ন্তী অল্প হাস্য দ্বারা ওষ্ঠের প্রান্তদেশ দুইটিকে ঈষৎ শুভ্রবর্ণ করিয়া এবং নয়নসঙ্কেতে সেই সেই সখীকে পুনরায় বলিতে নিষেধ করিয়া, সেই পারিজাতফুলের মালা দিয়াই ইন্দ্রকে নমস্কার করিয়া, ইন্দ্রদূতীকে উত্তর করিতে লাগিলেন॥৯০॥

**অন্বয়ঃ**—मघोनः स्तुतौ साहसिक्यं त्यज। वेदः (एव) तं वक्तुं कियत् वेद यदि। नृणां हृत्सु साक्षिणि तस्मिन् मम अपि अज्ञातविज्ञापि उत्तरं वृथा॥९१॥

इदानीं दमयन्ती प्रस्तुतमुत्तरं ददाति स्तुताविति। हे इन्द्रदूति! मघोन इन्द्रस्य, स्तुतौ माहात्म्यवर्णनायाम्, साहसिक्यं साहसम्, त्यज। येन हि वेद एव तं मघवानम्, वक्तुं माहात्म्यं नाभिधातुम्, कियत् किञ्चित्, वेद जानाति, न पुनरन्य इति तथापि तत्रानभिज्ञत्वादिति भावः। इति यदि तर्कयामीत्यर्थः। अथ तस्य स्तुतौ विरतेऽस्मि त्वं पुनरुत्तरमुच्यतामित्याह— नृणां मनुष्याणाम्, हृत्सु मनःसु मनोवृत्तिष्वित्यर्थः, साक्षिणि अन्तर्यामित्वात् द्रष्टरि तस्मिन् मघोनि, ममापि, अज्ञातारं जनं विज्ञापयति विषयविशेषं बोधयतीति तत् तादृशम्, उत्तरं प्रतिवाक्यम्, वृथा निष्फलम्, विज्ञातरि विज्ञापनस्य अनावश्यकत्वादिति भावः।

अत्र साहसिक्यत्यागं प्रति द्वितीयपादवाक्यार्थो हेतुरित्येकं वाक्यार्थहेतुकं काव्यलिङ्गम्, उत्तरस्य वृथात्वं प्रति अज्ञातविज्ञापिपदस्यार्थो हेतुरिति द्वितीयञ्च पदार्थहेतुकं काव्यलिङ्गम्, छेकानुप्रासश्चान्यः तेषां संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः।

"यदि सम्भावितकर्थौ:" इति मेदिनी।

हृत्स्विति साक्षिशब्दयोगे "स्वामीश्वराधिपति" इत्यादिना षष्ठी सप्तमी॥९१॥

**বাঙ্গালা**—হে দূতি! তুমি ইন্দ্রের মাহাত্ম্যবর্ণনার বিষয়ে সাহস ত্যাগ কর। কেন না, আমি মনে করি··· একমাত্র বেদই তাঁহার মাহাত্ম্য কিছু বলিতে জানে। তার পর, ইন্দ্র অন্তর্যামী বলিয়া মনুষ্যগণের সমস্ত মনোভাবই তিনি জানেন; সুতরাং তাঁহার নিকট আমারও উত্তর দেওয়া বৃথা। কারণ, যে যাহা না জানে, উত্তর তাহাকে তাহাই জানায়॥৯১॥

**অন্বয়ঃ**—कस्य नाम जिह्वा तदीयाम् आज्ञाम् अनु नकारपारुष्यम् उपैति। बाला तु (अहं) प्रह्वा (सती) मालां तां मूर्ध्नि निधाय विशेषवाग्भिः अपराध्यामि॥९२॥

आज्ञामिति। नाम सम्भावनायाम्। कस्य जनस्य जिह्वा, तदीयामिन्द्रसम्बन्धिनीम् आज्ञाम्, अनु लक्षणीकृत्य, नकारेण 'न करोमि' इत्यं नकारघटितवाक्येन पारुष्यं निष्ठुरताम्, उपैति प्राप्नोति; अपि तु कस्यापि नेत्यर्थः; इन्द्रस्य प्रभावातिशयवत्त्वादिति भावः। तु किन्तु, बाला अहं प्रह्वा अवनता सती, मालां मालारूपाम्

तपःफलत्वेन हरेः कृपेयम् इमं तपस्येव जनं नियुङ्क्ते ।
भवत्युपायं प्रति हि प्रवृत्तौ उपेयमाधुर्य्यमधैर्य्यकारि ॥९३॥
भुव्यूषिताहे तदहं तमेव पतिं मुदेऽपि व्रतसम्पदेऽपि ।
विधेयलेशोऽयमदेवदेहम् स्वं यागतन्तु क्षितिभृत्तयेह ॥९४॥

---

तामाज्ञाम्, मूर्द्धि, मस्तके, निधाय स्थापयित्वा, विशेषवाग्भिः "भुव्यूषिताहे तदहं तमेव" इत्यादिविशेषवाक्यैः, अपराध्यामि अपराधिनी भवामि । किन्तु बालत्वादेव ममायमपराधः क्षन्तव्य इति भावः ।

अत्र पूर्वार्द्धे अर्थापत्तिः, परार्द्धे मालामिति निरङ्गं केवलरूपकम्, छेकानुप्रासश्च तेषां संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥९२॥

বাঙ্গালা—কাহার জিহ্বা, ইন্দ্রের আদেশকে লক্ষ্য করিয়া 'করিব না' এইরূপ নকার-ঘটিত বাক্য প্রয়োগে নিষ্ঠুরতা অবলম্বন করে ? । কিন্তু বালিকা আমি অবনত হইয়া, মালাস্বরূপ তাঁহার আদেশকে মস্তকে ধারণ করিয়া, বিশেষ বাক্য দ্বারা অপরাধিনী হইতেছি ॥৯২।

অন্বয়:—तपःफलत्वेन ( प्राप्ता ) इयं हरेः कृपा तपसि एव इमं जनं नियुङ्क्ते । हि उपेयमाधुर्य्यम् उपायं प्रति प्रवृत्तौ अधैर्य्यकारि भवति ॥९३॥

तप इति । तपसः पूर्वजन्मकृततपस्यायाः फलत्वेन परिपाकरूपेण, प्राप्तेति शेषः, इयं तत्कृतमनुप्रार्थना-रूपा, हरेरिन्द्रस्य कृपा दया, तपस्येव पुनरपि तपस्यायामेव, न पुनस्तद्वरणे इत्यर्थः, इमं मत्स्वरूपं जनम्, नियुङ्क्ते प्रवर्त्तयति । ननु कथमेतदित्याह— हि यस्मात्, उपेयस्य फलस्य, माधुर्य्यं प्रीतिप्रदत्वं कर्त्तृ, उपायं स्वकारणम्, प्रति उद्दिश्य, अधैर्य्यकारि धैर्य्यं नाशयति तत्रैव त्वरया प्रवर्त्तयतीत्यर्थः । तथा च तपस्यायाः फलरूपत्वेन प्राप्ता इयमिन्द्रस्य कृपा इतोऽप्युत्कृष्टफललाभाय मां त्वरितं प्रयोजयति, न पुनस्तद्वरणे इत्याशयः ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारस्तुर्यचरणगतच्छेकानुप्रासेन संसृज्यते । अर्थार्थस्य दुरूहत्वादोजो गुणः, गौड़ी च रीतिः ॥९३॥

বাঙ্গালা—দেবরাজের এই দয়া আমি তপস্যার ফলস্বরূপই পাইয়াছি ; সে দয়া আবার তপস্যাতেই এই ব্যক্তিকে নিযুক্ত করিতেছে । কারণ, ফলের প্রীতিকারিতাগুণ, তাহার কারণের প্রতি আবার প্রবৃত্ত করিবার বিষয়ে ধৈর্য্য হরণ করিয়া থাকে ॥৯৩।

অন্বয়:—तत् अहं मुदे अपि व्रतसम्पदे अपि ( च ) तम् एव पतिं भुव्यूषिताहे । तु अयं त्रिदिव-वीरः ( यत् ) इह क्षितिभृत्तया स्वं यागतम् अदेवदेहं भुव्यूषिताहे ॥९४॥

तत् किमन्यदेवताराधनरूपा तपस्या करिष्यसीत्याह भुव्यूषिताहे इति । तत्तस्मात् इन्द्रस्यैव कृपालाभार्थं तोः, अहम्, मुदेऽपि स्वैरविहारादिना आमोदलाभाय च, व्रतसम्पदेऽपि पातिव्रात्यनियमसमूहपालनाय च, तमिन्द्रमेव, पतिं भर्त्तारम्, भुव्यूषिताहे परिचरिष्यामि । हन्त ! तर्हि मनोरथो मे सम्पूर्ण एवेत्याह— तु किन्तु, अयं त्रिदिववीरः स्वल्पमात्रं प्रार्थनम्, यत् इह मर्त्यलोके, क्षितिभृत्तया भूपालत्वेन राजरूपेणेत्यर्थः, स्वं आगतम् स्वं प्रा-प्तवन्तमिन्द्रम्, अदेवदेहं देवशरीररहितं मनुष्यदेहं पृथिवीन्द्रं नलमेवेति तात्पर्य्यम्, भुव्यूषिताहे । तथा च "अष्टाभिर्लोकपालानां मात्राभिर्निर्मितो नृपः" इति स्मरणात् इन्द्रांश एव नलः । तेन च नलवरणेऽपीन्द्रवरणमित्य-स्मात् कृपालाभार्थेऽपि देवस्याप्यर्थ्यमिति भावः ।

अत्र अनिष्टस्य इन्द्रवरणस्य निष्प्रमाणाम् आक्षेपो नामालङ्कारः, "अनिष्टस्य तथार्थस्य विध्याभासः परो मतः" इति दर्पणवचनात् । प्रसादो गुणः, वैदर्भी च रीतिः ।

अश्रौषमिन्द्रादरिणीर्गिरस्ते सतीव्रतातिप्रतिलोमतीव्राः ।
स्वं प्रागहं प्रादिषि नामराय किं नाम तस्मै मनसा नराय ॥৯৫॥
तस्मिन् विमग्नैव हृते हृदैषा नैन्द्री दया मामनुतापिकाभूत् ।
निर्वातुकामं भवसम्भवानां धीरं सुखानामवधीरणेव ॥৯৬॥

सेव्यतिताह इति "अङ्कयी च समनौ तु वचादौ सुरलोक प्रति" इति समनमुपाती वचादित्वेन स्वस्मात् आत्मनेपदीत्तमपुरुषैकवचने रूपम् ॥৯৪॥

**বাঙ্গালা**---অতএব আমি আমোদের জন্য এবং পাতিব্রাত্যের নিয়মসমূহ পালনের জন্য ইন্দ্রকেই সেবা করিব ; তবে এইটুকুমাত্র পার্থক্য যে, এই মর্ত্যলোকে রাজরূপে অংশক্রমে অবতীর্ণ এবং দেবশরীরশূন্য পৃথিবীন্দ্রকেই (নলকেই) সেবা করিব ॥৯৪॥

**अन्वयः**—( हे दूति ! ) सतीव्रतातिप्रतिलोम-तीव्राः इन्द्रादरिणीः ते गिरः अश्रौषम् । ( किन्तु ) अहं मनसा प्राक् अमराय स्वं न प्रादिषि, किं नाम तस्मै एव नराय स्वं प्रादिषि ॥৯৫॥

अश्रौषमिति । हे दूति ! सतीव्रतस्य पतिव्रतानियमस्य अतिप्रतिलोमाः परपुरुषप्रशंसासूचकत्वात् अतिशयेन विरुद्धाः, अतएव हि तीव्राः खरतराः सतीपक्षे अतीवदुःसहा इत्यर्थः, इन्द्रस्य आदरी जनकतया आस्तामस्तीति इन्द्रादरिणीः इन्द्रं प्रति ममादरजनिका इति तात्पर्य्यम्, ते तव, गिरो वाक्यानि, अश्रौषं श्रुतवत्यस्मि । नन्वविवाहितायास्ते कुतः सतीत्वमित्याह— अहं मनसा प्राक् पूर्वमेव, अमराय देवरूपाय इन्द्राय, स्वमात्मानम्, न प्रादिषि न प्रदत्तवती ; किं नाम किन्तु तस्मै इन्द्ररूपाय, नराय मनुष्याय भूमीन्द्रायेत्यर्थः, किञ्च नलयोरैक्यात् नलायेति च व्यज्यते, स्वमात्मानम्, प्रादिषि प्रदत्तवती । तेन च मनसा दानस्यैव प्राधान्यादविवाहिताया एव मे सतीत्वमस्त्येवेति भावः ।

अत्र सतीत्वं प्रति पदार्थवाक्यार्थस्य हेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः, द्वितीये पादे छन्त्यनुप्रासः, द्वितीयार्द्धे च अन्त्यानुप्रासः, इत्येतेषां संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

प्रादिषीति प्रपूर्वस्य दाधातोरद्यतन्या आत्मनेपदोत्तमपुरुषैकवचने "स्थादोरिरद्यतन्याः—" इत्यादिना इत्वे रूपम् ॥৯৫॥

**বাঙ্গালা**—দূতি ! তোমার কথাগুলি সতীনিয়মের অত্যন্ত বিরুদ্ধ হইয়াছে বলিয়া অতিশয় তীব্রই হইয়াছে এবং ইন্দ্রের প্রতি আমার আদরপ্রবর্তকও হইয়াছে ; তাহা আমি শুনিয়াছি । কিন্তু আমি মন দ্বারা পূর্বে দেবতাকে আত্মদান করি নাই ; কিন্তু ইন্দ্ররূপী মনুষ্যকেই আত্মদান করিয়াছি ॥৯৫॥

**अन्वयः**—विमग्ना एव हृदा तस्मिन् हृते ( सति ), भवसम्भवानां सुखानाम् अवधीरणा निर्वातुकामं धीरम् इव, एषा ऐन्द्री दया माम् अनुतापिका मा भूत् ॥৯৬॥

अथ नराय चेदात्मा दत्तस्तदिदानीमिन्द्रप्रार्थना प्रत्युतैव त्वामनुतापयेदित्याह— तस्मिन्निति । विमग्नैव गुणदोषौ विविच्यैव, हृदा मनसा, तस्मिन् नले "तत्त्वमसि" इति महावाक्यस्यतच्छब्दवाच्ये ब्रह्मणि च, हृते पतित्वेन अङ्गीकृते जीवाभेदेन गृहीते च सति, भवे संसारे सम्भवन्तीति तेषाम्, सुखानां स्रक्चन्दनवनितादिसम्भोगजन्यानन्दानाम्, अवधीरणा अवज्ञा अवहेलया त्याग इत्यर्थः, निर्वातुं निर्वाणमुक्तिं लब्धुं कामोऽस्येति तम्, धीरं ज्ञानिनं जनमिव, एषा मत्प्रार्थनारूपा, इन्द्रस्येयमित्यैन्द्री इन्द्रकृता दया, मामनुतापिका मदनुतापजनिका, मा भूत् न भविष्यति । यथाच मुक्तिसुखस्य निरतिशयत्वादयथा भोगसुखत्यागो मुमुक्षुं नानुतापयति ; तथैव

वर्षेषु यद्भारतमार्यधुर्याः स्तुवन्ति गार्हस्थ्यमिवाश्रमेषु ।
तत्रास्मि पत्युर्वरिवस्ययैव शर्मोर्मिकिर्मीरितधर्मलिप्सुः ॥९७॥

---

पतित्वेन नलस्यानुसरणस्य निश्चितत्वात् पश्चान्तरलाभसुखत्यागी मां नानुतापयति। तेन च मुक्तिसुखभोगसुख-योरिव नलपतिलाभपश्चान्तरलाभयोर्महदेव वैषम्यमिति भावः।

अत्र श्रौतोपमालङ्कारश्छेकानुप्रासेन संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः।

अनुतापयिष्यतीति "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्" इति भविष्यदर्थे ण्वुल्। तेन च "न लोका-व्यय-निष्ठा-खलर्थ-तृनाम्" इति कर्मणि षष्ठीनिषेधात् मामिति सामान्या द्वितीयैव। निर्वातुकाममिति "तुं काममनसोः" इति तुमो मलोपः ॥९६॥

বাঙ্গালা—আমি বিশেষ বিবেচনা করিয়াই মনে মনে নলকে বরণ করিয়াছি; সুতরাং অবজ্ঞাপূর্বক সাংসারিকসুখত্যাগ যেমন নির্বাণমুক্তিকামী জ্ঞানী লোকের অনুতাপ জন্মায় না; তেমন ইন্দ্রের এই দয়াও আমার অনুতাপ জন্মাইবে না ॥৯৬॥

অন্বয়ঃ—আর্যধুর্যাঃ আশ্রমেষু গার্হস্থ্যম্ ইব বর্ষেষু যত্ भारतं स्तुवन्ति ; तत्र एव पत्युः वरिवस्यया शर्मोर्मि-किर्मीरित-धर्म-लिप्सुः अस्मि ॥९७॥

ननु यत्स्वर्गलाभाय मर्त्याः सर्वस्वं व्ययन्ते स स्वर्गोऽपि ते न रोचते किमित्याह वर्षेष्विति। वेदोक्तविधि-निषेधाधीना आर्यास्तेषु धुर्याः प्रधाना मनुप्रभृतयः, ब्रह्मचर्यादिषु चतुर्षु आश्रमेषु मध्ये, गार्हस्थ्यं गृहस्थाश्रम-मिव, वर्षेषु इलावृतादिषु नवसु जम्बुद्वीपभूभागेषु मध्ये, यद्भारतं वर्षम्, स्तुवन्ति प्रशंसन्ति, तत्र तस्मिन्नेव भारतवर्षे, पत्युर्भर्तुः, वरिवस्यया परिचर्यया, शर्मणां सुखानाम् ऊर्मिभिः परम्पराभिः किर्मीरितो मिश्रितो यो धर्मः पुण्यं तं लिप्सुर्लब्धुमिच्छुः, अस्मि भवामि। तथा च भारते पतिशुश्रूषया भोगसुखं धर्मार्जन-मित्युभयमपि सम्भवति ; स्वर्गे तु पतिशुश्रूषया केवलं भोगसुखमेव भवेत् न पुनर्धर्मार्जनं भारतस्य कर्मभूमि-त्वात् स्वर्गस्य च भोगलोकत्वादित्यतः स्वर्गाद्भारतमेव श्रेय इति भावः।

अत्र श्रौतोपमालङ्कारः, प्रथमे पादे छेकानुप्रासः, चतुर्थे च वृत्त्यनुप्रास इति सर्वेषां संसृष्टिः। ओजो गुणः, गौडी च रीतिः।

"वरिवस्या तु शुश्रूषा परिचर्याप्युपासनम्" "शर्मसातसुखानि च" इत्यमरः। "चित्रकिर्मीरकल्माषशबला मिश्रकर्बुरौ" इति हलायुधः।

गार्हस्थ्याश्रमप्रशंसामाह मनुः—

"यथा वायुं समाश्रित्य वर्तन्ते सर्वजन्तवः। तथा गृहस्थमाश्रित्य वर्तन्ते सर्व आश्रमाः॥
यस्मात्त्रयोऽप्याश्रमिणो ज्ञानेनान्नेन चान्वहम्। गृहस्थेनैव धार्यन्ते तस्माज्ज्येष्ठाश्रमो गृही॥"

भारतवर्षप्रशंसामाह आह्निकतत्त्वे विष्णुपुराणम्—

"गायन्ति देवाः किल गीतकानि धन्यास्तु ये भारतभूमिभागे।
स्वर्गापवर्गास्पदमार्गभूते भवन्ति ते भूयः पुरुषाः सुरत्वात्॥" ॥९७॥

বাঙ্গালা—মনুপ্রভৃতি আর্য্যশ্রেষ্ঠগণ চারিটী আশ্রমের মধ্যে গৃহস্থাশ্রমের ন্যায়, নয়টী বর্ষের মধ্যে যে ভারতবর্ষকে প্রশংসা করিয়া থাকেন; আমি সেই ভারতবর্ষে থাকিয়া পতি শুশ্রূষা দ্বারা অবিচ্ছিন্নসুখ মিশ্রিত ধর্ম লাভ করিতে ইচ্ছা করি ॥৯৭॥

स्वर्गे सतां शर्म्म परं न धर्म्मा: भवन्ति भूमाविह तच्च ते च।
शक्या मखेनापि मुदोऽमराणां कथं विहाय द्वयमेकमीहे (१) ॥९८॥
साधोरपि स्व: खलु गामिताध: गामी (२) स तु स्वर्गमित: प्रयाणे।
इत्यायती चिन्तयतो हृदि द्वे द्वयोरुदर्क: किमु शर्करे न ॥९९॥

---

अन्वय:—स्वर्गे सतां परं शर्म्म (भवति; किन्तु) धर्म्मा: न भवन्ति। इह भूमौ (तु) तच्च (भवति) ते च (भवन्ति)। मखेन अपि अमराणां मुद: (कर्त्तुं) शक्या:। द्वयं विहाय कथम् एकम् ईहे ॥९८॥

उक्तार्थमेव विवृणोति स्वर्ग इति। स्वर्गे सुरलोके, सतां विद्यमानानां जनानाम्, परं केवलम्, शर्म्म भोगसुखमेव भवति, किन्तु धर्म्मा यागादिजन्यपुण्यानि न भवन्ति। तस्य भोगमात्रस्थानत्वात्; इह भूमौ मर्त्यलोके तु, तत् शर्म्म च भवति, ते धर्म्माश्च भवन्ति; मर्त्यलोकस्य शर्म्मधर्म्मोभयस्थानत्वात्। तेन मर्त्यवरणे तदुभयसम्भवान्मर्त्यं नलमेव वरिष्यामीति भाव:। अथ तर्हि देवानां प्रार्थनाप्रत्याख्याने तेषां रोषनिवारणाय क: खलूपायस्तव भविष्यतीत्याह—मखेन यज्ञकरणेनापि, अमराणां मत्प्रार्थिनां देवानाम्, मुद: सन्तोषा:, कर्त्तुं शक्या:। ननु केवलस्वात्मदानेन तेषां सन्तोषसम्भवे कथं व्ययपरिश्रमसाध्यं यज्ञमनुष्ठातुमिच्छसीत्याह—द्वयं शर्म्मधर्म्मोभयम्, विहाय परित्यज्य, एकं शर्म्ममात्रम्, ईहे इन्द्रवरणेन लब्धुं चेष्टे अपि तु कथमपि नेत्यर्थ:।

अत्र स्वर्गापेक्षया भूमे: प्राधान्यप्रतिपादनाद् व्यतिरेकोऽलङ्कार:। प्रसादो गुण:, वैदर्भी च रीति: ॥९८॥

বাঙ্গালা—স্বর্গে যাঁহারা থাকেন, তাঁহাদের কেবল ভোগসুখই হয়; কিন্তু ধর্ম্ম হয় না। আর এই মর্ত্যলোকে ভোগসুখও হয়, ধর্ম্মও হয়। তার পর, দেবগণের সন্তোষ যজ্ঞ দ্বারাও করিতে পারা যায়। সুতরাং ভোগসুখ ও ধর্ম্ম এই দুইটীকে ত্যাগ করিয়া, কি রূপে একমাত্র ভোগসুখ লাভ করিবার চেষ্টা করি ॥৯৮॥

अन्वय:—साधो: अपि स्व: प्रयाणे अध: गामिता खलु; इत: प्रयाणे तु स: स्वर्गे गामी; इति द्वे आयती हृदि चिन्तयत: द्वयो: उदर्क: किमु न शर्करे? ॥९९॥

ननु धर्म्मस्यापि प्रयोजनं सुखमेव। तेन निरतिशयं तत् सुखं यदि स्वर्गे प्राप्यते, तदा द्वयं विहाय एकाङ्गीकारे का क्षतिरित्याह साधोरिति। साधोर्धार्म्मिकत्वात् सज्जनस्यापि, स्व: स्वर्गात् प्रयाणे यात्रायाम्, अधो मर्त्ये पाताले वा, गामिता पुण्यक्षयात् पुन: कर्म्मानुसाराच्च पातिता भवतीति शेष:; खलु निश्चितमेतत्; "अमुत्र कर्म्मचितो लोक: क्षीयते" इति श्रुते: "ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति" इति भगवद्गीतास्मृतेश्चेति भाव:। इति द्वे आयती उत्तरकालौ, हृदि चिन्तयतो विचारयतो जनस्य, द्वयो: स्वर्गमर्त्ययो:, उदर्क उत्तरफलम्, किमु न शर्करे शर्कराद्वयरूपम्? अपि तु शर्करे एवेत्यर्थ:। एका शर्करा क्षुद्रप्रस्तरखण्डम्, अपरा शर्करा च गुडविकारविशेष:। तथा च स्वर्गस्योत्तरफलम् अध:पातात् क्षुद्रप्रस्तरखण्डरूपं नितान्तमुच्छम्; मर्त्यस्योत्तरफलन्तु ऊर्द्ध्वगामित्वात् गुडविकारविशेषरूपं महामधुरमिति परिणामफलस्यैव उत्कर्षापकर्षहेतुत्वात् स्वर्गं विहाय मर्त्यं एव स्थातुमिच्छामीति भाव:।

अत्र शर्करे इति पदश्लेष:, निरङ्गं केवलरूपकम्, स्वर्गान्मर्त्यस्याधिक्यप्रतिपादनाद् व्यतिरेक:, पूर्वार्द्धे छायानुप्रासश्च त्रयाणां तेषां संसृष्टि:। अर्थावृत्तिर्द्वलदीनौ गुण:, गौडी च रीति:।

"उत्तर: काल आयति:" "उदर्क: फलमुत्तरम्" इत्यमर:। "शर्करा खण्डविकृतौ उपलांशे च कर्परे। उपलायां शर्करायुक्तदेशेषु शर्कलेऽपि च" इति हेमचन्द्र:।

(१) … तयमेकमीहे। (२) गमी …।

प्रक्षीण एवायुषि कर्म्मकृष्टे: नराम्न तिष्ठत्युपतिष्ठते यः
बुभुक्षते नाकमपथ्यकल्पं धीरस्तमापातसुखोन्मुखं कः ॥१००॥
इतीन्द्रदूत्याः (१) प्रतिवाचमर्द्धे प्रत्युह्य सैषाभिदधे
किञ्चिद्विवक्षोल्लसदोष्ठलक्ष्मी-जितापनिद्रद्दलपङ्कजास्या ॥१०१॥

---

मामिता गामीन्युभयत्रापि "भविष्यति गम्यादयः" इति णिनिः । अतएव स्वर्गमित्यत्र "इनि भविष्यदधम-र्णयोः" इति षष्ठीनिषेधात् सामान्या द्वितीयैव ॥९९॥

**বাঙ্গালা**—স্বর্গ হইতে যাত্রা করিলে, সাধুলোকেরও অধঃপাতই হইবে; আর মর্ত্যলোক হইতে যাত্রা করিলে, সে সাধুলোক স্বর্গেই যাইবেন; এইরূপ স্বর্গ ও মর্ত্যের পরিণতির সময় দুইটী মনে মনে বিবেচনা করিলে, সেই দুইটীর ভাবী ফল কি কিঙ্করস্বরূপ ও চিনিস্বরূপ নহে? ॥৯৯॥

**अन्वयः**—यः आयुषि प्रक्षीणे एव (सति) कर्म्मकृष्टे: नरान् उपतिष्ठते, (किन्तु) आयुषि तिष्ठति (सति) नरान् न उपतिष्ठते; कः धीरः अपथ्यकल्पम् आपातसुखोन्मुखं तं नाकं बुभुक्षते ॥१००॥

स्वर्गस्य दोषान्तरमाह प्रक्षीण इति । यो नाकः, आयुषि जीवनकाले, प्रक्षीणे क्षयं प्राप्त एव सति, कर्म्मणा धर्म्मेण कृष्टेराकर्षणाद्धेतोः, "पुण्यवान् स्वर्गमाप्नोति" इति श्रुतेः पुण्यवत एव स्वर्गेऽधिकारादिति भावः; नरान् मनुष्यान्, उपतिष्ठते स्वस्मिन्नानयनेन सेवते । किन्तु आयुषि तिष्ठति सति, नरान् न उपतिष्ठते स्वस्मिन्ना-नयनेन न सेवते । मृतं जनं गृह्णाति, जीवन्तञ्च न गृह्णातीति सरलार्थः । "मृतः स्वर्गमवाप्नुयात्" इति श्रुते-रिति भावः । को धीरो बुद्धिमान् जनः, अपथ्यकल्पम् अहिततुल्यम्, तथा आपातसुखाय प्रथमत एव सुखस-म्पादनाय उन्मुखमुद्युक्तम्, अथिलं न परिणामे दुःखसम्पादनादित्याशयः, तं नाकं स्वर्गम्, बुभुक्षते इच्छापूर्व-कावस्थानेन भोक्तुमिच्छति? अपि तु कोऽपि नेत्यर्थः । अतो नाहमपि इन्द्रवरणेन स्वर्गं बुभुक्षे; किन्तु नलवरणेन मर्त्यमेव बुभुक्षे इत्यभिप्रायः । इत्थं यथाश्रुतार्थपरतयैव सुन्दरीपपत्तेर्व्याख्यान्तरेषु कष्ट-कल्पना हेया ।

अतएवात्र अप्रस्तुताद्धीरसामान्यात् प्रस्तुतस्य दमयन्तीरूपस्य धीरविशेषस्य प्रतीतेरप्रस्तुतप्रशंसालङ्कारः अपथ्य-कल्पमित्यार्थोपमया संसृज्यते । गुणरीती पूर्ववत् ।

उपतिष्ठत इत्याराधनार्थत्वात् "पद्याराधनयोश्च" इति, बुभुक्षत इति पालनार्थत्वात् "भुजोऽनवने" इति रुधादित्वादात्मनेपदम् ॥१००॥

**বাঙ্গালা**—যে স্বর্গ, আয়ু ক্ষয় হইলেই কর্ম্মানুসারে মানুষকে আশ্রয় দান করে, কিন্তু আয়ু থাকিতে করে না; অপকারীর তুল্য এবং আপাততঃ সুখসম্পাদনে প্রবৃত্ত সেই স্বর্গলোককে কোন্ বুদ্ধিমান্ লোক ভোগ করিতে ইচ্ছা করে? ॥১০০॥

**अन्वयः**—सा एषा इति इन्द्रदूत्याः प्रतिवाचम् अर्द्धे प्रत्युह्य किञ्चिद्विवक्षोल्लसदोष्ठ-लक्ष्मी-जितापनिद्र-दल-पङ्कजास्या: वयस्याः अभिदधे ॥१०१॥

इतीति । सा एषा दमयन्ती, इति इत्थम्भूताम्, इन्द्रदूत्याः प्रतिवाचं उत्तरम्, अर्द्धे मध्य एव, प्रत्युह्य, समिद्धा कृत्वा विच्छिद्येत्यर्थः, किञ्चिद्विवक्षया इन्द्रपक्षे किञ्चद्वक्तुमिच्छया उल्लसतोः स्पन्दमानयोः ओष्ठयोर्लक्ष्म्या

---

(१) इतीन्द्रदूत्याम् ...

अनादि-धावि-स्वपरम्परायाः हेतुव्रजः स्रोतसि वेश्वरे वा ।
आयत्तधीरेष जनस्तदार्य्याः ! किमीदृशः पर्य्यनुयुज्य कार्य्यः (१) ॥१०२॥
नित्यं नियत्या परवत्यशेषे कः संविदानोऽप्यनुयोगयोग्यः ।
अचेतना सा च न वाच्यमर्हेत् वक्ता तु वक्तृश्रमकर्म्म भुङ्क्ते ॥१०३॥

---

श्रीभया जितम् निष्प्रभीकृतम् अपनिद्रत्वं प्रस्फुटत्पत्रं पङ्कजं पद्मं येन तत्ताहृशम् आस्यं मुखं यासां तास्त-थोक्ताः, वयस्याः सखीः, अभिलक्ष्य उवाच ; तासां तथाविधोक्तिनिरासार्थमिति भावः ।

अत्र पराद्धे आर्थोपमालङ्कारः । द्वितीयार्द्धस्य प्रथमपादात् परं पाठेन समाप्तपुनरात्तता दोषः परिहार्य्यः । समासबाहुल्यादौजो गुणः, गौड़ी च रीतिः ।

प्रत्यूह्येति प्रपूर्वस्य ऊहतेः क्वायपि "ऊहतेः ह्रस्वो वा" इत्युकारस्य ह्रस्वत्वम् । अपनिद्रदिति अपनिद्र-मिवाचरदिति आचिसस्य च लोपे शतृ ॥१०१॥

বাঙ্গালা—এই ভাবে দময়ন্তী ইন্দ্রদূতীর কথাগুলির প্রত্যুত্তরকে মধ্যেই বিচ্ছিন্ন করিয়া সখীগণকে বলিলেন। কারণ, ইন্দ্রের পক্ষে কিছু বলিবার ইচ্ছায় তাহাদের ওষ্ঠ-যুগল কাঁপিয়া উঠিয়াছিল ; তখন সেই ওষ্ঠের শোভায় তাহাদের মুখ, প্রস্ফুটিত পদ্মকে জয় করিয়াছিল ।১০১॥

**अन्वयः**—एष जनः अनादि-धावि-स्व-परम्परायाः हेतुव्रजः स्रोतसि वा ईश्वरे वा आयत्तधीः ; तत् (हे) आर्य्याः ! ईदृशः (जनः) पर्य्यनुयुज्य किं कार्य्यः ? ॥१०२॥

किमभिदधे इत्याह अनादीति । एषः दृश्यमानः, असौ जगत्याः सर्वो लोकः, अनादि आदिशून्यं यथा स्यात्तथा धावति स्वे स्वे कर्म्मणि प्रवर्त्तत इति अनादिधाविनी या स्वेषामात्मनां जीवानामित्यर्थः परम्परा श्रेणी तस्याः, हेतूनां नियामकानां तत्तावत् कारणानां वा धर्म्माधर्म्मरूपाणामदृष्टानां व्रजः परम्परायाः, स्रोतसि प्रवाहे वा, ईश्वरे वा, आयत्ता अधीना धीर्बुद्धिर्यस्य स तादृशः ; तत्तस्माद्धेतोः, हे आर्य्याः ! मम शुभानुध्यायित्वेन मान्याः सख्यः ! ईदृशो मत्स्वरूपः अबलाजनः, पर्य्यनुयुज्य 'इन्द्रं विहाय कथं नलमिच्छसि' इत्यं परिपृच्छ्य, किं कार्य्यः युष्माभिः कारयितुं शक्यः ? अपि तु किमपि नेत्यर्थः । तथा च "बुद्धिः कर्म्मानुसारिणी" इति श्रुतेः "ईश्वरः कारणं पुरुषकर्म्मवैफल्यदर्शनात्" इति न्यायसूत्राच्च अदृष्टं वा ईश्वरो वा लोकानां बुद्धिं यत्पथि चालयति, तेऽपि तत्पथ एव चलन्ति । तेन अदृष्टम् ईश्वरो वा ममापि बुद्धिम् इन्द्रं विहाय नलं प्रत्येव चालयति ; तेनाहमपि तथैव चलामीति युष्माकं प्रश्नो मां किमपि कारयितुं न शक्ष्यतीति सरलार्थो भावार्थश्च ।

अत्र वृत्त्यनुप्रासच्छेकानुप्रासयोः संसृष्टिरलङ्कारः । गुणरीती पूर्ववत् ।

"प्रश्नोऽनुयोगः पृच्छा च" इत्यमरः ॥१०२॥

বাঙ্গালা—জীবগণ অনাদি কাল হইতেই স্ব স্ব কার্য্যে ধাবিত হইতেছে ; তাহার কারণ— অদৃষ্ট এবং ঈশ্বর ; সুতরাং জীবগণের বুদ্ধিও, অদৃষ্ট এবং ঈশ্বরেচ্ছার অধীন। অতএব হে আর্য্যা সখীগণ ! তোমরা প্রশ্ন করিয়া, এই রূপ অবলাজন দ্বারা কি করাইতে পারিবে ? ।১০২॥

---

(१) … पर्य्यनुयोगयोग्यः ।

**क्रमेलकं निन्दति कोमलेच्छुः क्रमेलकः कण्टकलम्पटस्तम् ।**
**प्रीतौ तयोरिष्टभुजोः समायां मध्यस्थता नैकतरोपहासः ॥१०४॥**

---

**अन्वयः**—अस्मिन् नियत्या नित्यं परवति ( सति ), कः सं विद्वान् अपि अनुयोगयोग्यः ( भवति ) । अथ तस्या सा च वाचं न अर्हेत्, वक्ता तु वक्त्रश्रमकर्म भुङ्क्ते ॥१०३॥

उक्तप्रायमेवार्थं किञ्चिद्विशेषाय पुनराह नित्यमिति । अस्मिन् सर्वस्मिन् जने, नियत्या दैवेन, 'नित्यं' सर्वदा, परवति पराधीने सति, कः संविद्वानोऽपि माहात्म्यां मूर्खाणां का कथा को विद्वानपि जनः, अनुयोगस्य 'कथमिदं करोषि' इत्याक्षेपस्य प्रश्नस्य वा योग्यो भवति ? अपि तु कोऽपि नेत्यर्थः ; नित्यं नियत्या परवशत्वादेवेति भावः । तर्हि नियतिरेवानुयुज्यत इत्याह—अथ तस्मात् सा नियतिश्च, वाचं अनुयोगवाक्यम्, न अर्हेत् न श्रोतुं योग्या भवेत् ; अचेतनत्वादेवेत्याशयः ; किन्तु वक्ता नियतेराक्षेपकर्ता, वक्त्रश्रमस्य तदाक्षेपवचनोच्चारणेन निजमुख-परिश्रमस्य कर्म वेदनारूपं कार्यम्, भुङ्क्ते अनुभवति । अतो युष्माभिः सखीभिस्तूष्णीमेव स्थातव्यमित्यभि-प्रायः ।

अत्र अर्थापत्तिः, अनुयोगयोग्यत्वाभावं प्रति नित्यमित्यादिपदत्रयार्थस्य हेतुत्वात् वागनर्हत्वं प्रति अचेतना-पदार्थस्य हेतुत्वाच्च पदार्थहेतुकं काव्यलिङ्गद्वयम्, चतुर्थचरणार्थं प्रति तृतीयचरणवाक्यार्थस्य हेतुत्वाद्वाक्यार्थ-हेतुकं काव्यलिङ्गं इत्यनुप्रासस्य कानुप्रासस्य तेषां संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

संविद्वान इति "समो गम्यृच्छिप्रच्छिस्वरत्यर्तिदृशः" इति वचनादितया आत्मनेपदित्वाच्छानच् ॥१०३॥

**বাঙ্গালা**— জগতের সমস্ত লোক সর্বদা নিয়তির অধীন ; সুতরাং এ অবস্থায় কোন্ বিদ্বান্ লোকও অনুযোগের যোগ্য হন ? তার পর, নিয়তিও অচেতনা বলিয়া বাক্যশ্রব-ণের যোগ্য নহে অতএব এক্ষেত্রে বক্তাই মুখের পরিশ্রমে বেদনা ভোগ করে ॥১০৩॥

**अन्वयः** — कोमलेच्छुः क्रमेलकं निन्दति, कण्टकलम्पटः क्रमेलकः तं निन्दति । इष्टभुजोः तयोः समायां प्रीतौ (सत्याम्) एकतरोपहासः न मध्यस्थता (भवति) ॥१०४॥

अथ वयं न काचिदपि किञ्चिद्वदामः ; किन्तु तृतीयः पक्षो देवराजं विहाय नरराजमिच्छन्तीं त्वामवश्य-मेवोपहसिष्यतीत्याह क्रमेलकमिति । कोमलेच्छुर्मृदुघासभक्षणेच्छुर्मृगः, क्रमेलकं कण्टकरूपकठिनवस्तु-भक्षिणम् उष्ट्रम्, निन्दति । तथा कण्टकलम्पटः कण्टकादिकठिनवस्तुभक्षणलोलुपः, क्रमेलकः उष्ट्रोऽपि, तं कोमलेच्छुं मृगम्, निन्दति । किन्तु इष्टं स्वस्वाभिलषितं वस्तु भुञ्जात इति तयोरिष्टभुजोः, समायां तुल्यायां प्रीतौ सत्याम्, एकतरस्य तयोर्मध्ये अन्यतरस्य उपहासः, न मध्यस्थता न तृतीयपक्षता भवति ; तस्यास्तु एक-तरपक्षपातापातादिति भावः । तथा च भवत्यो देवराजमुत्कृष्टतरं मन्यन्ते, अहन्तु नरराजमुत्कृष्टतरं मन्ये इति विवेकार्थमन्ये सत्यपि "भिन्नरुचिर्हि लोकः" इति न्यायं जानन् तृतीयपक्षो न मामुपहसिष्यतीति सन्दर्भा-शयः ।

अतएवात्र अप्रस्तुतात् समात् प्रस्तुतसमप्रतीतिरूपा अप्रस्तुतप्रशंसालङ्कारः, निन्दतीत्येकया क्रियया कोमलेच्छु-क्रमेलकयोः प्रस्तुतयोः सम्बन्धात्तुल्ययोगिता चानयोरङ्गाङ्गिभावेन सङ्करः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"उष्ट्रे क्रमेलक-मय-महाङ्गाः" इत्यमरः । "लोलुपो लोलुभो लोलो लम्पटो लालसोऽपि च" इति यादवः ॥१०४॥

**বাঙ্গালা**—কোমলবস্তু ভক্ষণাভিলাষী হরিণ উষ্ট্রকে নিন্দা করে ; আবার কণ্টক-ভক্ষণাভিলাষী উষ্ট্রও হরিণকে নিন্দা করে । কিন্তু স্ব স্ব অভীষ্টবস্তুভোজী সেই দুইটী প্রাণীর

गुणा हरन्तोऽपि हरेर्नरं मे न रोचमानं परिहापयन्ति ।
न लोकमालोकयथापवर्गात् त्रिवर्गमर्वाञ्चमनुच्चमानम् ॥१०५॥
आकीटमार्कटभवैरि तुल्यः स्वाभीष्टलाभात् कृतकृत्यभावः ।
भिन्नस्पृहाणां प्रति चार्थमर्थं द्विष्टत्वमिष्टत्वमपव्यवस्थम् ॥१०६॥

---

প্রীতি সমানই হয় ; এ অবস্থায় উহাদের মধ্যে একতরকে উপহাস করা মধ্যস্থ ব্যক্তির কর্ত্তব্য নহে ॥১০৪॥

**अन्वयः**—हरन्तः अपि हरेः गुणाः, मे रोचमानं नरं न परिहापयन्ति । अपवर्गात् अर्वाञ्चम् (अपि) त्रिवर्गम् अमुच्चमानं लोकं न आलोकयथ ? ॥१०५॥

ननु मा भवतु तृतीयपक्षकर्त्तृकोपहासः, किन्तु इन्द्रस्यानन्तगुणवत्त्वेऽपि न किं तव नलानुरागो व्यर्थतां गतः ? इत्याह गुणा इति । हरन्तोऽपि मनोहारिणोऽपि, हरेरिन्द्रस्य, गुणा अणिमादयः सौन्दर्य्यादयश्च, मे मह्यम्, रोचमानं रुचिविषयभूतम्, नरं मनुष्यं स्वकीयोचितत्वात् नलञ्च, न परिहापयन्ति मनसा न परित्याजयन्ति । कथमेतदित्याह अपवर्गान्नित्यात् मोक्षात्, अर्वाञ्चं अनित्यत्वात् निकृष्टमपि, त्रिवर्गं धर्म्मार्थकामान्, अमुच्चमानम् अपरित्यजन्तम्, लोकं जनम्, न आलोकयथ यूयं न किं पश्यथ । तथा च लोको यथा नित्यं मोक्षमपहाय अनित्यमपि त्रिवर्गं सेवते ; तथा अहमपि महागुणमिन्द्रमपहाय स्वल्पगुणं नलं सेविष्ये तथैव रुचिविशेषादिति भावः ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारश्छेकानुप्रासेन संसृज्यते । पूर्ववृत्तो वृत्तः, माधुर्यं गुणः, वैदर्भी च रीतिः ॥१०५॥

**বাঙ্গালা**—ইন্দ্রের গুণ সকল মনোহর হইলেও সে গুণ, আমার অভীষ্ট মনুষ্যকে পরিত্যাগ করাইতে পারিতেছে না। কেন না, হে সখীগণ! তোমরা দেখিতেছ না কি ? ধর্ম্ম, অর্থ ও কাম এই ত্রিবর্গ, মুক্তি হইতে নিকৃষ্ট হইলেও, মানুষ সে ত্রিবর্গকে পরিত্যাগ করে না ॥১০৫॥

**अन्वयः**—आकीटम् आर्कटभवैरि स्वाभीष्टलाभात् कृतकृत्यभावः तुल्यः । भिन्नस्पृहाणाम् अर्थम् अर्थं प्रति द्विष्टत्वम् इष्टत्वं (च) अपव्यवस्थं (भवति) ॥१०६॥

ननु असाधारणगुणं देवराजं विहाय साधारणगुणस्य नरराजस्य वरणेनागुणज्ञा स्वत्यत, किन्तु गुणज्ञा त्वं कथं स्वनुमन्यत इत्याह आकीटमिति । कीटः क्षुद्रप्राणिविशेषः, कैटभश्च विष्णुकर्णमलोद्भूतः कश्चिदसुरः, तस्य वैरी विष्णुः । तथा च आकीटं कीटादवधि आर्कटभवैरि विष्णुपर्य्यन्तं सर्व्वेषामेव प्राणिनाम्, स्वाभीष्टलाभात् निजनिजाभीष्टवस्तुलाभाद्धेतोः, कृतकृत्यभावः कृतार्थता, तुल्यः समान एव भवेत् । इत्यतश्च नलो ममाभीष्टस्तल्लाभाच्च गुणग्राह्यत्वं कृतकृत्यभावेन समुच्यामेवेति भावः । अथ तथात्वे अस्माकमपि सन्तोषे तुल्य एव सम्बन्धे कथं तद्वैपरीत्यमेव जायत इत्याह भिन्नस्पृहाणां भिन्नरुचीनां जनानाञ्च, अर्थमर्थं प्रति विषयं विषयं लक्ष्यीकृत्य, द्विष्टत्वं द्वेषविषयत्वम्, इष्टत्वम् इच्छाविषयत्वञ्च, अपगता व्यवस्था नियमो यस्य तथाभूतं भवति । तथा च यो विषय एकस्य द्विष्टः इष्टो वा भवेत्, स अपरस्यापि द्विष्ट एव इष्ट एव वा भवेदिति नियमो नास्ति भिन्नरुचित्वात् । तेन च इन्द्रो युष्मभ्यं रोचते नलश्च न रोचत इति युष्माकमिन्द्र इष्टः नलश्च द्विष्टः ; मह्यन्तु इन्द्रो न रोचते नलश्च रोचत इति मम इन्द्रो द्विष्टः नलश्च इष्ट इति रुचिभेदात् सन्तोषस्यापि भेद इति भावः ।

अत्र अपव्यवस्थत्वं प्रति भिन्नस्पृहाणामिति पदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारश्छेकानुप्रासेन संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ॥१०६॥

अध्वाध्वजायन्निभृतापदन्धुः बन्धुर्यदि स्यात् प्रतिबन्धुमर्हः ।
जोषं जनः कार्य्यविदस्तु वस्तु प्रच्छ्या (१) निजेच्छा पदवी मुदस्तु ॥१०७॥
इत्थं प्रतीपोक्तिमतिं सखीनां विलुप्य पाण्डित्यबलेन बाला ।
अपि श्रुतस्वर्पतिमन्त्रिसूक्तिं दूतीं बभाषेऽश्रुतलोलमौलिम् ॥१०८॥

---

বাঙ্গালা—সখীগণ ! কীট হইতে বিষ্ণু পর্য্যন্ত সকল প্রাণীরই স্ব স্ব অভীষ্ট বস্তু লাভ হইলে, কৃতকৃত্যভাব হয় । কিন্তু ভিন্নরুচি লোকদিগের এক একটী বিষয়েই কেবল বিদ্বেষ কিম্বা কেবল ইষ্টত্বই হইবে এমন কোন নিয়ম নাই ।১০৬।

**অন্বয়:**—बन्धुः यदि अध्वाध्व-जायन्निभृतापदन्धुः स्यात् (तदा सः बन्धुना) प्रतिबन्धुम् अर्हः । तु कार्य्यवित् जनः जोषम् अस्तु, मुदः पदवी वस्तु निजेच्छा प्रच्छ्या ॥१०७॥

ननु विपथगामी बन्धुर्बन्धुभिर्वारणीय एव । तेन त्वमपि देवराजं विहाय नरराजमिच्छन्ती विपथगामिन्यसीत्यस्माभिर्वार्य्यसि इत्याह अध्वेति । बन्धुः सुहृत्, यदि चेत्, अध्वन वर्त्मनस्तस्य गन्तव्यपथस्य च अध्वे सम्मुखे जायत् ध्रुवं विद्यमानः निभृतो गुप्तः आपद्विपत्तिरेव अन्धुः कूपो यस्य स तादृशः स्यात्; तदा सः अपरेण बन्धुना, प्रतिबन्धुं निवारयितुम्, अर्हो योग्यः स्यात्; इतरथा तु नेत्यर्थः । तेनाहं न खलु तारतम्यमबुध्यमाना देवराजं विहाय नरराजमिच्छामि, अपि तु बुध्यमानैव । अतो निभृतत्वाभावादहं युष्माभिर्न वारणीयेति भावः । अथो न खलु वयं बुध्यामहे यन् देवराजं विहाय नरराजसमाश्रयणेन कथं यथेष्टं सुखं प्राप्स्यसी-त्याह—तु किन्तु कार्य्यवित् मनोरथाभिज्ञो जनः, जोषं मौनवः अस्तु, येन मनोरथो यस्या बुध्यते तेन अनेनाभिन् विषये मौनवेणैव स्थातव्यमित्यर्थः । कथमेतदित्याह— मुदो हर्षस्य, पदवी वस्तु मार्गरूपं पदार्थम् कारण-मित्यर्थः, निजेच्छा स्वेच्छैव, प्रच्छ्या प्रष्टव्या । तथा च यूयं यथाभीष्टलाभात् सुखं प्राप्नुथ, अहमपि तथैवेति यूयमत्र मौनवा एव भवतेति भावः ।

अत्र अप्रस्तुतबन्धुसामान्याज्जनसामान्याच्च प्रस्तुतस्य दमयन्तीरूपस्य सखीरूपस्य च विशेषस्य प्रतीतिरप्रस्तुतप्रशंसालङ्कारः, आपदन्धुरिति निरङ्गं केवलरूपकमाभ्यामयोरङ्गाङ्गिभावेन सङ्करः, वृत्त्यनुप्रासः, छेकानुप्रासः, पदान्तेऽन्त्यानुप्रासश्चेति समुदाये संसृष्टिः पूर्वार्द्धे 'तदा स बन्धुना' इति वयाणां पदानामनुक्तावपि न्यूनपदतादोषः; वक्त्र्या दमयन्त्या आकुलतामयत्वात् । माधुर्य्यं गुणः, पाञ्चाली च रीतिः ।

"पुंस्येवान्धुः प्रहिः कूपः" इत्यमरः ।

प्रच्छ्येति व्यञ्जनान्तत्वाद्ध्यणि रूपम् ॥१०७॥

বাঙ্গালা—বন্ধুর পথের সম্মুখে যদি বিপত্তিরূপ কূপ থাকে, তাহা হইলে অপর বন্ধুর পক্ষে তাহাকে নিষেধ করা উচিত । কিন্তু কার্য্যজ্ঞ লোক এ বিষয়ে নীরব থাকুন; কেন না, আনন্দের কারণ নিজের ইচ্ছার নিকটেই জিজ্ঞাসা করা উচিত ।১০৭।

**অন্বয়:**—बाला पाण्डित्यबलेन इत्थं सखीनां प्रतीपोक्तिमतिं विलुप्य श्रुत-स्वर्पति-मन्त्रि-सूक्तिम् अपि अश्रुत-लोल-मौलिं दूतीं बभाषे ॥१०८॥

इत्थमिति । बाला दमयन्ती, पाण्डित्यबलेन अभिमता सामर्थ्येन, इत्थम् अनेन प्रकारेण, सखीनां प्रतीपोक्तेः प्रतिकूलवचनस्य मतिम् इच्छाम्, विलुप्य निवर्त्य, श्रुता: स्वर्पतिमन्त्रिण इन्द्रमन्त्रिणो बृहस्पतेः सूक्तयः शोभनवच-

---

(१) पृच्छ्या···।

परेतभर्त्तुर्मनसेव दूतीं नभस्वतेवानिलसख्यभाजः ।
विस्रोतसेवाम्बुपतेस्तदाशु स्थिरास्यमायातवतीं निरास्थम् ॥१०९॥
भूयोऽयमेनं यदि मां त्वमात्थ तदा पदावाप्लसे मघोनः ।
सतीव्रतं स्तीव्रमिमन्तु मन्तुम् अन्तर्वरं वज्रिणि मार्ज्जिताम्भि ॥११०॥

---

मानि यया तां तादृशीमपि, चक्षुतेन दमयन्तीवचनश्रवणजनितविस्मयेन लोलच्चञ्चली मौलिर्मस्तकं यस्यास्तां सखीनाम्, दूतीं बभाषे प्रेमसुवाच । एतेन बृहस्पत्युक्तितोऽपि दमयन्त्युक्तेः शोभाधिक्यं सूचितम् ।

अत्र छेकानुप्रासच्छेकानुप्रासयोः संसृष्टिः । माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥१०८॥

**বাঙ্গালা**—দময়ন্তী নিজের পাণ্ডিত্যের বলে এইভাবে সখীগণের প্রতিকূল বলিবার ইচ্ছাকে নিবৃত্ত করিয়া, পুনরায় ইন্দ্রদূতীকে বলিতে লাগিলেন; ইন্দ্রদূতী কিন্তু বৃহস্পতির সুন্দর উক্তি সকলও শুনিয়াছিল; তথাপি দময়ন্তীর সুন্দর বাক্যে তাহার বিস্ময় জন্মাইয়াছিল; তাহাতে তাহার মস্তক চঞ্চল হইয়াছিল ।১০৮।

**অন্বয়:**—तत् स्थिरास्यं मनसा इव आशु आयातवतीं परेतभर्त्तुः दूतीम्, स्थिरास्यं नभस्वता इव आशु आयातवतीम् अनिलसख्यभाजः दूतीम्, स्थिरास्यं विस्रोतसा इव आशु आयातवतीम् अम्बुपतेः दूतीं (च) निरास्थम् ॥१०९॥

किं बभाषे इत्याह परेतेति । तत्तस्मात् प्रागेव मया मनसा नलस्य वृतत्वाद्धेतोरित्यर्थः, स्थिरा मम सम्मतिजननाय निश्चला आस्था यत्नो यस्मिन् कर्म्मणि तद्यथा तथा । एवं सर्व्वत्र । मनसा अतिवेगवता चेतसा वाहनेनेव, आशु शीघ्रम्, आयातवतीम् आगतवतीम्, परेतभर्त्तुर्यमस्य दूतीम्, निरास्थं निराकृतवत्यस्मि । परेतानां मृतानां यमाधीनत्वात् परेतप्राणानामपि यमाधीनत्वम् ; तेन मन्मनसोऽपि तत्प्राणाधीनत्वात् यमदूत्याः सम्बन्धित्वेन तन्मनोवाहनत्वसम्भावना स्यादेवेति भावः । तथा स्थिरास्यम्, नभस्वता अत्यन्तवेगवता वायुना वाहनेनेव, आशु आयातवतीम्, अनिलसख्यभाजो वायुसखस्याग्नेर्दूतीम्, निरास्थम् । अग्नेर्वायुसखत्वादग्निदूत्यास्तत्सम्बन्धित्वेन तद्वाहनत्वोत्प्रेक्षा सम्भवपरेत्याशयः । तथा स्थिरास्यम्, विस्रोतसेव अतीववेगवत्या गङ्गया वाहनेनेव, आशु आयातवतीम्, अम्बुपतेर्वरुणस्य दूतीम्, निरास्थम् । वरुणस्य जलाधिपतित्वात् वरुणदूत्या जलसम्बन्धित्वेन जलमयगङ्गावाहनत्व कल्पनाप्युचितैवेत्यभिप्रायः ।

अत्र तिस्र एव आत्युत्प्रेक्षाः, निरास्थमित्येकया क्रियया तिसृणां दूतीनां कर्म्मतयाभिसम्बन्धात्तुल्ययोगिता चेत्येतासामङ्गाङ्गिभावेन सङ्करः ; सोऽपि च चतुर्थपादगतछेकानुप्रासच्छेकानुप्रासाभ्यां संसृज्यते । बन्धार्थस्य दृढत्वादीजो गुणः, गौड़ी च रीतिः ।

निरास्थमिति अस्यतेरङ्गतस्या अपि "अस्यतिवक्ति—" इत्यादिना अपि "अस्यतेस्थोऽन्तः" इति थकारागमः ॥१०९॥

**বাঙ্গালা**—যমের দূতী স্থির প্রযত্নের সহিত মনোবাহনেই যেন দ্রুত আসিয়াছিল; অগ্নির দূতীও, স্থির প্রযত্নের সহিত বায়ুবাহনেই যেন সত্বর আসিয়াছিল; আবার বরুণের দূতীও, স্থির প্রযত্নের সহিতই গঙ্গাবাহনেই যেন শীঘ্র আসিয়াছিল; কিন্তু আমি পূর্ব্বেই মনে মনে নলকে বরণ করিয়াছি বলিয়া, তাহাদিগকেও প্রত্যাখ্যান করিয়াছি ।১০৯॥

**অন্বয়:**—(হে দূতি !) त्वं यदि भूयः एनम् अर्थं माम् आत्थ, तदा मघोनः पदौ आप्लसे [ तु इमम् अन्तः सतीव्रतैः वज्रिणि तीव्रम् इमं मन्तुं मार्ज्जिताम्भि ॥११०॥

इत्थं पुनर्वाग्गवकाशनाशात् महेन्द्रदूत्यामपयातवत्याम्।
विवेश लोलं हृदयं नलस्य जीवः पुनः क्षीवमिव प्रबोधः ॥१११॥
श्रवणपुटयुगेन स्वेन साधूपनीतं
दिगधिपकृपयाम्रादीक्ष्यः संविधानात् (१)
अलभत मधु बालारागवागुत्थमित्थं
निषधजनपदेन्द्रः पातुमानन्दसान्द्रः (२) ॥११२॥

भूय इति। हे दूति! त्वं यदि भूयः पुनरपि, एनम् इन्द्रवरणरूपम् अर्थं विषयं माम् आत्थ ब्रवीषि तदा मदीन इन्द्रस्य, पदौ चरणौ, आलभसे हिनस्सि। तथा च इन्द्रचरणहिंसनमिव पुनरेतदर्थवचनं तव महापराधजनकमिति शपथ इत्याशयः। तदा इन्द्रप्रार्थनाप्रत्याख्यानरूपमपराधं त्वं कथमपनेष्यसीत्याह तु किन्तु, परमौषधमियम्, अन्तरन्तःकरणे स्थितेति शेषः, सतीव्रतैः साध्वीनियमैः, वस्त्रिति इन्द्रे विषये, तीव्रं आतिशयम् इमं तत्प्रार्थना प्रत्याख्यानरूपम् मन्तुम् अपराधम्, मार्ष्टि नाशयिष्यति। परपुरुषविरक्त-त्वादिरूपं मनोनान्तरिकसतीनियमं ज्ञात्वैव भगवानिन्द्रः स्वप्रार्थनाप्रत्याख्यानकृतमपराधं न ग्रहीष्यतीति भावः।

अत्र पुनरेतद्वचनम् इन्द्रचरणहिंसनमिवेति साहश्याक्षेपात् निदर्शनालङ्कारः, छेकानुप्रासो वृत्त्यनुप्रासश्चेति संसृष्टिः। माधुर्यं गुणः, वैदर्भी च रीतिः।

"आगोऽपराधो मन्तुश्च" इत्यमरः ॥११०॥

বাঙ্গালা—দূতি! তুমি যদি পুনরায় এই বিষয় আমাকে বল, তবে ইন্দ্রের চরণেরই হিংসা কর। কিন্তু আমি বরং মনের সতীত্ব দ্বারা ইন্দ্রবিষয়ের এই গুরুতর অপরাধ দূর করিব ॥১১০॥

अन्वयः—इत्थं पुनर्वागवकाशनाशात् महेन्द्रदूत्याम्, अपयातवत्यां (सत्याम्,) प्रबोधः क्षीवम् इव जीवः नलस्य लोलं हृदयं पुनः विवेश (इव) ॥१११॥

इत्थमिति। इत्थम् अनेन प्रकारेण "भूयोऽर्थमेनम्" इत्यादिना शपथदानेनेत्यर्थः, पुनर्वाचः पुनर्वा-क्प्रचारस्य अवकाशनाशात् अवसरलोपाद्धेतोः महेन्द्रदूत्याम्, अपयातवत्यां तद्देशात् प्रस्थितायां सत्याम्, प्रबोधः प्रकृष्टज्ञानम्, क्षीवं मत्तं जनमिव, जीवः प्राणाः, नलस्य लोलं दमयन्ती किं प्रतीतीत्याशङ्का-चञ्चलं हृदयम्, पुनः विवेश इव प्रविष्टवानिव। तथा च इन्द्रदूत्यामागत्य तथाविधे प्रस्तावे कृते 'यदि तु दमयन्ती इन्द्रं वरीतुमेव स्वीकरोति तदा मत एवाहम्' इति विभाव्य पूर्वं नलस्य प्राणा उत्क्रान्ता इवासन्, तदा तु तस्यां तथा प्रत्याख्यानेन यातायां सत्याम् ते प्राणा दमयन्त्याशया पुनरागता इव, यथा मत्तजनस्य चयात् परमेव प्रबोध आगच्छति, तद्वदिति भावः।

अत्र सुखीभवनं प्रबोधसम्बन्धकत्वात् इवाद्यभावात् प्रतीयमाना क्रियोत्प्रेक्षा श्रौतीपमा चानयोरङ्गाङ्गि-भावेन सङ्करः; सोऽपि पुनश्छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः।

"मत्ते शौण्डोत्कटक्षीवाः" इत्यमरः ॥ १११ ॥

বাঙ্গলা—দময়ন্তী এইরূপ শপথ দান করিলেন বলিয়া পুনরায় কিছু বলিবার অবসর

(१) ··· सन्निधानात्। (२)··· आनन्दसान्द्रम्।

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
षष्ठः खण्डनखण्डतोऽपि सहजात् क्षोदक्षमे तन्महा-
काव्येऽयं व्यगलन्नलस्य चरिते सर्गो निसर्गोज्ज्वलः ॥११३॥

—o—

না থাকায় ইন্দ্রদূতী সে স্থান হইতে চলিয়া গেল। তখন প্রবোধ যেমন মত্ত জনের হৃদয়ে প্রবেশ করে; তেমন নলের চঞ্চল হৃদয়ে প্রাণ যেন পুনরায় প্রবেশ করিল। ১১১ ‖

অন্বয়ঃ—निषध-जनपदेन्द्रः आनन्दसान्द्रः (सन्)! दिगधिपकृपया आसात् ईदृशः संविधानात् स्वेन श्रवणपुटयुगेन साधु उपनीतं बाला-राग-वागुत्थम् इत्थं मधु पातुम् अलभत ॥११२॥

श्रवणेति। निषध जनपदेन्द्रो निषधदेशाधिपतिर्नलः, आनन्देन देवदूतीनां तथाविधमत्याख्यानश्रवणदर्शनःखां जातेन प्रमोदेन सान्द्रो घनः परिपूर्णचित्तः सन्, दिगधिपानाम् इन्द्र-यम-वरुण-वह्नीनां कृपया, आसात् लब्धात्, ईदृश एवम्भूतात्, संविधानात् अदृश्यत्वसंघटनाद्धेतोः, स्वेन स्वकीयेन श्रवणयो कर्णकुहरद्वयमेव पुटौ पात्रविशेषौ तयोर्युगेन द्वयेन, साधु सम्यक्, उपनीतमानीतम्, बालाया दमयन्त्या रागवाचः अनुरागसूचकवाक्यात् उत्थमुत्पन्नम्, इत्थं "जिघाम तर्का मनसा नराय" इत्यादिरूपम्, मधु आसमेव पुष्परसम्, पातुं, सादरं श्रोतुं गन्नाथः कान्तश्च, अलभत प्राप्तवान्। दिगधिपकृपया लब्धमदृश्यत्वं विना स्वकीयश्रवणपुटयुगकर्तृकं तादृश-मध्वानयनमसम्भवमेवासीदिति भावः। एतेनादृश्यत्वेनैव दमयन्त्याः सर्वाङ्गदर्शनसम्भवात् तदर्थं नालकभाविसुतन-सर्गसूचनमत्र वेदितव्यम्। अन्योऽपि पत्रपुटयुगेनानीतं मधु पिबति।

अत्र श्रवणे पुटत्वारोपान्निरङ्गं केवलरूपकम्, भावमधुनोर्भेदेऽपि तयोरभेदाध्यवसायादतिशयोक्तिः, ईदृशानु-प्रासश्चैषां संसृष्टिः। पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः।

मालिनी वृत्तम् ॥११२॥

বাঙ্গালা—নলরাজা আনন্দপূর্ণচিত্ত হইয়া ইন্দ্রপ্রভৃতি দিকপালগণের কৃপায় লব্ধ এইরূপ অদৃশ্যভাবশতঃই, আপন কর্ণপুট- (পুট ঠোঙ্গা) কর্তৃক আনীত, দময়ন্তীর অনুরাগসূচক বাক্য হইতে উৎপন্ন ভাবমধু পান করিবার জন্য পাইয়াছিলেন ॥১১২॥

श्रीहर्षमिति। सहजात् एकजननीत्पन्नतया सहोदरात्। खण्डनमपि श्रीहर्षेणैव कृतमित्याशयः। दुर्जनमतनिरासकग्रन्थविशेषः तदेव खण्डो गुडविकारविशेषस्तस्मादपि, क्षोदक्षमे उपमर्द्दसहे माधुर्येण विचारयोग्ये सर्वथाग्ये चेत्यर्थः, काव्यत्वेन सरसत्वादिति भावः। तस्य श्रीहर्षस्य महाकाव्ये। व्यगलत् समाप्तिं प्राप्तवान् इत्यर्थः।

नानाप्रदेशभवित-भारत-पूर्ववङ्ग-कीटालिपाड़-विषयीन्नयितामिवासी ।
यज्ञेश्वरस्य तनयः खलु कामदोऽयं श्रीमान् नदीपुरपुरे हरिदासनामा ॥
रस-वेद-वसु-चन्द्र-सम्मिते वत्सरे शकनृपस्य महत्ती ।
वाहयत्यहि मकरं गते रवौ निर्मितावथ मधुकर्ता वाक्षरः ॥
इति श्रीहरिदाससिद्धान्तवागीश-भट्टाचार्य-विरचितायां नैषधचरितटीकायां
जयन्तीसमाख्यायां षष्ठ-सर्गविवरणं समाप्तम् ॥०॥

# सप्तमः सर्गः ।

-:*:-

अथ प्रियासादनशीलनादौ मनोरथः पल्लवितश्चिरं यः (१) ।
विलोकनेनैव स राजपुत्र्याः पत्या भुवः पूर्णवदभ्यमानि (२) ॥१॥
प्रतिप्रतीकं प्रथमं प्रियायाम् अथान्तरानन्दसुधासमुद्रे ।
ततः प्रमोदाश्रुपरम्परायां ममज्जतुस्तस्य दृशौ नृपस्य ॥२॥

---

**अन्वयः**—अथ प्रियासादनशीलनादौ यः मनोरथः चिरं पल्लवितः (आसीत्) ; भुवः पत्या राजपुत्र्याः विलोकनेन एव सः पूर्णवत् अभ्यमानि ॥१॥

नाथं प्रतिसमुद्रस्य तातं प्रतिभरस्य च ।
जगतां नित्यशोभान-शोभानं प्रणमाम्यहम् ॥

अथ पूर्वसर्गसूचितं दमयन्तीवर्णनं करिष्यन् सप्तमसर्गमारभते अथेति । अथ इन्द्रदूत्याः प्रत्याख्यानानन्तरम्, प्रियाया दमयन्त्या आसादनं साक्षात्प्राप्तिः शीलनादि च आलापालिङ्गनसम्भोगादिरूपेण विशेषप्राप्तिश्चेत्यर्थः, यो मनोरथोऽभिलाषः, चिरं व्याप्य, पल्लवितः सर्वदा भावनया विस्तृतिं प्राप्त आसीत् ; भुवः पत्या पृथिवीपालेन नलेन, राजपुत्र्या दमयन्त्याः, विलोकनेनैव तदानीं दर्शनमात्रेणैव, पूर्णवत् पूर्णं इव फलित इव, अभ्यमानि अभिमतः ; विलोकनानन्देनैव सम्यक् तृप्तत्वादिति भावः ।

अत्र पूर्णवदभ्यमानीति वाच्या क्रियोत्प्रेक्षालङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ।

अस्मिन् सर्गेऽपि क्वचिदुपेन्द्रवज्रा, क्वचिदिन्द्रवज्रा क्वचिच्च तयोरुपजातिश्छन्दः ॥१॥

**বাঙ্গালা**—তাহার পর, দময়ন্তীর সাক্ষাৎ লাভ এবং আলাপ, আলিঙ্গন ও সম্ভোগাদিরূপে বিশেষ লাভের বিষয়ে নলের যে অভিলাষ, চির কাল হইতে ক্রমিক বিস্তৃত হইয়া আসিতেছিল ; তখন সে দময়ন্তীর দর্শনমাত্রেই সে অভিলাষকে নল যেন পরিপূর্ণ বলিয়া মনে করিতে লাগিলেন ॥১॥

**অন্বয়:**—तस्य नृपस्य दृशौ प्रथमं प्रतिप्रतीकं प्रियायां ममज्जतुः, अथ अन्तरानन्दसुधासमुद्रे ममज्जतुः, ततः (च) प्रमोदाश्रुपरम्परायां ममज्जतुः ॥२॥

प्रतीति । तस्य नृपस्य नलस्य, दृशौ नयनयुगलम्, प्रथमम् आदौ, प्रतिप्रतीकं प्रत्यङ्गम्, प्रियायां दमयन्त्याम्, ममज्जतुर्मग्ने ; आदौ दमयन्त्याः प्रत्यङ्गं ददृशतुरित्यर्थः ; अथ तदनन्तरम्, अन्तरानन्द इव दर्शनेन निरतिशयसौन्दर्यानुभवान्मनःप्रमोद एव सुधा तस्याः समुद्रे, ममज्जतुः ; ततः परम्, प्रमोदाश्रुपरम्परायाम्, आनन्दजनितनयनजलप्रवाहे, ममज्जतुः । प्रथमं दमयन्त्याः सर्वाङ्गदर्शनम्, ततो महानानन्दः, ततश्चानन्दाश्रुपातो बभूवेति समुदायार्थः ।

अत्र नयनयुगलकर्तृकस्य पदार्थस्य प्रत्यङ्गादौ क्रमेण अनेकाम् पर्यायो नामालङ्कारः ; "क्वचिदेकमनेकस्मिन्

(१)···पुरा वः । (२)···अभ्यमानि ।

ब्रह्माद्वयस्यान्वभवत् प्रमोदं रोमाग्र एवाग्रनिरीक्षितेऽस्याः ।
यथौचितीत्थं तदशेषदृष्टौ अथ स्मराद्वैतमुदं तथासौ ॥३॥
वेलामतिक्रम्य पृथुं मुखेन्दोः आलोकपीयूषरसेन तस्याः ।
नलस्य रागाम्बुनिधौ विवृद्धे तुङ्गौ कुचावाश्रयतः स्म दृष्टी ॥४॥

---

णैकं चेलाञ्चलं क्रमात् । अर्थाः क्रियते वा चेत्तदा पर्य्याय इष्यते ।" इति दर्पणलक्षणात् । प्रथमे पादे अप्यनुप्रासः, द्वितीये च निरङ्गं केवलरूपकमिति संसृष्टिः । नलस्याद्ययतयर्ण्धोऽन्यदयं नाभाभावात्र ध्वनीनामलङ्कारः, किन्तु पूर्वराग एव रसः । एवमन्यत्राप्यूह्यम् ! प्रसादो गुणः, वैदर्भी च रीतिः ।

"अङ्गं प्रतीकोऽवयवोऽपघनः" इत्यमरः ॥२॥

बाङ्गाला—নলের নয়নযুগল প্রথম দময়ন্তীর প্রত্যেক অঙ্গে নিপতিত হইল ; তাহার পর মনের আনন্দরূপ অমৃতের সমুদ্রে নিমগ্ন হইল ; তাহার পর আবার আনন্দাশ্রুজলের প্রবাহে ভাসিতে লাগিল ॥২॥

अन्वयः—असौ अस्याः रोमाग्रे एव अग्रनिरीक्षिते (सति) ब्रह्माद्वयस्य प्रमोदम् अन्वभवत् ; अथ इत्थं तदशेषदृष्टौ (सत्यां) यथा औचिती तथा स्मराद्वैतमुदम् अन्वभवत् ॥३॥

ब्रह्मेति । असौ नलः, अस्या दमयन्त्याः, रोमाग्र एव अग्रनिरीक्षिते आदौ दृष्टे सति, ब्रह्माद्वयस्य जीवाभेदेन ब्रह्मसाक्षात्कारस्य तज्जनितानन्दस्वरूपमित्यर्थः, प्रमोदमानन्दम्, अन्वभवत् अनुभूतवान् । अथानन्तरम्, इत्थमनेन प्रकारेण, तस्या दमयन्त्या अशेषाणां स्तननाभिप्रभृतीनां सर्वावयवानां दृष्टौ दर्शने सत्याम्, यथा यावती औचिती भवितुमुचिता भवति, तथा तावतीम्, स्मराद्वैतमुदम् आत्मकामैक्यजनितानन्दम् अखण्डकामानन्दमित्यर्थः, अन्वभवत् । ब्रह्मानन्दतोऽपि कामिनां कामानन्दोऽधिकतर इति स एवास्याभवदिति भावः ।

अत्र अन्वभवदित्येकया क्रियया प्रमोदमुदोः कर्मतयाभिसम्बन्धात् तुल्ययोगितालङ्कारः । पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥३॥

बाङ्गाला—নল, প্রথমে দময়ন্তীর রোমাগ্র দর্শন করিয়াই অদ্বিতীয় ব্রহ্মানন্দ অনুভব করিলেন ; তদনন্তর তাঁহার সমস্ত অঙ্গ দর্শন হইয়া গেলে পর যত বড় আনন্দ হওয়া উচিত, তত বড় অদ্বিতীয় কামানন্দ অনুভব করিলেন ॥৩॥

अन्वयः—नलस्य रागाम्बुनिधौ तस्याः मुखेन्दोः आलोक पीयूषरसेन पृथुं वेलाम् अतिक्रम्य विवृद्धे (सति), दृष्टी तुङ्गौ कुचौ आश्रयतः स्म ॥४॥

वेलामिति । नलस्य रागाम्बुनिधौ अनुरागसागरे, तस्या दमयन्त्याः, मुखेन्दोर्मुखचन्द्रस्य, आलोको दर्शनमेव पीयूषरसः सातिशयहर्षजनकत्वात् अमृतद्रवस्तेन कारणेन, पृथुं महतीमपि, वेलां 'दूतो निष्कामो भवेत्' इति दौत्यनियमरूपां मर्य्यादां तीरञ्च, अतिक्रम्य उल्लङ्घ्य आप्लाव्य च, विवृद्धे विशेषेण वृद्धिं प्राप्ते सति, दृष्टी नलस्यैव नयनद्वयम्, तुङ्गौ उन्नतौ, कुचौ दमयन्त्या एव स्तनौ, आश्रयतः स्म परमरमणीयतया आधिक्येन दृष्टवन्तौ मज्जनभयं नावलम्बितवन्तौ च । यथा उदितचन्द्रस्य अमृतरसेन समुद्रे तीरमतिक्रम्य वृद्धिं प्राप्ते सति कश्चिन्मज्जनभयेन तुङ्गस्थानमाश्रयति, तद्वदिति भावः ।

अतएवात्र विशेषणसाम्यात् समासोक्तिरलङ्कारो निरङ्गकेवलरूपकाभ्यां सङ्कीर्य्यते । रसादयः पूर्ववत् ॥४॥

बाङ्गाला—দময়ন্তীর মুখচন্দ্রের দর্শনরূপ অমৃতরসে, নলের অনুরাগসাগর দৌত্যনিয়মরূপ তীর অতিক্রম করিয়া বিশেষ বৃদ্ধি পাইলে, তাঁহার নয়ন দুইটী যাইয়া দময়ন্তীর উচ্চ স্তনযুগলকে আশ্রয় করিল ॥৪॥

मग्ना सुधायां किमु तन्मुखेन्दोर्लग्ना स्थिता तत्कुचयोः किमन्तः ।
चिरेण तन्मध्यममुञ्चतास्य दृष्टिः क्रशीयः स्खलनाद्भिया नु ॥५॥
प्रियाङ्गपान्था कुचयोर्निवृत्य निवृत्य लीला नलदृग् भ्रमन्ती ।
बभौतमां तन्मृगनाभिलेप-तमः-समासादितदिग्भ्रमेव ॥६॥
विश्रम्य तच्चारुनितम्बचक्रे दूतस्य दृक् तस्य खलु स्खलन्ती ।
स्थिरा चिरादास्त तदूरुरम्भा-स्तम्भावुपाश्लिष्य करेण गाढम् ॥७॥

---

**अन्वयः**—अस्य दृष्टिः तन्मुखेन्दोः सुधायां किमु मग्ना, तत्कुचयोः अन्तः किं लग्ना ( सती ) स्थिता, स्खलनात् भिया नु क्रशीयः तन्मध्यं चिरेण अमुञ्चत ॥५॥

मग्नेति । अस्य नलस्य दृष्टिः, तस्या दमयन्त्या मुखेन्दोः सुधायां स्वाभाविकी अमृते, किमु मग्ना अन्तःप्रविष्टा-आसीत् । येनौत्सुक्यमधिकं विलम्बितवतीति भावः । तथा तस्या दमयन्त्याः कुचयोः स्तनयोः, अन्तर्मध्ये, किं लग्ना अवलम्बेन सुखास्तरालत्वात् संसक्ता च सती स्थिता ; विलम्बेनापसरणादित्याशयः । तथा स्खलनात् पतनात्, भिया नु भयेनेव, क्रशीयः सुतरां कृशम्, तस्या दमयन्त्या मध्यं कटिदेशम्, चिरेण बहुकालेन, अमुञ्चत अत्यजत् । नलः स्पृहणीयरमणीयत्वात् दमयन्त्या मुखं स्तनौ कटिदेशञ्च बहुकालं यावद्द्राक्षीदिति सम्भूतार्थः ।

अत्र आद्यं वाक्यं क्रियोत्प्रेक्षाद्वयं तृतीया तु गुणहेतूत्प्रेक्षा, तन्मुखेन्दोरिति निरङ्गं केवलरूपकमित्येतेषां त्रयाणां निरपेक्षतया संसृष्टिः । पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥५॥

বাঙ্গালা—নলের দৃষ্টি দময়ন্তীর মুখচন্দ্রের অমৃতের ভিতরে কি ডুবিয়া গিয়াছিল এবং তাঁহার স্তনযুগলের মধ্যস্থানে কি লাগিয়া পড়িয়াছিল ; আর পতনের ভয়েই কি তাঁহার অতিকৃশ কটিদেশকে অতিবিলম্বে পরিত্যাগ করিয়াছিল ॥৫॥

**अन्वयः**—प्रियाङ्गपान्था लीला नलदृक् तन्मृगनाभि-लेप-तमः-समासादित-दिग्भ्रमा इव (भूत्वा) निवृत्य निवृत्य कुचयोः भ्रमन्ती (सती) बभौतमाम् ॥६॥

प्रियेति । प्रियाया दमयन्त्या अङ्गेषु पान्था पथिकभूता सञ्चरणशीलेत्यर्थः, लीला चपला सतृष्णा च, नलस्य दृक् दृष्टिः, तयोः कुचयोर्विद्यमानो यो मृगनाभिलेपः सौरभसम्पादनाय कस्तूरीलेपनं स एव तमः समानकृष्णवर्णत्वात् अन्धकारस्तेन समासादितः प्राप्तो दिग्भ्रमो यया सा तथोक्ता इव भूत्वा, निवृत्य निवृत्य वारं वारं प्रतिनिवृत्य, कुचयोर्दमयन्त्याः स्तनयोः, भ्रमन्ती सती, बभौतमाम् अतिशयेन बभौ शुशुभे । तथा च परम-शोभनीयत्वात् वारं वारमेव स्तनौ ददर्शेति निष्कर्षः । पुरुषस्त्रीणामन्तःपुरवर्त्तितया स्तनादीनामावरणाभावान्नल-स्तैव दर्शनसुविधासीदित्यवधेयम् । अपरोऽपि पथिकः अन्धकारेण प्राप्तदिग्भ्रमः सन् निवृत्य निवृत्य एकस्थान-मेव व्रजतीति भावः ।

अत्रएवात्र कार्य्यसाम्यात् समासोक्तिरलङ्कारः, निरङ्गं केवलरूपकम्, क्रियोत्प्रेक्षा च तेषामङ्गाङ्गिभावेन सङ्करः । पूर्वरागो रसः, प्रसादो गुणः, पाञ्चाली च रीतिः ।

बभौतमामिति "आख्यातक्रियाकारात्—" इत्यादिना तमप् प्रत्ययः ॥६॥

বাঙ্গালা—দময়ন্তীর স্তনযুগলে কস্তুরীর লেপ ছিল, কৃষ্ণবর্ণ বলিয়া সেই কস্তুরীলেপ-স্বরূপ অন্ধকার নলের দৃষ্টির যেন দিগ্ভ্রম জন্মাইয়াছিল ; সুতরাং দময়ন্তীর অঙ্গসঞ্চারিণী নলের চঞ্চল দৃষ্টি, ফিরিয়া ফিরিয়া, সেই স্তনযুগলেই ভ্রমণ করিতে থাকিয়া অত্যন্ত শোভা পাইয়াছিল ॥৬॥

हृषीर्यथाकाममथोपहृत्य स प्रेयसीमालिकुलस्य तस्याः।
इदं प्रमोदाद्भुतपूरितेन महीमहेन्द्रो मनसा जगाद॥९॥
पदे विधातुर्यदि मन्मथो वा ममाभिषिच्येत मनोरथो वा।
तदा घटेतापि न वा तदेतत् प्रतिप्रतीकाद्भुतरूपशिल्पम्॥१०॥
तदङ्घ्रिवी भूमिमतः प्रभूता (१) जानामि शृङ्गाररसस्य सेयम्।
लावण्यपूरोऽजनि यौवनेन यस्यां तथोच्चैस्तनताघनेन॥११॥

---

বাঙ্গালা—দময়ন্তি! তবেই কেবল নেত্র, আমি কি নেত্র নহি? অতএব তুমি আমাকে দিয়াও, নিজের বক্ষ, নিতম্ব এবং উরুদুইটীকে আলিঙ্গন করাও; অনুগ্রহ কর; ইহা বলিয়াই যেন নলের দৃষ্টি, দময়ন্তীর চরণযুগলে পতিত হইল ॥৮॥

অন্বয়ঃ—অথ সঃ মহীমহেন্দ্রঃ প্রেয়সीं तस्याः आलिकुलस्य यथाकामं हृषीः उपहृत्य प्रमोदाद्भुत-पूरितेन मनसा इदं जगाद ॥९॥

हृषीरिति। अथ पदपतनानन्तरम्, स महीमहेन्द्रः पृथिवीराजश्रेष्ठो नलः, प्रेयसीं प्रियतमां दमयन्तीम्, तस्याः आलिकुलं सखीसमूहञ्च, यथाकामं यथेच्छम् आत्मनोऽदृश्यत्वात्ताभ्याञ्च स्वैरविहरणादिति भावः, हृषीर्निं-जचक्षुषीः, उपहृत्य उपहारभावेन दत्त्वा सादरं दृष्ट्वेत्यर्थः, प्रमोदेन तासामलौकिकसौन्दर्यदर्शनानन्देन अद्भुतेन तत्सौन्दर्याणामसाधारणत्वात् विस्मयेन च पूरितं परिपूर्णं तेन मनसा, इदं वक्ष्यमाणरूपम्, जगाद कथं-यामासेत्यर्थः।

अत्र महीमहेन्द्र इति च्छेकानुप्रासोऽलङ्कारः, प्रसादो गुणः, वैदर्भी च रीतिः ॥९॥

বাঙ্গালা—তাহার পর, ভূপতিশ্রেষ্ঠ নল, দময়ন্তীকে এবং তাঁহার সখীগণকে ইচ্ছানুসারে নিজের নয়ন দুইটীর নিকট উপহার দিয়া, আনন্দ ও বিস্ময়ে পরিপূর্ণ আপন মনে এই রূপ বলিতে লাগিলেন ॥৯॥

অন্বয়ঃ—विधातुः पदे यदि मन्मथो वा मम मनोरथो वा अभिषिच्येत, तदा तत् एतत् प्रतिप्रतीका-द्भुतरूपशिल्पम् घटेत अपि न घटेत वा अपि ॥१०॥

किं जगादित्याह पद इति। विधातुः सृष्टिकर्त्तुर्ब्रह्मणः, पदे स्थाने सृष्टिकार्य्ये इत्यर्थः यदि मन्मथः कामदेवो वा, मम मनोरथः अभिलाषो वा, अभिषिच्येत केनापि कर्त्तृरूपतया स्थाप्येत, तदा तत् अनि-र्वचनीयम्, एतत् दृश्यमानम्, प्रतिप्रतीकं प्रत्यङ्गम् अद्भुतम् आश्चर्य्यम्, रूपशिल्पं सौन्दर्य्यनिर्माणम्, घटेत सम्भवति, न घटेत वा न सम्भवति च वा। अपिः सम्भावनायाम्। वेदाभ्यासजडो विधाता इदं स्रष्टुं न शक्नुयादेव। किन्तु अद्वितीयरसिकः कामो मदभिलाषो वेदं स्रष्टुं प्रभवेऽपि शक्नुयात्र शक्नुयाद्वेति सम्भा-वयामीति भावः।

अत्र मन्मथमनोरथयोर्विधिपदाभिषेकासम्बन्धेऽपितत् सम्बन्धाभिधानादतिशयोक्तिरलङ्कारः। पूर्ववच्चान्यत्, प्रसादो गुणः वैदर्भी च रीतिः ॥१०॥

বাঙ্গালা—যদি কেহ বিধাতার পদে কামদেবকে কিংবা আমার অভিলাষকে সৃষ্টি-কর্তারূপে স্থাপন করিতে পারিত; তাহা হইলেই, প্রত্যেক অঙ্গের এইরূপ অনির্বচনীয় ও আশ্চর্য্য সৌন্দর্য্য নির্মাণ সম্ভবপর হইতে পারিত, কিংবা নাও হইতে পারিত ॥১০॥

---

(१) … प्रभूता।

अस्यां वपुर्व्यूहविधानविद्यां किं द्योतयामास नवां स कामः (१)।
प्रत्यङ्ग-सङ्ग-स्फुट-लब्ध-भूमा लावण्यसीमा यदिमामुपास्ते ॥१२॥

**अन्वयः**—उच्चैस्तनताघनेन यौवनेन यस्यां तया लावण्यपूरः अजनि, सा इयं भूमिभृतः प्रभूता शृङ्गाररसस्य तरङ्गिणी (इति) जानामि ॥११॥

तरङ्गिणीति। उच्चैरुन्नतौ स्तनौ यस्याः सा तस्या भाव इति उच्चैस्तनता तया घनेन निबिडेन, अन्यत्र तु उच्चैस्तनता उच्चस्वरं गर्जता घनेन मेघेन मेघस्वरूपेणेत्यर्थः, यौवनेन तारुण्येन कर्त्रा, यस्यां दमयन्त्याम्, तया तादृश्याः अन्यार्थ्ये इति तात्पर्यम्, लावण्यस्य सौन्दर्यविशेषस्यैव जलस्य पूरः प्रवाहः, अजनि जनित उत्पादित इति यावत्; सा इयं दमयन्ती, भूमिभृतो भूपतेर्भीमात् पर्वताच्च, प्रभूता उत्पन्ना, शृङ्गाररसस्य आदिरसस्य, अन्यत्र तु शृङ्गात् शिखरात् आरो गमनं पतनं यस्य तादृशस्य रसस्य जलस्य, तरङ्गी रागिभावेनोद्वेलनमस्या अस्तीति तरङ्गिणी अत्यन्तोद्रेककारिणीत्यर्थः, अन्यत्र तु नदी, इति जानामि मन्ये; तथैव मम शृङ्गारोद्रेकादिति भावः।

अत्र यौवने मेघत्वारोपः शाब्दः, लावण्ये जलत्वारोपस्तु आर्थ इति समासाभावेऽप्येकदेशविवर्त्तिरूपकम्; उच्चैस्तनतेति शब्दश्लेषः, दमयन्त्या नदीत्वसम्भावनाकरणात् मन्ये शब्दवत् जानामीति शब्दस्य च तद्वाचकत्वात् वाच्या जात्युत्प्रेक्षा, द्वितीयार्द्धे अन्त्यानुप्रासश्चेति संसृष्टिः। शब्दान्तरप्रयोगे श्लेष उक्तविषयचमत्कारिता च न सम्भवतीति शृङ्गाररसस्येति न रसस्य स्वशब्दोक्तिदोषः। पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः।

उच्चैस्तनतेति "शर्परेऽघोषपरेषु विसर्जनीयस्य" इति विसर्गलोपः ॥११॥

**বাঙ্গালা**—উন্নত স্তনযুগল থাকায় নিবিড় যৌবন, যাহার শরীরে অনির্বচনীয় লাবণ্য-জলপ্রবাহ উৎপাদন করিয়াছে; ভীম রাজা হইতে উৎপন্ন এই সেই দময়ন্তীকে আমি শৃঙ্গাররসের নদী বলিয়া মনে করি ॥১১॥

**अन्वयः**—सः कामः किम् अस्यां नवां वपुर्व्यूह-विधान-विद्यां द्योतयामास; यत् प्रत्यङ्ग-सङ्ग-स्फुट-लब्ध भूमा लावण्यसीमा इमाम् उपास्ते ॥१२॥

अस्यामिति। स प्रसिद्धः, कामः कन्दर्पः, किम्, तस्यां दमयन्त्याम् नवां नूतनां नूतनशिक्षितामित्यर्थः, वपुर्व्यूहविधानविद्यां शरीरसमूहनिर्माणविद्याम्, द्योतयामास प्रकाशयामास। यद् यस्मात्, प्रत्यङ्गं दमयन्त्या एव प्रत्येकाङ्गेषु यः सङ्गो लावण्यसीमाया एव सम्बन्धस्तेन स्फुटं स्पष्टं यथा स्यात्तथा लब्धः प्राप्तो भूमा बाहुल्यं यया सा तादृशी, लावण्यस्य सौन्दर्य्यविशेषस्य सीमा परा काष्ठा, इमां दमयन्तीम्, उपास्ते सेवते आश्रयतीत्यर्थः। तथा च दमयन्त्या एकं कश्चिदेवाङ्गं कामस्य एककस्वशरीरविधानाभावे सर्वेष्वङ्गेषु ईदृक् कामोद्दीपिका लावण्यसीमा कथमपि न स्यादिति भावः। दमयन्त्याः सर्वाण्येवाङ्गानि कामोद्दीपकानीति स्थूलार्थः।

अत्र किंशब्दस्योत्प्रेक्षावाचकत्वात् वाच्या क्रियोत्प्रेक्षा, छेकानुप्रासो वृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः। पूर्व-रागो रसः, माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥१२॥

**বাঙ্গালা**—কামদেব কি এই দময়ন্তীর শরীরে নূতনশিক্ষিত দেহসমূহনির্মাণের বিদ্যা প্রকাশ করিয়াছেন। যে হেতু, লাবণ্যের পরাকাষ্ঠা, ইহার প্রত্যেক অঙ্গে স্পষ্টতঃ বাহুল্য লাভ করিয়া, ইহাকে আশ্রয় করিয়াছে ॥১২॥

---

(१) ··· नवामबालाम्।

जम्बालजालात् किमकर्षि जम्बूनद्या न हारिद्रनिभप्रभेयम्।
यदङ्गयुग्मस्य न सन्धिचिह्नम् उन्नीयते दन्तुरता यदत्र ॥१३॥

सत्येव साम्ये सदृशादशेषात् गुणान्तरेणोपचये यदङ्गैः।
अस्यास्ततः स्यात्तुलनापि नाम वस्तु त्वमीषामुपमापमानः ॥१४॥

अन्वयः—हारिद्रनिभप्रभा इयं जम्बूनद्याः जम्बालजालात् किं न अकर्षि (विधात्रा)। यत् अत्र अङ्गयुग्मस्य सन्धिचिह्नं दन्तुरता अपि न उन्नीयते ॥१३॥

जम्बालेति। हारिद्रनिभा हरिद्रारञ्जितवस्त्रादिसमानवर्णा प्रभा कान्तिर्यस्याः सा तादृशी, इयं दमयन्ती जम्बूनद्याः जम्बूनामकफलरसस्रुतायाः कस्याश्चित् सरितः, जम्बालजालात् कर्द्दमसमूहात्, किं न अकर्षि विधात्रा आकृष्य उत्पादिता? अपि तु अकर्ष्येवेत्यर्थः। यद् यस्मात्, अत्र दमयन्त्याम्, अङ्गयुग्मस्य करचरणाद्यङ्गयुगलस्य, सन्धिः सन्धिदेशास्तेषां चिह्नं चिह्नभूता, दन्तुरता उच्चावचतापि, न उन्नीयते मया न लक्ष्यते। तथा च जम्बूनद्याः कर्द्दम एव हि जाम्बूनदं नाम सुवर्णं जायते; तस्मादाकृष्योत्पादनेनैवेयं सुवर्णवर्णा जाता; तरलकर्द्दमसञ्जाततया चास्याः सन्धिस्थानेषु निम्नोन्नतता न वर्त्तत इत्याशयः।

अत्र किं नाकर्षीत्यर्थापत्तिः तदनुप्राणिता च तस्मादाकृष्योत्पादनासम्बन्धेऽपि तत्सम्बन्धादतिशयोक्तिरित्यनयोरङ्गाङ्गिभावेन सङ्करः; सोऽपि च छेकानुप्रासेन संसृज्यते। पूर्व्वरागो रसः, माधुर्य्यं गुणः, वैदर्भी च रीतिः।

"निषद्वरस्तु जम्बालः पङ्कोऽस्त्री शादकर्द्दमौ" इत्यमरः ॥१३॥

বাঙ্গালা—হরিদ্রারঞ্জিত বস্ত্রের সমানকান্তি এই দময়ন্তীকে কি বিধাতা জম্বূনদীর কর্দ্দমসমূহ হইতে আকর্ষণ করিয়া নির্ম্মাণ করেন নাই? (অবশ্যই করিয়াছেন)। যে হেতু, ইহার দুই দুইটী অঙ্গের সন্ধিস্থানের চিহ্নস্বরূপ উঁচু নীচুভাবও দেখা যাইতেছে না ।১৩।

अन्वयः—अस्याः अङ्गैः गुणान्तरेण साम्ये सति एव गुणान्तरेण अशेषात् सदृशात् यत् उपचये; ततः तुलना अपि स्यात् नाम; वस्तु तु अमीषाम् उपमा अपमानः (एव भवति) ॥१४॥

सतीति। अस्या दमयन्त्याः, अङ्गैर्मुखनयनादिभिरवयवैः कर्त्तृभिः, गुणान्तरेण आह्लादकत्वनीलत्वादिकतिपयधर्म्मविशेषेण, साम्ये चन्द्रनीलोत्पलादिभिः सह अमीषामिवाङ्गानां सादृश्ये, सत्येव वर्त्तमान एव, गुणान्तरेण निष्कलङ्कत्वकटाक्षादिना अपरापरधर्म्मेण करणेन, अशेषात् समस्तात्, सदृशात् चन्द्रनीलोत्पलादिरूपात् समानपदार्थात्, यद् यस्माद्धेतोः, उपचये उत्कर्षे भूतम्; ततस्तस्माद्धेतोः, तुलनापि चन्द्रनीलोत्पलादिभिः सह मुखनयनादीनां कियदंशे सादृश्यमपि, स्यात् सम्भवेन्नाम। वस्तु तु यथार्थन्तु, अमीषां मुखनयनादीनामङ्गानाम्, उपमा चन्द्रनीलोत्पलादिभिः सह सादृश्यकरणम्, अपमानः मुखनयनादीनामङ्गानां गौरवनाशकमेव भवति। तथा च साम्यं नाम तद्भिन्नत्वे सति तद्गतभूयोधर्म्मवत्त्वम्। तेन च उज्ज्वलत्वाह्लादकत्वादयः कतिपयधर्म्माश्चन्द्रे मुखे च वर्त्तन्त इति तदंशे तयोः साम्यं सम्भवत्येव। किन्तु चन्द्रे कलङ्कित्वं मुखे च निष्कलङ्कत्वमिति चन्द्रान्मुखमुत्कृष्टम्; अतस्तदंशे तयोः साम्यं नैव सम्भवति। ततश्चन्द्रेण सह मुखस्य सर्वांशे साम्यकरणं मुखस्य अपमानजनकमेव। एवं नयनादीनामप्यूह्यम् इति भावः।

अतएवात्र चन्द्रादिभ्यो मुखादीनामाधिक्यप्रतिपादनाद् व्यतिरेकोऽलङ्कारः, अपमानासम्बन्धेऽपि तत्सम्बन्धादतिशयोक्तिश्चानयोरङ्गाङ्गिभावेन सङ्करः। पूर्व्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः।

उपचये इति भावे पयोगः; अङ्गैरिति च तत्कर्त्ता ॥१४॥

नास्पर्शि दृष्टापि विमोहिकेयं दोषैरशेषैः स्वभियेति मन्ये ।
अन्येषु तैराकुलितस्तदस्यां वसत्यसावप्लवसुखी गुणौघः ॥१७॥

नव्यानीति । नव्यानि उपमायोग्यानि चन्द्रनीलोत्पलादीनि वस्तूनि, एतस्या दमयन्त्या अङ्गात् मुखनयना-द्यवयवात्, यथा यथा येन येन प्रकारेण, ऊनीरूपकर्षान्, अणुः कविवर्णनातः प्रापयन्ति ; तथा तथा तेन तेनैव प्रकारेण अवनत्येन अधिकत्वेन वैलक्ष्यं, तमर्थं:, अनन्ति आनन्देन नृत्यं कृतम् । नव्यपक्षेऽपि बहुमान-त्वेन अनर्हीत्याह—तत्र अज्ञात्, उपमाता साहश्यकर्ता कविः, अधिकस्य उत्कृष्टस्य, तस्य दमयन्त्याङ्गस्य, उपमया साहश्यकरणेन, तेभ्य एव अभ्येभ्यश्चन्द्रनीलोत्पलादिभ्यः, प्रतिष्ठां गौरवम्, दाता भवेत् । उत्कृष्टैर्द-मयन्त्या मुखनयनादिभिरङ्गैः सह निकृष्टानां चन्द्रनीलोत्पलादीनां कविवर्णनातः साहश्यलाभ एव तेषामानन्द-नृत्यकारणमिति भावः ।

अत्र चन्द्राद्यपेक्षया दमयन्तीमुखादीनामाधिक्यप्रतिपादनाद्व्यतिरेकः, नर्त्तनाद्यसम्बन्धेऽपि, तत्सम्बन्धा-दतिशयोक्तिः, ऊनिमाप्तावपि नर्त्तनमिति क्रिययोर्विरोधात् कविप्रौढ़ोक्त्या च तदुपपत्तावाभासविरोधाभासश्च ; एषां तेषामङ्गाङ्गिभावेन सङ्करः । रसादयः पूर्ववत् ।

"भव्यं सव्ये युमे चाप मियवत् योग्यभाविनोः । कर्मोत्कर्तरी नव्यो भव्या कविकाव्ययोः ।" इति विश्वः ॥१६॥

বাঙ্গালা—উপমার যোগ্য বস্তু সকল, যে যে প্রকারে দময়ন্তীর অঙ্গ হইতে ন্যূনতা পাইয়াছে, সেই সেই প্রকারেই সেই সকল বস্তু আনন্দে নৃত্য করিয়াছে। কারণ, উপমা-কারী কবি, সেই উৎকৃষ্ট অঙ্গের সহিত উপমা দিয়া সেই সকল বস্তুকেই গৌরব দান করিয়া থাকেন ।১৬।

अन्वयः—इयं दृष्टा अपि ( सती ) विमोहिका ( भवति इति ) अशेषैः ( एव ) दोषैः स्वभिया इयं न अस्पर्शि इति मन्ये । तत् अन्येषु तैः आकुलितः गुणौघः असावप्लवसुखी ( सन् ) अस्यां वसति ॥१७॥

नेति । इयं दमयन्ती, दृष्टापि केवलं दृष्टिगोचरं गतापि सती, विमोहिका विशेषेण मोहनात्मककाम-विकारजनिका मूर्च्छाजनिका च भवति, इति हेतोः, अशेषैः सर्वैरेव, दोषैः कुत्सितात्वविनीतत्वादिभिः, स्वस्य आत्मनो भिया मूर्च्छोत्पादनभयेन, इयं दमयन्ती, न अस्पर्शि न स्पृष्टा ; दर्शनापेक्षया स्पर्शनस्य गुरु-तरत्वकर्मत्वादिति भावः । सर्वदोषविहीनेयमिति स्थूलार्थः । तस्मात् सर्वदोषास्पर्शनाद्धेतोः, अन्येषु दमयन्तीभिन्नस्त्रीजनेषु, तैर्दोषैः, आकुलितः सहवासेन विह्वलीकृतः, गुणौघः सौन्दर्य्यविनयादिगुणसमूहः, अस्या-प्लवेन दोषरूपविपक्षोपद्रवराहित्येन सुखी सुखयुक्तः सन् अस्यां दमयन्त्याम्, वसति अवतिष्ठते । अन्यस्त्रीषु गुणदोषावुभावेव वर्त्तेते, दमयन्त्यान्तु केवला गुणा एवेति निष्कर्षः ।

अत्र मोहनमूर्च्छयोर्भेदेऽपि विमोहिकापदस्य तयोरभेदाध्यवसायादतिशयोक्तिः, गुणोत्प्रेक्षा चैत्यनयोरङ्गाङ्गि-भावेन सङ्करः । पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥१७॥

বাঙ্গালা—ইঁহাকে দেখিলেও ইনি দর্শকের মোহ জন্মাইয়া থাকেন ; এইজন্যই নিজেদেরও মোহ জন্মাইবেন এই ভয়েই যেন সমস্ত দোষ ইঁহাকে স্পর্শ করে নাই, ইহা আমি মনে করি। সুতরাং অন্য রমণীগণের উপরে গুণ সকল, দোষসমূহ দ্বারা বিব্রত হইয়া বাস করে ; কিন্তু ইঁহার উপরে দোষের উপদ্রব না থাকায় সে গুণ সকল সুখে হই-য়াই বাস করিতেছে ।১৭।

मौज्झि प्रियाङ्गैर्घृणयेव (१) रुच्या न वारिदुर्गात्तु वराटकस्य।
न कण्टकैरावरणाच्च कान्तिः धूलीभृता काञ्चनकेतकस्य ॥१८॥
प्रत्यङ्गमस्यामभिकेन रक्षां कर्त्तुं मघोनैव निजास्त्रमस्ति।
वज्रं च भूषामणिमूर्त्तिधारि नियोजितं तद्द्युतिकार्म्मुकञ्च ॥१९॥

---

अन्वयः—प्रियाङ्गैः रुच्या वराटकस्य कान्तिः घृणया इव मौज्झि, वारिदुर्गात् मौज्झि (इति) तु न; धूलीभृता काञ्चनकेतकस्य कान्तिश्च घृणया इव मौज्झि, कण्टकैः आवरणात् मौज्झि (इति) तु न ॥१८॥

मौज्झीति। प्रियाया दमयन्त्या अङ्गैः, रुच्या स्निग्धतारहिता, अतएव वराटकस्य पद्मबीजकोषस्य कान्तिः, घृणया जुगुप्सयेव, मौज्झि अत्याजि; किन्तु वारिदुर्गात् जलरूपदुर्गस्थितत्वात्, मौज्झि ग्रहीतुमशक्यत्वात् अत्याजीति न। तथा धूलीभृता परागपूर्णा, अतएव काञ्चनकेतकस्य स्वर्णकेतकीपुष्पस्य कान्तिश्च, घृणया जुगुप्सयेव, मौज्झि अत्याजि; किन्तु कण्टकैः तीक्ष्णावयवैः, आवरणात् आच्छादनात्, मौज्झि ग्रहीतुमसामर्थ्यात् अत्याजि, इति न। दमयन्त्या अङ्गानि पद्मबीजकोषात् स्वर्णकेतकीपुष्पाच्च स्निग्धमसृणगौरवर्णानीति भावः।

अत्र कान्तिरिव कान्तिरिति साद्दृश्याक्षेपान्निदर्शनाभेदः, घृणयेवेति गुणहेतूत्प्रेक्षा, घृणां प्रति रुच्या-धूली-भृतेति पदार्थयोर्हेतुत्वात् काव्यलिङ्गद्वयम्, मौज्झीत्येकया क्रियया कान्तिद्वयस्य कर्म्मतया अन्वयात् तुल्ययोगिता चैषां तेषामङ्गाङ्गिभावेन सङ्करः। रसादयः पूर्ववत्।

"बीजकोषी वराटकः" इत्यमरः ॥१८॥

বাঙ্গালা—প্রিয়তমা দময়ন্তীর অঙ্গ সকল, পদ্মের বীজকোষের (বোধনের) কান্তিকে রুক্ষ বলিয়া, ঘৃণা করিয়াই যেন পরিত্যাগ করিয়াছে; কিন্তু জলদুর্গের ভিতরে আছে বলিয়া যে পরিত্যাগ করিয়াছে, এমন নহে। আবার সোণাচাঁপাফুলের কান্তি-কেও ধূলীপূর্ণ বলিয়া, ঘৃণা করিয়াই যেন পরিত্যাগ করিয়াছে; কিন্তু কণ্টকের আবরণ রহিয়াছে বলিয়া যে পরিত্যাগ করিয়াছে, তাহা নহে ॥১৮॥

अन्वयः—अस्याम् अभिकेन मघोना प्रत्यङ्गं रक्षां कर्त्तुं भूषामणि-मूर्त्तिधारि निजास्त्रं वज्रञ्च तद्-द्युति-कार्म्मुकञ्च नियोजितम् इव अस्ति ॥१९॥

प्रत्यङ्गमिति। अस्यां दमयन्त्याम्, अभिकेन कामुकेन, मघोना इन्द्रेण च, प्रत्यङ्गम् अस्याः सर्वेष्वेवाङ्गेषु, अन्येन ग्रहणात् रक्षां कर्त्तुम्, भूषामणीनाम् अलङ्काररत्नानां मूर्त्तिं वेषं धरतीति तत् तादृशम् निजास्त्रं स्वकीयास्त्रभूतम्, वज्रमग्रनिश्च, तस्य वज्रस्य द्युतिः प्रभा तद्रूपं कार्म्मुकं धनुश्च, नियोजितमिव संस्थापितमिव अस्ति वर्त्तते। अस्या अलङ्कारेषु बहूनि हीरकखण्डानि विद्यन्ते, तेषां द्युतिश्च रत्नान्तरद्युतिभिर्मिलित्वा नानावर्णा सती इन्द्रधनुराकारेव वर्त्तत इति भावः।

अत्र भूषामणिमूर्त्तिधारीति शब्दभङ्ग्या प्रकृतमणिनिषेधेन अग्रनित्वस्थापनादपह्नुतिः, हीरकाग्रनौ(?)भेदेऽपि वज्रशब्देनैवाभेदाध्यवसायादतिशयोक्तिः, तद्द्युतिकार्म्मुकमिति निरङ्गं केवलरूपकम्, नियोजितमिवेति क्रियोत्प्रेक्षा चैषां तेषामङ्गाङ्गिभावेन सङ्करः। पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः।

"कामुके कमिताऽनुकः। कम्रः कामयिताऽभीकः कामनः कमनोऽभिकः।" "वज्रं स्वाद्धीरके पवौ" इति चामरः ॥१९॥

বাঙ্গালা—ইহার প্রতি কামুক ইন্দ্র, ইহার প্রত্যেক অঙ্গ রক্ষা করিবার জন্য, নিজের

---

(१) घृणयेव।

अस्याः सपक्षैकविधोः कचौघः स्थाने मुखस्योपरि वासमाप ।
पक्षस्थतावद्बहुचन्द्रकोऽपि कलापिनां येन जितः कलापः ॥२०॥
अस्या यदास्येन पुरस्तिरश्च तिरस्कृतं शीतरुचान्धकारम् ।
स्फुटं स्फुरद्वक्र-कच-च्छलेन (१) तदेव पश्चादिदमस्ति बद्धम् ॥२१॥

অস্ত্র বক্ষকে এবং তাহার কিরণরূপ নিজের ধনুকে যেন নিযুক্ত করিয়া রাখিয়াছেন ; সেই বক্ষ, অলঙ্কারের অন্তর্গত রত্নের আকৃতি ধারণ করিয়া রহিয়াছে ॥১৯॥

**अन्वयः**—सपक्षैकविधोः अस्याः मुखस्य उपरि कचौघः स्थाने वासम् आप । येन पक्षस्थ-तावद्बहु-चन्द्रकः अपि कलापिनां कलापः जितः ॥२०॥

इत्थं सामान्येन दमयन्तीं वर्णयित्वा मानुषत्वादूर्द्ध्वक्रमेण केशादारभ्य चरणनखपर्य्यन्तं वर्णयिष्यन् प्रथमं त्रिभिः श्लोकैः केशान् वर्णयति अस्या इति । सपक्ष उज्ज्वलत्वादिधर्म्मेण समानः सहायश्च एकः केवलो विधुश्चन्द्रो यस्य तस्य तादृशस्य, अस्या दमयन्त्याः, मुखस्य वदनस्य, उपरि ऊर्द्ध्वदेशे आधिपत्यपदे च, कचौघः केशपाशः, स्थाने युक्तमेव, वासं स्थितिम्, आप प्राप्तवान् यद्वासमाप तद्युक्तमेवेत्यर्थः । ननु कुतो वासस्य युक्तत्वमित्याह— येन कचौघेन, पक्षस्थाः पतत्रस्थिताः तावन्तः प्रसिद्धाः बहवश्चन्द्रका मेचका यस्य सः, अन्यत्र तु पक्षस्थाः सहायवर्गस्थिताः सहायभूता इत्यर्थः तावन्तो बहवश्चन्द्रा यस्य सः । अस्मिन् पक्षे "शेषाद्वा" इति कप्रत्ययः । तादृशोऽपि, कलापिनां मयूराणाम्, कलापः पिच्छभारः, जित आत्मोत्कर्षेण पराभूतः । यः खलु बहुचन्द्रसहायं जनं जितवान्, स एव एकचन्द्रसहायस्य जनस्य जयेन तदाधिपत्यपदे वासं प्राप्नोति तद् युक्तमेवेति भावः । दमयन्त्याः केशपाशो मयूरपिच्छभारादपि सुन्दर इति स्थूलार्थः ।

अत्र समानसहाययोः, ऊर्द्ध्वदेशाधिपत्ययोः, पतत्रसहाययोः, मेचकचन्द्रयोश्च भेदेऽपि सपक्षोपरि-पक्षस्थ चन्द्रकशब्दानां श्लेषेणाभेदाध्यवसायादतिशयोक्तिः ; वासस्य युक्तत्वं प्रति परार्द्धवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गञ्च ; इत्येतेषामङ्गाङ्गितया सङ्करः । पूर्व्वरागो रसः, बन्धार्थस्य दुरूहत्वादीनी गुणाः, गौडी च रीतिः ।

"पक्षो मासार्द्धके पार्श्वे गृहे साध्यविरोधयोः । पक्षश्च पत्त्रौ चन्द्रे बले सखिसहाययोः । पतत्रे चुल्लिरन्ध्रे च देहाङ्गे राजकुञ्जरे ।" इति विश्वः । "युक्ते द्वे साम्प्रतं स्थाने" "समौ चन्द्रकमेचकौ" इत्यमरः ॥२०॥

**বাঙ্গালা**—একটীমাত্র চন্দ্র যাহার সপক্ষ (সমান এবং সহায়), দময়ন্তীর সেই মুখের উপরে যে কেশকলাপ বাস করিতেছে, তাহা যুক্তসঙ্গতই হইয়াছে । কারণ, যে কেশকলাপ, বহুতর চন্দ্র (চন্দ্রাকার চিহ্ন এবং শশী) পক্ষে (পাখায় এবং দলে) থাকিলেও, ময়ূরের পুচ্ছকে জয় করিয়াছে ॥২০॥

**अन्वयः**—अस्याः आस्येन शीतरुचा पुरः तिरश्च यत् अन्धकारं तिरस्कृतम्, स्फुरद्वक्र-कच-च्छलेन तत् एव इदं स्फुटं पश्चात् बद्धम् अस्ति ॥२१॥

अस्या इति । अस्या दमयन्त्याः, आस्येन मुखेन मुखरूपेणेत्यर्थः, शीतरुचा चन्द्रेण, पुरः सम्मुखे वर्त्तमानम्, तिरः पार्श्वे वर्त्तमानञ्च, यदन्धकारं तिमिरम्, तिरस्कृतम् अपसारितम्, स्फुरन् प्रकाशमानो वक्रः कौटिल्यं येषां ते तादृशा ये कचाः केशास्तेषां छलेन, तदेव इदमन्धकारम्, स्फुटं व्यक्तम्, पश्चात् मुखस्य पश्चाद्भागे, बद्धमस्ति । अपरोऽप्यपराधी तिरस्कृतः सन् पश्चाद्बाहुबद्धस्तिष्ठति । दमयन्त्याः केशपाशो गाढकृष्णवर्णः कुटिलश्चेति निष्कर्षः ।

(१) ··स्फुरद्वक्र···।

स्मारं धनुर्यद्विधुनोज्झितास्याः यास्येन भूतेन च लक्ष्मलेखा ।
एतद्भ्रुवौ जन्म तदाप युग्मं लीलाचलत्वोचितबालभावम् ॥२६॥
इषुत्रयेणैव जगत्त्रयस्य विनिर्जयात् पुष्पमयाशुगेन ।
शेषा द्विबाणी सफलीकृतेयं प्रियादृगम्भोजपदेऽभिषिच्य ॥२७॥

---

भ्रूभ्यामिति । अपि चेति चार्थः । मनोभुवः कामस्य चापेन पुष्पमयत्वात् असारेण धनुषा, प्रियायाः दमयन्त्याः, भ्रूभ्यां भ्रूयुगलेन, भवता भ्रूयुगलत्वं प्राप्नुवता सतेत्यर्थः, घनोनिविडः सारो बलं यस्य तस्य भावः अतिदृढत्वमित्यर्थः, आपे प्राप्तः । कथमेतदवगम्यत इत्याह यद् यस्मात्, अनेन भ्रूयुगलीभूतेन पुष्पधनुषा निजाम्, अप्लोषदशां भूतपूर्व्वामदाहावस्थाम् अपेक्ष्य, सम्प्रति भ्रूत्वप्राप्तिकाले, अधिकवीर्य्यता अतिरिक्तबलत्वम्, आर्जि अर्जितम्, पुष्पमयदशायां यावती मोहनशक्तिरासीत्, अधुना तदपेक्षया समधिकमोहनशक्तिदर्शनादिति भावः । भ्रूयुगलमिदमतीवकामोद्दीपकमिति तात्पर्य्यम् ।

अत्र मनोभूचापस्य भ्रूभवनासम्बन्धेऽपि तत्सम्बन्धादतिशयोक्तिरलङ्कारो द्वितीयपादगतच्छेकानुप्रासेन संसृज्यते पूर्वरागो रसः, बन्धाधर्य्यस्य दुरूहत्वादोजो गुणः गौड़ी च रीतिः ।

भ्रूभ्यां भवतेति द्विर्वचनयोरनुपपत्तिस्तु प्रागेव समाहिता ॥२५॥

**বাঙ্গালা**—কামদেবের ধনু প্রিয়তমার ভ্রূযুগল হইয়া অতিদৃঢ়তা লাভ করিয়াছে যে হেতু, সেই পুষ্পময় ধনু নিজের অদগ্ধ অবস্থা অপেক্ষা করিয়া, এখন অধিক সামর্থ্য অর্জ্জন করিয়াছে ॥২৫।

**অন্বয়ঃ**—स्मारं यत् धनुः अस्याः आस्येन भूतेन विधुना उज्झिता या च लक्ष्मलेखा, लीलाचल-त्वोचित-बाल-भावं तत् युग्मम् एतद्भ्रुवौ जन्म आप ॥२६॥

स्मारमिति । स्मरस्य कामस्येदमिति स्मारम्, यत् धनुर्दग्धं चापम्, अस्या दमयन्त्याः, आस्येन मुखेन भूतेन जातेन मुखत्वं प्राप्तवतेत्यर्थः, विधुना चन्द्रेण, उज्झिता एतन्मुखस्य निष्कलङ्कतासम्पादनार्थं परित्यक्ता, या च लक्ष्मलेखा तदीयकलङ्करेखा ; लीलया जन्मविलसितेन शैशवखेलायाश्च यत् चलत्वं स्पन्दनं चपलता च तस्मिन् उचितौ योग्यः बालभावो लोमसत्ता शिशुत्वञ्च यस्य तत्ताद्दृशम्, तत् युग्मं स्मारधनुर्लक्ष्मलेखयोर्द्वयम्, एतस्या दमयन्त्या भ्रुवौ भ्रूयुगलरूपं जन्म, आप ईश्वरेच्छया लेभे । हरनयनानलदग्धं कामधनुः एकभ्रूरूपेण चन्द्रकलङ्करेखा-च अपरभ्रूरूपेण परिणनाम, तत्र स्थितानि लोमानि च लीलया चलन्तीति सरलार्थः । अपरोऽपि जन्मलाभानन्तरं शैशवभावोचितचपलतायाली भवति ।

अत्र विधोरास्यभवनस्य लक्ष्मलेखात्यागस्य च तथा स्मारधनुर्लक्ष्मलेखयोर्भ्रूरूपेण जन्मलाभस्य च असम्बन्धेऽपि तत्तत्सम्बन्धात् अतिशयोक्तिरुपमाङ्गिभावेन सङ्कीर्णम् । चतुर्थपादं तृतीयस्थाने पठित्वा समाप्तपुनरात्तता दोषः परिहार्य्यः । रसादयः पूर्ववत् ।

पद्यमिदमसौन्दर्य्याविरक्तिकरमित्यालोचनीयम् ॥२६॥

**বাঙ্গালা**—কামদেবের যে ধনুখানা শিবকোপানলে দগ্ধ হইয়াছিল এবং এই দময়ন্তীর মুখরূপে পরিণত চন্দ্র, নিজের যে কলঙ্করেখা পরিত্যাগ করিয়াছিলেন ; সেই দুইটী পদার্থই ইহার ভ্রূযুগলরূপ জন্ম লাভ করিয়াছে ; তাহার লোমগুলি বিলাসবশতঃ চলিতেছে ॥২৬।

**অন্বয়ঃ**—पुष्पमयाशुगेन इषुत्रयेण एव जगत्त्रयस्य विनिर्जयात् शेषा इयं द्विबाणी प्रिया-दृगम्भोजपदे अभिषिच्य सफलीकृता ॥२७॥

सेयं मृदुः कौसुमचापयष्टिः स्मरस्य मुष्टिग्रहणार्हमध्या।
तनोति नः श्रीमदपाङ्गमुक्तां मोहाय या दृष्टिशरौघवृष्टिम् ॥२८॥
आघूर्णितं पक्ष्मलमक्षियुग्मं (१) प्रांशुद्युति (२) स्वैत्यजितामृतांशु।
यस्या इवास्याञ्चलदिन्द्रनील गोलामलश्यामलतारतारम् ॥२९॥

---

इदानीं नवभिः श्लोकैर्नयनयुगलं वर्णयति। इष्विति। पुष्पमया आशुगाः पञ्च बाणा यस्य तेन कन्दर्पेण, इषुत्रयेणैव पञ्चानां बाणानां मध्ये त्रिभिरेव बाणैः, जगत्त्रयस्य त्रिलोक्याः जेतौः, एकैकेनैव बाणेन एकैकस्यैव जगतो जयः सम्पन्न इति भावः, शेषा अवशिष्टा, द्वयं द्विसंख्या बाणद्वयम्, प्रियाया दमयन्त्याः दृगम्भोजयोर्नयनपद्मयोः पदे स्थाने, अभिषिच्य स्थाप्य, सफलीकृता निरर्थकत्वाभावाय सार्थकीकृता। नयनयुगलमपि नितान्त-कामोद्दीपकमित्याशयः।

अत्र शेषबाणद्वयस्य अभिषेकासम्बन्धेऽपि तत्सम्बन्धाद्दमितयोगिरूपलक्षणो दृगम्भोजेति निरङ्गकेवलरूपकेण सङ्कीर्यते। तथा इषुपदेन प्रक्रम्य आशुगबाणपदयोरभिधानाद्भग्नप्रक्रमतादोषः; पुष्पमयाशुगेनेत्यनेन पुष्पमयपञ्च-बाणत्वमभिप्रेतं तच्च तादृशपदप्रयोगात्र घटत इति अभवन्मतसम्बन्धतादोषश्च। तयोः समाधानाय द्वितीयतृतीय-पादावित्थं पठनीयौ—"पञ्चप्रसूनेषुभृता जयेन। शेषा द्वयी सा सफलीकृतेयम्"। पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः।

द्वयोर्बाणयोः समाहार इति द्विबाणी द्विगोर्नदादित्वान्ङीप्रत्ययः ॥२७॥

বাঙ্গালা—পুষ্পময়পঞ্চবাণধারী কামদেব, তিনটি বাণ দ্বারাই ত্রিভুবনের জয় সম্পন্ন হওয়ায় অবশিষ্ট বাণ দুইটীকে প্রিয়তমার নয়নপদ্ম দুইটীর স্থানে সংস্থাপিত করিয়া সার্থক করিয়াছেন ॥২৭॥

अन्वयः—मुष्टि-ग्रहणार्ह-मध्या मृदुः (च) इयं स्मरस्य सा कौसुमचापयष्टिः। या नः मोहाय श्रीमदपाङ्ग-मुक्तां दृष्टि-शरौघ-वृष्टिं तनोति ॥२८॥

सेति। मुष्टिना सङ्कुचिताङ्गुलीकेन पाणिना ग्रहणार्हः कृशत्वादीषित्याश्च धारणयोग्यः मध्यः कटिदेशो मध्यभागश्च यस्याः सा, मृदुः लावण्यमयत्वात् पुष्पमयत्वाच्च कोमला, इयं दमयन्ती, स्मरस्य कामस्य, कौसुमी पुष्पमयी चापयष्टिर्धनुर्यष्टिस्वरूपा। कथमीदृगित्याह या दमयन्तीरूपा चापयष्टिः, नः अस्माकम्, मोहाय कामविकारजननाय मूर्च्छाप्रापणाय च, श्रीमता शोभाशालिना अपाङ्गेन नेत्रप्रान्तेन मुक्तां निक्षिप्ताम् अपाङ्गपर्यन्ता-कर्षनिक्षिप्ताञ्च, दृष्ट्य एव शराः सरलत्वात्तीक्ष्णत्वाच्च बाणास्तेषाम् ओघस्य समूहस्य वृष्टिं वर्षणम्, तनोति विस्तारयति करोति। दृष्टिपातमात्रेणैव कामविकारजनिकेयमिति भावः।

अत्र दमयन्त्यामारोप्यमाणस्य कौसुमचापयष्टित्वस्य प्रकृतदृष्टिशरौघवृष्ट्युपयोगितया परिणामालङ्कारः, दृष्टि-शरौघेति निरङ्गं केवलरूपकञ्च; अनयोरङ्गाङ्गिभावेन सङ्करः; सोऽपि च वृत्त्यनुप्रासेन संसृज्यते। रसादयः पूर्ववत् ॥२८॥

বাঙ্গালা—হাত মুট করিয়া যাহার মধ্যদেশ ধরা যায়, এই দময়ন্তী সেই কামদেবের কোমল পুষ্পময়ী কার্ম্মুকযষ্টি; যে দময়ন্তীরূপ কার্ম্মুকযষ্টি, আমার মোহ জন্মাইবার জন্য, সুন্দর অপাঙ্গ নিক্ষিপ্ত দৃষ্টিরূপ বাণসমূহ বৃষ্টি করিতেছে ॥২৮॥

(१)⋯अक्षियुग्मम्। (२) प्रांशुद्युति।

कर्णोत्पलेनापि मुखं सनाथं लभेत नैषध्युतिनिर्जितेन।
यद्येतदीयेन ततः कृतार्थौ स्वचक्षुषी किं कुरुते कुरङ्गी ॥३०॥
त्वचः समुत्तार्य दलानि रीत्या मोचात्वचः पञ्चषपाटनानाम् (१)।
सारैर्गृहीतैर्विधिरुत्पलौघात् अस्यामभूदीक्षणकल्पशिल्पी ॥३१॥

अन्वयः—आघूर्णितं पक्ष्मलं प्रांशुद्युति शैत्यजिताब्जताम्र चलदिन्द्रनील-गोलामल-श्यामलतार-तारम् अस्या अक्षियुग्मम् अस्याः इव (वर्त्तते) ॥२९॥

आघूर्णितमिति। आघूर्णितम् ईषच्चञ्चलम्, पक्ष्मलं सुन्दरपक्ष्मयुक्तम्, प्रांशुरुन्नता द्युतिः कान्तिर्यस्य तत् अत्युज्ज्वलमित्यर्थः, शैत्येन ताराप्रान्तद्वयस्थितधावल्येन जितः अब्जताम्रचन्द्रौ येन तत्, चलन् चञ्चलः य इन्द्रनीलगोली मरकतमणिगुटिका तद्वत् अमलां निर्मलां श्यामलतां नीलवर्णम् आराति आदत्त इति सा तादृशी तारा कनीनिका यस्य तत्तथोक्तम्, अस्या दमयन्त्याः, अक्षियुग्मं नयनद्वयम्, अस्या दमयन्त्या इव, न पुनरन्यस्या रमण्या-स्तुल्यमित्यर्थः।

अत्र अस्या अक्षियुग्मम् अस्या इवेति एकस्या एव उपमेयोपमानत्वात् अनन्वयो नामालङ्कारः; "उपमानोपमेयत्वमेकस्यैव त्वनन्वयः" इति दर्पणलक्षणात् "रामरावणयोर्युद्धं रामरावणयोरिव" इत्यादिवत्। चलदित्यादौ लुप्तोपमा, चतुर्थपादे छेकानुप्रासश्चेत्येतेषां संसृष्टिः। पूर्वरागो रसः, माधुर्यं गुणः, पाञ्चाली च रीतिः ॥२९॥

বাঙ্গালা—দময়ন্তীর নয়ন দুইটী ঈষৎ চঞ্চল এবং অত্যন্ত উজ্জ্বল; আর তারা দুইটী নীলমণির গুটীর মত নির্ম্মলশ্যামলতাশালী; সেই তারা দুইটীর দুই দিকের দুইটী ভাগও শুভ্রতাগুণে চন্দ্রকে জয় করিয়াছে; লোমগুলিও খুব সুন্দর। সুতরাং ইহার নয়ন দুইটী ইহারই মতন বটে ॥২৯॥

अन्वयः—कुरङ्गी नैषध्युतिनिर्जितेन एतदीयेन कर्णोत्पलेन अपि सनाथं मुखं यदि लभेत, ततः कृतार्थौ (सती) स्वचक्षुषी किं कुरुते ॥३०॥

कर्णोत्पलेनेति। कुरङ्गी हरिणी, नैषध्युत्या दमयन्त्या एव नयनकान्त्या निर्जितेन सौन्दर्यविषये पराजितेन, एतदीयेन दमयन्तीसम्बन्धिना, कर्णोत्पलेनापि नयनेन का कथा कर्णभूषणीभूतेन उत्पलेनापि, सनाथं युक्तम्, मुखं निजवदनम्, यदि लभेत प्राप्नुयात् ततस्तदा, कृतार्था सती, स्वचक्षुषी निजनयनद्वयम्, किं कुरुते किं कुर्य्यात्, अपितु किमपि नेत्यर्थः। निष्फलमेवैतदिति विभाव्य परित्यजेदेवेति भावः।

अतएवात्र प्रसिद्धोपमानीभूतस्य हरिणीनयनस्य निष्फलत्वसूचनात् प्रतीपं नामालङ्कारः, "प्रसिद्धस्योपमानस्योपमेयत्वप्रकल्पनम्। निष्फलत्वाभिधानं वा प्रतीपमिति कथ्यते।" इतिदर्पणलक्षणात्। कर्णोत्पलेन हरिणीमुखस्य सनाथत्वासम्बन्धेऽपि तत्सम्बन्धादतिशयोक्तिस्तयोरङ्गाङ्गिभावेन सङ्करः; सोऽपि च "कुरुते कुरङ्गी" इति छेकानुप्रासेन संसृज्यते। हरिणी नयनादुत्कृष्टं कर्णोत्पलम्, कर्णोत्पलाच्चोत्कृष्टं दमयन्तीनयनमिति धारालङ्कारयातिशयोक्त्या व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः। पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥३०॥

বাঙ্গলা—ইহার নয়নকান্তি ইহারই কর্ণোৎপলকে পরাভূত করিয়াছে; এহেন কর্ণোৎপলযুক্ত মুখও যদি হরিণী পাইত, তবে সে তাহার নয়ন দুইটাকে কি করিত (ফেলিয়াই দিত) ॥৩০॥

(१) पञ्चषपाटनायाम्।

**चकोरनेत्रैणदृगुत्पलानां निमेषयन्त्रेण किमेष कृष्टः।**
**सारः सुधोद्गारमयः प्रयत्नैर्विधातुमेतन्नयने विधातुः॥३२॥**

**अन्वयः**—विधिः पञ्चषपाटनानां रीत्या त्वचः दलानि (च) समुत्सार्य मोचात्वचः उत्पलौघात् (च) गृहीतैः सारैः अस्याम् दृक्तारकरूपशिल्पी अभूत् (इव)॥३१॥

त्वच इति। विधिर्ब्रह्मा, पञ्च वा षड् वा याः पाटनाः त्वग्दलयोरुत्पाटनानि तासाम्, रीत्या प्रकारेण, त्वचः कदलीसम्बन्धीनि बाह्यवल्कलानि, दलानि उत्पलौघसम्बन्धीनि बाह्यपत्राणि च, समुत्सार्य उत्पाट्य, मोचात्वचः अभ्यन्तरस्थात् कदलीगर्भवल्कलात्, उत्पलौघात् अभ्यन्तरस्थादेव नीलोत्पलदलात्, गृहीतैराहृतैः, सारैरन्तःस्थभागैः मोचात्वचः शुभ्रभागैः नीलोत्पलस्य च नीलभागैः करणैरित्यर्थः, अस्यां दमयन्त्याम्, दृक्तारकरूपशिल्पी तत् रूपं ताराप्रान्तद्वयवर्तिनी शुभ्रता ताराद्वयस्य च नीलता तस्य शिल्पी निर्माता, अभूदिव; ताराप्रान्तद्वये कदलीगर्भवल्कलतुल्यशुभ्रतादर्शनात् ताराद्वये च नीलोत्पलगर्भदलतुल्यनीलतादर्शनाच्चेति भावः।

अत्र अभूदिति वाक्यार्थप्रतीतिसमानकालीनादेव बाधज्ञानान्नातिशयोक्तिः, अपितु इवाद्यभावात् प्रतीयमाना क्रियोत्प्रेक्षैवालङ्कारः। रसादयः पूर्ववत्।

"कदली वारणबुषा रम्भा मोचांशुमत्फला" इत्यमरः।

पञ्चषेति "संख्यायाऽव्ययासन्नादूराधिकसंख्याः संख्येये" इति बहुव्रीहौ "बहुव्रीहौ संख्येये डजबहुगणात्" इति डचि समासान्तः "डति च" इति टिलोपश्च॥३१॥

**বাঙ্গালা**—ব্রহ্মা কলাগাছের পাঁচ ছয় খানা পাট ফেলাইয়া দিয়া, সে স্থানের সাদা ভাগ নিয়া, দময়ন্তীর নয়নযুগলের তারা দুইটীর দুই ধার যেন নির্ম্মাণ করিয়াছেন; আর নীলোৎপলের পাঁচ ছয়টা পাতা ফেলাইয়া দিয়া সে স্থানের নীল ভাগ নিয়া, দময়ন্তীর নয়নযুগলের তারা দুইটী যেন তৈয়ারি করিয়াছেন॥৩১॥

**অন্বয়ঃ**—एतन्नयने विधातुं विधातुः प्रयत्नैः चकोरनेत्रैणदृगुत्पलानां निमेषयन्त्रेण च एषः सुधोद्गारमयः सारः किं कृष्टः॥३२॥

चकोरेति। एतस्या दमयन्त्या नयने नयनयुगलम्, विधातुं निर्म्मातुम्, विधातुर्ब्रह्मणः, प्रयत्नैरुद्यमैः करणैः, चकोरस्य तदाख्यपक्षिविशेषस्य नेत्रे नयनद्वयम्, एणस्य हरिणस्य दृशौ चक्षुर्द्वयम्, उत्पलानि च तेषाम्, निमेषः स्वाभाविकस्पन्दनं पवनादिकृतस्पन्दनञ्च तद्रूपं यद्यन्त्रं तेन करणेन, एष दृश्यमानः, सुधोद्गारमयः अमृतनिःसारस्वरूपः, सारस्तेषामेव श्रेष्ठभागः, किं कृष्टः किमाकृष्य आनीत आसीत्; कथमन्यथा एतस्या नयनयुगलाद् दृष्टिसुधा प्रसरतीति भावः। चकोरनेत्रादिस्थितेन निमेषरूपयन्त्रेण निष्पीड्य निष्पीड्य तेभ्य एव आनीतेन सुधामयेन सारभागेन विधात्रा एतन्नयनयुगलं निर्म्मितमिवासीदिति सरलार्थः। अन्योऽपि स्पन्दनशालिना यन्त्रेण इक्षुदण्डादिकं निष्पीड्य तत्सारस्वरूपं रसादिकम् आनयति। तत्र चन्द्रिकापानकारितया चकोरनेत्रयोः सुधाशालित्वम्, चन्द्रोत्सङ्गवर्तितया एणदृशोः सुधाशालित्वम्, चन्द्रिकाविकासितया च उत्पलानां सुधाशालित्वमित्यवधेयम्।

अत्र किं कृष्ट इति शब्दा क्रियोत्प्रेक्षालङ्कारश्चतुर्थपादगतयमकेन संसृज्यते। पूर्वरागो रसः, यथार्थत्व-दुष्करत्वादिरोजो गुणः, गौड़ी च रीतिः॥३२॥

**বাঙ্গালা**—বিধাতা দময়ন্তীর নয়নযুগল নির্ম্মাণ করিবার জন্য, নিমেষরূপ যন্ত্র দ্বারা চকোরপক্ষীর নয়ন, হরিণের নয়ন এবং উৎপল এই গুলিকে নিষ্পীড়ন করিয়া করিয়া, সে গুলির অমৃতময় সারভাগ কি আনয়ন করিয়াছিলেন॥৩২॥

ऋणीकृता किं हरिणीभिरासीत् अस्याः सकाशान्नयनद्वयश्रीः ।
भूयोगुणेयं सकला बलाद् यत् ताभ्योऽनयालभ्यत बिभ्यतीभ्यः ॥२३॥
दृशौ किमस्याश्चपलस्वभावे न दूरमाक्रम्य मिथो मिलेताम् ।
न चेत् कृतः स्यादनयोः प्रयाणे विघ्नः श्रवःकूपनिपातभीत्या ॥२४॥
केदारभाजा शिशिरप्रवेशात् पुष्पाय मन्ये मृतमुत्पलिन्या ।
जाता यतस्तत्कुसुमेक्षणेयम् यतश्च तत् कोरकदृक् चकोरः ॥२५॥

---

**अन्वयः**—हरिणीभिः अस्याः सकाशात् नयनद्वयश्रीः किम् ऋणीकृता आसीत्; यत् अनया बिभ्यतीभ्यः ताभ्यः बलात् सकला भूयोगुणा इयम् अलभ्यत ॥२३॥

ऋणीकृतेति । हरिणीभिर्मृगीभिः, अस्या दमयन्त्याः, सकाशात् नयनद्वयस्य श्रीः शोभा कियती धन-सम्पत्तिश्च, किम् ऋणीकृता ऋणत्वेन गृहीता आसीत्; यद् यस्मात्, अनया दमयन्त्या, बिभ्यतीभ्यः भयन्तीभ्यः । तासां भयन्तु दृक्चाञ्चल्येनावगम्यत इति भावः । ताभ्यो हरिणीभ्यः, बलात् प्रसह्य, सकला समग्रा, किञ्च भूयान् प्रचुरः गुण आवृत्तिर्यस्याः सा, अन्यत्र तु कलया वृद्ध्या सहेति सकला; कियती तु वृद्धिरित्याह भूयान् द्विरा-वृत्ती गुणो यस्याः सा द्विगुणेत्यर्थः, इयं श्रीः शोभा धनसम्पत्तिश्च, अलभ्यत आदीयत । बाल्ये अस्याः सकाशाद् यावती नयनद्वयश्रीर्हरिणीभिर्गृहीता, यौवने त्वनया ततो द्विगुणैव ताभ्य आदत्तेति भावः । अधमर्णैर्यावद्धनम् ऋणत्वेन पूर्वं गृहीतम्, उत्तमर्णेन तु कालान्तरे तदपेक्षया द्विगुणं बिभ्यद्भ्यस्तेभ्यो बलादादीयते ।

अत्रएवात्र कार्य्येण दमयन्त्याम् उत्तमर्णव्यवहारसमारोपात् समासोक्तिरलङ्कारः, वाच्या क्रियोत्प्रेक्षा, चतुर्थचरणे छेकानुप्रासश्चेत्येतेषां संसृष्टिः । पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ।

"कला स्यान्मूलरैवृद्धौ शिल्पादावंशमात्रके । षोड़शांशे च चन्द्रस्य कलनाकालयोः कला ।" इति विश्वः ॥२३॥

**বাঙ্গালা**—হরিণীরা ইহার নিকট হইতে নয়ন দুইটীর শোভা কি ঋণ করিয়া নিয়া-ছিল; যেহেতু, ভীত সেই হরিণীগণের নিকট হইতে বলপূর্ব্বক ইনি, সমগ্র এমন কি দ্বিগুণ সেই শোভা আদায় করিয়াছেন ॥৩৩॥

**अन्वयः**—चपलस्वभावे अस्याः दृशौ दूरम् आक्रम्य मिथः किं न मिलेताम्, चेत् अनयोः प्रयाणे श्रवःकूपनिपातभीत्या विघ्नः न कृतः स्यात् ॥२४॥

दृशाविति । चपलस्वभावे स्वभावत एव चञ्चले, अस्या दमयन्त्याः, दृशौ नयनद्वयम्, दूरं दैर्घ्यम्, आक्रम्य गत्वा, मिथः परस्परम्, किं न मिलेतां घात्वर्थः मिलिते न भवेताम्, अपितु मिलितामेवेत्यर्थः । ननु तर्हि कथं न मिलिते इत्याह चेद् यदि, अनयोर्दृशोः, प्रयाणे परस्परमेलनाय गमनविषये, श्रवसी कर्णयुगलमेव कूपौ तयोर्निपातः पतनं तस्माद्भीत्या भयेन करणेन, विघ्नो न कृतः स्यात् । दमयन्त्या नयनयुगलं स्वभावचञ्चलम् आकर्णविस्तृतञ्चेति स्वरूपार्थः । अपरोऽपि चपलः कूपपतनभयेन गमनान्निवर्त्तते ।

अत्रएवात्र नयनयुगले कार्य्येण तादृशचपलव्यवहारसमारोपात् समासोक्तिः, पूर्वार्द्धे अर्थापत्तिः, तदनुप्राणिता च श्रवणासम्बन्धे तत्सम्बन्धरूपातिशयोक्तिश्चेत्येतेषामङ्गाङ्गितया सङ्करः । रसादयः पूर्ववत् ॥२४॥

**বাঙ্গালা**—দময়ন্তীর স্বভাবচঞ্চল নয়ন দুইটী দূরে যাইয়া পরস্পর কি মিলিত হইত না? (অবশ্যই হইত); যদি কর্ণকূপে পড়িয়া যাইবার ভয় তাহাদের গমনে বিঘ্ন না করিত ।৩৪।

**नासादसीया तिलपुष्पतूणं जगत्त्रयन्यस्तशरत्रयस्य ।**
**श्वासानिलामोदभरानुमेयां दधद्द्विबाणीं कुसुमायुधस्य ॥२६॥**

---

**अन्वयः**—उत्पलिन्या केदारभाजा (सत्या) पुण्याय शिशिरप्रवेशात् मृतम् (इति) मन्ये । यतः इयं तत्कुसुमेक्षणा जाता, यतश्च चकोरः तत् कोरकदृक् जातः ॥२५॥

केदारेति । उत्पलिन्या पद्मिन्या, केदारम् आलवालं तदाख्यं शिवञ्च भजति आश्रयति सेवते च या सा केदारभाक् तया सत्या पुण्याय पुण्यजन्योत्तमपदलाभायेत्यर्थः, शिशिरप्रवेशात् हेमन्तऋतोरागमनात् शिशिरे हिमसंघातमध्ये प्रवेशाच्छिमव्यजनाद्य हेतोः, मृतमित्यहं मन्ये । यतो हेतोः, इयं दमयन्ती, तस्या उत्पलिन्या कुसुमे पुष्पद्वयमिव ईक्षणे नयनद्वयं यस्याः सा तादृशी जाता । यतश्च हेतोः, चकोरः पक्षी, तस्या उत्पलिन्याः कोरकौ कलिकाद्वयमिव दृशौ नयनयुगलं यस्य स तादृशो जातः । पुण्याय मरणमन्तरेण पद्मिन्याः कुसुमकोरकाभ्यां न खलु अत्युत्तमं दमयन्तीनयनपदं चकोरनयनपदञ्च लब्धुं शक्यं तेतिभावः । कोरकात् कुसुमस्य उत्कृष्टत्वात् चकोरनयनापेक्षयापि दमयन्तीनयनस्योत्कृष्टत्वं ध्वनितम् । अन्योऽपि उत्तमजन्मलाभाय देवविशेषमाराध्य हिमसंघाते म्रियते ।

अत एवात्रापि कार्थ्ये च उत्पलिन्यां तादृशजनव्यवहारसमारोपात् समासोक्तिः, वाच्या क्रियोत्प्रेक्षा, उत्पलिनी कुसुमकोरकयोर्दमयन्तीचक्षुश्चकोरदृक्त्वासम्बन्धेऽपि तयोः सम्बन्धादतिशयोक्तिद्वयम्, द्वितीयचतुर्थपादयोश्छेकानुप्रासश्चेत्येतेषां संसृष्टिः । उत्प्रेक्षितार्थसमर्थनादनुचितार्थत्वदोषस्तु सम्पूर्णपद्यपरिवर्त्तनेनैव परिहार्य्य इति नैव विरतम् । पूर्वरागो रसः, माधुर्य्यं गुणः, वैदर्भी च रीतिः ।

"केदारः स्याद्भिद्यालवाले शङ्करस्य तयोः" "शिशिरः शीतले हिमे । ऋतुभेदे" इति च हेमचन्द्रः ॥२५॥

**বাঙ্গালা**—পদ্মিনী জলাশয়ে থাকিয়া (শিবের আরাধনা করিয়া) পুণ্যনিবন্ধন উত্তম পদ লাভের জন্যই, হেমন্তকালের আগমনে (বরফের ভিতরে প্রবেশে) প্রাণত্যাগ করিয়াছিল; ইহা আমি মনে করি। যে হেতু, তাহার ফুলই দময়ন্তীর নয়ন হইয়া জন্মিয়াছে; আর তাহার কলিকাই চকোরপক্ষীর নয়ন হইয়া জন্মলাভ করিয়াছে ॥৩৫॥

**अन्वयः**—अदसीया नासा जगत्त्रयन्यस्तशरत्रयस्य कुसुमायुधस्य श्वासानिलामोदभरानुमेयां द्विबाणीं दधत् तिलपुष्पतूणं (मन्ये) ॥२६॥

एतेन नासिकां वर्णयति नासेति । अमुष्या इयमिति अदसीया दमयन्तीसम्बन्धिनी नासा नासिका, जगत्त्रये न्यस्तं मोहनाय विक्षिप्तं शरत्रयं येन तस्य, कुसुमायुधस्य कामस्य सम्बन्धि, श्वासानिलस्य निश्वासवायोः आमोदभरेण सौरभातिशयेन अनुमेयाम् अनुमानयोग्याम्, द्विबाणीम् अवशिष्टं शरद्वयम्, दधत् धारयत्, तिलपुष्पतूणं तिलकुसुममयं तूणीरम् इत्यहं मन्ये इति शेषः । तथा च कामस्य पुष्पमयाः पञ्चबाणाः सन्ति ; तन्मध्ये त्रयो बाणाः स्वर्गमर्त्त्यपातालात्मकत्रिभुवनजयाय विक्षिप्ताः ; अवशिष्टञ्च बाणद्वयं तूणीर एव स्थापितमस्ति । तच्च तूणीरं पुष्पायुधोपकरणत्वात् पुष्पमयमेव भवितुं युक्तम् । तेन च समानाकारत्वात् तिलपुष्पमेव तन्मन्तव्यम् तत्र च पुष्पमयं शरद्वयमस्ति, तत्तु तन्निर्गतनिश्वाससौरभेणैवानुमीयते । परन्तु तादृशं कामतूणीरमेव दमयन्त्या नासिकारूपेण परिणतमित्यहं मन्ये तस्या अपि कामोद्दीपकत्वादिति सरलार्थो भावार्थश्च ।

अत्र प्रतीयमाना आत्युत्प्रेक्षालङ्कारः । पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥२६॥

**বাঙ্গালা**—কামদেব নিজের পাঁচটী বাণের মধ্যে তিনটী বাণকে ত্রিভুবন জয় করিবার জন্য নিক্ষেপ করিয়াছেন; অবশিষ্ট দুইটী বাণ তিলপুষ্পময় তূণীরের ভিতরেই রহিয়াছে আমি মনে করি তিলপুষ্পময় সেই তূণীরই দময়ন্তীর নাসিকারূপে পরিণত হইয়াছে; তবে

बन्धूक-बन्धूभवदेतदस्या मुखेन्दुनानेन सहोज्जिहाना
रागश्रिया शैशवयौवनीयां स्वमाह सन्ध्यामधरोष्ठलेखा ॥३७॥
अस्या मुखेन्दोरधरः सुधाभू-(१) विम्बस्य युक्तः प्रतिविम्ब एषः ।
तस्याथवा श्रीर्द्रुमभाञ्जि देशे सम्भाव्यमानास्य तु विद्रुमे सा ॥३८॥

তাহার ভিতরে যে পুষ্পময় বাণ দুইটী রহিয়াছে, তাহা নিশ্বাসবায়ুর সাতিশয় সৌরভেই অনুমান করা যাইতেছে ॥৩৬॥

**अन्वयः**—अनेन मुखेन्दुना सह उज्जिहाना अस्याः अधरोष्ठलेखा रागश्रिया बन्धूक-बन्धूभवत् एतत् स्वं शैशवयौवनीयां सन्ध्याम् आह ॥३७॥

अथ षड्भिः पद्यैरधरोष्ठं वर्णयति । बन्धूकेति । अनेन दृश्यमानेन, मुखेन्दुना मुखचन्द्रेण सह, उज्जिहाना उत्पद्यमाना उदयमाना च, अस्या दमयन्त्याः, अधरोष्ठयोर्लेखा रेखा रेखावत् कृशावधरोष्ठावित्यर्थः, रागस्य लौहित्यस्य श्रिया शोभया, बन्धूकस्य तदाख्यरक्तवर्णपुष्पविशेषस्य बन्धूभवत् सुहृद्भवत् तुल्यीभवदित्यर्थः, एतद् दृश्यमानम्, स्वम्, आत्मानम्, शैशवयौवनयोरियमिति शैशवयौवनीया ताम् सन्ध्यां सन्धिदशां सन्धिकालञ्च, आह ब्रवीति यौवनाविर्भाव एव विशेष लौहित्योदयात् वचनवत् स्पष्टं सूचयतीत्यर्थः । तथा च चन्द्रेण सह उदयमानः सन्ध्याकालो रागश्रिया बन्धूककुसुमतुल्यीभवन्तमात्मानं यथा दिवसरजन्योः सन्धिरूपं वदति ; तथा मुखेन सहोत्पद्यमाना अधरोष्ठलेखापि रागश्रिया बन्धूककुसुमतुल्यीभवन्तमात्मानं शैशवयौवनयोः सन्धिदशां वदतीति भावः ।

अतएवात्र कार्य्ये च अधरोष्ठलेखायां सन्ध्याकालव्यवहारसमारोपात् समासोक्तिरलङ्कारः बन्धूकबन्धूभवदिति आर्थीपमा च्छेकानुप्रासश्चेति संसृष्टिः । पूर्वरागो रसः, माधुर्य्यं गुणः, वैदर्भी च रीतिः ।

उज्जिहानेति "ओ हाङ् गतौ" इत्यदादिकधातोरात्मनि जुहोत्यादित्वात् शिर्भावे रूपम् ॥३७॥

**বাঙ্গালা**—এই মুখচন্দ্রের সঙ্গে সঙ্গেই উৎপন্ন ওষ্ঠ দুইখানি, আপনাকে শৈশবকাল ও যৌবনকালের সন্ধি-অবস্থারূপেই প্রকাশ করিতেছে ; কেন না, এই ওষ্ঠ দুইখানি যৌবনোদয়ের রক্তিমার শোভায় বন্ধুককুসুমের তুল্য হইয়া উঠিয়াছে ।৩৭॥

**अन्वयः**—अस्याः मुखेन्दोः एषः अधरः सुधाभू-विम्बस्य प्रतिविम्बः युक्तः । अथवा तस्य श्रीः द्रुमभाञ्जि देशे (वर्त्तते); अस्य तु सा विद्रुमे सम्भाव्यमाना ॥३८॥

अस्या इति । अस्या दमयन्त्याः, मुखेन्दोर्मुखचन्द्रस्य सम्बन्धी, एष दृश्यमानः, अधर ओष्ठः, सुधाभुविम्बस्य अमृतमयभूमिजातविम्बफलस्य, प्रतिविम्बः समानः युक्तो भवितुं सङ्गतः; लौहित्यसाम्यसम्भवात् माधुर्य्यसाम्यसम्भवाच्च, साधारणविम्बफलस्य तु लौहित्यसाम्यसम्भवेऽपि तिक्तरसतया माधुर्य्यसाम्यासम्भवादिति भावः । विम्बफलसामान्येनैव सह अधरस्य सादृश्यमेव न घटत इति द्योतयितुमाह अथवेति । तस्य विम्बफलसामान्यस्यैव, श्रीः शोभा, द्रुमभाञ्जि द्रुमवति, देशे वन एव वर्त्तते; विम्बफलस्य लताजातत्वात् लतायाश्च द्रुमाश्रितत्वादित्याशयः । तु किन्तु अस्य अधरस्य, सा श्रीः, विद्रुमे द्रुमशून्ये स्थाने सौधादावेव, सम्भाव्यमाना प्रायेणावस्थितत्वेन मन्यमाना वर्त्तते; दमयन्त्याः प्रायेण सौधादावेव अवस्थानादित्यभिप्रायः । अथ च विद्रुमे प्रवाले । तथाच अधमवनस्थितेन विम्बफलेन सह उत्तमसौधस्थितस्य अधरस्य सादृश्यकल्पनमेवायुक्तमिति पद्यान्तरोक्तभावः ।

अत्र सुधाभूविम्बस्य असत्त्वासम्बन्धेऽपि तत्सम्बन्धादतिशयोक्तिः, वस्तुमिष्टस्य विम्बसादृश्यस्य परार्द्धेन निषेधाभासीकरणात् आक्षेपालङ्कारः, विम्बफलापेक्षया अधरस्योत्कर्षाधिक्यप्रतिपादनात् व्यतिरेकः, च्छेकानुप्रासश्चैतेषां संसृष्टिः । रसादयः पूर्ववत् ॥३८॥

[१] अस्या मुखेन्दोरधरः … ।

जानेऽतिरागादिदमेव बिम्बं बिम्बस्य तु (१) व्यक्तमितोऽधरत्वम् ।
द्वयोर्विशेषावगमाक्षमाणां नाम्नि भ्रमोऽभूदनयोर्जनानाम् ॥३९॥
मध्योपकण्ठावधरोष्ठभागौ भातः किमप्युच्छसितौ यदस्याः ।
तत्स्वप्नसम्भोगवितीर्णदन्त-दंशेन किं वा न मयापराद्धम् ॥४०॥

---

বাঙ্গালা—দময়ন্তীর মুখচন্দ্রের এই ওষ্ঠ দুইখানি, অমৃতময় হওয়ায় বিম্বফলের তুল্য হওয়াই উচিত। অথবা বিম্বফলের শোভা বনেই থাকে; আর এই ওষ্ঠ দুইখানির শোভা অট্টালিকাপ্রভৃতি স্থানেই সম্ভবপর হয়; (সুতরাং বিম্বফলের সহিত এই ওষ্ঠের তুলনাই চলেনা)।৩৮।

अन्वयः—अतिरागात् इदम् एव बिम्बं जाने; बिम्बस्य तु इतः अधरत्वम्: व्यक्तम् । विशेषावगमाक्षमाणां जनानाम् अनयोः द्वयोः नाम्नि भ्रमः अभूत् ॥३९॥

जान इति । अतिरागात् अत्यन्तलौहित्यात् अत्यन्तानुरागाच्च, इदं दृश्यमानं दमयन्तीरदनच्छदात्मकमेव वस्तु, बिम्बं लोके ओष्ठबिम्बमित्यत्र उपमानभावेन प्रयुज्यमानं बिम्बशब्दवाच्यं वस्तु जाने मन्ये । बिम्बस्य तु बिम्बीफलस्य तु, इतो दमयन्तीरदनच्छदात्, अधरत्वं तस्यातिरागादेव हीनोत्कृष्टत्वम्, व्यक्तं स्पष्टम् । ननु तर्हि कथं लोके बिम्बीफले बिम्बशब्दः ओष्ठे च अधरशब्दः प्रयुज्यत इत्याह विशेषावगमाक्षमाणाम् बिम्बीफलस्य एतदोष्ठस्य च तारतम्यज्ञाने असमर्थानाम्, जनानां मूर्खलोकानाम्, अनयोः ओष्ठबिम्बीफलयोर्द्वयोः, नाम्नि संज्ञायाम्, भ्रमो विपर्यासः, अभूत् । तथा च अतिलौहित्यादुत्कृष्टे ओष्ठे बिम्बशब्दे प्रयोक्तव्ये भ्रमाद्बिम्बीफले खलसौ प्रयुज्यते ; तथा तादृशलौहित्याभावान्निकृष्टे बिम्बीफले अधरशब्दे प्रयोक्तव्ये भ्रमाद्बिम्बशब्दः प्रयुज्यते । ततश्च मूर्खाणामपि भ्रमनिबन्धनस्तथाविधः प्रयोगस्तुच्छ एवेति भावः । अतिरिक्तः कश्चित् पदार्थ एव बिम्बशब्दवाच्य इतिकवेरभिप्राय इत्यवधेयम् ।

अत्र प्रथमे पादे वाच्या जात्युत्प्रेक्षा, द्वितीये व्यतिरेकः, परार्द्धगतार्थं प्रति पूर्वार्द्धगतवाक्यार्थस्य हेतुत्वात् काव्यलिङ्गञ्चेत्येतेषां संसृष्टिः । पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ।

"अधरस्तु पुमानोष्ठे हीनेऽनूर्द्धे च वाच्यवत्" इति मेदिनी ।

"अधरं खलु बिम्बनामकम्" इत्यादिद्वितीयसर्गस्थपद्यमेतदपेक्षया मनोहरतरमिति प्रतीयते ॥३९॥

বাঙ্গালা—অত্যন্ত লোহিত্যবশতঃ দময়ন্তীর এই ওষ্ঠকেই আমি বিম্ব বলিয়া মনে করি কিন্তু বিম্বফল যে ইহা অপেক্ষা নিকৃষ্ট, তাহা স্পষ্টই বুঝা যায়। তবে ওষ্ঠ ও বিম্বফল এই দুইটি বস্তুর তারতম্য বুঝিতে যাহারা অসমর্থ, সেই সকল মূর্খ লোকেরই এই দুইটি বস্তুর নামের বিষয়ে ভ্রম হইয়াছে ॥৩৯॥

अन्वयः—अस्याः मध्योपकण्ठौ अधरोष्ठभागौ किमपि उच्छसितौ (सन्तौ) यत् भातः, तत् किं वा मया स्वप्न सम्भोग-वितीर्ण -दन्तदंशेन न अपराद्धम् ॥४०॥

मध्योपकण्ठाविति । अस्या दमयन्त्याः, मध्यस्य मध्यस्थानस्य उपकण्ठौ उभयदिशाः समीपवर्त्तिनौ, अधरोष्ठयोः भागौ अंशौ, किमपि किञ्चित्, उच्छसितौ स्फीतौ सन्तौ, यद् यस्मात्, भातः शोभेते; तत्तस्मात्, किं वा किम्, मया, स्वप्ने यः सम्भोगस्तत्र वितीर्णौ दत्तौ यौ दन्तदंशौ दन्तद्वारकदंशनं तेन कारणेन, न अपराद्धम् अपराधः कृतः, अपितु, अपराद्धमेव ; आघातस्थान एवोच्छसितत्वादिति भावः ।

अत्र अधरोष्ठयोर्मध्यस्थानस्य उभयपार्श्वे किञ्चित् स्फीतता स्वाभाविकी, तस्याश्च दन्तदंशनजन्यत्वेन सम्भावनाया कार्यकारणयोः क्रियोत्प्रेक्षालङ्कारः । रसादयः पूर्ववत् ॥४०॥

---

(१) बिम्बस्य च० ।

विद्याः विदर्भेन्द्रसुताधरोष्ठे नृत्यन्ति कत्यन्तरभेदभाजः।
इतीव रेखाभिरपश्रमस्ताः संख्यातवान् कौतुकवान् विधाता ॥४१॥
संभुज्यमानाद्य मया निशान्ते स्वप्नेऽनुभूतामधुराधरेयम्।
असीमलावण्यरदच्छदेयं कथं मयैव प्रतिपद्यतेवा ॥४२॥

---

**বাঙ্গালা**—দময়ন্তীর ওষ্ঠের মধ্যস্থানের দুই পাশ কিছু ফাত হইয়া যে হেতু শোভা পাইতেছে; সে হেতু, স্বপ্নে সম্ভোগ করিবার সময় দন্ত দ্বারা দংশন করিয়া আমিই কি সে অপরাধ করি নাই ? ॥৪০॥

**अन्वयः**—विदर्भेन्द्रसुताधरोष्ठे अन्तरभेदभाजः कति विद्याः नृत्यन्ति इति (लोके ज्ञापयितुम्) इव अपश्रमः विधाता कौतुकवान् (सन्) रेखाभिः ताः संख्यातवान् ॥४१॥

विद्या इति। विदर्भेन्द्रसुतायाः दमयन्त्याः अधरोष्ठे, अन्तरभेदभाजः कलात्वकाव्यत्वादिना अवान्तरभेदविशिष्टाः कति विद्याः नृत्यन्ति सर्वदा स्पष्टं प्रकाशन्ते, इतीव इति लोके ज्ञापयितुमिव, अपश्रमः परिश्रमरहितः, विधाता कौतुकवान् सन्, रेखाभिः तदधरोष्ठवर्त्तिनीभिरित्याशयः, ता विद्याः, संख्यातवान् इयत्तया गणितवान्। अपश्रमत्वेनैवासौ संख्यातुं शक्त इत्यपश्रमपदेन सूचितम्।

अत्र फलोत्प्रेक्षालङ्कारः। रसादयः पूर्ववत्।

"द्वात्रिंशता दन्तमयीभिरन्तः" इत्यादितृतीयसर्गस्थपद्यमप्ये तदपेक्षया सुन्दरतरमित्यवगम्यते ॥४१॥

**বাঙ্গালা**—দময়ন্তীর ওষ্ঠে অন্তর্গতভেদশালী কয়টি বিদ্যা সর্বদাই প্রকাশ পায়, ইহা জগতে জানাইবার জন্যই যেন পরিশ্রমশূন্য ব্রহ্মা কৌতুকী হইয়া, রেখা দ্বারা সেই বিদ্যাগুলির সংখ্যা করিয়াছেন ॥৪১॥

**अन्वयः**—अद्य निशान्ते मया स्वप्ने संभुज्यमाना इयं मधुराधरा अनुभूता; (किन्तु इदानीं) मया एव इत्थम् असीम-लावण्य रदच्छदा कथं वा प्रतिपद्यते ॥४२॥

संभुज्यमानेति। अद्य निशान्ते रात्रिशेषे, मया स्वप्ने, सम्भुज्यमाना सम्भोगविषयीक्रियमाणा, इयं दमयन्ती मधुरो मधुररसयुक्तः अधरः ओष्ठो यस्याः सा तादृशी, अनुभूता भुञ्जनकाले ज्ञाता। किन्तु इदानीं मयैव, इत्थमीव प्रकारेण, असीमं लावण्यं, लवणरसो यत्र स तादृशो रदच्छदः स एवाधरो यस्याः सा तादृशी, कथं वा प्रतिपद्यते ज्ञायते। निशान्तस्वप्नस्य प्रायः सत्यत्वात् तत्र स्वप्ने यादृशमधुराधरत्वेनानुभूता, इदानीं जाग्रदवस्थायामपि तादृशमधुराधरत्वेनैवानुभवितुमुचितत्वे कथमसीमलवणाधरत्वेनानुभूयत इत्याश्चर्य्यमेवेति भावः। आपाते विरोधः, असीमं लावण्यं सौन्दर्य्यविशेषो यत्रेति च तत्समाधानम्।

अतएवात्र विरोधाभासोऽलङ्कारः मधुराधरेति छेकानुप्रासेन संसृज्यते। तथा अधरपदेन प्रक्रम्य रदच्छदपदाभिधानात् पर्य्याय विषयो भग्नप्रक्रमतादोषः। स च "असीमलावण्ययुताधरेयम्" इति पाठेन परिहार्य्यः। रसादयः पूर्ववत् ॥४२॥

**বাঙ্গালা**—আজ রাত্রিশেষে স্বপ্নের মধ্যে আমি ইহার সম্ভোগ করিয়াছি; তখন ইহার ওষ্ঠখানিকে মধুর বলিয়াই অনুভব করিয়াছি; কিন্তু এখন আবার আমিই ইহার সেই ওষ্ঠখানিকে এইরূপ অসীম লাবণ্যযুক্ত (লবণরসযুক্ত, সৌন্দর্য্যবিশেষযুক্ত) বলিয়া অনুভব করিতেছি কেন ॥৪২॥

यदि प्रसादीकुरुते सुधांशोः एषा सहस्रांशमपि स्मितस्य ।
तत् कौमुदीनां कुरुते तमेव निर्मञ्छ्य (१) देवः सफलं स जन्म ॥४३॥
चन्द्राधिकं तन्मुखचन्द्रिकाणां दरायतं तत् किरणाद्घनानाम् ।
पुरःसरस्रस्त-पृषद्द्वितीयं रदावलिद्वन्द्वति बिन्दुवृन्दम् ॥४४॥

---

अन्वयः—एषा स्मितस्य सहस्रांशम् अपि यदि सुधांशोः प्रसादीकुरुते, तत् सः देवः तम् एव निर्मञ्छ्य कौमुदीनां जन्म सफलं कुरुते ॥४३॥

अर्धेनैव पद्येन स्मितं वर्णयति । यदीति । एषा दमयन्ती, स्मितस्य आत्मन ईषद्धास्यस्य, सहस्रांशम् अपि सहस्रभागानामेकभागमपि, यदि सुधांशोश्चन्द्रस्य, प्रसादीकुरुते प्रसाददेयत्वेन ददाति ; तत्तदा, स देवः सुधांशुः, तमेव स्मितस्य सहस्रांशमेव, निर्मञ्छ्य आदरातिरेकेण नीराजितं कृत्वा, कौमुदीनां स्वकीयज्योत्स्नानाम्, जन्म सफलं सार्थकम्, कुरुते ; तन्निर्मञ्छनेन कौमुदीनामुत्कर्षातिरेकलाभादिति भावः ।

अत्र प्रसादीकरणस्य निर्मञ्छनस्य जन्मसाफल्यकरणस्य च असम्बन्धेऽपि तत्तत्सम्बन्धादतिशयोक्तिद्वयं, तस्य चाङ्गाङ्गिभावेन सङ्करः । तथा कुरुते इत्यस्य द्विः पाठात् कथितपदतादोषः, तदित्यस्य यदीत्यनेन सम्बन्धः कवेरभिमतोऽपि न घटत इत्यभवन्मतसम्बन्धतादोषश्च । 'ददाति चेच्चन्द्रमसः प्रसादात्' इति प्रथमचरणपाठेन 'तदा सभाग्यां कुरुते तमेव' इति तृतीयचरणपाठेन च तयोः समाधानं विधेयम् । रसादयः पूर्ववत् ॥४३॥

বাঙ্গালা—ইনি নিজের ঈষৎ হাস্যের সহস্রভাগের এক ভাগও যদি অনুগ্রহ করিয়া চন্দ্রকে দান করেন ; তাহা হইলে, সে চন্দ্র সেই সহস্র ভাগের এক ভাগকেও আরতি করিয়া নিয়া, নিজের জ্যোৎস্নাগুলির জন্ম সার্থক করেন ॥৪৩॥

अन्वयः—तत्किरणात् घनानां चन्द्राधिकं तन्मुखचन्द्रिकाणां दरायतं पुरःसर स्रस्त-पृषद्द्वितीयं बिन्दुवृन्दं रदावलिद्वन्द्वति ॥४४॥

पद्यद्वयेन दन्तपङ्क्तिद्वयं वर्णयति । चन्द्रेति । तस्य चन्द्रस्य किरणात् चन्द्रिकातः, घनानां निबिडानाम्, चन्द्रापेक्षया एतन्मुखचन्द्रस्याधिकोज्ज्वलत्वादिति भावः, चन्द्रादधिकम् उज्ज्वलतायामुत्कृष्टं यत् एतस्या दमयन्त्या मुखं मुखचन्द्रस्तस्य चन्द्रिकाणां किरणानाम् सम्बन्धि, दरायतम् ईषद्विस्तृतम्, पुरःसराणि अग्रगामीनि स्रस्तानि गलितानि यानि पृषन्ति बिन्दवस्तान्येव द्वितीयानि, अधोद्वितीयपङ्क्तिसन्निविष्टानि यस्य तत्तथोक्तम्, बिन्दुवृन्दम् अमृतकणसमूहः, रदावलिद्वन्द्वति दन्तपङ्क्तिद्वयवत् आचरति । तथा च इदं न दन्तपङ्क्तिद्वयम्, अपि तु चन्द्रादप्युत्कृष्टस्य एतन्मुखचन्द्रस्य अधिकामृतपूर्णचन्द्रिकातः अमृतबिन्दुपङ्क्तिद्वयं निपतितम्, तस्य एकापङ्क्तिरवतिष्ठति, अपरा च ईषदायता सती तदूर्ध्वं वर्तत इति सरलार्थः । यथा मेघजलवर्षसमये गृहपटलस्थतृणप्रान्तदेशात् प्रथममेका जलबिन्दुपङ्क्तिः पतति ; परञ्च द्वितीया पतित्वा ईषदायता सती प्रथमपङ्क्तौ लगति ; तद्वदिति भावः ।

अत्रएकत्र प्रकृतदन्तनिषेधेन अमृतबिन्दुस्थापनादपह्नुतिरलङ्कारः, चन्द्रापेक्षया मुखस्याधिक्यात् व्यतिरेकः, द्वन्द्वतीति लुप्तोपमा, छेकानुप्रासश्चेत्येतेषां संसृष्टिः । पूर्वरागो रसः, माधुर्यं गुणः, वैदर्भी च रीतिः ।

"पृषन्ति बिन्दुपृषताः" इत्यमरः ।

रदावलिद्वन्द्वं दन्तद्वयीयुग्ममिव आचरतीति क्विप्, तस्य च लोपे रदावलिद्वन्द्वतीति रूपम् ॥४४॥

---

(१) निर्मञ्छ्य । निर्मथ्य ··· ।

सेयं मम तद्विरहार्त्तिमूर्च्छा-तमीविभातस्य विभाति सन्ध्या ।
महेन्द्रकाष्ठागतरागकर्त्री द्विजैरमीभिः समुपास्यमाना ॥४५॥
राज्ञी द्विजानामिह राजदन्ताः संबिभ्रति श्रोत्रियविभ्रमं यत् ।
उद्वेगरागादिमृजावदाताः चत्वार एते तदवैमि मुक्ताः ॥४६॥

বাঙ্গালা—দময়ন্তীর মুখচন্দ্র, চন্দ্র অপেক্ষা উৎকৃষ্ট; সুতরাং চন্দ্রের কিরণ অপেক্ষাও দময়ন্তীর মুখচন্দ্রের কিরণ ঘন (অধিক অমৃতপূর্ণ); অতএব সেই মুখচন্দ্রের কিরণ হইতে প্রথমে একটি অমৃতবিন্দুর শ্রেণী পতিত হইয়া নীচে রহিয়াছে; পরে আর একটি অমৃতবিন্দুর শ্রেণী পতিত হইয়া ঈর্ষাবশতভাবে তাহার উপরে অবস্থান করিতেছে; সেই অমৃতবিন্দুশ্রেণী দুইটিই দময়ন্তীর দন্তশ্রেণী দুইটীর ন্যায় আচরণ করিতেছে ॥৪৪॥

अन्वयः – सा इयं महेन्द्र-काष्ठा-गत-राग-कर्त्री अमीभिः द्विजैः समुपास्यमाना मम एतद्विरहार्त्ति-मूर्च्छा तमी-विभातस्य सन्ध्या विभाति ॥४५॥

सेति सा इयं दमयन्ती, महेन्द्रस्य देवराजस्य काष्ठा गतः उत्कर्षं प्राप्तो यो रागः अनुरागस्तस्य कर्त्री जनयित्री, अन्यत्र तु महेन्द्रकाष्ठायाम् इन्द्रदिशि पूर्वस्यां दिशीत्यर्थः गतः स्थितो यो रागो रक्तिमा तस्य कर्त्री सम्पादयित्री; तथा अमीभिर्द्विजैर्दन्तैः, अन्यत्र तु ब्राह्मणैः, समुपास्यमाना आश्रीयमाणा आराध्यमाना च; मम एतया दमयन्त्या सह यो विरहो विच्छेदस्तेन या आर्त्तिः पीड़ा तया जनिता या मूर्च्छा मोहप्राप्तिः सैव तमी तमसाकारित्वात् रात्रिस्तस्या विभातस्य प्रभातस्य, सन्ध्या प्रातःसन्ध्यारूपा, विभाति प्रकाशते; अधुना तद्विरहाभावानन्तभवादिति भावः।

अत्र मूर्च्छायां तमीत्वारोपो दमयन्त्याः सन्ध्यात्वारोपे निमित्तमिति परम्परितरूपकमलङ्कारः पदद्वये श्लेष, अनयोरङ्गाङ्गिभावेन सङ्करः। सोऽपि च द्वितीयपादगतच्छेकानुप्रासेन संसृज्यते। परार्द्धं प्राक् पठित्वा समाप्तपुनरात्तादोषः परिहार्य्यः। पूर्वरागो रसः, वाच्यार्थस्य दुरूहत्वादोजो गुणः, गौड़ी च रीतिः।

"रजनी यामिनी तमी" "काष्ठोत्कर्षे स्थितौ दिशि" "दन्तविप्राण्डजा द्विजाः" इत्यमरः ॥४५॥

বাঙ্গালা—ইহার সহিত আমার যে বিচ্ছেদ ছিল, তাহার যন্ত্রণাতে যে মূর্চ্ছা জন্মাইত, সেই মূর্চ্ছারূপ রাত্রির প্রভাত হইয়াছে; ইনি সেই প্রভাতের প্রাতঃসন্ধ্যারূপা হইয়া প্রকাশ পাইতেছেন। কেন না, ইনি দেবরাজ ইন্দ্রের অত্যন্ত অনুরাগ জন্মাইয়াছেন; প্রাতঃসন্ধ্যাও পূর্বদিকে রক্তিমা জন্মাইয়া থাকে; আবার এই দন্তগুলি ইহার সেবা করিতেছে; ওদিকে ব্রাহ্মণেরাও প্রাতঃসন্ধ্যার সেবা করিয়া থাকেন ॥৪৫॥

अन्वयः—इह द्विजानां राज्ञी एते चत्वारः राजदन्ताः यत् श्रोत्रियविभ्रमं संबिभ्रति, तत् उद्वेग-रागादि-मृजावदाताः एते चत्वारः मुक्ताः (इति) अवैमि ॥४६॥

राज्ञीति। इह दृश्यमानायाम्, द्विजानां दन्तानां ब्राह्मणानाञ्च, राज्ञी पङ्क्तौ, एते चत्वारः, राजदन्ताः सम्मुखवर्त्तिनः प्रधानदन्ताः, अन्यत्र तु राजन् ब्राह्मणगौरवेण शोभमानम् अन्तं स्वरूपं येषां ते; यद् यस्मात्, श्रोत्रियस्य वेदविदुब्राह्मणविशेषस्य विभ्रमम् उज्ज्वलत्वरूपं विलासम्, संबिभ्रति सम्यक् धारयन्ति; तस्मात्, उद्वेगरागौ गुवाकचर्व्वणजनितरक्तत्वं रक्तिमम् आदिपदात् चूर्णखदिरादिकृतरागश्च तेषां मृजया दन्तकाष्ठादिना मार्ज्जनेन अवदाताः शुभ्राः; अतएव एते चत्वार एव, मुक्ता मौक्तिककलानि, इति अवैमि समानवर्णत्वविचारात् जानामि। अन्यत्र तु उद्वेगस्य भयादस्य, रागस्य विषयाभिलाषस्य, आदिपदात् अहङ्कारादेश्च मृजया, शोधनावाप्त्या दीक्षयेन

पद्माङ्कसद्मानमवेक्ष्य लक्ष्मीम् एकस्य विष्णोः प्रणयात् सपत्नीम्।
आस्येन्दुमस्या भजते जिताब्जं सरस्वती तद्विजिगीषया किम् ॥४९॥
कण्ठे वसन्ती चतुरा यदस्याः सरस्वती वादयते विपञ्चीम्।
तदेव वाग्भूय मुखे मृगाक्ष्याः श्रोतुः श्रुतौ याति सुधारसत्वम् ॥५०॥

---

दमयन्त्याः, आस्यं मुखं द्विजराजश्चन्द्र इव तस्मात् आस्यं मुखमेव द्विजराजो ब्राह्मणश्रेष्ठस्तस्मात्, मधुरवाक्यप्रवादिनी कामार्थतत्त्वाधिका ब्रह्मार्थतत्त्वाधिका च, सा दमयन्तीवाक्यात्मिका, काचित् अनिर्वचनीया, उपनिषत् रहस्यकथा "एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चन" इत्यादिवेदान्तश्च, किं वा न अधीयते न शिक्ष्यते, अपि तु अधीयत एवेत्यर्थः। यथा भिक्षान्नभोजिना ब्राह्मणेन कस्मादपि ब्राह्मणश्रेष्ठात् ब्रह्मार्थतत्त्वबोधिका अनिर्वचनीया उपनिषदधीयते; तथा आम्रादिफलमुकुलभोजिना कोकिलेन चन्द्रतुल्यात् दमयन्तीमुखात् अनिर्वचनीया कामार्थतत्त्वबोधिका रहस्यकथा अधीयत इति सरलार्थः। एतेन कोकिलकण्ठस्वरादपि दमयन्त्याः कण्ठस्वरो मधुरतरः कामोद्दीपकश्चेति सूचितम्।

अत्र श्लिष्टविशेषणेन काव्ये च कोकिले ब्राह्मणव्यवहारसमारोपात् समासोक्तिः, अर्थापत्तिः, अध्ययनासम्बन्धेऽपि तत्सम्बन्धादतिशयोक्तिः, कोकिलस्वरात् दमयन्तीस्वरस्याधिक्यप्रतिपादनाद् व्यतिरेकश्च, इत्येतेषामङ्गाङ्गिभावेन सङ्करः। रसादयः पूर्ववत्।

"उपनिषत्, वेदान्ते रहस्यधर्मयोरपि" इति हेमचन्द्रः। "भैक्षं भिक्षाकदम्बकम्" इत्यमरः ॥४८॥

বাঙ্গালা—বৃক্ষ হইতে ফলমুকুলাদিভোজী কোকিলপক্ষিগণ, দময়ন্তীর মুখচন্দ্রের নিকট হইতে কামাদ্বৈতবোধিকা অনির্বচনীয় রহস্যকথা কি শিক্ষা করে না? ॥৪৮॥

अन्वयः—सरस्वती एकस्य विष्णोः प्रणयात् सपत्नीं लक्ष्मीं पद्माङ्कसद्मानम् अवेक्ष्य तद्विजिगीषया जिताब्जम् अस्याः आस्येन्दुं किं भजते ॥४९॥

पद्मेति। सरस्वती वाक् तदधिष्ठात्री देवी च, एकस्य विष्णोः, प्रणयात् पतित्वेनावलम्बनाद्धेतोः, सपत्नीं लक्ष्मीम्, पद्मस्य अङ्कः क्रोड एव सद्म गृहं वासस्थानं यस्यास्तां तादृशीम्, अवेक्ष्य दृष्ट्वा, तस्या लक्ष्म्या विजिगीषया तदपेक्षयाप्युत्कृष्टगृहाश्रयणेन विजेतुमिच्छया, जितं सौन्दर्येण पराभूतम् अब्जं पद्मं येन तम्, अस्या दमयन्त्याः, आस्यं मुखम् इन्दुश्चन्द्र इवेति तम्, किम्, भजते वासस्थानत्वेनाश्रयति। अन्याप्यङ्गना सपत्न्या उत्तमं गृहमवलोक्य ततोऽप्युत्तममात्मनो गृहं निर्माय तद्भजते। एतेन सरस्वती विशेषादेव दमयन्तीमुखमाश्रितेति सूचितम्।

अत्र वाच्या क्रियोत्प्रेक्षा, पद्मापेक्षया मुखस्याधिक्यप्रतिपादनाद् व्यतिरेकश्चानयोरङ्गाङ्गिभावेन सङ्करः; सोऽपि च रूपकानुप्राणित उपजायते। पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥४९॥

বাঙ্গালা—উভয়ে এক বিষ্ণুকেই পতিরূপে অবলম্বন করায়, লক্ষ্মীদেবী সরস্বতীর সপত্নী হইয়াছেন এবং লক্ষ্মীদেবী পদ্মের উপরে বাস করেন; ইহা দেখিয়া সরস্বতী, লক্ষ্মীকে জয় করিবার ইচ্ছায় দময়ন্তীর পদ্মবিজয়ী মুখচন্দ্রকে কি আশ্রয় করিয়াছেন? ॥৪৯॥

अन्वयः—चतुरा सरस्वती अस्याः कण्ठे वसन्ती (सती) यत् विपञ्चीं वादयते, तत् एव मृगाक्ष्याः मुखे वाग्भूय श्रोतुः श्रुतौ सुधारसत्वं याति ॥५०॥

कण्ठ इति। चतुरा वीणावादननिपुणा सरस्वती, अस्या दमयन्त्याः, कण्ठे वसन्ती सती, यत् विपञ्चीं वादयति तन्त्रीविशिष्टवीणावादनं कुरुते, तत् विपञ्चीवादनमेव, मृगाक्ष्या हरिणनयनाया अस्या मुखे, वाग्-

विलोकिता स्यान्मुखमुन्नमय्य (१) किं वेधसेयं सुषमासमाप्तौ ।
धृत्युद्भवा यच्चिबुके चकास्ति निम्नं मनागङ्गुलियन्त्रणेव ॥५१॥
प्रियामुखीभूय सुखी सुधांशुः जयत्ययं राहुभयव्ययेन ।
इमां दधाराधरबिम्बलीलां तस्यैव बालं करचक्रवालम् ॥५२॥

---

भूय वाक्यत्वेन परिणता भूत्वा, श्रोतुर्जनस्य, श्रुतौ कर्णे, सुधारसत्वम् अमृततुल्यास्वादविषयत्वम्, याति प्राप्नोति । वीणाध्वनितुल्य एवास्याः कण्ठध्वनिरिति भावः ।

अत्र सरस्वतीकर्तृकवीणावादनस्य तस्य वाग्भवनस्य चासम्बन्धेऽपि तत्सम्बन्धात् ह्यतिशयोक्तिः छेकान्त्यानुप्रासेन संसृज्यते । रसादयः पूर्ववत् ॥५०॥

বাঙ্গালা—বীণাবাদননিপুণা সরস্বতীদেবী ইহার কণ্ঠে অবস্থান করতঃ, যে বীণাবাদন করিতেছেন ; তাহাই ইহার মুখে বাক্য রূপে পরিণত হইয়া, শ্রোতার কর্ণে অমৃতের ন্যায় অনুভূত হইয়া থাকে ।৫০।

अन्वयः—सुषमासमाप्तौ वेधसा मुखम् उन्नमय्य इयं किं विलोकिता स्यात्; यत् मनाक् निम्नं चिबुके धृत्युद्भवा अङ्गुलियन्त्रणा इव चकास्ति ॥५१॥

एतेन चिबुकं वर्णयति । विलोकितेति । सुषमायाः मुखगतपरमशोभायाः समाप्तौ तस्याः निर्माणावसाने सति, वेधसा ब्रह्मणा, मुखम् अस्या एव वदनम्, उन्नमय्य दर्शनार्थमेव किञ्चिदुत्तोल्य, इयं दमयन्ती, किं विलोकिता दृष्टवदना स्यात् । यद् यस्मात्, मनाक् निम्ने ईषदधोदेशे, चिबुके अधरादधोऽङ्गे, धृत्युद्भवा ग्रहण एव धारणोत्पन्ना, अङ्गुलियन्त्रणा निपीडनेव, चकास्ति शोभते ; आमन्मथपात्रवदिति भावः ।

अत्र वाच्ययोः क्रियोत्प्रेक्षयोः सङ्करः । रसादयः पूर्ववत् ॥५१॥

বাঙ্গালা—সৌন্দর্য্যনির্ম্মাণ শেষ হইয়া গেলে পর, বিধাতা ইহার মুখখানিকে তুলিয়া ধরিয়া দেখিয়াছিলেন কি ? যে হেতু কিছু নীচে চিবুকের উপরে, ধরার জন্য তাঁহার অঙ্গুলের টিপই যেন শোভা পাইতেছে ।৫১।

अन्वयः—अयं सुधांशुः प्रियामुखीभूय राहुभयव्ययेन सुखी (सन्) जयति । तस्य एव बालं करचक्रवालम् इमाम् अधरबिम्बलीलां दधार ॥५२॥

इदानीं नवभिः पद्यैः साकल्येन मुखं वर्णयति । प्रियेति । अयं सुधांशुश्चन्द्रः, प्रियायाः दमयन्त्याः मुखीभूय मुखरूपीभूत्वा, राहुभयस्य व्ययेन अभावेन हेतुना, भूतले राहोरागमनासम्भवादिति भावः, सुखी निरुद्वेगः सन्, जयति उत्कर्षेण वर्त्तते । तर्हि कथमोष्ठयोर्लौहित्यमित्याह— तस्य सुधांशोरेव, बालम् उदयकालीनम्, अतएव लोहितवर्णमित्याशयः, करचक्रवालं किरणमण्डलं कर्तृ, इमां दृश्यमानाम्, अधरबिम्बस्य लीलां विलासम्, दधार धारयति स्म ।

अत्र प्रियामुखीभूयेति निरङ्गं केवलरूपकम्, करचक्रवालस्य अधरबिम्बलीलाधारणासम्बन्धेऽपि तत्सम्बन्धादतिशयोक्तिः, प्रथमपादे वृत्त्यनुप्रासः, द्वितीयार्द्धे च छेकानुप्रास इत्येतेषां संसृष्टिः । पूर्वरागो रसः, मधुररचनावशान्माधुर्य्यं गुणः, वैदर्भी च रीतिः ।

"चक्रवालन्तु मण्डलम्" इत्यमरः ॥५२॥

---

(१) विलोकितास्या मुखमुन्नमय्य

अस्या मुखस्यास्तु न पूर्णिमास्यं (१) पूर्णस्य जित्वा महिमा हिमांशुम्।
भ्रूलच्छलक्ष्मं दधदर्धमिन्दुः भालस्तृतीयः खलु यस्य भागः ॥५३॥
व्यधत्त धाता मुखपद्ममस्याः (२) सम्राजमम्भोजकुलेऽखिलेऽपि।
सरोजराजौ भजतोऽदसीयां नेत्राभिधौ यावत एव सेवाम् ॥५४॥

বাঙ্গালা—এই চন্দ্র, প্রিয়তমার মুখরূপে পরিণত হইয়া, রাহুর ভয় না থাকায় নিরুদ্বেগ হইয়া, সুখী হইতেছেন। সেই চন্দ্রেরই নবোদিত কিরণসমূহ এই ওষ্ঠবিম্বের লীলা ধারণ করিয়াছে ॥৫২॥

अन्वयः—पूर्णिमास्यं हिमांशुं जित्वा पूर्णस्य अस्याः मुखस्य महिमा न अस्तु? खलु यस्य तृतीयः भागः भालः भ्रूलच्छलक्ष्मं दधत् अर्धम् इन्दुः ॥५३॥

अस्या इति। पूर्णिमायास्तिथेः आस्यं मुखमिव मुखस्वरूपं वा। अतएव तस्य जयी महिम्नो हेतुरेवेति भावः। हिमांशुं चन्द्रम्, जित्वा सौन्दर्य्यबलेनेत्याशयः, पूर्णस्य पूर्णगर्वस्य, अस्या दमयन्त्या मुखस्य, महिमा माहात्म्यम् अधिकपरिमाणत्वञ्च न अस्तु काकुवशात् किं भवतु अपि तु अस्त्येवेत्यर्थः। ननु चन्द्रजयेन माहात्म्यं यद्यपि सम्भवति, तथापि चन्द्रान्मुखस्याधिकपरिमाणत्वन्तु कथमित्याह— खलु यस्मात्, यस्य मुखस्य, तृतीयो भागः अयाणां भागानां मध्ये एकभागभूतः, भालो ललाटदेशः, भ्रुवावेव लाञ्छनं भ्रुवोरापेक्षिकालत्वात् कलङ्कखण्डम्, दधत् धारयन्, अर्धमंशभूतः, इन्दुश्चन्द्रस्वरूपः। तथा च यस्य तृतीयो भागो यस्मादर्धं भवति, स तस्मादधिकपरिमाण एव भवतीति भावः। व्याख्यान्तराणि तु सुधीभिश्चिन्तनीयानि।

अत्र पूर्णिमास्यमिति साधकबाधकप्रमाणाभावादुपमारूपकयोः सन्देहसङ्करः, जयपूर्वकपूर्णत्वासम्बन्धेऽपि तत्सम्बन्धातिशयोक्तिः, माहात्म्याधिपरिमाणत्वयोर्भेदेऽपि महिमशब्देनाभेदाध्यवसायादपराप्यतिशयोक्तिः, परार्द्धे निरङ्गं केवलरूपकम्, इत्यनुप्रासच्छेकानुप्रासयोरेषां संसृष्टिः। पूर्वरागो रसः, अन्यार्थस्य दुरूहत्वा-दोजो गुणः, गौडी च रीतिः ॥५३॥

বাঙ্গালা—পূর্ণিমাতিথির মুখস্বরূপ চন্দ্রকে জয় করিয়া ইহার মুখখানি নিজের গর্ব পূর্ণ করিয়াছে; সুতরাং ইহার মুখের কি মহিমা (মাহাত্ম্য এবং বিশালত্ব) না হইতে পারে? কারণ যে মুখের তিন ভাগের এক ভাগ ললাটদেশই অর্দ্ধচন্দ্রস্বরূপ; সেই অর্দ্ধ-চন্দ্র আবার ভ্রূযুগলরূপ নিজের কলঙ্কখণ্ড ধারণ করিতেছে ॥৫৩॥

अन्वयः—धाता अस्याः मुखपद्मम् अखिले अपि अम्भोजकुले सम्राजं व्यधत्त। अतः एव नेत्राभि-धौ सरोजराजौ अदसीयां सेवां भजतः ॥५४॥

व्यधत्तेति। धाता ब्रह्मा, अस्या दमयन्त्याः, मुखपद्मम्, अखिलेऽपि सर्वस्मिन्नपि, अम्भोजकुले पद्मसमूहे, सम्राजं सम्राट्स्वरूपम्, व्यधत्त विहितवान्। अतएव इतोः, नेत्राभिधौ नयननामकौ नयनस्वरूपाविमौ, सरोजराजौ पद्मानां राजानौ, अदसीयां दमयन्तीमुखपद्मस्वरूपसम्राट्सम्बन्धिनीम्, सेवां सर्वदा सन्निधानेनानु-गमनम्, भजतः कुरुतः। अन्योऽपि सम्राट् राजभिः सेव्यते। दमयन्त्या नयनयुगलमपि साधारणपद्मादुत्कृष्टम्, मुखन्तु अत्युत्कृष्टमेवेति भावः।

अत्र पूर्वार्द्धे परार्द्धे च निरङ्गं केवलरूपकम्, इत्यनुप्रासच्छेकानुप्रासयोरेषां संसृष्टिः। पूर्वरागो रसः, प्रसादो गुणः; वैदर्भी च रीतिः ॥५४॥

---

(१) ··· पूर्णमास्यं पौर्णमासम्। (२) ··· वदनाब्जमस्याः।

दिवारजन्यौ रविसोमभीते चन्द्राम्बुजे निक्षिपतः स्वलक्ष्मीम् ।
आस्ये यदास्या न तदा तयोः श्रीः एकश्रियैवेदं तु कदा न कान्तम् ॥५५॥
अस्या मुखश्रीप्रतिबिम्बमेव जलाच्च तातान्मुकुराच्च मित्रात् ।
अभ्यर्थ्य धत्तः खलु पद्मचन्द्रौ विभूषणं याचितकं कदाचित् ॥५६॥

---

বাঙ্গালা—বিধাতা ইহার মুখপদ্মখানিকে সমস্ত পদ্মসমূহেরই সম্রাট্ করিয়াছেন। এই জন্যই নয়নযুগলস্বরূপ পদ্মের রাজা দুইটী, ঐ মুখপদ্মসম্রাটের সেবা করিতেছে ॥৫৪॥

अन्वयः—दिवा-रजन्योः रवि-सोम-भीते चन्द्राम्बुजे यदा अस्याः आस्ये स्वलक्ष्मीं निक्षिपतः तदा तयोः श्रीः न (तिष्ठति) ; इदं तु एकश्रिया कदा न कान्तं (भवति) ॥५५॥

दिवेति। दिवारजन्योर्दिनरात्र्योः, रविसोमभीते यथाक्रमं सूर्यचन्द्रभीते, चन्द्राम्बुजे चन्द्रपद्मे, दिवसे स्वाच्छादकात् सूर्याद्भीतश्चन्द्रः रात्रौ च स्वसङ्कोचकाच्चन्द्राद्भीतं पद्मम् एते द्वे इत्यर्थः, यदा अस्या दमयन्त्याः, आस्ये मुखे, स्वलक्ष्मीं निजनिजकान्तिं धनसम्पदञ्च, निक्षिपतः स्थापयतः पुनर्ग्रहणाय न्यासीकुरुतश्च ; तदा तयोश्चन्द्राम्बुजयोः, श्रीः कान्तिः, न तिष्ठतीति शेषः, तन्निक्षेपादेवेति भावः। इदन्तु दमयन्त्या मुखं पुनः, एकश्रिया तयोरेकतरस्य कान्त्या दिवसे चन्द्रनिक्षिप्तश्रीभिया रात्रौ च पद्मनिक्षिप्तश्रीभयेत्यर्थः, कदा कस्मिन् काले दिवसे रात्रौ वेति तात्पर्य्यम्, न कान्तं न कान्तिमत् भवति ; अपि तु सर्वदैव एकतरकान्त्या कान्तिमद्भवतीत्यर्थः। दिवसे सूर्य्यकिरणेनाच्छादितस्य चन्द्रस्य रात्रौ चन्द्रकिरणेन सङ्कोचितस्य पद्मस्य च कान्तिर्न तिष्ठति ; किन्तु मुखस्य कान्तिः सर्वदैव समाना तिष्ठतीत्यमुक्तम्। अपरोऽपि धनी धनापहारकात् कुतश्चिद्भीतः सन् यदा कस्मिंश्चिद्विश्वस्ते जने धनसम्पदं न्यासीकरोति, तदा तस्य गृहे सा धनसम्पन्न तिष्ठति।

अत्रएवात्र समासोक्तिरलङ्कारः, पूर्वार्द्धे यथासंख्यम्, निक्षेपासम्बन्धेऽपि तत्सम्बन्धादतिशयोक्तिः, चन्द्राम्बु-जापेक्षया मुखस्याधिक्यप्रतिपादनाद्व्यतिरेकः, अर्थापत्तिश्चैत्येतेषामङ्गाङ्गिभावेन सङ्करः ; सोऽपि पुनश्छेकानुप्रा-सेन संसृज्यते। सोमपदेन प्रक्रम्य चन्द्रपदाभिधानाद्भग्नप्रक्रमतादोषः ; रविचन्द्रभीते इति पाठेन वाऽसौ समाधेयः। रसादयः पूर्ववत्।

अस्यानुरूपः श्लोको यथा कुमारसम्भवे—

"चन्द्रं गता पद्मगुणान्न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्याम्।
उमामुखन्तु प्रतिपद्य लोला द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥५५॥

বাঙ্গালা—দিনের বেলা সূর্য্যের ভয়ে ভীত চন্দ্র এবং রাত্রির বেলা চন্দ্রের ভয়ে ভীত পদ্ম ইহারা যখন আপন আপন শোভাকে ইহার মুখে সংস্থাপন করে ; তখন তাহাদের সে শোভা আর থাকে না। কিন্তু এই মুখখানি উহাদের একতরের শোভা দ্বারা কোন্ সময়ে শোভিত না হয় ? ॥৫৫॥

अन्वयः—पद्मचन्द्रौ खलु तातात् जलात् मित्रात् मुकुरात् अस्याः मुखश्रीप्रतिबिम्बम् अभ्यर्थ्य एव याचितकं विभूषणं कदाचित् धत्तः ॥५६॥

अस्या इति। खल्विति वाक्यालङ्कारे। पद्मचन्द्रौ यथासंख्येन तातात् जलात्, मित्रात् मुकुराच्च पद्म-स्यैव तत् स्वजनकाज्जलात्, चन्द्रश्च स्वच्छत्वसाम्येन मित्रभूताद्दर्पणादित्यर्थः, अस्या दमयन्त्याः, मुखश्रियः प्रतिबिम्बं जले पतितं दर्पणे पतितञ्चेत्याशयः, अभ्यर्थ्यैव 'हे जनक जल ! हे मित्र दर्पण ! त्वयि पतितं दमयन्त्या मुखश्रियः प्रतिबिम्बं मह्यं कियन्तं कालं देहि' इति याचित्वैव, याचितकं याच्ञयाप्राप्तम्, विभूषणं

**अर्काय पत्ये खलु तिष्ठमाना भृङ्गैर्मितामक्षिभिरम्बुं**
**भैमीमुखस्य श्रियमम्बुजिन्यः याचन्ति विस्तारितपद्महस्ताः ॥५७॥**
**अस्या मुखेनैव विजित्य नित्यस्पर्द्धी मिलत्कुङ्कुमरोषभासा ।**
**प्रसह्य चन्द्रः खलु नह्यमानः स्यादेव तिष्ठत्परिवेषपाशः ॥५८॥**

---

तत्प्रतिबिम्बरूपमलङ्कारम्, कदाचित् पद्मं दिवसे चन्द्रश्च रात्रावित्यर्थः, धत्तो धारयतः । अतएव च तौ द्विज-राजीयं याञ्चां स्वातिशयं श्रीमिते इत्यभिप्रायः । अन्योऽपि तातान्मित्राच्च याचित्वा कदाचिदलङ्कारं दधाति ।

अतएवात्रापि समासोक्तिरलङ्कारः, यथासंख्यम्, ताद्रूप्ययाञ्चापूर्वकालङ्कारधारणसम्बन्धेऽपि तत्सम्बन्धादतिशयोक्ति-र्येत्येषामङ्गाङ्गिभावेन सङ्करः । रसादयः पूर्ववत् ।

"याञ्चाप्राप्तं याचितकम्" इत्यमरः ॥५६॥

**বাঙ্গালা**—পদ্ম নিজের জনক জলের নিকট হইতে, আর চন্দ্র নিজের মিত্র দর্পণের নিকট হইতে, দময়ন্তীর মুখকান্তির প্রতিবিম্ব প্রার্থনা করিয়া নিয়াই কোন কোন সময়ে যাচ্ঞালব্ধ অলঙ্কারস্বরূপে তাহা ধারণ করিয়া থাকেন ।৫৬।

**अन्वयः**—पत्ये अर्काय तिष्ठमानाः अम्बुजिन्यः विस्तारित-पद्म-हस्ताः (सत्यः) अम्बुकेलौ भृङ्गैः अक्षिभिः मितां भैमीमुखस्य श्रियं याचन्ति खलु ॥५७॥

अर्कायेति । पत्ये स्वामिने, अर्काय सूर्य्याय, तिष्ठमानास्तथावस्थानेन निजाभिप्रायं प्रकाशयन्त्यः, अम्बु-जिन्यः पद्मलताः पद्मिनीरूपाः स्त्रीविशेषाश्च, विस्तारिताः याचनार्थं प्रसारिताः पद्मान्येव पद्मानीव च हस्ता याभि-स्तास्ताद्दृश्यः सत्यः, अम्बुकेलौ भैम्या एव स्वसन्निधाने जलविहारसमये, भृङ्गैर्भ्रमरैः तत्स्वरूपैरित्यर्थः, मिताम् अवगतां दृष्टामिति तात्पर्य्यम्, अतएव भैमीमुखश्रियः स्पृहणीयतेति भावः, भैम्या दमयन्त्या मुखस्य श्रियं शोभाम्, खलु निश्चितम्, याचन्ति 'स्वामिन् सूर्य्य ! मह्यं भैमीमुखश्रियं देहि, तेन चाहमितोऽपि सौन्दर्य्या-धिक्येन प्रथिता भवामि' इत्थं सूर्य्यमेव प्रार्थयन्ति । अन्या अपि अन्यत्र दृष्टमलङ्कारादिकं विस्तारितपद्महस्ता सत्यः पतिं प्रार्थयन्ति ।

अतएवात्र कार्य्येणाम्बुजिनीषु स्त्रीविशेषव्यवहारसमारोपात् समासोक्तिः, भृङ्गैरक्षिभिरिति व्यस्तं निरङ्गं केवलरूपकम्, खलुशब्दस्य ध्रुवादिशब्दवदुत्प्रेक्षाप्रतिपादकत्वाद्वाच्या क्रियोत्प्रेक्षा चेत्येतेषामङ्गाङ्गिभावेन सङ्करः । तेन च पद्मापेक्षया भैमीमुखस्याधिक्यरूपो व्यतिरेको व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः । चतुर्थ-पादं तृतीयस्थाने पठित्वा समाप्तपुनरात्ततादोषः परिहार्य्यः ; पूर्व्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ।

अर्काय पत्य इति "श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः" इति सम्प्रदानत्वाच्चतुर्थी । अतएव तिष्ठमाना इति "प्रकाशनस्थेयाख्ययोश्च" इति स्थादित्वादात्मनेपदितया शानच् ॥५७॥

**বাঙ্গালা**—ইনি (দময়ন্তী) যখন জলকেলি করেন, তখন পদ্মিনী সকল ভ্রমররূপ নয়ন দ্বারা ইহার মুখশোভা দেখিয়া, পতি সূর্য্যকে নিজেদের অভিপ্রায় জানাইতে থাকিয়া, পদ্মরূপ হাতগুলিকে প্রসারিত করিয়া, সূর্য্যের নিকটই যেন ইহার (দময়ন্তীর) মুখশোভা প্রার্থনা করিতে থাকে ॥৫৭॥

**अन्वयः**—नित्यस्पर्द्धी चन्द्रः मिलत्कुङ्कुमरोषभासा अस्या मुखेन एव विजित्य प्रसह्य नह्यमानः (सन्) तिष्ठत्परिवेषपाशः स्यात् एव खलु ॥५८॥

अस्या इति । नित्यस्पर्द्धी अस्या मुखेन सहैव सर्व्वदा सौन्दर्य्यस्पर्द्धाकारी चन्द्रः, मिलन्ती शोभार्थं लगन्ती कुङ्कुममिव रोषभाः क्रोधनिबन्धनरक्तत्युतिर्यस्य तेन, अस्या दमयन्त्याः, मुखेनैव कर्त्रा, विजित्य, प्रसह्य

विधोर्विधिर्विम्बशतानि लोपं लोपं कुहूरात्रिषु मासि मासि ।
अभङ्गुरश्रीकममुं किमस्याः मुखेन्दुमस्थापयदेकशेषम् ॥५९॥

कपोलपत्रान्मकरात् सकेतुः भ्रूभ्यां जिगीषुर्धनुषा जगन्ति ।
इहावलम्ब्यास्ति रतिं मनोभूः रज्यद्वयस्यो मधुनाधरीयम् ॥६०॥

बलेन, मज्जमानो बध्यमानः सन्, अतएव तिष्ठन् परिवेशः परिधिरिव पाशसाधनरज्जुर्यस्य स तादृशः,' खादिव अपीव, खलु निश्चितम् ; तादृशपरिवेशस्य प्रायेणैव दर्शनादिति भावः । अन्योऽपि बलवान् आत्मना सह स्पर्द्धाकारिणं दुर्बलं रोषाकृष्टमुखो विजित्य बलेन बध्नाति, बन्धनरज्जुश्च तस्य समन्तात्तिष्ठति ।

अतएवात्रापि पूर्ववदेव समासोक्तिः, मिलदित्यादौ तिष्ठदित्यादौ च रूपकम्, वाच्य क्रियोत्प्रेक्षा च एतेषां तेषां सङ्करस्य च्छेकानुप्रासेन संसृष्टिः । रसाद्यश्च पूर्ववत् ॥५८॥

বাঙ্গালা—চন্দ্র সর্বদাই দময়ন্তীর মুখের সঙ্গে সৌন্দর্য্যের স্পর্দ্ধা করেন ; তাই দময়ন্তীর মুখই ক্রোধে কুঙ্কুমরূপ রক্তবর্ণ ধারণ করিয়া, জয় করিয়া, বলপূর্বক সেই চন্দ্রকে বন্ধন করে ; সেই জন্যই যেন চন্দ্রের চতুর্দিক পরিবেশরূপ বন্ধনরজ্জু বিদ্যমান থাকে ॥৫৮॥

अन्वयः—विधिः मासि मासि कुहूरात्रिषु विधोः बिम्बशतानि लोपं लोपम् अभङ्गुरश्रीकम् अमुम् अस्याः मुखेन्दुम् एकशेषं किम् अस्थापयत् ॥५९॥

विधोरिति । विधिर्ब्रह्मा, मासि मासि प्रत्येकं मासे, कुहूरात्रिषु अमावस्यारजनीषु, विधोश्चन्द्रस्य, बिम्बशतानि मण्डलसमूहान्, लोपं लोपं क्षयिष्णुत्वात् विलुप्य विलुप्य, अभङ्गुरा अक्षयशीला श्रीः शोभा यस्य तं तादृशम्, अमुं दृश्यमानम्, अस्या दमयन्त्याः, मुखेन्दुं मुखचन्द्रम्, एकश्चासौ शेषोऽवशिष्टश्चेति तम् अद्वितीयमित्यर्थः, किम् अस्थापयत् स्थापितवान्, अभङ्गुरश्रीकत्वात् आह्लादनादिकचन्द्रकार्य्यकारित्वाच्चेति भावः ।

अत्र वाच्या क्रियोत्प्रेक्षालङ्कारः, चन्द्रापेक्षया दमयन्तीमुखस्याधिक्यप्रतिपादनाद्व्यतिरेकश्चानयोरङ्गाङ्गिभावेन सङ्करस्य च्छेकानुप्रासेन संसृष्टिः । पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ।

लोपं लोपमिति लुपधातोः "णमुल् चाभीक्ष्ण्ये द्वित्वं पदम्" इति णमुल् द्विर्भावश्च ॥५९॥

বাঙ্গালা—বিধাতা প্রত্যেক মাসে অমাবস্যাতে চন্দ্রমণ্ডলগুলিকে লোপ করিয়া করিয়া, স্থায়ি-শোভাশালী দময়ন্তীর এই মুখচন্দ্র খানিকে একমাত্র অবশিষ্ট রাখিয়াছেন কি ? ॥৫৯॥

अन्वयः—कपोलपत्रात् मकरात् सकेतुः, भ्रूभ्यां धनुषा जगन्ति जिगीषुः, आधरीयेण मधुना रज्यद्वयस्यः मनोभूः रतिम् अवलम्ब्य इह अस्ति ॥६०॥

कपोलेति । कपोलयोर्गण्डयोर्यत् पत्रं पत्रावलीचिह्नं तस्मात् तत्स्वरूपादित्यर्थः, मकरात् तदाख्यजलजन्तुविशेषात्, सकेतुः सध्वजः, गण्डदेशस्थितपत्रावलीचिह्नात्मकमकरध्वजयुक्त इत्यर्थः, कामस्य मकरध्वजत्वादिति भावः ; भ्रूभ्यां भ्रूयुगलरूपेण धनुषा, जगन्ति त्रिभुवनानि, जिगीषुर्जेतुमिच्छुः, तथा आधरीयेण अधरवर्त्तिना, मधुना सुरसेन वसन्तेन च, रज्यन् सानुरागीभवन् रक्तवर्णीभवंश्च वयस्यः सखा यस्य स तादृशः, मनोभूः कामः, रतिं तदाख्यामनुरागं तत्पत्नीं निजभार्य्यां च, अवलम्ब्य आश्रित्य सहचरीकृत्य, इह दमयन्तीमुखे, अस्ति तिष्ठति । अतीवोद्दीपकत्वादत्र सपरिवार एव कामो वसतीत्यनुमीयत इति भावः ।

अत्र अनुराग-रतिदेव्योः सुरसवसन्तयोश्च भेदेऽपि रतिमधुशब्दयोः श्लेषेण तयोरभेदाध्यवसायादतिशयोक्तिद्वयम्, भ्रूभ्यां धनुषेति व्यस्तं निरङ्गं केवलरूपकञ्च, तेषामङ्गाङ्गिभावेन सङ्करः । रसादयः पूर्ववत् ॥६०॥

वियोगबाष्पाञ्चितनेत्रपद्मच्छद्मार्पितोत्सर्गपयःप्रसूनौ ।
कर्णौ किमस्या रतितत्पतिभ्यां निवेद्यपूपौ विधिशिल्पमीदृक् ॥६१॥
इहाविशद् येन पथातिवक्रः शास्त्रौघनिःस्यन्दरसप्रवाहः (१) ।
सोऽस्याः श्रवः-पत्रयुगी प्रणालीरेखेव (२) धावत्यभिकर्णकूपम् ॥६२॥

বাঙ্গালা—কামদেব রতিদেবীকে নিয়া ইঁহার এই মুখে অবস্থান করিতেছেন; দুই গালের উপরে যে গোঁফানো আছে, তাহাই মকর এবং তাহাই ঐ কামদেবের ধ্বজ; ভ্রূযুগলরূপ ধনু দ্বারা উনি ত্রিভুবন জয় করিবার ইচ্ছা করিতেছেন; আর ওষ্ঠাগত মধুই (মধুর ও বসন্ত) উঁহার অনুরক্ত সখা ॥৬০॥

অন্বয়ঃ — वियोग बाष्पाञ्चित-नेत्र पद्म-छद्मार्पितोत्सर्ग-पयः प्रसूनौ अस्याः कर्णौ रति-तत्पतिभ्यां निवेद्यपूपौ ईदृक् किं विधिशिल्पम् ॥६१॥

इदानीं पञ्चभिः पद्यैः कर्णौ वर्णयति । वियोगेति । वियोगबाष्पैर्विरहदुःखजनिताश्रुभिः अञ्चिते आप्लुते नेत्रे अस्या एव अश्रुणी पद्मे इव तयोश्छद्मना छलेन अर्पिते निक्षिप्ते उत्सर्गपयःप्रसूने उत्सर्गजलपुष्पे ययोस्तौ, अस्या दमयन्त्याः, कर्णौ, रतिः कामपत्नी तत्पतिः कामश्च ताभ्यां तयोरुद्देशे इत्यर्थः, निवेद्यपूपौ निवेदनीयपिष्टकद्वयम्, ईदृक् किं विधेः शिल्पं कार्य्यम् । तथा च "अर्चितमर्चिताय दद्यात्" इति शास्त्रात् देवनिवेद्यं वस्तु पूर्वं जलेन पुष्पेण वा अभ्यर्च्य पश्चात् जलेन पुष्पेण वा तदुत्सृजति । एवञ्च दमयन्त्याः कर्णयुगलं रतिकामयोरुद्देशे निवेद्यपूपद्वयम्, वियोगबाष्पजलञ्च तदभ्यर्च्चनजलम्; नयनपद्मयुगलञ्च तदुत्सर्गपुष्पद्वयम् । पिष्टकविशेषाकारं कर्णयुगलं नितरां कामोद्दीपकमिति भावः ।

अत्र नेत्रपद्मेति लुप्तोपमैव न तु रूपकम् अपह्नुतौ प्रसूने पद्मात्मत्वानुपपत्तेः, अश्रुनेत्रयोः प्रतिषेधेन जल-पुष्पस्थापनादपह्नुतिः, बाष्पा क्रियोत्प्रेक्षा चेत्येतेषामङ्गाङ्गिभावेन सङ्करस्तेन कामप्राधान्येन संसृज्यते । पूर्वरागो रसः, समासबाहुल्यात् ओजो गुणः, गौडी च रीतिः ।

"पूपोऽपूपः पिष्टकः स्यात्" इत्यमरः ॥६१॥

বাঙ্গালা—বিধাতা দময়ন্তীর কাণ দুই খানিকে কি রতিদেবী ও কামদেবের উদ্দেশে নিবেদনীয় দুই খানি পিঠে করিয়া নির্ম্মাণ করিয়াছেন? যেহেতু, বিরহের অশ্রুজল এবং পদ্মের মত নয়নযুগল এই দুইটীর ছলে উঁহার নিকটে উৎসর্গের জল এবং উৎসর্গের ফুল সমর্পণ করিয়া রাখিয়াছেন ॥৬১॥

অন্বয়ঃ—अतिवक्रः शास्त्रौघनिस्यन्दरसप्रवाहः येन पथा इह अविशत्, सः अस्याः श्रवःपत्रयुगी प्रणाली रेखा इव अभिकर्णकूपं धावति ॥६२॥

इहेति । अतिवक्रो दुरूहत्वादतीवदुर्बोधः अकृजुश्च, शास्त्रौघात् शिल्पकलादिशास्त्रसमूहात् निस्यन्दो निर्गतः रसप्रवाहः स्वादवान् स्र्वरविषयपरम्परैवार्थः द्रवपदार्थप्रवाहश्च, येन पथा, इह दमयन्त्याः कर्णकूपे, अविशत् प्रविष्टवान्, स पन्थाः, अस्या दमयन्त्याः, श्रवःपत्रयुगी कर्णपत्रद्वयाकारा, प्रणाल्याः जलनिःसरणमार्गस्य रेखेव, अभिकर्णकूपं कर्णकूपद्वयं लक्ष्यीकृत्य, धावति गच्छति । न खल्वसौ कर्णविवरपर्य्यन्तगामिनी शष्कुलीपत्ररेखाकारा रेखा; अपितु कर्णकूपे शास्त्ररसप्रवाहप्रवेशप्रणालीति भावः ।

अतएवात्र अपह्नुतिरलङ्कारः श्रौतोपमया सङ्कीर्य्यते । पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥६२॥

---

(१)···सुधाप्रवाहः । (२)···रेखेव···न

अस्या यदष्टादश संविभज्य विद्याः श्रुती दध्नतुरर्धमर्धम् ।
कर्णान्तरुत्कीर्णगभीररेखः किं तस्य संख्यैव न वा नवाङ्कः ॥६३॥
मन्येऽमुना कर्णलतामयेन पाशद्वयेन च्छिदुरेतरेण ।
एकाकिपाशं वरुणं विजिग्येऽनङ्गीकृतायासततौ रतीशः ॥६४॥
आस्ये च तासत्र चतुर्भुजस्य जातस्तदर्धोचितः स्मरोऽपि ।
तथापयोः कर्णलते भ्रुवोर्ज्ये (१) वंशत्वगंशौ चिपिटे किमस्याः ॥६५॥

---

বাঙ্গালা—শাস্ত্রসমূহ হইতে নির্গত অত্যুৎকৃষ্ট রসপ্রবাহ যে পথে এই কর্ণবিবরে প্রবেশ করিয়াছিল; সেই পথ, ইঁহার কর্ণযুগলের পত্ররচনা দুইটীর উপরে জলনির্গমের পথের ন্যায় কর্ণবিবরের দিকে ধাবিত হইয়াছে ॥৬২॥

অন্বয়ঃ—অস্যাঃ শ্রুতী অষ্টাদশবিদ্যাঃ সংবিভজ্য অর্ধম্ অর্ধম্ যত্ দধ্নতুঃ; কর্ণান্তরুৎকীর্ণ-গভীর-রেখঃ নবাঙ্কঃ তস্য সংখ্যা এব কিং ন বা ॥৬৩॥

অস্যা ইতি। অস্যা দময়ন্ত্যাঃ, শ্রুতী কর্ণযুগলম্, অষ্টাদশ বিদ্যাঃ, সংবিভজ্য ভাগদ্বয়েন বিভক্তীকৃত্য, অর্ধমর্ধং যত্ দধ্নতুঃ প্রত্যেককর্ণঃ নবসংখ্যা নবসংখ্যাঃ কৃত্বা দধারয়ামাসিত্যর্থঃ, কর্ণান্তঃ কর্ণযোরভ্যন্তরে উৎকীর্ণা বিধাত্রৈব খোদিতা গভীরা রেখা যস্য স তথোক্তঃ, নবাঙ্কো নবসংখ্যাবোধকোঽঙ্কঃ, তস্য অর্ধাংশধারণস্য, সংখ্যা এব কিং ন বা, অপিতু সংখ্যৈবেত্যর্থঃ; বিধাত্রা কৃতেতি শেষঃ।

অত্র স্বাভাবিকগভীররেখায়াং নবসংখ্যাঙ্কত্বসম্ভাবনাকরণাত্ গুণোৎপ্রেক্ষা অলঙ্কারস্তচ্ছকানুপ্রাসেন সংসৃজ্যতে। রসাদয়ঃ পূর্ববত্ ॥৬৩॥

বাঙ্গালা—দময়ন্তীর কর্ণযুগল, আঠারটী বিদ্যাকে সমান ভাগে বিভক্ত করিয়া প্রত্যেকে এক একটু অর্দ্ধ যে ধারণ করিয়াছে; বিধাতা কাণের ভিতরে গভীর রেখা খোদিত করিয়া, নয়ের অঙ্ক লিখিয়া, কি তাহারই সংখ্যা করেন নাই? ॥৬৩॥

অন্বয়ঃ—অনঙ্গীকৃতায়াসততিঃ রতীশঃ অমুনা কর্ণলতাময়েন ছিদুরেতরেণ পাশদ্বয়েন একাকিপাশং বরুণং বিজিগ্যে (ইতি) মন্যে ॥৬৪॥

মন্য ইতি। অনঙ্গীকৃতা অনবরতযুদ্ধকরণেনাপি মহাবীরত্বাদস্বীকৃতা আয়াসততিঃ পরিশ্রমপরম্পরা যেন স তথোক্তঃ, রতীশঃ কামঃ, অমুনা দৃশ্যমানেন, কর্ণলতাময়েন কর্ণবল্লীস্বরূপেণ, ছিদুরেতরেণ আচ্ছাদনশীলেন সুদৃঢ়েনেত্যর্থঃ, পাশদ্বয়েন বন্ধনসাধনাস্ত্রদ্বয়েন করণেন, একাকী অস্ত্রান্তররূপসহায়শূন্যঃ পাশো যস্য তম্, বরুণং দেবম্, বিজিগ্যে বিজিতবান্, ইতি মন্যে; বরুণস্য কামাধীনত্বাদর্শনাত্ পাশদ্বয়শালিনা একমাত্রপাশশালিনো জেতুং শক্যত্বাদিতি ভাবঃ।

অত্র কর্ণলতাময়েনেতি প্রস্তুতাপহ্নবেন পাশদ্বয়স্যাপন্নাদপহ্নুতিরলঙ্কারঃ বাচ্যা ক্রিয়োৎপ্রেক্ষা আনয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ। পূর্বরাগো রসঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ।

ছিদুরেতি "বিদিভিদিছিদেঃ কুরচ্" ইতি কুরপ্রত্যয়ঃ। বিজিগ্যে ইতি "বিপরাভ্যাং জেঃ" ইতি তঙাদিত্বাদাত্মনেপদম্ ॥৬৪॥

বাঙ্গালা—পরিশ্রমশূন্য কামদেব এই কর্ণযুগলরূপ সুদৃঢ় পাশযুগল দ্বারা একমাত্রপাশধারী বরুণকে জয় করিয়াছেন ইহা আমি মনে করি ॥৬৪॥

---

(১)…ভ্রুবোর্জ্যে।

ग्रीवाद्भुतैवावटुशोभितापि प्रसाधिता माणवकेन सेयम्।
आलिङ्गितामप्यवलम्बमाना सरूपताभागखिलोर्द्ध्वकाया (१) ॥६६॥

अन्वयः—तातस्य चतुर्भुजस्य आत्मा एव स्मरः अपि चतुर्दोः (सन्) जातः उचितः। भ्रुवौ तच्चापयोः चिपिटे अस्याः कर्णलते वंशत्वगंशौ ज्ये किम् ॥६५॥

आत्मेति। तातस्य पितुः, चतुर्भुजस्य विष्णोः, आत्मा स्वरूपमेव, "आत्मा वै जायते पुत्रः" इति श्रुतेः "आत्मच्छायावद् सुतम्" इति श्रुतेश्चेति भावः, स्मरः कामोऽपि चत्वारो दोषो बाहवो यस्य स तादृश एव सन्, जातः उत्पन्नः, उचितो युक्तः। अथ तर्हि चतुर्भुजस्य कामस्य द्वे धनुषी द्वौ च तद्गुणौ युक्तौ; तौ च तस्य क्व स्यातां भ्रुवोर्भ्रुयुगलस्वरूपतोः, तस्य चतुर्भुजस्य कामस्य चापयोर्द्वयोर्धनुषोः, चिपिटे सङ्कीर्णतन्वायिते, अस्या दमयन्त्याः, कर्णलते कर्णवल्लीद्वयमेव, वंशत्वगंशौ वेणुवल्कलभागनिर्म्मिते, ज्ये गुणद्वयम्, किम्। वंशत्वचा निर्म्मितो गुणः सुदृढो भवति। तथा च दमयन्त्या भ्रूयुगलमेव चतुर्भुजस्य कामस्य धनुर्द्वयम्, कर्णयुगलञ्च तदर्थे सङ्कीर्णं गुणद्वयम्। युद्धाभावान्निष्क्रियस्य धनुषस्तादृशे सङ्कीर्णस्य गुणः स्थाप्यते इति भावः।

अत्र कामस्य चतुर्भुजत्वौचित्यं प्रति प्रथमपादवाक्यार्थो हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गम्, सा चोत्प्रेक्षा चानयोरङ्गाङ्गिभावेन सङ्करः। भुजपदेन प्रक्रम्य दोःपदाभिधानाद्भग्नप्रक्रमतादोषः; "चतुर्भुजः स्यात्स्मरोऽपि युक्तः" इति पाठे नासौ परिहार्य्यः। रसादयः पूर्ववत्।

"चिपिटः स्वाद्यभेदे ना त्रिषु पिच्छिकविस्तृते" इति मेदिनी ॥६५॥

বাঙ্গালা—পিতা নারায়ণের আত্মাই কামদেব; সুতরাং তাঁহারও চতুর্ভুজ হইয়া উৎপন্ন হওয়াই সঙ্গত। তাহা হইলে, দময়ন্তীর ভ্রূদুইটীই সেই কামদেবের দুইখানি ধনু এবং বংশবল্কলনির্ম্মিত তাহার দুই গাছি গুণই যেন দময়ন্তীর কর্ণযুগল ॥৬৫॥

अन्वयः—अवटुशोभिता अपि माणवकेन प्रसाधिता, आलिङ्गिताम् अवलम्बमाना अपि सरूपताभागखिलोर्द्ध्वकाया सा इयं ग्रीवा अद्भुता एव ॥६६॥

अर्थ्येकेन ग्रीवां वर्णयति। ग्रीवेति। बटुर्माणवकश्च नवोपनीतो ब्रह्मचारी। तथा च बटुना माणवकेन शोभिता बटुशोभिता न बटुशोभिता अबटुशोभिता सा तादृशी सत्यपि, माणवकेन बटुना प्रसाधिता अलङ्कृतेति विरोधः। अतार्थे अपिर्विरोधे। अवटुना घाटया शोभिता, माणवकेन हारविशेषेण, प्रसाधिता अलङ्कृता इत्यविरोधः। अत्रार्थे अपिः समुच्चये। तथा आलिङ्गितां गोपुच्छसमानकृमिकक्षमवाद्ययन्त्रविशेषत्वम्, अवलम्बमानापि आश्रयन्त्यपि सरूपताभाक् आलिङ्ग्य वाद्यस्येव समानरूपताशाली अखिलः ऊर्द्ध्वको वाद्यविशेषो यस्याः सा तादृशी, या इति विरोधः। आलिङ्गिताम् कोमलत्वादालिङ्गनयोग्यताम्, अवलम्बमाना आश्रयन्ती, तथा सरूपताभाक् सौन्दर्य्यशाली अखिलः समस्त ऊर्द्ध्वकायः शरीरोपरिभागो यस्याः सा तादृशी, इत्यविरोधः। सा प्रसिद्धा, इयं दृश्यमाना, ग्रीवा दमयन्त्याः कन्धरा, अद्भुतैव परमसुन्दरत्वादाश्चर्य्यरूपैव।

अत्र विरोधाभासयोः परस्परनिरपेक्षतया संसृष्टिः। पूर्वरागो रसः, अस्यार्थस्य दुरूहत्वादोजो गुणः, गौडी च रीतिः।

"ब्रह्मचारी बटुः स्मृतौ" "हारभेदे माणवकी बाले कुपुरुषे बटौ" इति विश्वप्रकाशः। "हरीतक्यादिसदृशी यवमध्यस्थितोर्द्ध्वकः। आलिङ्ग्यश्चैव गोपुच्छस्याकृत्या सम्प्रकीर्त्तितः।" इत्यमरटीकायां रघुनाथः ॥६६॥

---

(१) सुरूपता ….।

**कवित्वगान प्रियवादसत्यान्यस्या विधाता व्यधिताधिकण्ठम्।**
**रेखात्रयन्याससिषादमीषां वासाय सोऽयं विबभाज सीमाः॥६७॥**
**बाहू प्रियाया जयतां मृणालं द्वन्द्वे जयो नाम न विस्मयोऽस्मिन्।**
**उच्चैस्तु तच्चित्रममुष्य भग्न-स्यालोक्यते निर्व्ययनं यदन्तः॥६৮॥**

---

বাঙ্গালা—দময়ন্তীর এই গ্রীবাদেশ আশ্চর্য্যই বটে; কেন না, ইহ মেরুদণ্ডের উপরিভাগ দ্বারা শোভিত, তারবিশেষ দ্বারা অলংকৃত এবং এই গ্রীবাদেশ আলিঙ্গনের যোগ্যতা লাভ করিয়াছে; বিশেষতঃ ইহাদ্বারাই শরীরের উপরি ভাগগুলি সৌন্দর্য্যশালী হইয়াছে ॥৬৬॥

**अन्वयः**—विधाता अस्याः अधिकण्ठं कवित्व गान-प्रियवादसत्यानि व्यधित। सः अयम् अमीषां वासाय रेखात्रयन्यासमिषात् सीमाः विबभाज (इव) ॥६७॥

एकैन कण्ठं वर्णयन्नाह कवित्वेति। विधाता, अस्या दमयन्त्याः, अधिकण्ठं कण्ठे, कवित्वं वस्तुवर्णनाशक्तिः, गानं गीतिः, प्रियवादः परप्रीतिकरं वचनम्, सत्यं सत्यवचनञ्च एतानि, व्यधित विहितवान्। अथ किमिदं स्थानमित्याह— सोऽयं विधाता, अमीषां कवित्वादीनां चतुर्णाम्, वासाय अवस्थानाय, रेखात्रयस्य न्यासमिषात् प्रदानच्छलात्, तिस्रः सीमाः, विबभाजेव विभक्तवानिव। रेखात्रयेण सीमात्रयकरणे तदन्तःस्थानत्रयमादाय चत्वारि स्थानानि भवन्ति। कवित्वादिचतुर्विधगुणशालिनी कम्बुकण्ठी चेयमिति निष्कर्षः।

अत्र विधात्रा कवित्वादीनामनेकेषामेककण्ठगामीकरणात् पर्य्यायो नामालङ्कारः, अपह्नुतिः, प्रतीयमाना त्रियोत्प्रेक्षा चेत्येतेषामङ्गाङ्गिभावेन सङ्करस्य छेकानुप्रासेन पुनः संसृज्यते। पूर्वरागो रसः, प्रसादो गुणः वैदर्भी च रीतिः ॥६७॥

বাঙ্গালা—বিধাতা দময়ন্তীর কণ্ঠে কবিত্ব, গান, প্রিয়বাক্য এবং সত্য এই চারিটীই বিধান করিয়াছেন এবং তিনি ঐ চারিটীর বাসের জন্য, তিনটী রেখা নির্ম্মাণচ্ছলে তিনটী সীমাই যেন বিভাগ করিয়া দিয়াছেন ॥৬৭॥

**अन्वयः**—प्रियाया बाहू मृणालं जयताम्, द्वन्द्वे जयः (भवति) नाम, अस्मिन् विस्मयः न (अस्ति)। तत् तु उच्चैः चित्रम्, यत् भग्नस्य अमुष्य अन्तः निर्व्ययनम् आलोक्यते ॥६৮॥

श्लोकद्वयेन बाहुद्वयं वर्णयितुमाह बाहू इति। प्रियाया दमयन्त्याः, बाहू भुजद्वयम्, मृणालम्, जयतां पराजयेयाम्। तच्चपरमेवं तदिति भावः कुत इत्याह— द्वन्द्वे युग्मे, जय एकस्य पराजयः, भवतीति नाम सम्भावयामि; द्वाभ्यामेकजयस्य प्रायेण दर्शनादित्याशयः। अथवा द्वन्द्वे युद्धे, जय एकतरस्येति शेषः भवतीति नाम सम्भावयामि; "अवश्यमेकं स्पृशतो लाभालाभौ जयाजयौ" इत्युक्तप्रकारस्य सर्वत्र दर्शनादित्यभिप्रायः। अतएव अस्मिन् विषये विस्मयो नास्ति। तु किन्तु, तत् उच्चैश्चित्रम् अतीवाश्चर्य्यम्, यत्, भग्नस्य विच्छिन्नस्य पराजितस्य च, अमुष्य मृणालस्य, अन्तः अभ्यन्तरे अन्तःकरणे च, निर्व्ययनं छिद्रं निर्विद्यते व्ययनं पराजयजनिता व्यथा यत्र तत्तादृशम्, आलोक्यते दृश्यते। तथा च पराजये सति सर्वत्रैव मनोव्यथादर्शनेऽपि मृणालस्य यत्तन्न दृश्यते तदेव महदाश्चर्य्यमिति भावः। अस्या बाहुयुगलं मृणालादपि सुन्दरमिति निष्कर्षः।

अत्र पूर्वार्द्धे वाक्यार्थहेतुकं काव्यलिङ्गद्वयम्, छिद्रव्यथायुग्मत्वयोर्भेदेऽपि निर्व्ययनपदस्य [illegible] इतिश्लेषोक्तिरित्येतेषां मिथो निरपेक्षतया संसृष्टिः। विस्मयपदेन प्रकाश्य चित्रपदाभिधानात् [illegible] 'न विस्मयोऽत्रैव तु तस्य भग्नस्य' इति पाठान्तरे समाधेयः। रसादयः पूर्ववत्।

"द्वन्द्वं कलहयुग्मयोः" "छिद्रं निर्व्ययनं रोकम्" इत्यमरः ॥६৮॥

अजीयतावर्त्तशुभंयुनाभ्यः दोर्भ्यां मृणालं किमु कोमलाभ्याम्।
निःसूत्रमास्ते घनपङ्कमूर्त्तीसु नाकीर्त्तिषु तन्निमग्नम्॥६९॥
रज्यन्नखस्याङ्गुलिपञ्चकस्य मिषादसौ हैङ्गुलपद्मतूणी।
हैमैकपुङ्खास्ति विशुद्धपर्वा प्रियाकरे पञ्चशरी स्मरस्य॥७०॥

---

বাঙ্গালা—প্রথমতঃ দময়ন্তীর বাহুযুগল মৃণালকে জয় করুক; কেন না, যুদ্ধ হইলেই একতরের জয় হওয়া সম্ভব। সুতরাং এ বিষয়ে কোন বৈচিত্র্য নাই। কিন্তু এইটাই অত্যন্ত বৈচিত্র্য যে, ঐ মৃণাল পরাজিত হইলেও, তাহার অন্তঃকরণ বেদনাশূন্যই দেখা যাইতেছে ।৬৮।

अन्वयः—आवर्त्त-शुभंयु-नाभ्याः कोमलाभ्यां दोर्भ्यां मृणालम् अजीयत किमु। निःसूत्रं तत् घनपङ्कमूर्त्तीसु (इव) अकीर्त्तिषु निमग्नं (सत्) किमु न आस्ते॥६९॥

अजीयतेति। आवर्त्तेन दक्षिणावर्त्तेन हेतुना शुभंयुः शुभयुक्ता शुभसूचिकेत्यर्थः नाभिर्यस्यास्तस्यास्तयोक्ताया दमयन्त्याः, कोमलाभ्यां दोर्भ्यां बाहुभ्याम्, मृणालम्, अजीयत पराजितम्, किमु किम्। अतएव निर्विद्यते सूत्रं तन्तुः व्यवस्था च यस्य तत् निःसूत्रं स्वभावादेव तन्तुशून्यं स्वजयोपायशून्यञ्चेत्यर्थः, तत् मृणालम्, घनपङ्कमूर्त्तीसु निविडकर्द्दममृत्तिकारूपासु मूर्त्तासु मूर्त्तिमतीष्विव, अकीर्त्तिषु अयशःसु पराजयनिबन्धननिन्दास्वित्यर्थः, निमग्नं सत्, किमु नास्ते न वर्त्तते; अपि तु आस्त एवेत्यर्थः। तथा च "यशसि धवलता" इति कविसमयप्रसिद्ध्या यशसो धवलत्वेन वर्णनीयतया अयशसः श्यामत्वेनैव वर्णनौचित्यात् अकीर्त्तीनां श्यामत्वेन गाढकर्द्दममृत्तिकारूपत्वम्। पराजितत्वाकीर्त्तौ तिष्ठति। अतिकोमलमपि मृणालं दमयन्त्या बाहुतुल्यतां न लभत इति भावः।

अत्र प्रथमार्द्धे वाच्या क्रियोत्प्रेक्षा, परार्द्धं प्रति पूर्वार्द्धवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम्, घनपङ्कमूर्त्तीस्विति निरङ्गं केवलरूपकम्, मूर्त्तास्विवेति प्रतीयमाना गुणोत्प्रेक्षा, अर्थापत्तिश्चेत्येतेषां मिथो निरपेक्षतया संसृष्टिः। रसादय पूर्ववत्।

"सूत्रन्तु सूचनाकारिग्रन्थे तन्तुव्यवस्थयोः" इति हेमचन्द्रः॥६९॥

বাঙ্গালা—দময়ন্তীর নাভিটী দক্ষিণাবর্ত্তশালী; সুতরাং শুভসূচক এবং ইহার কোমল বাহুযুগল মৃণালকে পরাজিত করিয়াছে কি? এই জন্যই সূত্রবিহীন সেই মৃণাল, নিবিড় কর্দ্দম মৃত্তিকারূপ মূর্ত্তিমান্ অকীর্ত্তির ভিতরে নিমগ্ন হইয়া রহে নাই কি? ।৬৯।

अन्वयः—हैङ्गुल पद्म-तूणी प्रियकरे रज्यन्नखस्य अङ्गुलिपञ्चकस्य मिषात् हैमैकपुङ्खा विशुद्धपर्वा असौ स्मरस्य पञ्चशरी अस्ति॥७०॥

त्रिभिः पद्यैः करद्वयं वर्णयति। रज्यदिति। हिङ्गुलेन तदाख्यरक्तविशेषेण रक्ता इति हैङ्गुलः पद्मः कामस्य पुष्पायुधत्वात् पद्मपुष्पमयी यस्तूणस्तूणीरस्तस्मिन् तादृशे तद्रूप इत्यर्थः, प्रियाया दमयन्त्याः करे हस्ते, रज्यन्तः स्वभावादेव रक्तवर्णा भवन्तः नखा यस्य तस्य, अङ्गुलिपञ्चकस्य, मिषात् छलात्, हैमाः स्वर्णमया एके प्रधानाः पुङ्खा अग्रदेशा यस्याः सा तथोक्ता, विशुद्धानि निर्दोषाणि उभयत्रापि पर्व्वाणि यस्याः सा तादृशी, असौ दृश्यमाना, स्मरस्य कामदेवस्य, पञ्चानां शराणां बाणानां समाहार इति पञ्चशरी अस्ति विद्यते। हिङ्गुलेन

किं नर्मदाया मम सेयमस्याः दृश्याभितो बाहुलतामृणाली ।
कुचौ किमुत्तस्थतुरन्तरीपे स्मरोष्मशुष्यत्तरबाल्यवारः ॥७३॥
तालं प्रभु स्यादनुकर्त्तुमेतौ उत्थानसुस्थौ पतितं न तावत् ।
परन्तु नाश्रित्य तटं महान्तम् कुचौ दमस्याङ्गया स्वत एव तुङ्गौ ॥७४॥

---

पाणितलेऽपि रेखाजालतया रेखोत्कतया रेखारूपेण प्रदर्शितेत्यर्थः, तया सरोजहृद्या, आह वचनवदेव स्पष्टं सूचयति च किम् । हस्तः खलु पद्मादप्युत्कृष्ट इति निष्कर्षः । हस्ते शुभसूचिका पद्माकारा रेखासीदिति भावः ।

अत्र वाच्या क्रियोत्प्रेक्षालङ्कारश्छेकानुप्रासेन संसृज्यते । पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः । भवत्प्रकरणेति "सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः" इति भवतीशब्दस्य पुंवद्भावः ॥७२॥

বাঙ্গালা—দময়ন্তি! তোমার এই হস্ত নির্ম্মাণ করিবার জন্যই পদ্মনির্ম্মাণ আমার হস্তাভ্যাস হইয়াছিল; ইহাই কি বিধাতা হরিণনয়না দময়ন্তীর হস্তে রেখারূপে পদ্মসৃষ্টি দ্বারা বলিয়াছেন? ॥৭২॥

**अन्वयः**—मम नर्मदायाः अस्याः अभितः दृश्या सा इयं बाहुलतामृणाली किम् । स्मरोष्मशुष्यत्तर-बाल्यवारः नर्मदायाः अस्याः कुचौ अन्तरीपे उत्तस्थतुः किम् ॥७३॥

अथाष्टभिः पद्यैः स्तनयुगलं वर्णयितुमाह किमिति । मम नर्मदायाः केलिसचिवायाः नर्मदाख्यनदीरूपायाश्च, अस्याः दमयन्त्याः, अभितः उभयपार्श्वे, दृश्या दर्शनयोग्या मनोहरेत्यर्थः, सा पूर्वं प्रसिद्धा ध्याता, इयं दृश्यमाना, बाहुलतेव मृणाली बाहुलतामृणाली किम् । तथा स्मरोष्मणा मदनोत्तापेन शुष्यत्तरम् अतिशयेन शुष्कतां प्राप्नुवत् बाल्यं शैशवं वय एव वाः जलं यस्यास्तस्यास्तथोक्तायाः, नर्मदारूपायाः अस्याः, कुचौ स्तनौ कलशौ इत्यर्थः, अन्तरीपे द्वीपौ, उत्तस्थतुः उत्थितौ किम् । नर्मदानद्या उभयतीरे मृणाली जायते, अस्या अपि उभयपार्श्वे बाहुलता जाता; रवितापेनातिशुष्कजलायां नर्मदायां द्वीपौ उत्तिष्ठतः, मदनतापेन बाल्ये दूरं गते अस्यामपि स्तनौ उत्थिताविति भावः ।

अत्र केलिसचिवा नर्मदानदीभेदेऽपि नर्मदापदश्लेषेण तयोरभेदाध्यवसायादतिशयोक्तिः, दमयन्त्यां नर्मदा-नदीत्वारोपो बाहुलतायां मृणालीत्वारोपे निमित्तमिति परम्परितरूपकम्, वाच्या जात्युत्प्रेक्षा चेत्येतेषामेका-श्रयानुप्रवेशरूपः सङ्करः, परार्द्धे तु बाल्ये वारित्वारोपो दमयन्त्यां नर्मदात्वारोपे निमित्तमित्येकं परम्परितरूपकम्, दमयन्त्यां नर्मदात्वारोपः कुचयोरन्तरीपत्वारोपे निमित्तमित्यपरञ्च परम्परितरूपकम् पूर्ववदुत्प्रेक्षा च तेषामपि पूर्ववदेव सङ्करः । समुदाये तूभयोः सङ्करयोः संसृष्टिः । पूर्वरागो रसः, ओजो गुणः, गौडी च रीतिः ।

"नर्म्मदः केलिसचिवे नर्म्मदा सरिदन्तरे" इति मेदिनी । "द्वीपोऽस्त्रियामन्तरीपम्" "आपः स्त्री भूम्नि वार्वारि" इति चामरः ॥७३॥

বাঙ্গালা—আমার পক্ষে নর্ম্মদাস্বরূপা দময়ন্তীর উভয়পার্শ্বে বাহুলতারূপ দুইটি মৃণাল রহিয়াছে কি? আবার কামসন্তাপে যাহার শৈশবরূপ জল অত্যন্তভাবে শুকাইয়া গিয়াছে, সেই নর্ম্মদারূপা দময়ন্তীর স্তনযুগলরূপ দ্বীপযুগল উঠিয়াছে কি? ॥৭৩॥

**अन्वयः**—पतितं तालम् उत्थानसुस्थौ एतौ दमस्याङ्गजायाः कुचौ अनुकर्त्तुं न तावत् प्रभु स्यात्; महान्तं तटम् आश्रित्य (स्थितं) परञ्च स्वतः एव तुङ्गौ एतौ दमस्याङ्गजायाः कुचौ अनुकर्त्तुं, न तावत् प्रभु स्यात् ॥७४॥

तालमिति । पतितं वृक्षात् च्युतं विच्युतं पाकेन पातिश्युक्तञ्च, तालं तदाख्यं फलं कर्त्तृ, उत्थानेन प्रतिकाष्ठया सुस्थौ सुन्दरभावेन स्थितौ उत्थानेन पुण्यजनितभाग्योदयेन सुस्थौ निरुपद्रवौ च एतौ दृश्यमानौ दमस्याङ्गजायाः दमयन्त्याः, कुचौ, अनुकर्त्तुं सदृशीकर्त्तुम्, न तावत् नैव प्रभु समर्थं स्यात्; उत्थानपतनाभ्यामिवोत्कर्षापकर्ष-

एतत्कुचस्पर्द्धितया घटस्य ख्यातस्य शास्त्रेषु निदर्शनत्वम्।
अस्माच्च शिल्पान्मणिकादिकारी प्रसिद्धनामाजनि कुम्भकारः ॥७५॥
गुच्छालयस्वच्छतमोदबिन्दु-वृन्दाभमुक्ताफलफेनिलाङ्के।
माणिक्यहारस्य विदर्भसुभ्रू-पयोधरे रोहति रोहितश्रीः ॥७६॥

---

वत्त्वादिति भावः। अथ तर्हि इयत्त्वं तालमनुकर्त्तुं प्रभु स्यादित्याह भूतलान्तमुखम्, तच्च तालफलम्, आस्थित्य स्थितम्, परमत्वव तालं फलं कर्त्तुं, स्वतः स्वभावादेव, तुङ्गौ उच्चौ, एतौ कृशाङ्ग्याः कुचौ, अनुकर्त्तुं न तावत् प्रभु स्यात्, स्वभावतुङ्गस्य फलान्वयेन तुङ्गस्य चात्यन्तवैधर्म्यादित्याशयः।

अत्रानुकरणे प्रभुत्वाभावं प्रति उत्थानपतितपदयोः आभिमुख्यस्वतःपदयोश्च हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गद्वयम्, तालापेक्षया कुचयोराधिक्यात् व्यतिरेकश्चेत्येतेषामङ्गाङ्गितया सङ्करः। पूर्वरागी रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥७४॥

বাঙ্গালা—ভূতলপতিত তালফল, কৃশাঙ্গী দময়ন্তীর উত্থানসুন্দর এই স্তনযুগলের অনুকরণ করিতে সমর্থ হইবে না; আবার উচ্চবৃক্ষস্থ তালফলও, স্বভাবত উচ্চ এই স্তনযুগলের অনুকরণ করিতে সমর্থ হইবে না ॥৭৪॥

অন্বয়—এতত্কুচস্পর্দ্ধিতয়া খ্যাতস্য ঘটস্য শাস্ত্রেষু নিদর্শনত্বং (জাতম্); মণিকাদিকারী অস্মাৎ শিল্পাচ্চ 'কুম্ভকারঃ' ইতি প্রসিদ্ধনামা অজনি ॥৭৫॥

एतदिति। एतस्याः दमयन्त्याः कुचस्य स्तनस्य स्पर्द्धितया 'अहं दमयन्त्याः कुचसदृशः' इत्येवं अहंयया हेतुना, ख्यातस्य प्रसिद्धस्य घटस्य, शास्त्रेषु निदर्शनत्वं दृष्टान्तत्वं जातम्। तथा च प्रसिद्ध एव पदार्थो दृष्टान्तो भवति। इत्यत्र यद्यद्गुणवत् तत्तद्द्रव्यं यथा नीलो घटः, यद्यज्जन्यं तत्तदनित्यं यथा घट इत्यादिरूपं न्यायादिशास्त्रेषु घटस्य यत् दृष्टान्तत्वं, तद्दमयन्त्याः कुचस्पर्द्धितया प्रसिद्धिवशादेवेति भावः। मणिकादिकारी अलिञ्जरादिमृन्मयवस्तुनिर्म्माता कुलालः, अस्मात् शिल्पाच्च दमयन्तीकुचस्पर्द्धिकुम्भनिर्म्माणादेव हेतोः, कुम्भकार इति प्रसिद्धनामा अजनि जातः; न पुनर्मणिकादिकरणमात्रात् तथात्वे मणिककार इत्येव प्रसिद्धनामा स्यादिति भावः।

अत्र भैमीकुचस्पर्द्धितया ख्यातत्वासम्बन्धेऽपि तत्सम्बन्धादतिशयोक्तिः, शाड्यशिल्पहेतुककुम्भकारनाम्नः प्रसिद्धत्वासम्बन्धेऽपि तत्सम्बन्धादपरा चातिशयोक्तिरित्यनयोर्मिथो निरपेक्षतया संसृष्टिः। रसादयः पूर्ववत्।
"अलिञ्जरः स्यान्मणिकम्" इत्यमरः ॥७५॥

বাঙ্গালা—দময়ন্তীর স্তনের সহিত স্পর্দ্ধা করার জন্যই ঘট, প্রসিদ্ধি লাভ করিয়াছে এবং তাহাতেই শাস্ত্রে ঘট দৃষ্টান্ত হইয়া গিয়াছে; আর ঐরূপ কুম্ভ নির্ম্মাণ করার জন্যই; জালা ও কোলাপ্রভৃতিনির্ম্মাতা কুলালের কুম্ভকারনাম হইয়াছে ॥৭৫॥

অন্বয়ঃ—গুচ্ছালয়-স্বচ্ছতমোদ-বিন্দু-বৃন্দাভ-মুক্তাফল-ফেনিলাঙ্কে বিদর্ভ-সুভ্রূ-পয়োধরে মাণিক্যহারস্য রোহিতশ্রীঃ রোহতি ॥৭৬॥

गुच्छेति। गुच्छो हारविशेष आलय आश्रयो येषां तानि हारविशेषस्थितानीत्यर्थः स्वच्छतमानि अतीवनिर्मलानि उदबिन्दुवृन्दाभानि जलबिन्दुसमूहतुल्यानि यानि मुक्ताफलानि मौक्तिकानि तैः फेनिलः फेनयुक्त इव अङ्कः क्रोडः मध्यभागो यस्य तस्मिन् तथोक्ते, विदर्भसुभ्रुवो दमयन्त्याः पयोधरे स्तने, माणिक्यहारस्य रत्नवर्णरञ्जितस्य

निःशङ्कसङ्कोचितपङ्कजोऽयम् अस्यामुदीतो मुखमिन्दुबिम्बः ।
चित्रं तथापि स्तनकोकयुग्मं न स्तोकमप्यञ्चति विप्रयोगम् ॥७७॥
याभ्यां कुचाभ्यामिभकुम्भयोः श्रीः आदीयतेऽसावनयोर्न ताभ्याम् ।
भयेन गोपायितमौक्तिकौ तौ प्रव्यक्तमुक्ताभरणाविमौ यत् ॥७८॥

---

हारस्य, रोहितश्रीः रक्तवर्णदीप्तिः, रोहति प्रादुर्भवति । मुक्ताहारैण माणिक्यहारेण च दमयन्त्याः कुचयुगल-मलीमसीभूत इति निष्कर्षः । प्राचां व्याख्यान्तराण्यप्रामाणिकत्वादुपेक्षितानि ।

अत्र उदबिन्दुवृन्दामिति लुप्तोपमा फेनिलेति इवाद्यभावात् फेनयोगसम्भावनाकरणात् प्रतीयमाना उत्प्रेक्षा च, छेकानुप्रासश्चेति संसृष्टिः । पूर्वरागो रसः, समासबाहुल्यादोजो गुणः, गौड़ी च रीतिः ।

"हारभेदा यष्टिभेदाद् गुच्छगुच्छार्द्धगोस्तनाः" "रोहितो लोहितो रक्तः" इत्यमरः ।

বাঙ্গালা—জলবিন্দুসমূহের ন্যায় অত্যন্ত নির্ম্মল হারস্থিত মুক্তাসমূহ দ্বারা যে স্তন দুই-টীর মধ্য দেশ, যেন ফেনযুক্ত হইয়াছে ; দময়ন্তীর সেই স্তন দুইটীর উপরে মাণিক্যময় হারের রক্তবর্ণ দীপ্তি প্রাদুর্ভূত হইতেছে ॥৭৬॥

अन्वयः—निःशङ्क-सङ्कोचित पङ्कजः अयं मुखम् इन्दुबिम्बः अस्याम् उदीतः ; तथापि स्तनकोकयुग्मं स्तोकम् अपि विप्रयोगं (यत्) न अञ्चति, (तत्) चित्रम् ॥७७॥

निःशङ्केति । निःशङ्कं निर्भयं यथा स्यात्तथा सङ्कोचितं सङ्कोचं मुद्रितत्वं स्वकृतपराजयनिबन्धनलज्जया अप्रतिभत्वञ्च प्रापितं पङ्कजं पद्मं येन स तथोक्तः, अयं दृश्यमानः, मुखं मुखरूपः, इन्दुबिम्बश्चन्द्रमण्डलः, अस्यां दमयन्त्याम्, उदीत उदयं प्राप्तः । तथापि तादृशचन्द्रोदये सत्यपि, स्तनावेव कोकौ चक्रवाकदम्पती तयोर्युग्मं कर्त्तृ, स्तोकमल्पमपि, विप्रयोगं विच्छेदम्, यत् न अञ्चति प्राप्नोति, तच्चित्रमाश्चर्य्यम्, चन्द्रोदयेन रात्रिज्ञापनात् रात्रौ च चक्रवाकदम्पत्योर्वियोगजननस्यावश्यकत्वादिति भावः ।

अत्र मुखमिन्दुबिम्ब इति व्यस्तं निरङ्गं केवलरूपकम्, स्तनकोकयुग्ममिति च समस्तं तादृशं रूपकम्, तदनु-प्राणितश्च विरोधाभास इत्येतेषामङ्गाङ्गिभावेन सङ्करः प्रथमपादगतवृत्त्यनुप्रासेन संसृज्यते । पूर्वरागो रसः, माधुर्यं गुणः, वैदर्भी च रीतिः ।

"कोकश्चक्रश्चक्रवाकः" इत्यमरः ॥७७॥

বাঙ্গালা—নির্ভয়ে পদ্ম মুদ্রের সঙ্কোচকারী মুখরূপ এই চন্দ্রমণ্ডলটী দময়ন্তীর উপরে উদয় পাইয়াছে ; তথাপি স্তনরূপ চক্রবাক দুইটী অল্পও যে বিচ্ছেদ পাইতেছে না, ইহাই আশ্চর্য্য ॥৭৭॥

अन्वयः—याभ्यां कुचाभ्याम इभकुम्भयोः श्रीः आदीयते ; (किन्तु) ताभ्याम् अनयोः असौ न आदी-यते । यत् तौ भयेन गोपायितमौक्तिकौ (तिष्ठतः) ; इमौ (तु) प्रव्यक्तमुक्ताभरणौ (तिष्ठतः) ॥७८॥

याभ्यामिति । याभ्यां दृश्यमानाभ्याम्, कुचाभ्यां दमयन्त्याः स्तनाभ्याम्, इभस्य हस्तिनः कुम्भयोः, श्रीः शोभा सम्पच्च, आदीयते बलेन गृह्यते ; किन्तु ताभ्याम् इभकुम्भाभ्याम्, अनयोः कुचयोः, असौ श्रीर्नादीयते ; अन-यासा अभावादिति भावः । कथमित्यत्राह—यत् तौ इभकुम्भौ, भयेन हेतुना, गोपायितानि अन्तर्भ्यन्तरे गुप्तायितानि मौक्तिकानि स्वकीयमुक्ताफलानि याभ्यां तौ तादृशौ सन्तौ, तिष्ठतः ; किन्तु इमौ कुचौ, प्रव्यक्तानि बहिः प्रकटितानि मुक्ताभरणानि मुक्तामयहाराद्यलङ्कारा याभ्यां तौ तादृशौ सन्तौ, तिष्ठतः । हस्तिकुम्भतोऽपि कुचौ मनोहराविति निष्कर्षः । अपरोऽपि दुर्बलः प्रबलभयेन स्वधनं गोपायति, प्रबलस्तु निर्भयं एव यत् धनिः

॥

करायजाग्रच्छतकोटिरर्थी ययोरिमौ तौ तुलयेत् कुचौ चेत्।
सर्वं तदा श्रीफलमुन्मदिष्णु जातं वटीमप्यधुना न लब्धुम् ॥७९॥
स्तनातटे (१) चन्दनपङ्किलेऽस्या जातस्य यावद्युवमानसानाम्।
हारावलीरत्नमयूखधाराकाराः स्फुरन्ति स्खलनस्य रेखाः (२) ॥८०॥

---

अतएवात्र समासोक्तिरलङ्कारः, तथा मौक्तिकस्य स्वाभाविकधर्मोऽभ्यन्तरावस्थाने भयपूर्वकगोपनसम्भावनाकारणात् इवाद्यभावात् प्रतीयमाना क्रियोत्प्रेक्षा, अनयोरङ्गाङ्गिभावेन सङ्करः। पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥७८॥

বাঙ্গালা—এই স্তন দুইটী হস্তিকুম্ভযুগলের শোভা গ্রহণ করিয়াছে; কিন্তু হস্তিকুম্ভযুগল এদুইটীর শোভা গ্রহণ করিতে পারে নাই। যেহেতু, হস্তিকুম্ভযুগল ভয়বশতঃ আপন মুক্তাকে গোপন করিয়া রহিয়াছে; আর এই স্তনযুগল আপন মুক্তাময় অলঙ্কারগুলিকে বাহিরে প্রকাশ করিয়াই রাখিয়াছে ॥৭৮॥

अन्वयः—कराग्रे जाग्रच्छतकोटिः ययोः अर्थी, उन्मदिष्णु सर्वं श्रीफलं तौ इमौ कुचौ चेत् तुलयेत्; तदा अधुना (तत्) वटीम् अपि लब्धुं न जातम् ॥७९॥

करेति। कराग्रे हस्ताग्रभागे जाग्रत् वर्तमानः शतकोटिर्वज्रो यस्य स इन्द्रोऽपि अन्यत्र कराग्रे जाग्रत्यौ धनानां शतं कोटयो यस्य स तादृशः पुरुषोऽपि, ययोर्दमयन्त्याः कुचयोः अर्थी मर्दनाभिलाषी, उन्मदिष्णु अवकाशां किञ्चिदुन्मादजननशीलं पक्वमित्यर्थः तर्ष्योन्मादकत्वात्, सर्वं श्रीफलं बिल्वफलं कर्त्तृ, ताविमौ कुचौ चेत्, तुलयेत् सदृशीकुर्य्यात् सदृशीकर्त्तुमिच्छेदित्यर्थः, तदा अधुना उन्मदिष्णु तत् श्रीफलं कर्त्तृ, वटीमपि तयोः कुचयोः स्वल्पं साम्यमपि अन्यत्र तु तदा उन्मदिष्णु उत्तमेन सह अधमस्यात्मनस्तुलनाभिलाषादुन्मत्तीभूतं श्रीफलं कर्त्तृ, वटीमपि आत्मनः कपर्द्दकमात्रं मूल्यमपि, लब्धुं न जातं न योग्यम्। एकत्र इन्द्रस्यापि प्रार्थनाविषयत्वेन कुचयोरत्यन्तोपादेयत्वात्, उन्मादकतया आसवादिवत् श्रीफलस्य तु पामरैरपि हेयत्वादिति भावः। अन्यत्र तु महाधनिनापि प्रार्थितत्वेन कुचयोर्महामूल्यत्वात्, उन्मत्तत्वेन नितान्तनष्टतया श्रीफलस्य तु कपर्द्दकमात्रमूल्यस्याप्ययोग्यत्वादित्याशयः।

अतएवात्र श्रीफलात् कुचयोराधिक्यात् व्यतिरेकोऽलङ्कारश्छेकानुप्रासेन संसृज्यते। कुचौ द्वौ श्रीफलन्तु सर्वमिति ज्ञापनात् सर्वपदं सार्थकमिति नापुष्टार्थतादोषः। पूर्वरागो रसः, अन्यार्थस्य दुरूहत्वादोजो गुणः, गौडी च रीतिः।

"शतकोटिः स्वरुः शम्बः" इत्यमरः। "वटी गोली गुणे भक्ष्ये हवे साम्यवराटयोः" इति हेमचन्द्रः।

स्वल्पो वट इति वटी स्वल्पार्थे गदादित्वात् ङीकारादीप्रत्ययः। तथा चामरः—"स्त्री स्यात् काचिन्मृणाल्यादि विवक्षापचये यदि।" उन्मदिष्णुरिति "मदिपतिपचामुदि" इतीष्णुच् प्रत्ययः ॥७९॥

বাঙ্গালা—ইন্দ্রও যে স্তন দুইটীর প্রার্থী, উন্মাদজনক সমস্ত শ্রীফল যদি সেই স্তন দুইটীর সাদৃশ্য লাভ করিতে ইচ্ছা করে; তাহা হইলে এখন সেই শ্রীফল, উন্মত্ত বলিয়া সেই স্তন দুইটীর অল্পমাত্র সাদৃশ্য লাভ করিবারও যোগ্য হইবে না ॥৭৯॥

अन्वयः—चन्दनपङ्किले अस्याः स्तनातटे जातस्य यावद्युवमानसानां स्खलनस्य हारावली-रत्न-मयूख-धाराकाराः रेखाः स्फुरन्ति ॥८०॥

---

(१) स्तनातटे…। (२) लेखाः।

क्षीणेन मध्येऽपि सतोदरेण यत् प्राप्यते नाक्रमणं वलिभ्यः।
सर्वाङ्गशुद्धौ तदनङ्गराज्य-विजृम्भितं भीमभुवीह चित्रम्॥८१॥

---

स्तनेति। चन्दनपङ्किलौ चन्दनलेपपङ्काङ्कमयुक्तौ, अतएव पिच्छिलौ इत्याशयः, अस्या दमयन्त्याः, स्तन एव अतटः प्रपात उच्चदेश इति यावत् तत्र जातस्य प्रथमोत्पन्नस्य, यावद्युवमानसानां सकलयुवजनचित्तानाम्, स्खलनस्य लोभनीयत्वात् गमनस्य पिच्छिलत्वात् पतनस्य च सम्बन्धिन्यः, हारावल्या रत्नमयूखानां या धाराः प्रवाहास्ता एवाकारा मूर्त्तयो यासां तादृश्योऽन्ना रेखाः, स्फुरन्ति प्रकाशन्ते। यथा च दमयन्त्याः स्तनावीदृक् सुन्दरौ, यथा सर्वेषामेव यूनां मनांसि तत्र पतन्तीति निष्कर्षः। स्तनोपरिभागादारभ्य तन्निम्नपर्य्यन्तं या हाररत्नकिरणावलीवत् दृश्यन्ते न तास्ताः, अपि तु समस्तयुवजनचित्तपतनरेखा एवैता इति भावः।

अत्र हारावलीरत्नमयूखधाराप्रतिषेधेन युवमानसस्खलनरेखास्थापनादपह्नुतिरलङ्कारः। पूर्ववच्छृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः।

"प्रपातस्त्वतटो भृगुः" इत्यमरः॥८०॥

বাঙ্গালা—চন্দনলেপ পঙ্কিল দময়ন্তীর স্তনরূপ উচ্চদেশে সমস্ত যুবকগণের চিত্তের যে পতন হইয়াছিল, হারশ্রেণীস্থ রত্নকিরণের ধারার আকারে সেই পতনেরই রেখাগুলি প্রকাশ পাইতেছে॥৮০॥

অন্বয়ঃ—মধ্যে সতা অপি ক্ষীণেন উদরেণ যত্ বলিভ্যঃ আক্রমণং ন প্রাপ্যতে, তত্ সর্বাঙ্গশুদ্ধৌ ইহ ভীমভুবি চিত্রম্ অনঙ্গরাজ্যবিজৃম্ভিতম্॥৮১॥

एकेन पद्येनोदरं वर्णयन्नाह क्षीणेनेति। मध्ये शरीरस्य मध्यभागे वलिनिकट एवेत्यर्थः, सतापि विद्यमानेनापि, क्षीणेन अतीवकृशेन, उदरेण जठरेण, यत् वलिभ्यस्त्रिवलिभ्यः, आक्रमणं तन्मांसानां लुलिततया सम्बन्धः, न प्राप्यते; तत् सर्वेषां मुखादीनामङ्गानां शुद्धिर्निर्दोषता सौन्दर्यं यत्र तस्याम्, इह अस्याम्, भीमभुवि भीमराजकन्यायां दमयन्त्याम्, चित्रमाश्चर्य्यरूपम्, अनङ्गराज्यस्य कामाधिपत्यस्य कामाधिपत्याश्रयीभूतस्य यौवनस्येत्यर्थः, विजृम्भितं विलसितम्। सन्निहितेनापि वलित्रयेण क्षामतरमुदरं यन्न स्पृष्टम्, तद् यौवनेन वलीनां सुघटिततया मांसानामलुलितत्वात्। तेन चोदरं महामनोहरत्वादाश्चर्य्यरूपमेव जातमिति भावः। पक्षान्तरे तु मध्ये मध्यसीमायाम्, सता विद्यमानेनापि, क्षीणेन कोषबलादीनामल्पत्वात् दुर्बलेन नृपतिना, उदरेण युद्धेन, यत् वलिभ्य उभयपार्श्वस्थप्रबलनृपतिभ्यः, आक्रमणं पराजितकरणोपक्रमक्रियता, न प्राप्यते; तत्, सर्वेषामङ्गानां स्वाम्यमात्यादीनां राज्यावयवानां शुद्धिर्निर्दोषता विश्वासस्यादिरूपा यत्र तस्याम्, इह भीमभुवि उभयपार्श्वत एवाक्रमणाद्भयङ्करायां भूमौ तन्मध्यसीमायाम्, अनङ्गराज्यस्य स्वाम्यादिसम्पूर्णसप्ताङ्गरहितस्यापि तस्य क्षीणराष्ट्रस्य विजृम्भितं विलसितं कार्य्यं चित्रम्। तथा च स्वाम्यादिसप्ताङ्गशुद्धियुक्तौ प्रबलौ राजानौ उभयपार्श्वत एवाक्रमणोद्यतौ; अथ च तादृशभयङ्करमध्यसीमावर्त्ती सम्पूर्णसप्ताङ्गहीनो दुर्बलो राजा यदाक्रमणं न प्राप्नोति; तच्चित्रमेव तत्कार्य्यमिति विरोधः; तस्य बुद्धिकौशलादेव तज्जातमिति च तत्परिहार इति भावः।

अतएवात्र क्षीणोदरे श्लिष्टविशेषणेन कार्य्ये च ताहृशदुर्बलराजव्यवहारसमारोपात् समासोक्तिर्विरोधाभासश्चानयोरेकाश्रयानुप्रवेशरूपः सङ्करः। रसादयः पूर्ववत्।

"उदरं जठरे युधि" इति मेदिनी॥८१॥

বাঙ্গালা—শরীরের মধ্যস্থানে থাকিয়াও অত্যন্তকৃশ উদরটী যে ত্রিবলি (থাক) হইতে আক্রমণ পাইতেছে না; তাহা সর্বাঙ্গসুন্দরী দময়ন্তীর যৌবনেরই আশ্চর্য্য কার্য্য॥৮১॥

**मध्यं तनूकृत्य यदीदमीयं वेधा न दध्यात् कमनीयमंशम् ।**
**केन स्तनौ सम्प्रति यौवनेऽस्याः सृजेदनन्यप्रतिमाङ्गयष्टेः (१) ॥८२॥**
**गौरीव पत्या सुभगा कदाचित् कर्त्त्रीयमर्द्धतनूसमस्याम् (२) ।**
**इतीव मध्ये विदधे विधाता (३) रोमावलीमेचकसूत्रमस्याः ॥८३॥**
**रोमावलीरज्जुमुरोजकुम्भौ गम्भीरमासाद्य च नाभिकूपम् ।**
**मद्दृष्टितृष्णा विरमेद् यदि स्यात् नैषां वतैषा सिचयेन गुप्तिः ॥८४॥**

**अन्वयः**—वेधाः यदि इदमीयं मध्यं तनूकृत्य कमनीयम् अंशं न दध्यात्, (तदा) सम्प्रति अनन्यप्रतिमाङ्गयष्टेः अस्याः यौवने केन स्तनौ सृजेत् ॥८२॥

एतेन कटीं वर्णयति । मध्यमिति । वेधा ब्रह्मा यदि, अस्या अयमिति इदमीयस्तं दमयन्तीसम्बन्धिनम्, मध्यं कटीदेशम्, तनूकृत्य तस्मात् किञ्चिदादानेन कृशीकृत्य, कमनीयं मनोहरम्, अंशं कटीनिर्म्माणोपादानभागम्, न दध्यात् तदानीमुत्तोल्य पृथक् न रक्षेत् ; तदा सम्प्रति अनन्यप्रतिमा अनन्यसदृशी अङ्गयष्टिर्यस्याः तस्याः, अस्या दमयन्त्याः, यौवने वयसि, केन वस्तुना, स्तनौ सृजेत् ; अपितु उपयुक्तोपादानाभावात् न केनापीत्यर्थः । विधात्रा कटीसारांशेन स्तनौ निर्म्मितौ, कटीदेशश्च नितरां कृशीकृत इत्याशयः ।

अत्र मध्यतः कमनीयांशस्याग्रहणेऽपि तत्सम्बन्धादतिशयोक्तिरलङ्कारः । पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥८२॥

**বাঙ্গালা**—বিধাতা যদি দময়ন্তীর কটীদেশকে কৃশ করিয়া, তাহা হইতে সুন্দর অংশ পূর্বে পৃথক করিয়া না রাখিতেন ; তাহা হইলে এখন অনন্যসদৃশাঙ্গী দময়ন্তীর স্তন দুইটীকে কোন্ বস্তু দ্বারা তিনি নির্ম্মাণ করিতেন ॥৮২॥

**अन्वयः**—सुभगा इयम् अपि गौरी इव कदाचित् पत्या अर्द्धतनूसमस्यां कर्त्री, इति इव विधाता अस्याः मध्ये रोमावलीमेचकसूत्रं विदधे ॥८३॥

पद्यचतुष्टयेन रोमावलीं वर्णयन्नाह गौरीति । सुभगा पतिप्रिया, इयं दमयन्त्यपि गौरी पार्वतीव, कदाचित्, पत्या सह, अर्द्धतनूसमस्यां शरीरार्द्धसंयोजनम्, कर्त्री करिष्यति ; इतीव इत्थं विभाव्येव, विधाता, अस्या दमयन्त्याः, मध्ये शरीरस्य ऊर्द्धाधोमध्यभागे, रोमावल्येव मेचकं कृष्णवर्णं सूत्रं तत् विदधे चकार । अन्योऽपि शिल्पी अर्द्धेन पाटयितव्ये काष्ठे मध्ये चिह्नार्थं कृष्णसूत्रं करोति ।

अत्र गौरीवेति श्रौतोपमा, इतीवेति क्रियोत्प्रेक्षा, रोमावलीमेचकसूत्रमिति च निरङ्गं केवलरूपकमित्येतेषां मिथो निरपेक्षतया संसृष्टिः । रसादयः पूर्ववत् ।

"स्यात् समस्या संघटनम्" इति अमरः ॥८३॥

**বাঙ্গালা**—সৌভাগ্যবতী এই দময়ন্তীও, পার্বতীর ন্যায় কোন সময়ে পতির সহিত আপন শরীরের অর্দ্ধাংশ সংযুক্ত করিবে ; ইহা মনে করিয়াই যেন বিধাতা ইহার মধ্যভাগে লোমাবলীরূপ কৃষ্ণবর্ণ সূত্র বিন্যস্ত করিয়াছেন ॥৮৩॥

**अन्वयः**—मद्दृष्टितृष्णा रोमावलीरज्जुम् उरोजकुम्भौ गम्भीरं नाभिकूपञ्च आसाद्य विरमेत् ; वत यदि सिचयेन एषा एषां गुप्तिः न स्यात् ॥८४॥

रोमेति । मम दृष्टेस्तृष्णा अभिलाषः पिपासा च, रोमावल्येव रज्जुस्ताम्, उरोजौ स्तनावेव कुम्भौ तौ,

(१)…कदीयैः । (२) कर्त्त्रीयम् … । (३) … निदधे … ।

उन्मूलितालानबिलाभनाभिः छिन्नस्खलच्छृङ्खलरोमराजिः (१)।
मत्तस्य सेयं मदनद्विपस्य प्रस्वापवप्रोच्चकुचास्तु वास्तु ॥८५॥
रोमावलीभ्रूकुसुमैः समौर्वी-चापैरुभिर्मध्यललाटमूर्द्धि।
व्यस्तैरपि स्याद्भिरेतदीयैः जैत्रः स चित्रं रतिजानिवीरः ॥८६॥

---

गम्भीरं गभीरम्, नाभिरेव कूपस्तम्, आसाद्य प्राप्य, विरमेत् शाम्येत्; बत खेदे, यदि छिन्नयोन वस्त्रेण च अक्षिधारिपुरुषगणेन च, एषा दृक्तृष्णा, एषां रोमावल्यादीनाम्, गुप्तिः आवरणेन गोपनं रक्षणञ्च न स्यात्। आवरणेन गोपने रोमावल्यादीनां सम्यग्दर्शनाभावात् दृष्टितृष्णाया न निवृत्तिः, अक्षिधारिपुरुषगणेन रक्षणे च रज्जुप्रभृतीनां वहुधासम्भवेन जललाभासम्भवात् पिपासायाश्च न निवृत्तिरिति भावः।

अत्र निरङ्गं केवलरूपकत्रयम् आसाद्येत्येकया क्रियया रोमावलीरज्जुप्रभृतीनां कर्मतयाभिसम्बन्धात् तुल्ययोगिता च तेषामङ्गाङ्गिभावेन सङ्करः। रसादयः पूर्ववत्।

"तृष्णे स्पृहापिपासे द्वे" इत्यमरः। "छिवय मीलयाटकाः" इति त्रिकाण्डशेषः।

दृक्तृष्णया तदानीं वसनावरणं कृतमिति प्रतीयते ॥८४॥

**বাঙ্গালা**—রোমাবলীরূপ রজ্জু, স্তনরূপ কুম্ভ এবং নাভিরূপ গভীর কূপ পাইয়া, আমার নয়নের তৃষ্ণা নিবৃত্ত পাইত বটে; হায়! যদি বস্ত্র দ্বারা এই সকলের এই আবরণ না হইত ॥৮৪॥

**अन्वयः**—उन्मूलितालान बिलाभ नाभिः छिन्नः स्खलच्छृङ्खल रोमराजिः प्रस्वाप-वप्रोच्च-कुचा सा इयं मत्तस्य मदनद्विपस्य वास्तु अस्तु ॥८५॥

उन्मूलितेति। उन्मूलितं सवेगेनोत्पाटितं यत् आलानं बन्धनस्तम्भस्तस्य यद्बिलं मूलस्थगर्त्तस्तदाभा सत्तुल्या नाभिर्यस्याः सा तादृशी, छिन्नं वेगादेव द्विधा कृतं स्खलत् पतच्च यत् शृङ्खलं तदिव रोमराजिर्लोमश्रेणिर्यस्याः सा तथोक्ता. तथा प्रस्वापाय द्विपस्येव शयनाय यौ वप्रौ उभयपार्श्वस्थौ मृत्तिकास्तूपौ ताविव उच्चौ कुचौ स्तनौ यस्याः सा तादृशी, सा प्रकृता, इयं दमयन्ती, मत्तस्य उत्कटस्य मदयुक्तस्य च, मदनः कामो द्विपो हस्तीव तस्य, वास्तु वासस्थानम्, अस्तु भवेदित्यर्थः; तादृशद्विपवासस्थानवत् बहुतरोपकरणपूर्णत्वादिति भावः।

अत्र दमयन्त्यां द्विपस्य वास्तुत्वासम्भवात् रूपकम्, किन्तु मदनद्विपस्येत्युपमितसमासाश्रयणात् लोपस्येव अन्या अपि तिस्र उपमाः, इति सर्वासामङ्गाङ्गिभावेन सङ्करः; तथा प्रथमे पादे वृत्त्यनुप्रासः, अन्तिमे च च्छेकानुप्रास इति समुदाये संसृष्टिः। पूर्वरागो रसः, बन्धार्थस्य दुरूहत्वादोजो गुणः, गौडी च रीतिः ॥८५॥

**বাঙ্গালা**—উন্মূলিত বন্ধনস্তম্ভের নীচের গর্ত্তের ন্যায় ইহার নাভি; ছিন্ন ও পতিত শৃঙ্খলের ন্যায় ইহার লোমশ্রেণী এবং শয়নের জন্য দুই দিকে নির্ম্মিত দুইটী মৃত্তিকাস্তূপের ন্যায় ইহার দুইটী উচ্চস্তন; সুতরাং মত্ত হস্তীর ন্যায় উৎকট কামের বাসস্থান হউক ॥৮৫॥

**अन्वयः**—सः रतिजानिवीरः मध्य-ललाट मूर्द्धि व्यस्तैः अपि स्याद्भिः एतदीयैः रोमावलि-भ्रू-कुसुमैः स-मौर्वी-चापैः जैत्रः (इति) चित्रम् ॥८६॥

रोमेति। स प्रसिद्धः, रतिर्जाया यस्य स रतिजानिः कामः स चासौ वीरश्चेति रतिजानिवीरः, मध्य जठरं ध्वंभावेन शरीरस्य मध्यभागः ललाटं भालं मूर्द्धा मस्तकश्च तस्मिन्, प्राण्यङ्गत्वात् समाहारद्वन्द्वैकवचनम्। स्याद्भिः स्थितिशीलैः, अतएव व्यस्तैरपि पृथक् पृथक् स्थानगतैरपि, एतदीयैः दमयन्तीसम्बन्धिभिः, रोमाव-

(१) ... रोमलता।

अस्याः खलु ग्रन्थिनिबद्धकेश-मल्लीकदम्बप्रतिबिम्बवेषात् ।
अरप्रशस्ती रजताक्षरेयं पृष्ठस्थलीहाटकपट्टिकायाम् ॥८७॥
चक्रे च विश्वं युधि मत्स्यकेतुः पितुर्जितं वीक्ष्य सुदर्शनेन ।
जगज्जिगीषत्यमुना नितम्बमयेन किं दुर्लभदर्शनेन ॥८८॥

त्रिषु भ्रुवौ च कुसुमानि च तैः, स्वे स्वकीया ये मौर्वीचापेषवो गुणधनुर्बाणास्तैः जेता त्रिभुवनजयकारकोऽयम् इति चित्रमाश्चर्यम् । तथा च सर्वेऽपि धनुर्धरा एकस्थानस्थैरेव गुणधनुर्बाणैर्जेतव्यं जयन्ति ; किन्तु कामदेवी दमयन्त्या मध्यदेशस्थितरोमावलिरूपगुणेन ललाटस्थितभ्रूयुगलरूपधनुषा मस्तकस्थितकुसुमरूपबाणेन चेति नानास्थानस्थैर्गुणधनुर्बाणैर्यत् जगज्जयति तच्चित्रमेवेति विरोधः, तत्प्रभावातिशयाच्च तत्समाधानमिति भावः ।

अतएवात्र विरोधाभासोऽलङ्कारः, व्यस्तं निरङ्गं केवलरूपकम्, यथासंख्यमन्येषामङ्गाङ्गिभावेन सङ्करस्थोऽलङ्कारमावेन पुनः संसृज्यते । रसाऽयः पूर्ववत् ।

स्थास्नुभिरिति "ग्लाजिस्थश्च क्स्नुः" इति क्स्नुप्रत्ययः । रतिजानीति "नित्यं जायाया जानिः" इति जानिरादेशः । जेत्र इति आयुधादित्वात् ताच्छील्ये चस् ॥८६॥

বাঙ্গালা—দময়ন্তীর মধ্যাস্থিত রোমাবলীরূপ গুণ, ললাটস্থিত ভ্রূযুগলরূপ ধনু এবং মস্তকস্থিত পুষ্পরূপ বাণ দ্বারা কামদেব যে ত্রিভুবন জয় করিতেছেন, ইহা আশ্চর্য্য বটে। কেন না, ঐ গুণপ্রভৃতি নানাস্থানে রহিয়াছে বলিয়া সে গুলি পরস্পর অসম্বদ্ধ ॥৮৬॥

অন্বয়:—অস্যাঃ পৃষ্ঠস্থলী-হাটক পট্টিকায়াং গ্রন্থি-নিবদ্ধ কেশমল্লী কদম্ব-প্রতিবিম্ব বেষাৎ ইয়ং রজতাক্ষরা অরপ্রশস্তিঃ খলু ॥৮৭॥

एकेन पृष्ठदेशं वर्णयति । अस्या इति । अस्या दमयन्त्याः, पृष्ठस्थल्येव हाटकपट्टिका स्वर्णफलकं तस्याम्, ग्रन्थिनिबद्धा धम्मिल्लरूपा ये केशास्तेषु यन्मल्लीकदम्बं मल्लिकाकुसुमसमूहस्तस्य प्रतिबिम्बानां वेषाच्छलात्, इयं दृश्यमाना, रजताक्षरा रौप्यलिखितवर्णा, अरस्य कामस्य प्रशस्तिः खलु गुणवर्णनायन्त्री ननु नम् । नैतानि केशस्थमल्लिकाकुसुमसमूहप्रतिबिम्बानि अपितु पृष्ठरूपस्वर्णफलके रजताक्षरैर्लिखिता कामप्रशस्तिरिति भावः । दमयन्त्याः पृष्ठदेशः स्वर्णवर्णः कामोद्दीपकश्चेति निष्कर्षः ।

अत्र मल्लिकाप्रतिबिम्बनिषेधेन रजताक्षरस्थापनादपह्नुतिः, पृष्ठेत्यादौ निरङ्गं केवलरूपकम्, अरप्रशस्तिः खल्विति वाच्या क्रियोत्प्रेक्षा चैत्येतेषामङ्गाङ्गितया सङ्करस्थोऽलङ्कारमावेन संसृष्टः । पूर्वरागो रसः, प्रसादो गुणः, पाञ्चाली च रीतिः ।

"स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम्" इत्यमरः ॥८७॥

বাঙ্গালা—দময়ন্তীর খোপার উপরে যে সকল মল্লিকা ফুল রহিয়াছে, তাহার প্রতিবিম্বছলে পৃষ্ঠরূপ স্বর্ণফলকে রূপার অক্ষরেই যেন কামদেবের গুণবর্ণনা লেখা রহিয়াছে ॥৮৭॥

অন্বয়:—মৎস্যকেতুঃ পিতুঃ সুদর্শনেন চক্রেণ চ যুধি বিশ্বং জিতং বীক্ষ্য দুর্লভদর্শনেন নিতম্বময়েন অমুনা কিং জগৎ জিগীষতি ॥৮৮॥

अथ श्लोका नितम्बं वर्णयति । चक्रे चेति । मत्स्यकेतुः कामः, पितुः श्रीकृष्णस्य, सुखमं दर्शनं यस्य तेन सुदर्शनेन तदाख्येन चक्रेण च, युधि युद्धे, विश्वं जगत्, जितं वीक्ष्य दृष्ट्वा, दुर्लभं वस्त्राच्छन्नत्वात् दुष्प्रापं दर्शनं यस्य तेन तादृशेन, नितम्बमयेन दमयन्त्या नितम्बरूपेण, अमुना चक्रेण, किं जगत्, जिगीषति जेतुमिच्छति । आयैव पितृगुणः पुत्रे संक्रामति । एतच्च पुत्रे कामे चक्रजयित्वरूपः पितृगुणः संक्रान्त एव ; परन्तु सुदर्श-

रोमावलीदण्डनितम्बचक्रे गुणञ्च लावण्यजलञ्च बाला।
तारुण्यमूर्त्तेः कुचकुम्भकर्त्तुः बिभर्त्ति मन्ये सहकारिचक्रम् ॥८९॥
अङ्गेन केनापि विजेतुमस्याः गवेष्यते किं चलपत्रपत्रम्।
न चेद्विशेषादितरच्छदेभ्यः तस्यास्तु कम्पस्तु कुतो भयेन ॥९०॥

---

दर्शनत्वात् पितृचक्रं शत्रूणां निवारणयोग्यम्, दुर्लभदर्शनत्वात् पुत्रचक्रन्तु सर्वेषां वारणीयार्थमिति भावः। नितम्बं तावत् सर्वेषामेव कामोद्दीपकमिति निष्कर्षः।

अत्र पितृचक्रापेक्षया पुत्रचक्रस्याधिक्यात् व्यतिरेकालङ्कारः, नितम्बप्रतिषेधेन चक्रस्थापनादपह्नुतिः, वाच्या क्रियोत्प्रेक्षा चैत्येतेषामङ्गाङ्गिभावेन सङ्करः। पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः।

इदानीं मन्मथेन कुतोऽपि नितम्बमाहृतमिति मन्तव्यम् ॥८८॥

বাঙ্গালা—পিতার সুদর্শন চক্র যুদ্ধে জগৎ জয় করিয়াছে, ইহা দেখিয়া কামদেব দুর্লভদর্শন নিতম্বরূপ এই চক্র দ্বারা জগৎ জয় করিবার ইচ্ছা করিতেছেন কি ? ॥৮৮॥

अन्वयः—बाला रोमावलीदण्डनितम्बचक्रे गुणञ्च लावण्यजलञ्च तारुण्यमूर्त्तेः कुचकुम्भकर्त्तुः सहकारिचक्रं बिभर्त्ति (इति) मन्ये ॥८९॥

रोमेति। बाला दमयन्ती, रोमावल्येव सरलत्वाद्दण्डः नितम्बमेव गोलत्वाच्चक्रं ते रोमावलीरूपं दण्डं नितम्बरूपं चक्रञ्चेत्यर्थः, गुणं सौन्दर्य्यविद्यादिरूपमेव गुणं सूत्रञ्च, तथा लावण्यमेव जलं तच्च, एतच्चतुष्टयरूपं तारुण्यमूर्त्तेर्यौवनरूपस्य, कुचकुम्भकर्त्तुः स्तनरूपकुम्भकारस्य कुलालस्य, सहकारिचक्रं सहकारिकारणसमूहम्, बिभर्त्ति धारयतीति अहं मन्ये। तथा च मुख्यकारणभूतः कुलालो यदा कुम्भं करोति तदा सर्वाणि सहकारिकारणानि पूर्व्वन्ते ; दण्डचक्रं सलिलं सूत्रञ्चेति। अत्र च यौवनरूपः कुलालः कुचरूपं कुम्भं करोति योग्यत्वात् ; तस्य च रोमावलीरूपो दण्डः, नितम्बरूपं चक्रम्, सौन्दर्य्यादिरूपं सूत्रम्, लावण्यरूपं जलञ्च सहकारिकारणं सम्पन्नमिति भावः। सहकारिकारणत्वञ्च तन्निमित्ते सति तज्जन्मजनकत्वम्।

अत्र श्लिष्टं साङ्गरूपकं वाच्या क्रियोत्प्रेक्षा चानयोरङ्गाङ्गिभावेन सङ्करः। रसादयः पूर्व्ववत् ॥८९॥

বাঙ্গালা—যৌবনরূপ কুম্ভকার ইহার স্তনরূপ কুম্ভ করিতেছে ; রোমাবলীরূপ দণ্ড, নিতম্বরূপ চক্র, সৌন্দর্য্যাদিরূপ সূত্র এবং লাবণ্যরূপ জল, এই সকল তাহার সহকারি কারণকে ইনি ধারণ করিতেছেন ; ইহা আমি মনে করি ॥৮৯॥

अन्वयः—अस्याः केन अपि अङ्गेन विजेतुं किं चलपत्रपत्रं गवेष्यते। न चेत् (तदा) इतरच्छदेभ्यः विशेषात् तस्य तु भयेन कुतः कम्पः अस्तु ॥९०॥

एतेन भगं वर्णयन्नाह अङ्गेनेति। अस्या दमयन्त्याः, केनापि महासुन्दरत्वादनिर्वचनीयेन अश्लीलत्वात् अकथनीयेन च अङ्गेन भगरूपेणावयवेन, विजेतुं विशेषेण पराभवितुम्, किं चलपत्रस्य अश्वत्थस्य,पत्रं दलम्, गवेष्यते अन्विष्यते। ननु, त्वया कथमिदं ज्ञातमित्याह— न चेत् इत्थं यदि न स्यात् तदा, इतरच्छदेभ्यः अन्योन्यवृक्षपत्रेभ्यः, विशेषादाधिक्यात्, तस्य तु चलपत्रपत्रस्य, भयेन एतदङ्गाक्रमणशङ्कया, कुतः कस्मात्, कम्पः, अस्तु भवतु भवेदित्यर्थः। अन्यान्यवृक्षपत्रापेक्षया अश्वत्थपत्रस्य कम्पातिशयदर्शनादियं सम्भावना। अस्या भगम् अश्वत्थदलाकारतया अतीवशुभसूचकमिति भावः।

अत्र गवेषणस्याननाकारणोत्प्रेक्षया क्रियोत्प्रेक्षा, भयकारणककम्पासम्बन्धेऽपि तत्सम्बन्धादतिशयोक्तिः, तैतयोः प्रागुक्तयोस्तैयोः मिथो निरपेक्षतया संसृष्टिः। पूर्व्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः।

"दुरीक्षस्य यदिरयात्मनयस्य वाच्यता यदि" इत्युक्तेः श्लीलतापीत्युक्तम्।

विधाय मूर्द्धानमधश्चरञ्चेत् मुञ्चेत्तपोभिः स्वमसारभावम्।
जाड्यञ्च नार्च्छेत् कदली बलीयः तदा यदि स्यादिदमूरुचारुः ॥८३॥
ऊरुप्रकाण्डद्वितयेन तन्व्याः करः पराजीयत वारणीयः।
युक्तं क्रिया कुण्डलनच्छलेन गोपायति स्वं मुखपुष्करं सः ॥८४॥

---

अत्र पूर्वार्द्धे वाच्यं क्रियोत्प्रेक्षणम्, रम्भायाः स्वस्तम्भे ऊरुभ्रमाद्भ्रान्तिमान्, स्वाभाविकपत्रोत्पत्तौ तदर्पणसम्भावनाकरणात् इवाद्यभावाच्च प्रतीयमाना क्रियोत्प्रेक्षा चेत्येतेषां मिथो निरपेक्षतया संसृष्टिः। रसादयः पूर्ववत् ॥८२॥

বাঙ্গালা—কদলীও নিজের স্তম্ভকে নিজের বলিয়া চিনিতে পারিতেছে না, আবার ইহার উরুদুইটীকেও ইহার উরু বলিয়া বুঝিতে পারিতেছে না। যে হেতু, সেই কদলী ইহার উরুভ্রমে নিজের উপরেই পত্র দিয়া রাহিয়াছে ॥৮২॥

अन्वयः—कदली मूर्द्धानम् अधश्चरं विधाय तपोभिः चेत् स्वम् असारभावं मुञ्चेत्, बलीयः जाड्यञ्च चेत् न अर्च्छेत्, तदा इदमूरुचारुः यदि स्यात् ॥८३॥

विधायेति। कदली रम्भास्तम्भः, मूर्द्धानं मस्तकम्, अधश्चरम् अधोगामिनम्, विधाय कृत्वा, तपोभिस्तद्रूपाभिरिव तपस्याभिः, चेद् यदि, स्वं स्वकीयम्, असारभावं सारशून्यत्वम्, मुञ्चेत् त्यजेत्; तथा तादृशैरेव तपोभिः, बलीयः अधिकतरम्, जाड्यं शीतलत्वं मूर्खत्वञ्च, चेत् न अर्च्छेत् न स्वभावतः प्राप्नुयात्; तदा अस्या दमयन्त्या ऊरुरिव चारुर्मनोहरा, यदि स्यात्। अन्यथा न, एतदूर्वोः ससारत्वात् शीतकाले उष्णत्वात् ग्रीष्मकाले च शीतलत्वादिति भावः।

अत्र असारभावत्यागासम्बन्धेऽपि यद्यर्थबलेन तत्सम्बन्धादिका अतिशयोक्तिः, जाड्यसम्बन्धेऽपि यद्यर्थबलेन तदसम्बन्धादपरा चातिशयोक्तिः, प्रसिद्धोपमानीभूतायाः कदल्या इदमूरुचारुरित्यनेन उपमेयत्वकल्पनात् प्रतीपम्, पूर्वार्द्धे छेकानुप्रासः, परार्द्धे च वृत्त्यनुप्रास इति संसृष्टिः। पूर्वरागो रसः, माधुर्यं गुणः, वैदर्भी च रीतिः ॥८३॥

বাঙ্গালা—কদলীস্তম্ভ আপন মস্তক অবনত করিয়া তপস্যা দ্বারা যদি নিজের অসারতা ত্যাগ করিতে পারে এবং অত্যন্ত জড়তা প্রাপ্ত না হয়; তবে যদি ইঁহার উরুর ন্যায় সুন্দর হইতে পারে ॥৮৩॥

अन्वयः—तन्व्याः ऊरुप्रकाण्डद्वितयेन वारणीयः करः पराजीयत। (अतएव) सः कुण्डलनच्छलेन क्रिया स्वं मुखपुष्करं गोपायति (इति) युक्तम् ॥८४॥

ऊर्विति। तन्व्याः कृशाङ्ग्या दमयन्त्याः, ऊरुप्रकाण्डद्वितयेन ऊरुस्तम्भयुगलेन, वारणीयो हस्तिसम्बन्धी, करः शुण्डा, पराजीयत सौन्दर्येण पराभूतः। अतएव स वारणकरः, कुण्डलनच्छलेन मण्डलीकरणव्याजेन, क्रिया पराजयजनितलज्जया, स्वं स्वकीयम्, मुखस्य पुष्करमग्रम्, गोपायति गुप्तीकरोति, इति युक्तमुचितम्, लज्जोदये लोकेषु मुखप्रदर्शनस्य प्रायेणाकथ्यत्वादिति भावः।

अत्र पराजयासम्बन्धेऽपि तत्सम्बन्धादतिशयोक्तिः, मुखाग्रगोपनं प्रति पूर्ववाक्यार्थस्य हेतुत्वात् काव्यलिङ्गम्, अपह्नुतिश्चेत्येतेषामङ्गाङ्गितया सङ्करः। पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः।

"पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले। व्योम्नि खड्गफले पद्मे तीर्थौषधिविशेषयोः।" इत्यमरः ॥८४॥

বাঙ্গালা—কৃশাঙ্গী দমযন্তীর উরুযুগল হস্তীর শুণ্ডকে পরাভূত করিয়াছে; এই

अस्या मुनीनामपि मोहमूहे भृगुर्महान् यत् कुचशैलशीली।
नानारदाह्लादि मुखं श्रितोरू व्यासो महाभारतसर्गयोग्यः ॥८५॥
क्रमोद्‌गता पीवरताधिजङ्घं वृक्षाधिरूढ़िं (१) विदुषी किमस्याः।
अपि भ्रमीभङ्गिभिरावृताङ्गं वासो लतावेष्टितकप्रवीणम् ॥८६॥

जन्तु सेই হাস্তেও, গোপন করার ছলে লজ্জাবশতঃ আপন মুখাগ্র গোপন করিয়া থাকে ইহা সঙ্গত বটে ॥৮৪॥

अन्वयः—अस्या मुनीनाम् अपि मोहम् ऊहे ; यत् महान् भृगुः कुचशैलशीली, मुखं नानारदाह्लादि, महाभारतसर्गयोग्यः व्यासः (च) श्रितोरुः ॥८५॥

अस्यामिति। अस्यां दमयन्त्यां विषये, मुनीनामपि माहात्मनां कामुकानां का कथा जितेन्द्रियाणामपीत्यामपि, मोहं समादौ पर्वतादिभ्रमं विषयवासनां कामकृतचित्तविकारञ्च, ऊहे अनुमिनेन तर्कयामि। यद् यस्मात्, महान् विख्यातः प्रधानश्च, भृगुः प्रपातो मुनिविशेषश्च, कुचौ स्तनावेव शैलौ पर्वतौ कुचौ शैलाविवेति च कुचशैलौ तौ शीलयति स्वभावान्मर्दनाभिलाषाच्च आश्रयतीति कुचशैलशीली। प्रपातो यथा स्वभावादेव पर्वतमाश्रयति, तथा महामुनिर्भृगुः पर्वतभ्रमेण कामविकारेण चैतत् कुचावाश्रयतीत्यर्थः। मुखं वदनम्, नाना अनेके ये रदाः दन्ताः तैः आह्लादयति सुशोभिततया लोकानानन्दयतीति नानारदाह्लादि। अन्यत्र तु अनारदाह्लादि न नारदस्य मुनेराह्लादजनकं न भवतीति न, अपि तु गानेन दुःखनाय दानेन च कामार्तस्य नारदस्य मुनेराह्लादजनकं भवत्येवेत्यर्थः। तथा महती भाः कान्तिर्यस्मात् स महाभाः, तथा रतसर्गे सुरतविधाने योग्यः सुविधाकारी, व्यासो विस्तारः, श्रितो स्वभावादेवावलम्बितौ ऊरू येन स तादृशो वर्तते। अन्यत्र तु महाभारतस्य सदाख्येतिहासग्रन्थस्य सर्गे रचनायां योग्यः समर्थः, व्यासः पाराशर्यः, श्रितौ कदलीवनभ्रमात् रमणाभिलाषाच्च अवलम्बितौ ऊरू येन सः ; व्यासस्य कदलीवनभ्रमश्रितत्वादिति भावः।

अत्र ऊहे इति वाच्या क्रियोत्प्रेक्षा ; रूपकम्, लुप्तोपमा, प्रपातमुनिविशेषयोः, बहुतरदन्तकरणकाह्लादक नारदाह्लादकयोः, विस्तारपाराशर्ययोश्च भेदेऽपि तत्तत्पदश्लेषाभिदाध्यवसायात् तिस्र एवातिशयोक्तयः ; नानेत्यादौ महेत्यादौ च सभङ्गश्लेषः ; छेकानुप्रासश्चेति सर्वेषां मिथो निरपेक्षतया संसृष्टिः। रसादयः पूर्ववत्।

"भृगुः शुक्रे प्रपाते च जमदग्नौ पिनाकिनि" "व्यासो मुनौ स्याद्विस्तारे" इति विश्वः। "नानानेकोभयार्थयोः" इत्यमरः ॥८५॥

বাঙ্গালা—ইঁহার উপরে মুনিগণেরও মোহ আছে, বলিয়া আমি মনে করি। যে হেতু, মহামুনি ভৃগু ইঁহার স্তনপর্ব্বতসেবী, মুখখানি নারদের আহ্লাদজনক এবং মহাভারতরচয়িতা ব্যাস ইঁহার উরুযুগল আশ্রয় করিয়া রহিয়াছেন ॥৮৫॥

अन्वयः—अस्याः अधिजङ्घं क्रमोद्‌गता पीवरता किं वृक्षाधिरूढ़िं विदुषी ; भ्रमीभङ्गिभिः आवृताङ्गं वासः अपि लतावेष्टितकप्रवीणम् ॥८६॥

इदानीमेकेन पद्येन जङ्घाद्वयं वर्णयति . क्रमोद्गतेति। अस्या दमयन्त्याः, अधिजङ्घं जङ्घाद्वये विद्यमाना, क्रमेण उद्गता उपरिभागे उच्छ्रिता, पीवरता स्थूलता, किम्, वृक्षस्य वृक्षनिम्नगतस्वरलशिखरस्य अधिरूढ़िं क्रमिकस्थूलताप्रकारम्। आलिङ्गनविशेषमिति च व्यज्यते। विदुषी जानाति। अन्यथा कथमनयोर्जघनिम्नगतस्वरशिखरवत् क्रमिकोपरिभागे पीवरता स्यादिति भावः। तथा भ्रमीभङ्गिभिर्मण्डलाकारवेष्टनप्रकारैः आवृतानि

(१) वृक्षाधिरूढम् ...।

अरुन्धती-कामपुरन्ध्रि-लक्ष्मी-जम्भद्विषद्दार-नवाम्बिकानाम् ।
चतुर्दशीयं तदिहोचितैव गुल्फद्वयाप्ता यददृश्यसिद्धिः ॥८७॥
अस्याः पदौ चारुतया महान्तौ अपेक्ष्य सौक्ष्म्यात्स्वभावभाजः ।
जाता प्रवालस्य महीरुहाणां जानीमहे पल्लवशब्दलब्धिः ॥८८॥

---

अङ्गानि येन तथाहृद्यम्, वासः परिधानवस्त्रम्, लतावेष्टितके लतया वृक्षस्येव वेष्टने । आलिङ्गनविशेषे इति च भण्यते । प्रवीणमभिज्ञम् । अपिः सम्भावनायाम् । अन्यथा कथं लतावदेवाङ्गं वेष्टयतीत्याशयः ।

अत्र पूर्वार्द्धे काच्या श्लिष्टोत्प्रेक्षा, परार्द्धे च वाच्या गुणोत्प्रेक्षा, तृतीये पादे छेकानुप्रासश्चेत्येषां संसृष्टिः । वृत्तादयः पूर्ववत् ।

अधिरूढमिति विभक्त्यर्थे अव्ययीभावः । विदुषीति वेत्तेः शतृप्रत्ययः, तस्य च नित्वादित्वात् वृक्षाधिरूढिमित्यत्र षष्ठीनिषेधात् द्वितीयैव ।

वृक्षाधिरूढिं लतावेष्टितकमालिङ्गनं लक्षयति भरतः । यथा—

"एकेन कान्तचरणं चरणेन कान्ताभिहत्य जानुमपरेण च तुल्यनाथं न ।
आरोढुमिच्छसि पतिं तरुमल्लताङ्गी वृक्षाधिरूढिमिति तत् कवयो वदन्ति ॥
"वल्लीव वृक्षं दयितं मृगाक्षी संवेष्टयन्ती नमयेत्तदास्यम् ।
यत्र स्वनाथं भ्रमनूर्वकाया बुधा लतावेष्टितकं वदन्तु ॥८६॥"

বাঙ্গালা—দময়ন্তীর জঙ্ঘা দুইটীর ক্রমিক উপরের দিকের স্থূলতা কি বৃক্ষের নীচের শিখরের ক্রমিক স্থূলতা শিক্ষা করিয়াছে এবং আমি মনে করি— মণ্ডলাকারে অঙ্গের আবরণকারী বস্ত্রখানি, লতার ন্যায় বেষ্টন জানে ।৮৬।

অন্বয়:—यत् इयम् अरुन्धती-कामपुरन्ध्रि-लक्ष्मी-जम्भद्विषद्दार-नवाम्बिकानां चतुर्दशी, तत् इह गुल्फद्वयाप्ता अदृश्यसिद्धिः उचिता एव ॥८७॥

एकैव गुल्फयुगलं वर्णयन्नाह अरुन्धतीति । यद्यस्मात्, इयं दमयन्ती, अरुन्धती वशिष्ठपत्नी, कामस्य पुरन्ध्रिः पत्नी रतिः, लक्ष्मीर्नारायणपत्नी, जम्भद्विषद्दारा इन्द्रपत्नी शची, नव नवसंख्या अम्बिकाश्चेति तासामिव भाग्यवत्यो नार्यस्तासां सम्बन्धे चतुर्दशी चतुर्दशानां संख्यानां पूरणी तत्तुल्यैव भाग्यवतीत्यर्थः ; तस्मात्, इह दमयन्त्याम्, गुल्फद्वयेन आप्ता लब्धा, अदृश्यसिद्धिः स्वभावादनवलोकनीयत्वनिष्पत्तिः, उचिता युक्तैव आर्तीति शेषः ; तासामिव अस्या अपि भाग्यवत्त्वात् गुल्फद्वयादृश्यतया च तत्सूचनात् "अदृश्यं गुल्फयुगलं सुख-सौभाग्यसूचकम्" इति सामुद्रकवचनादिति भावः । किञ्च यदियं चतुर्दशी तिथिः, तदिह अदृश्यसिद्धिरन्तर्धान-निष्पत्तिरुचितैव ; "चतुर्दश्यामदृश्यत्वम्" इत्यागमादिति ध्वनिः । तेन च रूपकालङ्कारो व्यज्यते । अत्र पूर्ववत् वृत्तः, प्रसादो गुणः, वैदर्भी च रीतिः ।

नवाम्बिका यथा आगमसारे —

"ब्रह्माणी चैव माहेशी कौमारी वैष्णवी तथा ।
वाराही नारसिंही च माहेन्द्री चण्डिका तथा ।
महालक्ष्मीरिति प्रोक्ताः कथिता नवाम्बिकाः" ॥८७॥

বাঙ্গালা—অরুন্ধতী, রতি, লক্ষ্মী, শচী এবং ব্রহ্মাণীপ্রভৃতি নয় জন অম্বিকা এই তের জন ভাগ্যবতী স্ত্রী ; আর ইনি যে হেতু তাহাদের চতুর্দশ জন ; সেই হেতু ইঁহার গুল্ফদ্বয় যে অদৃশ্যতা লাভ করিয়াছে, তাহা সঙ্গতই হইয়াছে ।৮৭।

तुषारनिःशेषितमब्जसर्गं विधातुकामस्य पुनर्विधातुः।
पद्मस्विहास्याङ्घ्रिकरेष्वभिख्याःभिक्षाधुना माधुकरीसदृक्षा ॥१०३॥
एष्यन्ति यावद्गणनादिगन्तात् नृपाः स्मरार्त्ताः शरणे प्रवेष्टुम्।
इमे पदाब्जे विधिनापि सृष्टाः (१) तावत्य एवाङ्गुलयोऽत्र रेखाः ॥१०४॥

तयोश्चस्य चस्य, चादिपदात् तनादेर्य्यहणम्, अहमत्वाभिमानात् सौन्दर्य्ये अद्वितीयत्वाहङ्कारात् स्तौः, सर्वं नं यौपा-वेगं भजत इति स ताहश इव सन्, इह दमयन्त्यामेव, न पुनरन्यत्र येन तद्दृशं नपर्य्येन्तं ताहशाभिमानस्य स्यादिता स्यादिति भावः, द्वयोः पूरणं द्वितीयं कर्णादीनां द्वितीयं द्वितीयमित्यर्थः, अधित ताहशाहङ्कारचूर्णनार्थं विहित-वान्, विध तुः सर्वस्यैवाहङ्कारचूर्णनकारित्वात् तन्निधाय स्वद्वितीयदर्शने सर्वस्यैवाद्वितीयताहङ्कारचूर्णनदर्श-नादिति भावः।

अत्र प्रतीयमाना क्रियोत्प्रेक्षालङ्कारः। दमयन्त्याः कर्णादयः सौन्दर्य्ये तत्कर्णादय इवेत्यनन्वयालङ्कारो व्यज्यत इति वस्तुनालङ्कारध्वनिः। रसादयः पूर्ववत् ॥१०२॥

বাঙ্গালা—দময়ন্তীর কর্ণ, নয়ন, ওষ্ঠ, বাহু, হস্ত এবং চরণপ্রভৃতি অঙ্গগুলি, আপনা-দের তুল্য সমস্ত পদার্থকেই জয় করিয়া, আপনারা অদ্বিতীয় বলিয়া অহঙ্কার করিতেছিল; তাহাতে বিধাতা ক্রুদ্ধ হইয়াই যেন দ্বিতীয় কর্ণ ও দ্বিতীয় নয়ন প্রভৃতি সৃষ্টি করিয়া-ছেন ॥১০২॥

অন্বয়ঃ—অধুনা তুষারনিঃশেষিতম् अब्जसर्गं पुनः विधातुकामस्य विधातुः पद्मसु इह आस्याङ्घ्रिकरेषु माधुकरीसदृक्षा अभिख्याभिक्षा (वर्त्तते इव) ॥१०३॥

तुषारेति। अधुना वसन्तकालागमे, तुषारेण हिमेन निःशेषितं विनाशितम्, अब्जसर्गं पद्मसृष्टिं सृष्टपूर्वं पद्मसमूहमित्यर्थः, पुनर्विधातुं स्रष्टुं कामोऽभिलाषो यस्य तस्य, विधातुर्ब्रह्मणः, पद्मसु इह दमयन्त्याम्, आस्याङ्घ्रि-करेषु आस्यं वदनमेकम् अङ्घ्री चरणौ द्वौ करौ हस्तौ च द्वौ इति मिलित्वा पञ्चसु एतेषु एतत् पञ्चकसमीपे इत्यर्थः, माधुकरी भिक्षाविशेषस्तस्य सदृक्षा तुल्या, अभिख्यायाः शोभाया भिक्षा प्रार्थना, वर्त्तत इवेति शेषः। तत्र च मधुकरी यथा लोकमध्ये स्वपक्वं पुनर्निर्माणं पञ्चभ्यः पञ्चभ्यः किञ्चित् किञ्चिच्च भिक्षित्वा आदत्ते; तथा विधातापि हिमनाशितं स्वसृष्टपद्मं पुनर्निर्मातुं दमयन्त्या वदनात् चरणद्वयात् करद्वयाच्चेति पञ्चभ्यः कियतीं कियतीं शोभां भिक्षित्वा आदत्त इवेति भावः। दमयन्त्या मुखादि पद्मकशोभा पद्मशोभातोऽप्युत्कृष्टेति निष्कर्षः।

अत्र प्रतीयमाना क्रियोत्प्रेक्षा माधुकरीसदृक्षेत्यार्थोपमा चानयोरङ्गाङ्गितया सङ्करः, द्वितीये पादे यमकम्, चतुर्थे च च्छेकानुप्रास इति समुदाये संसृष्टिः। पूर्वरागो रसः, वच्यार्थस्य दुरूहत्वादोजो गुणः, गौडी च रीतिः ॥१०३॥

বাঙ্গালা—হিম পদ্মগুলিকে বিনষ্ট করিয়াছে; সুতরাং এখন বিধাতা পুনরায় তাহা সৃষ্টি করিবার ইচ্ছা করিতেছেন; অতএব ভ্রমরের ভিক্ষার ন্যায় তিনি, দময়ন্তীর মুখ, চরণদ্বয় এবং হস্তদ্বয় এই পাঁচটীর নিকট শোভা ভিক্ষাই যেন করিতেছেন ॥১০৩॥

অন্বয়ঃ—स्मरार्त्ताः नृपाः शरणे इमे पदाब्जे प्रवेष्टुं यावद्गणनात् दिगन्तात् एष्यन्ति, विधिनापि अत्र तावत्यः एव अङ्गुलयः रेखाः सृष्टाः ॥१०४॥

एकेन पद्येन चरणयोर्दमयन्त्याः वर्णयति। एष्यन्तीति। स्मरार्त्ताः कामपीडिताः, नृपा राजानः,

(१)—विधिना निसृष्टाः।

प्रियानखीभूतवतो मुदेदं व्यधाद्विधिः साधुदयालुमिन्दोः ।
एतत्पदच्छद्म-सरागपद्मसौभाग्यभाग्यं कथमन्यथा स्यात् ॥१०५॥
यस्याः पदाङ्गुष्ठनखौ मुखञ्च बिभर्त्ति पूर्णेन्दुचतुष्टयं या ।
कलाचतुःषष्टिरुपैतु वासं तस्यां कथं सुभ्रुवि नाम नाम ॥१०६॥

अपि तत्कामशोकार्त्ती राजानः, इमे दृश्यमाने, पदाब्जे पादपद्मद्वयम्, प्रवेष्टुम् अवलम्बितुम्, यावद्गणनात् यावत्संख्यकात् दिगन्तात्, एष्यन्ति आगमिष्यन्ति ; विधिनापि ब्रह्मणापि, अत्र पदाब्जद्वये, तावत्य एव तावत्संख्या एव अङ्गुलयः अङ्गुलिस्वरूपा रेखा सृष्टा निर्म्मिताः । तथा च कामार्त्ता राजानः पदाब्जयो- शरणीकर्तुं दशभ्य एव दिग्भ्य आगमिष्यन्तीति सूचयितुं ब्रह्मणा अङ्गुलिरूपा दशैव रेखा अत्र चरणद्वये सृष्टा इति भावः ।

अत्र अङ्गुलयो रेखा इति व्यस्तं निरङ्गं केवलरूपकमलङ्कारः । पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥१०४॥

বাঙ্গালা—রাজারা কামপীড়িত হইয়া, রক্তকমলরূপ এই চরণযুগলকে আশ্রয় করিবার জন্য, যতগুলি দিক্ হইতে আসিবেন ; বিধাতাও এই চরণযুগলে ততগুলিই অঙ্গুলিরূপ রেখা সৃষ্টি করিয়াছেন ॥১০৪॥

अन्वयः—विधिः मुदा प्रिया-नखीभूतवतः इन्दोः साधुदयालुं व्यधात् । अन्यथा एतत्-पद-च्छद्म-सराग-पद्म-सौभाग्य-भाग्यं कथं स्यात् ॥१०५॥

एतेन श्लोकेन नखान् वर्णयति । प्रियेति । विधिर्ब्रह्मा, मुदा आनन्देनैव, प्रियाया दमयन्त्या नखीभूतवतो नखत्वं प्राप्तवतः, इन्दोश्चन्द्रस्य, साध्वी उत्कृष्टा दया अवस्था यस्य तत्त्वम्, साधु सम्यक् व्यधात् विहितवान् । अथवा तु दयालुत्वं दयासंख्यावत्वं साधु सम्यक्, व्यधात् विहितवान् । कुतः साधुदयालुत्वमित्याह-अन्यथा साधुदयालुत्व-विधानाभावे, एतस्या दमयन्त्याः पदं चरणमेव छद्म छलं यस्य तत्ताद्दशं यत् सरागं रक्तिमान्वितं पद्मं तस्य यत् सौभाग्यं स्फुटितावस्थाया संस्पर्शरूपं भागधेयं तस्य भाग्यं भागित्वमधिकारित्वमिति यावत्, कथं स्यात् अपि तु कथमपि नेत्यर्थः ; रात्रावात्मोदयात् दिवसे च पद्मप्रकाशादिति भावः । दशैव नख-चन्द्रतुल्याः स्पृष्टा इति निष्कर्षः ।

अत्र चन्द्रस्य नखीभूतत्वासम्बन्धेऽपि तत्सम्बन्धातिशयोक्तिः, साध्ववस्थत्व-दयासंख्यावत्वयोर्भेदेऽपि साधुदयालुत्व-पदश्लेषाभिदाध्यवसायादपराश्यतिशयोक्तिः, प्रकृतपदनिषेधेन पद्मस्थापनादपह्नुतिः; छेकानुप्रासश्च तेषां मिथो निरपेक्षतया संसृष्टिः । रसादयः पूर्ववत् ॥१०५॥

বাঙ্গালা—চন্দ্র আনন্দের সহিতই প্রিয়তমার নখ হইয়াছেন ; তাই বিধাতা চন্দ্রের ভাল অবস্থা করিয়া দিয়াছেন । না হইলে, ইহার চরণচ্ছলে যে রক্তপদ্ম আছে, চন্দ্র তাহার সংস্পর্শ করিবার মত ভাগ্যের অধিকারী কি প্রকারে হইতেন ॥১০৫॥

अन्वयः—या यस्याः पदाङ्गुष्ठनखौ मुखञ्च पूर्णेन्दुचतुष्टयं बिभर्त्ति, तस्याम् अस्यां सुभ्रुवि कथं नाम कलाचतुःषष्टिः वासः न उपैतु ॥१०६॥

प्राधान्यादङ्गुष्ठनखौ पृथग्वर्णयति । यस्या इति । या दमयन्ती, यस्याः सौन्दर्य्यविद्यादिनिबन्धना सुख्याति, पदयोश्चरणयोरङ्गुष्ठनखौ, मुखं वदनञ्च, एतच्चतुष्टयरूपमित्यर्थः, पूर्णेन्दूनां षोडशकलापूर्णचन्द्राणां

स्रष्टातिविश्वा विधिनैव तावत्, तस्यापि नीतोपरि यौवनेन।
वैदग्ध्यमध्याप्य मनोभुवेयम्, अवापिता वाक्‌पथपारमेव ॥१०७॥
इति स चिकुरादारभ्यैनां (१) नखावधि वर्णयन्
हरिणरमणीनेत्रां चिन्ताम्बुधौ तरदन्तरः।
हृदयभरणोद्वेलानन्दः सखीकृतभीमजा-
नयनविषयीभावे भावं दधार धराधिपः ॥१०८॥

चतुष्टयम्, बिभर्त्ति धारयति; तस्यामस्यां सुभ्रुवि दमयन्त्याम् कथं नाम, कलानां चन्द्रगत-षोडशभागैक-भागानां गीतवाद्यादि-कलाविद्यानाञ्च चतुःषष्टिः संख्या, वासमवस्थितिम्, न उपैतु न प्राप्नोतु अपि तु उपैत्वेवेत्यर्थः षोडशानां चतुर्गुणने चतुःषष्टिसम्भवात् प्रत्येकचन्द्रे च षोडशकलाश्रयत्वात् तच्चन्द्रस्य च चतुष्टयत्वादिति भावः। पदाङ्गुष्ठनखौ तु विद्याश्रयत्वात् पूर्णचन्द्रतुल्याविति स्फुटार्थः।

अत्र पूर्वार्द्धे व्यस्तं निरङ्गकेवलरूपकम्, परार्द्धे चन्द्रकला-गीतादिविषययोर्भेदेऽपि कलापदश्लेषेणाभेदाध्य-वसायादतिशयोक्तिरर्थापत्तिश्चेति पूर्ववत् संसृष्टिः। रसादयश्च पूर्ववत् ॥१०६॥

বাঙ্গালা—যিনি, চরণাঙ্গুষ্ঠের নখ দুইটী এবং মুখ এই চারিটী স্বরূপ চারিটী পূর্ণ-চন্দ্র বিনি ধারণ করিতেছেন; সেই সুভ্রূ এই দময়ন্তীর উপরে চতুঃষষ্টি কলা বাস করিবে না কেন ॥১০৬॥

**অন্বয়:**—विधिना एव तावत् इयम् अतिविश्वा स्रष्टा, यौवनेन तस्य अपि उपरि नीता, मनोभुवा वैदग्ध्याम् अध्याप्य वाक्‌पथपारम् एव अवापिता ॥१०७॥

स्रष्टेति। प्रत्यङ्गवर्णनां समाप्येदानीमनिर्वचनीयसौन्दर्यं प्रतिपादयति स्रष्टेति। विधिनैव, तावदादौ, इयं दमयन्ती, अतिविश्वा विश्वं जगदतिक्रान्ता अलौकिकसुन्दरी इत्यर्थः, स्रष्टा; परञ्च यौवनेन तस्यापि अतिविश्वाभावेन विधिसृष्टत्वस्यापि, उपरि उन्नततायाम्, नीता उपस्थापिता, यौवनेन सर्वस्या अपि अविधिसृष्ट-सौन्दर्यानयनादिति भावः; ततपरञ्च मनोभुवा कामेन, वैदग्ध्यं सर्वविषयचातुर्य्यम्, अध्याप्य शिक्षयित्वा, वाक्‌पथपारमेव निर्वचनायोग्यत्वमेव, अवापिता प्रापिता। अतएवेदानीं वर्णनातो विरम्यत इति भावः।

अत्र दमयन्त्या उत्तरोत्तरमुत्कर्षात् सारो नामालङ्कारः। पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥१०७॥

বাঙ্গালা—প্রথমে বিধাতাই ইঁহাকে অলৌকিক সুন্দরী করিয়া সৃষ্টি করিয়াছেন, তার পর যৌবন আবার ইঁহাকে বিধিসৃষ্টিরও উপরে উঠাইয়া দিয়াছে; তার পরেও আবার কামদেব ইঁহাকে চাতুর্য্য শিক্ষা করাইয়া দিয়া একেবারে বাক্যের অগোচর করিয়া ফেলিয়াছেন ॥১০৭॥

**অন্বয়:**—सः धराधिपः इति चिकुरात् आरभ्य नखावधि हरिणरमणीनेत्राम् एनां वर्णयन् चिन्ताम्बुधौ तरदन्तरः हृदयभरणोद्वेलानन्दः (च सन्) सखीकृतभीमजानयनविषयीभावे भावं दधार ॥१०८॥

इतीति। स धराधिपो राजा नलः, इति एवम्प्रकारेण, चिकुरात् केशादारभ्य, नखावधि चरणनखपर्य्य-न्तम्, हरिणरमण्या हरिण्या इव नेत्रे यस्यास्ताम्, एनां दमयन्तीम्, वर्णयन् भाषया प्रकटयन्, चिन्ताम्बुधौ तदा-धारसौन्दर्य्यदर्शनाविषयसागरे, तरत् प्लवमानम् अन्तरं चित्तं यस्य सः, तथा हृदयभरणेन चित्तपरिपूरणेन

(१) … एताम् … ।

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मा मल्लदेवी च यम् ।
गौड़ोर्वीशकुलप्रशस्तिभणितिभ्रातर्ययं (१) तन्महा-
काव्ये चारुणि नैषधीयचरिते (२) सर्गोऽगमत् सप्तमः ॥१०८॥

चित्तं परिपूर्य्येत्यर्थः उद्वेल उद्वृत्त आनन्दो यस्य स तथाविधश्च सन्, सखीभिर्वृता परिवेष्टिता या भीमजा दमयन्ती तस्या नयनविषयीभावे दृष्टिगोचरत्वे, सखीसमेता केवला दमयन्त्येव यथात्मानं पश्यति न पुनरन्य इत्येवं ईश्वरादिच्छानुसारिणं स्वात्मनो दृश्यत्वविषयं दृश्यत्वं, भावमभिप्रायम्, दधार धृतवान्, दृश्यो भवितुमियेषेति तात्पर्य्यम् । एतेनैव भाविसर्गसूचनं वेदितव्यम् ।

अत्र हरिणरमणीनेत्रामिति लुप्तोपमालङ्कारश्चतुर्थपादगतच्छेकानुप्रासेन संसृज्यते । रसादयः पूर्ववत् ।

हरिणीवृत्तम्, "न-स-म-र-स-ला-गः षड्वेदैर्हयैर्हरिणी मता" इति लक्षणात् ॥१०८॥

বাঙ্গালা—নল রাজা এই ভাবে কেশ হইতে আরম্ভ করিয়া চরণের নখপর্য্যন্ত হরিণ-নয়না দময়ন্তীর বর্ণনা করিলেন ; তখন তাঁহার হৃদয় বিস্ময়সাগরে সন্তরণ করিতে লাগিল এবং দর্শনজনিত আনন্দ হৃদয় পরিপূর্ণ করিয়া উদ্বৃত্ত হইল ; এই অবস্থায় তিনি, সখী-পরিবেষ্টিত দময়ন্তীর দৃষ্টিগোচর হইবার ইচ্ছা করিলেন ॥১০৮॥

श्रीहर्षमिति । गौड़ोर्वीशकुलस्य गौड़राजवंशस्य या प्रशस्तिः प्रशंसा स्तुतिग्रन्थ इति यावत् तस्या भणिति-भ्राता: भ्रातरि सनाम-शब्दी । गौड़राजवंशप्रशस्तिग्रन्थोऽपि श्रीहर्षेणैव कृत इति भावः ।

नानासुधीभरितभारतपूर्वबङ्ग— कोटालिपाड़विषयोनशियानिवासी ।
गङ्गाधरस्य तनयः खलु काश्यपीऽयं श्रीमान् नकीपुरपुरे हरिदासशर्म्मा ॥
सप्त-वेद-वसु-चन्द्र-सम्मिते वत्सरे शकमहीपतेरिमाम् ।
सौरफाल्गुनदिने चतुर्द्दशे सप्तमस्य विवृतिं समाप्तवान् ॥

इति श्रीहरिदाससिद्धान्तवागीशभट्टाचार्य्यविरचितायां नैषधचरितटीकायां जयन्तीसमाख्यायां
सप्तमसर्गविवरणं समाप्तम् ॥०॥



(१) … प्रशस्तिभणितीभ्रातर्य्ययं … । (२) … वैरसेनिचरिते … ।

# अष्टमः सर्गः ।

अथाद्भुतेनास्तनिमेषनिद्रम् उन्निद्ररोमाणममुं युवानम् ।
दृशा पपुस्ताः सुदृशः समस्ताः सुता च भीमस्य महीमघोनः ॥१॥
कियच्चिरं दैवतभाषितानि निह्नोतुमेनं (१) प्रभवन्तु नाम ।
पलालजालैः पिहितः स्वयं हि प्रकाशमासादयतीक्षुडिम्भः ॥२॥

---

**अन्वयः**—अथ ताः समस्ताः सुदृशः महीमघोनः भीमस्य सुता च अद्भुतेन अस्तनिमेषनिद्रम् उन्निद्ररोमाणम् अमुं युवानं दृशा पपुः ॥१॥

शूली न कट्टी न कदापि शैवः न वामदेवो न च भौमदेवः ।
शिवस्य शम्भुस्य स शङ्करस्य सदा प्रसादात्मय मे भव त्वम् ॥

अथेन्द्रादीनां दौत्यं वर्णयिष्यन् प्राक् सूचितनलदर्शनदानमुखमष्टमसर्गमारभते अथेति । अथ सखी-हृतदमयन्तीनयनविषयीभावे नलस्य आत्मप्रकाशानन्तरम्, ताः समस्ताः, सुदृशः सुन्दरनयनाः सख्यः, महीमघोनः पृथिवीन्द्रस्य भीमस्य सुता दमयन्ती च, अद्भुतेन अनिर्वचनीयसौन्दर्य्यदर्शनाद्विस्मयेन हेतुना, अस्ता नष्टा निमेष एव निद्रा दर्शनविघ्नो यस्य तम्, निर्निमेषनयनेन दमयन्तीमेव पश्यन्तमित्यर्थः, उन्निद्राणि सात्त्विकभावो-दयादुद्गतानि रोमाणि यस्य तम्, अमुं युवानं नलम्, दृशा चक्षुषा, पपुः सादरं ददृशुः; परमसुन्दरत्वादिति भावः ।

अत्र नलस्य रोमाञ्चरूपसात्त्विकभावोदयाद्भावोदयो नामालङ्कारश्छेकानुप्रासेन संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ।

अस्मिन् सर्गेऽपि इन्द्रवज्रा उपेन्द्रवज्रा तयोरुपजातिश्च वृत्तम् ॥१॥

**বাঙ্গালা**—তাহার পর, দময়ন্তীর অনির্বচনীয় সৌন্দর্য্য দেখিয়া বিস্ময়বশতঃ নলের নয়নের নিমেষ দূরীভূত হইল এবং শরীরে রোমাঞ্চ আবির্ভূত হইল; এই অবস্থায় সেই সকল সখীগণ এবং ভীমরাজার কন্যা দময়ন্তী, ইঁহারা নয়ন দ্বারা সেই যুবক নলকে পান করিতে লাগিলেন ॥১॥

**अन्वयः**—दैवतभाषितानि कियच्चिरम् एनं निह्नोतुं प्रभवन्तु नाम । पलालजालैः पिहितः इक्षु-डिम्भः स्वयं हि प्रकाशम् आसादयति ॥२॥

कियदिति । दैवतानामिन्द्रादीनां देवतानां भाषितानि "भूयादभावि भिदैः" इत्यादिवाक्यानि कर्तॄणि, कियच्चिरं कियन्तं दीर्घकालं यावत्, एनं नलम्, निह्नोतुं लोकलोचनादगोपयितुम्, प्रभवन्तु शक्नुवन्तु नाम, अपि तु नातिचिरं शक्नुवन्तीति सम्भावयामीत्यर्थः । यथाहि पलालजालैः धान्यनालीसमूहैः, पिहित आच्छादितः, इक्षोर्डिम्भः अङ्कुरः, स्वयं हि आत्मनैव, प्रकाशं प्रकटताम्, आसादयति प्राप्नोति । तथा च

---

(१) … एतम् ।

अपाङ्गमप्याप दृशोर्न रश्मिः नलस्य भैमीमभिलष्य यावत्।
स्मराशुगः सुभ्रुवि तावदस्यां प्रत्यङ्गमापुङ्खमिखं ममज्ज ॥३॥

यदक्रमं विक्रमशक्तिसाम्यात् उपाचरद्द्वावपि पञ्चबाणः।
ज्ञातं न वैमुख्यममुष्य कस्मात् बाणैरनर्द्धार्द्धविभागभाग्भिः (१) ॥४॥

---

इक्षुकाण्डो यथा पलाशजालेनाच्छादितोऽपि सन् भूमिकर्षरत्वात् स्वयमेव प्रकाश्यतां याति; तथा नलोऽपि "भूयादन्तर्हितः सिद्धैः" इत्यादिदेवतावाक्येन विहितान्तर्हितिसिद्धिरपि दमयन्तीसन्निधानात् स्वयमेव प्रकाश्यतां ययावित्यर्थः।

अतएवात्र दृष्टान्तोऽलङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः।

"नाडी नालञ्च काण्डोऽस्य पलालोऽस्त्री स निष्फलः" इत्यमरः ॥२॥

বাঙ্গালা—দেবতার বাক্য কত কাল নলকে গোপন রাখিতে সমর্থ হইবে। কেন না, নাড়া দিয়া ঢাকা আখের গিঁট নিজেই প্রকাশ পাইয়া থাকে ॥২॥

**অন্বয়ঃ**—नलस्य दृशोः रश्मिः भैमीम् अभिलष्य यावत् अपाङ्गम् अपि न आप; तावत् (एव) स्मराशुगः अस्याः सुभ्रुवि प्रत्यङ्गम् आपुङ्खमिखं ममज्ज ॥३॥

अपाङ्गमिति। नलस्य दृशोर्नयनयोः रश्मिस्तेजः, भैमीं दमयन्तीम्, अभिलष्य संस्प्रष्टुं कामयित्वा, यावत्, अपाङ्गमपि नितान्तसान्निध्येन शीघ्रप्राप्यं नेत्रप्रान्तमपि न आप न जगाम; तावदेव, स्मराशुगः कामबाणः, अस्याः सुभ्रुवि दमयन्त्याम्, प्रत्यङ्गं ललाटाधरादिसर्वावयवेषु, आपुङ्खमिखं पुङ्खाग्रपर्य्यन्तम्, ममज्ज प्रविवेश। नलस्य दर्शनमात्रमेव दमयन्ती नितरां कामार्त्ता जातेति निष्कर्षः।

अत्रापि गुणरीती पूर्ववत् ॥३॥

বাঙ্গালা—নলের নয়নযুগলের কিরণ দময়ন্তীকে স্পর্শ করিবার ইচ্ছা করিয়া যে পর্য্যন্ত নিজের প্রান্তদেশেও যাইতে পারিল না; তাহার মধ্যেই কামের বাণ, দময়ন্তীর প্রত্যেক অঙ্গে পুঙ্খের অগ্রভাগপর্য্যন্ত প্রবেশ করিল ॥৩॥

**অন্বয়ঃ**—पञ्चबाणः विक्रमशक्तिसाम्यात् द्वौ अपि यत् अक्रमम् उपाचरत्, (तत्) अनर्द्धार्द्धविभाग-भाग्भिः अमुष्य बाणैः कस्मात् (अपि) वैमुख्यं न ज्ञातम् ॥४॥

यदिति। पञ्चबाणः कामः, विक्रमशक्तेः, उभयं प्रत्येवात्मनः पराक्रमरूपायाः शक्तेः साम्यात् समानत्वाद्धेतोः, द्वावपि भैमीनलौ, यद्यस्मात्, अक्रमं पौर्वापर्य्यरहितं यथा स्यात्तथा युगपदेवेत्यर्थः, उपाचरत् सम्यग्ज्ञान-मप्रसवानिति तात्पर्य्यम्; तत् अनर्द्धार्द्धविभागभाग्भिः पञ्चसंख्यकत्वेन समभागासम्भवात् अर्द्धार्द्धविभागमलभद्भिः, अत एव प्रत्येकं प्रति अर्द्धार्द्धप्रयोगासम्भव इति भावः, अमुष्य पञ्चबाणस्य बाणैः, कस्मात् कुतोऽपि कारणात्, वैमुख्यं प्रहारे पराङ्मुखत्वं न ज्ञातम्; विषमैरपि बाणैरुभयत्रैव युगपदेव समान एव प्रहारः कृत इत्यर्थः। परस्परदर्शनात् परमेव द्वावपि समानमेव कामार्त्तौ जाताविति निष्कर्षः।

अत्र विषमैरपि बाणैर्द्वयोर्जनयोर्युगपदेव समः प्रहार इति विरोधः कामप्रभावात् तत्समाधानमिति विरोधाभासोऽलङ्कारः स च वृत्त्यनुप्रासेन संसृष्टः। अनुरक्तयोरेव भैमीनलयोः परस्पर दर्शनात् सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥४॥

বাঙ্গালা—নল ও দময়ন্তী এই দুই জনের প্রতিই নিজের বিক্রম প্রকাশ করি-

---

(१) सर्वैः…।

तस्मिन्नलोऽसाविति साऽन्वरज्यत् क्षणं क्षणं क्वेह स इत्युदास्त ।
पुरः स्म तस्यां वलतेऽस्य चित्तं दौत्यादनेनाथ पुनर्न्यवर्त्ति ॥५॥
कयाचिदालोक्य नलं ललज्जे कयापि तद्भासि हृदा ममज्जे ।
तं कापि मेने स्मरमेव कन्या भेजे मनोभूवशभूयमन्या ॥६॥

---

বার ক্ষমতা মান থাকায় কামদেব, দুই জনকেই যে হেতু একদা প্রহার করিতে লাগিলেন; সেই হেতু তাঁহার অর্দ্ধ অর্দ্ধ বিভাগের অযোগ্য বাণগুলি কোনও কারণে বিমুখ হইল না ॥৪॥

**अन्वयः**—असौ नलः इति सा तस्मिन् क्षणम् अन्वरज्यत्, इह सः क्व इति क्षणम् उदास्त । (तथा) अस्य चित्तं पुरः तस्यां वलते स्म; अथ अनेन दौत्यात् पुनः न्यवर्त्ति ॥५॥

तस्मिन्निति । असौ नल इति यथार्थतत्सौन्दर्य्यदर्शनेन निश्चित्येत्यर्थः, सा दमयन्ती, तस्मिन् पुरुषे, क्षणम्, अन्वरज्यत् अनुरक्ता अभवत् । पुनरिह सुरक्षिते कन्यान्तःपुरे, स नलः क्व कुत आगच्छेदिति सन्दिह्य क्षणम् उदास्त उदासीना अभवत् । तथा अस्य नलस्य चित्तं कर्त्तृ, पुरः प्रथमम्, तस्यां दमयन्त्याम्, वलते स्म अनुरागेण धावति स्म । अथ अनन्तरम्, अनेन नलेन, दौत्यादात्मनो दौत्यस्मरणात्, पुनर्न्यवर्त्ति वलनान्निवृत्तम्, दौत्यकरणे-नेन्द्रादीनामन्यतमवरणसम्भवादिति भावः ।

अत्र रतिभावोदयाद्भावोदयोऽलङ्कारः । रसादयः पूर्ववत् ॥५॥

**বাঙ্গালা**—'ইনি নল,এই রূপ নিশ্চয় করিয়া দময়ন্তী তাঁহার প্রতি ক্ষণকাল অনুরক্ত হইলেন; আবার 'এই কন্যান্তঃপুরে নল আসিবেন কি রূপে এইরূপ চিন্তা করিয়া ক্ষণকাল উদাসীন থাকিলেন। আবার নলের চিত্তও প্রথমে দময়ন্তীর প্রতি অনুরাগে ধাবিত হইল; তার পর আবার নিজের দৌত্য স্মরণ করিয়া ফিরিয়া আসিল ॥৫॥

**अन्वयः**—कयाचित् नलम् आलोक्य ललज्जे, कया अपि हृदा तद्भासि ममज्जे; का अपि कन्या तं स्मरम् एव मेने; अन्या मनोभूवशभूयं भेजे ॥६॥

कयाचिदिति । कयाचित् सख्या, नलमालोक्य, ललज्जे । इयं मुग्धा । कयापि सख्या, हृदा मनसा, तस्य नलस्य भासि कान्तौ, ममज्जे मग्नया भूतम् । इयं मध्या धीरा । कापि कन्या कुमारी, तं नलम्, स्मरं कामदेवमेव, मेने स्मृतानुरूप सौन्दर्य्यदर्शनान्निश्चितवती । इयमपि मुग्धा । अन्या सखी च, मनोभूवश-भूयं कामवशत्वम्, भेजे प्राप्ता । इयं अराब्धा प्रगल्भा ।

अत्र प्रथमे पादे लज्जाख्यभावोदयाद्भावोदयः, तृतीये स्मरेऽपि नले स्मरभ्रमात् भ्रान्तिमान्, अन्त्यानुप्रासश्चे-त्येतेषां मिथो निरपेक्षतया संसृष्टिः । कर्त्तृकारकाणामनुक्ततया भग्नप्रक्रमतादोषः; 'स कन्यया मन्मथ एव मेने तदन्यया कामवशत्वमापे' इति पाठेनास्य परिहार्य्यः । मधुररसभावव्यञ्जनान्माधुर्य्यं गुणः, वैदर्भी च रीतिः ।

भूयमिति "भावे भुवः„ इति भवतेः क्यप् ॥६॥

**বাঙ্গালা**—দময়ন্তীর কোন সখী নলকে দেখিয়া লজ্জিত হইল; কোন সখী মনে মনে নলের সৌন্দর্য্যে মগ্ন হইল; কোন কুমারী নলকে কামদেব বলিয়াই মনে করিল; আবার অন্য সখী কামবশতা প্রাপ্ত হইল ॥৬॥

কস্ত্বং কুতো বেতি ন জাতু শেকুঃ তং প্রষ্টুমপ্যপ্রতিভাতিভারাৎ।
উত্তস্থুরভ্যুত্থিতিবাঞ্ছয়েব নিজাসনান্নৈকরসাঃ ক্রমাঙ্গ্যঃ ॥৭॥
স্বাচ্ছন্দ্যমানন্দপরম্পরাণাং ভৈমী তমালোক্য কিমপ্যবাপ।
মহারয়ং নির্ঝরিণীব বারাম্ আসাদ্য ধারাধরকেলিকালম্ ॥৮॥
তত্রৈব মগ্না যদপশ্যদস্য নাস্যা দৃগস্যাঙ্গমযাসীদন্যৎ।
নাদাস্যদস্মৈ যদি বৃষ্টিধারাং বিচ্ছিদ্যবিচ্ছিদ্য চিরান্নিমেষঃ ॥৯॥

---

**অন্বয়ঃ**—নৈকরসাঃ ক্রমাঙ্গ্যঃ অপ্রতিভাতভারাৎ 'ত্বং কঃ কুতঃ বা (আগতঃ)' ইতি তং প্রষ্টুম্ অপি জাতু ন শেকুঃ; (কিন্তু) অভ্যুত্থিতিবাঞ্ছয়া ইব নিজাসনাৎ উত্তস্থুঃ ॥৭॥

ক,ইতি। নৈকে নানাপ্রকারা লজ্জাবিস্ময়বিতর্কাদয়ঃ রসা মনোবৃত্তয়ো যাসাং তা নৈকরসাঃ, ক্রমাঙ্গ্যঃ সখ্যঃ, অপ্রতিভায়া জড়তায়া অতিভারাদাধিক্যাদ্ধেতোঃ, ত্বং কঃ কিংনামা কিংসম্বন্ধী চ, কুতো বা স্থানাদাগত ইতি তং নলম্, প্রষ্টুমপি, জাতু দর্শনাবধিতৎকালমধ্যে কদাচিদপি, ন শেকুঃ ন সমর্থা বভূবুঃ। কিন্তু, অভ্যুত্থিতিবাঞ্ছয়েব মহাজনাগমননিবন্ধনমাগীত্যানেচ্ছয়েব, নিজাসনাৎ স্বস্বাসনাৎ উত্তস্থুঃ অপ্রতিভাতিভারা-দিব নাগীত্যানং চক্রুঃ।

অত্র জড়তানিয়ম্যমনীত্যানস্য অভ্যুত্থানত্বেনোৎপ্রেক্ষণাৎ বাচ্যা ক্রিয়োৎপ্রেক্ষালঙ্কারঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৭॥

**বাঙ্গালা**—নানা প্রকার মনোবৃত্তিশালী সখীগণ, অত্যন্ত কিং কর্ত্তব্য বিমূঢ়তাবশতঃ 'আপনি কে! কোথা হইতেই বা আসিয়াছেন,!' এরূপ তাঁহাকে জিজ্ঞাসা করিতেও পারিল না; কিন্তু অভ্যুত্থানের ইচ্ছায়ই যেন নিজ নিজ আসন হইতে গাত্রোত্থান করিল ॥৭॥

**অন্বয়ঃ**—নির্ঝরিণী ধারাধর-কেলিকালম্ আসাদ্য বারাং মহারয়ম্ ইব, ভৈমী তম্ আলোক্য কিমপি আনন্দপরম্পরাণাং স্বাচ্ছন্দ্যম্ অবাপ ॥৮॥

স্বাচ্ছন্দ্যমিতি। নির্ঝরঃ প্রবাহঃ অস্যা অস্তীতি নির্ঝরিণী নদী, ধারাধরাণাং মেঘানাং কেলিকালং ক্রীড়াসময়ং বর্ষাকালমিত্যর্থঃ, আসাদ্য প্রাপ্য, বারাং জলানাম্, মহারয়ং মহাবেগমিব, ভৈমী দময়ন্তী, তং নলম্, আলোক্য দৃষ্ট্বা, কিমপি অনির্বচনীয়ম্, আনন্দস্য পরম্পরাণাং ধারাণাম্, স্বাচ্ছন্দ্যং যথেষ্টত্বম্, অবাপ প্রাপ।

অত্র শ্রৌতীপমালঙ্কারশ্ছেকানুপ্রাসেন সংসৃষ্টঃ। সম্ভোগশৃঙ্গারো রসঃ, "দর্শনস্পর্শনাদীনি নিষেবেতে বিলাসিনৌ। যত্রানুরক্তাবন্যোন্যং সম্ভোগোঽয়মুদাহৃতঃ।" ইতি সাহিত্যদর্পণাৎ। মাধুর্য্যং গুণঃ, বৈদর্ভী চ রীতিঃ ॥৮॥

**বাঙ্গালা**—নদী বর্ষাকাল পাইয়া যেমন জলের মহাবেগ প্রাপ্ত হয়; তেমন দময়ন্তী নলকে দেখিয়া, অনির্বচনীয় যথেষ্ট আনন্দ প্রাপ্ত হইলেন ॥৮॥

**অন্বয়ঃ**—অস্যাঃ দৃক্ অস্য যৎ অঙ্গম্ অপশ্যৎ তত্র এব মগ্না (সতী) অন্যৎ অঙ্গং ন অযাস্যৎ; যদি চিরাৎ নিমেষঃ বিচ্ছিদ্য বিচ্ছিদ্য অস্মৈ বৃষ্টিধারাং ন অদাস্যৎ ॥৯॥

তত্রেতি। অস্যা দময়ন্ত্যাঃ, দৃক্ দৃষ্টিঃ, অস্য নলস্য, যৎ অঙ্গং নাসানয়নাদিকমবয়বম্, অপশ্যৎ, তত্র তস্মিন্নঙ্গে এব, মগ্না প্রবিষ্টা সতী, অন্যদঙ্গং ন অযাস্যৎ ন অগমিষ্যৎ; যদি চিরাদনেকক্ষণাৎ

**निरीक्षितस्याङ्गमवीक्षितस्य दृशा पिबन्ती रभसेन तस्य ।**
**समानमानन्दमियं दधाना विवेद भेदं न विदर्भसुभ्रूः ॥१२॥**
**सूक्ष्मे घने नैषधकेशपाशे निपत्य निष्पन्दतरीभवद्भ्याम् ।**
**तस्यानुबन्धं न विमोच्य गन्तुम् अपारि तल्लोचनखञ्जनाभ्याम् ॥१३॥**

---

द्वयप्राप्तदेशशीलं भस्य वाणिज्यं न धनप्राप्ते च लोभात् लोलुभत्वाद्धेतोः, चिरं दीर्घकालं यावत् गतं गमनम्, आगतमागमनञ्च, चकार कृतवती ।

अत्र प्रस्तुतायां तद्दृष्टौ अप्रस्तुताया वणिक्स्त्रियाः कार्यस्य व्यवहार समारोपात् समासोक्तिरलङ्कारः, लाभलोभादिति च्छेकानुप्रासयमकयोः संसृष्टिः । अपघनपदेन प्रक्रम्य अङ्गपदाभिधानात्प्रक्रमभङ्गतादोषः, छित्वं कामस्याङ्गमधो विशन्ती, इति पाठान्तरे परिहार्यः । सम्भोग शृङ्गारो रसः, माधुर्यं गुणः, वैदर्भी च रीतिः ।

"अङ्गं प्रतीकोऽवयवोऽपघनः" इत्यमरः । "लीलयलि सततञ्च लीला तु रसनाग्रियौः" इति हेमचन्द्रः ॥११॥

বাঙ্গালা—দময়ন্তীর স্বভাবচঞ্চলা দৃষ্টি, নলের একটী অঙ্গ পরিত্যাগ করিয়া, অন্য অঙ্গের সন্ধির সীমায় উপস্থিত হইয়া, উভয় অঙ্গ-লাভের লোভবশতঃ, দীর্ঘকাল্ যাবৎ যাতায়াত করিল ॥১১॥

**अन्वयः**—निरीक्षितस्य अवीक्षितस्य तस्य अङ्गं दृशा रभसेन पिबन्ती इयं विदर्भसुभ्रूः समानम् आनन्दं दधाना (सती) भेदं न विवेद ॥१२॥

निरीक्षितमिति । निरीक्षितस्य आदौ अवलोकितस्य, अवीक्षितस्य आदौ अनवलोकितस्य, तस्य नलस्य, अङ्गं मुखादिकम्, दृशा चक्षुषा, रभसेन औत्सुक्यनिबन्धनवेगेन, पिबन्ती सादरमवलोकयन्ती, इयं विदर्भसुभ्रूः दमयन्ती, समानमानन्दं दधाना दृष्टाङ्गस्मरणेन अदृष्टाङ्गदर्शनेन च तुल्यामेव प्रीतिं वहन्ती सती । दृष्टे वस्तुन्यनादरः अदृष्टे च वस्तुनि दर्शनौत्सुक्यमिति सर्वेषामेव स्वभावः ; नलाङ्गानामलौकिकसौन्दर्य्यात्, दमयन्त्या न तथेति भावः । भेदं दृष्टादृष्टयोरङ्गयोरानन्दजनने वैषम्यम्, न विवेद न ज्ञातवती ; समानानन्दधारणादेवेति भावः ।

अत्र भेदवेदनसम्बन्धेऽपि तदसम्बन्धादतिशयोक्तिः, भेदावेदनं प्रति "समानमानन्दं दधाना" इति वचनार्थस्य पदार्थहेतुत्वात् काव्यलिङ्गमनयोरङ्गाङ्गिभावेन सङ्करस्तृतीयपादगतच्छेकानुप्रासेन पुनः संसृज्यते । निरीक्षितमवीक्षितमित्युपसर्गभेदात्प्रक्रमभङ्गतादोषः ; 'सा वीक्षितस्याङ्गमवीक्षितस्य' इति पाठान्तरे समाधेयः । रसरीती पूर्ववत्, प्रसादो गुणः ॥१२॥

বাঙ্গালা—দময়ন্তী পূর্ব্বে নলের যে অঙ্গ দেখিয়াছিলেন, কিম্বা যে অঙ্গ না দেখিয়াছিলেন, নয়ন দ্বারা ঔৎসুক্যবশতঃ সেই উভয় অঙ্গই আদরের সহিত দেখিতে থাকিয়া, সমান আনন্দ অনুভব করতঃ, সে দর্শন ও অদর্শনের কোন বৈষম্য বুঝিতে পারিলেন না ॥১২॥

**अन्वयः**—तल्लोचनखञ्जनाभ्यां सूक्ष्मे घने (च) नैषधकेशपाशे निपत्य निष्पन्दतरीभवद्भ्यां (सद्भ्याम्) तस्य अनुबन्धं विमोच्य गन्तुं न अपारि ॥१३॥

सूक्ष्म इति । तस्याः दमयन्त्याः लोचने चक्षुषी एव खञ्जनौ तदाख्यौ पक्षिणौ ताभ्याम्, सूक्ष्मे अतिश्लक्ष्णे, घने निबिडे च, अन्यत्र तु सूक्ष्मतन्तुनिर्मिते, क्षुद्रकीलयुक्ते च, अतएव हि खञ्जनयोर्दर्शनायोग्यतया तत्र पतनं विमुक्तिपूर्वकगमनायोग्यत्वमिति भावः, नैषधस्य नलस्य केशानां कुन्तलानां पाशः समूह एव पाशः पक्षिबन्धन-

भूलोकभर्तुर्मुखपाणिपाद-पद्मैः परीरम्भमवाप्य तस्य ।
दमस्वसुर्दृष्टिसरोजराजिः चिरं न तत्याज सबन्धुबन्धम् ॥१४॥
तत्कालमानन्दमयी भवन्ती भवत्तरानिर्वचनीयमोहा ।
सा मुक्तसंसारिदशारसाभ्यां द्विस्वादमुल्लासमभुङ्क्त मिष्टम् ॥१५॥

---

कालं तस्मिन्, निपत्य संयोगं प्राप्य अभ्यन्तरे पतित्वा च, निष्पन्दतरीभवन्त्या सौन्दर्येण निमिषशून्यीभवन्त्या दत्ततया निश्चलीभवन्त्या च तया, तस्य नैषधकेशपाशस्य, अनुबन्धं सम्बन्धम् अनु पश्चात् तं त्यक्त्वा, विनीय परित्यज्य स्खलयित्वा च, गन्तुम् अन्यत्र यातुम् उड्डयितुं च, न अपारि न शक्तम्; एतच्च तत्केशपाशस्य सौन्दर्यातिशयात् अन्यत्र तु दृढबन्धनसत्त्वादिति भावः ।

अत्र श्लिष्टं साङ्गरूपकमलङ्कारः । सम्भोगशृङ्गारो रसः, माधुर्यं गुणः, वैदर्भी च रीतिः ।

"पाशः केशादिपूर्वे स्यात् तत्सङ्घे कर्णपूर्वकः । सुकर्णे च सकामश्चात् नगपद्यादिबन्धनी ॥" इति मेदिनी ।

विनीयेति स्वार्थे ण्यन् ॥१३॥

বাঙ্গালা—নলের কেশকলাপ অতিসন্ন ও ঘন ছিল; দময়ন্তীর নয়নখঞ্জন দুইটী সেই কেশকলাপের উপরে পতিত হইয়া, নিশ্চলভাবে থাকিয়া, তাহার সম্বন্ধ ত্যাগ করিয়া, অন্যত্র যাইতে পারিল না ॥১৩॥

अन्वयः—दमस्वसुः दृष्टिसरोजराजिः तस्य भूलोकभर्तुः मुख-पाणि-पाद-पद्मैः परीरम्भम् अवाप्य सबन्धुबन्धं चिरं न तत्याज ॥१४॥

भूलोकेति । दमस्वसुर्दमयन्त्याः, दृष्टी नयनद्वयमेव सरोजे पद्मद्वयं तयो राजिः पङ्क्तिः, तस्य भूलोकभर्तुः पृथिवीपालस्य नलस्य, मुखपाणिपादपद्मैः मुखपद्मेन पाणिपद्माभ्यां पादपद्माभ्याञ्च सह, परीरम्भं संयोगम् आलिङ्गनञ्च, अवाप्य प्राप्य, सबन्धूनां स्वजनानां बन्धं सम्बन्धं तं परीरम्भमेवेत्यर्थः, चिरं दीर्घकालं यावत्, न तत्याज । अपरोऽपि स्वजनो यथा स्वजनान्तरालिङ्गनं प्राप्य चिरं न त्यजति तद्वदिति भावः । दमयन्ती बहुसमयं यावत् नलस्य मुखपाणिपादानवलोकयामासेति निष्कर्षः ।

अत्र कार्य्येण दृष्टिसरोजराजौ बन्धुव्यवहारसमारोपात् समासोक्तिरलङ्कारः, निरङ्गकेवलरूपकसमासोक्त्योरङ्गाङ्गिभावेन सङ्करः; सोऽपि पुनश्छेकानुप्रासेन संसृज्यते । रसादयः पूर्ववत् ।

परीरम्भमिति "उपसर्गस्य दीर्घता" इति दीर्घः । समाना बन्धवो ज्ञातयो यस्य स सबन्धुः स्वजनः ॥१४॥

বাঙ্গালা—দময়ন্তীর নয়নপদ্ম দুইটী, নলের মুখপদ্ম, পাণিপদ্ম ও পাদপদ্মের সহিত আলিঙ্গন প্রাপ্ত হইয়া, দীর্ঘকাল যাবৎ স্বজনের সম্বন্ধ ত্যাগ করিল না ॥১৪॥

अन्वयः—सा तत्कालम् आनन्दमयी भवन्ती भवत्तरानिर्वचनीयमोहा (च सती) मुक्त-संसारि-दशा-रसाभ्यां द्विस्वादं मिष्टम् उल्लासम् अभुङ्क्त ॥१५॥

तत्कालमिति । सा दमयन्ती, तत्कालं तस्मिन् नलदर्शनसमये, आनन्दमयीभवन्ती 'अयं नल एव' इति बुद्ध्या आनन्दप्रचुरा तत्त्वज्ञानेन आनन्दात्मकब्रह्मस्वरूपा च भवन्ती सती, तथा भवत्तरः अतिशयेन भवन् जायमानः अनिर्वचनीयः वक्तुमशक्यः अनिर्वचनीयः मायाकृतः मोहः कामविकारो यस्याः सा तादृशी च सती, मुक्तसंसारिणोर्द्वयोरिव अवस्था मुक्तस्य दशा आनन्दमयत्वं संसारिणश्च दशा मोहमयत्वं तयो रसाभ्यामास्वादाभ्याम्,

इतीं नलस्त्रीभवति भाविभावा कलङ्किनीयं जनि मेति नूनम् ।
न संव्यधान्नैषधकायमायं विधिः स्वयं दूतमिमां प्रतीन्द्रम् ॥१६॥
पुण्ये मनः कस्य मुनेरपि स्यात् प्रमाणमास्ते यदघेऽपि धावत् ।
तच्चिन्ति चित्तं परमेश्वरस्तु भक्तस्य दुष्यत्ककयो रुणद्धि ॥१७॥

---

विस्वादम् आनन्दमोहात्मकविविधरसयुक्तम्, मिष्टं मधुरम्, आनन्दस्य स्वभावत एव सुस्वादत्वात् युवकयुवत्योः सन्निधाने कामविकारात्मकमोहस्यापि च सुस्वादत्वादिति भावः, उल्लासं हर्षस्फूर्तिम्, अभुक्त अनुभूतवती ।

"सत्यं ज्ञानमानन्दं ब्रह्म" इति श्रुतेर्ब्रह्म आनन्दरूपत्वात् मुक्तिदशायाश्च तद्रूपत्वात्तदानन्दमयत्वम्, संसारिदशायाश्च प्रायशैव मायाकार्यत्वात् मोहस्य च मायिकत्वात्तत्र मोहमयत्वमित्यवधेयम् ।

अत्र मुक्तदशायामानन्दमयो संसारिदशायाश्च अनिर्वचनीयमोहेति यथासंख्यादयथासंख्यमलङ्कारः । सम्भोगशृङ्गारो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥१५॥

বাঙ্গালা—'ইনি নলই' এই রূপ মনে করায় তখন দময়ন্তীর প্রচুর আনন্দ জন্মিতেছিল এবং অনির্বচনীয় কামবিকারও উপস্থিত হইয়াছিল; তাই তিনি মুক্ত অবস্থার রসে এবং সংসারি অবস্থার রসে বিবিধরসযুক্ত মধুর আনন্দ অনুভব করিতেছিলেন ॥১৫॥

**অন্বয়:**—इयं नलस्त्रीभवति भाविभावा (सती) कलङ्किनी मा जनि नूनम् इति विधिः इमां प्रति नैषधकायमायं स्वयम् इन्द्रं दूतं न संव्यधात् ॥१६॥

ननु विधाता इन्द्रयमाग्निवरुणानामन्यतममेव देवं नलवेशं कारयित्वा दमयन्तीसमीपे तत्साहाय्यनिमित्तं कथं न प्रेरितवान्; तथात्वे च तेषां नलं प्रति दौत्यप्रार्थनादिप्रक्रियालाघवं दौत्यञ्च सुष्ठुतरं स्यादिति चिरमेव जायतीं जिज्ञासां कविः समाधत्ते । इतीति । इयं दमयन्ती, नलस्य स्त्रियं कान्तिं बिभर्तीति तस्मिन् नलवेशधारिणि पुरुषान्तर इत्यर्थः, भावी दौत्यसमय एव भविष्यन् भावोऽनुरागो यस्याः सा तादृशी सती, कलङ्किनी पातिव्रत्यभङ्गेन पापिनी अपवादयुक्ता वा, मा जनि न भवतु; नूनं निश्चितम्, इति इत्थं विभाव्येत्यर्थः, विधिर्विधाता, इमां दमयन्तीं प्रति, नैषधस्य नलस्य कायो मूर्तिस्तदाकारमित्यर्थः माया कापटता यस्य तम्, स्वयम् इन्द्रम् इन्द्राद्यन्यतममिति तात्पर्य्यम्, दूतम्, न संव्यधात् न अकरोत् । दौत्यनिमित्तं नलस्य प्रेरणे तु तस्यैव मनसा वृतत्वात् तत्रैव चानुरागान्न पातिव्रत्यभङ्ग इति भावः ।

अत्र नूनमित्युपादानात् वाच्या क्रियोत्प्रेक्षालङ्कारश्छेकानुप्रासेन संसृष्टः । प्रसादो गुणः, वैदर्भी च रीतिः ।

मा जनीति मायोगे अडभावो, "न माङ्योगे" इत्यडागमनिषेधः ॥१६॥

বাঙ্গালা—নলবেশধারী অন্য পুরুষের প্রতি ভবিষ্যতে অনুরাগ উৎপন্ন হওয়ায় দময়ন্তী কলঙ্কিনী না হন, নিশ্চয় এই রূপ মনে করিয়াই বিধাতা, দময়ন্তীর নিকটে নলমূর্ত্তিধারী স্বয়ং ইন্দ্রকে দূত করিয়া পাঠান নাই ॥১৬॥

**অন্বয়:**—कस्य मुनेः अपि मनः पुण्ये प्रमाणं स्यात्, यत् अघे अपि धावत् आस्ते । परमेश्वरस्तु दुष्यत्ककयः (सन्) तच्चिन्ति भक्तस्य चित्तं रुणद्धि ॥१७॥

ननु सुरक्षिते कन्यान्तःपुरे नलस्य प्रवेशः असम्भव एव । तथा सति पुरुषान्तरानुरक्तिः पातिव्रत्यभङ्गहेतुरेवेति सर्वथा अनया अपि दमयन्त्या मनः कथं दूतं प्रति कामाकुलं जातमित्याह पुण्य इति । विषयभोगसमया राजकन्याया दमयन्त्याः का कथा, परित्यक्तसर्वविषयभोगस्य कस्य मुनेरपि मनः, पुण्ये विषये, प्रमाणं

**साऽलीकदृष्टे मदनोन्मदिष्णुः यथाप्रगल्भतया न मौनम् (१)।**
**तथैव तथ्येऽपि नले न लेभे मुग्धेषु कः सत्यमृषाविवेकः ॥१८॥**
**व्यर्थीभवद्भावपिधानयत्ना स्वरेण साथ स्मरगद्गदेन।**
**सखीचये साध्वसबद्धवाचि स्वयं तमूचे नमदाननेन्दुः ॥१९॥**

प्रमाथवत् दृढं स्यात् धावितं भवेत्? अपि तु कस्यापि नेत्यर्थः। यद् यस्मात्, अघे परदारगमनादौ पापेऽपि, धावत् शीघ्रं गच्छत् आस्ते वर्त्तते। बृहस्पतेरुतथ्यपत्नीगमनात् विश्वामित्रादीनां मेनकादिगमनाच्चेति भावः। अथ तर्हि कथमर्जुनादीनामुर्वश्यादिप्रत्याख्यानमित्याह— तु किन्तु, परमेश्वरः, कृष्णो भक्तिदर्शनजनितधनदर्शनसद्भावेन वीत्पद्यमाना करुणा दया यस्य स तादृशः सन्, तस्मिन्नपि परमेश्वरध्यायि, भक्तस्य जनस्य, चित्तम्, क्वचित् पापे प्रवर्त्तमानं निवर्त्तयति। अतः स्वभावादेव दमयन्त्या मनो नलं प्रति कामाकुलं जातमिति भावः।

अर्थापत्तिरलङ्कारश्छेकानुप्रासयोः संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः ॥१७॥

বাঙ্গালা—কোন্ মুনিরও মন, কেবল পুণ্যের প্রতিই ধাবিত হইয়া থাকে? যে হেতু, সে মন, পাপের প্রতিও ধাবিত হইয়া পড়ে। তবে, পরমেশ্বর সদয় হইয়া, নিজের ধ্যানকারী ভক্তজনের মনকে পাপকার্য্য হইতে নিবর্ত্তিত করিয়া থাকেন ॥১৭॥

**অন্বয়:**—सा अलीकदृष्टे नले मदनोन्मदिष्णुः (सती) अप्रगल्भतया यथा (पूर्वं) मौनं न लेभे; तथा एव तथ्ये नले अपि (तदानीं) मौनं न लेभे। मुग्धेषु सत्यमृषाविवेकः कः ॥१८॥

इत्थमनुपपत्तिं परिहृत्येदानीं प्रकृतमनुसरति सेति। सा दमयन्ती, अलीकदृष्टे तन्मयतया मिथ्यावलोकिते नले विषये, मदनेन कामेन उन्मदिष्णुः उन्मत्ता सती, अप्रगल्भतया निर्लज्जतया हेतुना, यथा पूर्वं मौनं तूष्णीम्भावम्, न लेभे न प्राप्तवती; अपि तु यत्किञ्चिदुक्तवत्येवेति भावः; तथैव तथ्ये सत्ये नलेऽपि विषये, तदानीं मौनं न लेभे; अपि तु यत्किञ्चिदुक्तवत्येवेत्यर्थः। ननु कथमेतदित्याह— मुग्धेषु कुतोऽपि कारणान्मोहं प्राप्तेषु जनेषु, सत्यमृषाविवेकः यथार्थायथार्थयोर्विचारः, कः? अपि तु कोऽपि नेत्यर्थः। अतो दमयन्त्यपि कामेन मोहं प्राप्ततया सत्यासत्ययोरुभयथापि विवेकं न कृतवतीति भावः।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारश्छेकानुप्रासेन संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः ॥१८॥

বাঙ্গালা—পূর্ব্বে দময়ন্তী মিথ্যাদৃষ্ট নলের প্রতি কামোন্মত্ত হইয়া, নির্লজ্জতাবশতঃ যেমন মৌন অবলম্বন করেন নাই; তেমনই সত্য নলের প্রতিও তখন মৌন অবলম্বন করেন নাই। কারণ, মুগ্ধলোকের সত্য ও মিথ্যার বিচার থাকে না ॥১৮॥

**অন্বয়:**—सखीचये साध्वस-बद्ध-वाचि (सति) अथ व्यर्थीभवद्भावपिधान-यत्ना सा नमदाननेन्दुः (सती) स्मर-गद्गदेन स्वरेण स्वयं तम् ऊचे ॥१९॥

व्यर्थीभवदिति। सखीनां चये समूहे, साध्वसेन आकस्मिकपुरुषदर्शनजनितभयेन बद्धा अवरुद्धा वाक् वाक्यं येन तस्मिन् तथोक्ते सति, अथ अनन्तरम्, व्यर्थीभवन् स्वरभङ्गाद्यसात्त्विकभावान्तरप्रकाशादेव निष्फलीभवन् भावपिधानयत्नो वेपथुप्रभृतिसात्त्विकभावगोपनप्रयासो यस्याः सा तादृशी, सा दमयन्ती, नमन् लज्जानत-

(१) यथाप प्रागल्भतया न मौनम्।

नत्वा शिरोरत्नरुचापि पाद्यं सम्पाद्यमाचारविदातिथिभ्यः ।
प्रियाक्षरालीरसधारयापि वैधी विधेया मधुपर्कतृप्तिः ॥२०॥
स्वात्मापि (१) शीलेन तृणं विधेयं देया विहायासनभूर्निजापि ।
आनन्दबाष्पैरपि कल्प्यमम्भः पृच्छा विधेया मधुभिर्वचोभिः ॥२१॥

---

स्वभावादेव अवनतीभवत् आननेन्दुर्मुखचन्द्रो यस्याः सा तादृशी सती, अथो मदुवाची गद्गदः अस्पष्टवर्णोऽति तेन लघीयसा, स्वरेण कण्ठध्वनिना, स्वयमात्मनैव, तं नलम्, जगाद उक्तवती ।

अत्र स्वभावोक्तिरलङ्कारः, स्वरभङ्गाद्यनुभावोदयादयोऽपि, छेकानुप्रासश्च तेषां संसृष्टिः । अनयोरपि शब्दः, प्रसादो गुणः, वैदर्भी च रीतिः ॥१९॥

বাঙ্গালা—সখীগণ ভয়বশতঃ আপন আপন বাক্য অবরুদ্ধ করিল এবং স্বরভঙ্গ উপস্থিত হওয়ায় দময়ন্তীরও কম্পপ্রভৃতি সাত্ত্বিকভাব গোপনের চেষ্টা ব্যর্থ হইতে থাকিল; তাহার পর তিনি অবনত মুখে কোমল ও অস্পষ্ট স্বরে নিজেই সেই দূতরূপী নলকে বলিতে লাগিলেন ।১৯।

अन्वयः—आचारविदा अतिथिभ्यः नत्वा शिरोरत्नरुचा अपि पाद्यं सम्पाद्यम्, प्रियाक्षराली-रस-धारया अपि वैधी मधुपर्कतृप्तिः विधेया ॥२०॥

किमुक्तं स्यादित्याह नत्वेति । आचारविदा शिष्टव्यवहाराभिज्ञेन जनेन, अतिथिभ्यः आगन्तुकेभ्यो जनेभ्यः, नत्वा नमस्कृत्य, शिरोरत्नस्य मस्तकस्थमणेः रुचा प्रभयापि, पाद्यं पादप्रक्षालनजलम्, सम्पाद्यं तदभावे कर्त्तव्यम् । सर्वथा शिरोरत्नासम्भवात् शिरोरत्नरुचापदं शिरोमात्रस्याप्युपलक्षणम् । तथापि भवते नत्वा शिरोरत्नरुचा पाद्यं सम्पाद्यत इति भावः । तथा प्रियाक्षराली प्रीतिजनकवाक्यसमूहस्तस्या रसो माधुर्यमेव रसो जलं तस्य धारया प्रवाहेणापि. वैधी विधिबोधिता न पुनरनुनयमात्रप्रयुक्तेति भावः, मधुपर्कस्य तृप्तिः सन्तोषः, विधेया मधुपर्कसामग्र्यभावे कर्त्तव्या, प्रियवाक्यैरेव मधुपर्कः कर्त्तव्य इत्यर्थः । अतो मयाप्यसौ विधीयत इत्याशयः ।

अत्र शिरोरत्नरुचि पाद्यत्वारोपस्य प्रियाक्षरालीमाधुर्ये जलत्वारोपस्य च प्रकृतातिथिसत्कारोपयोगितया परिणामालङ्कारः । स च पूर्वार्द्धे भिन्नाधिकरणः, परार्द्धे तु श्लिष्टः समानाधिकरणश्च ; "अतिथीनाचरेत् दूरात्" इत्यादिवदुदाहरणवत् । छेकानुप्रासश्च तेन संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥२०॥

বাঙ্গালা—মহাশয় ! সদাচারাভিজ্ঞ লোক, অতিথিকে নমস্কার করিয়া, মস্তকস্থ রত্নের কিরণ দ্বারাও তাঁহার পাদ্য সম্পাদন করিবেন এবং প্রীতিজনক বাক্যের রসধারা দ্বারাও বিধিবোধিত মধুপর্কের তৃপ্তি জন্মাইবেন ।২০।

अन्वयः—आचारविदा अतिथिभ्यः शीलेन स्वात्मा अपि तृणं विधेयम्, निजा अपि आसनभूः विहाय देया, आनन्दबाष्पैः अपि अम्भः कल्प्यम्, मधुभिः वचोभिः पृच्छा विधेया (च) ॥२१॥

स्वेति । अत्रापि आचारविदा अतिथिभ्य इत्यनुवर्त्तते । शीलेन स्वभावेन, न पुनरन्योपदेशापेक्षया स्वात्मापीति भावः । स्वात्मापि धनादीनां का कथा निजशरीरमपि, तृणं तृणनिर्विशेषं तात्त्वम्, विधेयं तदभावे कर्त्तव्यम् । निजा स्वकीयापि, आसनभूः उपवेशनस्थानम्, विहाय परित्यज्य देया आसनभूर्योग्या दातव्या । आनन्दबाष्पैरपि तदागमनजनितानन्दप्रसीकाश्रुभिरपि, अम्भः आचमनजलम् अर्घ्यं तदभावे कल्पनीयम् । तथा

---

(१) स्वात्मापि … ।

पदोपहारेऽनुपनयताऽपि सम्भाव्यतेऽपां त्वरयापराधः।
तत्कर्त्तुमर्हाञ्जलिबन्धनेन सुसंवृति-[१] प्राञ्जलताऽपि तावत् ॥२२॥
पुरः परित्यज्य मयात्यसर्जि स्वमासनं तत् किमिति क्षणं न।
अनर्हमप्येतदलङ्क्रियेत प्रयातुमीहा यदि चान्यतोऽपि ॥२३॥

काश्चिन्मूर्द्धैः, कथाभिर्वार्त्ताभिः, पृच्छा स्वागतकुशलादिप्रश्नः, विधेया कर्त्तव्या। अतो मयार्घ्यादीनि क्रियन्त इति भावः।

अत्रापि स्वात्मनि तृणत्वारोपस्य आनन्दबाष्पेषु जलत्वारोपस्य च प्रकृतातिथिसत्कारोपयोगितया परिणामालङ्कारः। स च प्रथमे पादे समानाधिकरण्यः, तृतीये तु भिन्नाधिकरण्यः। तथा स्वात्मा तृणं क्रियेऽत्रेत्यत्र क्रियेऽत्रेति च पुंस्त्वनिर्देशेन "उद्देश्यविधेययोरुद्देश्यवचनलिङ्गमाख्यातस्य" इत्यनुशासनविरोधात् च्युतसंस्कारो-दोषः। किञ्च विधेयपदस्य निःकथनात् कथितपदतादोषोऽपि। तयोः समाधानाय विधेयमित्यत्र विधेय इति पाठः, पृच्छा इत्यत्र च 'पृच्छा च कार्य्या' इति पाठो विधेयः। गुणरीती पूर्ववत् ॥२१॥

বাঙ্গালা—সদাচারজ্ঞ লোক, স্বভাবতই নিজের শরীরটীকেও অতিথির জন্য আসন করিবেন; নিজের উপবেশনস্থানও পরিত্যাগ করিয়া অতিথিকে দিবেন; আনন্দাশ্রু দ্বারাও অতিথির আচমনের জল কল্পনা করিবেন এবং মধুর বাক্যে স্বাগত ও কুশলাদি জিজ্ঞাসা করিবেন ॥২১॥

अन्वयः—यत् आचारविदा पदोपहारे त्वरया अपाम् अनुपनयता अपि अपराधः सम्भाव्यते; तत् अञ्जलिबन्धनेन अपि तावत् सुसंवृति प्राञ्जलता कर्त्तुम् अर्हा ॥२२॥

पदेति। अत्र तदित्यनेन नियतं सम्बध्यमानत्वात् यदिति लभ्यते। आचारविदा इति चानुवर्त्तते। पदोपहारे अतिथेश्चरणप्रक्षालनोपचारविषये, त्वरया त्वरितभावेन, अपां जलानाम्, अनुपनयतापि अनानयनमपि, अपराधः, सम्भाव्यते मन्यते; तत्तस्मात्, अञ्जलिः करपुटस्य बन्धनेन सम्पादनेनापि करयोगेन, तावदाकालवधि, सुसंवृती अतिथिसत्कारोपकरणायोजनविषये प्राञ्जलता सरलता अकपटतेति यावत्, कर्त्तुम् अर्हा योग्या उचितेत्यर्थः। तेन च तदपराधनिवृत्तिर्भवतीति मयाञ्जलिः क्रियत इत्याशयः।

अत्र पदार्थे वृत्त्यनुप्रासोऽलङ्कारः। माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥२२॥

বাঙ্গালা—অতিথির চরণপ্রক্ষালনের জন্য সত্বর যে জল না আনা হয়, তাহাকেও আচারজ্ঞ লোক অপরাধ বলিয়া মনে করেন; অতএব হাত যোড় করিয়াও, আতিথ্য-সামগ্রী আয়োজনের বিষয়ে সরলতা করা আচারজ্ঞ লোকের পক্ষে উচিত ॥২২॥

अन्वयः—पुरः मया स्वम् आसनं परित्यज्य अत्यसर्जि; यदि च अन्यतः प्रयातुम् अपि ईहा (वर्त्तते, तथापि) अनर्हम् अपि तत् एतत् किमिति क्षणं न अलङ्क्रियेत ॥२३॥

पुर इति। पुरः प्रथममेव, मया स्वं निजम् आसनं परित्यज्य, अत्यसर्जि भवते दत्तम्। यदि च अन्यतः अन्यस्मिन् स्थाने, प्रयातुं गन्तुमपि, ईहा भवत इच्छा वर्त्तते, तथापि अनर्हं भवतः अयोग्यमपि, तदिदं-मदासनम्, किमिति कथम्, क्षणं न अलङ्क्रियेत उपवेशनेन भवता शोभितं विधीयेत; ममानुरोधादस्मिन्नासने स-म्भ्रमता अवस्थातव्यमिति भावः।

अत्र प्रथमे पादे छेकानुप्रासोऽलङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः ॥२३॥

বাঙ্গালা—প্রথমেই আমি নিজের আসনখানি পরিত্যাগ করিয়া তাহা আপনাকে

(१) सुसंवृतिः ...

निवेद्यतां हन्त समापयन्तौ शिरीषकोषम्रदिमाभिमानम्।
पादौ कियद्दूरमिमौ प्रयासे निधित्सते तुच्छदयं मनस्ते ॥२४॥
अनायि देशः कतमस्त्वयाद्य वसन्तमुक्तस्य दशां वनस्य।
त्वदाप्तसङ्केततया कृतार्था श्राव्यापि नानेन जनेन संज्ञा ॥२५॥

---

দিয়াছি; আপনার যদি অন্যত্র যাইবারও ইচ্ছা থাকে; তথাপি আপনার পক্ষে অযোগ্য হইলেও কিছুকালের জন্য এই আসনখানিকে আপনি কেন অলঙ্কৃত করিতেছেন না? ॥২৩॥

**অন্বয়ঃ**—(হে মহাশয়!) তুচ্ছদয়ং তে মনঃ শিরীষকোষ-ম্রদিমাভিমানং সমাপয়ন্তৌ (ইব) ইমৌ পাদৌ কিয়দ্দূরং প্রয়াসে নিধিৎসতে; হন্ত! (তৎ) নিবেদ্যতাম্ ॥২৪॥

নিবেদ্যতামিতি। হে মহাশয়! তুচ্ছা শূন্যা দয়া যস্য তত্তাদৃশম্, তে তব, মনঃ কর্তৃ, শিরীষকোষস্য শিরীষকুসুমমুকুলস্য ম্রদিম্নঃ কোমলতায়া অভিমানং মত্তোঽন্যৎ কোমলং নাস্তীত্যহঙ্কারম্, সমাপয়ন্তৌ স্বকীয়-ম্রদিমাতিশয়েন নিবর্ত্তয়ন্তাবিব স্থিতৌ, ইমৌ দৃশ্যমানৌ, পাদৌ ত্বদীয়াবেব চরণৌ, কিয়দ্দূরং যাবৎ, প্রয়াসে গমনপরিশ্রমে, নিধিৎসতে নিধাতুমিচ্ছতি নিয়োক্তুমিচ্ছতীত্যর্থঃ। হন্ত খেদে। তন্নিবেদ্যতাং কথ্যতাম্। যত্র গন্তব্যং তদুচ্যতামিতি নিষ্কর্ষঃ।

অত্র সমাপয়ন্তাবিতি সম্ভাবনাপ্রতীতেরিবাদ্যভাবাচ্চ প্রতীয়মানা ক্রিয়োৎপ্রেক্ষালঙ্কারঃ প্রথমপাদগতচ্ছেকানুপ্রাসেন সংসৃজ্যতে। উৎপ্রেক্ষয়া চ পাদয়োঃ কোমলতাতিশয়ো ব্যজ্যত ইত্যলঙ্কারেণ বস্তুধ্বনিঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ।

"শূন্যন্তু বশিকং তুচ্ছরিক্তকে" ইত্যমরঃ ॥২৪॥

**বাঙ্গালা**—মহাশয়! আপনার চরণ দু'খানি শিরীষপুষ্প কলিকারও কোমলতার অভিমানকে যেন নষ্ট করিয়া দিয়াছে; হায় এইরূপ এই চরণ দু'খানিকে আপনার নির্দ্দয় মন কতদূর পর্য্যন্ত গমনের পরিশ্রমে নিযুক্ত করিতে ইচ্ছা করিতেছে; তাহা বলুন ॥২৪॥

**অন্বয়ঃ**—অদ্য ত্বয়া কতমঃ দেশঃ বসন্তমুক্তস্য বনস্য দশাম্ অনায়ি? অনেন জনেন ত্বদাপ্তসঙ্কেততয়া কৃতার্থা সংজ্ঞা অপি ন শ্রাব্যা? ॥২৫॥

অনায়ীতি। অদ্য ত্বয়া কতমো দেশঃ, বসন্তেন কালেন মুক্তস্য পরিত্যক্তস্য বনস্য, দশামবস্থাম্ অনায়ি প্রাপিতঃ। বসন্তকালেন পরিত্যক্তং বনং যথা শোভাহীনং জায়তে, তথা ত্বয়া ত্যক্তোঽপি স দেশঃ শোভাহীনো জাত ইত্যাশয়ঃ। তথা অনেন মৎস্বরূপেণ জনেন, ত্বয়ি আপ্তঃ পিতৃমাতৃনির্দ্দিষ্টঃ সঙ্কেতো বাচকত্বসম্বন্ধো যয়া তস্যা ভাবস্তয়া হেতুনা, কৃতার্থা সফলজন্মা, সংজ্ঞা নাম, অপি কিম্, ন শ্রাব্যা ন শ্রোতুং যোগ্যা?। কতমস্মিন্ দেশে তব নিবাসঃ কিঞ্চ তে নাম, তৎ কথয়েতি সমুদায়ার্থঃ।

অত্র দশামিব দশামিতি সাদৃশ্যাক্ষেপাদসম্ভবদ্বস্তুসম্বন্ধা নিদর্শনালঙ্কারঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥২৫॥

**বাঙ্গালা**—মহাশয়! অদ্য আপনি কোন দেশকে বসন্তকালপরিত্যক্ত বনের অবস্থা প্রাপ্ত করাইয়াছেন! এবং আপনার বিষয়ে নির্দ্দিষ্ট বলিয়া কৃতার্থ নামটীকে কি এই ব্যক্তি শুনিতে পাইবে না? ॥২৫॥

तीर्थः किमर्णोनिधिरेव नैव सुरक्षितेऽभूदिह यत् प्रवेशः ।
फलं किमेतस्य तु साहसस्य न तावदद्यापि विनिश्चिनोमि ॥२६॥
तव प्रवेशे सुकृतानि हेतुः मन्ये मदक्ष्णोरपि तावदत्र ।
न लक्षितो रक्षिभटैर्यदाभ्यां पीतोऽसि तन्वा जितपुष्पधन्वा ॥२७॥
यथाकृतिः काचन ते यथा वा दौवारिकान्धङ्करणो च शक्तिः ।
कृष्णो रुचीभिर्जितकाञ्चनाभिः तथासि पीयूषभुजां सनाभिः ॥२८॥

---

अन्वयः—सुरक्षिते इह यत् प्रवेशः अभूत्, एव किम् अर्णोनिधिः एव न तीर्णः । तु एतस्य साहसस्य किं फलम्, (तत्) तावत् अद्य अपि न विनिश्चिनोमि ॥२६॥

तीर्ण इति । सुरक्षिते द्वारपालैः सावधानतया रक्षिते, इह कन्यान्तःपुरे, तव यत् प्रवेशः अभूत्, एव किम्, अर्णोनिधिः समुद्र एव, न तीर्णः बाहुभ्यामुत्तीर्णः; अपि तु तीर्ण एवेत्यर्थः । बाहुभ्यां समुद्रतरणं यथा सुदुष्करम्, तथा सुरक्षितेऽस्मिन्नन्तःपुरे तव प्रवेशोऽपि सुदुष्कर एवेति भावः । तु किन्तु, एतस्य साहसस्य हठकारित्वस्य, किं फलं प्रयोजनम्, तत्तावत्, अद्यापि इदानीमपि, न विनिश्चिनोमि न निर्धारयितुमर्हामि । तत् त्वमेव तत्फलं ब्रूहीति भावः ।

अत्राप्युक्तभावार्थानुसारिणा सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धा निदर्शनालङ्कारः प्रथमपादस्थितच्छेकानुप्रासेन संसृष्टः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"अर्णोऽर्णवस्तोयपाथोयर्णोनीरवारीराम्बुसम्बरम्," इत्यमरः ॥२६॥

বাঙ্গালা—এই সুরক্ষিত অন্তঃপুরের ভিতরে আপনার যে প্রবেশ হইয়াছে, ইহা কি আপনি বাহুদ্বারা সমুদ্রই পার হন নাই? কিন্তু এই সাহসের যে কি প্রয়োজন, তাহা আমি এখনও নিশ্চয় করিতে পারিলাম না ॥২৬॥

अन्वयः—अत्र तावत् तव प्रवेशे मदक्ष्णोः, सुकृतानि अपि हेतुः (इति) मन्ये । यत् रक्षिभटैः तन्वा जितपुष्पधन्वा (त्वं) न लक्षितः, (किन्तु) आभ्यां पीतः असि ॥२७॥

तवेति । अत्र सुरक्षिते कन्यान्तःपुरे, तावद्वाक्यालङ्कारे, तव प्रवेशे विषये, मम अक्ष्णोश्चक्षुषोः, सुकृतान्यपि पुण्यान्येव, हेतुरित्यहं मन्ये । यद् यस्मात्, रक्षिभटैर्द्वारपालकयोद्धृभिः, तन्वा शरीरेण, जितः सौन्दर्य्येण पराभूतः पुष्पधन्वा कामदेवो येन स तथोक्तस्त्वम्, न लक्षितो न दृष्टः, किन्तु आभ्यां मदक्षिभ्याम्, पीतः सादरं दृष्टोऽसि । रक्षिभटानां तादृशपुण्याभावान्न लक्षितः, मदक्ष्णोस्तु तादृशपुण्यसत्त्वात्ताभ्यां लक्षित इति मदक्ष्णोः पुण्यान्येव तव प्रवेशे हेतुरिति भावः । आत्मश्लाघा पुण्यानामभिव्यक्तिरुपचारात् ।

अत्र जितपुष्पधन्वेति अयथार्थेन सादृश्याक्षेपादुपमालङ्कारश्छेकानुप्रासेन संसृष्टः । प्रसादो गुणः, वैदर्भी च रीतिः ॥२७॥

বাঙ্গালা—এই অন্তঃপুরে আপনার প্রবেশ করার বিষয়ে আমার নয়নযুগলের পুণ্যই একমাত্র কারণ ইহা আমি মনে করি। যে হেতু, শরীর দ্বারা কামবিজয়ী আপনাকে, দৌবারিক যোদ্ধারা দেখিল না; কিন্তু আমার নয়নযুগল দেখিয়াছে ॥২৭॥

अन्वयः—यथा ते काचन आकृतिः, यथा वा दौवारिकान्धङ्करणी शक्तिः यथा वा जितकाञ्चनाभिः रुचीभिः कृष्णः (च), तथा (त्वं) पीयूषभुजां सनाभिः असि ॥२८॥

यथेति । हे पुरुषवर ! यथा ते तव, काचन अलौकिकसौन्दर्य्यादर्निर्वचनीया, आकृतिः रूपम्, यथा

न मन्मथस्त्वं स हि नास्तिमूर्त्तिः न चाश्विनेयः स हि नाद्वितीयः ।
चिह्नैः किमन्यैरथवा तवेयं श्रीरेव ताभ्यामधिका विशेषः ॥२९॥
आलोकतृष्णोत्तरलोक !   यस्त्वाम् असूत पीयूषमयूखमिन्दुम् ।
कः स्पर्द्धितुं धावति साधु सार्द्धम् उदन्वता मन्वयमन्ववायः ॥३०॥

या दौवारिकाणाम् चक्षुर्हरणी दृष्टिशक्तिनाशिनी शक्तिः सामर्थ्यं च वर्त्तते ; यथा वा जितं पीतत्वाधिक्येन पराभूतं काञ्चनं स्वर्णं, याभिस्ताभिस्तथोक्ताभिः, रुचोभिः शरीरद्युतिभिः, त्वः काम्यमसि ; तत्र तस्मात्, श्रीयुक्तस्य अमृतभोजिनां देवानाम्, समाभिजातिः, असीति प्रतीयत इति शेषः । अन्यथा अनिर्वचनीयाकृत्यादयो न सम्भवन्तीति भावः ।

अत्र देवजातिसम्भवीति प्रति अलौकिकाकृतिमत्त्वादीनां पदार्थानामेव हेतुत्वात् समुच्चयोऽलङ्कारः; न पुनरनुमानं हेतूनां व्यभिचारात् । दृश्यते हि नल एव श्लोकस्य अस्य विभावप्रतीतिरन्यैव भावनामार्गे फलमन्यत्वात् अत्रोक्त अक्षरादि दृढः, दुर्लभो गुणः, वैदर्भी च रीतिः ।

अनया अन्या: क्रियन्ते अमर्येति चक्षुर्हरणी । "अपराजितप्रियाश्वस्य लसुभगाद्यः मूलहारे क्तः ल्युट् करणे" इति ल्युट् प्रत्ययः ॥२८॥

বাঙ্গালা—যে হেতু আপনার আকৃতি অনির্বচনীয় সুন্দর, শক্তি ও দ্বারপালদিগের দৃষ্টিশক্তিনাশক এবং স্বর্ণবিজয়ী শরীরকান্তি দ্বারাও আপনি স্পৃহণীয়; সেই হেতু আপনি দেবতাদের জাতিই হইবেন বলিয়া আমি মনে করি ।২৮।

अन्वयः—(हे सुन्दर ! )त्वं मन्मथः न, हि सः अस्तिमूर्त्तिः न (भवति) आश्विनेयः वा न, हि सः अद्वितीयः न (भवति) । अथवा अन्यैः चिह्नैः किम्, ताभ्याम् अधिका इयं तव श्रीः एव विशेषः ॥२९॥

एवं देवसामान्यत्वेन निश्चित्य योग्यतया तद्विशेषत्वेन सन्दिहाना वितर्कयति नेति । हे सुन्दर ! त्वं मन्मथः कामदेवो न भवसि ; हि यस्मात्, स मन्मथः, अस्ति विद्यमाना मूर्त्तिः शरीरं यस्य स तादृशो न भवति शिवेन दग्धत्वात् । त्वं पुनरस्तिमूर्त्तिरेवेति भावः । त्वम् आश्विनेयः, कश्चिदश्विनीकुमारो वा न भवसि ; हि यस्मात्, स आश्विनेयः, अद्वितीयो द्वितीयसहचररहितो न भवति, तयोर्नियमात् । त्वं पुनरेकाकी एवासि । अत एकत्वात् अद्वितीयाभावात् मध्यान्तरमाह अथवेति । अन्यैः चिह्नैः लक्षणैः, किं प्रयोजनम्, अपि तु किमपि नेत्यर्थः । यतस्ताभ्यां मन्मथाश्विनेयाभ्याम्, अधिका अतिरिक्ता, इयं दृश्यमाना, तव श्रीः शोभा, विशेषो व्यतिरेकः तयोर्भेदज्ञापिकेत्यर्थः ।

अत्र पूर्वार्द्धे प्रकृते नले मन्मथाश्विनेययोः सन्देहात्मके च तन्निरासाक्षेपगर्भः सन्देहोऽलङ्कारः ; परार्द्धे च मन्मथाश्विनेयाभ्यां श्रिया नलस्याधिक्यात् व्यतिरेकालङ्कारस्य द्वयमपि निरपेक्षतया संसृष्टिः । रसादयः पूर्ववत् ।

अस्तीति तिङन्तप्रतिरूपकमव्ययम् । तथा च मन्दारमञ्जर्याभिधायां समस्तार्थ वचनम् "अस्तिक्षीरा नास्तिक्षीरा" इति ॥२९॥

বাঙ্গালা—হে সুন্দর ! আপনি কামদেব নহেন ; যে হেতু তিনি শরীর ধারণ করেন না ; আবার আপনি কোন অশ্বিনীকুমারও নহেন ; যে হেতু তিনিও দ্বিতীয় সহচর-শূন্য হইয়া থাকেন না । অথবা অন্যান্য লক্ষণ উল্লেখ করার প্রয়োজন কি ; তাঁহাদের অপেক্ষা আপনার এই অতিরিক্ত সৌন্দর্য্যই পরস্পর ভেদসূচক ॥২৯॥

भूयोऽपि बाला नलसुन्दरं तं मत्वाऽमरं रक्षिजनाक्षिबन्धात् ।
आतिथ्यचाटूक्त्यपदिश्य तत्स्थां श्रियं प्रियस्यास्तुत वस्तुतः सा ॥२१॥
वाग्जन्मवैफल्यमसह्यशल्यं गुणाद्भुते वस्तुनि मौनिता चेत् ।
खलत्वमल्पीयसि जल्पितेऽपि (१) तदस्तु बन्दिभ्रमभूमितैव ॥२२॥

---

अन्वयः—(हे) आलोक-वशीकृत-लोक ! यः पीयूषमयूखम् एवं त्वाम् असूत ; अयं कः अन्वयः उदन्वता सार्द्धं साधु स्पर्द्धितुं धावति ॥३०॥

आलोकेति । नन्विति सम्बोधने । आलोकेन दर्शनेन उद्योतेन च वशीकृता आह्लादिता लोका येन तत्सम्बोधनम् । यः अन्वयः, पीयूषमयमिव मयूखः कान्तिर्यस्य तम् अमृतकिरणञ्च, एवं दृश्यमानं त्वाम्, असूत उत्पादितवान् ; अयं सः, कः अन्वयी वंशः, उदन्वता समुद्रेण, सार्द्धं सह, साधु सम्यक्, स्पर्द्धितुं पीयूषमयूखप्रसवकारित्वादस्यमपि तव तुल्य एवेति स्पर्द्धां कर्त्तुम्, सत्वरं धावति गच्छति ; उदन्वतोऽपि पीयूषमयूखचन्द्रप्रसवकारित्वादिति भावः । कस्मिन् वंशे जातोऽसीति ब्रूहीति निष्कर्षः ।

अत्रार्थी पूर्णोपमालङ्कारः, प्रथमतृतीययोः पादयोश्छेकानुप्रासः, चतुर्थे च वृत्त्यनुप्रास इति सर्वेषां संसृष्टिः । पूर्व्वानुरागी रसः, माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥३०॥

বাঙ্গালা—হে পরমসুন্দর ! আপনি দর্শন দ্বারাই সমস্ত লোককে সন্তুষ্ট করিয়া থাকেন ; অতএব যে বংশ, অমৃততুল্য কান্তিসম্পন্ন এই রূপ আপনাকে উৎপাদন করিয়াছে ; সেই কোন্ বংশ, সমুদ্রের সহিত সম্যক্ ভাবে স্পর্দ্ধা করিবার জন্য ধাবিত হইতেছে ? ।৩০।

অন্বয়—সা বালা নলসুন্দরং তং রক্ষিজনাক্ষিবন্ধাত্ অমরং মত্বা আতিথ্যচাটূনি অপদিশ্য তত্স্থাং বস্তুতঃ প্রিয়স্য শ্রিয়ং ভূয়ঃ অপি অস্তুত ॥৩১॥

भूय इति । सा बाला दमयन्ती, नलसुन्दरं नलतुल्यमनोरममूर्त्तिम्, तं पुरुषम्, रक्षिजनानां द्वारपालानाम् अक्षिबन्धात् चक्षुःप्रतिरोधात् आत्मनः प्रभावेण दृष्टिशक्तिलोपकरणादित्यर्थः, अमरं कञ्चिद्देवं मत्वा, आतिथ्यचाटूनि अतिथिसत्कारोपयोगीनि प्रियवाक्यानि, अपदिश्य व्याजीकृत्य, तस्मिन् पुरुषे तिष्ठतीति तत्स्था ताम्, वस्तुतः सत्यभावेन, प्रियस्य नलस्यैव, श्रियं शोभाम्, भूयः पुनरपि, अस्तुत प्रशंसितवती । अतो न पातिव्रात्यभङ्ग इति भावः ।

अत्र च्छेकानुप्रासोऽलङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ॥३१॥

বাঙ্গালা—দময়ন্তী, নলের ন্যায় সুন্দর সেই পুরুষটীকে দৌবারিকগণের দৃষ্টিশক্তি লোপ করায় কোন দেবতা মনে করিয়া, সেই পুরুষে থাকিলেও বাস্তবিক পক্ষে সে শোভা নলেরই ছিল ; তাই পুনরায় সেই শোভার প্রশংসা করিতে লাগিলেন ।৩১।

অন্বয়ः—गुणाद्भुते वस्तुनि चेत् मौनिता (क्रियते ; तदा) वाग्जन्मवैफल्यम् असह्यशल्यं (स्यात्) । अल्पीयसि जल्पिते अपि खलत्वम् (आयाति) तत् बन्दि-भ्रम-भूमिता एव अस्तु ॥३२॥

अथ स्तोतुं दमयन्त्येवादौ भूमिकां करोति । वागिति । गुणैः सौन्दर्य्यवीर्य्यादिभिः अद्भुते आश्च-

---

(१) ... जल्पिते तु ।

कन्दर्प एवेदमविन्दत त्वां पुण्येन मन्ये पुनरन्यजन्म।
यत्त्र्यक्षीशचक्षुःशिखिहुताशकुण्डे जुहाव यन्मन्दिरमिन्द्रियाणाम्॥३३॥
शोभाशयोभिर्जितमस्य वर्णं करोषि लज्जागुरुमौलिमेनम्।
दस्रौ हठप्रोद्धरबाहुदस्रौ कन्दर्पमप्युज्झितरूपदर्पम्॥३४॥

---

ऽन्यपि, वस्तुनि पदार्थे, चेद् यदि, मौनिता तूष्णीम्भावः, क्रियते केनापीति शेषः; तदा तस्य वाक्जन्मनो वाक्प्रयत्नस्य: वैफल्यं निरर्थकत्वम्, असह्यमत्यन्तम् असहनीयगात्रप्रविष्टशल्यस्वरूपं स्यात्। यतो गुणाद्भुतं वस्तु वाचा सर्वथैव प्रशंसनीयमिति भावः। तदा अन्यमेव प्रश्नमानित्याह— अत्युक्तिरपि बहुगुणेषु अल्पत्वे, अल्पिते वाचा प्रशंसितेऽपि, खलत्वं क्रूरत्वम्, आयातीति शेषः; तेनैव गुणाद्भुतस्य भङ्ग्या खर्वीकरणादिति भावः। तत् तस्मात्, बन्दिनः स्तुतिपाठकस्य यो भ्रमः अत्युक्तिप्रशंसाकारित्वादयं स्तुतिपाठक एवेति भ्रान्तिस्तस्य भूमिता आश्रयतैव, अस्तु मयि भवतु। अतः खलत्वप्रसङ्गदुःखनिवारणार्थं खलतापातनिवारणार्थञ्च बन्दिभ्रमभूमितामङ्गीकृत्यापि गुणाद्भुतं भवन्तं यथाशक्ति स्तौमीति भावः।

अत एवात्र अप्रस्तुतगुणाद्भुतसामान्यात् प्रस्तुतस्य गुणाद्भुतस्य तस्य पुरुषस्य प्रतीतेरप्रस्तुतप्रशंसालङ्कारः; असह्यमत्यन्तमिति निरङ्गं केवलरूपकं वाचनयोरङ्गाङ्गिभावेन सङ्करः; सोऽपि पुनर्न्यक्कारानुप्रासेन संसृज्यते। माधुर्यं गुणः, वैदर्भी च रीतिः॥३२॥

বাঙ্গালা—সৌন্দর্য্যপ্রভৃতি গুণ দ্বারা যে বস্তু আশ্চর্য্য বলিয়া প্রতীতি হয়, সে বস্তুর বিষয়ে যদি কেহ মৌন অবলম্বন করে; তাহা হইলে, তাহার বাক্শক্তির উৎপত্তি নিষ্ফল এবং সেই নিষ্ফলতাই তাহার নিকট অসহ্য শল্যস্বরূপ; আবার সে বিষয়ে অতি-অল্পপ্রশংসা করিলেও খলতাই আসিয়া পড়ে। অতএব আমার উপরে স্তুতিপাঠকের ভ্রমই হউক ॥৩২॥

অন্বয়ঃ—कन्दर्पः एव पुण्येन त्वाम् इदम् अन्यजन्म पुनः अविन्दत (इति) मन्ये। यत् (सः) त्र्यक्षीश-चक्षुःशिखि-हुताश-कुण्डे इन्द्रियाणां मन्दिरं जुहाव॥३३॥

प्रस्तुतां स्तुतिमारभते कन्दर्प इति। कन्दर्पः कामदेव एव, पुण्येन, त्वां त्वत्स्वरूपम्, इदं दृश्यमानम्, अन्यजन्म जन्मान्तरम्, पुनरविन्दत पुनरलभत इत्यहं मन्ये उत्प्रेक्षयामि। तस्य तादृशं पुण्यं कुत इत्याह— यद् यस्मात्, स कन्दर्पः त्र्यक्षीशस्य महादेवस्य यत् चक्षुः नेत्रम् अपि तृतीयं नयनं तदेव हुताशस्य अग्नेः कुण्डं तस्मिन्, इन्द्रियाणां चक्षुरादीनाम्, मन्दिरं भवनं शरीरमित्यर्थः, जुहाव हुतवान् निक्षिप्तवान्। कामदेवो जन्मान्तरे अत्यन्तसुन्दरशरीरलाभकामनया महादेवस्य तृतीयनयनात्मके अग्निकुण्डे स्वशरीरनिक्षेपजनितपुण्येनैव भवद्रूपमिदं जन्मान्तरं लब्धवानित्यर्थः। अन्योऽप्येवं कामयमानो वह्नौ स्वशरीरं जुहोतीति। भवान् खलु कामदेवादपि सुन्दरतर इति भावः।

अत्र पूर्वार्द्धे वाच्या क्रियोत्प्रेक्षालङ्कारः, परार्द्धे च तादृशाग्निकुण्डे कामेन स्वशरीरस्य हवनाया शीलकरणाद्भावेऽपि तत्सम्बन्धातिशयोक्तिः, तृतीयपादे छेकानुप्रासः, अन्यत्र तु वृत्त्यनुप्रास इति सर्वेषां मिथो निरपेक्षतया संसृष्टिः। माधुर्यं गुणः, वैदर्भी च रीतिः॥३३॥

বাঙ্গালা—কামদেবই পুণ্যের বলে আপনার স্বরূপ এই জন্মান্তর আবার লাভ করিয়াছেন ইহা আমি মনে করি। যে হেতু, সেই কামদেব, মহাদেবের তৃতীয়নয়নরূপ অগ্নিকুণ্ডে নিজের শরীর বিসর্জ্জন করিয়াছিলেন ॥৩৩॥

अवैमि हंसावलयो वलक्षाः त्वत्कान्तिकीर्त्तेश्चपलाः पुलाकाः ।
उड्डीय युक्तं पतिताः स्रवन्ती वेशन्तपूरं परितः प्लवन्ते ॥२५॥

---

अन्वयः—( हे अवितीयसुन्दर ! त्वं ) शोभा-यशोभिः जितशैव-शैलम् ऐलं हठ-श्री-हरणात् लज्जा-गुरु-मौलिं करोषि ; शोभा-यशोभिः जित-शैव-शैलौ दस्रौ हठ-श्री-हरणात् उदस्रौ करोषि ; शोभा-यशोभिः जितशैव-शैलं कन्दर्पम् अपि हठ-श्री-हरणात् उज्झितकदर्पं करोषि ॥२४॥

शोभेति । हे अवितीयसुन्दर ! त्वम्, शोभायाः कान्तेः यशोभिः सुख्यातिभिः करणैः, जितः शैवः शिवसम्बन्धी शैलः कैलासपर्वतो येन तं तथोक्तम्, ऐलम् इलायाः पुत्रं प्रसिद्धसुन्दरं पुरूरवसम्, हठेन बलेन श्रियः कान्तेः हरणात् आदानात् हेतोः, लज्जया गुरुभारेण भारवत्तया अवनतः मौलिर्मस्तकं यस्य तं तादृशम्, करोषि । बलेन शोभाहरणे अपरोऽपि भूतपूर्वशोभावान् लज्जया अवनतमस्तको भवति । पुरूरवा नाम राजा स्वापेक्षया भवन्तं नितान्तसुन्दरमालक्ष्य लज्जया अवनतमस्तको भवतीति निष्कर्षः । तथा शोभायशोभिः जितशैवशैलौ, दस्रौ अश्विनीकुमारौ, हठश्रीहरणात्, उदस्रौ उद्गतनयनजलौ करोषि । अश्विनीकुमारावपि स्वस्वापेक्षया भवन्तमत्यन्तसुन्दरं दृष्ट्वा दुःखेन रुदत इति स्फुटार्थः । तथा शोभायशोभिः जितशैवशैलम्, कन्दर्पं कामदेवमपि, हठश्रीहरणात्, उज्झितस्त्यक्तः कदर्पः सौन्दर्य्यगर्वो येन तं तादृशम्, करोषि । कामदेवोऽपि भवन्तं स्वापेक्षया विशेषसुन्दरं ज्ञात्वा स्वकीयसौन्दर्य्यगर्वं त्यजतीति तात्पर्य्यार्थः ।

अत्र ऐल-दस्र कन्दर्पाणां तत्तत्करणासम्बन्धेऽपि तत्तत्करणसम्बन्धात् तिस्रः अत्युक्तयोऽतिशयोक्तयः, करोषीत्येकया क्रियया ऐल-दस्र-कन्दर्पाणां कर्म्मतयाभिसम्बन्धात् तुल्ययोगिता, प्रथमे पादे वृत्त्यनुप्रासः, शैवशैलमित्यत्र छेकानुप्रासः, अन्यत्र सर्वत्र तु छेकानुप्रास इत्येतेषां परस्परनिरपेक्षत्वात् संसृष्टिः । माधुर्य्यं गुणः, वैदर्भी च रीतिः ।

"नासत्यावश्विनौ दस्रावाश्विनेयौ च तावुभौ" इत्यमरः ॥२४॥

বাঙ্গালা—হে অদ্বিতীয়সুন্দর ! প্রসিদ্ধসুন্দর রাজা পুরূরবা আপন সৌন্দর্য্যের যশে কৈলাসপর্বতকে জয় করিয়াছিলেন ; কিন্তু আপনি বলপূর্বক তাঁহার সৌন্দর্য্য হরণ করায়, তাঁহাকে লজ্জাভারে অবনতমস্তক করিয়াছেন । আবার অশ্বিনীকুমার দুই জনও আপন আপন সৌন্দর্য্যের যশে কৈলাসপর্বতকে জয় করিয়াছিলেন ; কিন্তু আপনি বলপূর্বক তাঁহাদিগেরও সৌন্দর্য্য হরণ করায়, তাঁহাদিগেরও নয়নে জল আনয়ন করিয়াছেন । তার পর, কামদেবও আপন সৌন্দর্য্যের যশে কৈলাসপর্বতকে জয় করিয়াছিলেন ; কিন্তু আপনি বলপূর্বক তাঁহারও সৌন্দর্য্য হরণ করায়, তাঁহাকেও সৌন্দর্য্যগর্ব ত্যাগ করাইয়াছেন ॥৩৪॥

अन्वयः—वलक्षाः हंसावलयः चपलाः त्वत्कान्तिकीर्त्तेः पुलाकाः ( इति अहम् ) अवैमि । (अत एव ताः ) उड्डीय स्रवन्ती-वेशन्त पूरं परितः पतिताः (सत्यः) युक्तं प्लवन्ते ॥२५॥

अवैमीति । वलक्षाः शुभ्रवर्णाः, हंसानाम् आवलयः श्रेणयः, चपलाश्चञ्चला अत्यात्मोड्डयनयोग्या इत्यर्थः, तव कान्तेः शोभाया या कीर्त्तिः सुख्यातिस्तस्याः, पुलाकाः तुच्छधान्यानि रिक्तधान्यानि इत्यर्थः, इत्यहमवैमि जानामि । एताः खला हंसावलयो न, किन्तु तव कान्तिकीर्त्तेस्तुच्छधान्यानि एवेत्यहं मन्ये इत्यर्थः । अत एव ताः, उड्डीय, स्रवन्तीनां नदीनां वेशन्तानामल्पसरसाञ्च पूरं प्रवाहम्, परितः सर्वतः, पतिताः सत्यः, तुच्छधान्यरूपत्वादुचितमेव यथा तथा, प्लवन्ते जलोपरि तरन्ति । जगति भवानद्वितीय एव सुन्दर इति भावः ।

मही कृतार्था यदि मानवोऽसि जितं दिवा यद्यमरेषु कोऽपि।
कुलं त्वयालङ्कृतमौरगं चेन्नाधोऽपि कस्योपरि नागलोकः॥४४॥
चेयं न धत्तेऽनुपपत्तिमुच्चैः मतिंमदुक्तिस्त्वयि चिन्त्यमाने।
ममौ स भद्रं चुलुके समुद्रः त्वयात्तगाम्भीर्य्यमहत्त्वमुद्रः॥४५॥

---

তিনি ক্ষুদ্র হইলেও, মহাদেব তাঁহাকে আপন মস্তকে এবং ব্রাহ্মণের মধ্যে শ্রেষ্ঠপদে স্থাপন করিয়াছেন ॥৪২॥

अन्वयः—ईश्वरेण कुसुमायुधस्य आदेहदाहं जगत् सौन्दर्य्यकथादरिद्रं विधाय पुनः त्वदङ्गनिर्म्माणात् चिरेण अन्वकम्पि (इति) मन्ये ॥४३॥

आदेहेति। ईश्वरेण विधिना, कुसुमायुधस्य कामदेवस्य आदेहदाहं देहदाहमारभ्य त्रिपुरारिकर्त्तृकमन्मथी-करणादवधीत्यर्थः, जगद्भुवनम्, सौन्दर्य्यकथायां दरिद्रं निःस्वं सौन्दर्य्यप्रस्तावेनापि हीनमिति तात्पर्य्यम्, विधाय कृत्वा, पुनः तव अङ्गानां निर्म्माणात्, चिरेण चिरकालात् परम्, अन्वकम्पि तज्जगदेव अनुकम्पाविषयीकृतम्, इति मन्ये। कामदेवमन्मथीकरणात् परम् इयन्तं कालं यावत् सौन्दर्य्यालोचना सर्व्वथैव नासीत्, इदानीं त्वज्जन्मनि पुनः प्रवृत्तेति भावः। त्वं कामदेवतुल्य एव सुन्दर इति निष्कर्षः।

अत्र जगत्त्वदुपादानाभावात् क्रियोत्प्रेक्षालङ्कारः आदेहदाहमिति अव्ययीभावेन संसृष्टः। गुणरीती पूर्ववत् ॥४३॥

**বাঙ্গালা**—কামদেবের দেহদাহ হইতে আরম্ভ করিয়া, বিধাতা সমগ্র জগৎটাকে সৌন্দর্য্যপ্রস্তাববিহীন করিয়া, সম্প্রতি আপনার অঙ্গনির্ম্মাণ করায়, চিরকালের পর সে জগ-তের প্রতি আবার দয়া করিয়াছেন ইহা আমি মনে করি ॥৪৩॥

अन्वयः—(हे परमसुन्दर!) यदि (त्वं) मानवः असि, (तदा) मही कृतार्था (जाता); यदि (त्वम्) अमरेषु कः अपि असि, (तर्हि) दिवा जितम्, चेत् त्वया औरगं कुलम् अलङ्कृतम्, (तदा) नागलोकः अधः अपि (सन्) कस्य उपरि न (वर्त्तते) ॥४४॥

महीति। हे परमसुन्दर! यदि त्वं मानवः कश्चिन्मनुष्यः असि; तदा मही पृथिवी, कृतार्था धन्या वर्त्तते; यदि त्वम् अमरेषु देवेषु, कोऽपि असि, तर्हि दिवा स्वर्गेण, जितं सर्व्वोत्कर्षेण प्रवृत्तम्; चेद् यदि त्वया उरगाणां सर्पाणामिदमिति औरगम्, कुलं वंशः, अलङ्कृतं जन्मना भूषितम्, तदा नागलोकः पातालम्, अधोऽपि अधोदेशे विद्यमानोऽपि सन्, कस्य लोकस्य उपरि, न वर्त्तते; अपि तु सर्व्वस्यैवेत्यर्थः। सर्व्वत्र त्वदाश्रयत्वादिति भावः।

अत्र अधोऽप्युपरीति विरोधात् कविप्रौढोक्त्या तत्समाधानाच्च विरोधाभासोऽलङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः ॥४४॥

**বাঙ্গালা**—হে সুন্দরশ্রেষ্ঠ! যদি আপনি মনুষ্য হন, তাহা হইলে পৃথিবী ধন্য হইয়াছে; যদি আপনি দেবতাদের মধ্যে কেহ হন, তাহা হইলে স্বর্গই জয় লাভ করিয়াছে; আর যদি আপনি নিজের জন্ম দ্বারা সর্পের কুল অলঙ্কৃত করিয়া থাকেন, তাহা হইলে পাতাল নীচে থাকিয়াও কোন্ লোকের উপরে না রহিয়াছে? ॥৪৪॥

अन्वयः—त्वयि चिन्त्यमाने (सति) सा इयं मदुक्तिः उच्चैः अनुपपत्तिं न धत्ते। (अतः) त्वया-आत्त-गाम्भीर्य्य-महत्त्व-मुद्रः सः समुद्रः (अगस्त्यस्य) चुलुके भद्रं ममौ ॥४५॥

ब्रवीति मे किं किमियं न जाने सन्देहदोलामवलम्ब्य संवित् ।
कस्यापि धन्यस्य गृहातिथिस्त्वम् अलीकसम्भावनयाथवालम् ॥४८॥
प्राप्तैव तावत्तव रूपसृष्टिं निपीय दृष्टिर्जनुषः फलं मे ।
अपि श्रुती नामृतमाद्रियेतां तयोः प्रसादीकुरुषे गिरं चेत् ॥४९॥

---

अत्र पादविक्षेपेण पद्ममालासृष्ट्यसम्भवादतिशयोक्तिरलङ्कारः ; "कथमुपरि कलापिनः कलापः" इत्यादिवदस्यौदाहरणवत् । स पुनश्छेकानुप्रासेन संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ।

"सरणिः पद्धतिः पद्या" इत्यमरः ॥४७॥

বাঙ্গালা—মহাত্মন্ ! মর্ত্যলোকে কোন্ ব্যক্তি এত বড় পুণ্য করিয়াছে ; যাহাকে লক্ষ্য করিয়া আপনারও চরণ দু'খানি পথের ধূলীতে পদ্মের মালা সৃষ্টি করিয়াছে ॥৪৭॥

অন্বয়ঃ—इयं मे संवित् सन्देहदोलाम् अवलम्ब्य किं किं ब्रवीति (इति) न जाने । त्वं कस्य अपि धन्यस्य गृहातिथिः, अथवा अलीकसम्भावनया अलम् ॥४८॥

ब्रवीतीति । इयं मे मम संवित् बुद्धिरन्तःकरणमिति यावत्, सन्देह एव दोला दोलनयन्त्रं ताम्, अवलम्ब्य आरुह्य, किं किं ब्रवीति प्रकाशयति, इति न जाने न निश्चिनोमि । ननु कोऽसौ सन्देह इत्याह—त्वं कस्यापि धन्यस्य पुण्यवतो जनस्य, किं गृहे अतिथिरागन्तुकः ? अथवा अलीकसम्भावनया ममैव गृहातिथिस्त्वमिति मिथ्या मननेन, अलं तन्न कर्त्तव्यमित्यर्थः ; मम तादृशभाग्याभावादिति भावः ।

अत्र अथवा ममैव गृहातिथिस्त्वमिति वक्तुमिष्टस्य वस्तुन आत्मनोऽधमत्वरूपविशेषप्रतिपत्तये निषेधाभासादाक्षेपो नामालङ्कारः ; "वस्तुनो वक्तुमिष्टस्य विशेषप्रतिपत्तये । निषेधाभास आक्षेपः वक्ष्यमाणोक्तगो द्विधा" इति लक्षणात् । स चात्र वक्ष्यमाणगतः । सन्देहदोलामिति निरङ्गकेवलरूपकेणासौ संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ॥४८॥

বাঙ্গালা—আমার এই অন্তঃকরণ সন্দেহদোলায় আরোহণ করিয়া কি কি যে বলিতেছে, তাহা আমি নিশ্চয় করিতে পারিতেছি না । আপনি কি কোন পুণ্যবানের গৃহে অতিথি হইবেন ? অথবা যাক ; মিথ্যা সম্ভাবনা করা সঙ্গত নহে ॥৪৮॥

অন্বয়ঃ—मे दृष्टिः तव रूपसृष्टिं तावत् निपीय जनुषः फलं प्राप्ता एव ; श्रुती अपि अमृतं न आद्रियेताम्, चेत् गिरं तयोः प्रसादीकुरुषे ॥४९॥

प्राप्तेति । मे मम दृष्टिश्चक्षुः, तव रूपसृष्टिं त्वदभिव्यक्तभावत्वात् विधात्रा सृष्टं रूपम्, तावत् साकल्येन, निपीय सादरमालोक्य, जनुषो जन्मनः फलम्, प्राप्तैव । अतस्तस्य न किञ्चित्प्राप्यमिति भावः । इदानीं श्रुती अपि कर्णौ च, अमृतं पीयूषं, न आद्रियेतां न बहु मन्येताम्, चेद् यदि, गिरमात्मनो वचनम्, तयोर्मम श्रुत्योः सम्बन्धे, प्रसादीकुरुषे प्रसन्नभावेन ददासि वदसीत्यर्थः । तव वचनम् अमृतादपि मधुरं भवेदिति सम्भावयामीति भावः ।

अत्र अमृतापेक्षया गिर आधिक्यप्रतिपादनात् व्यतिरेकोऽलङ्कारः, तावत्तवेति छेकानुप्रासयोरनयोः संसृष्टिः । गुणरीती पूर्ववत् ॥४९॥

বাঙ্গালা—আমার নয়ন, আপনার রূপ দেখিয়া জন্মের সার্থকতা লাভ করিয়াছে ; এখন কর্ণযুগলও অমৃতের আদর করিত না, যদি আপনি প্রসন্ন হইয়া তাহাদিগকে বাক্য শুনাইতেন ॥৪৯॥

**इत्थं मधूत्थं रसमुद्गिरन्ती तदोष्ठबन्धूकधनुर्विसृष्टा ।**
**कर्णात् प्रसूनायुधपञ्चबाणी बाणीमिषेणास्य मनो विवेश ॥५०॥**
**अमज्जदामज्जमसौ सुधासु (१) प्रियं प्रियाया वचनं निपीय ।**
**द्विषन्मुखेऽपि स्वदते स्तुतिर्या तन्मिष्टता नेष्टमुखे प्रमेया (२) ॥५१॥**

---

**अन्वयः**—इत्थं मधूत्थं रसम् उद्गिरन्ती तदोष्ठ-बन्धूक-धनुर्विसृष्टा प्रसूनायुध-पञ्चबाणी बाणीमिषेण कर्णात् अस्य मनः विवेश ॥५०॥

इत्थमिति । इत्थम् एवम्प्रकारेण, मधूत्थं पुष्परसोद्भवम्, वाण्या अमृतमयत्वात् अमृतोद्भवञ्च रसं सुस्वादम्, उद्गिरन्ती आविष्कुर्वती, तथा तस्या दमयन्त्या ओष्ठ एव बन्धूकधनुः कामस्य पुष्पचापत्वात् बन्धूकपुष्पात्मकं चापं तस्मात्, अन्यत्र तु तस्या दमयन्त्या ओष्ठः बन्धूकधनुरिव कामोद्दीपकत्वात् कामस्य बन्धूकपुष्पमयं चापमिव तस्मात्, विसृष्टा विमुक्ता, प्रसूनायुधस्य पुष्पचापस्य कामस्य पञ्चानां बाणानां समाहार इति पञ्चबाणी, बाणीमिषेण "वाग्जन्मवैफल्यम्" इत्यादिवाक्यच्छलेन, कर्णात् कर्णं प्राप्य, अस्य नलस्य, मनः, विवेश प्रविष्टवती । युगपत् पञ्चबाणाघातेन यादृशी पीडा सम्भवति, नलो दमयन्त्यास्तानि वाक्यान्याकर्ण्य तादृशीमेव कामपीडां प्रापेति भावः ।

अत्र द्वितीयपादे रूपकोपमयोरेकाश्रयानुप्रवेशरूपः सङ्करः, बाणीमिषेणेत्यपह्नुतिः, इत्थं मधूत्थमिति बाणी-बाणीति च छेकानुप्रासश्चेति समुदाये संसृष्टिः । आयुधपदेन प्रक्रम्य बाणपदाभिधानाद्भग्नप्रक्रमता दोषः ; स तु 'कर्णात्तदा मन्मथपञ्चबाणी' इति पाठेन समाधेयः । प्रसादो गुणः, वैदर्भी च रीतिः ॥५०॥

**বাঙ্গালা**—কামদেবের পুষ্পময় পাঁচটী বাণই, এইভাবে পুষ্পরসের সুস্বাদ বাহির করিয়া এবং দময়ন্তীর ওষ্ঠরূপ বন্ধূকপুষ্পময় ধনু হইতে নিক্ষিপ্ত হইয়া, তাঁহারই বাক্যচ্ছলে নলের কর্ণ হইতে তাঁহার হৃদয়ে প্রবেশ করিল ॥৫০॥

**अन्वयः**—असौ प्रियं प्रियायाः वचनं निपीय सुधासु आमज्जम् अमज्जत् (इव) । द्विषन्मुखे अपि या स्तुतिः स्वदते, इष्टमुखे तन्मिष्टता न प्रमेया ॥५१॥

अमज्जदिति । असौ नलः, प्रियं प्रीतिकरम्, प्रियाया दमयन्त्याः, वचनं "वाग्जन्मवैफल्यम्" इत्यादि-वाक्यम्, निपीय सादरमाकर्ण्य, सुधासु अमृतेषु, आमज्जं मज्जपर्य्यन्तम्, अमज्जदिव मग्नः अभवदिव ; निरति-शयमानन्दमलभतेत्यर्थः । तथा च द्विषतः शत्रोर्मुखे क्रियमाणापि शत्रुणा क्रियमाणापीति तात्पर्य्यम्, या स्तुतिः प्रशंसा, स्वदते सर्वस्य जनस्यैव रोचते, इष्टस्य प्रियजनस्य मुखे, स्थितायाः तस्याः स्तुतेः मिष्टता मधुरता, न प्रमेया न परिमातुं शक्या । अतो दमयन्त्या इष्टत्वात्तन्मुखे स्थितायाः स्तुतेर्मिष्टताया अप्रमेयतया नलस्य सुधासु मज्जनसम्भावना सम्भवपरैवेति भावः ।

अत्र पूर्वार्द्धे प्रतीयमाना क्रियोत्प्रेक्षा, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः, न पुनः काव्यलिङ्गम् ; द्वितीयार्द्धं विनापि प्रथमार्द्धोपपत्तेः तथैव दर्पणकारादिभिरनयोर्भेदाभिधानात् ; छेकानुप्रासश्चेति. समुदाये संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

आमज्जमिति "अमन्तः" इति पाठादित्यादन् ॥५१॥

**বাঙ্গালা**—নল, দময়ন্তীর বাক্য শুনিয়া, মস্তকপর্য্যন্তই যেন অমৃতের ভিতরে মগ্ন হইয়া গেলেন। কারণ, যে স্তুতিবাদ শত্রুর মুখে থাকিলেও লোকের সন্তোষ জন্মায়, প্রিয়-জনের মুখে সে স্তুতিবাদের মধুরতার পরিমাণ করা যায় না ॥৫১॥

(१) अमज्जदाकण्ठमसौ सुधासु । (२) [illegible]ष्टमुखे लभेया

पौरस्त्यशैलं जनतोपनीतां गृह्णन् यथार्कः पतिरर्घपूजाम् ।
तथातिथेयीमथ स प्रतीच्छन् (१) अस्या वयस्यासनमाससाद (२) ॥५२॥
अयोधि तद्धैर्यमनोभवाभ्यां तामेव भैमीमवलम्ब्य भूमिम् (३) ।
आह स्म यत्र स्मरचापमस्याः छिन्नं भ्रुवौ तज्जयभङ्गवार्त्ताम् ॥५३॥

---

अन्वयः—अथ यथा अर्कः पतिः जनतोपनीताम् अर्घपूजां गृह्णन् पौरस्त्यशैलम् (आसीदति) ; तथा सः अस्याः आतिथेयीं प्रतीच्छन् वयस्यासनम् आससाद ॥५२॥

पौरस्त्येति । अथ सुधासु मज्जनानन्तरम्, यथा अर्कः पतिः सूर्यः, जनतया जनसमूहेन उपनीतां दत्ताम्, अर्घरूपा पूजा ताम्, गृह्णन् सन्, पौरस्त्यः पूर्वदिग्भवो यः शैलः पर्वतस्तम् उदयाचलमित्यर्थः, आसीदति अधितिष्ठति ; तथा स नलः, अस्या दमयन्त्याः, आतिथेयीम् अतिथिसत्कारम्, प्रतीच्छन् गृह्णन् सन्, वयस्यायाः कस्याश्चित् सख्या आसनम् उत्थितया तया परित्यक्तमासनमित्यर्थः, आससाद अधिष्ठितवान् ; आत्मनो दूतत्वेन दमयन्त्या त्वन्निर्दिष्टमासनमपि विहाय सख्यासनग्रहणस्यैवौचित्यादिति भावः ।

अत्र श्रौतोपमालङ्कारस्थे वानुप्रासेन संसृष्टिः । तथा अर्कपतिरासीदति नलस्तु आससाद इति कालभेदात् प्रक्रमभङ्गदोषः, "कान्यभिख्या तयोरासीत्" इत्यादिदर्शनोदाहरणवत् । 'पौरस्त्यशैलं जनतोपनीतं गृह्णन् यथासीदति भानुरर्घम्' इति पाठेन तत्समाधानम् । प्रसादो गुणः, वैदर्भी च रीतिः ॥५२॥

बाङ्गाला—তাহার পর সূর্য্য যেমন জনসমূহদত্ত অর্ঘ গ্রহণ করতঃ, উদয়পর্বতে অধিষ্ঠান করেন ; তেমন নল রাজা দময়ন্তীদত্ত আতিথ্যসৎকার গ্রহণ করতঃ, কোন সখীর আসনে অধিষ্ঠান করিলেন ।৫২।

अन्वयः—तद्धैर्यमनोभवाभ्यां तां भैमीम् एव भूमिम् अवलम्ब्य अयोधि । यत्र अस्याः छिन्नं भ्रुवौ स्मरचापं तज्जयभङ्गवार्त्ताम् आह स्म ॥५३॥

अयोधीति । तस्य नलस्य धैर्यं स्थिरचित्तत्वं मनोभवः कामविकारश्च ताभ्याम्, तां भैमीमेव दमयन्तीरूपामेव, भूमिं स्थानं विषयञ्च, अवलम्ब्य आश्रित्य, अयोधि परस्परं जेतुं युद्धमकारि । यो कश्चित् कथादिभूमिमवलम्ब्य परस्परं जेतुं प्रतिवेशिभ्यां यथा युध्यते तद्वदिति भावः । अनन्तरञ्च यत्र भैमीरूपायां भूमौ, अस्याः मध्ये, छिन्नं विभक्तम्, भ्रुवौ भैम्या एव भ्रूयुगरूपम्, स्मरचापं कामोद्दीपकत्वात् कामधनुः कर्त्तृ, तयोः धैर्यमनोभवयोः यथाक्रमेण जयो धैर्यस्य जयलाभः भङ्गो मनोभवस्य पराजयप्राप्तिश्च तयोर्वार्त्ताम् उदन्तम्, आह स्म अब्रवीत् स्पष्टं सूचयामासेत्यर्थः ; छिन्नं हि नाम धनुः स्वधारिणो योधस्य पराजयं परस्य च विजयं सूचयतीत्यर्थस्य सर्वत्र प्रसिद्धत्वादित्याशयः । नलः खलु धैर्यबलेन कामविकारं दमयामासेति निष्कर्षः ।

अत्र कार्ये च धैर्यमनोभवयोर्योधव्यवहारसमारोपात् समासोक्तिः, भैमीं भूमिमिति भ्रुवौ स्मरचापमिति च निरङ्गं केवलरूपकद्वयम्, धैर्यमनोभवयोः जयभङ्गयोः यथाक्रमेण सम्बन्धात् यथासंख्यालङ्कारश्च ; एषां तेषामङ्गाङ्गिभावेन सङ्करः । भैमीं भूमिमिति छेकानुप्रासो नाम्नौ संसृज्यते । "मन्ताऽन्तरं रचिजनादिबन्धात्" इत्युक्तेर्दमयन्त्या नलस्य देवत्वेन सम्भावितत्वात् तत्र तस्या अनुरागः । अतएव परस्परदर्शनेऽपि विद्यमानेऽपि अनुरक्तयोः परस्परदर्शनाभावात् सम्भोगशृङ्गारो रसः ; अपि तु नवानुरागात् पूर्वराग एव । इन्द्रवज्रोपजातिरूपम् । गुणरीती पूर्ववत् ॥५३॥

---

(१) अथ सं प्रतीच्छन् । (२) प्रियाप्रियं तामासनमाससाद ।

(३) तामेव भूमीमवलम्ब्य भैमीम् ।

अथ स्मराज्ञामवधीर्य धैर्यात् जगौ स तद्वागुपवीणितोऽपि।
विवेकधाराशतधौतमन्तः सतां न कामः कलुषीकरोति॥५४॥
हरित्पतीनां सदसः प्रतीहि त्वदीयमेवातिथिमागतं माम्।
वहन्तमन्तर्गुरुवादरेण प्राणानिव स्वः प्रभुवाचिकानि॥५५॥

---

বাঙ্গালা—নলের ধৈর্য্য ও কাম ইহারা পরস্পর পরস্পরকে জয় করিবার জন্য, সেই দময়ন্তীরূপ ভূমিকে অবলম্বন করিয়া যুদ্ধ করিতে লাগিল। পরে, যে ভূমিতে মধ্যস্থিত দময়ন্তীরই ভ্রূ দুইটিরূপ কামধনু, ধৈর্য্যেরই জয় এবং কামেরই পরাজয় হইয়াছে বলিয়া খবর জানাইল ॥৫৩॥

अन्वयः—अथ सः तद्वागुपवीणितः अपि (सन्) धैर्यात् स्मराज्ञाम् अवधीर्य जगौ। कामः विवेक-धारा-शत-धौतं सताम् अन्तः न कलुषीकरोति॥५४॥

अथेति। अथ मनोभवपराजयानन्तरम्, स नलः, तस्या दमयन्त्या वाचा पूर्वोक्तया वाचा उपवीणितः वीणया उपगीत इति तद्वागुपवीणितः अपि सन्, धैर्याद्धेतोः, स्मरस्य कामस्य आज्ञाम् आदिष्टविकारम्, अवधीर्य अवज्ञाय अग्राह्यीकृत्येत्यर्थः। एतेन कामानुवृत्तिर्वाचामेवासीदिति सूचितम्। अत एव न रसभङ्ग इति बोध्यम्। जगौ दमयन्तीमुक्तवान्। ननु धैर्यादप्यया स्मराज्ञाया अवधीरणं वीणोपगायनेन तथैव स्मराज्ञायाः पुनरुज्जीवनमिति कथं स्मराज्ञाया अवधीरणमात्रमेव सम्पन्नमित्याह— कामः, विवेकधारया निरवच्छिन्नप्रवृत्तविचारेणेव शतं बहुलं यथा स्यात्तथा धौतं परिष्कृतम्, सतां साधूनाम्, अन्तरन्तःकरणम्, न कलुषीकरोति न आविलीकरोति। अतो वीणोपगायनेनोज्जीवने सत्यपि स्वाधीनस्य स्मराज्ञावधीरणं सम्पन्नमिति भावः।

अत्र उपवीणनरूपकारणे सत्यपि स्मराज्ञाप्राप्तिरूपकार्याभावाद्विशेषोक्तिः, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्च; अनयोरङ्गाङ्गिभावेन सङ्करः। प्रथमपादगतश्छेकानुप्रासेनासौ पुनः संसृज्यते। वाचि वीणात्वारोपरूपं रूपकं व्यज्यत इति वस्तुनालङ्कारध्वनिः। पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः॥५४॥

বাঙ্গালা—তাহার পর, নল, দময়ন্তীর বাক্যরূপ বীণার গানে উৎফুল্ল হইয়াও, ধৈর্য্যবশতঃ কামবিকার অগ্রাহ্য করিয়া বলিতে লাগিলেন। কারণ, সজ্জনের অন্তঃকরণ, বিবেকশক্তির প্রবাহে শতবার পরিস্কৃত হইয়া থাকে; সুতরাং কাম সে অন্তঃকরণকে কলুষিত করিতে পারে না ॥৫৪॥

अन्वयः—(हे दमयन्ति!) मां गुरुणा आदरेण अन्तः स्वः-प्रभुवाचिकानि प्राणान् इव वहन्तं हरित्-पतीनां सदसः आगतं त्वदीयम् एव अतिथिं प्रतीहि॥५५॥

किमुक्तमित्याह हरिदिति। हे दमयन्ति! माम्, गुरुणा महता, आदरेण आग्रहेण, अन्तः अन्तःकरणे, स्वःप्रभूणां स्वर्गाधिपतीनामिन्द्रादीनां वाचिकानि सन्देशवाक्यानि, प्राणानिव, वहन्तं धारयन्तम्। अयं दूतधर्म उक्तः। हरित्पतीनां दिक्पालानाम्, सदसः सभातः, आगतम्, त्वदीयमेव अतिथिम्, प्रतीहि जानीहि। “कस्यापि धन्यस्य गृहातिथिस्त्वम्” इत्यस्य प्रतिवाक्यमिदम्।

अत्र श्रौतोपमाच्छेकानुप्रासयोः संसृष्टिः। गुणरीती पूर्ववत्॥५५॥

বাঙ্গালা—রাজকন্যে! আপনি আমাকে আপনার অতিথি বলিয়াই মনে করুন, আমি দিক্‌পালগণের সভা হইতে আসিয়াছি এবং অত্যন্ত আদরের সহিত মনের ভিতরে প্রাণের মত দিক্‌পালদিগের বার্ত্তা বহন করিতেছি ॥৫৫॥

विरम्यतां भूतवती सपर्य्या निविश्यतामासनमुज्झितं किम् ।
या दूतता नः फलिनी विधेया (१) सैवातिथेयी पृथुरुद्भविष्णी ॥५६॥
कल्याणि ! कल्याणि तवाङ्गकानि कच्चित्तमां चित्तमनाविलं ते ।
अलं विलम्बेन गिरं मदीयाम् आकर्णयाकर्णतटायताक्षि ! ॥५७॥
कौमारमारभ्य गता गुणानां हरन्ति ते दिक्षु धृताधिपत्यान् ।
सुराधिराजं सलिलाधिपञ्च हुताशनञ्चार्य्यमनन्दनञ्च ॥५८॥

---

अन्वयः— विरम्यताम्, सपर्य्या भूतवती ; निविश्यताम्, किम् आसनम् उज्झितम् । नः या दूतता फलिनी विधेया, सा एव पृथुः आतिथेयी उद्भविष्णी ॥५६॥

विरम्यतामिति । हे राजकन्ये ! विरम्यताम् अधिकादतिथिसत्कारात् विरतया भूयताम् । यतः, सपर्य्या अतिथिसत्कारः, भूतवती सम्पन्नैव । निविश्यताम्, उपविश्यताम्, किं कथम्, आसनम्, उज्झितं परित्यक्तम्, दूतदर्शनेन आसनपरित्यागो नोचित इति भावः । नः अस्माकम्, या दूतता दौत्यम्, फलिनी फलवती, विधेया त्वयैव कर्त्तव्या, सैव पृथुर्महती, आतिथेयी अतिथिसत्कारः, उद्भविष्णी उद्भविष्यति । अतस्त्वया दूततायाः फलवत्तार्थमेव उद्यम्यतामित्याशयः ।

अत्र वरतं प्रति भूतेत्यादिवाक्यार्थो हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ॥५६॥

বাঙ্গালা—রাজকন্যে ! আপনি বিরত হউন ; কেন না, অতিথিসৎকার সম্পন্ন হইয়াছে ; আপনি উপবেশন করুন ; আসন পরিত্যাগ করিলেন কেন । আপনি আমার যে দৌত্য সফল করিবেন, তাহাই গুরুতর অতিথিসৎকার হইবে ॥৫৬॥

अन्वयः—(हे) कल्याणि ! तव अङ्गकानि कल्याणि कच्चित्तमाम् ? ते चित्तम् अनाविलं कच्चित्तमाम् ? विलम्बेन अलम्, (हे) आकर्णतटायताक्षि ! मदीयां गिरम् आकर्णय ॥५७॥

कल्याणीति । हे कल्याणि ! मङ्गलमयि ! तव अङ्गकानि सुकुमाराणि अङ्गानि, कल्याणि निरामयानि, कच्चित्तमां किम् ? तथा ते तव, चित्तं मनः अनाविलं शोकदुःखादीनामाविल्यरहितम्, कच्चित्तमां किम् । विलम्बेन एतदतिरिक्तप्रश्नकरणकालक्षेपेण, अलम् । हे आकर्णतटायताक्षि ! कर्णपर्य्यन्तविस्तृतनयने ! मदीयां गिरं वाक्यम्, आकर्णय शृणु ।

अत्र छेकानुप्रासोऽलङ्कारः, माधुर्यं गुणः वैदर्भी च रीतिः ।

"वार्त्तौ निरामयः कल्यः" "कच्चित् कामप्रवेदने" इत्यमरः ।

अङ्गकानीति अनुकम्पायां कप्रत्ययः । प्रकर्षेण कच्चिदिति कच्चित्तमाम्, "आख्यातकिमेकारान्त—" इत्यादिना तमप् प्रत्ययः ॥५७॥

বাঙ্গালা—হে মঙ্গলময়ি ! আপনার শরীরে কোন রোগ নাই ত ? এবং আপনার মনে কোন শোক দুঃখের আবিলতা নাই ত ? বিলম্ব করিবার প্রয়োজন নাই ; হে আকর্ণপূর্ণলোচনে ! আপনি আমার বাক্য শ্রবণ করুন ॥৫৭॥

अन्वयः—(हे दमयन्ति !) कौमारम् आरभ्य ते गुणानां गताः दिक्षु धृताधिपत्यान् सुराधिराजं सलिलाधिपञ्च हुताशनञ्च अर्य्यमनन्दनञ्च हरन्ति ॥५८॥

---

(१) … फलिना विधेया ।

चरच्चिरं शैशवयौवनीय-द्वैराज्यभाजि त्वयि खेदमेति ।
तेषां रुचश्चौरतरेण चित्तं पञ्चेषुणा लुण्ठितधैर्य्यवित्तम् ॥५९॥
तेषामिदानीं किल केवलं सा हृदि त्वदाशा विलसत्यजस्रम् ।
आशास्तु नासाद्य तनूरुदाराः पूर्वादयः पूर्ववदात्मदाराः ॥६०॥

---

चादौ श्लोकद्वयेनेन्द्रादीनां चतुर्णामेव सामान्येन दौत्यं करोति। कौमारमिति। कौमारं शैशवका-लम्, आरभ्य विद्यमानायाः, ते तव, गुणानां सौन्दर्य्यविद्यादीनाम्, गणाः समूहाः, दिशु पालनाधिपत्यं येषाम् दिक्पालान् हरन्ति आकर्षन्ति। ननु सर्वानेव दिक्पालान् हरन्ति किमित्याह— सुराधिराजमिन्द्रम्, सलिलाधिपं वरुणञ्च, हुताशनमग्निञ्च, अर्य्यम्णः सूर्य्यस्य नन्दनं पुत्रं यमञ्च हरन्ति। एते चत्वार एव दिक्पाला-स्त्वय्यनुरक्ता इति निष्कर्षः।

अत्र प्रथमपादे छेकानुप्रासोऽलङ्कारः। इन्द्रादीनां दमयन्त्यामनुरागे सत्यपि दमयन्त्यास्तेष्वनुरागाभावात् नलानुरागसूचकपदाभावाच्च नाय पूर्वरागः, अपरो वा रसः। एवमन्यत्राप्यूह्यम्। प्रसादो गुणः, वैदर्भी च रीतिः ॥५८॥

বাঙ্গালা—রাজকন্যে! বাল্যকাল হইতে আরম্ভ করিয়া আপনার গুণগ্রাম ইন্দ্র, বরুণ, অগ্নি ও যম এই চারি জন দিক্‌পালকে আকর্ষণ করিতেছে ॥৫৮॥

अन्वयः—शैशव-यौवनीय-द्वैराज्यभाजि त्वयि चिरं चरत् तेषां चित्तं रुचः चौरतरेण पञ्चेषुणा लुण्ठित-धैर्य्य-वित्तं (सत्) खेदम् एति ॥५९॥

चरदिति। हे राजकन्ये! शैशवयौवनीयं द्वैराज्यं तादृशद्विविधावस्था शैशवयौवनयोर्वयसोः सन्धिमि-त्यर्थः; भजत इति सा तस्यां तयोर्वयसोः सन्धौ विद्यमानायामिति तात्पर्य्यम्, त्वयि विषये, चिरं बहुकालावधि, चरत् आसजत्, तेषामिन्द्रादीनाम्, चित्तं कर्त्तृ, रुचस्तेषामिन्द्रादीनामेव कान्तेः, चौरतरेण नितरामपहार-केण, कामपीडया विरहिणां कान्तिक्षयस्य स्वाभाविकत्वादिति भावः, पञ्चेषुणा कामेन, लुण्ठितमपहृतं धैर्य्य-मेव वित्तं धनं यस्य तत् तथोक्तं सत्, खेदं त्वदप्राप्तिनिबन्धनं दुःखम्, एति प्राप्नोति। अपरोऽपि राज्यद्वय-सन्धौ विचरन् चौरैरपहृतधनो दुःखं प्राप्नोति।

अत्र धैर्य्यवित्तमिति निरङ्गं केवलरूपकम्, खेदप्राप्तिं प्रति लुण्ठितधैर्य्यवित्तपदस्यार्थो हेतुरिति पदार्थ-हेतुकं काव्यलिङ्गञ्चानयोरङ्गाङ्गिभावेन सङ्करः; चरच्चिरमिति छेकानुप्रासः, परार्द्धे चान्त्यानुप्रास इति समु-दाये संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः ॥५९॥

বাঙ্গালা—রাজকন্যে! ইন্দ্রপ্রভৃতির মন বহুকাল হইতেই আপনার প্রতি আসক্ত হইয়া আসিতেছে; কিন্তু বর্ত্তমানে আপনি শৈশব ও যৌবনকালের সন্ধিক্ষণে উপস্থিত হইয়াছেন বলিয়া, কামদেব তাঁহাদের কান্তি হরণপূর্ব্বক ধৈর্য্যরূপ ধন লুণ্ঠন করিয়াছেন; তাহাতে তাঁহাদের মন দুঃখ অনুভব করিতেছে ॥৫৯॥

अन्वयः—इदानीं तेषां हृदि केवलं सा त्वदाशा किल अजस्रं विलसति। तु उदाराः तनूः आसाद्य (विद्यमाना अपि) आत्मदाराः पूर्वादयः आशाः पूर्ववत् न विलसन्ति ॥६०॥

तेषामिति। इदानीं तेषामिन्द्रादीनाम्, हृदि मनसि, केवलं सा त्वदाशा तव प्राप्तितृष्णैव, किल निश्चितम्, अजस्रम् अनवरतम्, विलसति स्फुरति। तु किन्तु, उदारा महतीः मनोहराश्च, तनूः शरीराणि, आसाद्य प्राप्य

अनेन सार्द्धं तव यौवनेन कोटिं परामच्छिदुरोऽध्यरोहत् ।
प्रेमापि तन्वि ! त्वयि वासवस्य गुणोऽपि चापे सुमनःशरस्य ॥६१॥
प्राचीं प्रयाते विरहादयं ते (१) तापाच्च कम्पाच्च गमाक्षयन्ती ।
परापरार्धं निदधाति भानौ कपाकयं लोचनद्वन्द्वमिन्द्रः ॥६२॥

विद्यमाना अपीति शेषः, आत्मदाराः पालनीयतया स्वस्वभार्याः, पूर्वादयः प्राचीप्रभृतयः, आशा दिशः, पूर्ववत् तदाशोत्पत्तेः पूर्वकाल इव, न विलसन्ति ; त्वदाशाविलसनेनैव तासां विलसनस्य बाधितप्रायत्वादिति भावः । एतेन एकाशया बहुतराशानां त्यक्तप्रायत्वात् सा खलु काशा कीदृगुत्कटेति विवेक्तव्यमिति सूचितम् ।

अत्र पूर्वादीनामाशानां विलसनसम्बन्धेऽपि तदसम्बन्धादतिशयोक्तिः, उदारतनुधारणलक्षणे कारणे सत्यपि तद्विलसनलक्षणकार्य्याभावाद्विशेषोक्तिश्चानयोरङ्गाङ्गिभावेन सङ्करः ; सोऽपि परात्मगतान्यानुप्राणेन संसृज्यते । माधुर्यं गुणः, वैदर्भी च रीतिः ॥६०॥

বাঙ্গালা—বর্ত্তমান সময়ে ইন্দ্রপ্রভৃতির মনে কেবল আপনার আশাই সর্বদা প্রকাশ পাইতেছে ; কিন্তু উদারদেহধারিণী নিজ নিজ ভার্যা পূর্বপ্রভৃতি দিক্ এখন আর তাঁহাদের মনে পূর্বের ন্যায় প্রকাশ পাইতেছে না ॥৬০॥

अन्वयः—(हे) तन्वि ! त्वयि अच्छिदुरः वासवस्य प्रेमा अपि, चापे अच्छिदुरः सुमनःशरस्य गुणः अपि अनेन तव यौवनेन सार्द्धं परां कोटिम् अध्यरोहत् ॥६१॥

इत्थं सामान्यतो दौत्यं कृत्वा इदानीं प्रत्येकतः कर्त्तुं प्राधान्यादादौ इन्द्रस्य दौत्यं करोति । अनेनेति । हे तन्वि ! कृशाङ्गि ! त्वयि विषये, अच्छिदुरः अच्छेदनशीलः अनावाकोत्यर्थः, वासवस्य इन्द्रस्य, प्रेमापि अनुरागश्च, चापे धनुषि, अच्छिदुरः छिदनानर्हः सुदृढ़ इति तात्पर्य्यम्, सुमनःशरस्य पुष्पबाणस्य कामस्य, गुणोऽपि मौर्वी च, अनेन दृश्यमानेन तव यौवनेन, सार्द्धं सह, परां कोटिम् अत्यन्तमुत्कर्षम्, अग्रदेशञ्च अध्यरोहत् प्रापत् । तथा च यथा यथा तव यौवनमुत्कर्षं प्राप्तम्, तथा तथैव त्वयि इन्द्रस्यानुराग उत्कर्षं प्राप्तः, इन्द्रमुद्दिश्य कामदेवस्य मौर्वी च तदीयधनुषः अग्रदेशं प्राप्तेति सरलार्थः । तव यौवनोत्कर्षमवलोक्य इन्द्रो नितरामेव त्वय्यनुरक्त इति भावः ।

अत्र सहोक्तिरलङ्कारः, तथा वासवस्य प्रेमा प्रस्तुतः कामस्य गुणस्तु अप्रस्तुत इत्यनयोरध्यरोहदित्येकया क्रियाभिसम्बन्धाद्दीपकञ्च, अनयोरङ्गाङ्गिभावेन सङ्करः ; प्रसादो गुणः, वैदर्भी च रीतिः ।

"कोटिः स्त्री धनुषोऽग्रेऽस्त्री संख्याभेदप्रकर्षयोः" इति मेदिनी ।

अच्छिदुर इति "छिदिभिदिविदां कुरच्" इति छिदेः कुरप्रत्ययः ॥६१॥

বাঙ্গালা—হে কৃশাঙ্গি ! আপনার প্রতি ইন্দ্রের নির্বিচ্ছিন্ন প্রেম, আপনার এই যৌবনের সহিতই পরা কাষ্ঠায় আরোহণ করিয়াছে ; এবং কামদেবের ধনুর গুণও ধনুর অগ্রে আরোহণ করিতেছে ॥৬১॥

अन्वयः—अयम् इन्द्रः ते विरहात् प्राचीं प्रयाते भानौ तापाच्च कम्पाच्च ममाक्षयन्ती (सन्) परापरार्धः इव अरुणं लोचनद्वन्द्वं प्राचीं प्रयाते भानौ निदधाति ॥६२॥

प्राचीमिति । अयं प्रस्तुत इन्द्रः, ते तव विरहार्त्तः, प्राचीं पूर्वां दिशम्, प्रयाते प्राप्ते पूर्वस्यां दिशं दिशि इत्यर्थः, भानौ सूर्य्ये, तापात् सन्तापसन्तापजनकत्वात्, कम्पात् समानपाटलवर्णत्वाच्च हेतोः, ममाक्षयन्ती इन्द्र

(१) ... विरहं दधन्तं ।

अग्न्याहिता नित्यमुपासते यां देदीप्यमानां तनुमष्टमूर्तेः ।
आशापतिस्ते दमयन्ति ! सोऽपि स्मरेण दासीभवितुं न्यदेशि ॥७१॥
त्वद्गोचरस्तं खलु पञ्चबाणः करोति सन्ताप्य तथा विनीतम् ।
स्वयं यथा स्वादिततप्तभूयः परं न सन्तापयिता स भूयः ॥७२॥

---

र्थ इति प्राप्नोति । कामवत्यागवनादेवत्ते इन्द्रस्य कामवत्त्वे व प्राधान्यात् प्रथमगणनीयेति भावः । यद यस्मात्, असौ इन्द्रः, इत्यां चक्षुषाम्, अभिलाषा सहस्रत्वात् समुद्रोऽपि सन्, तव इष्टे नयन विभागस्य तृतीयांशस्य काम-कटाक्षस्य अर्थः लोभः स स आकाङ्क्षा तस्य आर्त्तिं तन्निबन्धनां व्याकुलताम्, बिभर्त्ति धारयति, नाम इति सम्भावयामि । अतः कृपया तमिन्द्रमेव वृणीष्वे ति भावः ।

अत्र सहस्रनेत्रस्य दमयन्तीनेत्रविभागलोभार्त्तेः कारणाभावेऽपि तदुत्पत्तेः किं विभावना ? उक्तं सहस्रनेत्रत्व-रूपकारणे सत्यपि तल्लोभार्त्तिं निरुक्तरूपकार्य्याभावाद्विशेषोक्तिरित्यनयोः सन्देहसङ्करः ; सोऽपि पुनर्भ्रान्त्यालङ्कारेण संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ।

"तपःषड्भागमक्षय्यम्" इति शाकुन्तले, "विभागशेषासु निशासु च क्षणम्" इति कुमारे, "विभागशीलं मम वा विभागं स्वर्गमिव वा" इति श्रुतौ च प्रयोगदर्शनात् हलिविषये संख्याशब्दानां पूरणार्थत्वं मन्तव्यम् । अत एवात्र विभागपदस्य तृतीयभाग एवार्थः ॥७०॥

বাঙ্গালা—দময়ন্তি ! দেবরাজের এই প্রসিদ্ধ কামপিপাসা, ত্রিভুবনের মধ্যেই প্রথম গণনায় শোভা বহন করিতেছে । যেহেতু, উনি নয়নের সমুদ্র হইয়াও, আপনার নয়নের তিন ভাগের এক ভাগ লাভ করিবার ইচ্ছায় ব্যাকুলতা বহন করিতেছেন ॥৭০॥

अन्वयः—अग्न्याहिताः यां देदीप्यमानाम् अष्टमूर्त्तेः तनुं नित्यम् उपासते ; (हे) दमयन्ति ! स्मरेण सः अपि आशापतिः ते दासीभवितुं न्यदेशि ॥७१॥

इदानीमग्नेर्दैन्यं करोति । अग्न्याहिता इति । आहितः कुण्डस्थण्डिलकाविधानेन स्थापितः अग्निर्यैस्ते अग्न्या-हिताः साग्निका द्विजाः, यां देदीप्यमानामतिशयेन दीप्ताम् । एतेन स्वित्याद्दिमूर्त्त्यन्तरव्यावृत्तिः । अष्टमूर्त्तेर्महा-देवस्य, तनुम् अग्निरूपां मूर्त्तिम्, नित्यं "यावज्जीवमग्निहोत्रं जुहोति" इति श्रुतेः प्रत्यहम्, उपासते होमेनाराधय-न्ति ; हे दमयन्ति ! स्मरेण कामेन, सोऽपि आशापतिर्दिक्पालोऽग्निः, ते तव, दासीभवितुं न्यदेशि 'त्वं दमयन्त्या दासो भव' इत्यादिष्टः । अग्निरपि कामार्त्तः सन् भवतीमिच्छतीति निष्कर्षः ।

अत्र प्रसादो गुणः, वैदर्भी च रीतिः ।

अग्न्याहिता इति "अग्न्याहित्यादीनि" इति विकल्पेन परनिपातः ॥७१॥

বাঙ্গালা—সাগ্নিকগণ, অত্যুজ্জ্বল মহাদেবের যে মূর্ত্তিকে প্রত্যহ উপাসনা করিয়া থাকেন ; দময়ন্তি ! কামদেব সেই দিক্‌পাল অগ্নিকেও আপনার দাস হইবার জন্য আদেশ করিয়াছেন ॥৭১॥

अन्वयः— त्वद्गोचरः पञ्चबाणः तं सन्ताप्य तथा विनीतं करोति खलु यथा स्वयम् आस्वादित-तप्त-भूयः सः भूयः परं न सन्तापयिता ॥७२॥

त्वदिति । त्वमेव गोचरो विषय उद्देश्या यस्य स त्वद्गोचरः, पञ्चबाणः कामः, तमग्निम्, सन्ताप्य सन्तप्तं कृत्वा, तथा तादृशम्, विनीतं शिक्षितम्, करोति खलु विदधाति ध्रुवम् ; यथा स्वयमात्मनैव, आस्वादित-

अदाहि यस्तेन दशार्धबाणः पुरा पुरारेर्नयनालयेन ।
स लिहंस्तं भवदक्षिवासी न वैरशुद्धेरधुनाधमर्णः ॥७३॥
सोमाय कुप्यन्निव विप्रयुक्तः स सोममाचामति हूयमानम् ।
नामापि जागर्त्ति हि यत्र शत्रोः तेजस्विनस्तं कतमे सहन्ते ॥७४॥

---

समनुभूत समभूय तमत्वं येन स तथोक्तः, सः अग्निः, भूयः पुनः, परम् अन्यं जनम्, न सन्तापयिता न सन्तापयिष्यति ।

अत्र पूर्वार्द्धे समनुभवस्य प्रत्यार्थतया तत्र सन्तापकत्वाभावा क्रियोत्प्रेक्षा, परार्द्धे सन्तापनसम्बन्धेऽपि तदसम्बन्धादतिशयोक्तिः, अन्त्यानुप्रासश्चेत्येषां संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

समभूय इति "भावे भुवः" इति भवतेर्भावे क्यप् प्रत्ययः ॥७२॥

বাঙ্গালা—কামদেব আপনাকে উদ্দেশ্য করিয়া, অগ্নিকে সন্তপ্ত করতঃ সেই রূপে তাহাকে শিক্ষিত করিতেছেন; যাহাতে সে অগ্নি নিজ সন্তাপ অনুভব করিয়া, আর অন্যকে সন্তপ্ত করিবেন না ॥৭২॥

অন্বয় - पुरा तेन पुरारेः नयनालयेन (सता) यः दशार्धबाणः अदाहि ; अधुना सः भवदक्षिवासी (सन्) तं लिहन् वैरशुद्धेः अधमर्णः न (जातः) ॥७३॥

अदाहीति । पुरा पूर्वकाले, तेन अग्निना, पुरारेर्महादेवस्य, नयनं ललाटस्थं नेत्रमेव आलय आश्रयो यस्य तेन तादृशेन सता, यो दशार्धबाणः पञ्चबाणः कामः, अदाहि दग्धः ; अधुना सः कामः भवत्याः अक्षिवासी कटाक्षजन्यतया नेत्रस्थितः सन्, तम् अग्निम्, लिहन् निःशेषेण तापयन्, वैरशुद्धेः वैरप्रतिशोधात् सः, अधमर्णः ऋणी, न जात इति शेषः । पुरा स्वस्मिन् महादेवनयनस्थः सन् कामं ददाह ; कामोऽपीदानीं तव नयनस्थः सन् अग्निं दहतीति भावः । अग्निस्तव कामकटाक्षं कामयत इति निष्कर्षः ।

अत्र व्याघातो नामालङ्कारः ; "यद्यथा साधितं केनाप्यपरेण तदन्यथा । तथैव यद्विधीयेत स व्याघात इति स्मृतः" इति काव्यप्रकाशलक्षणात् । पुरा पुरारेरिति च्छेकानुप्रासेनास्य संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ॥७३॥

বাঙ্গালা—রাজকন্যে! পূর্বকালে অগ্নি মহাদেবের ললাটনেত্রে থাকিয়া, যে কামদেবকে দগ্ধ করিয়াছিলেন ; এখন সেই কামদেবই আপনার নেত্রে থাকিয়া সেই অগ্নিকেই দগ্ধ করতঃ, শত্রুতার প্রতিশোধ করায় আর ঋণী থাকিতেছেন না ॥৭৩॥

অন্বয়ঃ – विप्रयुक्तः सः सोमाय कुप्यन् इव (सन्) हूयमानं सोमम् आचामति । हि यत्र शत्रोः नाम अपि जागर्त्ति, कतमे तेजस्विनः तं सहन्ते ? ॥७४॥

सोमायेति । विप्रयुक्तस्तव विरही विप्रयुक्तो वियुक्तस्य, सः अग्निः, सोमाय चन्द्राय, कुप्यन्निव तस्य विरहिसन्तापकत्वात् क्रुध्यन्निव सन्, हूयमानं होतृभिः प्रक्षिप्यमाणम्, सोमं सोमयागादौ सोमलतारसम्, आचामति पिबति पानेन नाशयन् शत्रुं तां प्रतिशोधयतीत्यर्थः । ननु चन्द्रापराधेन सोमरसस्य नाशनात् "परापराधेन परस्य दण्डः" इति न्यायेनासौ अग्निरपराद्ध एवेत्याह—हि तथाहि, यत्र पदार्थे, शत्रोर्नामापि, जागर्त्ति प्रकाशमानतया वाचकत्वेन प्रवर्त्तते, कतमे के नाम तेजस्विनो जनाः, तं पदार्थम्, सहन्ते सोढुमर्हन्ति ; अपितु नेऽपि नेत्यर्थः । अतएव सोमापराधात् सोमनामत्वेन सोमरसेऽपि वर्त्तमानत्वात् तेजस्वी अग्निः सोमरसं नाशयतीति भावः । तव विरहेण चन्द्रो नितरामेवाग्निं तापयतीति निष्कर्षः ।

पुत्री सुहृद् येन सरोरुहाणां यत्प्रेयसी चन्दनवासिता दिक्।
धैर्यं विभुः सोऽपि तवैव हेतोः स्मरप्रतापज्वलने जुहाव ॥७७॥
तं दह्यमानैरपि मन्मथेधं हस्तैरुपास्ते मलयः प्रवालैः।
कष्टेऽप्यसौ नोज्झति तस्य सेवां सदा यदाशामवलम्बते यः ॥७८॥

---

নূতন পাড় দিয়া রাখেন ; তাহা যেন কামানলের ধূমযুক্ত শিখাসমূহের ন্যায় শোভা পাইতে থাকে ॥৭৬॥

**अन्वयः**—सरोरुहाणां सुहृत् येन पुत्री (जातः), चन्दनवासिता दिक् यत्प्रेयसी (स्थिता) ; सः अपि विभुः तव एव हेतोः स्मर-प्रतापज्वलने धैर्यं जुहाव ॥७७॥

इदानीं यमस्य दौत्यमारभते । पुत्रीति । सरोरुहाणां पद्मानाम्, सुहृत् प्रकाशरूपोपकारकारित्वात् सखा सूर्यः, येन कारणेन, पुत्री प्रशस्तपुत्रशाली जातः ; तथा चन्दनेन तदाख्येन तरुणा वासिता सुरभीकृता दिक् दक्षिणा दिगित्यर्थः, यस्य प्रेयसी प्रियतमा स्थिता ; सोऽपि विभुः प्रभुर्दिक्पालो यमः, तवैव हेतोः, स्मरप्रतापः कामसन्ताप एव ज्वलनो वह्निस्तस्मिन्, धैर्यं सहिष्णुतारूपम् आत्मनः स्थिरचित्तत्वम्, जुहाव हुतवान् । महाशीतलं पद्मं पितृमित्रत्वात् सर्वदैव यस्यायत्तम्, महाशीतलश्चन्दनश्च प्रियतमाश्रितत्वात् सततमेव यस्य सुलभः ; सोऽपि यमस्ताभ्यामनिवार्यं त्वदर्थमेव कामसन्तापं वहतीति वरित्वा तमनुगृहाणेति भावः ।

अत्र स्मरप्रतापे ज्वलनत्वारोपः शाब्दः धैर्ये हविष्ट्वारोपस्तु आर्थ इत्येकदेशविवर्त्ति रूपकमलङ्कारः । गुणरीती पूर्ववत् ।

येनेति "धान्येन धनवान्" इत्यादिवत् प्रकृत्यादित्वादभेदे तृतीया । तवैव हेतोरिति "षष्ठी हेतुप्रयोगे" इति षष्ठी ॥७७॥

**বাঙ্গালা**—পদ্মের সখা সূর্য্য, যাঁহা দ্বারা পুত্রবান্ হইয়াছেন এবং চন্দনসুবাসিত দক্ষিণ দিক্ যাঁহার প্রিয়তমা রহিয়াছেন ; সেই দিক্পাল যমও, আপনারই জন্য কামসন্তাপানলে নিজের ধৈর্য্যকে হোম করিয়াছেন ॥৭৭॥

**अन्वयः**—मलयः दह्यमानैः अपि प्रवालैः हस्तैः मन्मथेधं तम् उपास्ते । यः सदा यदाशाम् अवलम्बते, असौ कष्टे अपि तस्य सेवां न उज्झति ॥७८॥

तमिति । मलयो दक्षिणदिग्वर्त्ती पर्वतविशेषः अनुरक्तः कश्चिदुपजीवी च, दह्यमानैरपि कामिनामत्यन्तसन्तापसमाक्रमणादिव ज्वरीणोऽङ्गस्पर्शादिव च दाहं प्राप्नुवद्भिरपि, प्रवालैः पल्लवरूपैः, हस्तैः करैः, मन्मथस्य कामानलस्य एधं काष्ठस्वरूपं कामानलेन ज्वरेण च नितरां दह्यमानमित्यर्थः, तं यमं कञ्चित् प्रभुञ्च, उपास्ते शुश्रूषते । ननु दाहकष्टे अनुभूयमानेऽपि कथमुपास्ते इत्याह—यः सदा, यस्य आशां यत्कर्त्तृकोपकारतृष्णां यदधिष्ठितदिशञ्च, अवलम्बते आश्रयति ; असौ सः, कष्टेऽपि कुतश्चित् कारणात् कष्टे जायमानेऽपि, तस्य प्रभोः, सेवां शुश्रूषाम्, न उज्झति न परित्यजति । अतश्च मलयो यमरक्षितदिगवलम्बनात् दह्यमानैरपि पल्लवैस्तस्य सेवां नोज्झतीति भावः । त्वामुद्दिश्य कामो नितरामेव यमं सन्तापयति ; तेन चासौ शरीरे नवपल्लवशय्यां प्रयाते इति निष्कर्षः ।

अत्र मलये काष्ठे च उपजीविजनव्यवहारसमारोपात् समासोक्तिः निरङ्गं केवलरूपकम्, सामान्येन विशेषसमर्थनादर्थान्तरन्यासः, पदमेवेत्येतेषामङ्गाङ्गिभावेन सङ्करः । प्रसादो गुणः वैदर्भी च रीतिः ॥७८॥

**বাঙ্গালা**—মলয়পর্ব্বত দহ্যমান পল্লবরূপ হস্ত দ্বারাও, কামসন্তপ্ত যমের শুশ্রূষা করি-

अरस्य कीर्त्त्येव सितीकृतानि तद्दोःप्रतापैरिव तापितानि।
अङ्गानि धत्ते स भवद्वियोगात् पाण्डूनि चण्डज्वरजर्जराणि ॥७৯॥
यस्तन्वि! भर्त्ता घुसृणेन सायं दिशः समालम्भनकौतुकिन्याः।
तदा स चेतः प्रजिघाय तुभ्यं यदा गतो नैति निवृत्य पान्थः ॥৮০॥

তেছে। কারণ, যে ব্যক্তি সর্বদাই যাহার আশা অবলম্বন করে, সে ব্যক্তি কষ্ট উপস্থিত হইলেও তাহার সেবা ত্যাগ করে না ॥৭৮॥

**अन्वयः**—सः भवद्वियोगात् पाण्डूनि चण्डज्वरजर्जराणि अरस्य कीर्त्त्या सितीकृतानि इव, तद्दोःप्रतापैः तापितानि इव अङ्गानि धत्ते ॥७৯॥

यमस्य दौत्यमुपसंहरति। अरस्येति। स यमः, भवत्याः वियोगात् विरहात् हेतोः, पाण्डूनि पाण्डुवर्णानि, तथा चण्डज्वरेण अत्यन्ततीव्रकामसन्तापेन जर्जराणि विशीर्णानि, अतएव यथाक्रमं अरस्य कामदेवस्य, कीर्त्त्या यशसा, सितीकृतानि श्वेतवर्णीकृतानीव, तथा तस्य अरस्य दोषाणोः दोःप्रतापैः प्रकृष्टतापैश्च, तापितानि सन्तापं प्रापितानीव, तापितानां विशीर्णभवनात् वार्त्ताकुफलादिवदिति भावः, अङ्गानि कलेवराणि, धत्ते धारयति। अतएव कृपया तद्वरणेन सम्‌जीवयेति भावः।

अत्र वाच्यं क्रियोत्प्रेक्षाद्वयम्, ययोः संसृष्टिः, छेकानुप्रासश्च त्वेतेषां संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः ॥७৯॥

বাঙ্গালা—আপনার বিরহে যমের অঙ্গ সকল পাণ্ডুবর্ণ হইয়া গিয়াছে এবং অত্যন্ত কামজ্বরে বশীর্ণ (শুঁটো) হইয়া পড়িয়াছে. সুতরাং বোধ হইতেছে—কামদেবের যশেই যেন সেই অঙ্গগুলিকে শ্বেতবর্ণ করিয়াছে এবং তাঁহার বাহুযুগের প্রতাপেই যেন তাপিত করিয়াছে; যম এখন ঐরূপ অঙ্গ ধারণ করিতেছেন ॥৭৯॥

**अन्वयः**—(हे) तन्वि! यः सायं घुसृणेन समालम्भनकौतुकिन्याः दिशः भर्त्ता; सः तदा तुभ्यं चेतः प्रजिघाय, यदा गतः पान्थः निवृत्य न एति ॥৮০॥

सम्प्रति वरुणस्य दौत्यमुपक्रमते। य इति। हे तन्वि! कृशाङ्गि! यो देवः, सायं सन्ध्याकाले, घुसृणेन कुङ्कुमेन कुङ्कुमसदृश सन्ध्यारागेणेत्यर्थः यत् समालम्भनम् अङ्गविलेपनं तत्र कौतुकमस्या अस्तीति तस्याः पश्चिमाया इत्यर्थः, दिशः भर्त्ता पालयिता; स वरुणः, तदा तस्मिन् काले, तौरभाटादाविति तात्पर्य्यम् तुभ्यम्, चेतः स्वमनः, प्रजिघाय प्रेरयामास; यदा यस्मिन् काले, गतो गन्तव्यात् प्रस्थितः, पान्थः पथिकः, निवृत्य परावृत्य, न एति न पुनरागच्छति; "सिंहे धनुषि मीने च यो गतो गत एव सः" इति ज्योतिषादिति भावः। वरुणस्य मनस्त्वयि समासक्तं न पुनः प्रतिनिवर्त्तत इति निष्कर्षः।

अत्र भर्त्तृशब्दस्य पालकपरत्वेन पतिवाचकत्वाभावात् वरुणप्रतीच्योर्लिङ्गसाम्येन पतिपत्नीव्यवहारसमारोपात् समासोक्तिरलङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः।

"रक्तसंज्ञन्तु कुङ्कुमम्। जागुडं दीपनं वर्णं सौरभं घुसृणञ्च तत्" इति त्रिकाण्डशेषः।

प्रजिघायेति हिधातोः परोक्षाया णलि "हेरचङि" इति मूलधातोर्हस्य घत्वम् ॥৮০॥

বাঙ্গালা—হে কৃশাঙ্গি! সন্ধ্যাকালে কুঙ্কুমতুল্য সন্ধ্যারাগ দ্বারা অঙ্গলেপন করিতে যাহার কৌতুক রহিয়াছে, সেই পশ্চিম দিকের যিনি রক্ষক; সেই বরুণ তেমন কালে

तथा न तापाय पयोनिधीनाम् अश्वामुखोत्थः क्षुधितः पिपासुवान् ।
निजः पतिः सम्प्रति वारिपोऽपि यथा हृदिस्थः स्मरतापदुःस्थः ॥८१॥
यत् प्रत्युत त्वन्मृदुबाहुवल्लीमृणालजं गुम्फति दुर्विनीता ।
ततो विधत्तेऽधिकमेव तापं तेन प्रिया शैत्यगुणा मृणाली ॥८२॥

---

আপনার উদ্দেশে নিজের চিত্ত পাঠাইয়া দিয়াছেন ; যেমন কালে পাথক গৃহ হইতে প্রস্থান করিয়া আর ফিরিয়া আইসে না ।৮০।

**অন্বয়:**—স্মরতাপদুঃস্থঃ হৃদিস্থঃ বারিপঃ অপি নিজঃ পতিঃ সম্প্রতি পয়োনিধীনাং যথা তাপায় (ভবতি) হৃদিস্থঃ বারিপঃ অপি ক্ষুধিতঃ অশ্বামুখোত্থঃ পিপাসাবান্ পয়োনিধীনাং তথা তাপায় ন (ভবতি) ॥৮১॥

তথেতি । স্মরতাপেন কামসন্তাপেন দুঃস্থঃ পীড়িতঃ, হৃদিস্থঃ বিষয়তাসম্বন্ধেন মনসি বিদ্যমানঃ অর্থাৎ আত্মস্থঃ, বারীণি জলানি পাতি রক্ষতীতি বারিপোঽপি জলরক্ষকশ্চ, নিজঃ পতির্বরুণঃ, সম্প্রতি তব বিরহকালে, পয়োনিধীনাং সমুদ্রাণাম্, যথা ন তাপায় সন্তাপায় ভবতি ; হৃদিস্থো বক্ষসি বর্তমানঃ, বারীণি জলানি পিবতীতি বারিপোঽপি জলশোষকোঽপীত্যর্থঃ ক্ষুধিতো দাহ্যান্তরাভাবাৎ বুভুক্ষিতঃ, অশ্বামুখোত্থো বড়বামুখোদ্গতঃ, পিপাসাবান্ অগ্নির্বাড়বানল ইতি যাবৎ, পয়োনিধীনাং সমুদ্রাণাম্, তথা তাপায় তাদৃশসন্তাপায়, ন ভবতি ; হৃদিস্থত্বেন বারিপত্বেন চ তুল্যত্বেঽপি বাড়বানলস্য স্মরতাপদুঃস্থত্বাভাবাদিতি ভাবঃ । কামানলসন্তপ্তং স্বপ্রভুং বরুণং চিন্তয়ন্তোঽপি সমুদ্রা দুঃখমনুভবন্তীতি স্থূলার্থঃ ।

অত্র পয়োনিধীনাং বাড়বানলকৃততথাবিধতাপসম্বন্ধেঽপি তদসম্বন্ধাদতিশয়োক্তিরলঙ্কারঃ ছেকানুপ্রাসশ্চ অনয়োঃ সংসৃষ্টিঃ । অতিশয়োক্ত্যা চ বাড়বানলাৎ কামানলস্যাধিক্যরূপো ব্যতিরেকো ব্যজ্যতে ইত্যলঙ্কারেণালঙ্কারধ্বনিঃ । প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৮১॥

**বাঙ্গালা**— কামসন্তাপে সন্তপ্ত এবং জলরক্ষক আপনাদের প্রভু বরুণকে স্মরণ করিয়াই এখন সমুদ্রগণের যত বড় দুঃখ হইতেছে ; বক্ষঃস্থলস্থিত এবং জলশোষক ও ক্ষুধার্ত্ত বাড়বানলও, সমুদ্রগণের তত বড় দুঃখ জন্মাইতে পারে না ।৮১।

**অন্বয়:**—তেন প্রিয়া শৈত্যগুণা দুর্বিনীতা মৃণালী যৎ ত্বন্মৃদু-বাহুবল্লী-মৃণালজং গুম্ফতি, ততঃ প্রত্যুত অধিকং তাপম এব বিধত্তে ॥৮২॥

যদিতি । তেন বরুণেন, প্রিয়া কামসন্তাপশান্তয়ে বক্ষসি অবলম্বিতা শৈত্যং শীতলত্বমেব গুণো যস্যাঃ সা, দুর্বিনীতা বিপরীতাচরণাৎ দুঃশিক্ষিতা, মৃণালী স্বল্পং মৃণালম্, যদ্যস্মাৎ তে তব মৃদোঃ কোমলায়াঃ বাহুবল্ল্যা ভুজলতায়াঃ ধৃতিজং আরব্যপরম্পরাম্, গুম্ফতি সদৃশতয়া উৎপাদয়তি ; ততস্তস্মাদেব হেতোঃ, প্রত্যুত বৈপরীত্যেন অধিকং তাপমেব কামসন্তাপমেব, বিধত্তে করোতি । তথা চ বরুণো নিজকামসন্তাপশান্তিকরণায় কাঞ্চিন্মৃণালীং বক্ষসি ধারয়তি ; সা চ মৃণালী তব বাহুলতাসদৃশতয়া তামেব তং স্মারয়তি । তেন চ সা তাপশান্ত্যর্থং স্থিতাপি তাপাধিক্যমেব জনয়তীতি বৈপরীত্যকরণাৎ দুর্বিনীতৈবেতি ভাবঃ ।

অত্র একস্য তাপশান্ত্যর্থমারব্ধস্য মৃণালীধারণস্য বৈফল্যাৎ অনর্থং তাপাধিক্যসম্ভবাচ্চ একো বিষমালঙ্কারঃ, শৈত্যগুণয়া তাপাধিক্যজননমিতি হেতুবিরুদ্ধকার্য্যোৎপত্তিরূপশ্চ বিষমালঙ্কারঃ, সদৃশতয়া বাহুবল্লীস্মৃতেঃ স্মরণালঙ্কারশ্চ এতেষামলঙ্কারাণামঙ্গাঙ্গিভাবেন সঙ্করঃ । প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৮২॥

**বাঙ্গালা**—বরুণ, কামসন্তাপশান্তির জন্য শীতল একটী মৃণাল ধারণ করেন ; কিন্তু দুর্বিনীত সে মৃণাল, যেহেতু আপনারই কোমল বাহুলতা স্মরণ করাইতে থাকে ; সেইহেতু সে মৃণাল তাঁহার অধিক সন্তাপই জন্মাইতে থাকে ।৮২।

न्यस्तं ततस्तेन मृणालदण्ड-खण्डं बभासे हृदि तापभाजि ।
तच्चित्तमर्मैर्मदनस्य बाणैः कृतं शतच्छिद्रमिव क्षणेन ॥८३॥
इति त्रिलोकीतिलकेषु तेषु मनोभुवो विक्रमकामचारः ।
अमोघमस्त्रं भवतीमवाप्य मदान्धतानर्गलचापलस्य ॥८४॥
सारीत्यधारेव सुधारसस्य स्वयंवरः श्वो भविता तवेति ।
सन्तर्पयन्ती दमयन्ति ! तेषां श्रुतिः श्रुतो नाकसदामयासीत् ॥८५॥

अन्वयः—ततः तेन तापभाजि हृदि न्यस्तं मृणाल दण्ड-खण्डं तच्चित्तमर्मैः मदनस्य बाणैः क्षणेन शतच्छिद्रं कृतम् इव (सत्) बभासे ॥८३॥

न्यस्तमिति । ततः सम्पूर्णा अवाली यतः अधिकं तापमेव वितनुते तस्मात् तेन नलेन, तापभाजि कामसन्तापशालिनि, हृदि निजवक्षसि, न्यस्तं स्थापितम्, मृणालदण्डस्य खण्डं कियदंशः, तस्य तीव्रातुरतया विदग्धतया तत्सारकत्वाभावेन तापाजननादिति भावः, तस्य नलस्य चित्ते मर्म वहिर्देशादागत्य प्रविशद्भिरित्यर्थः, मदनस्य कामस्य बाणैः, क्षणेन शतच्छिद्रं कृतमिव सत्, बभासे शुशुभे । स्वभावत एव बहुच्छिद्रशालिनि मृणालखण्डे कामबाणकृतबहुच्छिद्रत्वं सम्भावितमित्यर्थः ।

अतएवास्य वाच्या क्रियोत्प्रेक्षालङ्कारस्तत्कालानुप्राणितेन संसृष्टः । प्रसादो गुणः, वैदर्भी च रीतिः ॥८३॥

বাঙ্গালা—পূর্ব্ব মৃণাল, আপনার বাহুলতা স্মরণ করাইয়া দিয়া অত্যন্ত সন্তাপ জন্মায় বলিয়া, নলরাজ নিজের সন্তপ্ত বক্ষের উপরে একখানি ক্ষুদ্র মৃণালখণ্ড সংস্থাপন করেন ; তাহাও যেন তাঁহার চিত্তে প্রবিষ্ট কামবাণ সকল ক্ষণকালের মধ্যেই শত ছিদ্র করিয়া ফেলে; এই অবস্থায় সেই মৃণালখণ্ড শোভা পাইয়া থাকে ॥৮৩॥

अन्वयः—भवतीम् अमोघम् अस्त्रम् अवाप्य मदान्धतानर्गलचापलस्य मनोभुवः तेषु त्रिलोकीतिलकेषु इति विक्रम-कामचारः (वर्त्तते) ॥८४॥

इत्थमिन्द्रादीनां प्रत्येकतो दौःस्थ्यं कृत्वा पुनरपि युगपत् सर्वेषां दौःस्थ्यं करोति । इतीति । हे दमयन्ति ! भवतीं त्वामेव, अमोघम् अव्यर्थमस्त्रम्, अवाप्य लब्ध्वा स्थितस्येति शेषः, मदेन अहङ्कारेण अन्धतया अनर्गलं निर्बाधं चापलं परपीडने चाञ्चल्यं यस्य तस्य तथोक्तस्य, मनोभुवः कामस्य, तेषु पूर्वोक्तेषु त्रिलोकीतिलकेषु त्रिभुवनभूषणरूपेषु इन्द्रादिषु, इति इत्थम्, विक्रमस्य कामचारः स्वेच्छया व्यवहारो वर्त्तत इति शेषः । अतस्त्वं तान् अनुगृहाणेति भावः ।

अत्र भवतीमस्त्रमिति व्यस्तं निरङ्गं केवलरूपकम्, त्रिलोकीतिलकेष्विति च समस्तं तादृशरूपकम्, तेषां चानुप्राणकत्वे तेषां संसृष्टिः । पूर्वार्द्धं प्राक् पठित्वा समाप्तपुनरात्ततादोषः परिहार्य्यः । गुणरीती पूर्ववत् ॥८४॥

বাঙ্গালা—কামদেব আপনাকে অব্যর্থ অস্ত্র পাইয়া, অহঙ্কারে অন্ধ হইয়া, অবাধে পরপীড়নে চাঞ্চল্য প্রকাশ করিতেছেন ; তাহাতেই সেই ত্রিভুবনের অলঙ্কারস্বরূপ ইন্দ্র-প্রভৃতি দেবগণের প্রতি তাঁহার ইচ্ছানুসারে পরাক্রম প্রকাশ চলিতেছে ॥৮৪॥

अन्वयः—(हे) दमयन्ति ! श्वः तव स्वयंवरः भविता इति श्रुतिः सुधारसस्य सारीत्यधारा इव सन्तर्पयन्ती तेषां नाकसदां श्रुती अयासीत् ॥८५॥

सारीत्येति । हे दमयन्ति ! श्वः परस्मिन् दिने, तव स्वयंवरः आत्मनैव पतिवरणम्, भविता भविष्यति, इति श्रुतिर्जनश्रुतिः, सुधारसस्य अमृतद्रवस्य, सारीत्यधारा इव उत्कृष्टांशात्मिकाधारेव, सन्तर्पयन्ती तानिन्द्रा-

समं सपत्नीभवदुःखतीक्ष्णैः स्वदारनासापथिकैर्मरुद्भिः।
अनङ्गशौर्य्यानलतापदुःखैः अथ प्रतस्थे हरितां मरुद्भिः ॥८६॥
अपास्तपाथेयसुधोपयोगैः त्वद्युम्निनैव स्वमनोरथेन।
क्षुधश्च निर्वापयता तृषश्च स्वादीयसाध्वा गमितः सुखं तैः ॥८७॥

---

हीम् प्रीणयन्ती सती, तेषां नाकसदाम् इन्द्रादीनां देवानाम्, श्रुती कर्णौ, अयासीत् गतवती। तत एव तेषा-मयमागम इति भावः।

अत्र श्रौतोपमालङ्कारस्त्वेकानुप्रासेन संसृष्टः। गुणरीती पूर्ववत् ॥८५॥

বাঙ্গালা—হে দময়ন্তি! 'আগামী কল্য আপনার স্বয়ংবর হইবে' এই জনশ্রুতি অমৃতের সারভাগের ধারার ন্যায় প্রীতি উৎপাদন করতঃ, সেই ইন্দ্রাদি দেবগণের কর্ণে গিয়াছিল ॥৮৫॥

**অন্বয়:**—अथ अनङ्ग-शौर्य्यानल-ताप-दुःखैः हरितां मरुद्भिः सपत्नीभव-दुःख-तीक्ष्णैः स्वदार-नासा-पथिकैः मरुद्भिः समं प्रतस्थे ॥८६॥

सममिति। अथ तव स्वयंवरवृत्तान्तश्रवणानन्तरम्, अनङ्गस्य कामस्य शौर्य्यं वीरत्वमेव अनलस्तापजनकत्वा-दग्निस्तस्य तापेन दुःखैः दुःखितैः, हरितां पूर्वादीनां अलसूनां दिशाम्, मरुद्भिर्देवैरिन्द्रादिभिः कर्त्तृभिः, सपत्नी भवतीति सपत्नीभवं यद्दुःखं तेन तीक्ष्णैरत्युष्णैः स्वदाराणां निजनिजस्त्रीणां नासासु नासिकासु पथिकैः पान्थैः तन्नासिकावर्त्तिभिरित्यर्थः, मरुद्भिर्निश्वासवायुभिः, समं सह, प्रतस्थे युष्माकमिमां राजधानीं प्रति प्रस्थितम्। इन्द्रादीन् तथा प्रस्थितान् दृष्ट्वा तेषां स्त्रीभिर्दीर्घमुष्णञ्च निश्वसितमिति भावः। मरुद्वायुभिः सह प्रस्थानेन आयासभङ्गरूपं दुःखं सूचितम्।

अत्राद्याविन्द्रादीनां प्रस्थानं परस्य तद्दुःखेन तत्स्त्रीणां निश्वासः; किन्तु सहार्थाभावात् तयोरेककालीनतानिर्देशेन कार्य्यकारणयोः पौर्वापर्य्यविपर्य्यासादतिशयोक्तिः, तन्मूला च सहोक्तिरलङ्कारः, मरुद्भिर्मरुद्भिरित्यन्त्ययमकञ्चा-नयोः संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः।

"मरुतौ पवनामरौ" इत्यमरः ॥८६॥

বাঙ্গালা—তাহার পর, ইন্দ্রপ্রভৃতি দিকপালগণ কামানলের সন্তাপে সন্তপ্ত হইয়া সপত্নী হইবে বলিয়া দুঃখিত স্ব স্ব পত্নীগণের নিশ্বাসবায়ুর সহিত প্রস্থান করিলেন ॥৮৬॥

**অন্বয়:**—स्वादीयसा क्षुधश्च तृषश्च निर्वापयता त्वद्युम्निना स्वमनोरथेन एव अपास्त-पाथेय-सुधोप-योगैः तैः अध्वा सुखं गमितः ॥८७॥

अपास्तेति। स्वादीयसा अतिशयसुस्वादुना अतीवहर्षं जनयतेत्यर्थः, अत एव क्षुधं बुभुक्षाञ्च, तृषं पिपा-साञ्च, निर्वापयता उपशमयता, त्वद्युम्निना त्वद्गामिना त्वद्विषयकेणेत्यर्थः, स्वमनोरथेन निजनिजाभिलाषेणैव कारणेन, अपास्तः परित्यक्तः पाथेयः पथिसम्बलरूपः सुधोपयोगः अमृतरूपं खाद्यं यैस्तैः, तैरिन्द्रादिभिर्देवैः, अध्वा पन्थाः, सुखमनायासं यथा स्यात्तथा, गमितः अतिवाहितः। इन्द्रादयो देवास्तव लाभसम्भावनासुखेनैव क्षुधां पिपासाञ्च विस्मरन्तः खाद्यपानानयन्तः सुखेन तावन्तं पन्थानमतिक्रान्तवन्त इति भावः।

अत्र क्षुत्तृषोर्निर्वापणं प्रति स्वादीयःपदार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गं निर्वापयतेत्येकया क्रियया क्षुत्तृषोः कर्मतयाभिसम्बन्धात् तुल्ययोगिता चेत्यनयोरङ्गाङ्गितया सङ्करः। गुणरीती पूर्ववत् ॥८७॥

বাঙ্গালা—আপনাকে লাভ করিবার সুমধুর বাসনাই দেবগণের ক্ষুধা ও পিপাসা

प्रिया मनोभूशरदावदाहे देवीस्त्वदर्थेन निमज्जयद्भिः ।
सुरेषु सारैः क्रियतेऽधुना तैः पादार्पणानुग्रहभूरियं भूः ॥८८॥
अलङ्कृतासन्नमहीविभागैः अयं जनस्तैरमरैर्भवत्याम् ।
अवापितो जङ्गमलेख्यलक्ष्मीं निक्षिप्य सन्देशमयाक्षराणि ॥८९॥
एकैकमेते परिरभ्य पीन-स्तनोपपीडं त्वयि सन्दिशन्ति ।
त्वं मूर्च्छतां नः स्मरभिन्नमर्म्मैः [१] मुदे विशल्यौषधिवल्लिरेधि ॥९०॥

---

নিবৃত্ত করিয়াছিল; তাই তাঁহারা পথের সকল অমৃতরূপ খাদ্য পরিত্যাগ করিয়া, অনায়াসে পথ অতিক্রম করিয়াছেন ॥৮৭॥

अन्वयः—सुरेषु सारैः तैः त्वदर्थेन प्रियाः देवीः मनोभू-शर-दाव-दाहे निमज्जयद्भिः (सद्भिः) अधुना इयं भूः पादार्पणानुग्रहभूः क्रियते ॥८८॥

प्रिया इति । सुरेषु देवेषु मध्ये सारैः श्रेष्ठैः, तैरिन्द्रादिभिश्चतुर्भिर्दिक्पालैः, त्वदर्थेन त्वन्निमित्तेन, प्रिया वल्लभा अपि, न पुनरप्रिया येन तासां स्वत एव त्यागः सम्भवतीति भावः, देवीः शचीप्रभृतीः, मनोभुवः कामस्य शरा बाणा एव दावो दावानलस्तस्य दाहे सन्तापे, निमज्जयद्भिः पातयद्भिः सद्भिः, अधुना, इयं भूः पृथिवी, पादार्पणं स्वस्वपदन्यास एव अनुग्रहस्तस्य भूः स्थानम्, क्रियते । अत एव त्वमसाधारणी वर्त्तसीति भावः ।

अत्र शरदावेति निरङ्गं केवलरूपकम्, प्रथमे चतुर्थे च पादे वृत्त्यनुप्रासः, तृतीये च छेकानुप्रास इत्येतेषां संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥८८॥

বাঙ্গালা—রাজকন্যে! দেবশ্রেষ্ঠ ইন্দ্রপ্রভৃতি দিক্‌পালগণ আপনারই জন্য শচী-প্রভৃতি প্রিয়তমা দেবীদিগকে কামবাণরূপ দাবানলের দাহে নিক্ষেপ করিয়া, এই পৃথিবীকে পদার্পণরূপ অনুগ্রহের স্থান করিয়াছেন ॥৮৮॥

अन्वयः—तैः अमरैः अलङ्कृतासन्नमहीविभागैः (सद्भिः) भवत्याम् अयं जनः सन्देशमयाक्षराणि निक्षिप्य जङ्गमलेख्यलक्ष्मीम् अवापितः (इव) ॥८९॥

अलङ्कृतेति । तैरिन्द्रादिभिः, अमरैर्देवैः, अलङ्कृतः स्वस्वावस्थानेन शोभित आसन्नमहीविभागो निकटवर्त्तिभूतलांशो यैस्तादृशैः सद्भिः, भवत्यां भवत्याः समीपे, अयं मत्स्वरूपो जनः, सन्देशमयाक्षराणि वाचिकस्वरूपवर्णान्, निक्षिप्य अर्पयित्वा, जङ्गमलेख्यस्य स्वयंगमनशीलपत्रिकाया लक्ष्मीं शोभाम्, अवापितः प्रापित इव । भवत्याः समीपे दूतभावेनाहं प्रेरित इति स्थूलार्थः ।

अत्र जङ्गमलेख्यस्याप्रसिद्धत्वात् प्रतीयमाना निदर्शनोपमालङ्कारः शेषपादगतच्छेकानुप्रासेन संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ॥८९॥

বাঙ্গালা—সেই দেবতারা নিকটবর্ত্তী কোন স্থানে থাকিয়া, বক্তব্য বিষয় বলিয়া দিয়া, আপনার নিকটে আমাকে গমনশীল পত্রের শোভাই যেন পাওয়াইয়া দিয়াছেন ॥৮৯॥

अन्वयः—(हे दमयन्ति !) एते एकैकं पीनस्तनोपपीडं परिरभ्य त्वयि सन्दिशन्ति । त्वं स्मर-भिन्न-मर्म्मैः मूर्च्छतां नः मुदे विशल्यौषधिवल्लिः एधि ॥९०॥

एकैकमिति । हे दमयन्ति ! एते इन्द्रादयो देवाः, एकैकं प्रत्येकम्, पीनस्तनयोस्तव पीवरकुचयुगलाभ्यां पीडयित्वा स्वस्ववक्षःसंघर्षेण निपीड्य तव पीनस्तनाभ्यां स्वस्ववक्षः पीडयित्वा वेति पीनस्तनोपपीडम्,

---

(१) ··· स्मरभग्नमर्म्मैः ।

दयस्व नो घातय नैवमस्मान् [१] अनङ्गचाण्डालशरैरदृश्यैः।
भिन्ना वरं तीक्ष्णकटाक्षबाणैः प्रेमस्तव प्रेमरसात् पवित्रैः॥९३॥
त्वदर्थिनः सन्तु परःसहस्राः प्राणास्तु नस्त्वच्चरणप्रसादाः [२]।
विसृज्यते कैतवनाटितञ्चेत् [३] अन्तःस्वरः पञ्चशरः प्रमाणम् ॥९४॥

अत्र वर्णानुप्रासच्छेकानुप्रासयोः संसृष्टिः। माधुर्य्यं गुणः, वैदर्भी च रीतिः।

स्त्रीलिङ्गभुजाशब्दोऽपि बाहुवाची। तथा च शिशुपालवधेऽपि "दंष्ट्रानुबद्धाय भुजाय गुर्वीम्।" आदि-श्लेषणं इति वर्णस्तस्य समूहवाचकतया बहुत्वबोधकत्वादन्यलिङ्गत्वेन समानाधिकरणमसङ्गतिः ॥९२॥

বাঙ্গালা—দময়ন্তি! তুমি নিজের বাহু দুই খানিকে আমাদের দেবতাদের কণ্ঠ-পরিবেষ্টনের আকার প্রাপ্ত করাও, প্রসন্ন হও; কামলীলাতরঙ্গের সংস্পর্শে সুশীতল অঙ্গ দ্বারা আমাদের কামজ্বর নির্বাপণ কর ॥৯২॥

অন্বয়:—( হে দময়ন্তি! ) नः दयस्व, अदृश्यैः अनङ्ग-चाण्डालशरैः अस्मान् एवं न घातय। (वयम्) प्रेमरसात् पवित्रैः तव तीक्ष्ण कटाक्ष-बाणैः भिन्नाः (सन्तः) वरं प्रेमः ॥९३॥

दयस्वेति। हे दमयन्ति! नः अस्माकम्, दयस्व अस्मासु दया कुरु। अदृश्यैः सूक्ष्मभावात् दर्शना-योग्यैः; अत एव निवारयितुमशक्यैरिति भावः, अनङ्गः काम एवातिशूरत्वात् चाण्डालस्तस्य शरैर्बाणैः, अस्मान्, एवम् अनेन प्रकारेण न घातय न संहारय। वयम्, प्रेम तव प्रणय एव रस आस्वादो जलञ्च तस्मात् तत्सम्पर्कादित्यर्थः, पवित्रैः शुद्धैः, तव तीक्ष्णाः कटाक्षा एव बाणास्तैः, भिन्ना विदारितहृदयाः सन्तः, वरम् ईषत्प्रियं यथा स्यात्तथा, प्रेमः प्रेता मृता भवामः। तथा च अपवित्रत्वाद्दुर्गतिजनकेन अनङ्गचाण्डालशरेण मरणापेक्षया पवित्रत्वात् सद्गतिजनकेन तव कटाक्षशरेणास्माकं मरणं सर्वथैव श्रेय इति भावः। अस्माकम-नलम्बं वरित्वा प्रेमकटाक्षपातेन प्रीणयेति स्फुटार्थः।

अत एवात्र तीक्ष्णकटाक्षबाणपातरूपप्रातिकूल्यस्य प्रीतिरूपानुकूल्यानुबन्धित्वात् अनुकूलं नामालङ्कारः, निरङ्ग-केवलरूपकञ्चेत्यनयोः, इत्येतेषामङ्गाङ्गिभावेन सङ्करः; सोऽपि पुनश्छेकानुप्रासेन संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः।

न इति "कर्म्मणि दयेशोः" इति कर्म्मणि षष्ठी ॥९३॥

বাঙ্গালা—দময়ন্তি! আমাদের প্রতি দয়া কর; কামস্বরূপ চাণ্ডালের অদৃশ্য বাণ দ্বারা আমাদিগকে এই ভাবে হত্যা করাইও না। কেন না, তোমারই প্রণয়রসের সংস্পর্শে সুপবিত্র তীক্ষ্ণ কটাক্ষরূপ বাণ দ্বারা বিদীর্ণ হইয়াই বরং আমরা মরিব ॥৯৩॥

অন্বয়:—(হে দময়ন্তি!) परःसहस्राः त्वदर्थिनः सन्तु; तु नः प्राणाः त्वच्चरणप्रसादाः (एव)। चेत् कैतवनाटितं विसृज्यते, (तदा) अन्तःस्वरः पञ्चशरः प्रमाणं (भवतु) ॥९४॥

ननु अन्येऽपि बहव एव मम प्रार्थिनः सन्ति। तत् कं विहाय कं वरिष्यामीत्याह त्वदर्थिन इति। हे दमयन्ति! सहस्रात् परे इति परःसहस्राः सहस्राधिका अन्ये इत्यर्थः, तव अर्थिनो याचकाः सन्तु। सौन्दर्यातिशयात् प्रायेण सर्व एव युवानस्तव प्रार्थिनो भविष्यन्तीत्यत्र किं नाम वक्तव्यमस्तीति भावः। तु किन्तु, नोऽस्माकम्, प्राणा जीवनानि; तव चरणयोः प्रसादोऽनुग्रहो येषु ते तादृशा एव। अस्मदन्यतमस्य वरणेऽपि तव चरणानुग्रहस्यार्थैव वयं जीवामः, न पुनरन्यथेति तेभ्योऽस्माकं वैशिष्ट्यं दृष्ट्वाऽस्मानेव वृणीष्वेति भावः।

(१) दयस्व किं घातयसि त्वमस्मान्। (२) प्रसादः (३) … कैतवमर्पितञ्चेत्।

अस्माकमध्यासितमेतदन्तः तावद्भवत्या हृदयं चिराय ।
वक्षिहृदयालङ्क्रियतामिदानीं मुरौ मुरं विद्विषतः श्रियेव ॥९५॥
दयोदयश्चेतसि चेत्तवाभूत् अलङ्कुरु द्यां विफलो विलम्बः ।
भुवः स्वरादेशमथाचराम: भूमौ धृतिं यासि यदि स्वभूमौ ॥९६॥

ननु दैवीभोगिना युष्माकमिदं प्रतारणमात्रं ननु वास्तवमित्याह-- चेद् यदि, कैतवस्य छलस्य नाटितम् अभिनयमात्रम्, विप्रलम्भी वाग्भङ्गी एतत् प्रार्थनमिति शेषः; तदा अन्तरे आत्मन एवान्तवर्त्ती, पञ्चशरः कामः, प्रमाणं साक्षी, भवतु । तथा च तवान्तर्वर्त्ती कामः अस्माकमन्तवर्त्ती कामश्च एक एवेति तं पृष्ट्वा जानीहि, यदेतदस्माकं न कैतवनाटितम्, अपि तु सर्वथैव वास्तवमिति भावः ।

अत्राप्निमर्पादि पदान्तगतोऽन्त्यनुप्रासोऽलङ्कारः । माधुर्यं गुणः, वैदर्भी च रीतिः ।

परःशतशा इति "अपस्करादयश्च" इति सुट् निपातः ॥९४॥

বাঙ্গালা—দময়ন্তি ! সংখ্যাধিক লোক তোমার প্রার্থী হউক ; কিন্তু আমাদের জীবনধারণ তোমারই চরণের অনুগ্রহে সম্পন্ন হইতেছে । এটাকে যদি প্রতারণার অভিনয় বলিয়া আশঙ্কা কর, তাহা হইলে, নিজেরই অন্তরের কাম সাক্ষী হউক ॥৯৪॥

অন্বয়:—(হে ভৈমি ! ) भवत्या त्वया अस्माकम् एतत् अन्तः हृदयं चिराय तावत् अध्यासितम् । इदानीं श्रिया मुरं विद्विषतः उरः इव वक्षिः हृदयम् अलङ्क्रियताम् ॥९५॥

अस्माकमिति । हे भैमि ! भवत्या सतीभूतया, अतएव दयाधिक्यादस्माकं प्रार्थनापूरणमवश्यमेव त्वया कर्त्तव्यमिति भावः, त्वया अस्माकम् अन्तर्हृदयं मनः, चिराय तावत् चिरकालमेव, अध्यासितम् अधिष्ठितम्; अस्माभिश्चिरमेव भाव्यमानत्वादित्याशयः । इदानीम्, श्रिया लक्ष्म्या, मुरं विद्विषतो मुरारेर्नारायणस्य, उरो वक्ष इव, वक्षिहृदयम् अस्माकं वक्षः, अलङ्क्रियताम् आलिङ्गनेन भूष्यताम् ।

अत्र श्रौतोपमालङ्कारश्छेकानुप्रासेन संसृष्टः । प्रसादो गुणः, वैदर्भी च रीतिः । भवत्येत्यस्य युष्मदर्थपरतया व्याख्याने भग्नप्रक्रमतादोषः ।

"भवद्युष्मत्तदर्थयोः" इति त्रिकाण्डशेषः । "हृदयं वक्षसि स्वान्ते बुक्कायाम्" इति हेमचन्द्रः ॥९५॥

বাঙ্গালা—দময়ন্তি ! সৎস্বভাবা তুমি আমাদের এই ভিতরের হৃদয়ে চিরকালই অধিষ্ঠান করিতেছ ; কিন্তু এখন লক্ষ্মীদেবী যেমন নারায়ণের বক্ষঃস্থল অলঙ্কৃত করিতেছেন ; তেমন তুমিও আমাদের বাহিরের হৃদয় অলঙ্কৃত কর ॥৯৫॥

অন্বয়:—(हे सुन्दरि ! ) तव चेतसि, चेत् दयोदयः अभूत् (तदा) द्याम् अलङ्कुरु, विलम्बः विफलः । अथ स्वभूमौ भूमौ यदि धृतिं यासि (तदा) भुवः स्वरादेशम् आचरामः ॥९६॥

दयोदय इति । हे सुन्दरि । तव चेतसि, चेद् यदि, दयाया अस्मान् प्रति कृपाया उदय उद्रेकः, अभूत्; तदा द्यां स्वर्गम्, अलङ्कुरु, अस्माकमभिमतस्य वरणेन तत्रावस्थानादिति भावः । विलम्बः कालक्षेपः, विफलः, प्रयोजनाभावादित्याशयः । अथ पक्षान्तरे, स्वभूमौ निजजन्मस्थाने, भूमौ मर्त्यलोके, यदि धृतिम् अवस्थानेन प्रीतिम्, यासि प्राप्नोषि, तदा भुवो मर्त्यलोकस्यैव, स्वरादेशं, स्वर्गस्य नाम, आचरामः स्वावस्थानेन कुर्मः, देवावस्थानदैश्वर्यं च स्वर्गत्वादित्यभिप्रायः । तव सन्तोषार्थं वयमेव मर्त्यलोक एव तर्हि वसाम इति समुदायार्थः ।

अत्र धृतिप्राप्तिं प्रति स्वभूमिपदार्थस्य हेतुत्वात् काव्यलिङ्गं छेकानुप्रासश्चानयोः संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥९६॥

खण्डः किमु त्वद्गिर एव खण्डः किं शर्करा तत्पथशर्करैव ।
कृशाङ्गि ! तद्भङ्गिरसोत्थकक्ष-तृणं नु दिक्षु प्रथितं तदिक्षुः ॥१०१॥
ददाम किं ते सुधयाऽधरेण त्वदास्य एव स्वयमास्यते यत् (१) ।
विधुं (२) विजित्य स्वयमेव भावि त्वदाननं तन्मखभागभागि (३) ॥१०२॥

---

अप्सरस इत्यादयः स्वर्गवेश्या एव अपां जलानां सरांसि ह्रदास्तेषु अप्सरःसु, किं पुनः शाम्येदिति शेषः, अपि तु कथमपि नेत्यर्थः, सुधापेक्षया जलस्य अत्यधीनत्वादिति भावः । तर्हि केन शाम्येदित्याह— तु किन्तु, सूनाशुगः पुष्पबाणः कामस्तस्य इषोः पुष्पमयस्य बाणस्य, मधुशीकरेण मकरन्दविन्दुस्वरूपेण, तव ममतावचसा 'यूयमेव मम प्राणवल्लभाः' इत्यादिरूपेण ममतासूचकालापेन, निर्वाति निर्वास्यति शान्तिं यास्यतीत्यर्थः ; आकाङ्क्षितत्वादिति भावः ।

अत्र स्वर्वेश्याजलह्रदयोर्भेदेऽपि अप्सरःपदश्लेषाभेदाध्यवसायादतिशयोक्तिः, अर्थापत्तिः, सुधाह्रदेऽवगाहन-रूपे कारणे सत्यपि तापशान्तिरूपकार्य्यानुत्पत्तेर्विशेषोक्तिः, परार्द्धे अस्य गिरः केवलरूपकम्, अन्यानुप्राणने-त्येतेषां संसृष्टिः । शाम्य इति शमधातुना प्रक्रम्य निर्वातीति वाधातुप्रयोगादेकः प्रकृतिविषयो भग्नप्रक्रमता दोषः, अपरश्च आशुगपदेन प्रक्रम्य इषुपदप्रयोगात् पर्य्यायविषयो भग्नप्रक्रमतादोषः । तयोः समाधानाय परार्द्धमेवं पठनीयम् 'शाम्येत्तु स त्वन्ममतावचोभिर्मनोभवेषोर्मधुशीकरैर्वा ।' माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥१००॥

বাঙ্গালা—দময়ন্তি ! তোমার নিমিত্ত আমাদের কামসন্তাপ, অমৃতের হ্রদে অবগাহন করিয়াও নিবৃত্তি পায় নাই; সুতরাং জলের হ্রদে অবগাহন করায় নিবৃত্তি পাইবে কেন ? তবে কামদেবের পুষ্পময় বাণের মধুবিন্দুস্বরূপ তোমারই মমতাসূচক বাক্যে তাহা নিবৃত্তি পাইবে ॥১০০॥

अन्वयः—(हे) कृशाङ्गि ! त्वद्गिरः खण्डः एव खण्डः किमु ? तत्पथ-शर्करा एव शर्करा किम् ? तद्भङ्गिरसोत्थकच्छतृणं दिक्षु प्रथितम् इक्षुः तत् नु ? ॥१०१॥

खण्ड इति । हे कृशाङ्गि ! तव गिरो वाक्यस्य, खण्डः, अंश एव, खण्डो गुडविशेषः किमु ? तादृश-मधुरत्वादिति भावः । तथा तस्या गिरः पथि निर्गमनमार्गे विद्यमाना शर्करा क्षुद्रक्षुद्रप्रस्तरगुटिका एव, शर्करा सिता किम् ? समानमिष्टत्वादित्याशयः । तथा तस्या गिरो या भङ्गिर्विन्यासप्रकारस्तस्य रस आस्वाद एव रसो जलं तस्मादुत्थ उत्पन्नो यः कच्छो जलप्रायदेशस्तस्य तृणमेव, दिक्षु सर्वास्वेव हरित्सु, प्रथितं प्रसिद्धम्, इक्षुः इक्षुनामकम्, तत् तृणम्, नु किम् ? तुल्यसुस्वादुत्वादित्यभिप्रायः । एभिर्गुणैः स्ववशीभूता एव वयमिति समुदायाशयः ।

अत्र त्रिष्वेव वाक्येषु जात्युत्प्रेक्षाः, श्लेषानुप्राणिते ति संसृष्टिः । गुणरीती पूर्ववत् ।

"स्यात् खण्डः शकले इक्षुविकारमणिदोषयोः" इति विश्वः । "शर्करा खण्डविकृतावुपलाकर्परांशयोः । शर्करान्वितदेशेऽपि रुग्भेदे शकलेऽपि च" इति मेदिनी । "जलप्रायमनूपं स्यात् पुंसि कच्छस्तथाविधः" इत्यमरः ॥१०१॥

বাঙ্গালা—কৃশাঙ্গি ! তোমার বাক্যের একটুখানি অংশই কি পাটালি গুড় ? সেই বাক্যের পথের কাঁকরই কি চিনি ? আর সেই বাক্যভঙ্গির রস হইতে উৎপন্ন চরার তৃণই কি সর্ব্বদিক্ প্রসিদ্ধ ইক্ষুনামক তৃণ ? ॥১০১॥

---

(१) ... आस्यते हि । (२) चन्द्रम् ... । (३) ... भागभोजि ।

स्वप्नेन प्रापितायाः प्रतिरजनि तव श्रीषु मग्नः कटाक्षः,
श्रोत्रे गीतामृताब्धौ त्वगपि ननु तनूमञ्जरीसौकुमार्ये।
नासा श्वासाधिवासेऽधरमधुनि रसज्ञा चरित्रेषु चित्तं
तन्नस्तन्वङ्गि! कैश्चिन्न करणहरिणैर्वागुरा लङ्घितासि ॥१०६॥

---

"मनो रोप वं पुरयोः" इत्यमरः। "मन्दनी वर्णके पुन्मे" इति विश्वः।
भ्रादिति अत्र वाक्यीसुविभक्ती "भ्रामिषि गृह्णीयातम्" इति वीजातम्, "यथो वादिः" इत्यलङ्कारकौस्तुभः।
स्रग्धरा वृत्तम् ॥१०५॥

বাঙ্গালা—কামদেব নিজের ধনু, বাণ এবং মকররূপ ধ্বজের সহিতই দগ্ধ হইয়াছিলেন; তার পর এখন তোমার অনুগ্রহে আমাদের মনের নন্দন হইয়া তিনি আবার মনসিজতা লাভ করুন। হে কৃশাঙ্গি! তোমার ভ্রূযুগল দ্বারা তিনি ধনুযুক্ত হউন, তোমার ওষ্ঠ ঈষদ্ হাস্য দ্বারা বিজয়-বাণশালী হউন; আর তোমারই চঞ্চল নয়নযুগলরূপ, শ্রোণী-সংলগ্ন দুইটী তাঁহার মীনধ্বজরূপ চিহ্ন হউক ॥১০৫॥

অন্বয়ঃ – ননু (দময়ন্তি!) নঃ কটাক্ষঃ প্রতিরজনি স্বপ্নেন প্রাপিতায়াঃ তব শ্রীষু মগ্নঃ, শ্রোত্রে গীতামৃতাব্ধৌ মগ্নে, ত্বক্ অপি তনূ মঞ্জরী-সৌকুমার্য্যে মগ্না, নাসা শ্বাসাধিবাসে মগ্না, রসজ্ঞা অধর-মধুনি মগ্না, চিত্তং চরিত্রেষু মগ্নম্; তৎ (হে) তন্বঙ্গি! নঃ কৈশ্চিৎ করণহরিণৈঃ বাগুরা (ত্বং) ন লঙ্ঘিতা অসি ॥১০৬॥

स्वप्नेनेति। ननु हे दमयन्ति! नः अस्माकम्, कटाक्षो वक्रदृष्टिः, प्रतिरजनि प्रत्येकरात्रावेव, स्वप्नेन प्रापितायाः दर्शितायाः स्वप्ने दृष्टाया इत्यर्थः। देवानां स्वप्नाभावेऽपि स्वप्नेन प्रापणोक्तिस्तु मानुष्याभिलाषे मानुषव्यवहारस्यौचित्यात् काल्पनिकी। तव श्रीषु सौन्दर्य्येषु, मग्नो निविष्टः। श्रोत्रे कर्णयुगलम्, तव गीतान्येवामृतानि तेषामब्धौ समुद्रे मग्ने। त्वक् त्वगिन्द्रियमपि, तव तनूः शरीरमेव मञ्जरी तस्याः सौकुमार्य्ये कोमलतायां मग्ना। नासा नासिका, तव श्वासस्य अधिवासे सौरभे मग्ना। रसज्ञा जिह्वा, तव अधरस्य मधुनि क्षौद्रे मग्ना। तथा चित्तम् अस्माकं मनः, तव चरित्रेषु विलासकौतुकादिव्यापारेषु मग्नम्। तत् तस्मात्, हे तन्वङ्गि! कृशाङ्गि! नः अस्माकम्, कैश्चित् कैरपि, करणानि इन्द्रियाण्येव हरिणा मृगास्तैः, वागुरा मृगबन्धनजालरूपा त्वम्, न लङ्घिता नातिक्रान्तासि, अपि तु सर्वं एवास्माकमिन्द्रियहरिणाः त्वद्रूपेणैव जालेन निबद्धा इत्यर्थः। अतएवास्माकं गत्यन्तराभावात् वरणेनोद्धारः क्रियतामिति भावः।

अत्र मग्न इत्येकया क्रियया कटाक्षादीनां कर्तॄणामभिसम्बन्धात् तुल्ययोगिताऽलङ्कारः, गीतामृतेति तनूमञ्जरीति करणहरिणैरिति वागुरात्वमिति च निरङ्गकेवलरूपकचतुष्टयम्, छेकानुप्रासो वृत्त्यनुप्रासश्चैतेषां संसृष्टिः। रसज्ञेत्यत्र रसेत्यस्य पृथक् पदत्वात् यतिभङ्गदोषः। प्रसादो गुणः, वैदर्भी च रीतिः

"रसज्ञा रसना जिह्वा" "करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि" इत्यमरः।

भत्ती! अत्र एव देवानां मनोभावान् मनसा कल्पयन् दमयन्तीस्वानुरागप्राचुर्य्यात् भाविनीं भार्य्यामिव जानन् हृदयमनल्पमभ्यस्यैव सुस्पष्टमेवाचष्ट। अतएव देवत्वे तेषां नायकत्वे तस्य नलस्य च अपरिचितताया एव तस्याः आत्मसमर्पणमेव यद्यपि केवलं वचसा नाचक्षीयेति समालोचनीयम्। स्रग्धरा वृत्तम् ॥१०६॥

বাঙ্গালা—দময়ন্তি! আমরা প্রত্যেক রাত্রিতেই তোমাকে স্বপ্নে দেখিয়া থাকি; তখন আমাদের কটাক্ষ তোমার সৌন্দর্য্যে মগ্ন হইয়া যায়; কর্ণযুগল তোমার গানসুধার

इति धृतसुरसार्थवाचिकस्रङ्निजरसनातलपत्रहारकस्य [१]।
सफलय मम दूततां वृणीष्व स्वयमवधार्य्य दिगीशमेकमेषु ॥१०७॥
आनन्दयेन्द्रमथ मन्मथमन्मथाग्निं केलीभिरुद्धर तनूदरि ! नूतनाभिः।
आसादयोदितदयं यमने मनो वा नो वा यदीत्थमथ तद्वरुणं वृणीथाः ॥१०৮॥

---

সাগরে ডুবিয়া পড়ে; ত্বগিন্দ্রিয় তোমার শরীররূপ মঞ্জরীর কোমলতায় মিশিয়া যায়; নাসিকা তোমার নিশ্বাসের সৌরভে নিবিষ্ট হয়; জিহ্বা তোমার ওষ্ঠের মধুতে লাগিয়া যায় এবং মন তোমার চরিত্রে আকৃষ্ট হইতে থাকে। অতএব হে কৃশাঙ্গি! আমাদের কোন ইন্দ্রিয়রূপ হরিণই জালরূপ তোমাকে অতিক্রম করিতে পারে নাই ॥১০৬॥

अन्वयः—इति धृत-सुर सार्थ-वाचिक-स्रक्-निज-रसनातल पत्र-हारकस्य मम दूततां सफलय, स्वयम् अवधार्य्य एषु एकं दिगीशं वृणीष्व ॥१०७॥

इदानीं दौत्यमुपसंहरन्नाह इतीति। इति इत्थम्, धृता सुरसार्थस्य देवसमूहस्य वाचिकस्रक् सन्देशपरम्परा येन तत्तादृशं निजं स्वकीयं रसनातलं जिह्वैव पत्रं तस्य हारकौ वाहकस्य तथोक्तस्य, मम नलस्य, दूततां दौत्यम्, सफलय सफलं कुरु। ननु केन सफलयामीत्याह— स्वयमात्मनैव, अवधार्य्य स्वपक्षे कतमः स्वस्यानुकूलतमो भवेदिति निर्द्धार्य्य, एषु इन्द्रादिषु चतुर्षु दिक्पालेषु मध्ये, एकं दिगीशं दिक्पालम्, वृणीष्व; तेनैव मे दूतता सफला भवेदिति भावः। आर्य्यस्त्रिया अनेकपतिवरणासम्भवादेकमित्युक्तम्।

अत्र रसनातले पत्रत्वारोपात् निरङ्गं केवलरूपकमलङ्कारः। समासबाहुल्यादोजो गुणः, गौडी च रीतिः।

पुष्पिताग्रा वृत्तम् ॥१०७॥

বাঙ্গালা—দময়ন্তি! আমার রসনা দেবগণের এইরূপ খবরগুলি ধারণ করিয়া রহিয়াছে; সুতরাং এই রসনারূপ-পত্র-বাহক আমার দৌত্যকে আপনি সফল করুন; আপনি নিজেই স্থির করিয়া এই চারি জন দিক্‌পালের মধ্যে এক জনকে বরণ করুন ॥১০৭॥

अन्वयः—(हे) तनूदरि! इन्द्रम् आनन्दय; अथ नूतनाभिः केलीभिः मन्मथमथम् अग्निम् उद्धर; वा उदितदयं मनः यमने आसादय; वा यदि इत्थं नो, अथ तत् वरुणं वृणीथाः ॥१०৮॥

ननु पूर्व्वश्लोके एष्वित्यनेन केषां निर्द्देशः कृतः? पूर्व्वमुक्तानां विस्मृतत्वात् पुनः कीर्त्तयितुमिच्छामीत्याह। आनन्दयेति। हे तनूदरि! कृशोदरि! इन्द्रम् आनन्दय वरणेनामोदय। अथ अथवा, नूतनाभिः आस्वादनाभावात्... स्वयमेवोद्भावितामिरपूर्व्वाभिः, केलीभिः सुरतक्रीडाभिः, मन्मथमथं कामपीडाप्रविष्टम्, अग्निम्, उद्धर वरणेन उत्तोलय। वा अथवा, उदिता उत्पन्ना दया यत्र तादृशं मनः, यमने यमे, आसादय प्रापय, तादृशमनःप्रेरणेन तं वृणीष्वेत्यर्थः। वा अथवा, यदि इत्थं नो न साधु मन्यसे, अथेति वाक्यान्तरारम्भे, तत् तदा वरुणम्, वृणीथाः। इदानीञ्च तेषां नामानि कृत्वा अन्यतमवरणेन मे दौत्यं सफलयेति भावः।

अत्र च्छेकानुप्रासवृत्त्यनुप्रासयोः संसृष्टिरलङ्कारः। मधुररचनाप्राचुर्य्यान्माधुर्य्यं गुणः, वैदर्भी च रीतिः।

एतेनाक्लिष्टत्वादेतदुत्तरादिक्रमाभिसर्गसूचनं वेदितव्यम्।

वसन्ततिलका वृत्तम् ॥१०৮॥

বাঙ্গালা—হে কৃশোদরি! আপনি ইন্দ্রকে বরণ করিয়া আনন্দিত করুন; অথবা

---

(१) इति धृतसुरसार्थवाचिकोच-स्वरसनवल्लरिपत्रहारकस्य।

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।
तस्यागादयमष्टमः कविकुलादृष्टाध्वपान्थे महा-
काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः॥१०८॥

—•—

নৃপগণ নৃতন কৌশলে কামপীড়ায়গ্র আমাকে উদ্ধার করুন; কিম্বা নিজের দয়ার্দ্র মনকে কাহারও প্রতি প্রেরণ করুন; অথবা যদি ইহা ভাল না মনে করেন, তাহা হইলে বরপণকে বরণ করুন॥১০৮॥

---

श्रीहर्षमिति। कविकुलैः अन्यान्यकविगणैः न दृष्टो यः अध्वा पन्थास्तस्य पान्थे निरवधिविषयरूपे नूतन-मार्गे रीत्या विरचिते इत्यर्थः। शेषं च मूलस्य टीकायामतिस्पष्टत्वात् व्याख्यातं न कृतम्। अन्यत् सुगममिति शेषः।

नानासुधीभरिते भारत-पूर्ववङ्ग-कोटालिपाड़विषयीणमियानिवासी।
गङ्गाधरस्य तनयः खलु काश्यपीयः श्रीमान् नवीपुरपुरे हरिदासशर्म्मा॥
सप्त-वेद-वसु-चन्द्र सम्मिते वत्सरे शकमहीपतेर्मधौ।
भावयेऽङ्घ्रि परमेश्वरं स्मरन् च ह्यमस्य विवृतिं समापयत्॥

इति श्रीहरिदाससिद्धान्तवागीशभट्टाचार्य्यविरचितायां नैषधचरितटीकायां जयन्तीसमाख्यायाम्
अष्टमः सर्गः॥०॥



# नवमः सर्गः ।

——:*:——

इतीयमक्षिभ्रुवविभ्रमेङ्गितैः स्फुटामनिच्छां विवरीतुमुत्सुका ।
तदुक्तिमात्रश्रवणेच्छयाऽशृणोत् दिगीशसन्देशगिरा (१) न गौरवात् ॥१॥
तदर्पितामश्रुतवद्विधाय तां दिगीशसन्देशमयीं सरस्वतीम् ।
इदं तमुर्व्वीतलशीतलद्युतिं जगाद वैदर्भनरेन्द्रनन्दना (२) ॥२॥

---

अन्वयः—इयम् अक्षिभ्रुवविभ्रमेङ्गितैः स्फुटाम् अनिच्छां विवरीतुम् उत्सुका (सती) तदुक्तिमात्रश्रवणेच्छया इति अशृणोत्, (किन्तु) दिगीशसन्देशगिरां गौरवात् न ॥१॥

धत्तेऽनलस्य सुरसिन्धुजलस्य भाले श्रीते जगत्युपरि चाद्रितटी च नार्य्याः ।
भुङ्क्तेऽमृतस्य गरलस्य पयोधिजं यः तस्मै विचित्र-चरिताय नमः शिवाय ॥

अथाष्टमसर्गसूचितं तत्प्रत्युत्तरवाक्योत्तरादिकत्वादेकवाक्यतापन्नं नवमं सर्गमारभते। इतीति। इयं दमयन्ती अक्षिभ्रुवस्य नयनयुगलस्य भ्रूयुगलस्य च ये विभ्रमाः सञ्चालनविशेषात्मका विलासास्तान्येवेङ्गितानि अभिप्रायविशेषसूचकचेष्टितानि तैः, स्फुटां स्पष्टाम्, अनिच्छाम् इन्द्रादिदिक्पालचतुष्टयस्य वरणाभिलाषाभावम्, विवरीतुं प्रकाशयितुम्, उत्सुका उद्युक्ता सती, तस्य नलाकारदूतस्य यदुक्तिमात्रं केवलं कथनं तस्यैव श्रवणेच्छया, अशृणोत् तस्य वचनानि श्रुतवती; किन्तु दिगीशानाम् इन्द्रादीनां दिक्पालानां या सन्देशगिरो वाचिकवचनानि तासाम्, गौरवाद्गुरुत्वप्रयुक्तसम्मानात्ताः, न अशृणोदित्यन्वयः। एकतः खलु नलाकार एवासौ दूतः, द्वितीयतश्च तदुक्तिजातं नितरामेव मधुरम्। तेनैव तदसौ श्रुतवती, न पुनरिन्द्रादीनां गुरुत्वप्रयुक्तसम्मानेन; आदरेण परपुरुषगुणश्रवणे पातिव्रत्यभङ्गभयादिति भावः।

अत्र नञा गौरवव्यपोहनात् शाब्दी परिसंख्यालङ्कारः, प्रथमे चतुर्थे च पादे छेकानुप्रासश्चेत्यनयोः संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः।

अक्षिणी च भ्रुवौ चेति अक्षिभ्रुवम्, प्राण्यङ्गत्वादेकवद्भावे "धेन्वनडुहादयश्च" इति अच्प्रत्ययान्तो निपातः।

अस्मिन् सर्गे वंशस्थविलं वृत्तम्। तल्लक्षणमुक्तम् ॥१॥

বাঙ্গালা—দময়ন্তী, নয়নযুগল ও ভ্রূযুগলের সবিলাস ইঙ্গিত দ্বারা স্পষ্ট অনিচ্ছা প্রকাশ করিতে উদ্যত থাকিয়া, সেই দূতটীর উক্তিমাত্র শ্রবণ করিবার ইচ্ছাতেই এই কথাগুলি শুনিলেন; কিন্তু দিক্পালগণের সন্দেশবাক্যের গৌরবে নহে ॥১

अन्वयः—वैदर्भ-नरेन्द्र-नन्दना तदर्पितां दिगीश-सन्देशमयीं तां सरस्वतीम् अश्रुतवत् विधाय उर्व्वीतल-शीतलद्युतिं तम् इदं जगाद ॥२॥

तदर्पितामिति। विदर्भाणामयमिति वैदर्भः स चासौ नरेन्द्रो राजा चेति तस्य नन्दना कन्या दमयन्ती, तेन दूतरूपिणा नलेन अर्पिताम् उपन्यस्ताम् उक्तामित्यर्थः, दिगीशानामिन्द्रादीनां दिक्पालानां सन्देशमयीं वाचि-

---

(१) दिगीशसन्देशगिरम्। (२) ... नरेन्द्रनन्दिनी।

मयाङ्ग ! पृष्टः कुलनामनी भवान् अमू विमुच्येव किमन्यदुक्तवान्।
न मह्यमुत्तरधारयस्य किं ह्रियेऽपि सेयं भवतोऽधमर्णता ॥३॥
अहृष्यमाना क्वचिदीप्सिता क्वचित् ममानुयोगे भवतः सरस्वती।
क्वचित् प्रकाश्यां क्वचिदस्फुटां स सरस्वतीं अतुमनाः सरस्वतीम् ॥४॥

---

आख्याम्, तां पूर्वोक्ताम्, सरस्वतीं वाचीम्, अमृतवत् अमृतामिव, विधाय कृत्वा, दिक्पालानां वरणानिच्छया तदुत्तरादानेन अमृतवर्षेव अङ्गीकरणादिति भावः, उर्व्वीतलस्य भूतलस्य शीतलद्युतिं चन्द्रम्, तं नलम्, इदं वक्ष्यमाणम्, जगाद उवाच।

अत्र नलभूतलचन्द्रयोर्भेदेऽपि तदभेदाध्यवसायादतिशयोक्तिरलङ्कारः ; "धर्म्मामरतादात्म्यानिबन्धनायामस्यामि-आयप्रयोगी बिम्बप्रतिबिम्बयोगी सत्यतिशयोक्तेरभ्युपगमात्। यथा अयं राजा अपरः पाकशासनः" इत्युक्तेराप्रकरणीय-रूपयोक्तेः।' छेकानुप्रासयमकयोः संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः।

नन्दनीति "नन्द्यादिभ्युः" इति नन्दयतेर्ल्युप्रत्ययादाप्रत्ययः ॥२॥

বাঙ্গালা—দময়ন্তী, দিক্পালগণের বরণরূপ সেই দূতোক্ত কথাগুলি শুনিয়াও না শুনার ভাণ করিয়া, ভূতলের চন্দ্রস্বরূপ নলকে এইরূপ বলিতে লাগিলেন ॥২॥

**अन्वयः**—अङ्ग ! मया भवान् कुल-नामनी पृष्टः (सन्) अमू विमुच्य एव अन्यत् किम् उक्तवान्। अत्र मह्यम् उत्तरधारयस्य भवतः सा इयम् अधमर्णता किं ह्रिये अपि न (भवति) ? ॥३॥

किं जगादित्याह— मयेति। अङ्ग ! हे महाशय ! मया भवान्, कुलं वंशश्च नाम नामधेयं च ते कुलनामनी पृष्टः "आलोकतत्रीकृतलोक ! यस्याम्" इत्यादिना कुलम्, "अनधि देव: कतमत्त्वयाप्य" इत्यादिना च नाम जिज्ञासितः सन्, अमू कुलनामनी, विमुच्येव परित्यज्यैव अनुक्त्वैवेत्यर्थः, अन्यत् अप्रस्तुतम् इन्द्रादिसन्देशवाक्यम्, किं कथम्, उक्तवान्। पृष्टस्याकथनम् अपृष्टस्य च कथनमेतदुभयमप्यनुचितमिति भावः। अतएव अत्र मत्प्रश्नविषये, उत्तरधारयस्य उत्तरदेयत्वरूपऋणवतः, भवतस्तव, सेयं प्रत्यक्षीक्रियमाणा, अधमर्णता ऋणग्राहिता, किं ह्रियै लज्जायै अपि, न भवति, अपि तु भवत्येवेत्यर्थः, वास्तिकाल्पिके महाजनस्याधमर्णतायाः लघुतापतिपादकत्वादित्याशयः।

अत्र उत्तरधारयत्वं प्रति पूर्वार्द्धवाक्यार्थस्य हेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः, अधमर्णतां प्रति उत्तरधारयपदार्थस्य हेतुत्वाच्चापरं पदार्थहेतुकं काव्यलिङ्गमनयोरङ्गाङ्गिभावेन सङ्करः। प्रसादो गुणः, वैदर्भी च रीतिः।

भवान् कुलनामनी पृष्ट इति "कर्म्मण्यप्रधाने दुह्यादिभ्यः" इत्यप्रधाने कर्म्मणि प्रत्ययः। धारयतीति धारयः "वाहिग्रातिवेदुदीजिधारिपारिलिम्पविन्दाम्नुपसर्गे" इति धारयतेर्ण प्रत्ययः। उत्तरस्य धारय इत्युत्तरधारयः ॥३॥

বাঙ্গালা—মহাশয় ! আমি আপনার নিকট আপনার বংশ ও নাম জিজ্ঞাসা করিয়াছিলাম ; কিন্তু আপনি উহা পরিত্যাগ করিয়া অন্য বিষয় বলিলেন কেন ? এ বিষয়ে আপনি আমার নিকট উত্তর ধারিতেছেন, অতএব আপনার এই অধমর্ণতা কি লজ্জাজনক হইতেছে না ? ॥৩॥

**अन्वयः**—क्वचित् मम अनुयोगे अहृष्यमाना क्वचित् ईप्सिता (च) भवतः सरस्वती क्वचित् प्रकाश्यां क्वचित् अस्फुटांशं सरस्वतीं सरस्वतीं अनुतमनाः (इव) ॥४॥

अहृष्यमानेति। क्वचित् कस्मिंश्चित् कुलनामविषयक इत्यर्थः, मम अनुयोगे प्रश्ने, अहृष्यमाना उत्तरादानात्मनः ; क्वचित् कस्मिंश्चित् ... ईप्सिता "परिणयनीयां ...:

गिरः श्रुता एव तव श्रवःसुधाः श्लथाभवन्नाम्नि तु न श्रुतिस्पृहा ।
पिपासुता शान्तिमुपैति वारिजा न जातु दुग्धान्मधुनोऽधिकादपि ॥५॥
बिभर्त्ति वंशः कतमस्तमोऽपहं भवादृशं नायकरत्नमीदृशम् ।
तमन्यसामान्यधियावमानितं त्वया महान्तं बहु मन्तुमुत्सहे ॥६॥

---

प्रतीहि त्वदीयमेवातिथिमागतं माम्" इत्युत्तरदानात् दृष्टा च, अतस्तव, सरस्वती वाणी, क्वचित् कुत्रचित् प्रदेशे, प्रकाशां स्फुटजलाम्, क्वचित् कुत्रचित् प्रदेशे च अस्फुटार्थाम् अन्तःसलिलत्वादस्पष्टजलाम्, सरस्वतीं सरस्वतीनाम्नीम्, सरस्वतीं नदीम्, जेतुमनाः जेतुकामा इव सञ्जातेति शेषः । ईदृशं तव गोपनमुत्तरं प्रश्नान्तरविषयकप्रश्नस्यापि उत्तरं देहीति भावः ।

अत्र जयाभिलाषसम्भावनाप्रतीतेः इवादिवाचकाप्रयोगाच्च प्रतीयमाना गुणोत्प्रेक्षालङ्कारः सरस्वतीपदश्लेषमूलकश्च, अनयोः संसृष्टिः । उत्प्रेक्षया च ताद्दृशवाणीनद्योः सादृश्यसूचनादुपमा व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः । प्रकाश्यमाना ईप्सिता चेति प्रकृतिविषयः प्रत्ययविषयश्च भग्नप्रक्रमता दोषः ; 'क्वचित्प्रकाशिता क्वचिदीप्सिता क्वचित्' इति पाठेनासौ परिहार्यः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"प्रश्नोऽनुयोगः पृच्छा च" इत्यमरः । "सरस्वानुदधौ नदे सरस्वती सरिद्भिदि । वाण्यापगायां स्त्रीरत्ने गीर्वाण्देवतयोरपि ।" इति हेमचन्द्रः ।

जेतुमना इति "तुमः काममनसोः" इति तुमो मलोपः ॥४॥

বাঙ্গালা—মহাশয় ! আমার কোন প্রশ্নে আপনার উত্তর পাওয়া গিয়াছে ; আমার কোন প্রশ্নে আপনার উত্তর পাওয়া যায় নাই । অতএব আপনার এই বাক্য, কোন স্থলে স্পষ্টজলা এবং কোন স্থলে অস্পষ্টজলা সরস্বতী নদীকে যেন জয় করিতে ইচ্ছা করিতেছে ॥৪॥

अन्वयः—श्रवःसुधाः तव गिरः श्रुताः एव, तु नाम्नि श्रुतिस्पृहा श्लथा न अभवत् । वारिजा पिपासुता अधिकात् दुग्धात् मधुनः अपि शान्तिं न उपैति ॥५॥

गिर इति । श्रवसोः कर्णयोः सुधा अत्यन्ततृप्तिजनकत्वात् अमृतस्वरूपाः, तव गिरो वाक्यानि, श्रुता एव ; तु किन्तु, नाम्नि पृष्टे तव नामविषये, श्रुतिस्पृहा मम श्रवणेच्छा, श्लथा शिथिला, न अभवत् ; त्वया तदकथनात् । अत एव तदपि कथ्यतामिति भावः । अथ यदि श्रवःसुधा एव बहुतरा गिरः श्रुतास्तर्हि स्वल्पनामश्रवणेच्छा कथमित्याह— वारिजा विषयितासम्बन्धेन जलजन्या जलविषयेत्यर्थः, पिपासुता पिपासा, अधिकादधिकपीतात् अतिशयेन मधुराद्वा, दुग्धात्, मधुनोऽपि क्षौद्राच्च, शान्तिं निवृत्तिम्, न उपैति न प्राप्नोति । जलपिपासा यथा जलपानादेव निवर्त्तते, तथा नामश्रवणेच्छापि नामश्रवणादेवेति तत्कथनमावश्यकमेवेति भावः ।

अत एवात्र दृष्टान्तोऽलङ्कारः ; न पुनः सामान्यविशेषभावाभावादर्थान्तरन्यासः ; श्रवःसुधा इति गिरश्च श्रवणरूपकथनयोरङ्गाङ्गिभावेन सङ्करः । प्रसादो गुणः, वैदर्भी च रीतिः ॥५॥

বাঙ্গালা—কর্ণের পক্ষে অমৃতস্বরূপ আপনার বাক্যগুলি শুনিয়াছি, কিন্তু নাম শুনিবার ইচ্ছা নিবৃত্তি পায় নাই। কারণ, জলের পিপাসা, তদপেক্ষা উৎকৃষ্ট দুগ্ধ অথবা মধু হইতে নিবৃত্তি পায় না ॥৫॥

अन्वयः—कतमः वंशः ईदृशं तमोऽपहं भवादृशं नायकरत्नं बिभर्त्ति ; अन्य-सामान्य धिया अवमानितं तं त्वया महान्तं (बन्तु) बहु मन्तुम् उत्सहे ॥६॥

**इतीरयित्वा विरतां पुनः स तां गिरानुजग्राहतरां नराधिपः ।
विहृत्य विश्रान्तवतीं तपात्यये घनाघनश्चातकमण्डलीमिव ॥७॥**

---

नलमाश्रो व्यक्त्यन्तरेऽपि सम्भवात् वंशप्रविभयेनापि तं परिचेतुं पृच्छति । बिभर्त्तीति । कतमो वंशः कुलं वेणुश्च, ईदृशं शोभनीयम्, तमोऽपहं दृश्यमानाशेषवाञ्छाजननात् शोककारकं निजप्रभया अन्धकारनाशकञ्च, भवादृशम्, नायकरत्नं पुरुषश्रेष्ठं हारमध्यस्थितियोग्यमणिञ्च, बिभर्त्ति धारयति । कश्चित् कश्चिद्वेणुरपि स्वान्तरे रत्नं धारयतीति कविप्रवादः । अन्यसामान्यधिया अन्यान्यकुलतुल्यत्वज्ञानेन अन्यान्य वेणुतुल्यत्वज्ञानेन च अवमानितम् असाधारणस्य साधारणज्ञानादिवाज्ञातम्, तं वंशं कुलं वेणुञ्चेत्यर्थः, त्वया नवीन्पद्यमानेन भवता पुरुषरत्नेन हारमध्यस्थितियोग्यमणिना च करणेन, महान्तम्, अन्यान्यवंशापेक्षया उत्कृष्टमुन्नतम्, अतं एवाहं बहु मन्तुम् अतिशयेनादर्त्तुम्, उत्सहे इच्छामि ; उत्कृष्टं प्रति अत्यादरस्यौचित्यादिति भावः ।

अत्र बहुमानं प्रति महान्तमिति पदार्थस्यैव हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारस्तेनानुप्राणेन संसृज्यते । प्रकरणेन कुलपुरुषरत्नाद्यर्थस्य वाच्यतायां नियन्त्रितया द्वितीयार्थस्य अभिधामूलव्यञ्जनागम्यत्वात् शब्दशक्तिमूल उपमाध्वनिरेव, न पुनः श्लेषः । माधुर्यं गुणः, वैदर्भी च रीतिः ।

"पुंसि वंशः कुले वेणौ पृष्ठावयववर्गयोः" "तमो ध्वान्ते गुणे शोके क्लीवं ना ना विधुन्तुदे" "नायको नेतरि श्रेष्ठे हारमध्यमणावपि" "रत्नं स्वजातिश्रेष्ठेऽपि मणावपि न पुंसकम्" इति मेदिनी ।

तमोऽपहमिति "अपात् क्लेशतमसोः" इति सूत्रेण डप्रत्ययः ॥६॥

বাঙ্গালা—কোন্ বংশ, এই রূপ শোকনাশক আপনার স্থায় পুরুষশ্রেষ্ঠকে ধারণ করিতেছে ? সেই বংশটীকে অন্যান্য বংশের তুল্য জ্ঞান করিয়া আমি তাহার অপমান করিয়াছি ; কিন্তু আপনা দ্বারা ঐ বংশ অতি-উৎকৃষ্ট হইয়াছে ; সুতরাং আমি এখন উহাকে বহুমানিত করিতে ইচ্ছা করি ।৬।

**অন্বয়:**—तपात्यये घनाघनः विहृत्य विश्रान्तवतीं चातकमण्डलीम् इव, सः नराधिपः इति ईरयित्वा विरतां तां पुनः गिरा अनुजग्राहतराम् ॥७॥

इतीति । तपात्यये ग्रीष्मकालावसाने, घनाघनो वर्षणशीलो मेघः, विहृत्य जलार्थं विशेषेण रवं कृत्वा, विश्रान्तवतीं विरतवतीम्, चातकानां पक्षिणां मण्डलीं समूहमिव ; स नराधिपो राजा नलः, इति पूर्वोक्तप्रकारम्, ईरयित्वा उक्त्वा, विरतां तूष्णीम्भूताम्, तां दमयन्तीम्, पुनः गिरा वाक्येन, अनुजग्राहतराम् अतिशयेनानुगृहीतवान्, वंशपरिचयदानात् प्रत्युत्तरप्रतिजननाच्चेति भावः ।

अत्र श्रौतीमालङ्कारो वृत्त्यनुप्रासेन संसृष्टः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"घनाघनो घातुकमत्तदन्तिनोर्निरन्तरे वासववर्षुकाब्दयोः" इति विश्वः ।

घनाघन इति "चिक्लिदचक्नस—" इत्यादिना निपातः ॥७॥

বাঙ্গালা—গ্রীষ্মকাল অতীত হইলে, চাতকপক্ষিগণ জলের জন্য রব করিয়া বিরত হওয়ার পর, বর্ষণশীল মেঘ যেমন তাহাদের প্রতি সাতিশয় অনুগ্রহ করে ; তেমন দময়ন্তী এই রূপ বলিয়া বিরত হইলে, মহারাজ নল পুনর্ব্বার বাক্য দ্বারা তাঁহার প্রতি সাতিশয় অনুগ্রহ করিলেন ।৭।

अये ! ममोदासितमेव जिह्वया द्वयेऽपि तस्मिन्ननतिप्रयोजने ।
गरौ गिरः पल्लवनार्थलाघवे मितञ्च सारञ्च वचो हि वाग्मिता ॥८॥
वृथा कथेयं मयि वर्णपद्धतिः कयानुपूर्व्या समकेति केति च ।
अमी समस्तव्यवहारमावयोः पदे विधातुं खलु युष्मदस्मदी ॥९॥

---

**अन्वयः**—अयि ! मम जिह्वया अनतिप्रयोजने तस्मिन् द्वये अपि उदासितम् एव । हि पल्लवनार्थलाघवे गिरः गरौ, मितञ्च सारञ्च वचः वाग्मिता ॥८॥

अये इति । अयि राजकन्ये ! मम जिह्वया, अनतिप्रयोजने सातिशयप्रयोजनरहिते । दूतस्य कुलनामनी कस्मिन्नपि कार्ये नोपयुज्येते इति विशेषप्रयोजनाभावे सत्यपि त्वयावगन्तुमिष्टत्वात् त्वत्कौतुकनिवृत्तिरूपं किञ्चित् प्रयोजनन्त्वस्त्येवेति अतिशब्दप्रयोगस्याशयः । तस्मिन् कुलनामरूपे, द्वयेऽपि विषयद्वितयेऽपि, उदासितमेव उदासीनयैव स्थितम्, तद्द्वयं नोक्तमित्यर्थः । हि यस्मात्, पल्लवनं शब्दानां विस्तृतिः अर्थलाघवम् अर्थस्य स्वल्पता चेति ते, गिरो वाक्यस्य, गरौ विषे विषस्वरूपे इत्यर्थः, वैचित्र्यरूपजीवननाशकत्वादिति भावः । किन्तु मितञ्च शब्दतः स्वल्पञ्च, सारञ्च अर्थतो गौरवयुक्तञ्च, वचो वचःप्रयोगः, वाग्मिता वाक्पटुता । अत एव पल्लवनभिया मम जिह्वया कुलनामविषयद्वये उदासितमित्यभिप्रायः ।

अत्र उदासीनत्वं प्रति अनतिप्रयोजनपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, गिरो गराविति निरङ्गकेवलरूपकम्, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्चेत्येतेषामङ्गाङ्गिभावेन सङ्करः ; सोऽपि पुनश्छेकानुप्रासेन संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ।

"पल्लवो विस्तरे षिङ्गे किसले विटपे बने" इति त्रिकाण्डशेषः ।

पल्लवस्य करणमिति पल्लवनम्, तत्करोतीति णिजन्तात् पल्लवशब्दाद्ल्युट् ॥८॥

**বাঙ্গালা**—রাজকন্যে ! আমার কুল ও নাম এই দুইটী বিষয়ই বিশেষপ্রয়োজন-বিহীন, তাই আমার জিহ্বা সে দুইটী বিষয়ে উদাসীনই রহিয়াছে। কারণ, বহুতর শব্দ প্রয়োগ করা, অথচ অর্থটীকে অল্প রাখা ইহা বাক্যের পক্ষে বিষস্বরূপ ; আর শব্দ অল্প হইবে, অথচ অর্থ গুরুতর থাকিবে, এইরূপ বাক্যপ্রয়োগ করাই বাগ্মিতা ॥৮॥

**अन्वयः**—कया आनुपूर्व्या का वर्णपद्धतिः मयि समकेति इति इयं कथा च वृथा । (यतः) युष्मदस्मदी पदे खलु आवयोः समस्तव्यवहारं विधातुं अमी ॥९॥

वृथेति । किमेतिति आर्थः आनुपूर्वी विन्यासक्रमः परस्परत्वसम्बन्धेन पूर्वं पूर्वं वर्णं वर्णेति यत्र । "इदं पदमिममर्थं बोधयत्विति अस्मात्शब्दादयमर्थो बोद्धव्य इति वेच्छा सङ्केतरूपा वृत्तिः" इति शक्तिवादे गदाधरः । तथा च कया आनुपूर्व्या वर्णविन्यासक्रमेण, का कीदृशी, वर्णपद्धतिः अक्षरश्रेणिः, मयि मद्विषये समकेति सङ्केतिता 'अयं शब्द इमं जनं बोधयतु, इत्येवमिच्छया पित्रादिभिर्निर्वाचितेत्यर्थः; इति एवम्प्रकारा, इयं त्वया कृता, कथा प्रश्नात्मकं वाक्यम्, वृथा प्रयोजनाभावान्निष्फला; अतएव मयापि नाम्नो वक्तव्येति भावः । अथ तर्हीदानीमावयोरालापः कथं सिध्यतीत्याह युष्मदस्मदी पदे खलु, युष्मदस्मच्छब्दाभ्यां निष्पन्नौ त्वमहमित्यादिरूपौ शब्दावेव, आवयोस्तव मम च, समस्तव्यवहारं प्रत्यक्षमालापम्, विधातुं सम्पादयितुम्, अमी समर्थौ भवतः । अतो भवत्या मम नामजिज्ञासा वृथैवेति भावः ।

अत्र वृथात्वं प्रति परार्द्धवाक्यार्थो हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारश्छेकानुप्रासेन संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ।

यदि स्वभावान्मम नोज्ज्वलं कुलं तदा तदुद्भावनमौचिती कुतः ।
अथावदातं तदहो विडम्बना तथा कथा प्रेष्यतयोपसेदुषः ॥१०॥
इति प्रतीत्यैव मयावधीरिते तवापि निर्बन्धरसो न शोभते ।
हरित्पतीनां प्रतिवाचिकं प्रति श्रमो गिरां ते घटते हि संप्रति ॥११॥

---

समकीतीति संपूर्वकस्य किती धातोरध्यतन्या आत्मनेपदे कथयते कर्मणि रूपम् । युष्मदस्मदी इति शब्द-स्वरूपयोः तस्मदादिभ्यः "युष्मदस्मत्प्रत्ययगोचरयोः" इति पूर्वमीमांसायां शाङ्करभाष्योक्तिवत् ॥९॥

বাঙ্গালা—পিতৃদেবপ্রভৃতি কোন্ ক্রমে কি জাতীয় বর্ণমালা আমার বিষয়ে সঙ্কেত করিয়া রাখিয়াছেন, এইরূপ এই প্রশ্ন করা আপনার নিষ্ফল। কেন না, যুষ্মদ অস্মদ শব্দই আমাদের প্রত্যক্ষ ব্যবহার সম্পাদন করিতে সমর্থ হইবে ॥৯॥

অন্বয়ঃ—যদি মম কুলং স্বভাবাত্ ন উজ্জ্বলং (भवेत्), तदा तदुद्भावनं कुतः, तथिती (भवेत्) । अथ (यदि) तत् अवदातम्, अहो (तदा) प्रेष्यतया उपसेदुषः तथा कथा विडम्बना (एव भवति) ॥१०॥

अथ तर्हि कुलं कथ्यतामित्याह । यदीति । यदि मम कुलम् स्वभावात् न पुनर्विद्वेषिणां निन्दामात्रा-दिति भावः, न उज्ज्वलं न निर्मलं भवेत्; तदा तस्य कुलस्य उद्भावनं परान्तिके प्रकाशनम्, कुतः कथम्, औचिती सङ्गतम्, भवेत्; अपि तु कुतोऽपि नैवार्थः, आत्मनैव दूषितस्वकुलोद्भावनेन आत्मनोऽपि दोषापातेन लज्जापातादिति भावः । अथ पक्षान्तरे, यदि तत्कुलं अवदातं निर्मलमेव भवेत्, अहो खेदे, तदा, प्रेष्यतया परदूतभावेन, उपसेदुष उपस्थितस्य मम, तथा तादृशी निर्मलकुलविषया, कथा प्रकाशकवार्त्ता, विडम्बना आत्म-धिक्कार एव भवति; दूषितकार्य्यप्रवृत्तस्य उत्तमवंशपरिचयदाने उपहासास्पदत्वादित्याशयः ।

अत्र विडम्बनां प्रति प्रेष्यतयोपसेदुष इति पदयोरर्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारो वृत्त्यनु-प्रासेन संसृष्टः । वृत्तरीती पूर्ववत् ॥१०॥

বাঙ্গালা—যদি আমার বংশ, স্বভাবতই নির্ম্মল না হয়; তাহা হইলে, পরের নিকটে তাহা প্রকাশ করা সঙ্গত হইবে কেন। আর, যদি আমার বংশ নির্ম্মলই হয়, তাহা হইলে, যে ব্যক্তি পরের দূত হইয়া উপস্থিত হইয়াছে, তাহার পক্ষে সে কথা বলা বিড়ম্বনামাত্র ॥১০॥

অন্বয়ঃ—( हे दमयन्ति ! ) इति प्रतीत्य एव मया अवधीरिते तव अपि निर्बन्धरसः न शोभते । संप्रति हरित्पतीनां प्रतिवाचिकं प्रति ते गिरां श्रमः हि घटते ॥११॥

इतीति । हे दमयन्ति ! इति पूर्वोक्तप्रकारम्, प्रतीत्यैव विविच्यैव, मया अवधीरिते उपेक्षिते कुलनाम-प्रश्नोत्तरकरणे विषये, तवापि विवेचिकाया अपीति भावः, निर्बन्धस्य आग्रहविषयानुरागः न शोभते न साधुर्भवति । अतएव सम्प्रति, हरित्पतीनां दिक्पालानामिन्द्रादीनाम्, प्रतिवाचिकं प्रति प्रतिसन्देशविषये, ते तव, गिराम् उत्तरवाक्यानाम्, श्रमो हि उच्चारणायास एव, घटते युज्यते । अतः स एव क्रियतामिति भावः ।

अत्र पदार्द्धे च्छेकानुप्रासवृत्त्यनुप्रासयोः संसृष्टिः । वृत्तरीती पूर्ववत् ॥११॥

বাঙ্গালা—দময়ন্তি ! এইরূপ বিবেচনা করিয়াই আমি কুল নামপ্রশ্নের উত্তর দেওয়ার বিষয়ে উপেক্ষা করিয়াছি; সুতরাং আপনারও সে বিষয়ে অধিক আগ্রহ করা শোভা পায় না। অতএব এখন দিকপালগণের খবরের উত্তরবিষয়ে আপনার বাক্যোচ্চা-রণের পরিশ্রমই সঙ্গত ॥১১॥

तथापि निर्बन्धिनि ! तेऽथवा स्पृहाम् इहानुरुन्धे मितया न किं गिरा।
हिमांशुवंशस्य करीरमेव मां निशम्य किं नासि फलेग्रहिर्ग्रहा ॥१२॥
महाजनाचारपरम्परेदृशी स्वनाम नामाददते न साधवः।
ततोऽभिधातुं न तदुत्सहे पुनः जनः किलाचारमुचं विगायति ॥१३॥

---

**अन्वयः**—अथवा तथापि (हे) निर्बन्धिनि ! मितया गिरा इह ते स्पृहां किं न अनुरुन्धे। मां हिमांशुवंशस्य करीरम् एव निशम्य किं फलेग्रहि-ग्रहा न असि ॥१२॥

तथापीति। कुलनाम्नोः सर्वथा परिचयदाने दमयन्त्या मनःक्षुब्धतामाशङ्क्य पक्षान्तरमाह अथवेति। तथापि कुलनाम्नोरन्यतरस्याप्युक्तेरनुचितत्वेऽपि, हे निर्बन्धिनि ! कुलनामश्रवणे आग्रहातिशयं कुर्वति ! मितया स्वल्पया, "गरो गिरः पल्लवनार्थलाघवे" इत्युक्तेर्युक्तत्वादिति भावः। गिरा वाचा, इह मम कुलनामश्रवणविषये, ते तव, स्पृहामाकाङ्क्षाम्, किं न अनुरुन्धे न आप्याययामि तयोरुल्लेखेन किं न निवर्त्तयामि अपि तु अनुरुन्ध एवेत्यर्थः। प्रस्तुतां मितं गिरमेवाह-- माम्, हिमांशोश्चन्द्रस्य वंशः कुलमेव वंशो वेणुस्तस्य, करीरम् अङ्कुररूपमेव, निशम्य श्रुत्वा, त्वं किम्, फलेग्रहिः फलवान् ग्रह आग्रहो यस्याः सा तादृशी, न असि न भवसि ? अपि तु असि एवेत्यर्थः।

अत्र कुले वेणुत्वारोपः स्वस्मिन् करीरत्वारोपे निमित्तमिति परम्परितरूपकम्, तच्च वंशेति श्लिष्टपदप्रयुक्तत्वात् श्लिष्टशब्दनिबन्धनम्, छेकानुप्रासस्यानयोः संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः।

"वंशाङ्कुरे करीरोऽस्त्री तरुभेदे घटे च ना" "स्यादवन्ध्यः फलेग्रहिः" इत्यमरः।

निर्बन्धिनीति आमन्त्रितविषयत्वात् 'वर्त्तमाने प्रत्युक्तानयो' " इत्यादिना प्रत्युक्तः। ननु निर्बन्धिनीत्यस्य आमन्त्रितपदत्वात् "प्रागमामन्त्रितपदमसवत्" इति श्रीपतिसूत्रेण निषेधात् कथं ते इति युष्मच्छब्दस्य ते आदेशः। सत्यम्, तथापीति पूर्वतरं पदमपेक्ष्य ते इत्यादेशः। तथा चोक्तं तत्रैव श्रीपतिना "आमन्त्रितादिति सिद्धे असद्भावः पूर्वतरात् पदात् विधिर्यथा स्यात्" इति। प्रयोगान्तरञ्च "उचितं रचयामि देवि ! ते।" फलानि गृह्णातीति फलेग्रहिः, "फलेमलरजःसु ग्रहेः" इति गृह्णातेरिप्रत्ययः। "सूत्रनिपातनादेत्वम्" इति तर्कदुर्गः ॥१२॥

বাঙ্গালা—অথবা, তাহা হইলেও আপনি যখন অত্যন্ত আগ্রহ প্রকাশ করিতেছেন, এখন আমি অল্প কথা দ্বারাই এ বিষয়ে আপনার আকাঙ্ক্ষা নিবৃত্তি করিব। আমাকে চন্দ্রবংশের অঙ্কুর জানিয়াই আপনার সে আগ্রহ সফল হইবে ॥১২॥

**अन्वयः**—साधवः स्वनाम नाम न आददते ईदृशी महाजनाचारपरम्परा (वर्त्तते)। ततः पुनः (अहं) तत् अभिधातुं न उत्सहे। जनः आचारमुचं विगायति किल ॥१३॥

तर्हीदानीं नामाप्युच्यतामित्याह। महाजनेति। साधवः सज्जनाः, स्वनाम निजनामधेयम्, नाम प्रकाश्यभावेन, न आददते निजमुखेन न गृह्णन्ति। एतेन देवपूजासङ्कल्पादौ गुप्तभावेन स्वनामग्रहणे न दोष इति सूचितम्। ईदृशी एवम्भूता, महाजनानां प्रशस्तलोकानाम् आचारपरम्परा व्यवहारप्रवाहो वर्त्तते। ततः कारणात्, पुनरहम्, तत् स्वनाम, अभिधातुं प्रकाश्यभावेन त्वयि वक्तुम्, न उत्सहे न शक्नोमि। नन्वाचारः परित्यज्यैवोच्यतामित्याह। जनः सर्व एव लोकः, आचारमुचं सदाचारपरित्यागिनं जनम्, विगायति किल निन्दत्येव। अतो लोकनिन्दाभयादपि तमाचारं परित्यक्तुं न शक्नोमीति भावः।

अदोऽयमालप्य शिखीव शारदः बभूव तूष्णीमहितापकारकः।
अथास्य रागस्य दधा पदे पदे वचांसि हंसीव विदर्भजाददे ॥१४॥
सुधांशुवंशाभरणं भवानिति श्रुतेऽपि नार्पेति विशेषसंशयः।
कियत्तु मौनं वितता कियत्तु वाक् महत्यहो वञ्चनचातुरी तव ॥१५॥

---

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारश्छेकानुप्रासेन संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः।

"नाम प्रकाश्यसम्भाव्यक्रोधोपगमकुत्सने" इत्यमरः।

"आत्मनाम गुरोर्नाम नामातिकृपणस्य च।

आयुष्कामो न गृह्णीयात् ज्येष्ठापत्यकलत्रयोः।।" इत्याचारमूला श्रुतिः। आददत इति "आङो दोऽनास्यविहरणे" इति वचनादित्वादात्मनेपदम्। आचारमुषामिति क्विप् नाम्युपधत्वात् कप्रत्ययो वा ॥१३॥

বাঙ্গালা—সজ্জনেরা প্রকাশ্যভাবে নিজের নাম উচ্চারণ করেন না; এইরূপই প্রশস্ত লোকের আচারপরম্পরা চলিয়া আসিতেছে। সেই জন্যই আমি আমার নাম প্রকাশ্যভাবে বলিতে পারিতেছি না। কারণ, জনসাধারণই আচারত্যাগী লোককে নিন্দা করিয়া থাকে ॥১৩॥

अन्वयः—शारदः अहितापकारकः अयं शिखी इव अदः आलप्य तूष्णीं बभूव। अथ पदे पदे अस्य रागस्य दधा विदर्भजा हंसी इव वचांसि आददे ॥१४॥

अद इति। शारदः अधृष्टो मितभाषीत्यर्थः, अन्यत्र तु शारदः शरत्कालवर्ती। मयूरो हि वर्षाकाले रवं विधाय शरत्काले तूष्णीं भवतीति भावः। तथा अहितानां शत्रूणाम् अपकारकः पराभवादिना अपकारी, अन्यत्र तु अहीनां सर्पाणां तापकारको भक्षणकारित्वात् दुःखजनकः, अयं नलः, शिखी मयूर इव, अदः पूर्वोक्तरूपम्, आलप्य अभिधाय, तूष्णीं मौनवो बभूव; तत्कालोचितवक्तव्यावसानादित्याशयः। अथ अनन्तरम्, पदे पदे प्रत्येकसुप्तिङन्तशब्दे, अन्यत्र तु प्रतिचरणे उभयोरेव चरणयोरित्यर्थः, अस्य नलस्य, रागस्य अनुरागस्य दधा धारयित्री जनयित्रीत्यर्थः, अन्यत्र तु आस्यस्य निजमुखस्येव रागो रक्तिमा तस्य दधा धारयित्री। हंसी हि मुखे चरणे च लौहित्यं स्वभावादेव धारयति। विदर्भजा दमयन्ती, हंसी इव, वचांसि वाक्यानि, आददे जग्राह उवाचेत्यर्थः।

अत्र पूर्वार्द्धे श्रौती पूर्णोपमा परार्द्धेऽपि चापरा श्रौती पूर्णोपमा अन्त्यानुप्रासो वृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः प्रसादो गुणः, वैदर्भी च रीतिः।

"शारदस्तु शरत्कालः स्यादधृष्टस्तु शारदः" इत्यनेकार्थध्वनिमञ्जरी।

दधेति दधातेरच्प्रत्ययात् स्त्रियामादा। तथा च कातन्त्रवृत्तौ दुर्गः "ददः, दधः, इति ददधोरचा सिद्धम्" इति ॥१४॥

বাঙ্গালা—মিতভাষী এবং শত্রুগণের অপকারী নল, শরৎকালবর্ত্তী এবং সর্পগণের দুঃখজনক ময়ূরের ন্যায় এইরূপ বলিয়া নীরব হইলেন। তাহার পর, দময়ন্তী প্রত্যেক পদে নলের অনুরাগ জন্মাইতে থাকিয়া, রক্তমুখী এবং রক্তচরণা হংসী ন্যায় মধুর বাক্য বলিতে লাগিলেন ॥১৪॥

अन्वयः—भवान् सुधांशु-वंशाभरणम् इति श्रुते अपि विशेषसंशयः न अर्पेति। कियत् तव मौनं कियत् (च) वितता वाक् (वर्त्तते) अहो।

करोषि नेमं फलिनं मम श्रमं द्विषोऽनुकम्पासि न काञ्चन प्रभुम् ।
त्वमित्थमर्हासि सुरानुपासितुं रसामृतस्नानपवित्रया गिरा ॥१८॥
सुरेषु सन्दर्शयसीदृशीं मृदुं रसस्रवैस्तां स्तिमितां न भारतीम् ।
मदर्पिता दर्पकतापितेषु या प्रयाति दावाहितदावदुष्टिताम् ॥१९॥

---

वदामीत्यादि । वामे सुन्दरि, अक्षिणी नयनद्वयं यस्यास्तत्सम्बोधनम् । स्वम् आत्मीयमेव माम्, परेषु परपुरुष-मध्येषु, मा क्षिप न निवेशय । स्थित एव प्रकृतत्वात् मामात्मीयमेव गणयित्वा मया सार्द्धं यथेष्टमेवालपितुमर्ह-सीति भावः । तथा माक्षिकं मधु, आक्षिपत् माधुर्य्यातिरेकेण तिरस्कुर्वत् ईदृशं "गिरः श्रुता एव तव श्रवःसुधाः" इत्यादिकमनुरागव्यञ्जकम्, वचो वाक्यमपि, परेषु मदतिरिक्तपुरुषेषु, मा क्षिप मार्पय न ब्रूहीत्यर्थः, तथात्वे नैव पातिव्रात्यभङ्गसम्भवादित्याशयः । इति वदामि त्वामिति शेषः ।

अत्र आक्षिपदित्यनेन साहश्याक्षेपादार्थोपमा, छेकानुप्रासश्चेत्यनयोः संसृष्टिः । ओजो गुणः, गौड़ी च रीतिः ॥१७॥

বাঙ্গালা—নল মনে মনে দময়ন্তীর বাক্যের প্রশংসা করিয়া, তৎপ্রদর্শিত বাধার উত্তর দিতে না পারিয়া, ঈষদ্‌হাস্য সহকারে তাঁহাকে বলিলেন—" হে বামলোচনে ! আত্মীয় ব্যক্তিকে পরের মধ্যে গণ্য করিবেন না ; আর মধু অপেক্ষাও মধুর এমন বাক্য পরের নিকট বলিবেন না , ইহাই আমি বলিতেছি" ॥১৭॥

अन्वयः—(हे दमयन्ति ! ) इमं मम श्रमं फलिनं न करोषि ? काञ्चन दिशः प्रभुं न अनुकम्पासि ? त्वम् इत्थं रसामृतस्नानपवित्रया गिरा सुरान् उपासितुम् अर्हा असि ॥१८॥

करोषीति । हे दमयन्ति ! इमं मम श्रमं दौत्यप्रयासम्, फलिनम् इन्द्राद्यन्यतमवरणेन सफलम्, न करोषि न करिष्यसि किम् ? भविष्यत्सामीप्ये वर्त्तमाना, काकुवशेन च प्रश्नो व्यज्यते । परस्मैपदं वम् । तथा काञ्चन काञ्चित्, दिशः प्रभुं पतिम्, न अनुकम्पासि न अनुग्रहीष्यसि किम् ? अपि तु करिष्यस्येव अनुग्रहीष्यस्येव चेत्यर्थः । तथा त्वम् इत्थं पूर्वोक्तरूपया, रसः सुस्वाद एव अमृतं सुधा तत्र स्नानेन अवगाहनेन पवित्रा शुद्धा तया माधुर्य्यव्यञ्जिकयेत्यर्थः, गिरा वाचा, सुरान् इन्द्रादीन् देवान् उपासितुम् आराद्धुम्, अर्हा योग्या असि, मधुरया वाचा यथा मां तोषयसि तथा तानपि तोषयेति भावः ।

अत्र रसामृतेति निरङ्गं केवलरूपकमलङ्कारः, प्रसादो गुणः, वैदर्भी च रीतिः ॥१८॥

বাঙ্গালা—রাজকন্যে ! আপনি আমার এই পরিশ্রমটাকে কি সফল করিবেন না ? এবং কোন দিক্‌পালের প্রতি কি অনুগ্রহ করিবেন না ? (অবশ্যই করিবেন) । আর রসামৃতে স্নান করার জন্য পবিত্র এইরূপ বাক্য দ্বারা আপনি দেবগণকে সন্তুষ্ট করিবার যোগ্যই হইতেছেন ॥১৮॥

अन्वयः—( हे राजकन्ये ! ) ईदृशीं रसस्रवैः स्तिमितां मृदुं भारतीं सुरेषु न सन्दर्शयसि ? मदर्पिता या दर्पक-तापितेषु सुरेषु दावाहित-दाव-दुष्टितां प्रयाति ॥१९॥

सुरेष्विति । हे राजकन्ये ! ईदृशीं पूर्वोक्तरूपाम्, रसस्य माधुर्य्यरूपस्वादस्य जलस्य च स्रवैः प्रस्रवणैः क्षरणैश्च, स्तिमितां कर्णयोर्निश्चलाम् आर्द्राञ्च, मृदुं मधुराम्, भारतीं वाक्यम्, सुरेषु इन्द्रादिषु देवेषु, न सन्दर्शयसि ? मदृशो वाचिकभावेन न प्रेरयिष्यसि किम् ? अपि तु सर्वथैव सन्देशवाहकमुखेन प्रेरयिष्यसीत्यर्थः । मया [illegible]

यथा यथेह त्वदपेक्षयानया (१) निमेषमप्येष जनो विलम्बते।
तथा शरव्यीकरणे दिवौकसां तथा तथाद्य त्वरते रतेः पतिः ॥२०॥
इयच्चिरस्यावदधन्ति मत्पथे किमिन्द्रनेत्राण्यशनिर्न निर्ममौ।
धिगस्तु मां सत्वरकार्य्यमन्थरं स्थितः परः प्रैष्यगुणोऽपि यत्र न ॥२१॥

---

अर्हिंसतापेन पीड़ितो यो दावो वनं तस्य हृष्टितां हृष्टितुल्यताम्, प्रयाति प्राप्स्यति। मेघवृष्टिर्यथा दावानलपीड़ितवनसन्तापं शमयति, तथा मदुक्ता भवत्सन्देशवाणी कामपीड़ितानामिन्द्रादीनां सन्तापं शमयिष्यतीति भावः।

अत्र हृष्टितामिति साहश्याक्षेपादसम्भवद्वस्तुसम्बन्धा निदर्शनालङ्कारश्छेकानुप्रासेन संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः।

"कन्दर्पो दर्पकोऽनङ्गः" "दवदावौ वनारण्यवह्नी" इत्यमरः ॥१९॥

**বাঙ্গালা**—রাজকন্তে! মদনৈকনিবন্ধন আর্দ্র এইরূপ বহুতর খবরের কথা কি আপনি আমা দ্বারা দেবগণের নিকট প্রেরণ করিবেন না? যাহা আমি প্রকাশ করিলে পর কামতাপিত দেবগণের বিষয়ে দাবানলতাপিত বনের উপরের বৃষ্টির সাদৃশ্য লাভ করিবে ॥১৯॥

**অন্বয়ঃ**—एषः जनः अनया त्वदपेक्षया यथा यथा इह निमेषम् अपि विलम्बते; रतेः पतिः तथा तथा रुषा दिवौकसां शरव्यीकरणे अद्य त्वरते ॥२०॥

यथेति। एष मत्स्वरूपो जनः, अनया त्वदपेक्षया तव सकाशात् उत्तरश्रवणाकाङ्क्षया, यथा यथा येन येन भावेन, इह अस्मिन् स्थाने, निमेषमपि अत्यल्पकालमपि, विलम्बते विलम्बं करोति; रतेः पतिः कामः, तथा तथा तेन तेनैव भावेन, रुषा क्रोधेन, दिवौकसामिन्द्रादीनां देवानाम्, शरव्यीकरणे बाणलक्ष्यीकरणे, अद्य अस्मिन् दिने, त्वरते सत्वरो भवति। अतः सत्वरमेवोत्तरं देहीति भावः।

अत्रान्तिमपादे च्छेकानुप्रासोऽलङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः ॥२०॥

**বাঙ্গালা**—এই ব্যক্তি আপনার নিকট হইতে এই উত্তর শুনিবার আশায় যেমন যেমন এখানে নিমেষকালও বিলম্ব করিবে; তেমন তেমনই কামদেব ক্রোধবশতঃ দেবগণকে বাণের লক্ষ্য করিবার বিষয়ে আজ সত্বর হইবেন ॥২০॥

**অন্বয়ঃ**—अशनिः मत्पथे इयच्चिरस्य अवदधन्ति इन्द्रनेत्राणि किं न निर्ममौ। सत्वरकार्य्यमन्थरं मां धिक् अस्तु; यत्र परः प्रैष्यगुणः अपि न स्थितः ॥२१॥

इयदिति। अशनिर्वज्रः, मत्पथे मम प्रत्यावर्त्तनमार्गे इयच्चिरस्य एतावन्तं दीर्घकालं यावत्, अवदधन्ति अवधानेन दृष्टिं कुर्वाणानि, अहं प्रत्यावर्त्ते नवेति ज्ञानार्थमिति भावः, इन्द्रस्य नेत्राणि सहस्रमेव चक्षूंषि, किं न निर्ममौ न जनयामास; अपि तु निर्ममावेव; अन्यथा कथं तादृशी विलम्बसहनक्षमतेत्याशयः। सत्वरं सत्वरमेव कर्त्तव्ये कार्य्ये कर्म्मणि मन्थरं मन्दं विलम्बकारिणमित्यर्थः माम्, धिक् निन्दा अस्तु; यत्र मयि, परः केवलः, प्रैष्यगुणोऽपि प्रभुगुणेन आर्द्रतया ... ऽपि न स्थितः; सत्वरकार्य्यमन्थरत्वादेवेत्यभिप्रायः।

अत्र अ[redacted]यीतिः, धिक्कारं प्रति

कथं नु तेषां कृपयापि वागसावसावि मानुष्यकलाञ्छने जने ।
स्वभावभक्तिप्रवणं प्रतीश्वराः कया न वाचा मुदमुद्गिरन्ति वा ॥२६॥
अहो महेन्द्रस्य कथं मयौचिती सुराङ्गनासङ्गमयोभिताभृतः ।
कदस्य हंसावलिमांसलश्रियः बलाकयेव प्रबला विडम्बना ॥२७॥

---

अन्वयः—(अयं भवतः) वृथा परीहासः इति (उत्तरं) प्रगल्भता ; त्वादृशि न न इति वाक् च विगर्हणा ; अनुत्तरात् च भवति अवज्ञा भवति ; इतः ते प्रतिवाचं प्रदित्सुः अस्मि ॥२५॥

वृथेति । इन्द्रादयो देवास्त्वां प्रार्थयन्त इत्ययं भवतः मां प्रति वृथा निष्फलः, परीहास उपहासः, इति उत्तरम्, प्रगल्भता धृष्टता मम धृष्टताप्रकाशकमित्यर्थः । तथा च श्यालिकादिषु सम्पर्कितेषु कृतः परीहासः सुखावहत्वात् सफलः, निःसम्पर्कासु कृतः परीहासस्तु दुःखावहत्वात् निष्फल एव । इत्थञ्च निःसम्पर्कायां मयि भवता कृतोऽयं परीहासः सर्वथा ममायोग्यताप्रापकत्वान्निष्फल एव । तथा निःसम्पर्के त्वयि उत्तरदानात् सख्यो मां प्रगल्भामेव वदिष्यन्तीति वरस्यार्थो भावार्थश्च । एतेनेन्द्रादयो न मां प्रार्थयन्ते ; किन्तु दूतभूतस्य तवैवायं परीहास इति दमयन्त्यभिप्रायः सूचितः । त्वादृशि भवादृशे महापुरुषे, न न इति वाक् च इन्द्रादीन् न वरिष्यामि इन्द्रादीन् न वरिष्यामि इति प्रत्युत्तरवाक्यञ्च, विगर्हणा निन्दा, युक्तिप्रदर्शनाभावेन अवज्ञाप्रकाशना-दिति भावः । अनुत्तरात् तव वाक्यस्य प्रत्युत्तरादानात्, भवति त्वयि, अवज्ञा अवहेला, भवति प्रकाश्यते ; तथैव लोकव्यवहारादित्याशयः । इतः कारणात्, ते तव, प्रतिवाचं प्रत्युत्तरम्, प्रदित्सुः प्रदातुमिच्छुरस्मि ।

अत्र तृतीयपादे यमकमलङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ।

परीहास इति "कृतस्य दीर्घता" इति दीर्घः ॥२५॥

বাঙ্গালা—ইন্দ্রপ্রভৃতি দেবগণ আমাকে প্রার্থনা করিতেছেন, ইহা আপনার বৃথা উপহাস এইরূপ উত্তর করায় আমার ধৃষ্টতা প্রকাশ হয় ; আপনার ন্যায় মহাপুরুষের নিকট 'না' 'না' বলায় নিন্দা করা হয়, আবার কোন উত্তরই না করায় আপনার প্রতি অবজ্ঞা হইয়া পড়ে ; এই জন্যই আপনার নিকট উত্তর দিতে ইচ্ছুক হইয়াছি ॥২৫॥

अन्वयः—तेषां कृपया अपि असौ वाक् मानुष्यकलाञ्छने जने कथं नु असावि । वा ईश्वराः स्वभावभक्तिप्रवणं प्रति कया वाचा मुदं न उद्गिरन्ति ॥२६॥

कथमिति । हे दूत ! तेषामिन्द्रादीनां देवानाम्, कृपयापि कोपादौ का कथा दययापि, असौ 'अस्माम् वृणीष्व' ईदृशी, वाक् वाक्यम्, मानुष्यकं मनुष्यत्वमेव लाञ्छनं चिह्नं यस्य तादृशे, जने मयीत्यर्थः, कथं नु केन प्रकारेण, असावि उत्पादिता । देवेषु मानुषीणामयोग्यत्वान्मयि तेषां तादृशं वाक्यमनुचितमिति भावः । स्वयमेव समर्थयितुमाह स्वभावेति । वा अथवा, ईश्वराः प्रभुजनाः स्वभावेन या भक्तिस्तया प्रवणं नम्रं जनं प्रति, कया अनुकम्पयापीत्यर्थः, वाचा वाक्येन, मुदम् आत्मसन्तोषम्, न उद्गिरन्ति न प्रकाशयन्ति ; अपि तु सर्वविधयैव वाचा मुदमुद्गिरन्तीत्यर्थः । अतः सन्तोषप्रकाशमात्रमेव तेषां तादृशवाक्यप्रयोगे उद्देश्यं न पुनर्मद्वरणमिति भावः ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः, वैदर्भी च रीतिः ॥२६॥

বাঙ্গালা—দেবগণের কৃপাও ঐ অথবা প্রভুলোকেরা স্বভাবতই ভক্তিন ন্না করিয়া থাকেন ॥২৬॥

पुरः सुरीणां भण कैव (१) मानुषी न यत्र तास्तत्र तु सापि शोभिका(२)।
अकाञ्चनेऽकिञ्चननायिकाङ्गके किमारकूटाभरणेन न श्रियः॥२८॥

अन्वयः—अहो! बलाकया हंसावलि-मांसल-श्रियः ह्रदस्य इव मया सुराङ्गना-सङ्गम-शोभिताश्रयः महेन्द्रस्य प्रबला विडम्बना कथम् औचिती (स्यात्)॥२७॥

अहो इति। अहो दूत! बलाकया बकपङ्क्त्या, हंसावल्या हंसश्रेण्या मांसला बलवती विशाला श्रीः शोभा यस्य तस्य तादृशस्य, ह्रदस्य जलाशयविशेषस्येव; मया मानुष्या द्वारा, सुराङ्गनानां शचीप्रभृतीनां सङ्गमेन सम्मेलनेन शोभिता शोभाशालित्वं बिभर्तीति तस्य तथोक्तस्य, महेन्द्रस्य देवराजस्य, प्रबला महती, विडम्बना वैषम्यनिबन्धना विकलता, कथम्, औचिती उचिता स्यात्, अपि तु कथमपि नेत्यर्थः। अतो महेन्द्रेण मम याचनं मयापि तस्य वरणमेतदुभयमप्यनुचितमिति भावः।

अत्र अर्थापत्तिः श्रौतीपमा, अनौचित्यं प्रति सुराङ्गनेत्यादिरूपस्य हंसावलीत्यादिरूपस्य च विशेषणस्य हेतुतया पदार्थहेतुकं काव्यलिङ्गञ्च, इत्येतेषामङ्गाङ्गिभावेन सङ्करः, सोऽपि पुनश्छेकानुप्रासेन संसृज्यते। माधुर्यं गुणः, वैदर्भी च रीतिः।

उचितैव औचिती प्रज्ञादित्वात् स्वार्थे अण्॥२७॥

বাঙ্গালা—মহাশয়! হংসশ্রেণী দ্বারা যাহার অত্যন্ত শোভা হইয়া থাকে, সেই হ্রদের যেমন বকপঙ্‌ক্তিণী দ্বারা বিশেষ বিড়ম্বনা সঙ্গত হয় না; তেমন শচীপ্রভৃতি দেব-রমণীগণের সমাগমে যিনি শোভা ধারণ করিয়া থাকেন, সেই দেবরাজের পক্ষেও আমাদ্বারা বিশেষ বিড়ম্বনা সঙ্গত হয় না।২৭।

अन्वयः—सुरीणां पुरः मानुषी का इव भण; यत्र ताः न (विद्यन्ते) तत्र तु सा अपि शोभिका (भवति)। अकाञ्चने अकिञ्चननायिकाङ्गके आरकूटाभरणेन किं श्रियः न (भवन्ति)॥२८॥

उक्तप्रायमेवार्थं भङ्ग्यन्तरेणाह पुर इति। सुरीणां देवाङ्गनानाम्, पुरः सम्मुखे, मानुषी मनुष्याङ्गना, का इव कीदृशीव भवति, इति भण ब्रूहि। देवाङ्गनानां सम्मुखे मानुषाङ्गना नितान्तकुत्सितैवेति भावः। किन्तु यत्र ताः सुर्यो देवाङ्गनाः, न विद्यन्ते, तत्र तु पृथिव्यादौ, सा मानुष्यपि, शोभिका स्वसंसृष्टस्य शोभासम्पादिका भवति। तथा च अकाञ्चने न विद्यते काञ्चनं काञ्चनमयाभरणं यत्र तादृशे, अकिञ्चनस्य दरिद्रस्य या नायिका स्त्री तस्या अङ्गके अल्पेऽप्यवयवे एकस्मिन्नपि हस्तपदादावङ्ग इत्यर्थः, आरकूटाभरणेन पित्तलालङ्कारेण द्वारा, किं श्रियः शोभाः, न भवन्ति? अपि तु भवन्त्येवेत्यर्थः। तथा च यथा स्वर्णालङ्काररहिते दरिद्रस्त्रिया अङ्गे पित्तलालङ्कारोऽपि शोभाजनको भवति; तथा देवाङ्गनारहित एव पृथिव्यादौ मानुषी शोभाजनिका भवति। तेन चाहं मानुषी स्वर्गे देवाङ्गनानां सम्मुखे देवराजस्य शोभाजनिका भवितुं न शक्ष्यामीति तं वरीतुं नोत्सहे इति भावः।

अत्र एवार्थं अप्रस्तुतान्मानुषीसामान्यात् प्रस्तुतस्य दमयन्तीरूपमानुषीविशेषस्य प्रतीतेरप्रस्तुतप्रशंसालङ्कारः मानुष्यपेक्षया सुरीणामाधिक्यप्रतिपादनात् व्यतिरेकः, द्वितीयचरणार्थेन सह द्वितीयार्द्धार्थस्य समानधर्मकतया प्रतिबिम्बनात् दृष्टान्तः, अर्थापत्तिः, तृतीयपादे छेकानुप्रासश्च तेषां मिथो निरपेक्षतया संसृष्टिः। माधुर्यं गुणः, वैदर्भी च रीतिः।

बिभेमि चिन्तामपि कर्त्तुमीदृशीं चिराय चित्तार्पितनैषधेश्वरा ।
मृणालतन्तुच्छिदुरा सतीस्थितिः लवादपि त्रुट्यति चापलात् किल ॥२१॥
ममाशयः स्वप्नदशाश्रयापि वा नलं विलङ्घ्येतरमस्पृशद् यदि ।
कुतः पुनस्तत्र समस्तसाक्षिणी निजैव बुद्धिर्विबुधैर्न पृच्छ्यते ॥२२॥
अपि स्वमस्वप्नमसूनुपप्लवो परस्य दारानभवं तु मैव माम् ।
स्वयं दुरध्यायवनाविकाः कथं स्पृशन्तु विध्याय हृदापि तादृशीम् ॥२३॥

---

अन्वयः—चिराय चित्तार्पितनैषधेश्वरा (अहम्) ईदृशीं चिन्तां कर्त्तुम् अपि बिभेमि। मृणाल-तन्तु-च्छिदुरा सतीस्थितिः लवात् अपि चापलात् किल त्रुट्यति ॥२१॥

किमालपदित्याह—बिभेमीति। चिराय दीर्घकालादवधि, चित्ते अर्पितः पतित्वेन स्थापितः नैषधेश्वरो निषधदेशाधिपतिर्नलो यया सा तादृशी अहम्, ईदृशीम् इन्द्रादीनां देवानामन्यतमो मया वरणीयो नल एवं-तम्, चिन्तां विचारम्, कर्त्तुमपि, बिभेमि व्यभिचारपापात् त्रस्यामि; किमुत निश्चयं कर्त्तुमित्यपेराशयः, "पतिं या नाभिचरति मनोवाक्कायकर्म्मभिः" इति स्मृतेः। तत्र हेतुमाह, मृणालेति। मृणालस्य तन्तुवत् सूत्र-वत् छिदुरा स्वल्पकारणादपि स्वयमेव छिद्यमाना अतीवकोमलेत्यर्थः, सतीस्थितिः साध्वीमर्य्यादा, लवादपि अल्प-मात्रादपि, चापलात् चाञ्चल्यात् किल परपुरुषचिन्तादिमात्रादित्यर्थः, त्रुट्यति क्षीयते।

अत्र भयं प्रति चित्तार्पितनैषधेश्वरेतिपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, सामान्येन विशेषसम-र्थनरूपोऽर्थान्तरन्यासः, मृणालतन्तुच्छिदुरेति समासगतोपमा चेत्येतेषामङ्गाङ्गिभावेन सङ्करः। माधुर्य्यं गुणः, वैदर्भी च रीतिः।

निषधानामधिपतिरिति नैषधः स चासौ ईश्वरश्चेति नैषधेश्वरः ॥२१॥

বাঙ্গালা—আমি অতিদীর্ঘকাল হইতেই নলকে মনের ভিতরে পতিরূপে স্থাপন করিয়া আসিয়েছি; সুতরাং এরূপ চিন্তা করিতেও ভয় করি। কারণ, মৃণালসূত্রের ন্যায় অত্যন্ত কোমল পতিব্রতার নিয়ম, অত্যন্ত অল্প চাঞ্চল্যেও নষ্ট হইয়া থাকে ॥৩১॥

अन्वयः—मम आशयः स्वप्नदशाश्रया अपि नलं विलङ्घ्य इतरं यदि वा अस्पृशत्; तत्र विबुधैः समस्तसाक्षिणी निजा एव बुद्धिः कुतः पुनः न पृच्छ्यते ॥२२॥

ननु परपुरुषचिन्तामपि न करोषीत्यत्र किं नाम प्रमाणमित्याह— ममेति। मम आशयो मनः, जागरि-तदशायाः का कथा, स्वप्नदशायाः स्वप्नावस्थाया आश्रया आदेशेनापि, नलं विलङ्घ्य अतिक्रम्य, इतरमन्यं पुरुषम्, यदि वा अस्पृशत् सम्बन्धीकृतवान् भावितवानित्यर्थः; तत्र तदा, विबुधैरिन्द्रादिभिर्देवैः, समस्तसाक्षिणी देवा-नामन्तर्यामित्वात् सर्वविषयदर्शिनी, निजा स्वकीया स्वकीयैव बुद्धिः, कुतः कथं पुनर्न पृच्छ्यते। तथात्वे स्वस्वबुद्धिरेव साक्ष्यं दास्यति यत् अस्या मनः परपुरुषचिन्तामपि न करोतीति। अत इन्द्राद्यन्यतमो वरणीयो न वेति विचारं कथं कर्त्तुं शक्नुयामिति भावः।

अत्र प्रसादो गुणः, वैदर्भी।

अनुग्रहः केवल एव [१] मादृशे मनुष्यजन्मन्यपि यन्मनो जने ।
स चेद्विधेयस्तदमी तमेव मे प्रसद्य भिक्षां वितरीतुमीशताम् ॥३४॥
अपि द्रढीयः शृणु मे प्रतिश्रुतं (२) स पीडयेत् पाणिमिमं न चेन्नृपः ।
हुताशनोद्बन्धनवारि-कारितां (३) निजायुषस्तत् करवै स्ववैरिताम् ॥३५॥

---

अन्वय:—अमी मां परस्य दारान् अनर्वितुम्, एव अस्वप्नम् अपि स्वम् असूषुपन् (इव)। (अन्यथा) स्वयं दुरध्वार्णव-नाविकाः (सन्तः) तादृशीं विज्ञाय कथं हृदा अपि स्पृशन्तु ॥३३॥

अपीति। अमी देवाः, माम्, परस्य नलस्य, दारान् भार्य्याम्, मया मनसा तस्यैव वरणात् भाविनि भूतवदुपचारादेति भावः, अनर्वितुमिव अज्ञातुमिव मयि परदारत्वे स्थितेऽपि तद्रूपेणाबोद्धुमेवेत्यर्थः, अस्वप्नमपि निद्रारहितमपि, स्वम् आत्मानम्, असूषुपन् निद्रापितवन्त इव, ज्ञातस्यापि वस्तुनो निद्रावस्थायामज्ञानादित्याशयः। अन्यथानुपपत्तिं दर्शयितुमाह स्वयमिति। अन्यथा स्वयममी देवाः, दुष्टोऽध्वा दुरध्वः परदारलाम्पट्यादिरूपः कुपथः स एव विशालत्वादर्णवः समुद्रस्तस्य नाविकाः उपदेशविधानाचरणादिना उत्तारणात् कर्णधाररूपाः सन्तः, तादृशीं परदारभूतां माम्, विज्ञाय अन्तर्यामित्वात् विशेषेण ज्ञात्वापि, हृदापि प्रार्थना पर्य्यन्ते का कथा मनसापि, स्पृशन्तु विषयीकुर्वन्तु प्राप्यत्वे नाभिलषन्त्वित्यर्थः। कथमपि नेति भावः।

अत्र अस्वप्नमपि असूषुपन्निति विरोधाभासः, असूषुपन्निवेति प्रतीयमाना क्रियोत्प्रेक्षा, दुरध्वेत्यादौ परम्परितं रूपकम्, प्रथमपादे छेकानुप्रासश्चेत्येतेषां संसृष्टिः। बन्धार्थस्य दुरूहत्वादौजो गुणः, गौडी च रीतिः।

"आदित्या ऋभवोऽस्वप्ना:" इत्यमरः।

असूषुपन्निति स्वपन्तं प्रायुङ्क्तेति स्वपधातोर्णिचि "स्वापेश्चङि" इति सम्प्रसारणम्। स्पृशन्त्विति "विध्यादिषु सप्तमी च" इति प्रश्ने पञ्चमी ॥३३॥

বাঙ্গালা—উঁহারা আমাকে পরস্ত্রীরূপে না বুঝিবার জন্যই, নিদ্রাশূন্য আপনাদিগকেও যেন নিদ্রিত করিয়াছেন। না হইলে, নিজেরা কুপথ-সমুদ্রের নাবিকস্বরূপ হইয়াও এবং আমাকে পরস্ত্রীরূপে জানিয়াও, কি করিয়া মনে মনেও স্পর্শ করিতে পারেন ॥৩৩॥

अन्वय:—मनुष्यजन्मनि अपि मादृशे जने यत् मनः (एभिः समर्पितम्) एषः केवलः अनुग्रहः। चेत् सः विधेयः, तत् अमी प्रसद्य मे तम् एव भिक्षां वितरीतुम् ईशताम् ॥३४॥

अनुग्रह इति। मनुष्याज्जन्म यस्य तस्मिन्नपि, मादृशे जने अयोग्यायां मानव्यामपि मयीत्यर्थः, यत् मनः, एभिः समर्पितमिति शेषः ; एष केवलः मां प्रति अनुग्रह एव। अनुग्राह्यत्वेनैव मां प्रति तेषां मनःसमर्पणम्, न पुनः काम्यत्वेनेति भावः। चेद् यदि, सोऽनुग्रहः, विधेयः मां प्रति तैः कर्त्तव्यः ; तत्तदा अमी देवाः, प्रसद्य प्रसन्नीभूय, मे मह्यम्, तं नलमेव, भिक्षां भिक्षारूपम्, वितरीतुं दातुम्, ईशतां शक्नुयुः।

अत्र द्वितीयचरणे छेकानुप्रासवृत्त्यनुप्रासयोः संसृष्टिरलङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः।

वितरीतुमिति "वृतो वा" इत्यनेन "ग्रहोऽलिटि दीर्घः" इतीटो दीर्घत्वम् ॥३४॥

বাঙ্গালা—মনুষ্য হইতে উৎপন্ন আমার মত লোকের প্রতিও যে দেবতারা মন সমর্পণ করিয়াছেন ; ইহা আমার প্রতি অনুগ্রহই। যদি তাঁহাদের কর্তব্য হয়, তবে তাঁহারা প্রসন্ন হইয়া আমাকে সেই নলকেই ভিক্ষা দিতে সমর্থ হউন ॥৩৪॥

निषिद्धमप्याचरणीयमापदि क्रिया सती नावति यत्र सर्वथा ।
घनाम्बुना राजपथे हि पिच्छिले क्वचिद् बुधैरप्यपथेन गम्यते ॥३६॥
स्त्रिया मया वाग्मिषु तेषु शक्यते न जातु सम्यग् वितरीतुमुत्तरम् ।
तदत्र मद्भाषित-सूत्रपद्धती प्रबन्धृतास्तु प्रतिबन्धृता न ते ॥३७॥

अन्वयः—अपि दृढीयः मे प्रतिश्रुतं शृणु ; सः नृपः चेत् इमं पाणिं न पीडयेत्, तत् हुताशनोद्बन्धन-वारि-कारितां निजायुषः स्ववैरितां करवै ॥३५॥

अपीति । अपिशब्दः पूर्वसमुच्चये । अन्यच्चेति तदर्थः । दृढीयः सुदृढं केनाप्यनिवार्य्यमित्यर्थः, मे मम, प्रतिश्रुतं प्रतिज्ञाम्, शृणु । किं तदित्याह स नृपो नलः, चेद् यदि, इमं मदीयम्, पाणिम्, न पीडयेत् केनापि कारणेन न गृह्णीयात्, तत् तर्हि, हुताशनेन अग्निना तत्प्रवेशेनेत्यर्थः, उद्बन्धनेन तरुशाखादावूर्द्ध्वदेशे गले रज्जुबन्धनेन, वारिणा जलेन तन्मज्जनेन च प्रयोज्यकर्त्रा कारितां सम्पादिताम्, निजायुषः आत्मनो जीवनकालस्य, स्वेन आत्मनैव वैरितां शत्रुतां नान्यकर्तृकेत्यर्थः ताम्, करवै करिष्यामि, । येन केनाप्युपायेन प्राणत्यागं करिष्याम्येवेत्यर्थः ।

अत्र परार्द्धे वृत्त्यनुप्रासोऽलङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ।

करवै इत्यनुमतौ पञ्चम्या ऐविभक्तौ रूपम् ॥३५॥

বাঙ্গালা—আরও আপনি আমার দৃঢ়তর প্রতিজ্ঞা শুনুন ; সেই নলরাজা যদি এই পাণি গ্রহণ না করেন, তাহা হইলে অগ্নি প্রবেশ, উদ্বন্ধন, কিম্বা জলপ্রবেশ দ্বারা সম্পাদিত নিজের আয়ুর শত্রুতা নিজেই করিব ।৩৫।

अन्वयः—आपदि निषिद्धम् अपि आचरणीयम्, यत्र सती क्रिया सर्वथा न अवति । हि राजपथे घनाम्बुना पिच्छिले (सति) बुधैः अपि क्वचित् अपथेन गम्यते ॥३६॥

ननु "असूर्य्या नाम ते लोका अन्धेन तमसावृताः ।
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥"

इति वाजसनेयसंहितावचनेनात्महत्यानिषेधात् कथं सा प्रतिश्रुता इत्याह निषिद्धमिति । आपदि विपत्काले, निषिद्धमपि शास्त्रादिना प्रतिषिद्धमपि कर्म्म, आचरणीयं लोकैः कर्त्तव्यम् । ननु सर्वस्यामेवापदि किमयं नियम इत्याह यत्र आपदि, सती शास्त्राद्यनिषिद्धतया उत्तमा, क्रिया उपायः, सर्वथा सर्वैः प्रकारैः, न अवति आत्मानं न रक्षति । तेन च यत्र रोगी समूलेन चन्दनेन वा शान्तिः सम्भवति, तत्र चन्दनमेव ग्राह्यं तस्यानिषिद्धतया सत्त्वात् इतरस्य च निषिद्धतया असत्त्वादिति भावः । हि तथाहि, राजपथे, घनाम्बुना मेघवृष्टिजलेन, पिच्छिले पादस्खलनयोग्ये पङ्किले सति, बुधैरपि मूर्खेषु का कथा विवेचकैः पण्डितैरपि, क्वचित् कदाचित् अपथेन दृष्टाचाराचरणात् कुपथेन, गम्यते । तथा चास्यां कामपीडारूपायामापदि नलाप्राप्त्या तत्सङ्गमरूप-सदुपायेनात्मरक्षणासम्भवात् निषिद्धाप्यात्महत्या कर्त्तव्यतया प्रतिश्रुतेत्याशयः ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ।

উচিত ; যে বিপদে নির্দোষ উপায়
হলে রাজপথ পিচ্ছল হইলে, পণ্ডিত-

निरस्य दूतः स तया विसर्ज्जितः प्रियोक्तिरप्याह कटुत्वमक्षरम् ।
कुतूहलेनेव मुहुः कुहूरवं विडम्ब्य डिम्भेन पिकः प्रकोपितः ॥३८॥
अहो मनस्त्वामनुतेऽपि तन्वते त्वमप्यमोभ्यो विमुखोति कौतुकम् ।
क्व वा. निधिर्निर्धनमेति किञ्च तं स वाञ्छवाट घटयन्निरस्यति ॥३९॥

अन्वयः—स्त्रिया मया जातु वाग्मिषु तेषु सम्यक् उत्तरं वितरीतुं न प्रक्यते । तत् अत्र मद्भाषित-सूत्र-पद्धती हि प्रबन्धृता अस्तु ( किन्तु ) प्रतिबन्धृता न ॥३७॥

स्वस्याक्षमत्वमुपवर्णयन्ती प्रार्थयते स्त्रियेति । स्त्रिया स्त्रीत्वादल्पबुद्धिकया मया, जातु कदाचिदपि, वाग्मिषु वाक्पटुषु, तेषु देवेषु विषयेषु, सम्यक् उपयुक्तम्, उत्तरं प्रतिवचनम्, वितरीतुं दातुम्, न प्रक्यते । ततस्मात्, अत्र अस्याम्, मद्भाषितं मम वाक्यमेव सूत्रं "स्वल्पाक्षरमसन्दिग्धम् " इत्यादिलक्षणो वाक्यविशेषस्तस्य पद्धती पङ्क्तौ, ते तव, प्रबन्धृता समर्थकत्वेन विवरणकारिता, अस्तु भवतु ; किन्तु प्रतिबन्धृता खण्डनेन प्रतिकूलता, न अस्तु । यथा संक्षिप्ते पातञ्जलसूत्रादौ व्यासादीनां भाष्यादिभिः समर्थनेन विवरणकारित्वम्, तथा संक्षिप्ता-यामस्यां मम वाक्यपंक्त्यां समर्थनेन तव विवरणकारित्वमेवास्तु ; न पुनः सांख्यसूत्रादौ शारीरकसूत्रादीनामिव खण्डनेन प्रतिबन्धकत्वमित्यर्थ न मे प्रार्थनेत्याशयः ।

अत्र सम्यगुत्तरवितरणाशक्तिं प्रति स्त्रियेति पदस्यार्थौ हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, मद्भाषितसूत्रेति निरङ्गं केवलरूपकम्, तत्रा प्रतिबन्धृताया व्यपोहनात् शाब्दी परिसंख्या, छेकानुप्रासश्च ; इत्येषां संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"पद्धतिः पङ्क्तिवर्त्मनोः " इति मेदिनी ॥३७॥

বাঙ্গালা—আমি স্ত্রীলোক, আর দেবতারা হইলেন অত্যন্ত বাক্‌পটু। সুতরাং আমি তাঁহাদের নিকট উপযুক্ত উত্তর দিতে কখনও সমর্থ নহি। অতএব আমার বাক্যরূপ সূত্র সমূহের উপরে আপনি বিবরণকারীই হউন, কিন্তু প্রতিকূল হইবেন না ।৩৭॥

अन्वयः—कुतूहलेन मुहुः कुहूरवं विडम्ब्य डिम्भेन प्रकोपितः प्रियोक्तिः अपि पिकः इव तया निरस्य विसर्ज्जितः प्रियोक्तिः अपि दूतः कटुत्वम् अक्षरम् आह स ॥३८॥

अथाविज्ञोक्तिप्रयत्नेन किञ्चित्सञ्जातकोप इव नलः उवाचेत्याह । निरस्येति । कुतूहलेन कौतुकवशेन, मुहुर्वारं वारम्, कुहूरवं कोकिलस्यैव कुहूरिति ध्वनिम्, विडम्ब्य अनुकृत्य, डिम्भेन मनुष्यशिशुना, प्रकोपितः विरक्तीकृतः, प्रियोक्तिरपि मधुररवोऽपि, पिकः कोकिल इव ; तया तेन पूर्वोक्तप्रकारेण, निरस्य प्रत्याख्याय, विसर्ज्जितः प्रस्थापितः, प्रियोक्तिरपि प्रियवचनोऽपि, दूतो नलः, कटुत्वम् ईषदुष्णं सन्तापजनकमित्यर्थः, अक्षरम् अक्षरघटितं वाक्यम्, आह स ब्रवीति स्म ।

अत्र श्रौतीपमालङ्कारो हत्यानुप्रासेन संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ।

"पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः" इत्यमरः ॥३८॥

বাঙ্গালা—মনুষ্যবালক যেমন কৌতুকবশতঃ বার বার কুহূরবের অনুকরণ করিয়া ক্রুদ্ধ করিয়া দিলে, কোকিল মধুরস্বর
সেই ভাবে প্রত্যাখ্যান করিয়া বিদায়
অনেক বাক্য বলিতে লাগিলেন ॥৩৮॥

सहाखिलस्त्रीषु महेन्द्रहेलया महेन्द्ररागाद् गुरुमादरं त्वयि।
त्वमीहसे यं यदि सम्मुखेऽपि तं पराङ्मुखी चन्द्रमुखि! स्वयीकृतः॥४०॥
दिवौकसं कामयते न मानवो नवीनमश्रावि तवाननादिदम्।
कथं न वा दुर्घटदोष एष ते श्रितेन सम्यग्गुरुतापि गम्यते (१)॥४१॥

अन्वयः—अहो! ते अपि त्वाम् अनु मनः तन्वते; त्वम् अपि अमीभ्यः विमुखी (असि) इति कौतुकं (वर्त्तते)। निधिः निर्धनम् एति, किञ्च सः वाक्कपाटं घटयन् तं निरस्यति (इति) क्व वा (दृष्टम्)॥३९॥

कदुत्तमवरमेवाह अहो इति। अहो आश्चर्य्यम्। हे दमयन्ति! तेऽपि सर्वासामेव स्त्रीणां कामनीया इन्द्रादयो देवा अपि, त्वां मानुषीम्, अनु लक्षीकृत्य, मनो मनोरथम्, तन्वते विस्तारयन्ति। इत्येकमाश्चर्य्यमित्याशयः। तथा त्वमपि मानुष्यपि, अमीभ्य इन्द्रादिदेवेभ्यः, विमुखी तद्वरणविषये पराङ्मुखी असि; इति च कौतुकं वर्त्तते। उत्तमस्य अधमाकामनाया अदृष्टत्वात् अधमायाश्च उत्तमकामनायाः सर्वत्रैव दृष्टत्वात् अत्र च तद्विपरीत्यादिति भावः। तथा च निधिर्धनभाण्डम्, निर्धनं दरिद्रम्, एति दर्शनात् स्वयमेवाश्रयितुमागच्छति; किञ्च किन्तु, स निर्धनः वाक् अत्र नागन्तव्यमिति निषेधवाक्यमेव प्रतिरोधकत्वात् कवाटं तत्, घटयन् योजयन्, तं निधिम्, निरस्यति निराकरोति, इति क्व कुत्र वा दृष्टमिति शेषः; अपि तु कुत्रापि नेत्यर्थः। निधेर्निर्धनं प्रतीव देवानां त्वां प्रत्यागमनम्; तथा निर्धनस्य निधिनिरसनमिव तवापि देवनिरसनमिति भावः।

अत एवात्र दृष्टान्तोऽलङ्कारः वाक्कपाटमिति निरङ्गं केवलरूपकञ्चेत्यनयोरङ्गाङ्गिभावेन सङ्करः। प्रसादो गुणः, वैदर्भी च रीतिः॥३९॥

বাঙ্গালা—কি আশ্চর্য্য! দেবগণও আপনার প্রতি অভিলাষ প্রকাশ করিতেছেন; আপনিও আবার তাঁহাদের প্রতি বিমুখী হইতেছেন; এটা কৌতুকই বটে। কারণ, ধনের মেঠে নিজেই দরিদ্রের প্রতি যাইতেছে; সে দরিদ্র আবার নিষেধবাক্যরূপ কপাট আবদ্ধ করিয়া সে ধনের মেঠেকে প্রত্যাখ্যান করিতেছে এমন ঘটনা কোথায় দেখা যায়।৩৯॥

অন্বয়ঃ—(হে)চন্দ্রমুখি! त्वयि महेन्द्ररागात् अखिलस्त्रीषु अवहेलया सह, त्वयि गुरुम् आदरं वहे। ईहसे यं यदि सम्मुखे अपि त्वं पराङ्मुखी (सती) तं स्वयीकृतः॥४०॥

सहेति। हे चन्द्रमुखि! त्वयि महेन्द्रस्य देवराजस्य रागादनुरागाद्धेतोः, अखिलस्त्रीषु शचीप्रभृतिषु, अवहेलया महेन्द्रस्यैव अवज्ञया सह, त्वयि विषये, गुरुं महान्तम्, आदरं गौरवम्, वहे अखिलं नावधारये। तेन ईहसे एवम्भूते, यं यदि महेन्द्रानुरागरूपे मत्कृते, सम्मुखेऽपि उपस्थितेऽपि सति त्वं पराङ्मुखी सती, तम् आदरम्, स्वयीकृतः प्रत्याख्यानेन निवर्त्तितवती। तेन त्वं धृष्टिरसीत्याशीति भावः।

अत्रानुरागहेतुना गुर्वादररूपसाध्यसाधनात् वाग्भङ्गीकृतविच्छित्तिवशाच्च अनुमानमलङ्कारः स्वकाव्यादिना व्यञ्ज्यते। *माधुर्य्यं गुणः, वैदर्भी च रीतिः।

स्वयीकृत इति निपूर्वकात्तधातोरिनि अन्ति रूपम्॥४०॥

বাঙ্গালা—হে চন্দ্রবদনে! আপনার প্রতি দেবরাজের অনুরাগ জন্মিয়াছে দেখিয়া
স্ত্রীলোকের প্রতিই তাঁহার অবজ্ঞা জন্মিয়াছে, আর
হরাং এইরূপ মদন সম্মুখে উপস্থিত
হিলেন। ।৪০।

अनुग्रहादेव दिवौकसां नरः निरस्य मानुष्यकमेति दिव्यताम्।
अयोऽधिकारे [१] स्वरितत्वमिष्यते कुतोऽयसां सिद्धरसस्य स्पृशामपि ॥४२॥

अन्वयः— मानवी दिवौकसं न कामयते, (मया) तव आननात् इदं नवीनम् अश्रावि। हितेन गुरुणा अपि एषः ते दुर्ग्रहदोषः कथं वा न अस्यते ॥४१॥

दिवौकसमिति। मानवी मानवस्त्री, दिवौकसं देवताम्, न कामयते नाभिलषति, मया तव आननान्मुखात्, इदं नवीनं नूतनम्, अश्रावि श्रुतम्। अथवा स्त्री उत्तमं पुरुषं न कामयत इत्यपूर्वमेवेति भावः। हितेन हिताकाङ्क्षिणा, गुरुणापि पित्रादिना गुरुजनेनापि, एषः ते तव, दुर्ग्रहदोषो दुर्बुद्धिदोषः, कथं वा केन हेतुना वा, न अस्यते उपदेशादिना नापनीयते। तदप्यपूर्वमित्याशयः। किञ्च, दुर्ग्रहदोषः शनैश्चरादिपापग्रहसूचितारिष्टादिदोषः, हितेन केन्द्रित्वात् हितकारिणा, गुरुणापि बृहस्पतिनापि, कथं वा न अस्यते नापनीयते। "किं कुर्वन्ति ग्रहाः सर्वे यस्य केन्द्रे बृहस्पतिः" इति ज्योतिर्वचनात् केन्द्रिणा बृहस्पतिना सर्वदोषशमनसम्भवेऽपि तदशमनमाश्चर्यमेवेति च शब्दशक्तिमूलो वस्तुध्वनिः।

अत्र देवत्वरूपे कारणे सत्यपि तत्कामनारूपफलाभावात् विशेषोक्तिरलङ्कारश्छेकानुप्रासेन संसृज्यते। मधुररचनावशान्माधुर्यं गुणः, वैदर्भी च रीतिः।

अस्यत इति असुधातोरिनि "असोऽस्यर्थे" इति मानुबन्धत्वात् रूपः ॥४१॥

বাঙ্গালা—মানবী দেবতাকে কামনা করে না ইহা আপনার মুখ হইতে নূতন শুনিলাম। আপনার এই দুর্বুদ্ধিদোষটাকে হিতৈষী গুরুজনেরাই বা কেন দূর করিয়া দেন না! ॥৪১॥

अन्वयः—नरः दिवौकसाम् अनुग्रहात् एव मानुष्यकं निरस्य दिव्यताम् एति। सिद्धरसस्पृशाम् अयसाम् अपि अयोऽधिकारे कुतः स्वरितत्वम् इष्यते ॥४२॥

अनुग्रहादिति। नरो मनुष्यः, दिवौकसां देवानाम्, अनुग्रहात् प्रसादादेव, मानुष्यकं मनुष्यत्वम्, निरस्य परित्यज्य, दिव्यतां देवत्वम्, एति प्राप्नोति। अतस्त्वमपि इन्द्रादीनामन्यतमस्य वरणेन तदनुग्रहात् देवत्वं प्राप्स्यसीति तेषामन्यतममेव वृणीष्वेति भावः। ननु तथात्वेऽपि प्रभावेण देवत्वसम्भवेऽपि वस्तुतो मनुष्यत्वान्मनुष्यमध्य एव गण्या भविष्यामीत्याह अयः इत्यादि। सिद्धरसम् औषधान्तरसंयुक्तपारदं स्पृशन्तीति तेषाम् औषधान्तरयुक्तपारदस्पर्शं लब्धवतामित्यर्थः, अयसां लौहानामपि, अयोऽधिकारे लौहप्रस्तावे, कुतः कथम्, स्वरितत्वम् आधिपत्यं गणितत्वमित्यर्थः, इष्यते लोकैः, अपि तु कुतोऽपिनेति तात्पर्यम्। तथा च औषधान्तरयुक्तपारदसम्पर्केण स्वर्णीभूतं लौहमपि वस्तुतो लौहत्वे सत्यपि स्वर्णवर्णत्वात् यथा स्वर्णमध्य एव गण्यते; तथा देवसम्पर्केण दैवीभूता त्वमपि वस्तुतो मनुष्यत्वे सत्यपि देवतुल्यप्रभावात् देवीमध्य एव गण्या भविष्यसीति इन्द्रादीनामन्यतमवरणमेव तव श्रेय इत्याशयः।

अत एवात्र समर्थ्यसमर्थकयोरुभयोरपि सामान्यत्वात् दृष्टान्त एवालङ्कारः; न पुनरर्थान्तरन्यासस्तत्र तयोरुभयोः सामान्यविशेषभावनियमात्; नरो निरस्येति च्छेकानुप्रासश्चैतयोः संसृष्टिः। तथा नरपदेन प्रक्रान्त [illegible]
मनुष्यकपदाभिधानात् पूर्वार्द्धे भग्नप्रक्रमतादोषः
तदर्थे, कविभिरप्रयोगात् परार्द्धे [illegible]

(१) अयोऽधिकारे …।

हरिं परित्यज्य नलाभिलाषुका न लज्जसे वा विदुषिब्रुवा [१] कथम्।
उपेक्षितेक्षोः करभाच्छमीरतात् ऊहं वदे त्वां करभोरु भो इति [२] ॥४३॥
विहाय हा सर्वसुपर्वनायकं त्वया वृतः किं नरसाधिमभ्रमः।
सुखं विमुच्य ग्लपितस्य धारया वृथैव नासापयधावनश्रमः ॥४४॥

---

'निरस्य तत्त्वं समुपैत दिव्यताम्, यथोऽधिकारि नयना विधीयते'। अत्र पाठे तत्त्वं नरत्वमित्यर्थः। अत्रार्थव्यक्ति दुष्करत्वादीनि गुणः, गौडी च रीतिः।

विदूरसस्यन्नमिति "अन्येष्वपि दृश्यते" इति क्विप् ॥४२॥

বাঙ্গালা—মনুষ্য, দেবতাদের অনুগ্রহেই মনুষ্যত্ব পরিত্যাগ করিয়া দেবত্ব লাভ করিয়া থাকে। কারণ, পারার সংস্পর্শে লৌহ সোণা হইয়া গেলে, সে লোহাকে কি করিয়া লোহার মধ্যে অন্তর্ভুক্ত করিবার ইচ্ছা করা যায় ॥৪২॥

अन्वयः—विदुषिब्रुवा (त्वं) हरिं परित्यज्य नलाभिलाषुका (सती) कथं वा न लज्जसे। भोः करभोरु! इति उपेक्षितेक्षोः शमीरतात् करभात् त्वाम् ऊहं वदे ॥४३॥

हरिमिति। विदुषीं प्राज्ञामात्मानं ब्रवीतीति विदुषिब्रुवा पण्डितमन्या त्वम्, हरिमिन्द्रम्। प्रभावेण विष्णुतुल्यमिति ध्वनिः। परित्यज्य, नलं नलनामकं राजानम्। नलाख्यतृणतुल्यमसारमिति च ध्वनिः। अभिलषितुं शीलमस्या इति नलाभिलाषुका सती, कथं वा न लज्जसे। आत्मानं विदुषीं मन्यसे ब्रवीषि च, अथ च सागरपल्वलयोरिव इन्द्रनलयोस्तारतम्यं न बुध्यसे। अतः सर्वथैव त्वया लज्जितव्यमित्याशयः। भो इति सोपहाससम्बोधने। करभौ करिहस्ताविव ऊरू यस्यास्तत्सम्बोधनम्। उपेक्षितः परित्यक्त इक्षुर्मधुररस इक्षुदण्डो येन तस्मात्, अथ कटुरसायां कण्टकाकीर्णायां शमीलतायां रतात् भोक्तुमासक्तात्, करभादुष्ट्रात्, त्वाम्, ऊहं महतीं तदपेक्षयापि महानिर्बोधामित्यर्थः वदे ज्ञानपूर्वकमेव ब्रवीमि। इक्षुशम्योर्यावदन्तरम्, इन्द्रनलयोस्तु ततोऽपि महदन्तरमिति तस्याप्यज्ञानात् उष्ट्रापेक्षयापि त्वं नितान्तनिर्बोधेति भावः।

अत्र लज्जां प्रति प्रथमपादगतपदार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, उष्ट्रापेक्षया दमयन्त्या न्यूनता-प्रतिपादनात् व्यतिरेकः, परार्द्धे छेकानुप्रासश्चेत्येषां संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः।

नलाभिलाषुका इति "लषपतपद—" इत्यादिना उकञ् "नलोकाव्ययनिष्ठाखलर्थतृनाम्" इति द्वितीयातत्पुरुषः। "ब्रवीति ब्रुवः पचाद्यच् अभिधानाद्वचादेशो न भवति छान्दसत्वाद्वा स्यात्।" "भाषितपुंस्कात् स्त्रीकारस्य तर-तम-रूप-कल्प-चेल-ब्रुव-मत-हतेषु ह्रस्वः" इति विदुषीतीकारस्य ह्रस्वत्वम्। इति "याकारो स्त्रीकृतो ह्रस्वः" इत्यत्र टीकायां दुर्गसिंहः। ऊहमिति "ऊतो गुणवचनात्" इत्यादिना पक्षे ङीप्रत्ययः। वदे इति "भासनोप-सम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः" इति वचादित्वादात्मनेपदम्। करभोरु इति ऊङन्तनिपातनात् "अम्बार्थनद्योर्ह्रस्वः" इति ह्रस्वत्वम् ॥४३॥

বাঙ্গালা—আপনি আপনাকে পণ্ডিত বলিয়া থাকেন, অথচ ইন্দ্রকে পরিত্যাগ করিয়া নলকে লাভ করিবার ইচ্ছা করিতেছেন; ইহাতে আপনি লজ্জিত হইতেছেন না। অতএব হে করভোরু! যে উষ্ট্র ইক্ষু পরিত্যাগ করিয়া শমীলতায় আসক্ত থাকে বলিতেছি ॥৪৩॥

विहाय किं नर-साधिम-भ्रमः धृतः। (अथवा) ग्लपितस्य

॥४४॥

तपोऽनले जुह्वति सूरयस्तनूः दिवे फलायान्यजनुर्भविष्णवे ।
करे पुनः कर्षति सैव विह्वला बलादिव त्वां बलसे न बालिशे ! ॥४५॥
यदि स्वमुद्बन्धुमना विना नलं भवेर्भवन्तीं हरिरन्तरिक्षगाम् ।
दिविस्थितानां प्रथितः पतिस्ततः हरिष्यति व्या[illegible]प्रेष्यते हि कः ॥४६॥

---

विहायेति । हा खेदे । हे दमयन्ति ! त्वया, सर्वेषां सुपर्वणां देवानां नायकमधिपतिमिन्द्रम्, विहाय परित्यज्य, किं कथम्, नरे मनुष्यमात्रे नले साधिम्न उत्कर्षस्य भ्रमो भ्रान्तिः, धृतः अवलम्बितः । अतद्वति तत्-त्वप्रकारकज्ञानस्य भ्रमरूपत्वात् अनुत्कृष्टे उत्कृष्टत्वप्रकारकज्ञानं भ्रम एव ; स च न युक्त इति भावः । स्वय-मेव समाधत्ते । अथवा श्वसितस्य निश्वासवायोः, धारया श्रेण्या, मुखं प्रशस्तं वदनमार्गम्, विमुच्य विहाय, वृथा निष्फलमेव, नासापथेन कुटिलसङ्कीर्णेन नासिकामार्गेण धावनस्य यातायातस्य श्रमः आयासः, क्रियत इति शेषः । श्वसितधारायाः नासापथधावनश्रम इव तवाप्ययं नरसाधिमभ्रमो निष्फल एवेत्याशयः ।

अत एवात्र दृष्टान्तोऽलङ्कारः । स च छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते । तथा द्वितीयार्द्धे क्रियत इत्य-ध्याहृतस्य क्रियापदस्यानभिधानात् न्यूनपदतादोषः । स च "मुखं विमुच्य श्वसितेन रच्यते" इति पाठेन समाधेयः । प्रसादो गुणः, वैदर्भी च रीतिः ।

साधोर्भाव इति साधिमा पृथ्वादित्वादिमनिच् ॥४४॥

বাঙ্গালা—হায় ! আপনি সমস্ত দেবতাদিগের অধিপতি ইন্দ্রকে পরিত্যাগ করিয়া কেন একটি মানুষের প্রতি উৎকর্ষের ভ্রান্তি পোষণ করিতেছেন । অথবা নিশ্বাসবায়ুগুলি প্রশস্ত মুখপথ পরিত্যাগ করিয়া, সঙ্কীর্ণ নাসিকাপথে যাতায়াত করায় অনর্থক পরিশ্রম করিয়া থাকে ॥৪৪॥

**अन्वय**—सूरयः अन्यजनुर्भविष्णवे दिवे फलाय तपोऽनले तनूः जुह्वति । पुनः सा एव विह्वला [सती] बलात् इव त्वां करे कर्षति ; [किन्तु हे] बालिशे ! [त्वं] न बलसे ॥४५॥

तप इति । सूरयः पण्डिताः, अन्यजनुषि जन्मान्तरे भविष्णवे भाविनि, दिवे स्वर्गरूपाय फलाय तादृशफल-लाभायेत्यर्थः तपः कृच्छ्रचान्द्रायणादिरेव अनलः शरीरशोषकत्वादग्निस्तस्मिन्, तनूः शरीराणि, जुह्वति निक्षिपन्ति अविरततपश्चरणेन शरीराणि शोषयन्तीति तात्पर्य्यम् । पुनः किन्तु, सा द्यौरेव, विह्वला त्वदर्थं व्याकुला सती, बलादिव, तदधिपतेरिन्द्रस्य प्रार्थनावशादिति भावः, त्वां करे हस्ते, कर्षति आत्मन उपरि नेतुमाकर्षति ; किन्तु हे बालिशे ! हे मूर्खे ! आत्महितस्याप्यनवबोधादित्याशयः, त्वं न बलसे तदर्थं नोत्सुका भवसि । इदमतीवाश्चर्य्यमित्यभिप्रायः ।

अत्र तपोऽनले इति निरङ्गं केवलरूपकम्, बलादिवेति हेतूत्प्रेक्षा, चतुर्थपादे च छेकानुप्रास इत्येतेषां संसृष्टिः । माधुर्य्यं गुणः, वैदर्भी च रीतिः ।

"अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः" इत्यमरः ।

भविष्णवे इति "भुवश्च" इत्यादिना भूधातोरिष्णुच् । बलसे इति "बल बल्ह संवरणे च" इति भौवा-दिक आत्मनेपदी ॥४५॥

বাঙ্গালা—পণ্ডিতগণ,
শরীর নিক্ষেপ করিয়া থাকে
ধরিয়া আপনাকে আকর্ষণ
ছেন না ॥৪৫॥

निवेक्ष्यसे यद्यनले नलोज्झिता सुरे तदस्मिन् महती दया कृता (१)।
चिरादनेनार्थनयापि (२) दुर्लभं स्वयं त्वयैवाङ्ग ! यदङ्गमर्प्यते ॥४७॥

अन्वयः—यदि (त्वं [illegible] विना स्वम् उद्बन्धुमनाः भवेः, ततः प्रथितः दिविस्थितानां पतिः हरिः

अन्तरिक्षगां भवन्तीं ([illegible] हि कः न्याय्यम् उपेक्षते ॥४६॥

"हुताशनोद्बन्धनवारिवारिताम्" इत्युक्तेः प्रत्येकमभिसन्धाय विप्रतिपत्तिं दर्शयति यदीति। तत्र हुताशनस्य प्रथमं निर्देशे सत्यपि प्राधान्यादिन्द्रघटनीयविप्रतिपत्तेरेवात्र प्रथमं प्रदर्शनमित्यवधेयम्। हे दमयन्ति ! यदि त्वं नलं विना नलस्यालाभादित्यर्थः, स्वम् आत्मानम्, उद्बन्धुं कस्मिंश्चिद्वृक्षे गलबन्धनेन हन्तुं मनो यस्याः सा तादृशी, भवेर्जायेथाः, ततस्तदा, प्रथितः सर्वत्रैव दिवस्पतित्वेन प्रसिद्धः, दिविस्थितानाम् आकाशवर्त्तिनां पदार्थानाम्, पतिः प्रभुः, हरिरिन्द्रः, अन्तरिक्षगाम् आकाशगामिनीम्, भवन्तीं जायमानां त्वाम्, हरिष्यति स्वाधिकारवर्त्तित्वात् नेष्यति। हि तथाहि, को जनः, न्याय्यं न्यायादनपेतं न्यायेनात्मप्राप्यमित्यर्थः, उपेक्षते परित्यजति, अपि तु कोऽपि नेत्यर्थः। अतस्तादृशीं त्वामिन्द्रः अवश्यमेव हरिष्यति। तेन तथाविधभावेन नलसङ्गमनं विना प्राप्तं स्वं कार्यं न तं हास्यतीति भावः।

अत्र हरणं प्रति "दिविस्थितानां पतिः" इति पदार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः, पूर्वार्द्धे हत्यनुप्रासच्छेकानुप्रासयोस्तैः संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः ॥४६॥

বাঙ্গালা—দময়ন্তি ! যদি আপনি নলকে না পাইয়া, আপনাকে উদ্বন্ধনে হত্যা করিতে ইচ্ছুক হন ; তবে আকাশস্থ পদার্থের প্রসিদ্ধ অধিপতি ইন্দ্র, আকাশবর্ত্তিনী আপনাকে অবশ্যই হরণ করিবেন। কেন না, কোন্ ব্যক্তি ন্যায়তঃ নিজের প্রাপ্য বস্তু পরিত্যাগ করে ॥৪৬॥

अन्वयः—(त्वं) नलोज्झिता (सती) यदि अनले निवेक्ष्यसे, तत् अस्मिन् सुरे महती दया कृता स्यात्; अङ्ग ! अनेन चिरात् अर्थनया अपि दुर्लभम् अङ्गं त्वया स्वयमेव अर्प्यते ॥४७॥

अग्निप्रवेशेनात्महत्याचेष्टायामपि विप्रतिपत्तिं दर्शयति निवेक्ष्यस इति। त्वं नलेन राज्ञा उज्झिता उपेक्षिता सती, यदि अनले अग्नौ, निवेक्ष्यसे तत्कर्तृकेनात्महत्यार्थं प्रवेक्ष्यसि, ततस्तदा, अस्मिन् सुरे देवे अग्नौ, महती दया कृता त्वयैव विहिता। यद्यस्मात्, अङ्ग ! हे दमयन्ति ! अनेन अनलेन चिरादवधि अर्थनयापि तत्प्रार्थनयापि, दुर्लभं दुष्प्रापम्, अङ्गं तवैव स्तनवदनाद्यवयवः, त्वया स्वयमेव, अर्प्यते तस्मै अग्नये एव दीयते। आत्महत्यार्थमग्नौ प्रवेशनं प्रकारान्तरेण तस्मै आत्मसमर्पणमेवेति तदपि न युज्यत इत्याशयः।

अत्र दयाया आत्महत्यारूपार्थस्य फलत्वात् अग्निसङ्गमरूपानर्थसम्भवाच्च विषमालङ्कारश्छेकानुप्रासेन संसृज्यते। तथा यदीत्यनेन तदित्यस्य सम्बन्धो न घटत इत्यभवन्मतसम्बन्धतादोषः; स च तदेति पाठेनैव समाधेयः। माधुर्यं गुणः, वैदर्भी च रीतिः।

निवेक्ष्यस इति "नेविंश" इति रूपादित्वादात्मने पदम् ॥४७॥

বাঙ্গালা—আপনি নলকর্ত্তৃক উপেক্ষিত হইয়া যদি অগ্নিতে প্রবেশ করেন ; তাহা [illegible]

[illegible] রিবেন। যে হেতু, হে দময়ন্তি ! দীর্ঘ-

[illegible] দুর্লভ ছিল ; আপনি নিজেই সেই

जितं जितं तत् खलु पाशपाणिना विना नलं वारि यदि प्रवेक्ष्यसि ।
तदा त्वदाख्यान् बहिरप्यसूनसौ पयःपतिर्वक्षसि वक्ष्यतेतराम् ॥४८॥
करिष्यसे यद्यत एव दूषणात् उपायमन्यं विदुषी स्वमृत्यवे ।
प्रियातिथिः स्वेन गृहागता कथं न धर्मराजं चरितार्थयिष्यसि ॥४९॥

---

अन्वयः—नलं विना (त्वं) यदि वारि प्रवेक्ष्यसि, तत् पाशपाणिना खलु जितं जितम् । (येन हि) तदा असौ पयःपतिः त्वदाख्यान् असून् बहिरपि वक्षसि वक्ष्यतेतराम् ॥४८॥

जलप्रवेशेनात्महत्यायां छायामनुपपत्तिमाह जितमिति । नलं राजानं विना, त्वं यदि वारि अप्सु, प्रवेक्ष्यसि. आत्मघातार्थमिति भावः ; तत् तदा, पाशपाणिना खलु वरुणेनैव, जितं जितम्, सर्वापेक्षयैवास्य तु-कार्षेण हृतम् ; 'येन हि तदा तव जलप्रवेशकाले, असौ पयःपतिर्जलाधिपतिर्वरुणः, अतएव तत्र जलप्रविष्टव-स्तुनि सम्पूर्णाधिकार इत्यभिप्रायः, त्वदाख्यान् त्वन्नामकान् अतिप्रियत्वेन त्वत्स्वरूपानित्यर्थः, असून् प्राणान्, बहि-रपि न केवलम् अभ्यन्तरे बहिर्देशेऽपि, वक्षसि हृदये, वक्ष्यतेतरां गाढालिङ्गनेनातिशयेन वक्ष्यति । इत्यञ्च जल-प्रवेशनमपि प्रकारान्तरेण वरुणायात्मसमर्पणमिति तदप्यनुचितमिति भावः ।

अत्र यथावापि जलप्रवेशेनात्महत्याकपारस्पर्शफलत्वात् वरुणालिङ्गनरूपानर्थसम्भवाच्च विषमालङ्कारः, पूर्वार्द्धं प्रति परार्द्धवाक्यार्थस्य हेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गम्, त्वदाख्यानसूनिति निरङ्गं केवलरूपकं छेकानुप्रास-श्चेत्येतेषां संसृष्टिः । यदि तदित्यनयोः परस्परसम्बन्धानुपपत्तेः पूर्ववदभवन्मतसम्बन्धतादोषश्च ; सोऽपि च "जितं जितं तर्हि तु पाशपाणिना, इति पाठेन परिहार्यः । प्रसादो गुणः, वैदर्भी च रीतिः ।

वक्ष्यतेतरामिति वहधातोः स्यतेविभक्तौ "आख्यातकिमिकारान्त" इत्यादिना तरप्प्रत्ययः ॥४८॥

বাঙ্গালা—আপনি যদি নলকে না পাইয়া জলে প্রবেশ করেন ; তাহা হইলে বরুণে-রই সর্বপ্রকারে জয় হইল। কারণ, তখন ঐ জলাধিপতি বরুণ আপনাস্বরূপ প্রাণটীকে হৃদয়ের বাহিরেও গাঢ় ভাবে ধারণ করিবেন ॥৪৮॥

अन्वयः—विदुषी ( त्वम् ) अत एव दूषणात् स्वमृत्यवे यदि अन्यम् उपायं करिष्यसि । (तदा) प्रिया अतिथिः स्वेन गृहान् गता (त्वं) धर्मराजं कथं न चरितार्थयिष्यसि ॥४९॥

करिष्यस इति । विदुषी धीमती त्वम् । अत एवोपायान्तरोद्भावने तव शक्तिः सम्भव इति भावः । अत एव पूर्वोक्तादेव, दूषणाद्दोषात् ईतेः, स्वमृत्यवे निजमरणाय, यदि अन्यं विषभक्षणादिकम् उपायम् करिष्यसि ; तदा प्रिया धर्मराजस्यैव वल्लभा अतिथिश्च स्वेन आत्मनैव, गृहान् गता च त्वम्, धर्मराजं यमम्, कथं न चरितार्थ-यिष्यसि चरितार्थं करिष्यसि अपि तु चरितार्थयिष्यस्येवेत्यर्थः, आशापूरणादिति भावः ।

अत्र अन्योपायकरणे विदुषीपदार्थस्य हेतुत्वादेकं काव्यलिङ्गम्, चरितार्थीकरणे प्रियादिपदार्थस्य हेतुत्वाद-परञ्च काव्यलिङ्गमित्यनयोः संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

असौ नलो राजा चतुरचूडामणिः, दमयन्ती च सरला बालिका तेन वाग्जालेन कपटवाक्प्रपञ्चेन तां प्रतारयितुमयतिष्टेति ॥४९॥

বাঙ্গালা—আপনি বুদ্ধিমতী কিনা ; তাই এই সমস্ত দোষবশতঃ নিজের জন্য যদি অন্য উপায় উদ্ভাবন কর
অতিথি ; আবার নিজেই তাঁ
না কেন ॥৪৯॥

निषेधवेषो विधिरेष तेऽथवा तवैव युक्ता खलु वाचि वक्रता।
विजृम्भितं यस्य किल ध्वनेरिदं विदग्धनारीवदनं तदाकरः ॥५०॥
भ्रमामि ते भैमि! सरस्वतीरस प्रवाहचक्रेषु निपत्य कत्यदः।
कृपामनाहत्य मनाक् कुरु स्फुटं कृतार्थनीयः कतमः सुरोत्तमः ॥५१॥

---

**अन्वयः**—अथवा एषः ते निषेधवेषः विधिः ; तव एव वाचि खलु वक्रता युक्ता। यस्य ध्वनेः किल इदं विजृम्भितम्, विदग्ध-नारी-वदनं तदाकरः ॥५०॥

दमयन्त्या उद्दे श्यान्तरसम्भावनया प्रागुक्तानुपपत्तिदर्शनमसमञ्जसं मन्यमानः पक्षान्तरमाह निषेधेति। अथवेति तत्पक्षान्तरस्यैव सूचनम्। अत्र दमयन्त्याः "इदं द्रढीयः शृणु मे प्रतिश्रुतम्" इत्यादिदमयन्त्युक्ती नलो यदि मत्पाणिं ग्रहीष्यति तदा भद्रम् ; इतरथा वह्निप्रवेशादिना आत्महत्यामपि करिष्यामि, तथापि नेन्द्रादीन् वरीष्यामीत्येवमेवाशयः। एवञ्च एषः "हुताशनीडक्ष्मजपादिकारिताम्" इत्यादिरूपः ते तव, निषेध इन्द्रादिवरणप्रतिषेध एव वेषो बहिःस्वरूपं यस्य स तादृशः, विधिः इन्द्राद्यन्यतमवरणमेव मदिष्टसाधनमित्येवंरूपः, इत्थं सम्भाव्यत इति शेषः, हुताशनीडक्ष्मेत्यादिना हुताशनादावेव प्रकारान्तरेणात्मसमर्पणप्रज्ञापनादिति भावः। ननु सरलाया बालिकाया मम वचने कथं तादृशी चातुरी सम्भाव्यत इत्याह तवैव विदग्धनार्या एव, वाचि वाक्ये खलु, वक्रता कुटिलतान्यप्रकारार्थप्रतिपादकता, युक्ता उचिता। कथमेतदित्याह यस्य ध्वनेर्व्यङ्ग्यार्थप्रतिपादकोत्तमकाव्यस्य, इदं विजृम्भितम् चमत्कारितया जगत्सु विलसितं वर्तते ; विदग्धनार्याश्चतुररमण्या वदनं मुखमेव तस्य ध्वनेराकर उत्पत्तिस्थानम्। अतो विदग्धायास्तव वाचि वक्रतापि सम्भवति, इन्द्राद्यन्यतमवरण एव च तव सम्मतिरस्तीत्याशयः।

अत्र वक्रताया युक्तत्वं प्रति पराद्धवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः।

"वाच्यातिशयिनि व्यङ्ग्ये ध्वनिस्तत्काव्यमुत्तमम्" इति साहित्यदर्पणः। "वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम्" इति काव्यप्रकाशधृतपद्ये तदन्तिकमेव रन्तुं गतासीति विध्यर्थ-पर्यवसानात् निषेधवेषो विधिरिति संक्षेपः ॥५०॥

**বাঙ্গালা**—অথবা, আপনার এই বাক্য, নিষেধের আকৃতিতে বস্তুতঃ বিধি বলিয়াই বোধ হইতেছে। কারণ, আপনার বাক্যেই ব্যঙ্গ্যার্থ সম্ভবপর হয়। কেন না, ধ্বনিনামক যে উত্তম কাব্যের এই প্রসার দেখা যায় ; চতুর রমণীর মুখই তাহার আকর ॥৫০॥

**अन्वयः**—(हे) भैमि! ते सरस्वतीरसप्रवाहचक्रेषु निपत्य कति अदः भ्रमामि। (तत्) कृपाम् अनाहत्य मनाक् स्फुटं कुरु, (त्वया) कतमः सुरोत्तमः कृतार्थनीयः ॥५१॥

इत्थं दैवतावरणं निश्चित्य विशेषे सन्दिहान आह भ्रमामीति। हे भैमि! ते तव, सरस्वत्या वाचः रसो माधुर्यमेव रसो जलं तस्य यः प्रवाहः स्रोतस्तस्य चक्रेषु आवर्तेषु निपत्य, कति कियत्कालम् यावत्, अदः इदम्, भ्रमामि सन्दिहानो भवामि घूर्णितो भवामि च। तत् कृपां दयाम्, अनाहत्य दूतेषु सर्वविषयस्यैव प्रकाश्यत्वादयाशीलतया...
... कतमः, कृतार्थनीयः त्वया वरणेन

अवोधि तत्त्वं दहनेऽनुरज्यसे (१) स्वयं खलु क्षत्रियगोत्रसम्भवः ।
विना तमोजस्विनमन्यतः कथं मनोरथस्ते वलते विलासिनि ॥५४॥
त्वयैकसत्या तनुतापयन्त्रया ततो निवर्त्त्यं न मनः कथञ्चन ।
हिमोपमा तस्य परीक्षणक्षणे सतीषु वृत्तिः प्रतमो निरूपिता ॥५५॥
स धर्मराजः खलु धर्मगोत्रया त्वयास्ति चित्तातिथितामुपापितः ।
ममापि साधुः प्रतिभात्ययं क्रमः चकास्ति योग्येन हि योग्यसङ्गमः ॥५६॥

---

अन्वयः—(हे दमयन्ति ! त्वं) स्वयं खलु दहने अनुरज्यसे (इति) तत्त्वं (मया) अबोधि । (हे) विलासिनि ! क्षत्रियगोत्रसम्भवः ते मनोरथः तम् ओजस्विनं विना कथम् अन्यतः वलते ॥५४॥

अग्नं वरयमनुमोदमान आह अबोधीति । हे दमयन्ति ! त्वं स्वयं खलु स्वयमेव, दहने वह्नौ, अनुरज्यसे विचार्य अनुरक्ता जाता, इति तत्त्वं याथार्थ्यम्, मया अबोधि अवगतम् ; "कुलाधनीयस्मनमादिकारिताम्" इत्यु क्तिभङ्गीविशादिति भावः । अपि च यतः हे विलासिनि ! क्षत्रियगोत्रे जन्म सम्भवस्त्याः, ते तव, मनोरथः अभिलाषः, तम् ओजस्विनं तेजस्विनमग्निं विना, कथम् अन्यतः अन्यस्मिन् निस्तेजस्के पुरुषे, वलति चलति, अपि तु कथमपि नेत्यर्थः, क्षत्रियगोत्रजातत्वेन तेजस्विन्यास्तव तेजस्विन एव पुरुषस्य योग्यत्वादित्याशयः ।

अत्र दहनानुरक्तिं प्रति क्षत्रियेत्यादिवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः श्लेषानुप्राणितेन संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ॥५४॥

বাঙ্গালা—দময়ন্তি ! আপনি নিজেই বিবেচনা করিয়া অগ্নির প্রতি অনুরক্ত হইয়াছেন, এই তত্ত্ব আমি বুঝিয়াছি । কেন না, হে বিলাসিনি ! আপনি ক্ষত্রিয়বংশে জন্মিয়াছেন বলিয়া তেজস্বিনী ; সুতরাং আপনার অভিলাষ, সেই তেজস্বী অগ্নি ভিন্ন অন্য পুরুষের প্রতি বাধিত হইবে কেন ॥৫৪॥

अन्वयः—(हे दमयन्ति ! ) एकसत्या त्वया तनुतापयन्त्रया कथञ्चन ततः मनः न निवर्त्त्यम् । परीक्षणक्षणे सतीषु तस्य वृत्तिः हिमोपमा प्रतमः निरूपिता ॥५५॥

ननु निरतिशयसन्तापप्रदाग्निना सह शरीरसंयोगासम्भवेन कथं तद्वरणं सम्भाव्यत इत्यत आह त्वयेति । हे दमयन्ति ! एकसत्या अद्वितीयसाध्व्या त्वया, ततो स्वशरीरे तापयन्त्रया तस्य योगमात्रेणैव दाहभयेन, कथञ्चन केनापि प्रकारेण, ततो वह्नेः सकाशात्, मनः स्वचित्तम्, न निवर्त्त्यं न निवर्त्तनीयम् । येन हि, परीक्षणक्षणे पातिव्रत्य-परीक्षाकाले, सतीषु साध्वीषु स्त्रीषु विषये, तस्य वह्नेः, वृत्तिरवस्था, हिमोपमा तुषारतुल्या, प्रतमो बहुवारम्, निरूपिता मयैव प्रत्यक्षं दृष्टा । अतस्तवाद्वितीयसतीरूपत्वात् त्वयि वह्नेर्वृत्तिः सुशीतलैव भवेदिति भावः । परीक्षणक्षणे रामायणादौ सीतादि परीक्षाकाले इति केचित् ।

अत्र मनोनिवर्त्तनाभावं प्रति परार्द्धवाक्यार्थस्य हेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गं श्लेषानुप्राणितं संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ॥५५॥

বাঙ্গালা—দময়ন্তি ! আপনি অদ্বিতীয় সতী; সুতরাং শরীরে সন্তাপ হইবে এই ——— কোন প্রকারেই ফিরাইয়া আনিবেন না । [illegible] অবস্থা হিমের ন্যায় শীতল হয় [illegible]

अजातविच्छेदलवैः स्मरोत्सवैः (१) अगस्त्यभासा दिशि निर्मलत्विषि ।
धुतावधिं कालममृत्युशङ्किता निमेषवत्तेन नयस्व केलिभिः ॥५७॥
शिरीषमृद्वी वरयं किमीहसे पयः प्रकृत्या मृदुवर्गवासवम् ।
विहाय सर्वान् वृणुते स्म किं न सा श्रियापि शीतांशुमनेन हेतुना ॥५८॥

---

अन्वयः—(हे दमयन्ति !) धर्मशीलया त्वया सः धर्मराजः चित्तातिथिताम् अप्रापितः अस्ति खलु । मम अपि अयं क्रमः साधुः प्रतिभाति । हि योग्येन (सह) योग्यसङ्गमः चकास्ति ॥५६॥

यम एव किं वरीतुमिष्ट इत्याह स इति । हे दमयन्ति ! धर्म एव शीलं स्वभावो यस्यास्तया त्वया, स धर्मराजो यमः, चित्तस्य आत्ममनसः अतिथिता विषयताम्, अप्रापितः प्रापितः अस्ति । खल्विति जिज्ञासायाम् । अयं क्रमः परिपाटी, ममापि मते, साधुरुत्कृष्टः, प्रतिभाति प्रकाशते । हि यस्मात्, योग्येन पदार्थेन सह, योग्यस्य पदार्थस्य सङ्गमः सम्मेलनम्, चकास्ति शोभते । अतो धर्मराजेन सह धर्मशीलायास्तवापि सम्मेलनं सर्वथा शोभिष्यत एवेति भावः ।

अत्र धर्मराजस्य चित्तातिथिताप्रापणे धर्मशीलापदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्चानयोः संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥५६॥

বাঙ্গালা—দময়ন্তি ! আপনি ধর্ম্মশীলা ; সুতরাং আপনি সেই ধর্ম্মরাজকেই মনের বিষয় করিয়াছেন। আমার মতেও এই নিয়মই ভাল বলিয়া প্রকাশ পাইতেছে। কেন না, যোগ্যবস্তুর সঙ্গেই অপর যোগ্যবস্তুর সম্মেলন শোভা পাইয়া থাকে ।৫৬।

अन्वयः—अमृत्युशङ्किता (त्वम्) अगस्त्यभासा निर्मलत्विषि दिशि तेन (सह) अजातविच्छेदलवैः स्मरोत्सवैः केलिभिः धुतावधिं कालं निमेषवत् नयस्व ॥५७॥

अजातेति । हे दमयन्ति ! अमृत्युशङ्किता मृत्युभयरहिता त्वम्, मृत्युघटकस्य यमस्यैव पतित्वेन वरणेन तत्प्रियतमत्वादिति भावः, अगस्त्यस्य तदाख्यस्य महानक्षत्रस्य भासा दीप्त्या, निर्मला त्विट् प्रभा यस्याः तस्याम् अतएव अतीत्सवस्य महासन्निधेराश्रयः, दिशि दक्षिणस्यां दिशि, तेन यमेन सह, न जातो यमानुग्रहेण मरणाद्यभावादेव नोत्पन्नः विच्छेदस्य विरहस्य लवो लेशोऽपि येषु तैः, स्मरोत्सवैः सुरतालिङ्गनादिरूपैः कामामोदैः तत्स्वरूपाभिरित्यर्थः, केलिभिः क्रीड़ाभिः, धुतावधिम् अनन्तं कालम्, निमेषवत् निमेषकालवत्, आमोदेन कालस्याल्पतया प्रतीतेरित्यभिप्रायः, नयस्व अतिवाहय ।

अत्र निमेषवदिति श्रौतोपमालङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ॥५७॥

বাঙ্গালা—অগস্ত্যনক্ষত্রের কিরণে যে দিকের আলোক নির্ম্মল হইয়া থাকে, সেই দক্ষিণ দিকে, আপনি মৃত্যুভয়রহিত হইয়া, সেই যমের সঙ্গে, বিচ্ছেদ-লেশ-বিহীন কামকেলি দ্বারা, নিমেষকালের ন্যায় অনন্তকাল অতিবাহিত করুন ।৫৭।

अन्वयः—(हे दमयन्ति !) शिरीषमृद्वी (त्वं) पयःप्रकृत्या मृदु-वर्ग-वासवं वरुणम् ईहसे किम् । अनेन हेतुना सा श्रिया अपि सर्वान् विहाय शीतांशुं किं न वृणुते स्म ॥५८॥

शिरीषेति वरुणस्यैव वरणवासना वर्णयति ।
असौ अत्यन्तकोमलाङ्गी त्वम्, पयःप्रकृत्या
अतीवमृदुरित्यर्थः, वरुणम्, ईहसे वरीतुं

(१) ... स्मरोत्सवैः ।

चिरादनध्यायमवाङ्मुखी मुखे ततः स्म सा वासयती दमस्वसा।
जातायतश्वासविमोक्षणात् तं बभाषे निष्ठुरं विचक्षणा ॥६१॥
विभिन्दता दुष्कृतिनीं मम श्रुतिं दिगिन्द्रदुर्वाचिकसूचिसञ्चयैः।
प्रयातजीवामिव मां प्रति स्फुटं कृतं त्वयाप्यन्तकदूततोचितम् ॥६२॥

तदादपि च। यदनेनवचनं प्रति हेतुः। तत् पूर्वोक्तप्रकारम्, तस्य नलाकारदूतस्य भाषितं वाक्यम्, स्फुटं अस्फुटम्, श्रुतम्, अस्फुटम् अश्रुतञ्च ; मनीयोगाभावात् स्वयमेव किञ्चित् किञ्चित् श्रुतवती इति भावः।

अत एवात्र यथासंख्यमलङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः ॥६०॥

বাঙ্গালা—দময়ন্তীর এক খানি গাল এবং এক খানি কাণ হাতের উপরে ছিল; এই অবস্থার তিনি, এই রূপ দূতবাক্যের প্রতি আদরবশতঃ তাঁহার সে বাক্য শুনিয়াছিলেনও; আবার দেবগণের উপরে স্পৃহা জন্মাইতে থাকিয়া বিড়ম্বনা করিতেছিল বলিয়া, সে বাক্য শুনিয়াছিলেনও না।৬০।

অন্বয়ঃ—ततः विचक्षणा सा दमस्वसा अवाङ्मुखी (सती) मुखे चिरात् अनध्यायं वासयती स्म; अथ जातायत-श्वास-विमोक्षणा (सती) क्षणात् तम् अवक्तव्यं बभाषे ॥६१॥

चिरादिति। ततः अनन्तरम्, विचक्षणा धीमती, अत एवास्याः अवसराभिज्ञतेति भावः, सा दमस्वसा दमयन्ती, अवाङ्मुखी विषादातिशयादधोमुखी सती, मुखे वदने, चिरात् बहुकालं यावत्, अनध्यायं वाक्याभावं मौनमित्यर्थः, वासयती स्म दुश्चिन्तावशात् स्थापयामास। अथ अनन्तरम्, जातम् आयतश्वासस्य दीर्घनिश्वासस्य विमोक्षणं त्यागो यया सा तादृशी सती, क्षणात् श्वासत्यागस्य मुहूर्त्तात् परमेव, तं दूतम्, अवक्तव्यं निष्ठुरम्, "कृतं त्वयाप्यन्तकदूततोचितम्" इत्यस्य वक्ष्यमाणत्वादित्याशयः। बभाषे उवाच।

अत्र छेकानुप्रासवृत्त्यनुप्रासयोः संसृष्टिः। वज्रपाते अनध्यायस्य व्यवस्थानादत्रापि प्रागुक्तदूतवचनानां वज्र-तुल्यताज्ञापनाय मौनार्थे अनध्यायपदस्य लक्षयेति न नेयार्थतादोषः। प्रसादो गुणः, वैदर्भी च रीतिः ॥६१॥

বাঙ্গালা—তদনন্তর, বুদ্ধিমতী দময়ন্তী অধোমুখী হইয়া দীর্ঘকাল যাবৎ মুখে মৌনভাব স্থাপিত করিলেন; পরে দীর্ঘ নিশ্বাস ত্যাগ করিয়া, ক্ষণকালের পর নিষ্ঠুর ভাবে সেই দূতকে বলিতে লাগিলেন।৬১।

অন্বয়ঃ—दिगिन्द्र-दुर्वाचिक-सूचि-सञ्चयैः दुष्कृतिनीं मम श्रुतिं विभिन्दता त्वया अपि प्रयातजीवाम् इव (स्थितां) मां प्रति स्फुटम् अन्तक-दूत-उचितं (कार्य्यं) कृतम् ॥६२॥

अवक्तव्यं भाषणमेवाह विभिन्दता इति। दिगिन्द्राणाम् इन्द्रादीनां चतुर्णां दिक्पालानां दुर्वाचिकान्येव परकीयस्त्रीभजनपरत्वात् दुष्टसन्देशा एव सुचयस्तीक्ष्णाग्रा लौहशलाकास्तासां सञ्चयैः समूहैः करणैः, दुष्कृतिनीं परपुरुषसम्भोगवचनश्रवणात् पापिनीम्, मम श्रुतिं कर्णम्, विभिन्दता विदारयता, त्वयापि दुर्जनैः का कथा भवतुल्यसत्पुरुषाकारदर्शनात् सम्भाव्यमानेन सज्जनेन भवतापि, प्रयातजीवा तद्विभेदनवेदनया गतप्राणामिव स्थितां मां प्रति, स्फुटं, व्यक्तम्, अन्तकदूततायाम्तुर्या दौत्ये स्थितिऽपि केवलयमदौत्यस्य उचितं योग्यं कार्य्यं कृतम्। यमदूता अपि परपुरुषसम्भोगवचनश्रवणका

अत्र दुर्वाचिके सूचित्वारोपात् निरङ्गं रू

বাঙ্গালা—দিক্পালগণের দুষ্ট
কর্ণকে বিদীর্ণ করিয়াছেন; তাহ
আপনিও আমার প্রতি স্পষ্টই যমদূতের

त्वदास्यनिर्यन्मदलीकदुर्यशो-मसीमयं सल्लिपिरूपभागिव ।
श्रुतिं ममाविश्य भवद् वचः खरं सृजत्यदः कीटवदुत्कटा रुजः ॥६३॥

तमालिरूचेऽथ विदर्भजेरिता प्रगाढमौनव्रतयैकया सखी ।
त्वपां समाराधयतीयमन्यया भवन्तमाह स्वरसज्ञया मया ॥६४॥

तमर्थि तु मद्वरयन्नजा (१) नृपं स्वयंवरः सम्भविता परेद्यवि ।
ममाखुभिगन्तुमनाः पुरःसरैः तदन्तरायः पुनरेष वासरः ॥६५॥

अन्वयः—त्वदास्य-निर्यन्मदलीक-दुर्यशो-मसीमयं लिपि-रूपभाक् सत् इव अदः भवद् वचः खरं मम श्रुतिम् आविश्य कीटवत् उत्कटा रुजः सृजति ॥६३॥

उत्प्रायमेवार्थं भङ्ग्यन्तरेणाह त्वदिति । हे दूत ! तव आस्यान्मुखात् निर्यत् निर्गच्छत् मम यत् अलीकं मिथ्याभूतं दुर्यशः "निषेधवेशो विधिरेव तेऽथवा" इत्यादिरूपम् इन्द्रादिष्वनुरागबोधकम् अपयशस्तदेव मसी तन्मयं तद्रूपस्तुतम्, अत एव लिपिरूपभाक् लिख्याकारशालि सम्भवदिव, अदः इदम्, भवतश्च दुरक्षरम् इन्द्राद्यनुरागसूचनेन कटुभूतं वचनं कर्तृ, मम श्रुतिं कर्णम्, आविश्य प्रविश्य, कीटवत् कर्णकीटवत्, उत्कटाः प्रबलाः, रुजः पीडाः, सृजति उत्पादयति । अतः पुनरेवं मा वादीरिति भावः ।

अत्र दुर्यशसि मसीत्वारोपाश्रितं केवलरूपकम्, लिपिरूपभागिवेति क्रियोत्प्रेक्षा, कीटवदिति श्रौतोपमा, इत्येतेषामङ्गाङ्गिभावेन सङ्करः; सोऽपि च चतुर्थचरणगतच्छेकानुप्रासेन संसृज्यते । समासबाहुल्यादोजो गुणः, गौडी च रीतिः ॥६३॥

বাঙ্গালা—আপনার মুখ হইতে আমার মিথ্যা অপযশরূপ কালী নির্গত হইয়া লেখার আকারই যেন প্রাপ্ত হইয়াছে; তৎস্বরূপ আপনার এই কটু বাক্য আমার কর্ণে প্রবেশ করিয়া কীটের ন্যায় প্রবল যাতনা উৎপাদন করিতেছে ॥৬৩॥

अन्वयः—अथ विदर्भजेरिता आलिः तम् ऊचे, इयं सखी प्रगाढमौनव्रतया एकया स्वरसज्ञया त्वपां समाराधयति, अन्यया मया स्वरसज्ञया भवन्तम् आह ॥६४॥

तमिति । अथ अनन्तरम्, विदर्भजया दमयन्त्या ईरिता इङ्गितेन वक्तुं प्रेरिता, आलिः काचित्तस्याः सखी, तं कृतकपिथं नलम्, ऊचे उक्तवती । किमूचे इत्याह—इयं सखी दमयन्ती, प्रगाढमत्यन्तं मौनव्रतं नीरवतारूपो नियमो यस्यास्तया, एकया स्वरसज्ञया निजजिह्वया, त्वपां लज्जाम्, समाराधयति सेवते; लज्जावशात् स्वयं न किञ्चिद्वदतीति समुदायतात्पर्यम् । अन्यया मया मद्रूपया स्वरसज्ञया निजजिह्वया निजाभिप्रायाभिज्ञया चेति व्यज्यते, भवन्तम्, आह ब्रवीति । मद्द्वारा भवन्तं ब्रवीतीति समुदायार्थः ।

अत्र मया स्वरसज्ञयेति निरङ्गं केवलरूपकमलङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ॥६४॥

বাঙ্গালা—তদনন্তর, দময়ন্তীপ্রেরিত কোন সখী নলকে বলিল; আমার এই সখী, অত্যন্তমৌনাবলম্বিনী স্বকীয় একটী জিহ্বা দ্বারা লজ্জার সেবা করিতেছেন এবং আমাস্বরূপ অন্য জিহ্বা দ্বারা আপনাকে বলিতেছেন ।৬৪।

अर्थिं तु परेद्यवि स्वयंवरः सम्भविता; पुरःसरैः मम अखुभिः

तदद्य विश्रम्य दयालुरेधि मे दिनं निनीषामि भवद्विलोकिनी ।
नखैः किलाख्यायि विलिख्य पत्रिणा तवैव रूपेण समः स मत्प्रियः ॥६६॥
दृशोर्द्वयी ते विधिनास्ति वञ्चिता मुखस्य लक्ष्मीं तव यन्न वीक्षते ।
असावपि स्वस्तदिमां नलानने विलोक्य साफल्यमुपैतु जन्मनः ॥६७॥

---

त्वमिति । मद्वरणस्रजा मम वरणमालया, तं नृपं नलम्, अर्चितुं पूजयितुम्, परेद्यवि परस्मिन्नहनि, स्वयंवरः तदर्था काचित् सभेत्यर्थः, सम्भविता सम्यग् भविष्यति । पुनः किन्तु, पुरःसरैः अग्रगामिभिः नानाविघ्ना-ग्रहया आदौ गन्तुमिच्छुभिरिवेत्यर्थः, मम असुभिः प्राणैः सह, गन्तुमनाः गन्तुकामः, एष वासरो दिवसः, तस्य स्वयंवरस्य अन्तरायो विघ्नस्वरूपो जात इति शेषः ; इन्द्रप्रार्थनादिनानोत्पाताविर्भावादिति भावः ।

अत्र पुरःसरैरिवेति प्रतीयमाना क्रियोत्प्रेक्षा, असुभिः सहेति सहोक्तिः, गन्तुमनस्त्वासम्बन्धेऽपि तत्सम्बन्धाद-तिशयोक्तिश्चेत्येतेषामङ्गाङ्गिभावेन सङ्करः । माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥६५॥

परेद्यवीति "परादेरेद्यवि" इति परशब्दादेद्यविप्रत्ययः ॥६५॥

বাঙ্গালা—আমার বরণমালা দ্বারা সেই রাজাকে পূজা করিবার জন্য, আগামী কল্য স্বয়ম্বরসভা হইবে ; কিন্তু তাহার পূর্বেই গমনেচ্ছু আমার প্রাণের সহিত গমনাভিলাষী এই দিনটাই (নানাকারণে) তাহার বিঘ্ন হইয়া দাঁড়াইয়াছে ॥৬৫॥

अन्वयः—तत् अद्य विश्रम्य मे दयालुः एधि ; (अहं) भवद्विलोकिनी (सती) दिनं निनीषामि । सः मत्प्रियः पत्रिणा नखैः विलिख्य तव एव रूपेण समः आख्यायि किल ॥६६॥

तदिति । तत्तस्मात् एतद्वासरस्य अन्तरायभूतत्वाद्धेतोः, अद्य विश्रम्य अत्र विश्रामं कृत्वा, मे मम सम्बन्धे, दयालुः एधि भव । विश्रामार्थमत्र तवावस्थानेनैव तावद्विघ्ननिवृत्तिर्भवेदिति भावः । कथमित्याह— भवद्विलोकिनी अहं भवन्तं पश्यन्ती सती, दिनं विघ्नीभूतमिमं वासरम्, निनीषामि नेतुमतिवाहयितुमिच्छामि । तथा च तव दर्शनेनैव महानन्दलाभात् सर्वोद्वेगनिवृत्तिरित्याशयः । ननु परपुरुषदर्शनेन कथं न ते पातिव्रात्यभङ्ग इत्याह— स मत्प्रियो नलः, पत्रिणा पक्षिणा प्रकृतत्वात् तेन राजहंसेन, नखैः करजैः, विलिख्य नलिनीदले चित्रयित्वा, तवैव रूपेण आकारेण, समस्तुल्यः, आख्यायि आख्यातः । किलेति पूर्ववार्त्तायाम् । अतो नलरूपतुल्यस्यैव तव दर्शनान्न पातिव्रात्यभङ्ग इत्यभिप्रायः ।

अत्र पूर्ववाक्यार्थं प्रति परार्द्धवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम्, आर्थोपमा, छेकानुप्रासश्चेति संसृष्टिः । मधुररचनाश्रयान्माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥६६॥

বাঙ্গালা—অতএব আপনি আজ এখানে বিশ্রাম করিয়া আমার প্রতি দয়ালু হউন ; আমি আপনাকে দেখিতে থাকিয়া এই দিনটাকে অতিবাহিত করিতে ইচ্ছা করি । কারণ, সেই রাজহংস নখ দ্বারা পদ্মপত্রে চিত্র করিয়া, আমার সেই প্রিয়তমকে আপনারই রূপের তুল্য বলিয়াছিল ॥৬৬॥

अन्वयः—विधिना ते दृशोः द्वयी वञ्चिता अस्ति ; यत् तव मुखस्य लक्ष्मीं न वीक्षते । तत् असौ
नयस्य उचितं योग्यं फ...

अपि स्वः नलानने इमां विलोक्य जन्मनः

ननु ममावावस्थाने तव तु फलं

ते तव, दृशोर्द्वयी नेत्रद्वयम्, वञ्चिता ।

दृशोर्द्वयी साक्षात् न पश्यति ।

एतन्नलीतुल्यां लक्ष्मीम्, विलोक्य, जन्मनः

ममैव पाणीकरणेऽग्निसाक्षिकं प्रसङ्गसम्पादितमङ्ग! सङ्गतम्।
न हा सहाधीतिभृतः (१) स्पृहा कथं तवार्य्यपुत्रीयमजर्य्यमर्जितुम् ॥६८॥
दिगीश्वरार्थं न कथञ्चन त्वया कदर्थनीयास्मि कृतोऽयमञ्जलिः।
प्रसद्यतां नाथ निगाद्यमीदृशं दधे दृशौ वाष्पभरालसे भृशम् ॥६९॥

---

अत्र ह्मनाम् एतत्सहस्रीमिति साहस्राक्षेपादसम्बन्धस्तुसम्बन्धा तिशयोक्तिरलङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः ॥६७॥

বাঙ্গালা—বিধাতা আপনার চোখ দুইটীকে বঞ্চিত করিয়া রাখিয়াছেন; যে হেতু তাহারা আপনার মুখের শোভা দেখিতে পায় না। সুতরাং এই চোখ দুইটীও আগামী কল্য নলের মুখে এই শোভা দেখিয়া, জন্মের সফলতা লাভ করুক ॥৬৭॥

अन्वयः—अङ्ग! मम एव पाणीकरणे अग्निसाक्षिकं, प्रसङ्गसम्पादितम् अजर्य्यम् आर्य्यपुत्रीयं सङ्गतम् अर्जितुं सह अधीतिभृतः तव कथं स्पृहा न (वर्त्तते) हा! ॥६८॥

विश्रामव्यपदेशेनात्मावस्थाने विशेषफलमाह ममैवेति। अङ्ग! हे देवदूत! ममैव न पुनर्दूरवर्त्तिन्याः कस्याश्चिदिति भावः, पाणीकरणे विवाहकाले, अग्निर्विवाहार्थमेव स्थापितो वह्निः साक्षी यस्य तत्। अत एव सुदृढमित्याशयः। प्रसङ्गेन दौत्यकरणसङ्गभावेनैव सम्पादितं घटितम्। अत एव प्रयाससाध्यत्वमपि नास्तीत्यभिप्रायः। किञ्च अजर्य्यम् अविनश्वरं चिरस्थायीत्यर्थः। अत एव सर्वथा स्पृहणीयमिति भावः, आर्य्यः पूज्यः श्वशुर इत्यर्थः तस्य पुत्रः पतिर्नलस्तस्येदमिति आर्य्यपुत्रीयं नलसम्बन्धि, सङ्गतं सम्मेलनम् सम्मेलनजनिता मैत्रीमिति तात्पर्य्यम्, अर्जितुं लब्धुम्, सह अधीतिमध्ययनं तयात्वेन सर्वथा सादृश्यमित्यर्थः बिभ्रत इति तस्य सर्वथैव तत्समानसुन्दरस्येति तात्पर्य्यम्, तव कथं स्पृहा इच्छा न वर्त्तत इति हा कष्टम्। सर्वथा स्वसदृशसुन्दरेण नलेन सह तव मैत्री प्रभूतैव भविष्यति; सैव च महाफलं तदर्थं ममात्रावस्थानं तव युक्तमित्याशयः।

अत्र अग्निसाक्षिकादिविशेषणानां साभिप्रायप्रयोगात् परिकरोऽलङ्कारः, प्रथमपादद्वये छेकानुप्रासः, चतुर्थपादे च स्वत्यनुप्रास इत्येतेषां संसृष्टिः। माधुर्य्यं गुणः, वैदर्भी च रीतिः।

विवाहार्थ एव पाणीशब्दः अव्ययः। तथा च वृत्तौ दुर्गसिंहः—"नित्यं हस्ते पाणावुपयमे।" "अजर्य्यमिति "अजर्य्यं सङ्गते च इति निपातः ॥६८॥

বাঙ্গালা—দেবদূত! আপনি সর্বপ্রকারেই নলের তুল্য রূপবান্; সুতরাং আমারই বিবাহের সময়ে তাঁহার সহিত আপনার যে মিত্রতা জন্মিবে, অগ্নি তাহার সাক্ষী থাকিবেন এবং তাহা প্রসঙ্গক্রমেই সম্পাদিত হইবে; বিশেষতঃ তাহা চিরস্থায়ী হইবে; অত এব হায়! তাহা লাভ করিতেও আপনার ইচ্ছা জন্মিতেছে না কেন? ॥৬৮॥

अन्वयः—त्वया अस्मि कथञ्चन दिगीश्वरार्थं न कदर्थनीया; अयम्, अञ्जलिः कृतः। प्रसद्यताम्,

হা! যাহা আপনাকে বলিতেছি হয় ॥৬৯॥

त्वया, अस्मि अहम् कथञ्चन केनापि प्रकारेण, दिगीश्वरार्थम्

। तदर्थम्, अयमञ्जलिः करद्वयसंयोगः

नं कदर्थनम्, न निगाद्यं त्वया पुनर्

दिवो धवस्त्वां यदि कल्पशाखिनं कदापि याचेत निजाङ्गनालयम्।
कथं भवेरस्य न जीवितेश्वरी न मोघयाच्ञः स हि भीरु! भूरुहः॥७४॥
शिखी विधाय त्वदवाप्तिकामनां स्वयं हुतस्वाङ्गहविः स्वमूर्त्तिषु।
क्रतुं विधत्ते यदि सार्वकामिकं कथं स मिथ्यास्तु विधिस्तु वैदिकः॥७५॥

---

तस्या आर्त्तिवाक्षु "दिगीश्वरार्थे न कथञ्चन त्वया" इत्यादिभिर्मनःपीडाजनितदैन्योक्तिभिः, भिन्नमर्म्मापि विदीर्णहृदयोऽपि सन्, स्वदूतधर्म्मात् निजदूतनियमात् इन्द्रादिषु प्रशंसनादित इत्यर्थः, विरन्तुं विरतो भवितुम्, न ऐहत न ऐच्छत्। तर्हि किं कृतवानित्याह— निभृतं गुप्तं यथा स्यात्तथा, दमयन्ती यथा न बुध्यते तथेत्यर्थः, विनिश्वसन् तस्या दुःखदर्शनेन दुःखाविर्भावात् निश्वासं त्यजन्, शनैर्मन्दं मन्दम्, भूयः सन् अवदत्।

अत्र भिन्नमर्म्मत्वरूपे कारणे सत्यपि विरामरूपकार्य्यानुत्पत्ते र्विशेषोक्तिरलङ्कारः, विपिनेत्यादौ लुप्तोपमा च्छेकानुप्रासश्चेति संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः।

"ऋषयः सप्त धीमन्तः कृताश्विनमिश्चित्रशिखण्डिनः" इति चित्रशिखण्डिनोऽङ्गिरसो नन्दन इति व्युत्पत्तिः। "जीव आङ्गिरसो वाचस्पतिश्चित्रशिखण्डिजः" इत्यमरः॥७३॥

বাঙ্গালা—আশ্চর্য্যবাক্যে বৃহস্পতিতুল্য নল, দময়ন্তীর মনঃপীড়াজনিত দৈন্যোক্তিতে বিদীর্ণহৃদয় হইয়াও, আপন দূতনিয়ম হইতে বিরত হইবার ইচ্ছা করিলেন না; পরে গুপ্তভাবে নিশ্বাস পরিত্যাগ করিয়া ধীরে ধীরে বলিতে লাগিলেন।৭৩।

অন্বয়:—দিবো ধবঃ নিজাঙ্গনালয়ং কল্পশাখিনং কদাপি ত্বাং যদি যাচেত; (তদা ত্বম্) অস্য কথং ন জীবিতেশ্বরী ভবেঃ। হি [হে] ভীরু! সঃ ভূরুহঃ মোঘযাচ্ঞঃ ন (ভবতি)॥৭৪॥

किमत्रासदित्याह दिव इति। दिवः स्वर्गस्य, धवः पतिरिन्द्रः, निजमङ्गनं चत्वरमेव आलयः आश्रयो यस्य तम् नितान्तसन्निहितमित्यर्थः; अत एव याच्ञायां परिश्रमोऽपि नास्तीति भावः; कल्पशाखिनं कल्पवृक्षम्, कदापि त्वां यदि याचेत। स्वयं तवावरणे इत्याशयः। तदा त्वम् तस्य इन्द्रस्य, कथं न जीवितेश्वरी पत्नी भवेः, अपि त्ववश्यमेव भवेरित्यर्थः। हि यस्मात्, हे भीरु! भयशीले! स भूरुहः कल्पवृक्षः, मोघा व्यर्था याच्ञा यस्मिन् स तादृशः, न भवति। इन्द्रस्यात्मन एव ऐश्वर्य्ये सत्यपि कल्पवृक्षं प्रति तद्याच्ञासूचनात् इयमेव विचित्रा वाक्। अत्रवाप्येवमूह्यम्।

अत्र पूर्ववाक्यार्थं प्रति चतुर्थपादगतवाक्यार्थस्य

संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः॥७४॥

বাঙ্গালা—ইন্দ্র নিজেরই প্রাঙ্গনস্থিত কল্প

করেন; তাহা হইলে আপনি কি প্রকারে উঁহ

হে ভীরু! সে কল্পবৃক্ষের নিকট প্রার্থনা ব্যর্থ হয়

অন্বয়:—শিখী ত্বদবাপ্তিকামনাং বিধায় স্বমূর্ত্তি

ক্রতুং বিধত্তে (তদা) তু সঃ বৈদিকঃ বিধিঃ কথং মিথ্যা

शिखीति। शिखी अग्निः, तव अवाप्तेः प्राप्तेः कामनां

स्वयम् आत्मनैव हुतं प्रक्षिप्तं स्वस्य आत्मन एव अंशी

भूतं हविर्येन स तथोक्तः सन्, यज्ञान्तरेषु प्राप्तं स्वभावभूत

परिश्रमाभावो अन्याभावश्च दर्शितः। यदि सार्वकामिक

सदा तदाशामधितिष्ठतः करं वरं प्रदातुं बलिनाद्बलादपि (१) ।
मुनेरगस्त्यादुद्ग्रहते स धर्मराट् यदि त्वदाप्तिं भण का तदा गतिः ॥७६॥
क्रतोः कृते आयति वेत्ति कः कति प्रभोरपां वेश्मनि कामधेनवः ।
त्वदर्थमेकामपि याचते स चेत् प्रचेतसः पाशिगतेव वर्त्तसे ॥७७॥

---

कुरुते, तदा तु स वैदिको वेदोक्तः, अतएव फलप्राप्त्यवश्यम्भाव इत्याशयः, विधिस्तदुपायः, कथं मिथ्या अस्तु भवतु, अपि तु कथमपि नेत्यर्थः । अतएव तव वरेच्छाया अस्तत्वेऽपि वह्निरवश्यमेव त्वां लब्धुं प्रयस्यतीति भावः ।

अर्थापत्तिश्छेकानुप्रासेन संसृष्टा । प्रसादो गुणः, वैदर्भी च रीतिः ॥७५॥

বাঙ্গালা—অগ্নি আপনার প্রাপ্তি কামনা করিয়া, নিজের মূর্ত্তির উপরেই নিজে, নিজের প্রাপ্ত হবিই আহুতি দিয়া, যদি সর্বকামপ্রদ কোন যজ্ঞ করেন ; তাহা হইলে সে বেদোক্ত কার্য্য কি প্রকারে মিথ্যা হইবে ? ॥৭৫॥

अन्वयः—सः धर्मराट् सदा तदाशाम् अधितिष्ठतः बलात् अपि करं वरं प्रदातुं बलिनात् अगस्त्यात् मुनेः यदि त्वदाप्तिं उद्ग्रहते, तदा का गतिः (इति) भण ॥७६॥

सदेति । स प्रस्तुतः धर्मराट् यमः, सदा सर्वस्मिन्नेव समये, तस्य यमस्य आशां दक्षिणां दिशम्, अधितिष्ठत आश्रित्य निवसतः । अत एवागस्त्यो यमस्य प्रजेवेति भावः । तेन च बलात्कारप्रयोगादपि, वरं यत्किञ्चिद्वरस्वरूपम्, करं राजग्राह्यभागम्, प्रदातुम्, बलिनात् समर्थीकृतात्, अगस्त्यान्मुनेः सकाशात्, यदि तव आप्तिं प्राप्तिम्, उद्ग्रहते याचित्वा नयते, तदा का गतिः तदीयहस्तं न गन्तुं कस्तवोपायो भवेदिति भण ब्रूहि । कापि गतिर्नास्तीत्यर्थः । अतस्त्वदनिच्छायां सत्यामपि यमोऽपि त्वां लब्धुं प्रयस्यतीति भावः ।

अत्र वरस्वरूपकरप्रदानाय बलिनत्वं प्रति सदेत्यादिपदार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्, वरं करमिति निरङ्गं केवलरूपकम्, छेकानुप्रासश्चेत्येतेषां संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥७६॥

বাঙ্গালা—অগস্ত্যমুনি সর্বদাই যমের অধিকৃত দক্ষিণ দিকে বাস করেন ; সুতরাং কোন বরস্বরূপ কর (খাজনা) দিবার জন্য, বলপূর্বকও তাঁহাকে সম্মত করিয়া, যম যদি সেই অগস্ত্যমুনির নিকট হইতে আপনার প্রাপ্তিরূপ বর গ্রহণ করেন ; তাহা হইলে বলুন দেখি, আপনার কি উপায় আছে ? ॥৭৬॥

कति कामधेनवः आयति [ इति ] कः वेत्ति । सः चेत्
। एव वर्त्तसे ॥७७॥

वेश्मनि पुरी, क्रतोर्यज्ञस्य कृते निमित्ते, कति कियत्यः,
। को जनो वेत्ति जानाति, अपि तु अतिबहुतरत्वात् तत्-
; यदि, त्वदर्थं त्वन्निमित्तम्, एकामपि कामधेनुम्, याचते ;
इव, वर्त्तसे । अत इन्द्रादीनामन्यतममवरित्वा तव

वाक्यस्य क्रतोरित्यादिवाक्यान्तरमध्ये प्रवेशाद्गर्भितत्वादोषः ;
। तयोः समाधानाय श्लोक एवं पठनीयः—
; कृते सन्ति कतीति वेत्ति कः ।
भीः । पाशिगतेव वर्त्तसे ॥७७॥

अपार्थयन् याजकफूत्कृतिश्रमं ज्वलेद्रुषा चेद्वपुषा तु नानलः।
अलं नलः कर्त्तुमनग्निसाक्षिकं विधिं विवाहे तव सारसाक्षि! कम् ॥८०॥
पतिंवरायाः कुलजं वरस्य वा यमः कमप्याचरितातिथिं यदि।
कथं न गन्ता विफलीभविष्णुतां स्वयंवरः साध्वि! समृद्धिमानपि ॥८१॥

বাঙ্গালা—ক্রোধবশতঃ রাজারা পরস্পর নিষ্ঠুর বাক্য উচ্চারণ করিতে থাকিবেন; তখন তাঁহারা আপন আপন মুখের বৃত্তান্তও বুঝিতে পারিবেন না এবং ছাতার কাপড় ফেলাইয়া দিয়া সেই দণ্ড লইয়া নাচানাচি করিবেন ও হাতাহাতি করিবেন। আপনি কি রাজাদের এইরূপ যুদ্ধ দেখিতে ইচ্ছা করেন ॥৭৯॥

अन्वयः—अनलः याजक-फूत्कृति-श्रमम् अपार्थयन् (सन्) चेत् रुषा ज्वलेत्, वपुषा तु न ज्वलेत्; (तदा हे) सारसाक्षि! नलः तव विवाहे अनग्निसाक्षिकं कं विधिं कर्त्तुम् अलं (भवेत्?) ॥८०॥

इदानीमग्न्यभ्यर्थनाप्रसङ्गे: प्रतिकूलतामाह—अपार्थयन्निति। अनलो वह्निः, याजकस्य पुरोहितस्य फूत्कृतेः सन्दीपनार्थं फूत्कारस्य श्रमम्, अपार्थयन् अप्रज्वलनेन व्यर्थीकुर्वन्, चेद् यदि, रुषा तवावज्ञाजनितक्रोधेनैव, ज्वलेत् अन्तःप्रदीप्तो भवेत्, वपुषा शिखामयशरीरेण तु, न ज्वलेत् प्रदीप्तो न भवेत्; तदा हे सारसाक्षि! पद्मनयने! नलस्तव विवाहे, न अग्निः साक्षी यत्र तं तादृशम्, कं विधिं होमादिव्यापारम्, कर्त्तुम्, अलं समर्थो भवेत्; अपि तु कमपि नेत्यर्थः। तेन नलोऽपि तव विवाहाधिकारी स्यादिति त्वमविवाहितैव तिष्ठेरिति भावः।

अनुमापत्तिरलङ्कारः होमाद्यनुष्ठानाभावं प्रति अनग्निसाक्षिकपदार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गञ्च, अनयोरङ्गाङ्गिभावेन सङ्करः। प्रसादो गुणः, वैदर्भी च रीतिः ॥८०॥

বাঙ্গালা—পুরোহিতের ফুৎকার দেওয়ার পরিশ্রম ব্যর্থ করিয়া, অগ্নি যদি ক্রোধবশতঃ মনে মনে জ্বলিয়া উঠেন, কিন্তু আকৃতি দ্বারা প্রজ্বলিত না হন, তাহা হইলে হে পদ্মনয়নে! নল আপনার বিবাহে অগ্নি সাক্ষী ব্যতীত কোন্ অনুষ্ঠান করিতে পারিবেন? ॥৮০॥

अन्वयः—यमः यदि पतिंवरायाः वरस्य वा कम् अपि कुलजम् अतिथिम् आचरिता; (तदा हे) साध्वि! समृद्धिमान् अपि स्वयंवरः कथं विफलीभविष्णुतां न गन्ता ॥८१॥

यमकर्त्तव्यं विघ्नमाह पतिमिति। यमो यदि, पतिंवरायाः पतित्वेन नलं वरीतुमिच्छन्त्यास्तव, वरस्य नलस्य वा कमपि वंशजातं जनम्, अतिथिं स्वगृहगामिनम्, आचरिता करि-ष्यति हे साध्वि! समृद्धिमानपि पितृसमृद्धिबलान्महाडम्बरपूर्णोऽपि, तव स्वयंवरः, न गन्ता न गमिष्यति, अपि त्ववश्यमेव गन्तेत्यर्थः, अशौचीन्-कुर्य्यात्" इति विधिना शौचस्याधिकारिविशेषत्वादिति भावः।

—" इत्यादिना तृन्प्रत्यये "इस्वनद्योऽर्मोऽन्तः" इति मकारागमः।
भवतेरिष्णुच् प्रत्ययः ॥८१॥

বণী আপনার কিম্বা বর নলের কোন সগোত্রকে যান; তাহা হইলে হে সাধ্বি! সমৃদ্ধিপূর্ণ আপ-কেন? ॥৮১॥

अपः प्रति स्वामितया परः सुरः स तां निषेधेद् यदि नैषधक्रुधा ।
नलाय लोभाततपाणयेऽपि ते (१) पिता कथं त्वां वद सम्प्रदास्यते (२) ॥८२॥

इदं महत्तेऽभिहितं हितं मया विहाय मोहं दमयन्ति ! चिन्तय ।
सुरेषु विघ्नैकपरेषु को नरः करस्थमप्यर्थमवाप्तुमीश्वरः ॥८३॥

इमा गिरस्तस्य विचिन्त्य चेतसा तथेति सम्प्रत्ययमाससाद सा ।
निवारितावग्रहनीरनिर्झरैर्नभोनभस्यत्वमलम्भयद्दृशौ ॥८४॥

अन्वयः—सः परः सुरः अपः प्रति स्वामितया नैषधक्रुधा यदि ताः निषेधेत्, (तदा) ते पिता लोभाततपाणये अपि नलाय कथं त्वां सम्प्रदास्यते (इति) वद ॥८२॥

वरुणोऽपि विघ्नं करिष्यतीत्याह— अप इति । स प्रसिद्धः, परः उक्तेतरः, सुरो देवो वरुणः, अपो जलानि, प्रति लक्ष्यीकृत्य, स्वामितया प्रभुतया हेतुना, नैषधे नले क्रुधा स्वयं वरीतुमिष्टाया रमण्या वरणीयत्वात् कोपेन, यदि ता अपो जलानि, निषेधेत् "तत्र न गन्तव्यम्" इति प्रतिषेधेत् ; तदा ते तव, पिता भीमः, लोभेन त्वत्प्राप्तिलालसया आततः प्रसारितः पाणिर्येन तस्मै तादृशायापि, जलाभावेन साङ्गोपाङ्गाभावात् पाणिग्रहणस्य साङ्गत्वाभावेऽपि लोभादेव प्रसारितपाणये इत्यपेराशयः ; नलाय, कथं त्वां सम्प्रदास्यते ; अपि तु तव पितुर्न्यायधार्मिकत्वात् कथमपि स न सम्प्रदास्यत इत्यर्थः । तदापि तव नलप्राप्तिर्न भविष्यतीति भावः ।

अत्र छेकानुप्रासोऽलङ्कारः । वदेति वाक्यान्तरस्य वाक्यान्तरमध्ये अनुप्रवेशाद्गर्भितता दोषः । स च "प्रदास्यते त्वां जनकः कथं वद" इति पाठेन समाधेयः । प्रसादो गुणः, वैदर्भी च रीतिः ॥८२॥

বাঙ্গালা—অপর বরুণদেবও জলের অধিপতি বলিয়া, সে জলকে যদি নলের প্রতি ক্রোধবশতঃ (তাঁহার বিবাহে যাইতে) নিষেধ করেন ; তাহা হইলে নল লোভবশতঃ হস্ত প্রসারিত করিলেও, আপনার পিতা আপনাকে কি করিয়া সম্প্রদান করিবেন ; তাহা বলুন দেবি ! ॥৮২॥

অন্বয়ঃ—(হে) দমযন্তি ! মযা তে ইদং মহৎ হিতম্ অভিহিতম্, মোহং বিহায় চিন্তয় । সুরেষু বিঘ্নৈকপরেষু (সৎসু) কঃ নরঃ করস্থম্ অপি অর্থম্ অবাপ্তুম্ ঈশ্বরঃ (ভবতি) ॥৮৩॥

पूर्वोक्तानि समर्थयन्नुपसंहरति इदमिति । हे दमयन्ति । मया ते तव सम्बन्धे इदम् इन्द्रादिचतुष्टयवरणरूपम्, महत् हितम्, अभिहितं कथितम् । मो ...
...ति विचारय । उक्तविघ्नानां प्रतिविधानमपि न ...
... परेषु प्राधान्येन प्रवृत्तेषु सत्सु, को नरो मनु...
...समर्थो भवति, अपि तु कोऽपि नेत्यर्थः । तत् ...
...मेव ते श्रेय इति भावः ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ...
...गुणः, वैदर्भी च रीतिः ॥८३॥

বাঙ্গালা—দমযন্তি ! আমি আ...
আপনি চিত্তের বিকলতা পরিত্যাগ ক...
করিতে প্রবৃত্ত হইলে, কোন্ মনুষ্য হস্তস্থি...

(१) ... तत् । (२) ... स प्रदास्यति ।

धुतापतत्पुष्पशिलीमुखाशुगैः शुचेस्तदासीत् सरसी रसस्य सा ।
रयाय बद्धादरयाम्बुधारया समालनीलोत्पललीललोचना (१) ॥८६॥
अथोन्नमन्ती रुदती गतक्षमा ससम्भ्रमा लुप्तरतिः स्खलन्मतिः ।
व्यधात् प्रियप्राप्तिविघातनिश्चयान्मृदूनि दूना परिदेवितानि सा ॥८७॥

---

কজ্জলযুক্ত নীলবর্ণ এবং চঞ্চল দুইটী অশ্রুবিন্দু, উৎপলকলিকার তুল্য স্তনযুগলে থাকিবার আশাবশতই যেন, দময়ন্তীর নয়নযুগল হইতে বক্ষের উপরে পতিত হইয়া, চঞ্চল দুইটী ইন্দ্রনীলমণির ন্যায় শোভা পাইতে লাগিল ॥৮৫॥

**अन्वयः**—तदा पतत्पुष्पशिलीमुखाशुगैः धुता, रयाय बद्धादरया अम्बुधारया समालनीलोत्पललील-लोचना सा शुचेः रसस्य सरसी आसीत् ॥८६॥

पुनरपि विशिष्य रोदनमेवाह धुतेति । तदा तस्मिन् समये, पतन्तः पुष्पशिलीमुखस्य कुसुमबाणस्य कामस्य आशुगा बाणाः, धुता कम्पिता । अन्यत्र तु पतन्तः पुष्पाणि शिलीमुखा भ्रमराः आशुगो वायुश्च तैः, धुता कम्पिता सरसी हि पुष्पपतनेन भ्रमरपतनेन वायुचलनेन च कम्पिता भवति । तथा रयाय वेगाय वेगेन पतनायेत्यर्थः, बद्धः कृत आदर आग्रहो यया तया, अम्बुधारया नयनजलप्रवाहेण करणेन, समाले दलसहिते ये नीलोत्पले तयोर्लीला इव लीला विलासो ययोस्ते तथाविधे लोचने चक्षुषी यस्याः सा तथोक्ता । अम्बुधाराद्वयस्य नालद्वय-तुल्यत्वम्, लोचनद्वयस्य च नीलोत्पलद्वयसमानत्वमिति भावः । सा दमयन्ती, शुचः शोकस्य रसस्य करुणरसे-स्येत्यर्थः, तस्यैव जलस्येति च तात्पर्यम्, सरसी सरःस्वरूपा, आसीत् । तत्प्राप्तमभिलषितस्येन शोकोदयात् चालितत्वं करोटीति विस्तरः । अन्ये तु अन्यथापि व्याचक्षते ।

अत्र शोकरसे जलत्वारोपो दमयन्त्याः सरसीत्वारोपे निमित्तमिति श्लिष्टपरम्परितरूपकम्, चतुर्थे पादे लुप्तो-पमा, प्रथमे च श्लेष इत्येतेषामङ्गाङ्गिभावेन सङ्करः ; सोऽपि च छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते । रस-स्यानुभूयमानस्यैव स्वशब्दोक्तिदोषः ; अत्र तु तदभावात्तदभावः । माधुर्यं गुणः, वैदर्भी च रीतिः ।

शुचेरिति शुचधातोः "इक् श्तिपौ धातुनिर्देशे" इतीक् प्रत्ययः ॥८६॥

**বাঙ্গালা**—সেই সময়ে দময়ন্তীর নয়নযুগল হইতে দুইটী অশ্রুধারা বেগে নিপতিত হইতেছিল বলিয়া, তাঁহার সেই নয়নযুগল নালযুক্ত নীলোৎপল যুগলের ন্যায় সুন্দর হইয়াছিল এবং কামের বাণ পতিত থাকায় তিনি করু

রসের সরোবরস্বরূপ হইয়াছিলেন ॥৮৬॥

**अन्वयः**—अथ सा प्रिय-प्राप्ति-विघात-

स्खलन्मतिः दूना (च सती) मृदूनि परिदेवितानि व्यधात् ।

अथेति । अथ अम्बुधारापतनात् परम्, सा

निश्चयाद्धेतोः, उन्नमन्ती च स्थिरा भवन्ती, रुदती,

लुप्ता रतिर्विषयान्तरानुरागो यस्याः सा, स्खलन्मतिः

दूनापि शोकोद्दीपकानीत्यर्थः, परिदेवितानि

अत्र जडतादिभावोदयानां भावशबलतादि

च रीतिः ॥८७॥

(१) ··· नीलजलोचना ।

ত্বরস্ব পঞ্চেষুহুতাশনাজস্তনুষ্ব মদ্ভস্মময়ং যশস্বয়ম্।
বিধে! পরীহাফলভক্ষণব্রতী পতাশু তুভ্যমসুভির্মমাফলৈঃ ॥৮৮॥
ভৃশং বিয়োগানলতাপ্যমান! কিং বিলীয়সে ন ত্বময়োময়ং যদি।
অরেষুভির্ভেদ্য! ন বজ্রমস্যসি ব্রবীষি ন স্বান্ত! কথং ন দীর্যসে ॥৮৯॥

---

বাঙ্গালা—তাহার পর, নলের প্রাপ্তিবিষয়ে বিঘ্নই ঘটিবে এইরূপ নিশ্চয় হওয়ায়, দময়ন্তী অস্থির হইয়া পড়িলেন, রোদন করিতে লাগিলেন, তাঁহার সহিষ্ণুতাশক্তি নষ্ট হইয়া গেল, তিনি চমকিয়া উঠিলেন, তাঁহার অঙ্গাবয়বের অনুরাগ লোপ পাইল, তিনি কর্তব্য-বিমূঢ় হইয়া পড়িলেন এবং সন্তপ্ত হইয়া কোমল বিলাপ করিতে লাগিলেন ॥৮৭॥

অন্বয়ঃ—(হে)পঞ্চেষুহুতাশন! ত্বরস্ব মদ্ভস্মময়ম্ আত্মনঃ যশস্বয়ং তনুষ্ব। (হে) বিধে! পরীহা-ফল-ভক্ষণ-ব্রতী (ত্বম্) অদ্য অফলৈঃ মম অসুভিঃ তুভ্যম্ পত ॥৮৮॥

ত্বরস্বেতি। হে পঞ্চেষুহুতাশন! অত্যন্তসন্তাপকত্বাৎ কামানল! ত্বরস্ব মাং দগ্ধুং সত্বরো ভব; পরন্তু মদ্ভস্ময়ং স্বতলস্যাত্মা মদীয়ভস্মরূপম্, আত্মনো যশস্বয়ং কীর্তিসমূহম্, তনুষ্ব বিস্তারয়। হে বিধে! পরস্য অন্যস্য জনস্য ঈহায়াঃ চেষ্টায়াঃ ফলস্য যদ্ভক্ষণং বিনাশনং তদেব ব্রতমস্যাস্তীতি স তাদৃশস্তম্, অদ্য অফলৈঃ নলস্যালাভেন নিষ্প্রয়োজনৈঃ, মম অসুভিঃ প্রাণৈঃ, তুভ্যম্ তদ্বিনাশনেন তৃপ্তো ভবন্, পত অপরাধং বিনা স্ত্রীবধপাপেন পতিতো ভব। এতেন নলস্যালাভে কামানলসন্তাপেন মম মরণমেব ভবিষ্যতীতি সূচিতম্।

অত্র পঞ্চেষৌ হুতাশনত্বারোপাৎ ভস্মনি যশস্ত্বারোপাচ্চ নিরঙ্গকেবলরূপকদ্বয়ং বিলীয়মানয়ো রূপয়ুগ্মাসঙ্গ ত্বনয়োঃ সংসৃষ্টিঃ। মঞ্জিষ্ঠারাগো নাম পূর্বরাগ এব রসঃ। যথা দর্পণে—

"মঞ্জিষ্ঠারাগমাহুস্তং যন্নাপৈত্যতিশোভতে।"

নলপ্রাপ্তৌ বিঘ্ননিশ্চয়েঽপি রাগানপায়াৎ লক্ষণসঙ্গতিঃ। শোকস্তু আবেগাখ্যব্যভিচারিভাবজন্য এব "ইষ্টাপ্রাপ্তেঃ শোকোঽনিষ্টাৎ" ইতি তত্রৈব দর্পণোক্তেঃ। ন পুনঃ করুণঃ করুণবিপ্রলম্ভো বা রসঃ, শোকস্থায়িভাবাভাবাৎ এক-তরস্য লোকান্তরগমনাভাবাচ্চ। এবমন্যত্রাপ্যুন্নেয়ম্। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৮৮॥

বাঙ্গালা—হে কামানল! সত্বর হও; আমার ভস্মরূপ নিজের যশোরাশি বিস্তার কর। হে বিধাতঃ! তুমি পরের চেষ্টাফল নষ্ট করিতে ব্রতী আছ; অতএব আমার [illegible] পতিত হও ॥৮৮॥

[illegible]! স্বান্ত! ত্বং যদি অয়োময়ং (ভবসি, তদা) কিং ন [illegible] বজ্রম্ অপি ন অসি, (তদা) কথং ন দীর্যসে, (ইতি) ন [illegible]

[illegible] বিরহাগ্নিনা তাপ্যমান! দহ্যমান! স্বান্ত! হৃদয়! [illegible] সুবর্ণাদেরিবাত্যন্তমপ্যত্বাদিতি ভাবঃ। তদা কিং কথং ন বিলীয়সে [illegible] অগ্নিতাপেন দ্রবীভাবদর্শনাৎ তব তু তদভাবাৎ ত্বং ন [illegible]। যদি কিং বজ্রময়মিত্যাহ—হে অরেষুভিঃ কামবাণৈঃ, ভেদ্য! [illegible] ন [illegible] পুষ্পময়ৈঃ অরেষুভিরেব ভিদ্যমানত্বাদিত্যাশয়ঃ। [illegible] এব বজ্রপাষাণাদিবৌ অবলম্বিত বর্ণস্তম্ভ [illegible] ব্রবীষি ন কথয়সি? অপি তু কথনমিদ দুর্জ্ঞেয়মিত্যাশয়ঃ।

विलम्बसे जीवित ! किं द्रव द्रुतं ज्वलत्यदस्ते हृदयं निकेतनम् ।
जहासि नाद्यापि मृषा सुखासिका-मपूर्वमालस्यमहो तवेदृशम् ॥९०॥
दृशौ मृषा पातकिनो मनोरथाः कथं पृथग्वामपि विप्रलेभिरे ।
प्रियस्त्रियः प्रेमघाति पातकं स्वमश्रुभिः क्षालयतं शतं समाः ॥९१॥

---

अत्र मदनसन्तापरूपे कारणे सत्यपि अयोमयस्य विलीनत्वरूपकार्य्याभावाद्विशेषोक्तिः, परार्द्धेऽप्येवम्, वज्रमयत्वाभावं प्रति भिदेलिमत्वेति पदार्थस्य हेतुत्वात् काव्यलिङ्गञ्च तेषां मिथो निरपेक्षतया संसृष्टिः । रसादयः पूर्ववत् ॥८९॥

বাঙ্গালা—হে হৃদয় ! তুমি যদি লৌহময়ই হইয়া থাক, তবে বিরহানলের সন্তাপে গলিয়া যাইতেছ না কেন ? আবার তুমি কামবাণে বিদীর্ণ হইবার যোগ্য, সুতরাং বজ্রময়ও নহ, তবে বিদীর্ণ হইতেছ না কেন ? ইহার কেন উত্তর দিতেছ না ? ॥৮৯॥

अन्वयः—( हे ) जीवित ! किं विलम्बसे, द्रुतं द्रव, ते निकेतनम् अदः हृदयं ज्वलति । अद्य अपि मृषा सुखासिकां न जहासि ; अहो ! ईदृशं तव आलस्यम् अपूर्वम् ॥९०॥

विलम्बस इति । हे जीवित ! मम जीवन ! किं कथम्, विलम्बसे समयक्षेपं करोषि ; द्रुतं शीघ्रम्, द्रव पलायस्व । यतस्ते तव, निकेतनं वासस्थानम्, अदः इदं हृदयम्, ज्वलति कामाग्निना दुःखाग्निना च दग्धीभवति । अद्यापि इदानीमपि, मृषा मिथ्या, सुखासिकां सुखेनावस्थानम्, न जहासि न परित्यजसि । अहो आश्चर्य्यम्, ईदृशं तव आलस्यम् अलसता, अपूर्वम् अभिनवमेव दृश्यत इति शेषः । वासस्थाने दह्यमानेऽपि सर्व्वैव निवर्त्तनेनावस्थानरूपमीदृशमालस्यं पूर्वं केनापि कस्यापि न दृष्टमिति भावः ।

अत्र पलायनं प्रति द्वितीयपादगतवाक्यार्थस्य हेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारश्चेकानुप्रासेन संसृज्यते । तथा 'द्रव द्रुतम्' इति कर्कशश्रवणेन प्रकृतरसपरिपन्थित्वात् प्रतिकूलवर्णता दोषः ; स च 'विलम्बसे जीव ! किमाशु निःसर' इति पाठेन समाधेयः । पूर्व्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ।

आसिकेति "पर्य्यायार्हर्णोत्पत्तिषु ण्वुच्" इति स्त्रियामासधातोर्ण्वुच् ॥९०॥

বাঙ্গালা—জীবন ! তুমি কেন বিলম্ব করিতেছ, শীঘ্র পলায়ন কর। কারণ, তোমার বাসস্থান এই হৃদয় জ্বলিতেছে। এখনও মিথ্যা সুখে থাকা পরিত্যাগ করিতেছ না ; কি আশ্চর্য্য ! তোমার এই রূপ

अन्वयः—(हे) दृशौ ! पातकिनः म
प्रेमघाति स्वं पातकं शतं समाः अश्रुभिः क्षाल

दृशाविति । हे दृशौ ? नयनयुगल ! पा
अभिलाषाः, पृथक् निश्चलौ, सर्व्वकार्य्येष्वेव दक्षत
केन सम्भवमस्मीन युवां नलं द्रक्ष्यथ इति
सर्व्वैव सुदूरमिवाजीवेन प्रतारयन्ति ; किन्तु मनो
वेति भावः । युवयोरपीदृक्प्रतारणामाप्तौ का
दर्शनप्रतिबन्धकम्, स्वं स्वकीयम्, पातकं पापम् ।
बहुवत्सरान् यावत्, चिरजीवनमेवेत्यर्थः, अश्रुभि
मलं क्षालयति । दुःखभोगेन पापस्य क्षयाभावे
वेन च दुःखभोगनिबन्धनं रोदनं दीर्घकालमेव यु

प्रियं न मृत्युं न लभे त्वदीप्सितं तदेव न स्यान्मम यत्त्वमिच्छसि ।
वियोगमेवेच्छ मनः ! प्रियेण मे तव प्रसादान्न भवत्वसावपि ॥९२॥
न काकुवाक्यैरतिवाममङ्गजं द्विषत्सु याचे पवनन्तु दक्षिणम् ।
दिशापि मद्भस्म किरत्वयं तया प्रियो यया, वैरविधिर्वधावधिः ॥९३॥

अत्र चुद्रत्वरूपकारणाभावेऽपि प्रतारणोत्पत्तेः किं विभावना ? उत पृथुत्वरूपकारणे सत्यपि नयनदर्शन-विशिष्टरूपकार्यानुत्पत्तेः किं विशेषोक्तिरित्यनयोः सन्देहसङ्करः ; विभावनाविशेषोक्त्योर्भेदेऽपि पृथुशब्दे श्लेषाभिधाया-भावादतिशयोक्तिरित्यनयोरप्यङ्गाङ्गिभावेन सङ्करः । पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥९१॥

বাঙ্গালা—হে নয়নযুগল ! তোমরা অতিমহান্, কিন্তু তথাপি পাপিষ্ঠ মনোরথ-গুলি তোমাদিগকে কি করিয়া মিথ্যা প্রলোভন দ্বারা প্রতারণা করিল ! এখন প্রিয়তমের শোভাসন্দর্শনের প্রতিবন্ধক নিজের পাপগুলিকে শতবৎসরপর্য্যন্ত অশ্রুজল দ্বারা প্রক্ষালন কর ।৯১।

অন্বয়ঃ—( হে ) মনঃ ! त्वदीप्सितं प्रियं न लभे मृत्युं ( च ) न लभे । त्वं यत् इच्छसि, मम तत् एव न स्यात् । प्रियेण ( सह ) मे वियोगम् एव इच्छ, तव प्रसादात् असौ अपि न भवतु ॥९२॥

प्रियमिति । हे मनः ! त्वया ईप्सितम् आप्तुं लब्धुमिष्टम्, प्रियं नलम्, न लभेन प्राप्नोमि, तथा प्रियस्या-लाभे त्वदीप्सितं मृत्युञ्च न लभे । कथमेतदित्याह त्वं यदिच्छसि, मम तदेव न स्यात् । इत्येव नियम इति भावः । एवञ्च प्रियेण नलेन सह, वियोगमेव इच्छ, तदा तु तव प्रसादात् तव इच्छाया अनुपपत्तात्, असौ वियोगोऽपि न भवतु न भवेत् । किन्तु संयोग एव भवतु भवेत् त्वदीप्सित-वैपरीत्यभवननियमादिति भावः ।

अत्र प्रस्तुताप्रस्तुतयोः प्रियमृत्य्वोः 'लभे'इत्येकक्रियासम्बन्धाद्दीपकमलङ्कारः, संयोगलाभाय वियोगेच्छाकरणात् विचित्रं नामालङ्कारश्च ; अनयोः परस्परनिरपेक्षतया संसृष्टिः । पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः । "विचित्रं यद्विरुद्धस्य कृतिरिष्टफलाय चेत्" इति दर्पणे विचित्रालङ्कारलक्षणम् ॥९२॥

বাঙ্গালা—মন ! তোমার অভীষ্ট প্রিয়তমকেও পাইতেছি না, মৃত্যুকেও পাই-তেছি না । কারণ, তুমি যাহা ইচ্ছা করিবে, আমার তাহাই হইবে না । অতএব প্রিয়-তমের সহিত আমার বিয়োগই ইচ্ছা কর ; তাহা হইলে তাহাও হইবে না ।৯২।

অতিবামম্ অঙ্গজং ন যাচে ; दक्षिणं पवनन्तु याचे । प्रियः यया

किरतु । वैरविधिः वधावधिः ॥९३॥

द्विषत्सु काम-मलयानिल-चन्द्र-चन्दनादिषु विरहिशत्रुषु मध्ये, अति-

अङ्गजं कामम्, न याचे न किञ्चिदभीष्टं प्रार्थये ; कृतायामपि

। तु किन्तु, दक्षिणं दक्षिणदिश आगतमेव सरलमुदारं वा,

सरलत्वमौदार्यं न वा तद्याच्ञापूरणस्य सर्वथा सम्भवादित्याशयः ।

उपलक्षितः यस्यां दिशि वर्त्तत इत्यर्थः, तया दिशापि उपलक्षितं

मनः, मद्भस्म कामपीडया मरणानन्तरं दाहे सति मदीयं भस्म,

उत्तरदिग्वर्त्तं तथा दक्षिणपवनेन मद्भस्मनस्तत्र नेतुं

सम्यगेव मम चरितार्थं त्वत्सम्भवादित्याशयः । ननु दाक्षिण्यं

मयं च तदीपकारं करिष्यतीत्याह — वैरविधिः शत्रुताकरणम्,

**अमूनि गच्छन्ति युगानि न क्षणः कियत् सहिष्ये नहि मृत्युरस्ति मे।**
**स मां न कान्तः (१) स्फुटमन्तरुज्झिता न तं मनस्तच्च न कायवायवः ॥९४॥**

---

यथावधिनीरक्षपर्यन्तः। तथा च कामसलयानिलादय एव विरहिवधूनात् विरहिणीं मां मारयेयुः, अत्, तावाय कल्पापर्यन्तस्थायित्वनियमात्, तत् परन्तु मलयानिलो दक्षिणत्वादाहमं समीपकारं कान्तं मद्भस्मं नयेति भावः। प्रागुक्तं पूर्वार्द्धं बहुधा व्याचष्टे।

अत्र अतिसुन्दरत्वातिप्रतिकूलत्वयोः दक्षिणदिगागतत्वसरलत्वयोश्च भेदेऽपि वामदक्षिणशब्दयोः श्लेषेण तयोरभेदाध्यवसायादतिशयोक्तिद्वयम्, सामान्ये न विशेषसमर्थनरूपोऽर्थान्तरन्यासः, इत्यनुप्रासश्च त्वे तेषां मिथो निरपेक्षतया संसृष्टिः। पूर्वरागी रसः, प्रसादो गुणः, वैदर्भी च रीतिः।

"सहजी मन्मथे पुत्रं प्रोषितं क्वचिदङ्गजम्" इति प्रायतः ॥९३॥

বাঙ্গালা—আমি দৈন্যসূচক বাক্য দ্বারা, শত্রুগণের মধ্যে অত্যন্তপ্রতিকূল কামকে কোন বিষয়ই প্রার্থনা করি না; কিন্তু দক্ষিণ বায়ুকে প্রার্থনা করি। আমার প্রিয়তম যে দিকে রহিয়াছেন, সেই দিকে এই দক্ষিণবায়ু আমার ভস্ম নিক্ষিপ্ত করুন। কারণ, শত্রুতাচরণ করাটা বধ করাপর্য্যন্তই থাকে ॥৯৩॥

**अन्वयः**—अमूनि युगानि गच्छन्ति, (किन्तु) क्षणः न (गच्छति इव) कियत् सहिष्ये, मे मृत्युः नहि अस्ति। अन्तः (स्थितः) सः कान्तः मां स्फुटं न उज्झिता, मनः तं न उज्झिता, कायवायवश्च तत् न उज्झितारः ॥९४॥

अमूनीति। अमूनि युगानि सत्यत्रेताद्वापरकलिलक्षणा विभक्ताः सुदीर्घा अपि काला अन्येषां सम्बन्धे अनायासेनातिवर्त्तन्ते; किन्तु मम सम्बन्धे क्षणः स्वल्पोऽपि कालो न गच्छतीव; दुःखमयतया अतिबाहुल्येनैव प्रतीतेरिति भावः। अतएव कियत् दुःखं सहिष्ये। न खलु पुनः सोढुमर्हामीत्याशयः। अथ मृत्युनैव दुःखसहननिवृत्तिर्भवेदित्याह मे मम, मृत्युर्न हि नैव अस्ति। कुत इत्याह—अन्तः अन्तःकरणे स्थितः स कान्तो नलः, माम्, स्फुटं ध्रुवम्, न उज्झिता न त्यक्ष्यति, चिरचिन्तावशाच्चिरमेवान्तःकरणावच्छेदे मामवलम्बिष्यत इत्यर्थः। अतएव मनो मम चित्तञ्च कर्त्तृ, तं कान्तम्, न उज्झिता न त्यक्ष्यति; चिरमेव तस्य तेन विषयीकरणादित्यभिप्रायः। कायवायवः प्राणादिपञ्चवायवश्च, तत् मनः, न उज्झितारः न त्यक्ष्यन्ति; एकलिङ्गशरीरान्तर्गतत्वेन मुक्तिपर्य्यन्तमेकैकावस्थानादिति भावः। अत्रायं श्लोकसमुदायाशयः—पञ्च तन्मात्राणि पञ्च ज्ञानेन्द्रियाणि प्राणाद्याः पञ्च वायवः मनो बुद्धिश्च [illegible]

तथा च सांख्यसूत्रम्—"सप्तदशैकं लिङ्गम्"। ततश्च

पर्य्यन्तमेव स्थायित्वम्। तेन च लिङ्गशरीरान्तर्गतेन मम

मेवं तद्विरहदुःखं सोढव्यमिति संक्षेपः।

अत्र प्रतीयमाना क्रियोत्प्रेक्षा, मरणाभावं प्रति

अन्यस्थानां मनःप्रभृतीनाञ्च उज्झितेत्येकक्रियाति

रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥९४॥

বাঙ্গালা—এই যুগগুলি যাইতেছে, কিন্তু

না। আমি আর কত সহিব। আমার মৃত্যু

---

(१) न माम् कान्तः ... ।

মদুগ্রতাপব্যয়মাত্রসীকরঃ সুরাঃ! স বঃ কেন পপে কৃপার্ণবঃ।
উদেতি কোটির্ন মুদে মদুত্তমা কিমাশুসঙ্কল্পলবশ্রমেণ বঃ (১) ॥৯৫॥
মমৈব বাহর্দিবমশ্রুদুর্দিনৈঃ (২) প্রসহ্য বর্ষাসু কৃতৌ প্রসজ্জিতে।
কথং নু মূহ্যন্তু সুষুপ্য দেবতা ভবন্ত্বরণ্যে (৩) রুদিতং ন মে গিরঃ ॥৯৬॥

---

তম আমাকে নিশ্চয়ই পরিত্যাগ করিবেন না; আবার মন তাঁহাকে পরিত্যাগ করিবে না এবং প্রাণপ্রভৃতি পঞ্চ বায়ু ও আবার সে মনকে পরিত্যাগ করিবে না। ৯৪।

অন্বয়ঃ—(হে) সুরাঃ! মদুগ্র-তাপ-ব্যয়-মাত্র-সীকরঃ সঃ বঃ কৃপার্ণবঃ কেন পপে। বঃ সঙ্কল্প-লব-শ্রমেণ মত্ উত্তমা কোটিঃ মুদে কিম্ আশু ন উদেতি? ॥৯৫॥

মদিতি। হে সুরাঃ! ইন্দ্রাদয়ো দেবাঃ! মম উগ্রস্য ভয়ঙ্করস্য তাপস্য বিরহানলসন্তাপস্য ব্যয়ে বিনাশে মাত্রঃ সমর্থঃ সীকরো জলবিন্দুমাত্রং যস্য স তাদৃশঃ, স প্রসিদ্ধঃ, বো যুষ্মাকম্, কৃপার্ণবো দয়াসমুদ্রঃ, কেন জনেন পপে পীতঃ। যেন তত্কৃপার্ণবস্য বিন্দুরপি ময়ি ন সমর্প্যতে। যদি চ সমর্প্যতে তদা নলস্য যোগলাভাত্ বিরহানলনির্বাণেন তত্সন্তাপোঽপি নিবর্ত্তেতেতি ভাবঃ। ননু ত্বমস্মাভির্ন ক্রিয়সে তথাপি ত্বয়ি কথং স কৃপার্ণব-বিন্দুঃ সমর্প্যেত ইত্যাহ— বো যুষ্মাকম্, সঙ্কল্পলবশ্রমেণ "উত্তমা স্ত্রী জায়তাম্" ইতীচ্ছালেশকরণমাত্রপরি-শ্রমেণৈব, মত্ সকাশাত্, উত্তমা কোটির্যুবতীনাং কোটিসংখ্যা, মুদে যুষ্মাকমেব প্রীতয়ে, কিম্ আশু শীঘ্রম্, ন উদেতি নোত্পদ্যতে, অপি তু যুষ্মাকমৈশ্বর্য্যসত্ত্বাদবশ্যমেব উদেতীত্যর্থঃ। তথা চ মম লাভাভাবেন ময়ি দীর্ঘা যুষ্মাভির্ন বিধেয় ইত্যাশয়ঃ।

অত্র কৃপায়ামর্ণবত্বারোপঃ কৃপালেশে জলবিন্দুত্বারোপে নিমিত্তমিতি পরম্পরিতং রূপকমলঙ্কারস্তচ্চানুপ্রাসেন সংসৃজ্যতে। পূর্বরাগো রসঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৯৫॥

বাঙ্গালা—দেবগণ! আপনাদের যে দয়াসমুদ্রের একটিমাত্র বিন্দুও আমার দারুণ বিরহানলসন্তাপের শান্তি করিতে সমর্থ; আপনাদের সেই দয়াসমুদ্রটাকে কে পান করিল? তার পর, আপনাদের একটুমাত্র ইচ্ছা করার পরিশ্রমেই আমা হইতে উৎকৃষ্ট কোটি কোটি যুবতি কি আপনাদের আনন্দের জন্য শীঘ্রই উৎপন্ন হয় না? ॥৯৫।

অন্বয়ঃ—বা অহর্দিবং মম এব অশ্রুদুর্দিনৈঃ প্রসহ্য বর্ষাসু কৃতৌ প্রসজ্জিতে (সতি) দেবতাঃ সুষুপ্য মে ... ॥৯৬॥

মমৈবেতি। বা অথবা, অহর্দিবং প্রতি-দিনম্ ... দুর্দিনৈঃ, বর্ষাসু কৃতৌ বর্ষর্ত্তৌ, প্রসজ্জিতে ...য়মিতি মত্বা সুষুপ্তিং নাম গাঢ়নিদ্রাং প্রাপ্য, অপি তু কথমপি নেত্যর্থঃ; সুষুপ্ততয়া ...ণি, কথম্ অরণ্যে রুদিতম্ অরণ্যে রোদ-... পুনর্ন কিঞ্চিত্ ন ইত্যাশয়ঃ। অত্র ...কৃদস্য চ বিভক্তিব্যত্যয়েন বর্ষাস্বপি বাক্যার্থঃ

...বং প্রতি সুষুপ্তেতি পদার্থস্য হেতুত্বাত্ কাব্য-

। ভবত্বরণ্যে ... ।

इयं न ते नैषध ! दृक्पथातिथिः त्वदेकतानस्य जनस्य यातना ।
हृदे हृदे हा न कियद्गवेषितः स वेधसागोपि खगोऽपि वक्ति यः ॥८७॥
ममापि किं नो दयसे दयाधन ! त्वदर्हि मग्नं यदि वेत्थ मे मनः ।
निमज्जयन् सन्तमसे पराशयं विधिस्तु वाच्यः क तवागसः कथा ॥८८॥

---

लिङ्गम्, रुदितं रुदितस्वरूपा इति निरङ्गं केवलरूपकम्, प्रथमे पादे च्छेकानुप्रासश्चेति संसृष्टिः । वर्षासु ऋताविति सन्धिविश्लेषदोषः । स च "प्रगृह्य वर्णान् कुमारमेरु हन्ते" इति पाठेन समाधेयः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"यमान्धकारौ दृष्टौ च दुर्द्दिनं कवयो विदुः" इति स्मृतः ।

"अहरहरिति अहर्द्दिवम्" इति टीकायां दुर्गसिंहः । तथैव निपात इत्यभिप्रायः । वर्षास्विति "बहुत्ववद-स्यादि:—" इत्यादिना बहुवचनम् । ऋतावित्यनेन तस्यापि बहुवचनान्तस्य सामानाधिकरण्यम् उभयोरप्यनन्यगति-कत्वात् "दैवती दाराः" इत्यादिवत् । "ऋत्यनित्यसमासे—" इत्यादिना विकल्पेन प्रकृतिभावः ॥८६॥

বাঙ্গালা—অথবা, প্রত্যহ আমারই অশ্রুবৃষ্টি বলপূর্বক বর্ষা-ঋতু প্রবর্তিত করিলে, দেবতারা গাঢ়-নিদ্রায় অভিভূত হইয়া, আমার দৈন্যোক্তিগুলি কি করিয়া শুনিতে পাইবেন ? সুতরাং আমার সে উক্তিগুলি অরণ্যে রোদনই বা কেন হইবে না ? ॥৮৬॥

अन्वयः—(हे) नैषध ! त्वदेकतानस्य जनस्य इयं यातना ते दृक्पथातिथिः न (जायते) । हा, यः वक्ति, सः खगः अपि हृदे हृदे कियत् न गवेषितः ; (तथापि न प्राप्तः ; तन्मन्ये) वेधसा सः अगोपि ॥८७॥

उक्तहेतुना दैवानपहाय नलमुद्दिश्येदानीं चतुर्भिर्विलपति इयमिति । हे नैषध ! नल ! त्वदेकतानस्य अनन्यासक्तचित्तस्य, मत्स्वरूपस्य जनस्य, इयं यातना त्वद्विरहस्य तीव्रवेदना, ते तव, दृक्पथातिथिर्लोचनगोचरः, न जायते इति शेषः । हा कष्टम्, यः खगः, वक्ति परस्परान्तिके परस्परस्य वादं वदति, स खगः पक्षी हंसोऽपि, हृदे हृदे, कियत् न गवेषितः अन्विष्टः ; तथापि न प्राप्तः, तन्मन्ये इति शेषः, वेधसा विधात्रा; सः अगोपि मम कष्टदानाय कुत्रापि लुक्कायितः । अतः कश्चिदप्युपायो नास्तीति भावः ।

अगोपीति प्रतीयमाना क्रियोत्प्रेक्षा गोपि गोपीति यमकेन संसृज्यते । केचित्, बहुव्यञ्जनावृत्त्यभावात् यमकं किन्तु छेकानुप्रास एवेति वदन्ति । बहूनां पदानामनुक्तावपि न न्यूनपदता दोषः, प्रत्युत गुण एव ; दुःखमग्नया दमयन्त्या उक्तत्वात् "उक्तावानन्दमग्नादेः स्यान्न्यूनपदता गुणः" इति साहित्यदर्पणात् । पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥८७॥

বাঙ্গালা—হে নিষধরাজ ! যে ব্যক্তি কে[...]
রহিয়াছে, তাহার এই যাতনা আপনার দৃষ্টিগে[...]
আদান-প্রদান করিত, সেই হংসটিকেও প্রত্যেক[...]
তথাপি তাহাকে পাই নাই । অতএব মনে করি [...]

अन्वयः—(हे) दयाधन ! (त्वं) यदि मे[...]
दयसे । (अथवा) पराशयं सन्तमसे निमज्जयन् विधिस्तु[...]
ममेति । हर्षेव धनं धनवदादरणीया यस्य[...]
त्वय्येव गाढ़स्य सक्तम्, वेत्थ जानासि ; तदा ममापि[...]
कुरुषे । अवश्यमेव भक्तजनं प्रति दया कर्त्तव्या,

कथावशेषं तव सा कृते गतेत्युपैष्यति श्रोत्रपथं कथं न ते।
दयालुना मां समनुग्रहीष्यसे तदापि तावद्यदि नाथ! नाधुना ॥९९॥
ममादरीदं विदरीतुमान्तरं तदर्थिकल्पद्रुम! किञ्चिदर्थये।
भिदां हृदि द्वारमवाप्य मैव मे (१) हृतासुभिः प्राणसमः समं गमः ॥१००॥

---

आत्मीयं मनः, स्वमनसि प्रबलान्धकारे मोहे इत्यर्थः, निमज्जयन् प्रवेशयन्, विधिस्तु विधातैव, वाच्यो निन्दनीयः; किन्तु तव आगसः अपराधस्य, कथा प्रस्तावः, क कुत्र, क्वापि नेत्यर्थः। तव मनो मदज्ञानरूपे मोहे निमज्जयन् विधिरेव वाच्यः न पुनस्त्वमिति भावः।

अत एवात्र अप्रस्तुतात् परसामान्यात् प्रस्तुतस्य विशेषस्य नलरूपपरस्य प्रतीतेरप्रस्तुतप्रशंसालङ्कारः, प्रथमपादे च्छेकानुप्रासश्चेति संसृष्टिः। पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः।

ममेति "कर्मणि द्वयोः" इति कर्मणि षष्ठी ॥९८॥

বাঙ্গালা—হে প্রাণধন! আপনি যদি আমার মনকে আপনারই চরণাশ্রিত বলিয়া জানেন; তাহা হইলে আপনি আমার প্রতি ও দয়া করিতেছেন না কেন? অথবা যিনি পরের মনকে অজ্ঞানের ভিতরে নিমগ্ন করিয়া থাকেন, সেই বিধাতাই নিন্দনীয়, কিন্তু আপনার অপরাধের কথা কোথায়॥৯৮॥

অন্বয়:—सा तव कृते कथावशेषं गता इति ते श्रोत्रपथं कथं न उपैष्यति। (हे) नाथ! यदि अधुना न (अनुगृह्णासि, तर्हि) तदा अपि तावत् दयालुना मां समनुग्रहीष्यसि ॥९९॥

कथेति। सा दमयन्ती, तव कृते निमित्ते त्वद्विरहेणेत्यर्थः, कथावशेषम् उपाख्यानमात्रशेषम्, गता, मृतेति तात्पर्य्यम्, इति वार्त्ता, ते तव, श्रोत्रपथं कर्णविषयम्, कथं न उपैष्यति लोकमुखाद् यास्यति; अपि त्ववश्य-मेव उपैष्यतीत्यर्थः। तेन को लाभ इत्याह— हे नाथ! यदि अधुना न समनुगृह्णासीति शेषः, तर्हि तदापि मम मरणात् परमपि तावत्, दयालुना "हा दमयन्ति!" इति विलापहेतुभूतकृपालेशेन, मां समनुग्रहीष्यसे अवश्यमेवानुग्रहीष्यसि। तेनैव कृतार्था भवेयमिति भावः।

अत्रार्थापत्तिरलङ्कारः। पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः।

समनुग्रहीष्यसे इति यमादित्वादात्मनेपदम् ॥९९॥

...মাত্রে পর্য্যবসিত হইয়াছেন (মরিয়া গিয়াছেন)
...ন? হে নাথ! যদি এখনও অনুগ্রহ না
...প্রাক্ত অনুগ্রহ করিবেন॥৯৯॥

...হদি; तत् (हे) अर्थिकल्पद्रुम! किञ्चित् अर्थये।
...मा एव गमः ॥१००॥

...आन्तरं हृदयम्, विदरीतुं विरहवेदनया विदीर्णीभवि-
... इति भावः। तत् तस्मात्, हे अर्थिकल्पद्रुम!
... त्वया ध्रुवमेव दातव्यमिति भावः, अर्थये भवन्तं
विदारणमेव, द्वारं निर्गमनमार्गम्, अवाप्य लब्ध्वा, प्राण-
..., मैव गमः न खलु यासि। प्राणापेक्षयापि त्वयि मे

মম ত্বদচ্ছাঙ্ঘ্রিনখামৃতদ্যুতেঃ কিরীটমাণিক্যময়ূখমঞ্জরী।
উপাসনামস্য করোতু রোহিণী ত্যজ ত্যজাকারণরোষণে! রুষম্ ॥১০৭॥
তনোষি মানং ময়ি চেদনাগপি ত্বয়ি স্বয়ে তদ্বহুমানমানতঃ।
বিনম্য বক্ত্রং যদি বর্ত্তসে কিয়ৎ নমামি তে চণ্ডি! তদা পদাবধি ॥১০৮॥

অত্র পরিমার্জনং প্রতি অমঙ্গল্যপদস্যার্থৌ হেতুরিতি পদার্থহেতুকং কাব্যলিঙ্গম্, অস্রু প্রস্তুতম্ অপরাধশ্চা-প্রস্তুতঃ অনয়োঃ পরিমার্জয়ামীত্যেকক্রিয়াভিসম্বন্ধাদ্দীপকম্, অঙ্ঘ্রিপঙ্কজে ইতি লুপ্তোপমা, রজোভিঃ শুমলিনি চ মৃদ্বীকারিত্যে তেষামঙ্গাঙ্গিভাবেন সঙ্করঃ। পূর্বরাগো রসঃ, প্রসাদো গুণঃ বৈদর্ভী চ রীতিঃ ॥১০৬॥

বাঙ্গালা—প্রিয়তমে! তোমার এই নয়নযুগলের উপরে উপস্থিত অমঙ্গলসূচক সমস্ত অশ্রুজলগুলিকে আমি হাত দিয়া মুছিয়া দিতেছি; তাহার পর তোমার চরণকমল দুইখানির ধূলির সহিত আমার অপরাধ নিজমস্তক দ্বারা মুছিয়া ফেলিতেছি ॥১০৬॥

অন্বয়ঃ—রোহিণী মম কিরীট-মাণিক্য-ময়ূখ-মঞ্জরী অস্য ত্বদচ্ছাঙ্ঘ্রি-নখামৃতদ্যুতেঃ উপাসনাং করোতু; (হে) অকারণরোষণে! রুষং ত্যজ ত্যজ ॥১০৭॥

মমেতি। রোহিণী রক্তবর্ণা, মম কিরীটস্য মুকুটস্য যন্মাণিক্যং পদ্মরাগমণিস্তস্য ময়ূখমঞ্জরী মঞ্জরীবৎ ...তঃ কিরণাবলী; অন্যত্র তু তন্ময়ূখমঞ্জরীরূপা রোহিণী তদাখ্যো নক্ষত্রবিশেষঃ; অস্য দৃশ্যমানস্য, তব অচ্ছো নির্মলো যঃ অঙ্ঘ্রিঃ চরণস্তস্য নখঃ স এবামৃতদ্যুতিঃ সুধাবর্ষিত্বাচ্চন্দ্রস্তস্য, উপাসনা প্রণামাত্মকসেবা ময়ূখাগ্র, করোতু। তেন চ, অকারণং রুষ্যতীতি অকারণরোষণা তৎসম্বোধনম্। রুষং প্রণয়কোপম্, ত্যজ ত্যজ। তব চরণে প্রণতো ভবামি, তেন চ ত্বং প্রণয়কোপং পরিহরেতি নিষ্কর্ষঃ।

অত্র রোষত্যাগং প্রতি পূর্ববাক্যার্থো হেতুরিতি বাক্যার্থহেতুকং কাব্যলিঙ্গম্, ময়ূখমঞ্জর্য্যাং রোহিণীনক্ষত্রত্বা-রোপঃ নখে অমৃতদ্যুতিত্বারোপং প্রতি নিমিত্তং রোহিণীপদঞ্চ শ্লিষ্টমিতি শ্লিষ্টপরম্পরিতং রূপকম্, ত্যজপাদে চ্ছেকানুপ্রাসশ্চেতি সংসৃষ্টিঃ। পূর্বরাগো রসঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ।

রোহিণীতি রোহিতশব্দস্য নদাদিত্বাদীপ্রত্যয়ে তকারস্য নকারঃ। রোষণেতি "রুষ হিংসায়াং" ইত্যাদিনা যুঃ ॥১০৭॥

বাঙ্গালা—আমার কিরীটস্থ পদ্মরাগমণির রক্তবর্ণ কিরণাবলীরূপ রোহিণীনক্ষত্র, ...চন্দ্রটির সেবা করুক; হে অকারণকোপনে! কোপ

অপি মানং তনোষি, তৎ [অহম্] আনতঃ [সন্]
...ত্তে, [হে] চণ্ডি! তদা তে পদাবধি নমামি ॥১০৮॥
...অনপি, মানং প্রণয়কোপম্, তনোষি করোষি; তত্তদা
...াদরেণৈব প্রণতে রমণম্, স্বয়ি ত্বদীয়ত্বমমালীপদম-
তথা ত্বং যদি, বক্ত্রং মুখম্, কিয়ৎ কিঞ্চিৎ, বিনম্য
...কোপনে! তদা তে তব, পদাবধি চরণপর্য্যন্তম্,
কিঞ্চিন্নমনাত্তীতানি বহুমানত্বাদিত্যাশয়ঃ।
...তয়োরবিদাধ্যবসায়াদতিশয়োক্তিরলঙ্কারশ্ছেকানুপ্রাসৌ
বৈদর্ভী চ রীতিঃ ॥১০৮॥
...তি অত্র মানও কর; তাহা হইলে আমি

प्रभुत्वभूम्नानुगृहाण वा न वा प्रणाममात्राधिगमेऽपि कः श्रमः ।
क्व याचतां कल्पलतासि मां प्रति क्व दृष्टिदाने तव बद्धमुष्टिता ॥१०९॥
अरेषुमायं सहसे मृदुः कथं हृदि द्रढीयःकुचसंहते तव ।
निपत्य वैसारिणकेतनस्य वा व्रजन्ति बाणा विमुखोत्पतिष्णुताम् ॥११०॥

অত্যন্ত অবনত হইয়া তোমার প্রতি বহুমান করিব। আবার তুমি যদি মুখখানিকে কিছু অবনত করিয়া থাক; তাহা হইলে হে কোপনস্বভাবে! আমি তোমার চরণপর্য্যন্ত অবনত হইব ।১০৮॥

अन्वयः—प्रभुत्वभूम्ना (माम्) अनुगृहाण वा, न अनुगृहाण वा; (किन्तु) प्रणाममात्राधिगमे अपि कः श्रमः। क्व याचतां कल्पलता असि क्व मां प्रति दृष्टिदाने तव बद्धमुष्टिता (वर्त्तते) ॥१०९॥

प्रभुत्वेति। प्रभुत्वस्य मयि तवाधिपत्यस्य भूम्ना बाहुल्येन हेतुना, त्वं मामनुगृहाण वा, न अनुगृहाण वा; प्रभुत्वातिरेकात् मयि यथेच्छमेव व्यवहर्त्तुमर्हसीति भावः। किन्तु मम प्रणाममात्रस्य अधिगमे अङ्गीकारेऽपि तव कः श्रमः, अपि तु कोऽपि नेत्यर्थः। तेनान्यान्यप्रभुवदेव तन्मात्रमङ्गीकुर्वित्याशयः। तथा क्व कुत्र याचतां प्रार्थयतां जनानां सम्बन्धे, कल्पलता सर्वाभीष्टदातृत्वात् कल्पलतास्वरूपा असि; क्व कुत्र वा, मां प्रति दृष्टिदानेऽपि, बद्धमुष्टिता धननिर्गमनिवर्त्तनाय दृढसंयतमुष्टिता अतीवकृपणतेत्यर्थः, वर्त्तते। कल्पलतास्वरूपायास्तव दृष्टिदानमात्रे ईदृशी कृपणता अतीवविरुद्धेति भावः।

अत्र कल्पलतासीति निरङ्गं केवलरूपकम्, दाने मुक्तहस्तताकृपणतयोर्विरूपयोः संघटनया विषमालङ्कारः, इत्यनयोरनुप्राणनेति संसृष्टिः। पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥१०९॥

বাঙ্গালা—অতিরিক্ত প্রভুত্ব থাকায় তুমি আমার প্রতি অনুগ্রহ কর, বা না-ই কর; কিন্তু কেবল প্রণাম স্বীকার করায় কি পরিশ্রম হইতে পারে? প্রার্থিগণের পক্ষে কল্পলতা-স্বরূপ তুমিই বা কোথায়; আর আমার প্রতি কেবল দৃষ্টি দান করার বিষয়ে তোমার বদ্ধমুষ্টিতাই বা (অত্যন্ত কৃপণতাই বা) কোথায় ।১০৯॥

अन्वयः—[हे प्रिये! त्वं] मृदुः (सती) कथं अरेषुमायं सहसे, वा वैसारिणकेतनस्य बाणाः द्रढीयः-कुच-संहते तव हृदि निपत्य विमुखोत्पतिष्णुतां व्रजन्ति ॥११०॥

अरेष्विति। हे प्रिये! त्वं मृदुः कोमलाङ्गी कथं प्रकारेणिषुमन्मथम् वेदनामित्यर्थः, सहसे सोढुं नैर्व तदिति भावः। वा अथवा, वैसारिणकेतनस्य कुचाभ्यां सताभ्यां संहते आहते, तव हृदि वक्षसि, निपतनशीलत्वेति ताम्, व्रजन्ति प्राप्नुवन्ति। अतएव कथं वेति भावः।

अत्र मृदुत्वगुणस्य हृदप्रहारसहनक्रियाविरोधात् विमुखोत्पतिष्णुताव्रजनासम्बन्धेऽपि तत्सम्बन्धादतिशयोक्ति गुणः, वैदर्भी च रीतिः।

"पृथु रोमा झषो मत्स्यो मीनो वैसारिणोऽण्डजः"

उत्पतिष्णुरिति "अलंकृञ्" इति।

सुधारसोर्मीस्तनवेलिमक्षरस्रजा त्वजास्त्रमत्र मे कर्णकूपयोः ।
दृशौ मदीये मदिराक्षि ! कारय स्मितश्रिया पायसपारणामपि (१) ॥११३॥
ममासनार्द्धं भव मञ्जनं न न प्रिये ! मदुत्सङ्गविभूषणं भव ।
भ्रमाद्भ्रमादालपमङ्ग ! कथ्यतां (२) विना ममोरः कतमत्तवासनम् ॥११४॥

আনন্দ বিতরণ কর ; নয়নরূপ খঞ্জন দুইটী এই দিকে খেলা করুক এবং তোমার মুখখানি প্রস্ফুটিত পদ্মস্বরূপ হউক ॥১১২॥

अन्वयः—(हे प्रिये ! त्वम्) अक्षरस्रजा मम कर्णकूपयोः अन्तः सुधारसोर्मीः तनवेलिं कुरु । (हे) मदिराक्षि ! स्मितश्रिया मदीये दृशौ पायसपारणाम् अपि कारय ॥११३॥

सुधेति । हे प्रिये ! त्वम् अक्षरस्रजा वर्णमालया स्वकीयमधुरवचनेनेत्यर्थः, मम कर्णाविव कूपौ तयोरन्तः अभ्यन्तरे, सुधारसस्य अमृतद्रवस्य ऊर्मीणां तीरातिक्रमयोग्योच्छलनं तरङ्गचलनं वा तदेव केलिः क्रीडा ताम्, कुरु विधेहि ; मधुरवचनोच्चारणेन मम कर्णयुगलं प्रीणयेति निष्कर्षः । तथा मदिरे मत्तखञ्जनाविव अक्षिणी यस्यास्तत्सम्बोधनम् । स्मितश्रिया स्वकीयमन्दहास्यशोभया, मदीये दृशौ नयनद्वयम्, पायसेन परमान्नेन पारणाम् उपवासानन्तरभोजनमपि कारय ; उपवासात् परं पायसेन पारणाकरणे यथा महीयसी तृप्तिर्जायते, तथा चिरकालमेव आशाकरणात् परं तव मन्दहास्यशोभादर्शने महीयसी तृप्तिर्जायतेति भावः । मन्दहासस्य शुक्लत्वात् सूत्रार्थः ।

अत्र तथाविधकेलिसर्जनस्य पायसपारणाकारणायाश्चासम्बन्धेऽपि तत्तत्सम्बन्धाभिधानादतिशयोक्तिद्वयम्, तच्च तुल्यस्त्वेकानुप्राणमिति संसृष्टिः । अतिशयोक्तिद्वयेन च यथाक्रमम् अक्षरस्रजः सुधारसतुल्यमाधुर्यम्, स्मितश्रियश्च पायसतुल्यतृप्तिकारित्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः । पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥११३॥

বাঙ্গালা—প্রিয়ে ! তুমি নিজের মধুর বচন দ্বারা আমার কর্ণকূপ দুইটীর ভিতরে অমৃতরসের ঢেউখেলার সৃষ্টি কর; আর মত্তখঞ্জননয়নে ! নিজের মৃদু হাস্যের শোভা দ্বারা আমার নয়ন দুইটীকে পায়স দ্বারা পারণা করাও ॥১১৩॥

अन्वयः—प्रिये ! मम आसनार्द्धं मञ्जनं भव ; न न ; मदुत्सङ्गविभूषणं भव । भ्रमात् भ्रमात् आलपम्, अङ्ग ! कथ्यताम् । मम उरः विना तव कतम[त्]

ममेति । हे प्रिये ! मम आसनस्य अर्द्धे अंशे,
नार्हैव श्रीभाजनकत्वादिति भावः । न न नैतन्मया युक्तमुक्त
मित्याह— मम उत्सङ्गस्य क्रोडस्य विभूषणम् उपविश्य
प्रायः । भ्रमात् भ्रमादतीवभ्रान्तिवशात्, आलपम् ।
अतएव अङ्ग ! हे सहाप्रभो ! कथ्यतां मम तदुक्तिमि
तव कतमत् वस्तूनां मध्ये किम्, आसनं भवितुमर्हतीति ।
स्वमुत्कृष्टतमा, तथाङ्गानां मध्येऽपि वक्ष एवोत्कृष्टतमम् ।
अत्र निरङ्गं केवलरूपकद्वयं इत्यनुप्राणमिति संसृष्टिः
उन्मादो नाम व्यभिचारभावश्च स्पष्टं गम्यते ॥११४॥

বাঙ্গালা—প্রিয়ে ! আমার আসনের

[१] … पारणाविधिम् । [२] अङ्ग भ्रमात् … ।

गिरानुकम्पस्व दयस्व चुम्बनैः प्रसीद शुश्रूषयितुं मया कुचौ।
निशेव चान्द्रस्य करोत्करस्य यत् मम त्वमेकासि नलस्य जीवितम् (१) ॥११९॥
मुनिर्यथात्मानमथ प्रबोधवान् प्रकाशयन्तं स्वमसावबुध्यत।
अपि प्रपन्नां प्रकृतिं विलोक्य ताम् अवाप्तसंस्कारतयाऽसृजद्गिरः ॥१२०॥

---

"कुसुमवसन्ताद्यभिधः कर्मवपुर्वेश-भाषाद्यैः। हास्यकरः कलहरतिर्विदूषकः स्यात् स्वकर्मज्ञः"। सूत्रधारोक्तं भरतः—"नाट्योपकरणादीनि सूत्रमित्यभिधीयते। सूत्रं धारयतीत्यर्थे सूत्रधारो मतो बुधैः।"

"अक्षतारोऽक्षिविक्षेपः" इत्यमरः। "तारकोऽक्षितारे स्त्री तु तारमध्यमयोरपि" इति विश्वः ॥११८॥

বাঙ্গালা - প্রিয়ে! তুমি কামশাস্ত্রে নটিকাস্বরূপ হইবে না কেন? যে হেতু তোমাতে সুস্পষ্ট রোমশ্রেণিস্বরূপ সূত্রধার রহিয়াছে; নায়ক তোমার ভ্রূবিক্ষেপ দর্শন করিবার জন্য লালসা পোষণ করিতেছেন এবং মস্তকে মণিধারী কোন ব্রাহ্মণশ্রেষ্ঠ বিদূষক রহিয়াছেন ॥১১৮॥

अन्वयः—(हे प्रिये! ) गिरा (माम्) अनुकम्पस्व, चुम्बनैः (मां) दयस्व, मया कुचौ शुश्रूषयितुं प्रसीद। यत् त्वम् एका चान्द्रस्य करोत्करस्य निशा इव नलस्य मम जीवितम् असि ॥११९॥

गिरेति। हे प्रिये! गिरा वाचा, मामनुकम्पस्व, मया सहालापं कृत्वा मां प्रति दयां कुर्वित्यर्थः, चुम्बनैः मुखचुम्बनदानैः, मां दयस्व, तथा मया प्रयोज्यकर्त्रा, कुचौ स्वकीयस्तनौ, शुश्रूषयितुं संवाहनादिना सेवयितुम्, प्रसीद। यद् यस्मात्, त्वमेकैव, चन्द्रस्यायमिति चान्द्रस्तस्य, करोत्करस्य किरणसमूहस्य, निशा रात्रिरिव, नलस्य मम जीवितं आधिपतीत्वेन जीवनमसि। अतो गिरानुकम्पादौ न दोष इति भावः।

अत्र श्रौतोपमालङ्कारश्छेकानुप्रासेन संसृष्टः। तथा निशा असि त्वम् असीति पुरुषभेदाद्भग्नप्रक्रमता दोषः, "लतेव राजसे तन्वि!" इति दर्पणोदाहरणवत्। "निशा यथास्तीन्दुकरोत्करस्य यत्" इति पाठेनास्य परिहार्यः। पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥११९॥

বাঙ্গালা—প্রিয়ে! বাক্য দ্বারা আমার প্রতি কৃপা কর; চুম্বন দ্বারা আমার প্রতি দয়া কর এবং আমাকে দিয়া স্তন দুইটীর শুশ্রূষা করাইবার জন্য প্রসন্ন হও। যে হেতু, একমাত্র রাত্রি যেমন চন্দ্রকিরণসমূহের জীবন; তেমন একমাত্র তুমিই নলের জীবন ॥১১৯॥

॥] असौ प्रबोधवान् [सन्] आत्मानं प्रकाशयन्तं स्वम् अबुध्यत;

गिरः असृजत् ॥१२०॥

मुनिर्मननशीलः साधुर्यथा, तथा असौ नलः, प्रबोधवान् जाग्रत्

[सन्। अनवधानतया स्वप्नादिना मिथ्याज्ञाननिवृत्तेः परं तत्त्व-

]न अङ्गीकुर्वन्तम्, स्वं आत्मानम्, अबुध्यत प्रागुक्तस्वप्नजन्य-

स्वं रूपम्, प्रकाशयन्तं स्वयमेव अङ्गीकुर्वन्तम्, वैदर्भीकामिनी

म्, कुर्वती शीलाभ्यासेन जानाति। अनन्तरञ्च, अवाप्तसंस्कार-

[ण मम एवायमिति लब्धसंस्कारतया हेतुना, तां दमयन्तीमपि,

---

अत्र टीकाया।

मूलं तामन्वं तु भिन्नपाठश्च: ॥

सुरेषु पश्यन्निजसापराधताम् इयत् प्रयस्यापि तदर्थसिद्धये ।
न कूटसाक्षीभवनोचितो भवान् सतां हि चेतःशुचिताऽऽत्मसाक्षिका ॥१२८॥
इतीरिणाऽऽपृच्छ्य नलं विदर्भजामपि प्रयातेन खगेन सान्त्वितः ।
मृदुर्बभाषे भगिनीं दमस्य स प्रणम्य चित्तेन हरित्पतीन् पः ॥१२९॥
इदेऽपि तुभ्यं कियतीः कदर्थनाः सुरेषु रागप्रसवावकेशिनीः ।
अदभ्रदूत्येन भजन्तु वा दयां दिशन्तु वा दण्डममी ममागसा ॥१३०॥

সেই হংস" এইরূপ বলিয়া উঠিলেন ; তখন সেই হংস নলকে বলিল—"হে নির্দয় ! ইহাকে অত্যন্ত নিরাশ করিবেন না ; কারণ, ইহার পর ইনি নিশ্চয়ই প্রাণত্যাগ করিবেন ॥১২৭॥

অন্বয়:—तदर्थसिद्धये इयत् प्रयस्य अपि सुरेषु निजसापराधतां पश्यन् भवान् कूटसाक्षीभवनोचितः न (भवति) । हि सतां चेतःशुचिता आत्मसाक्षिका ॥१२८॥

सुरेष्विति । तेषां सुराणाम् अर्थसिद्धये दमयन्त्यनुरागोत्पादनरूपप्रयोजनसाधनाय, इयत् एतावद्विपुलम्, प्रयस्यापि परिश्रम्यापि, सुरेषु इन्द्रादिदेवेषु विषयेषु, निजा स्वकीया या सापराधता आत्मप्रकाशेनापराधशालिता ताम्, पश्यन् सम्भावयन्नपि भवान्, अकूटसाक्षित्वः कूटसाक्षिणो भवनं कूटसाक्षीभवनं छलपूर्वकसाक्ष्यदातुरिव भवनमित्यर्थः तत्र उचितो योग्यो न भवति । हि यस्मात्, सतां साधूनाम्, चेतःशुचिता मनसो निर्दोषत्वम्, आत्मा स्वयमेव साक्षी यस्याः सा तादृशी भवति । कामोन्मादवशादेव भवता आत्मप्रकाशनं कृतं न पुनः सुस्थावस्थयेति स्वचेतःशुचितायाः साक्षी तावत् स्वयमेव भवान् ; अतः कूटसाक्ष्यदातुरिव न भवितव्यलदोष इति भावः ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारश्छेकानुप्रासेन संसृष्टः । प्रसादो गुणः, वैदर्भी च रीतिः ॥१२८॥

বাঙ্গালা—দেবগণের উদ্দেশ্যসিদ্ধির জন্য আপনি এত পরিশ্রম করিয়াও, তাঁহাদের নিকট নিজের অপরাধ হইয়াছে ইহা মনে করিয়া, কূটসাক্ষীর তুল্য হওয়ার যোগ্য হন নাই । কারণ, সজ্জনের চিত্তশুদ্ধির সাক্ষী তাঁহাদের আত্মাই ॥১২৮॥

অন্বয়:—इति ईरिणा नलं विदर्भजाम् अपि आपृच्छ्य प्रयातेन खगेन सान्त्वितः हरित्पतीन् प्रणम्य मृदुः (सन्) दमस्य भगिनीं बभाषे

इतीति । इति इत्थम्, ईरिणा वादिना, नलं वि... इति गमनानुमतिं सम्पृच्छ्य, प्रयातेन प्रयातुं प्रवृत्तेन, ...तापं मार्षीः" इति प्रबोधितः, स नृपो नलः, चित्तेन ... किञ्चिन्न करिष्यति" इति बुद्ध्यैव नमस्कृत्य मृदुः ... भगिनीं दमयन्तीम्, बभाषे वक्ष्यमाणमुवाच ।

अत्र प्रसादो गुणः, वैदर्भी च रीतिः ।

ईरिणेति वदतीत्यर्थेऽचि... । प्रयातेनेति आदिकर्मणि ...

বাঙ্গালা—হংস এইরূপ বলিয়া, নলও ... প্রস্থান করিতে প্রবৃত্ত হইয়া, নলকে সান্ত্বনা দি... প্রণাম করিয়া, কোমল হইয়া দময়ন্তীকে বলি...

मयैव सम्बोध्य नलं व्यलापि यत् समाह मद्दूतमिदं विमृश्य तत् ।
असाविति भ्रान्तिमसाहमस्वसुः [१] स्वभावितस्त्रोत्रमविभ्रमक्रमः ॥१३९॥
विदर्भराजप्रभवा ततः परं त्रपासमुद्रौ वस्तु मलं न सा नलम् ।
पुरस्तमूचेऽभिमुखं यदत्रपा ममज्ज तेनैव महाह्रदे ह्रियः ॥१४०॥

---

एवमाशीर्वचनानन्तरं दमयन्त्या नलनिश्चयाद्दानन्दाश्रुपातौ रोमाञ्चश्च जाताविताह प्रसूनमिति । पूर्वं दमयन्त्या अङ्गं प्रसूनं मार्दवातिशयात् पुष्पभूतम् इत्येव इत्थमेव, तस्या अङ्गानां वर्णना सामान्यपुष्पात्मनाभूत् । किन्तु तत् प्रसूनम्, कतमत् किं जातीयम्, इति विशेषात्, सा तदङ्गवर्णना, केनापि कृता नाभूत् । परन्तु तदा नलत्व-निश्चयसमये, मुदश्रुणा आनन्दाश्रुपातेन, प्रावृषि तस्यां वर्षाकाले जाते सति, इदं स उद्गमम्, आगतैः प्राप्तैः, रोमभिः कण्टकैः, तत्प्रसूनं कदम्बं कदम्बनामकम्, अवर्णि वर्णितमिव ; कदम्बप्रसूनस्यापि वर्षाकाले उद्गतरोमत्वादिति भावः ।

अत्र अङ्गप्रसूनयोर्भेदेऽप्यभेदाध्यवसायादेका श्रुतिशयोक्तिः, मुदश्रुणा प्रावृट्त्वासम्बन्धेऽपि तत्सम्बन्धात्परातिशयोक्तिः, अङ्गकदम्बयोर्भेदेऽप्यभेदाध्यवसायादन्या अतिशयोक्तिः, अवर्णीवेति प्रतीयमाना क्रियोत्प्रेक्षा चेत्येतेषा-मङ्गाङ्गिभावेन सङ्करः । प्रसादो गुणः, वैदर्भी च रीतिः ॥१३८॥

বাঙ্গালা—'দময়ন্তীর অঙ্গ সকল পুষ্পময়' এই রূপ সামান্যপুষ্পভাবেই পূর্বে দময়ন্তীর অঙ্গের বর্ণনা হইয়াছিল ; কিন্তু সে পুষ্প কোন্ জাতীয় এরূপ বিশেষভাবে সে বর্ণনা হইয়াছিল না। পরে সেই সময়ে তাঁহার আনন্দাশ্রুবর্ষণে বর্ষাকাল উপস্থিত হইলে, রোমগুলি উদ্গত হইয়া, সে পুষ্পকে যেন কদম্বপুষ্প বলিয়া বর্ণনা করিল ॥১৩৮॥

अन्वयः—मया एव नलं सम्बोध्य यत् व्यलापि, तत् इदं विमृश्य असौ मद्दूतं स्वम् आह— इति दमस्वसुः भ्रान्तिं स्वभावित-स्त्रीत्रप-विभ्रम-क्रमः अस्रात् ॥१३९॥

मयैवेति । मयैव नलं सम्बोध्य "इयं न ते नैषध ! हक्पथातिथिः" इत्यादिना पद्यचतुष्टयेन यत् व्यलापि विलापः कृतः ; तदिदं विलपनम्, विमृश्य विविच्य असौ नलः, मया दूतमवगतम्, स्वम् आत्मानम्, आह "अयि प्रिये ! कस्य कृते विलप्यते" इत्यादिपद्यैः प्रकाशितवान् ; इति इत्थम्, दमस्वसुर्दमयन्त्या भ्रान्तिम् स्वैन नलेनैव भावित "अये मयात्मा किमनिह्नुतीकृतः" इत्यादिना उक्तः स्वस्य आत्मनो य उक्तमविभ्रमथीद-

। तथा च मया अवगतमात्मानं जानन्नेव नल

परन्तु "अये मयात्मा किमनिह्नुतीकृतः" इत्यादिक

ः सङ्करः । प्रसादो गुणः, वैदर्भी च रीतिः ।

ही विभक्ती "प्रायाञ्चाशाधर्टा वा मत्वार्थम्" इति मिक-

য়িয়া যে বিলাপ করিয়াছিলাম ; সেই বিলাপ

পারিয়াছি' ইহা ভাবিয়া আত্মপ্রকাশ করিয়া-

নলকর্তৃক উক্ত তাঁহার উন্মাদ ও আত্মবি-

॥১৩৯॥

यदापवार्थापि न दातुमुत्तरं शशाक सख्याः श्रवसि प्रियाय सा ।
विहस्य सख्यैव तमब्रवीत्तदा ह्रियाधुना मौनधना तव प्रिया [१] ॥१४१॥
पदातिथेयाङ्किखितस्य ते स्वयं वितन्वती लोचननिर्भरानियम् ।
अगाद यां सैव मुखान्मम त्वया प्रसूनवाणोपनिषन्निशम्यताम् ॥१४२॥

---

अन्वयः —ततः परं सा विदर्भराजप्रभवा त्रपावती ( सती ) नलं ( किञ्चिदपि ) वक्तुं न अलं (बभूव) । पुरः अत्रपा [सती] अभिमुखं तं यत् अचे, तेन एव ह्रियः महाह्रदे ममज्ज ॥१४०॥

विदर्भेति । ततः परं नलत्वनिश्चयानन्तरम्, सा विदर्भराजप्रभवा दमयन्ती, त्रपा सख्येव सखी सखीवत् सर्वदा सहचारिणी यस्याः सा तादृशी सती, नलं किञ्चिदपि वक्तुं न अलं न समर्था बभूव । विशेषतस्तु पुरो नलत्वनिश्चयात् पूर्वम्, अत्रपा निर्लज्जा सती, अभिमुखं नलस्यैव सम्मुखम्, तं नलम्, यत् अचे नानाविध-मुक्तवती, तेनैव हेतुना, ह्रियो लज्जायाः, महाह्रदे विशालगर्त्ते, ममज्ज मग्ना बभूव । अप-रिचितं पतिं प्राक् स्वैरमालप्य पश्चात् परिचये प्राप्ते सातिशयं लज्जिता भवतीति स्त्रीणां स्वभाव इति भावः ।

अत्र अत्रपापि त्रपाया महाह्रदे ममज्जेति विरोधात् कालभेदेन च तत् समाधानाद्विरोधाभासोऽलङ्कारश्छेकानु-प्रासेन संसृष्टः । तथा त्रपापदेन प्रक्रम्य ह्रीपदोपादानात् भग्नप्रक्रमतादोषः । स च 'ममज्ज तेनैव त्रपामहा-ह्रदे' इति पाठेन परिहार्यः । न च तथात्वे कथितपदतादोष इति वाच्यम्, तस्येह स्त्रपुंलिङ्गनिर्देशभिन्नविषय-त्वात् अत्र तु तद्रूपत्वात् । प्रसादो गुणः, वैदर्भी च रीतिः ॥१४०॥

বাঙ্গালা—তাহার পর বিদর্ভরাজনন্দিনী লজ্জিত হইয়া, নলকে কিছুই বলিতে সমর্থ হইলেন না। বিশেষতঃ পূর্বে নির্লজ্জ হইয়া সম্মুখেই নলকে যে বহুবিধ বলিয়াছিলেন, তাহা তেই এখন লজ্জার মহাসমুদ্রে মগ্ন হইলেন ॥১৪০॥

अन्वयः—यदा सा सख्याः श्रवसि अपवार्य अपि प्रियाय उत्तरं दातुं न शशाक ; तदा सखी एव विहस्य तम् अब्रवीत् तव प्रिया अधुना ह्रिया मौनधना (जाता) ॥१४१॥

यदेति । यदा सा दमयन्ती, सख्याः श्रवसि कर्णे, अपवार्यापि पराङ्मुख लगित्वापीत्यर्थः, प्रियाय नलाय, उत्तरं दातुं न शशाक ; तदा सा सख्येव विहस्य, तं नलमब्रवीत् । किमब्रवीदित्याह तव प्रिया इयं दम-यन्ती, अधुना, न तु पूर्वम्, विश्रब्धं नादौ बहुवालपितत्वात् इतः प्रागपि च धिक्कालपितस्य त्वयैव श्रुतत्वादि-त्याशयः । अतएव परिहाससूचनाय विहसितमिति

पदादर्थोय यस्याः सा तादृशी जातेति शेषः ।

अत्रान्तिमपादे छेकानुप्रासोऽलङ्कारः । प्रसादो

বাঙ্গালা—যখন দময়ন্তী মুখ ফিরাইয়া

উত্তর দিতে পারিলেন না ; তখন সেই

প্রিয়তমা এখন লজ্জাবশতঃ মৌনাবলম্বিনী

अन्वयः—इयं लोचननिर्भरान् स्वयं

त्वया मम मुखात् सा एव प्रसूनबाणोपनिषत् निशम्यताम्

पदेति । हे नल ! इयं दमयन्ती, लोचननिर्भरं

घटे भित्तौ वा लिखितस्य, ते तव, पदयोश्चरणयोः

---

(१)⋯श्रवसि प्रियस्य सा ।⋯मौनधना भवत्प्रिया ।

निजांशुनिर्दग्धमदङ्गभस्मभिर्मुधा विधुर्वाञ्छति लाञ्छनोन्मृजाम्।
त्वदास्यतां यास्यति तावतापि किं वधूवधेनैव पुनः कलङ्कितः॥१४५॥

तौ विधुस्मरौ, मम वधे, कुतः कथम्, कृतप्रतिज्ञौ जातौ ; नैव तापदानारम्भाद्दित्यभिप्रायः। स्वयमेव समाधत्ते—अहं तव सम्बन्धिनी, इति मनसि कृत्वा यदि तौ मम वधे कृतप्रतिज्ञौ जाताविति कल्प्यते ; तत्तदा, मया जितम् उत्कर्षेणैव स्थितम्। कथमित्याह यतः अमरा देवाः, मोघं व्यर्थं सङ्कल्पं मनोभावं धारयन्तीति ते तादृशाः, न भवन्ति। जितेति सौत्रवार्त्तायाम्। तथा च देवा यद्यत् सङ्कल्पयन्ति तत्तदेव भवति। तेन देवावेव विधुस्मरौ मां तव पत्नीं सङ्कल्प्य मम वधे यदि कृतप्रतिज्ञौ जातौ, तदाऽवश्यमेव तव पत्नी भविष्यामीति मया जितमेवेति भावः।

अत्र "प्रतूलवाणापनिवमिशब्दताम्" इत्यनेनात् प्रस्तुतयोरेव विधुस्मरयोर्जितं त्वं कल्पितया तव वर्णनतामि-सम्बन्धात् तुल्ययोगिता, विपीनं लब्धं प्रतिकारकारणाशक्ताभ्यां विधुस्मराभ्यां कृताया नलसम्बन्धिन्यां भैम्यां प्रति वध-प्रतिज्ञाया नलस्यैवोत्कर्षसाधकत्वात् प्रत्यनीकम्, जितं मयेत्यस्यार्थं प्रति चतुर्थपादवाक्यार्थस्य हेतुत्वात् काव्य-लिङ्गम्, छेकानुप्रासो वृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः। पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः।

"प्रत्यनीकमशक्तेन प्रतीकारे रिपोर्यदि। तदीयस्य तिरस्कारस्तस्यैवोत्कर्षसाधकः।" इति दर्पणे—प्रत्यनीकलक्षणम् ॥१४४॥

বাঙ্গালা—প্রিয়তম! আপনি মুখ দ্বারা চন্দ্রকে এবং কান্তি দ্বারা কামদেবকে জয় করিয়াছেন ; কিন্তু তাঁহারা আমার বধে প্রতিজ্ঞা করিলেন কেন? তবে, 'আমি আপনার' ইহা মনে করিয়া যদি তাঁহারা আমার বধে প্রতিজ্ঞা করিয়া থাকেন ; তাহা হইলে আমারই জয় হইয়াছে। কেন না, দেবতারা ব্যর্থ সঙ্কল্প ধারণ করেন না ॥১৪৪॥

অন্বয়:—বিধুঃ নিজাংশু-নির্দগ্ধ-মদঙ্গ-ভস্মভিঃ মুধা লাঞ্ছনোন্মৃজাং বাঞ্ছতি। (যতঃ সঃ) তাবতা অপি কিং ত্বদাস্যতাং যাস্যতি? (যেন হি সঃ) বধূ-বধেন এব পুনঃ কলঙ্কিতঃ (ভবেৎ) ॥১৪৫॥

निजांश्विति। विधुश्चन्द्रः, निजांशुभिः स्वकीयकिरणैः निर्दग्धानि यानि मदङ्गानि तेषां भस्मभिः करणैः, मुधा व्यर्थम्, लाञ्छनस्य स्वकीयकलङ्कस्य उन्मृजां मार्जनम्, वाञ्छति इच्छति। चन्द्रः खलु कलङ्कितया तव मुखसादृश्यं न प्राप्तः ; तेनायमिदानीं स्वकीयकिरणैर्मां दग्ध्वा मद्भस्मभिः निजकलङ्कं मार्जयितुमिच्छति तदयुक्तमेवेत्यर्थः। कुत एतदित्याह—यतः स चन्द्रः, तावतापि त्वदास्यतां तव मुखतां तव मुखसादृश्यमित्यर्थः, यास्यति प्राप्स्यति ; वधूवधेनैव मत्स्वरूपस्त्रीहत्ययैव, पुनरपि, कलङ्कः — भवेत्।

अत्र विधोस्तया लाञ्छनोन्मृजाया वाञ्छनासम्बन्धेऽपि न ...ादृश्याविपादनसम्बन्धसुतस्तथा निदर्शना, अपवादचित्रपीभेदे ... यात्रियोगितः, विरलनलाञ्छनोन्मृजार्थकत्वात् लाञ्छनान्तरो... तेषां संसृष्टिः। पूर्वरागो रसः, माधुर्यं गुणः, वैदर्भी च री...

বাঙ্গালা—চন্দ্র, নিজ কিরণ দ্বারা আমার ...
অনর্থক তাঁহার কলঙ্ক মুছিয়া ফেলিবার ইচ্ছা করি...

তবাস্মি মাং ঘাতুকমপ্যুপেক্ষসে মৃষামরং কামরগৌরবাৎ স্মরম্ ।
অবেহি চাণ্ডালমনঙ্গমঙ্গ ! তং স্বকাণ্ডকাণ্ডস্য মধোঃ সখা হি সঃ ॥১৫০॥
লঘৌ লঘাবেব পুরঃ পরে বুধৈ-র্বিধেয়মুজ্জ্বলনমাত্মতেজসঃ ।
দবে দবীয়ি জ্বলনঃ স্বস্তু জ্বলন্ ক্রমাৎ করীষদ্রুমকাণ্ডমণ্ডলম্ ॥১৫১॥

---

বাঙ্গালা—ইন্দ্রের বজ্রের ভয় হইতেও রক্ষা করারূপ অস্ত্রধারিগণের যে ব্রত আছে এবং যে ব্রত, স্ত্রী বা পুরুষ সমস্ত রক্ষার্থীর প্রতিই সাধারণভাবে প্রযুক্ত হইয়া থাকে; আপনার সেই মহাব্রত নষ্ট হইয়া গিয়াছে। কেন না, আপনি কামদেবের পুষ্পময় বাণ হইতেও আমাকে রক্ষা করিতেছেন না ॥১৪৯॥

অন্বয়ঃ—অস্মি তব; ত্বং অমরগৌরবাৎ মাং ঘাতুকম্ অপি মৃষা অমরং স্মরম্ উপেক্ষসে। অঙ্গ! তম্ অনঙ্গং চাণ্ডালম্ অবেহি; হি সঃ স্বকাণ্ডকাণ্ডস্য মধোঃ সখা ॥১৫০॥

তবেতি। অস্মি অহং তব ত্বদীয়ৈব। তথাপি ত্বং কষ্টম্, অমরগৌরবাৎ দৈবজ্ঞানেন পূজ্যত্বজ্ঞানাৎ, মাং ঘাতুকং হন্তারমপি, মৃষামরং নিয়তমকার্য্যকারিত্বাৎ মিথ্যাদৈবম্, স্মরং কামম্, উপেক্ষসে; ন খলু তদুচিতং ধীমতাম্ অস্তীতি ভাবঃ। নতু দৈববধে মহদেব পাপং ভবেদিত্যাহ—অঙ্গ! হে মহাবীর! তম্ অনঙ্গং কামম্, চাণ্ডালম্, অবেহি জানীহি। হি যস্মাৎ, সঃ অনঙ্গঃ, স্বকাণ্ডান্ নিজপুষ্পময়বাণান্ করোতীতি তস্য, মধোঃ বসন্তস্য, সখা। তথা চ তদানীং চাণ্ডাল এব বাণনির্ম্মাতাসীৎ; পুষ্পাণি চ কামস্য বাণাঃ; তানি চ বসন্তকাল এব চকার; তেন চ বসন্তশ্চাণ্ডালঃ; ততশ্চ কামোঽপি তস্য চাণ্ডালস্য বসন্তস্য সখ্যুঃ সংসর্গাচ্চাণ্ডাল এব জাত ইতি তদ্বধে ন গুরুতরং পাপমিত্যাশয়ঃ।

অত্র অনঙ্গচাণ্ডালয়োর্ভেদেঽপি তয়োরভেদাধ্যবসায়াদতিশয়োক্তিরলঙ্কারস্তচ্চ কাব্যলিঙ্গেন সংসৃজ্যতে। পূর্ব্ববৎ রসঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ।

“কাণ্ডোঽস্ত্রী দণ্ডবাণার্ব্ববর্গাবসরবারিষু” ইত্যমরঃ।

ঘাতুকমিতি “লষপতপদস্থা—” ইত্যাদিনা উকঞ্, তস্য চ নিষ্ঠাদিত্বাৎ মানিত্যত্র ষষ্ঠীনিষেধাৎ দ্বিতীয়ৈব। কাণ্ডং করোতীতি কাণ্ডকারঃ কর্ম্মণ্যণ্ ॥১৫০॥

বাঙ্গালা—আমি আপনারই; অথচ কাম আমাকে প্রহার করিতেছে; হায়!
নি দেবতার গৌরবে ঐ মিথ্যা দেবতাটাকে উপেক্ষা করিতেছেন!। হে
াল বলিয়াই জানুন। যে হেতু, সে কাম, নিজবাণ-

এব পরে আত্মতেজসঃ উজ্জ্বলনং বিধেয়ম্। জ্বলনঃ স্বস্তু দবী
ং দবীয়ি ॥১৫১॥

লঘাবিতি। বুধৈর্ধীমদ্ভিঃ, পুরঃ প্রথমম্, লঘৌ
নিজপ্রতাপস্য, উজ্জ্বলনং সন্ধুক্ষণম্, বিধেয়ং কর্ত্তব্যম্।
জ্বলনো অগ্নিনা প্রধানো বহ্নিরপি। জ্বলন্নিতি বাক্যান্তরাদি।
ভবন্, ক্রমাৎ, করীষাণাং শুষ্কগোময়ানাং দ্রুমকাণ্ডানাং বৃক্ষস্কন্ধা-

तृतीयमालेख्यगतेऽपि वीक्षिते त्वयि अरलीकृसमस्थयानया ।
पदे पदे मौनमयान्तरोपिणी प्रवर्त्तिता सारवसारसाविनी (१) ॥१५४॥
अधकालसो विषमविशिखः स्यूयते हृद्यते न
ख्यातोऽनङ्गस्त्वयि जयति यः किन्तु तत्ताङ्गलीकः ।
हत्वा मित्रं मधुमधिवनस्थानमन्तर्यरित्वा
सख्याः प्राणान् हरति हरितस्त्वदयमस्ताञ्जुपन्ताम् ॥१५५॥

---

भावः । अथ तेषु दया आगच्छेदित्यत्र किं प्रमाणमित्याह दया तानपि देवान्, सर्वथा न स्पृशेत् न स्पृशी-यादिति न, अपि तु मनसानुनयादिना सर्वथा स्पृशेदेवेत्यर्थः । यतः ते देवाः मदनो निर्दयः कामोऽपि तादृश भवन्ति, वा किंवा त्वमेव निर्दयो नल तथापि न भवन्ति ।

अत्र तृतीयपादार्थं प्रति चतुर्थपादवाक्यार्थस्य हेतुत्वात् काव्यलिङ्गमलङ्कारः । पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥१५३॥

বাঙ্গালা সে দেবতারাও বরং স্বয়ংবরসভায় আগমন করুন; আমি তাঁহাদিগকে প্রসন্ন করিয়াই আপনাকে বরণ করিব। তাঁহাদের আত্মাতেও সর্ব প্রকারেই দয়া আসিবে না, ইহা হইতে পারে না। কারণ, সে দেবতারা ত কামদেবও নহেন, কিম্বা আপনিও নহেন ॥১৫৩॥

अन्वयः—(हे नल !) आलेख्यगते अपि त्वयि वीक्षिते (सती) अर-लीक-समस्थया अनया इति पदे पदे मौनमयान्तरोपिणी इयं सारव-सार-साविनी प्रवर्त्तिता ॥१५४॥

तृतीति । हे नल ! आलेख्यगतेऽपि पटादौ चित्रितेऽपि त्वयि, वीक्षिते दृष्टे सति, अरलीकयोः कामल-ज्जयोः समस्था तदीयभावो मध्यावस्था कदाचित् कामवत्या कदाचित् लज्जावत्या चेत्यर्थः, अनया दमयन्त्या, इति पूर्वोक्तप्रकारेण, पदे पदे मध्ये मध्ये लज्जाविर्भावसमय इत्यर्थः, मौनमयं मौनस्वरूपम् अन्तरीपं प्रवाह-व्याघातस्थानं द्वीपमस्या अस्तीति मौनमयान्तरोपिणी इयं नदीरूपा, सारवाणां मधुमक्षिकाचालितानामिति सारवाणि मधूनि तेषां सारस्य श्रेष्ठभागस्य स्राविणी नदी, मधुरवचनपरम्परेत्यर्थः, प्रवर्त्तिता उत्पादिता ।

अत्र मौनमयेत्यादौ निरङ्गं केवलरूपकम्, वचनपरम्परामधुनद्योर्भेदेऽपि तयोरभेदाध्यवसायादतिशयोक्तिः, संसृष्टिः । पूर्वरागो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ।

॥१५४॥

আপনাকে চিত্রিত অবস্থায় দেখিয়াও, ইনি কখনও কামাতুরা মধ্যে মধ্যে মৌনরূপ-দ্বীপযুক্ত এই জাতীয় উৎকৃষ্ট মধুর ॥১৫৪॥

(বা) হৃদ্যতে, (যঃ) বিষমবিশিখঃ অনঙ্গঃ অপি জয়তি (ইতি) ॥ [ অতঃ সঃ ] অধিবনস্থানং মধুং মিত্রং হত্বা অন্তর্যরিত্বা তে সখ্যাঃ জুষন্তাম্ ॥১৫৫॥

मन्त्रैः पुरं भीमपुरोहितस्य तद्रक्षणं विशति क्व रक्षः ।
तदीक्षया दिक्पतिरातताम यातुं ततो जातु न यातुधानः ॥११॥
कर्तुं शशाकाभिमुखं न भैम्या मृगं दृगम्भोरुहतर्जितं यत् ।
अस्या विवाहाय ययौ विदर्भान् तद्वाहनस्तेन न गन्धवाहः ॥१२॥
जातौ न वित्ते न गुणे न कामः सौन्दर्य्य एव प्रवणः स वामः ।
स्वच्छन्दसर्गे लेखितकुत्सवेर-स्तां प्रत्यगान्न स्मितमां (१) कुवेरः ॥१३॥

---

পূর্বক দময়ন্তীকর্তৃক আকৃষ্ট হওয়াই যেন তাঁহাকে বিবাহ করিবার ইচ্ছায় স্বয়ংবরে গমন করিলেন, কিন্তু অন্য দিক্‌পালগণ গেলেন না ॥১০॥

অন্বয়ঃ—রক্ষঃ भीम-पुरोहितस्य मन्त्रैः रक्षणं तत् पुरं क्व विशति । ततः यातुधानः दिक्पतिः तत्र यातुं जातु उद्यमं न आततान ॥११॥

अन्ये तदीया दिक्पालानामगमने कारणं ब्रुवन् तत्र गमनाया: पूर्वापि यादित एव क्रमत्वात् प्रथमं नैऋतस्यागमने कारणमाह मन्त्रैरिति । रक्षो राक्षसः, भीमस्य राज्ञो यः पुरोहितस्तस्य, मन्त्रै रक्षोघ्नमन्त्रैः, कृता रक्षा यस्य तत् तादृशम, तत् पुरं कुण्डिननगरम्, क्व कथं विशति प्रवेष्टुमर्हति, अपि तु कथमपि नेत्यर्थः । ततः कारणात्, यातुधानो नैऋतो नाम दिक्पतिः, तत्र कुण्डिनपुरं, यातुं गन्तुम्, जातु कदाचिदपि, उद्यममुद्योगम्, न आततान न चकार ; नैऋतस्यापि राक्षसान्तर्गतत्वादिति भावः ।

अत्र छेकानुप्रासोऽलङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ।

"यातुधानः पुण्यजनो नैऋतो यातुरक्षसी" इत्यमरः ॥११॥

বাঙ্গালা—ভীমরাজার পুরোহিতের মন্ত্রে সেই কুণ্ডিননগরের রক্ষাবিধান করিয়াছিল সুতরাং তাহাতে রাক্ষস কি করিয়া প্রবেশ করিবে। সেই জন্য নৈঋতনামক দিক্‌পতি সে নগরে কখনও যাইবার উদ্‌যোগ করেন নাই ॥১১॥

অন্বয়ঃ—गन्धवाहः यत् दृगम्भोरुहतर्जितं मृगं भैम्याः अभिमुखं कर्तुं न शशाक ; तेन (इव) तद्वाहनः (सः) अस्याः विवाहाय विदर्भान् न ययौ ॥१२॥

कर्तुमिति । गन्धवाही वायुर्नाम दिक्पालः, यद्यस्मात्, दृगम्भोरुहाभ्यां भैम्या एव नयनपद्माभ्यां तर्जितं स्वसौन्दर्य्याधिक्यात् भर्त्सितम्, मृगं निजवाहनं हरिणम्, भैम्या
स्वकीयी वाहनं यस्य स तद्वाहनो गन्धवाहः, अस्या भैम्या विवाहाय ।

अत्र मृगस्य भैम्यभिमुखीकरणमशिस्थर्म्येऽपि तदसम्बन्धादतिश
दृगिन्द्रियादिपदार्थस्य हेतुत्वात् काव्यलिङ्गम्, तेनैवेति प्रतीयमाना हेतूत्प्रेक्षा
गुणः, वैदर्भी च रीतिः ॥१२॥

বাঙ্গালা—দময়ন্তীর নয়নপদ্ম দুইটী, বায়ুবাহন হরি
সুতরাং বায়ু যে হেতু সেই হরিণটাকে দময়ন্তীর অভিমুখ কর
জন্যই যেন সেই হরিণবাহন বায়ু দময়ন্তীকে বিবাহ করিব
না ॥১২॥

---

(१) ··· स्मितमाम् ··· ।

अभ्यागतैः कुण्डिनवासवस्य परोक्षपक्षेऽपि तेषु तेषु।
जिज्ञासितस्वेप्सितलाभलिङ्गं स्वल्पोऽपि नावापि नृपैर्विशेषः ॥२९॥
अङ्के विदर्भेन्द्रपुरस्य यस्के न सम्पमौ नैव तथा समाजः।
यथा पयोराशिरगस्त्यहस्ते यथा जगद्वा जठरे मुरारेः ॥३०॥

---

ननु सार्वभौमीऽपि भीमः कथमधीनान् नृपतीनुपाचरदित्याह चतुरिति। चतुर्णां समुद्राणां समाहार इति चतुःसमुद्री सैव परिखा यस्य तस्मिन्, वासिताः संस्थापिताः कीर्त्तिरेव दाराः प्रियतमामहिषी यस्य तस्मिन्, नृपाणामन्तःपुरे पृथिवीरूपे अवरोधे, औदार्यं दातृत्वम्, दाक्षिण्यं सरलता, दया कृपा, दमो जितेन्द्रियता च तेषां चतुष्टयी चतुष्टयमेव, रक्षणाय तत्कीर्त्तिदाराणां रक्षार्थं सौविदल्ला कञ्चुकिनो भवति। तथा च यथा अन्तःपुरे स्थापितायाः महिष्या रक्षणार्थं कञ्चुकिनो स्थाप्यते, तथा भूमण्डले स्थापितायाः कीर्त्तेरपि रक्षणार्थं राजभिरौदार्यादिगुणचतुष्टयं स्थाप्यते। अत एव सार्वभौमीऽपि भीमस्तत्कीर्त्तिरक्षणार्थमेव अधीनानपि नृपतीनुपाचरदिति भावः।

अत्रएवात्र अप्रस्तुतादाज्ञसामान्यात् प्रस्तुतस्य राजविशेषस्य भीमस्य प्रतीतेरप्रस्तुतप्रशंसालङ्कारः, समस्तवस्तुविषयं साङ्गं रूपकञ्च; अनयोरङ्गाङ्गिभावेन सङ्करः। प्रसादो गुणः, वैदर्भी च रीतिः।

"सौविदल्लाः कञ्चुकिनः" इत्यमरः ॥२८॥

**बाङ्गाला**—চারিটা সমুদ্রই যাহার পরিখাস্বরূপ এবং যাহার ভিতরে কীর্ত্তিরূপ মহিষীকে স্থাপন করা হইয়াছে, ভূমণ্ডলরূপ রাজাদের সেই অন্তঃপুরের মধ্যে সেই কীর্ত্তিরূপ মহিষীকে রক্ষা করিবার জন্য উদারতা, সরলতা, দয়া এবং জিতেন্দ্রিয়তা এই চারিটী গুণস্বরূপ কঞ্চুকিনীকে স্থাপন করা হইয়া থাকে ॥২৮।

**अन्वयः**—अभ्यागतैः नृपैः कुण्डिनवासवस्य परोक्षपक्षेषु अपि तेषु तेषु जिज्ञासित-स्वेप्सित-लाभलिङ्गं स्वल्पः अपि विशेषः न अवापि ॥२९॥

अभ्यागतैरिति। अभ्यागतैर्नृपैः, कुण्डिनवासवस्य कुण्डिनेन्द्रस्य भीमस्य, परोक्षक्षणे अपि प्रत्यक्षजातेषु का कथा आत्मनोऽनुपस्थितौ भृत्यादिद्वारा अप्रत्यक्षजातेष्वपि, तेषु तेषु प्रियोक्तिप्रभृतिषु उपचारेषु विषये, जिज्ञासितोऽभ्यागतैरेव नृपैर्ज्ञातुमिष्टः स्वेप्सितस्य दमयन्तीरूपस्य स्वस्वाभीष्टविषयस्य यो लाभस्तस्य लिङ्गं चिह्नं सूचक इत्यर्थः, स्वल्पोऽपि विशेष आधिक्यम्, न अवापि न लब्धः; अपि तु सर्वैरेव नृपैः समान एवोपचारः अवापीत्यर्थः। तथा च अधिकोपचारलाभे दमयन्त्या अपि अधिकैव प्राप्तिसम्भावना स्यात् किन्तु तदलाभात् सापि नास्तीति भावः।

अत्र प्रसादो गुणः, वैदर्भी च रीतिः ॥२९॥

**बाङ्गाला**—কাহার ভাগ্যে অভীষ্ট দময়ন্তীলাভ ঘটিবে তাহা জানিবার ইচ্ছা সকলেরই হইয়াছিল এবং অধিক সমাদরলাভই তাহার সূচক ছিল; কিন্তু ভীমরাজার অসমক্ষকাজ সৎকারের বিষয়েও কোন আগন্তুক রাজাই অন্য আগন্তুক রাজা অপেক্ষা অল্পমাত্রও আধিক্য লাভ করেন নাই ।২৯॥

**अन्वयः**—यथा अगस्त्यहस्ते पयोराशिः, यथा वा मुरारेः जठरे जगत्, तथा एष अङ्के न सम्पमौ (इति) न यस्के ॥३०॥

अङ्क इति। यथा अगस्त्यस्य मुनेः हस्ते पाणौ, पयोराशिः समुद्रः, न।

পুরি পথিদ্বারগৃহাণি তত্র চিত্রীকৃতান্যুৎসববাঞ্ছয়ৈব ।
নভোঽপি কির্মীরমকারি তেষাং মহীভুজামাভরণপ্রভাভিঃ ॥৩১॥
বিলাসবৈদগ্ধ্যবিভূষণশ্রী-স্তেষাং তথাভূত্ পরিচারকেঽপি ।
অমংস্তি স্ত্রীশিশুবালিশাস্তং যথাগতং নায়কমেব কঞ্চিত্ ॥৩২॥

ষ্টৌদরোদরস্থমতরম্, জঠরে উদরে, জগৎ ত্রিভুবনম্, প্রলয়কালে ন ব্যক্তমি ইতি ন ; তথৈব এষ সমাজ আগন্তুকরাজসমূহঃ, বিদর্ভেন্দ্রপুরস্য কুণ্ডিননগরস্য, অন্তে ক্রোড়ে মধ্যেহপি ইত্যর্থঃ, ন ব্যক্তমি নাবকাশং লেভে ইতি ন, অপি তু ব্যক্তমেবেতি অহং মন্যে ; তস্যাতিবিশালত্বাদিতি ভাবঃ ।

অত্র সাজীপমাল্যালঙ্কারঃ, তদনুপ্রাণত্বে কাব্যোৎপ্রেক্ষেতি সংসৃষ্টিঃ । গুণবীতী পূর্ববৎ ॥৩০॥

বাঙ্গালা—অগস্ত্যের হস্তে যেমন সমুদ্র ধরিয়াছিল এবং নারায়ণের উদরে যেমন ত্রিভুবন ধরিয়াছিল, তেমনই এই রাজসমূহ কুণ্ডিননগরের ভিতরে ধরিয়াছিল, ইহা আমি মনে করি ॥৩০॥

অন্বয়ঃ—তত্র পুরি (শিল্পিভিঃ) উৎসব বাঞ্ছয়া এব পথি-দ্বার-গৃহাণি চিত্রীকৃতানি । তেষাং মহীভুজাম্ আভরণপ্রভাভিঃ নভঃ অপি কির্মীরম্ অকারি ॥৩১॥

পুর ইতি । তত্র পুরি, উৎসবস্য বিবাহামোদস্য বাঞ্ছয়ৈব ইচ্ছয়ৈব, পন্থানো রাজমার্গাশ্চ দ্বারাণি চ গৃহাণি চ তানি সর্বাণ্যেব, চিত্রীকৃতানি রঙ্গাদিনা নানাবর্ণীকৃতানি, শিল্পিভিরিতি শেষঃ । তথা তেষাং মহীভুজাম্ আগতানাং রাজ্ঞাম্, আভরণপ্রভাভিঃ, নভোঽপি তদবস্থানাকাশমপি, কির্মীরং চিত্রং নানাবর্ণমিতি যাবৎ, অকারি কৃতম্ । তদ্বৈ আশ্চর্যমিতি ভাবঃ ।

অত্র নভসঃ কির্মীরতোত্তাসম্বন্ধেঽপি তৎসম্বন্ধোক্তেরতিশয়োক্তিরলঙ্কারঃ । গুণবীতী পূর্ববৎ ।

"চিত্রং কির্মীরকল্মাষশবলৈতাশ্চ কর্বুরে" ইত্যমরঃ ॥৩১॥

বাঙ্গালা—শিল্পিগণ উৎসববৃদ্ধি করিবার ইচ্ছাবশতই সেই নগরে পথ, দ্বার ও গৃহসকল চিত্র করিয়াছিল এবং আগন্তুক রাজগণের অলঙ্কারের কিরণে সে স্থানের আকাশটাকেও চিত্র করিয়াছিল ॥৩১॥

অন্বয়ঃ—তেষাং পরিচারকে অপি তথা বিলাস বৈদগ্ধ্যবিভূষণশ্রীঃ অভূত্, যথা স্ত্রী-শিশু-বালিশাঃ তম্ আগতং কঞ্চিত্ নায়কম্ এব অমংস্তি ॥৩২॥

বিলাসেতি । তেষামাগন্তুকানাং রাজ্ঞাম্, পরিচারকেঽপি আত্মনি কা কথা অন্যেঽপি, তথা তাদৃশী, বিলাসঃ কটাক্ষবিক্ষেপাদিশৃঙ্গারচেষ্টা বৈদগ্ধ্যং সর্ববিষয়েষু চাতুর্যং তাভ্যাং যুক্তা বিভূষণানাং বিশিষ্টালঙ্কারাণাং শ্রীঃ শোভেতি বা তদীয়া, অভূত্ আসীত্, যথা স্ত্রিয়ঃ শিশবঃ বালিশা মূর্খলোকাশ্চ তে তাদৃশাঃ, তং পরিচারকম্, আগতং কঞ্চিত্ নায়কমেব প্রধানং রাজানমেব, অমংস্তিষুর্জ্ঞাতবন্তঃ ।

অত্র পরিচারকে স্ত্রীশিশুবালিশানাং নায়কত্বভ্রমাদ্ভ্রান্তিমানলঙ্কারঃ । গুণবীতী পূর্ববৎ ॥৩২॥

বাঙ্গালা—আগন্তুক রাজগণের কোন কোন ভৃত্যেরও তেমনই বিলাস, চতুরতা এবং অলঙ্কারের শোভা হইয়াছিল ; যাহাতে স্ত্রীলোক, বালক এবং মূর্খলোকেরা সেই ভৃত্যকেই রাজা বলিয়া মনে করিয়াছিল ॥৩২॥

अस्वेदगात्राश्चलचामरौघै-रमीलनेत्राः प्रतिवस्तुचित्रैः।
अम्लानमाला विपुलातपत्रै-र्देवा नृदेवाश्च भिदां न भेजुः [१] ॥२३॥
अन्योन्यभाषानवबोधभीतेः संस्कृत्रिमाभिर्व्यवहारवत्सु।
दिग्भ्यः समेतेषु नरेषु वाग्भिः सौवर्गवर्गो न जनैरचिह्नि ॥२४॥

अन्वयः—चल-चामरौघैः अस्वेदगात्राः प्रतिवस्तुचित्रैः अमीलनेत्राः विपुलातपत्रैः अम्लानमालाः देवाः नृदेवाश्च भिदां न भेजुः ॥२३॥

अस्वेदेति। चलचामरौघैः आन्दोलनविभ्रमणचञ्चलचामरसमूहैरुपलक्षिताः, स्वभावत एव अस्वेदगात्रा घर्मरहिताङ्गाश्च। अन्यत्र तु चलचामरौघैः आन्दोलनवशात् चञ्चलचामरसमूहवातैः करणैः, अस्वेदगात्रा दीप्त-घर्मजातस्वेदशून्यगात्राः। प्रतिवस्तु प्रत्येकमाभूषणादिषु सर्वेष्वेव पदार्थेषु चित्रैः दर्शनविस्मयजनकविचित्रैरुपलक्षिताः स्वभावत एव अमीलनेत्रा निर्निमेषनयनाश्च। अन्यत्र तु प्रतिवस्तु चित्रैः दर्शनविस्मयजनकाश्चर्यैः करणैः, अमील-नेत्रा निर्निमेषनयनाः। तथा विपुलातपत्रैः विशालच्छत्रैरुपलक्षिताः, अम्लाना दिव्यतरुजातत्वात् स्वभावत एव-म्लानिरहिता मालाः पुष्पमाल्यानि येषां ते तादृशाश्च। अन्यत्र तु विपुलातपत्रैः विशालच्छत्रावरणैर्हेतुभिः, अम्लाना आतपतापयोगेऽपि अविम्लाना मालाः साधारणपुष्पमाल्यानि येषां ते तथोक्ताश्च। देवा इन्द्रादयो दैवताः, नृदेवा नरेन्द्रा आगता राजानश्च, भिदां भेदं वैलक्षण्यमिति यावत्, न भेजुः न प्रापुः; अपि तु पूर्वोक्तधर्मसमूहवत्त्वात् अभेदमेव भेजुरित्यर्थः।

अत्र एषां दैवतदैवतयोर्भेदेऽप्यभेदाध्यवसायादतिशयोक्तिरलङ्कारः, अभेदकथनं प्रति अस्वेदगात्रादिपदा-र्थानां हेतुत्वात् काव्यलिङ्गञ्च; अनयोरङ्गाङ्गिभावेन सङ्करः। प्रसादो गुणः, वैदर्भी च रीतिः ॥२३॥

বাঙ্গালা—স্বভাবতই দেবগণের গাত্রে ঘর্ম হয় না, নয়নে নিমেষ থাকে না এবং দেব-তরুজাত পুষ্পের মালা ম্লান হয় না; আবার তাঁহাদের উভয়পার্শ্বে চামর আন্দোলিত হইতেছিল, মস্তকে বিশাল ছত্র ধারণ করিয়াছিল এবং তাঁহারা প্রত্যেক বস্তু দর্শন করিয়াই বিস্ময়াপন্ন হইতেছিলেন। এ দিকে রাজাদেরও উভয়পার্শ্বে চামর আন্দোলিত হইতে থাকায় গাত্রে ঘর্ম জন্মিয়াছিল না, প্রত্যেক বস্তুর বৈচিত্র্যদর্শনে নয়নে নিমেষ ছিল না এবং মস্তকের উপরে বৃহৎ ছত্র ধারণ করায় ফুলের মালাগুলি ম্লান হইয়াছিল না। অতএব তখন দেবগণও রাজগণ পরস্পর ভেদ অবলম্বন করিয়াছিলেন না ॥২৩॥

अन्वयः—जनैः दिग्भ्यः समेतेषु अन्योन्यभाषानवबोधभीतेः संस्कृत्रिमाभिः वाग्भिः व्यवहारवत्सु नरेषु सौवर्गवर्गः न अचिह्नि ॥२४॥

भाषाभ्यामपि राजभिः सह देवानां भेदो नासीदित्याह अन्योन्येति। जनैः कुण्डिनपुरवासिभिर्लोकैः, दिग्भ्यो नानादूरदेशेभ्य इत्यर्थः, समेतेषु समागतेषु, अन्योन्यभाषायाः परस्परवाक्यस्य अनवबोधे परस्परबोधाभावात् अर्थ-ज्ञानाभावविषये या भीतिर्भयं तस्या हेतोः, संस्कारेण निर्वृत्ताः संस्कृत्रिमाः संस्कृतात्मिकाः सर्वदेशसाधा-रणीभिरिति भावः, ताभिर्वाग्भिर्वाणीभिः, व्यवहारवत्सु व्यवहारं कुर्वत्सु, नरेषु राजादिमानुषेषु मध्ये, सौवर्गो स्वर्गवासिनामिन्द्रादीनां नित्यसंस्कृतभाषाभाषित्वाभिमानात् देवानां वर्गः समूहः, न अचिह्नि न पृथक्तया लक्षितः, नाकाधिप्रभृतीनां समानत्वात् तदानीमुभयेषां सर्वेषामेव संस्कृतभाषाव्यवहारेण भाषया अपि[illegible]त्वादिति भावः।

(१) न स्वेदिनश्चामरमारुतेन निमेषनेत्राः प्रतिवस्तुचित्रैः। आतपत्री विभिदुर्न तत्र ॥

वैदर्भदूतानुनयोपहूतैः शृङ्गारभङ्गीरनुभावयद्भिः [१] ।
स्वयंवरस्थानजनाश्रयस्तै-र्दिने परेऽलमकारि वीरैः ॥३७॥
भूषाभिरुच्चैरपि संस्कृते यं वीक्ष्याकृत प्राकृतबुद्धिमेव ।
प्रसूनबाणे विबुधाधिनाथ-स्तेनाथ साशोभि सभा नलेन ॥३८॥
धृताङ्गरागौ कलितप्रमोदा तस्मिन् सभां पुष्यति राजचन्द्रे ।
गता वताश्चोर्विषयं विलङ्घ्य [२] क्व चमनचञ्चत्कुलस्य कान्तिः ॥३९॥

भूमिं भुञ्जन्ति सर्वं पालयन्तीति भूमिभुजो देवाः । भूमिं भुञ्जति करादानेन उपभुञ्जते इति भूमिभुजो राजानश्च ॥३६॥

বাঙ্গালা—দময়ন্তী পতিব্রতা হইয়াও, সেই রাত্রিতে স্বপ্নে উপস্থিত হইয়া, দেবগণ ও রাজগণকে যে নিজদাস্তের বিভ্রম দান করিয়াছিলেন; তাহাই সেই দানশীলা দময়ন্তী, প্রার্থী দেবগণের এবং রাজগণের কামপূরণ করিয়াছিলেন ॥৩৬॥

अन्वयः—परे दिने वैदर्भ-दूतानुनयोपहूतैः शृङ्गारभङ्गीः अनुभावयद्भिः तैः वीरैः स्वयंवरस्थान-जनाश्रयः अलम् अकारि ॥३७॥

वैदर्भेति । परे परस्मिन् दिने, वैदर्भस्य विदर्भराजस्य भीमस्य दूतैः अनुनयेन उपहूतैः आहूतैः, शृङ्गारस्य भङ्गीर्वेशभूषादिचेष्टाः, अनुभावयद्भिर्लोकान् ज्ञापयद्भिः, तैर्वीरैः राजभिः, स्वयंवरस्थानस्य जनाश्रयो मण्डपः, अलमकारि स्वस्वाधिष्ठानेन अलङ्कृतः ।

अत्र शृङ्गारभङ्गीरिति वर्ण्यानुप्रासोऽलङ्कारः । वृत्तरीती पूर्ववत् ।

"मण्डपोऽस्त्री जनाश्रयः" इत्यमरः ॥३७॥

বাঙ্গালা—পরদিন বিদর্ভরাজার দূতগণ যাইয়া অনুনয়সহকারে আহ্বান করিল; তাহার পর সেই বীরগণ শৃঙ্গারোচিত বেশভূষা প্রকাশ করতঃ, স্বয়ংবরস্থানের মণ্ডপখানিকে আসিয়া অলঙ্কৃত করিলেন ॥৩৭॥

अन्वयः—अथ विबुधाधिनाथः यं वीक्ष्य भूषाभिः उच्चैः संस्कृते अपि प्रसूनबाणे प्राकृतबुद्धिम् एव अकृत, तेन नलेन सा सभा अशोभि ॥३८॥

भूषाभिरिति । अथ अनन्तरम्, विबुधाधिनाथो देवराजः पण्डितश्रेष्ठश्च, यं नलम्, वीक्ष्य दृष्ट्वा, भूषाभिर्नानाविधैरलङ्कारैः, उच्चैः सातिशयम्, संस्कृतेऽपि अलङ्कृतेऽपि । संस्कृते संस्कृतभाषायाञ्च । प्रसूनबाणे कामदेवे, प्राकृतबुद्धिमेव कुत्सितत्वज्ञानात् निकृष्टजनत्वमेव । प्राकृतभाषाज्ञानमेव च । अकृत कृतवान्; तेन नलेन, सा सभा अशोभि गत्वाधिष्ठानेन शोभिता ।

अत्र विबुधाधिनाथस्य प्राकृतबुद्धिकरणासम्बन्धेऽपि तत्सम्बन्धादतिशयोक्तिरलङ्कारः, कामदेवापेक्षया नलस्याधिक्यप्रतिपादनाद्व्यतिरेकः, पण्डितश्रेष्ठोऽपि संस्कृतभाषायां प्राकृतभाषाबुद्धिमकरोदिति विरोधात् [illegible] च तत्सम्बन्धाभावाद्विरोधाभासः, छेकानुप्रासो वृत्त्यनुप्रासश्चेति संसृष्टिः । प्रवाहो मनः [illegible]

"प्राकृतस्तु पृथग्जनः" इत्यमरः ॥३८॥

বাঙ্গালা—তাহার পর, দেবরাজ যে নলকে দেখিয়া,
শোভিত কামদেবের উপরেও নিকৃষ্টবুদ্ধি করিয়াছিলেন ;
অলঙ্কৃত করিলেন ॥৩৮॥

(१) शृङ्गारभङ्गीमनुभावयद्भिः । (२) ... विलङ्घ्य ।

प्रवेक्ष्यतः सुन्दरवृन्दमुच्चै-रिदं मुदा चेदितरेतरं तत्।
न शक्ष्यतो लक्षयितुं विमिश्रौ (१) दस्रौ सहस्रैरपि वत्सराणाम्॥६४॥
स्थितैरियद्भिर्युवभिर्विदग्धै-र्दग्धेऽपि कामे जगतः क्षतिः का।
एकाम्बुबिन्दुव्ययमम्बुराशेः पूर्णस्य कः शंसति शोषदोषम्॥६५॥
इति स्तुवन् कुङ्कुतिवन्दनाभि-(२)र्गन्धर्ववर्गैश्च स गायतैव।
ओङ्कारभूम्ना पठतैव वेदान् महर्षिवृन्देन तथान्वमानि॥६६॥

---

বাঙ্গালা—এই যুবকগণ মস্তকে অনর্থক মস্ত ধারণ করিয়াছে। যে হেতু, ইহারা নিজেরাই মস্তকরূপ। দেখুন ব্রহ্মজ্ঞান স্বপ্রকাশ বলিয়া, তাহার প্রকাশের জন্য অন্য জ্ঞান অন্বেষণীয় নহে।৬৩।

অন্বয়ঃ—দস্রৌ মুদা চেত্ ইদম্ উচ্চৈঃ সুন্দরবৃন্দং প্রবেক্ষ্যতঃ, তত্ (তৌ) বিমিশ্রৌ (সন্তৌ) বৎসরাণাং সহস্রৈঃ অপি ইতরেতরং লক্ষয়িতুং ন শক্ষ্যতঃ॥৬৪॥

প্রবেক্ষ্যত ইতি। দস্রৌ অশ্বিনীকুমারৌ, মুদা এভিঃ সহ মিলনানন্দেন, চেত্ যদি, ইদম্, উচ্চৈর্বিশালম্, সুন্দরবৃন্দং মনোহরযুবকসমূহম্, প্রবেক্ষ্যতঃ এষাং মধ্যে প্রবেশং করিষ্যতঃ, তত্তদা তৌ দস্রৌ, বিমিশ্রৌ এভিঃ সহ সর্বথা মিলিতৌ সন্তৌ, বৎসরাণাং সহস্রৈরপি, ইতরেতরং পরস্পরম্, লক্ষয়িতুং পরিচেতুম্, ন শক্ষ্যতঃ ন সমর্থৌ ভবিষ্যতঃ; সর্বথা সমানাকৃতিরূপাদিমত্ত্বাদিতি ভাবঃ।

অত এবাত্র মীলিতং নামালঙ্কারশ্ছেকানুপ্রাসেন সংসৃজ্যতে। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ॥৬৪॥

বাঙ্গালা—অশ্বিনীকুমারেরা আনন্দে যদি এই বিশাল সুন্দরগণের মধ্যে প্রবেশ করেন তবে তাঁহারা ইহাদের সহিত মিশিয়া যাইয়া, সহস্র বৎসরেও পরস্পর পরস্পরকে চিনিতে পারিবেন না।৬৪।

অন্বয়ঃ—ইয়দ্ভিঃ বিদগ্ধৈঃ যুবভিঃ স্থিতৈঃ [ সদ্ভিঃ ] ( একস্মিন্ ) কামে দগ্ধে [ জাতে ] অপি জগতঃ কা ক্ষতিঃ ? । কঃ পূর্ণস্য অম্বুরাশেঃ একাম্বুবিন্দুব্যয়ং শোষদোষং শংসতি ?॥৬৫॥

স্থিতৈরিতি। ইয়দ্ভিঃ এতাবদ্ভিঃ অতিবহুতরৈরিত্যর্থঃ, বিদগ্ধৈর্নাগরিকৈঃ, অতএব রসিকৈরিত্যাশয়ঃ, দাহ-রহিতৈশ্চ, যুবভিস্তরুণৈঃ, স্থিতৈঃ সদ্ভিঃ একস্মিন্ কামে, দগ্ধে শিবেন ভস্মীকৃতে সত্যপি, জগতঃ কা নাম ক্ষতিঃ অপি তু কাপি নেত্যর্থঃ। তথাহি কো জনঃ পূর্ণস্য অম্বুরাশেঃ সমুদ্রস্য, একাম্বুবিন্দোরেকমাত্রজলকণস্য ব্যয়ম্ অপগমম্, শোষঃ শোষণমেব দোষস্তম্, শংসতি বদতি, অপি তু কোঽপি নেতি তাৎপর্য্যম্।

অত্রাপি সামান্যবিশেষভাবাভাবাত্মার্থান্তরন্যাসঃ, কিন্ত্বসৌ প্রতিবস্তূপমাশঙ্কাবত্ত্বাৎ দৃষ্টান্তোঽলঙ্কারশ্ছেকানুপ্রাসেন সংসৃষ্টঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ॥৬৫॥

বাঙ্গালা—এতগুলি নাগরিক যুবক থাকিতে, একটীমাত্র কামদেব দগ্ধ হওয়ায় জগতের কি ক্ষতি হইয়াছে ? পরিপূর্ণ সমুদ্রের একটীমাত্র জলবিন্দুক্ষয়কে কোন্ ব্যক্তি শুষ্কতা-দোষ বলিয়া থাকে ?॥৬৫॥

অন্বয়ঃ—ইতি স্তুবন্ সঃ গায়তা এব গন্ধর্ববর্গেণ কুঙ্কুতিবন্দনাভিঃ, তথা বেদান্ পঠতা এব মহর্ষিবৃন্দেন ওঙ্কারভূম্না অন্বমানি (স্তুতঃ)॥৬৬॥

[ ১ ] ··· বিমিশ্রম্। (২) · কুঙ্কুতিবর্ণনাভিঃ।

न्यवीविशत्तानथ राजसिंहान् सिंहासनौघेषु विदर्भराजः।
शृङ्गेषु यत्र त्रिदशैरिवैभिरशोभि कार्त्तस्वरभूधरस्य।
विचिन्त्य नानाभुवनागतांस्तानमर्त्यसङ्कीर्णचरित्रशीलान्।
कथाः कथङ्कारममी सुतायामिति व्यषादि क्षितिपेन तेन॥৬৮॥

इतीति। इति अनेन पूर्वोक्तरूपेण, स्तुवन् सभां प्रशंसन् स काव्यः, गायद्भिः गानं कुर्वद्भिः, गन्धर्वैरेव, कुर्वन्तौ गानस्थानेषिद्धिर्वै विरतिसूचका हुङ्कारा एव अनुमतिसूचिकाः कुर्वतः लोके हुंशब्देनापि परानुमतिसूचकत्वं नात् तद्रूपा या अन्दनाः प्रशंसावादास्ताभिः, तथा वेदान् पठद्भिः महर्षिवृन्देन, ओङ्काराख्या प्रचयधृतानामेव ओङ्कारसूचकानाम् 'ओम्' शब्दानां भूम्ना बाहुल्येन, अन्वमानि अनुमत इव शुक्राचार्यवर्णनाया सभ्यता स्वीकृतेवेत्यर्थः।

अत्र अन्वमानीवेति प्रतीयमाना क्रियोत्प्रेक्षा, सा चमत्कृता विविधयोर्हुङ्कारौङ्कारयोरभिन्नाध्यवसायादतिशयोक्तिरयथ, तयोः तेषामङ्गाङ्गिभावेन सङ्करः। गुणरीती पूर्ववत् ॥৬৬॥

বাঙ্গালা—শুক্রাচার্য্য এই ভাবে সভার প্রশংসা করিতেছিলেন; তখন গন্ধর্বগণ গান করিতে থাকিয়াই হুঙ্কাররূপ প্রশংসাবাক্য দ্বারা, আর মহর্ষিগণও বেদপাঠ করিতে থাকিয়াই, বহুতর ওঙ্কার উচ্চারণ দ্বারা, সেই শুক্রাচার্য্যের সভাপ্রশংসার যেন অনুমোদন করিলেন ॥৬৬॥

অন্বয়:—অথ विदर्भराजः तान् राजसिंहान् सिंहासनौघेषु न्यवीविशत्; यत्र एभिः कार्त्तस्वरभूधरस्य शृङ्गेषु त्रिदशैः इव अशोभि ॥৬৭॥

न्यवीविशदिति। अथ शुक्राचार्यस्य सभावर्णनातः परम्, विदर्भराजो भीमः, तान् उपस्थितान्, राजसिंहान् नृपतिश्रेष्ठान्, सिंहासनानाम् ओघेषु समूहेषु, न्यवीविशत् निवेशितवान् उपवेशितवानित्यर्थः। यत्र येषु सिंहासनेषु एभिः राजसिंहैः, कार्त्तस्वरभूधरस्य स्वर्णपर्वतस्य सुमेरोः, शृङ्गेषु, त्रिदशैर्देवैरिव, अशोभि शोभितम्।

अत्र श्रौतीपमालङ्कारस्तु काव्यलिङ्गेन संसृष्टः। गुणरीती पूर्ववत् ॥৬৭॥

বাঙ্গালা—তাহার পর, বিদর্ভরাজ সেই রাজশ্রেষ্ঠগণকে নিয়া সিংহাসনসমূহের উপরে উপবেশন করাইলেন; সুমেরুপর্বতের শৃঙ্গে দেবগণের ন্যায় যে সিংহাসনসমূহে সেই রাজশ্রেষ্ঠগণ শোভা পাইয়াছিলেন ॥৬৭॥

অন্বয়:—तेन क्षितिपेन नानाभुवनागतान् तान् अमर्त्य-सङ्कीर्ण-चरित्र-शीलान् विचिन्त्य अमी सुतायां कथङ्कारं कथ्याः इति व्यषादि ॥৬৮॥

विचिन्त्येति। तेन क्षितिपेन विदर्भराजेन, नानाभुवनेभ्यः स्वर्गमर्त्यपातालेभ्य आगतान्, तान् राजसिंहान्, अमर्त्यैर्देवैरेव सङ्कीर्णानि सर्वमलावर्णयितुं अशक्यानि चरित्रशीलानि शीलवर्ण्या येषां तान् तथाभूतान्, विचिन्त्य मनसा विचार्य, अमी राजसिंहा सुतायां दमयन्त्यां तस्याः समीपे इत्यर्थः, कथङ्कारं केन प्रकारेण, कथ्या मानुषैव चरित्रशीलवर्णयितुं शक्याः, अपि तु कथङ्कारमपि नेत्यर्थः, इति हेतोः, व्यषादि विषण्णम्। सर्वथा दिव्या एवामून् वर्णयितुं शक्नुवन्ति, न पुनरस्मदीया मानुषाः न दिव्यानामकामिनामौषां चरित्रशीलवर्णनासमर्थात् चरित्रशीलाज्ञाता च दमयन्ती कथं वृणुयादिति विषादः सम्भवतीति भावः।

अलङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः।

জগত্ত্রয়ীপণ্ডিতমণ্ডিতেয়ং সভা ন ভূতা ন চ ভাবিনী বা।
রাজ্ঞাং গুণখ্যাপনকৈতবেন সংখ্যাবতঃ শ্রাবয় বাঙ্মুখানি ॥৩২॥
ইতীরিতা তচ্চরণাৎ পরাগং গীর্বাণচূড়ামণিঘৃষ্টমেষম্।
তস্য প্রসাদেন সহাগ্রহাসা-বাদায় মূর্দ্ধাদরিণী বভার ॥৩৩॥
মধ্যেসভং সাবততার বালা গন্ধর্ববিদ্যাময়কণ্ঠনালা [১]।
ত্রয়ীময়োদ্ভূতবচোবিভঙ্গা সমুদ্রিতাস্মিন্নিব সিন্ধুতরঙ্গা ॥৩৪॥

---

অত্র হেতুরুপমাক্ষেপোহলঙ্কারঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ।

আবভুক্তা ইতি "অবকীর্ণিতাপ্যাসা অজিজপির ত্রিবদাম্" ইতি অবকীর্ণিতাপ্যবর্হিকমপ্রত্যয়ঃ ॥৩১॥

বাঙ্গালা—সরস্বতি! তুমি নানা ভুবন হইতে আগত রাজগণের কুল, শীল ও শক্তি জান; অতএব তুমি দময়ন্তীর নিকটে ইহাদের কুলপ্রভৃতি বল; তোমার নীরবে থাকিবার কি এই সময় আসিল? ॥৩১॥

অন্বয়ঃ—(হে সরস্বতি!) জগত্ত্রয়ী-পণ্ডিত-মণ্ডিতা ইয়ং সভা ন ভূতা, ন বা ভাবিনী চ। (অতস্ত্বং) রাজ্ঞাং গুণখ্যাপনকৈতবেন সংখ্যাবতঃ বাঙ্মুখানি শ্রাবয় ॥৩২॥

জগদিতি। হে সরস্বতি! জগত্ত্রয্যাস্ত্রিভুবনস্য পণ্ডিতৈর্মণ্ডিতা ভূষিতা, ইয়ম্ ঈদৃশী সভা, পূর্বং ন ভূতা, পশ্চাচ্চ বা ভাবিনী চ। অতস্ত্বং রাজ্ঞাং গুণখ্যাপনকৈতবেন গুণকথনচ্ছলেন, সংখ্যাবতঃ পণ্ডিতান্, বাঙ্মুখানি উপন্যাসান্ বাক্চাতুর্য্যাণীত্যর্থঃ, শ্রাবয়।

অত্র শ্রাবণং প্রতি পূর্বার্দ্ধবাক্যার্থস্য হেতুত্বাৎ কাব্যলিঙ্গমলঙ্কারশ্ছেকানুপ্রাসেন সংসৃজ্যতে। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ।

"সংখ্যাবান্ পণ্ডিতঃ কবিঃ" ইতি "উপন্যাসস্তু বাঙ্মুখম্" ইতি চ অমরঃ ॥৩২॥

বাঙ্গালা—সরস্বতি! ত্রিভুবনের পণ্ডিতশোভিত এই রূপ সভা পূর্বেও আর হয় নাই, পরেও আর হইবে না। অতএব তুমি রাজগণের গুণকথনচ্ছলে পণ্ডিতদিগকে নিজের বাকচাতুর্য্য শুনাইয়া দাও ॥৩২॥

অন্বয়ঃ—ইতি ঈরিতা অসৌ আদরিণী (সতী) তচ্চরণাৎ গীর্বাণ-চূড়ামণি-ঘৃষ্টম্ এবং পরাগং তস্য আজ্ঞয়া প্রসাদেন সহ মূর্দ্ধা আদায় বভার ॥৩৩॥

ইতীতি। ইতি পূর্বোক্তরূপেণ, ঈরিতা উক্তা, অসৌ সরস্বতী, আদরিণী কর্ণ্যবিষয়ে আগ্রহবতী সতী, তস্য নারায়ণস্য চরণাৎ, গীর্বাণানাং প্রণমতাং দেবানাং চূড়ামণিভিঃ শিরোরত্নৈঃ ঘৃষ্টম্ সম্মিলিতম্ এবমবস্থিতম্, পরাগং ধূলিম্, তস্য নারায়ণস্য, আজ্ঞয়া 'ত্বং গত্বা দময়ন্তীসমীপে নৃপতীন্ বর্ণয়' ইত্যাদিরূপেণ তদ্‌প্রেরণয়া, প্রসাদেন অনুগ্রহেণ সহ, মূর্দ্ধা মস্তকেন, আদায় গৃহীত্বা, বভার ধৃতবতী

অত্র সহোক্তিরলঙ্কারঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৩৩॥

বাঙ্গালা—নারায়ণ এইরূপ বলিলে, সরস্বতীদেবী বিশেষ আগ্রহান্বিত হইয়া, দেবতারা নমস্কার করিবার সময়ে তাঁহাদের চূড়ামণির সংঘর্ষে যে সকল ধূলি মুছিয়া গিয়াছিল, তদবশিষ্ট ধূলি তাঁহার চরণ হইতে, তাঁহার আদেশরূপ অনুগ্রহের সহিত মস্তকে গ্রহণ করিয়া

सपल्लवं व्यासपराशराभ्यां प्रणीतभावादुभयीभविष्णु ।
तन्मत्स्यपद्माद्युपलक्ष्यमाणं यत् पाणियुग्मं वहते पुराणम् ॥८४॥

---

**अन्वयः**—तर्काः यद्वदनस्य रदाः तर्क्याः ; तैः अन्यथा अस्य वादे क्व तथा शक्तिः ; पत्रं दातुं क्व (वा) शक्तिः ; वादतः गुणशालिपूगं खण्डयितुं क्व (वा) प्रभुत्वं (स्यात्) ॥८३॥

तर्का इति । 'पर्वतो यदि वह्निमान् न स्यात् तर्हि धूमवानपि न स्यात्' इत्यादिरूपास्तर्काः, यस्याः सरस्वत्या वदनस्य मुखस्य, रदा दन्ताः, तर्क्या वितर्क्याः सम्भावनीयाः । तैस्तर्करूपदन्तैः, अन्यथा विना, अस्य वदनस्य, वादे कथाविशेषे, क्व कुत्र, तथा तादृशी, शक्तिः सामर्थ्यं स्यात् अपि तु क्वापि नेत्यर्थः । तथा पत्रं दातुं प्रतिवादिने प्रतिज्ञापत्रं प्रेरयितुम्, क्व वा शक्तिः स्यात् । तथा वादतो वादात् कथाविशेषाद्धेतोः, गुणशालिनां पाण्डित्यादिगुणवतां पूगं समूहम्, खण्डयितुं निरसितुम्, क्व वा प्रभुत्वं सामर्थ्यम्, स्यात् क्वापि नेत्यर्थः । सर्वमेव दन्तानामावश्यकत्वादिति भावः । अन्यत्र तु तैस्तर्करूपदन्तैर्विना पत्रं ताम्बूलम्, दातुं खण्डयितुं चर्वयितुमित्यर्थः, क्व शक्तिः स्यात् । अस्मिन् पक्षे दातुमिति "दो अवखण्डने" इत्यस्य रूपम् । तथा अदतः खादतः अस्य वदनस्य, गुणशालि सौरभादिगुणयुक्तम्, पूगं गुवाकफलम्, खण्डयितुं क्व वा प्रभुत्वं सामर्थ्यं स्यात्, अपि तु क्वापि नेत्यर्थः ।

अत्र श्लिष्टा वाच्या जात्युत्प्रेक्षालङ्कारः । प्रसादो गुणः वैदर्भी च रीतिः ।

"पूगः क्रमुकवृन्दयोः" इत्यमरः ॥८३॥

**বাঙ্গালা**—পণ্ডিতগণ তর্কগুলিকেই যাঁহার মুখের দন্ত বলিয়া মনে করিতেন। কারণ, তর্করূপ দন্ত ব্যতীত সে মুখের বাদ করিবার শক্তি কোথায় থাকিত? প্রতিবাদীকে পত্র দিবার শক্তিই বা কোথায় থাকিত? এবং বিচার দ্বারা পণ্ডিতগণকে পরাস্ত করিবার ক্ষমতাই বা কোথায় থাকিত? ॥৮৩॥

**अन्वयः**—सपल्लवं व्यासपराशराभ्यां प्रणीतभावात् उभयीभविष्णु मत्स्य-पद्माद्युपलक्ष्यमाणं तत् पुराणं यत्पाणियुग्मं वहते (इव) ॥८४॥

सपल्लवमिति । पल्लवेन इतिहासादि दृष्टान्तविस्तारेण सहितं सपल्लवम्, अन्यत्र तु समानः पल्लवः किसलयं यस्य तत् । व्यासपराशराभ्यां मुनिभ्यां प्रणीतभावात् प्रणीतत्वात् उभयीभविष्णु महापुराणोपपुराणरूपद्विविधीभूतम् । अन्यत्र व्यासो विस्तारः, परागतः पलायितः आशरो राक्षसो यस्मात् तत् पराशरं शुभलक्षणञ्च ताभ्याम्, उभयीभविष्णु दीर्घं लोकलोभनीयञ्चेति द्विविधं जातम् । यथा मत्स्यपद्मादिभिः शब्दैः आदिपदात् आदित्यादिशब्दैश्च उपलक्ष्यमाणं लोके ज्ञायमानम् । अन्यत्र तु मत्स्यपद्मादिभिश्चिह्नैः उपलक्ष्यमाणमालोक्यमानम् । तत् प्रसिद्धम्, पुराणं पुराणशास्त्रम् यस्याः सरस्वत्याः पाणियुग्मं करतलद्वयम्, वहते सञ्जातम् इव ।

अत्र श्लिष्टा प्रतीयमाना क्रियोत्प्रेक्षालङ्कारः । गुणरीती पूर्ववत् ।

"पल्लवोऽस्त्री किसलये विस्तारे विटपे बले । शृङ्गारेऽलक्तकरागेऽस्त्री" इति "व्यासस्तु पुमान् विस्तारे" च पराशरे" इति च मेदिनी ॥८४॥

**বাঙ্গালা**—ইতিহাস প্রভৃতি দ্বারা বিস্তৃত, ব্যাস ও পরাশরকর্তৃক প্রণীত বলিয়া মহাপুরাণ ও উপপুরাণরূপে পরিণত এবং মৎস্য ও পদ্ম প্রভৃতি শব্দ দ্বারা বিখ্যাত সেই প্রসিদ্ধ পুরাণশাস্ত্রই, যেন যাঁহার পাণিযুগল হইয়াছিল ॥৮৪॥

प्राक् पुष्पवर्षैर्वियतः पतद्भिर्द्रष्टुं न दत्तामथ तद्द्विरेफैः (१)।
तद्भीतिभुग्नेन ततो मुखेन विधेरहो वाञ्छितविघ्नयत्नः ॥ १॥
एतद्वरं स्यामिति राजकेन मनोरथातिथ्यमवापिताय
सखीमुखायोत्सृजतीमपाङ्गात् कर्पूरकस्तूरिकयोः प्रवाहम् ॥१।

अथवा, पातुं सादरं द्रष्टुम्, राजकस्य राजसमूहस्य, यस्या
ततः अंशुकेभ्योऽपि वरं सान्द्रमणिप्रभासु रत्नानां घनदीप्तिषु, इच्छा पातुं राजकस्य आदरवतावकाशम्। पुनः
किन्तु, क्वापि कुत्रापि मुखादिषु, इच्छा सम्यक् पातुं राजकस्य समर्थे, न आदरवतावकाशम्। तथा च
प्रायेण भूषणानां वस्त्रावृततया दर्शनासम्भवात् तानि वस्त्राण्येव राजानः पश्यन्तु। अपि च वस्त्राणामपि
घनमणिकिरणव्याप्ततया तानीव मणिकिरणान् वरं राजानो विलोकयन्तु। किन्तु सर्वथा वसनाद्यावृततया मुखा-
दीन्यङ्गानि ते न पश्यन्तु इति निभाल्येव विधिना वसनमणिप्रभयोर्द्रष्टुं स्थानं दत्तं मुखादौ तु न दत्तमिति
तात्पर्यार्थः।

अत्र आदरवतेति च्छेकानुप्रासोऽलङ्कारः। गुणरीती पूर्ववत् ॥१००॥

বাঙ্গালা—রাজগণকে নয়ন দ্বারা দেখিবার জন্য বিধাতা দময়ন্তীর অলঙ্কার অপেক্ষা বরং বস্ত্রে কিঞ্চিৎ স্থান দান করিয়া ছিলেন; বস্ত্র অপেক্ষাও বরং ঘন মণি কিরণে স্থান দিয়াছিলেন; কিন্তু মুখপ্রভৃতি কোন অঙ্গেই ভাল করিয়া দেখিবার জন্য স্থান দিয়াছিলেন না।১০০॥

অন্বয়:—वियतः पतद्भिः पुष्पवर्षैः प्राक् द्रष्टुं न दत्ताम्, अथ तद्द्विरेफैः द्रष्टुं न दत्ताम्, ततः तद्भीतिभुग्नेन मुखेन द्रष्टुं न दत्ताम्। अहो! विधेः वाञ्छितविघ्नयत्नः ॥१०१॥

प्रागिति। वियत आकाशात्, पतद्भिर्वर्षद्भिः पुष्पवर्षैः प्राक् पूर्वम्, द्रष्टुं न दत्तां राजकायेति शेषः; तत्पुष्पवर्षैरावरणादिति भावः, अथ तदनन्तरम्, तद्द्विरेफैः तत्पुष्पवर्षानुगामिभिर्भ्रमरैः, आवरणादेव द्रष्टुं न दत्ताम्। ततः परञ्च, तेभ्यो भ्रमरेभ्यो या भीतिर्भयं तया भुग्नेन अधो वक्रीकृतेन मुखेन, मुखावच्छद एव द्रष्टुं न दत्ताम्। अतएव अहो विषादे, विधेः, वाञ्छितस्य लोकाभिलषितस्य विषयस्य विघ्ने व्याघाते यत्नो व्यापारः महान् दृश्यते।

अत्र दत्तामित्येकया क्रियया पुष्पवर्षादीनां कर्तॄणामभिसम्बन्धात् तुल्ययोगिता, सामान्येन विशेषसमर्थनरूपो-ऽर्थान्तरन्यासश्चानयोरङ्गाङ्गिभावेन सङ्करः। गुणरीती पूर्ववत् ॥१०१॥

বাঙ্গালা—প্রথমে আকাশ হইতে নিপতিত পুষ্পবৃষ্টিই দময়ন্তীকে দেখিতে দিল না; তাহার পর সেই পুষ্পবৃষ্টির অনুগামী ভ্রমরগণ তাঁহাকে দেখিতে দিল না; তাহার পর আবার সেই ভ্রমরের ভয়ে বক্রীকৃত মুখখানাই তাঁহাকে দেখিতে দিল না। হায়! লোকের অভীষ্ট বিষয়ে বিঘ্ন করিবার জন্য বিধাতার অত্যন্ত যত্ন দেখা যায়।১০১॥

অন্বয়:—वरम् एतत् स्याम् इति राजकेन मनोरथातिथ्यम् अवापिताय सखीमुखाय अपाङ्गात् कर्पूर-कस्तूरिकयोः प्रवाहम् उत्सृजतीम् ॥१०२॥

एतदिति। वरम् अहम् एतत् सखीमुखमेव स्यां भवेयम्, तथात्वे सखीदृग्दमयन्तीकटाक्षलाभसम्भवादिति भावः, इति एवम्प्रकारेण, राजकेन प्रत्येकमेव राजसमूहेन, मनोरथातिथ्यम् अभिलाषविषयताम्, अवापिताय

(१) ... अथ च द्विरेफैः।

तद्गौरसारस्मितविस्मितेन्दु-प्रभाशिरःकम्पकृतोऽभिनेतुम् ।
विपाण्डुतामण्डितचामराली-नटीमराली कृतलास्यलीलाम् ॥१०५॥
तदङ्गभोगावलिगायनीनां मध्ये निरुक्तिक्रमकुण्ठितानाम् ।
स्वयं धृतामप्सरसां प्रसादं ह्रियं हृदो मण्डनमर्पयन्तीम् ॥१०६॥

---

ছলে তাঁহার যে অঙ্গে লোকের নয়ন পড়িয়াছিল, সেই অঙ্গেই তাহা নিশ্চল হইয়া রহিয়াছিল। আর হারের নিম্নদেশে যে মরকতমণি গাঁথা ছিল, তাহার কিরণে তাঁহার নাভিগর্ত্তের অন্ধকারকে বৃদ্ধি করিয়াছিল ॥১০৪॥

**অন্বয়:**—सान्वय एवायं श्लोकः ॥१०५॥

तदिति । तस्या दमयन्त्याः गौरः शुभ्रवर्ण एव सारः श्रेष्ठांशो यस्य तत् गौरसारं यत् स्मितं मन्दहास्यं तेन तत्सौन्दर्य्यदर्शनेनेत्यर्थः विस्मिता आश्चर्य्यान्विता या इन्दुप्रभा चन्द्रस्य ज्योत्स्ना तस्या यः शिरःकम्पो विस्मयसूचकं मस्तकसञ्चालनं तस्य कृतः शोभाः, अभिनेतुम् अनुकर्त्तुम्, विपाण्डुतया विशेषशुभ्रवर्णेन मण्डिता भूषिता या चामराणाम् आली श्रेणी सैव नानामराली बहुतरा हंसस्त्रीभिः कृता लास्यस्य नृत्यस्य लीला विलासो यस्यास्ताम्, मन्दहास्यं कुर्वतीं चामरैर्वीज्यमानाञ्चेति निष्कर्षः ।

अत्र इन्दुप्रभाया विस्मितत्वासम्बन्धेऽपि तत्सम्बन्धादतिशयोक्तिः, चामराल्येव नानामरालीति निरङ्गं केवलरूपकम्, मराली मरालीति यमकम्, इत्यनुप्रासश्चेति संसृष्टिः । गुणरीती पूर्ववत् ॥१०५॥

বাঙ্গালা—দময়ন্তীর মন্দহাস্য দেখিয়া, চন্দ্রের জ্যোৎস্না বিস্ময়াপন্ন হইয়া মস্তকসঞ্চালন করিয়াছিল; সেই শোভার অনুকরণ করিবার জন্য, শুভ্রতাশোভিত চামরশ্রেণীরূপ হংসীগণ নৃত্যলীলা করিতেছিল ॥১০৫॥

**অন্বয়:**—तदङ्गभोगावलिगायनीनां मध्ये निरुक्तिक्रमकुण्ठितानाम् अप्सरसां स्वयं धृतां हृदः मण्डनं ह्रियं प्रसादम् अर्पयन्तीम् (इव) ॥१०६॥

तदिति । तस्या दमयन्त्या अङ्गेषु भुज्यन्त इति भोगाः कुङ्कुमचन्दनादयस्तेषामावली: समूहस्य गायनाः स्तुतिगानकारिण्यस्तासाम् मध्ये स्तनादिशरीरमध्यदेशे, यो निरुक्तिक्रमः सौन्दर्य्यनिरूपणपरिपाटी तत्र तत्स्तुताविव्यर्थः कुण्ठितानामसमर्थानाम्, अप्सरसां स्वर्वेश्यानां स्वयमात्मनैव धृताम्, हृदो हृदयस्य, मण्डनमलङ्कारम् अलङ्काररूपामित्यर्थः, स्त्रीणां लज्जाया अलङ्काररूपत्वादिति भावः, ह्रियं लज्जां लज्जारूपमिति तात्पर्य्यम्, प्रसादमनुग्रहम् अनुग्रहप्रयुक्तदानमित्यर्थः, अर्पयन्तीं ददतीमिव । तथा च अप्सरसः खलु दमयन्त्या अङ्गचारुतानां स्तुतिगानं कर्त्तुं प्रवृत्ताः, किन्तु मध्यभागस्यातिचमत्कारसौन्दर्य्यात् तत्रैव अनायत्ततया तत्स्तुतिगानं कर्त्तुमशक्ता अतएव लज्जिता जाताः । तद्गानसन्तुष्टया दमयन्त्या च स्वहृदयभूषणभूता लज्जा ताभ्यः पारितोषिकभावेन दत्ता इव । अन्योऽपि गानसन्तुष्टो गायकाय हृदयाभरणं पारितोषिकं ददातीति भावः ।

अत्र तत्कुण्ठितत्वासम्बन्धेऽपि तत्सम्बन्धादतिशयोक्तिः, लज्जायां मण्डनत्वारोपादिरङ्गं केवलरूपकम्, अर्पयन्तीमिवेति प्रतीयमाना क्रियोत्प्रेक्षा च, एषां तैलतण्डुलन्यायेन सङ्करः । प्रसादो गुणः, वैदर्भी च रीतिः ॥१०६॥

বাঙ্গালা—উর্বশীপ্রভৃতি অপ্সরাগণ দময়ন্তীর অঙ্গানুলেপনের স্তুতিগান করিতেছিল; কিন্তু তাহারাও তাঁহার শরীরের মধ্যভাগের সৌন্দর্য্যনিরূপণ করিতে পারিয়াছিল না; তথাপি দময়ন্তী নিজধৃত হৃদয়ের অলঙ্কারস্বরূপ লজ্জাকে তাহাদের পারিতোষিক দিতেছিলেন ॥১০৬॥

अङ्गुष्ठमूर्ध्ना च निपीडिताग्रा मध्येन भागेन च मध्यमायाः।
आस्फोटि भैमीमवलोक्य तत्र न तर्जनी केन जनेन नाम॥११०॥
अस्मिन् समाजे मनुजेश्वराणां [१] तां खञ्जनाक्षीमवलोक्य केन
पुनः पुनर्लोलितमौलिना न भ्रुवोरुदक्षेपितरां द्वयी वा॥१११॥
स्वयंवरस्याजिरमाजिहानां विभाव्य भैमीमथ भूमिनाथैः।
हृदं मुदा विह्वलचित्तभावादवादि खण्डाक्षरजिह्मजिह्वम्॥११२॥

---

रोमाणि उद्भावयामि स्मि, न उच्चैर्बभूवुः स्वयं न प्रापुः; असौ तादृशः, कोऽपि भूपो राजा, तत्र सभायाम्, नासीत्, दमयन्त्याः सौन्दर्यदर्शनेन सर्व एव राजानो रोमाञ्चिताङ्गा जाता इत्यर्थः।

अत्र भावोदयालङ्कारः, काव्यलिङ्गेन संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः॥१०९॥

বাঙ্গালা—দময়ন্তীর শরীরের সৌন্দর্য্য দেখিয়া সকলেরই বিস্ময় জন্মিয়াছিল; সুতরাং যাঁহার অঙ্গ, অনুরাগানন্দে উদ্গত রোমাঞ্চ দ্বারা উঁচু নীচু হইয়া প্রীতি লাভ না করিয়াছিল; এমন কোন রাজাই সে সভায় ছিলেন না॥১০৯॥

অন্বয়:—তত্র কেন জনেন ভৈমীম् অবলোক্য অঙ্গুষ্ঠমূর্ধ্না চ মধ্যমায়াঃ মধ্যেন ভাগেন চ নিপীডিতাগ্রা তর্জনী ন আস্ফোটি নাম॥১১০॥

अङ्गुष्ठेति। तत्र सभायाम्, केन जनेन, भैमीं दमयन्तीम्, अवलोक्य, अङ्गुष्ठस्य हस्ताङ्गुलेर्मूर्ध्ना अग्रदेशेन च, मध्यमाया अङ्गुलेः, मध्येन भागेन च, निपीडितम् अवनतीकृतम् अग्रं यस्याः सा तादृशी, तर्जनी अङ्गुली, न आस्फोटि न स्फोटितः न स्फोटनशब्दः कृतः, अपि तु सर्वैरेवेत्यर्थः। अयं खलु रम्यपदार्थदर्शने प्रीतिस्वभाव इत्याशयः। नाम सम्भावनायाम्।

अत्रार्थापत्तिरलङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः॥११०॥

বাঙ্গালা—সেই সভায় কোন্ ব্যক্তি দময়ন্তীকে দেখিয়া, বুড়ো আঙ্গুলের আগা এবং মধ্যম আঙ্গুলের মধ্য ভাগ দিয়া চাপিয়া ধরিয়া, তর্জ্জনী অঙ্গুল না ফুটাইয়াছিল॥১১০॥

অন্বয়:—অস্মিন্ সমাজে মনুজেশ্বরাণাং (মধ্যে) কেন তাং খঞ্জনাক্ষীম্ অবলোক্য পুনঃ পুনঃ লোলিতমৌলিনা (সতা) ভ্রুবোঃ দ্বয়ী বা ন উদক্ষেপিতরাম্॥১১১॥

अस्मिन्निति। अस्मिन् समाजे सभायाम्, मनुजेश्वराणां राज्ञां मध्ये केन जनेन, तां खञ्जनो पक्षिविशेषः तस्येव अक्षिणी चक्षुषी यस्यास्तां दमयन्तीमवलोक्य, पुनः पुनर्लोलितमौलिना कम्पितमस्तकेन सता, भ्रुवोर्द्वयी वा न उदक्षेपितराम् अतिशयेनोत्क्षिप्ता, अपि तु सर्वैरेवेत्यर्थः।

अत्राप्यर्थापत्तिरलङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः॥१११॥

বাঙ্গালা—সেই সভায় রাজাদের মধ্যে কোন্ ব্যক্তি সেই খঞ্জননয়না দময়ন্তীকে দেখিয়া, বার বার মস্তক কম্পিত করিয়া, ভ্রূযুগল উত্তোলিত না করিয়াছিলেন॥১১১॥

অন্বয়:—অথ ভূমিনাথৈঃ ভৈমীং স্বয়ংবরস্য অজিরম্ আজিহানাং বিভাব্য মুদা বিহ্বলচিত্তভাবাৎ হৃদং খণ্ডাক্ষর-জিহ্ম-জিহ্বম্ অবাদি॥১১২॥

स्वयंवरस्येति। अथ राज्ञां रोमाञ्चानन्तरम्, भूमिनाथै राजभिः, भैमीं दमयन्तीम्, स्वयंवरस्य तत्सभायाः, अजिरम् अङ्गनम्, आजिहानाम् आगताम्, विभाव्य दृष्ट्वा, मुदा आनन्देन, विह्वलचित्तभावात् विह्वल-

---

(१) ··· मनुजेश्वरेषु।

**রম্ভাদিলোভাৎ কৃতকর্ম্মভির্মা শূন্যৈব ভূভূৎ সুরভূমিপান্থৈঃ।**
**ইত্যেতয়ালোপি দিবোঽপি পুংসাং বৈমত্যমত্যপ্সরসা রসায়াম্ ॥১১৩॥**
**রূপং যদাকর্ণ্য জনাননেভ্যস্তত্তদ্দিগন্তাদয়মাগমাম।**
**সৌন্দর্য্যসারাদনুভূয়মানাদস্যাস্তদস্মাভিরু নাকনীয়ঃ ॥১১৪॥**

ন্নত্বাৎ, বচ' মত্তানামপ্রকারম্, অর্দ্ধ বচস্য বর্ণৈরর্দ্ধোক্তাদিভিরিত্যর্থঃ, অধরৈর্বর্ণৈঃ জিহ্বা কুটিলা জিহ্ব। ভিন্ন কর্ম্মণি তদ্বয়া তথা, অধাদি উক্তম্।

অত্র ছেকানুপ্রাসবৃত্ত্যনুপ্রাসয়োঃ সংসৃষ্টিঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ।

আজিহ্মানামিতি "ঔত্তাক্ গতৌ" ইত্যস্মাদস্ম প্রয়োগঃ ॥১১২॥

**বাঙ্গালা**—তদনন্তর, দময়ন্তী স্বয়ংবরসভায় প্রাঙ্গণে আসিয়াছেন দেখিয়া আনন্দে ন্তঃকরণ আকুল হওয়ায় রাজারা এই রূপ বলিতে লাগিলেন; তখন অসম্পূর্ণ অক্ষর উচ্চা-র করায় তাঁহাদের জিহ্বা যে বক্র হইতেছিল, তাহা বুঝা গিয়াছিল ॥১১২॥

**অন্বয়ঃ**—রম্ভাদিলোভাৎ কৃতকর্ম্মভিঃ সুর-ভূমি-পান্থৈঃ ভূঃ শূন্যা এব মা ভূৎ ইতি অত্যপ্সরসা এতয়া ংসাং দিবঃ অপি রসায়াং বৈমত্যম্ অলোপি ॥১১৩॥

রম্ভাদীতি। রম্ভাদীনামপ্সরসাং লোভাদ্রাগলোভবশাৎ, কৃতানি কর্ম্মাণি স্বর্গপ্রাপকানি যাগযজ্ঞাদীনি তৈঃ সুরভূমিঃ স্বর্গলোকস্য পান্থৈঃ পথিকৈঃ স্বর্গং গিয়াসুভিরিত্যর্থঃ, ভূঃ পৃথিবী, শূন্যৈব মা ভূদিতি বিচার্য্যে-ত্যর্থঃ, সৌন্দর্য্যে অপ্সরসোঽতিক্রান্তা ইত্যত্যপ্সরাস্তয়া অপ্সরোভ্যোঽপি সুন্দর্য্যেতি তাৎপর্য্যম্, এতয়া দময়ন্ত্যা, ংসাং পৃথিবীস্থিতানাং পুরুষাণাম্, দিবোঽপি স্বর্গমুদ্দিশ্যৈব, রসায়াং পৃথিব্যাম্, বৈমত্যমনিচ্ছা, অলোপি নাশিতা, ত্মাবির্ভাবেন পৃথিব্যামেব স্থিতীচ্ছা স্থাপিতেত্যর্থঃ।

অত্র প্রতীয়মানা ক্রিয়োৎপ্রেক্ষালঙ্কারঃ, বৃত্ত্যনুপ্রাসশ্ছেকানুপ্রাসশ্চ্যেতেষাং সংসৃষ্টিঃ। গুণরীতী পূর্ব্ববৎ।

দিব ইতি "অপীঽবিকরণকর্ম্মণোরপ্রয়োগিণঃ" ইতি পঞ্চমী। অপিরেবার্থে ॥১১৩॥

**বাঙ্গালা**—স্বর্গের রম্ভাপ্রভৃতি অপ্সরাদিগের সম্ভোগলোভে, পুরুষেরা যজ্ঞযাগাদি র্য্য করিয়া, স্বর্গের পথিক হইয়া যাওয়ায় পৃথিবী যেন শূন্য হইয়া যায় না এইরূপ বিবে-না করিয়াই যেন অপ্সরা অপেক্ষাও সুন্দরী ইনি, পুরুষদিগের স্বর্গেচ্ছাবশতঃ পৃথিবীর তি অনিচ্ছা লোপ করিয়াছেন ॥১১৩॥

**অন্বয়ঃ**—বয়ং জনাননেভ্যঃ অস্যা যৎ রূপম্ বহু আকর্ণ্য তত্তদ্দিগন্তাৎ আগমাম, তৎ অস্মাৎ অনু-মানাৎ সৌন্দর্য্যসারাৎ অকনীয়ঃ ন ॥১১৪॥

রূপমিতি। বয়ং জনানামাননেভ্যো মুখেভ্যঃ, অস্যা দময়ন্ত্যাঃ, যৎ রূপং সৌন্দর্য্যম্; বহু প্রচুরং যথা তথা, আকর্ণ্য শ্রুত্বা, তত্তদ্দিগন্তাৎ, আগমাম আগতাঃ স্মঃ; তৎ শ্রুতরূপম্, অস্মাৎ অনুভূয়মানাৎ প্রত্যক্ষ্যমানাৎ, সৌন্দর্য্যসারাৎ, অকনীয়ঃ-অনল্পতরং ন, অপি তু অল্পতরমিত্যর্থঃ। অন্যেষাং রূপং শ্রুতাপেক্ষয়া ল্পং ভবতি; অস্যাস্তু রূপং দৃষ্টাপেক্ষয়া শ্রুতমল্পমিব ভূতমিতি ভাবঃ।

অত্র এতাদৃ শ্রুতরূপাপেক্ষয়া অস্যা আধিক্যপ্রতিপাদনাদ্ব্যতিরেকোঽলঙ্কারঃ। গুণরীতী পূর্ব্ববৎ।

আগমামেতি আঙ্পূর্ব্বগমেঃ অদ্যতন্যা (লুঙঃ) উত্তমপুরুষবহুবচনে পুষাদিত্বাদঙি রূপম্ ॥১১৪॥

**বাঙ্গালা**—আমরা লোকমুখে ইঁহার যে রূপ অনেক শুনিয়া সেই সেই দিক্প্রান্ত হইতে আসিয়াছি; সে রূপ, দৃশ্যমান এই রূপ অপেক্ষা অত্যন্ত অল্পই বটে ॥১১৪॥

रसस्य शृङ्गार इति श्रुतस्य क्व नाम जागर्त्ति महानुदन्वान्।
कस्मादुदस्थादियमन्यथा श्रीर्लावण्यवैदग्ध्यनिधिः पयोधेः॥११५॥

साक्षात् सुधांशुर्मुखमेव भैम्या दिवः स्फुटं लाक्षणिकः शशाङ्कः।
एतद्भ्रुवौ मुख्यमनङ्गचापं पुष्पं पुनस्तद्गुणमात्रवृत्त्या॥११६॥

लभ्ये धृतं कुण्डलिके सुदत्या ताडङ्कयुग्मं स्मरधन्विने किम्।
सव्यापसव्यं विशिखा विसृष्टाः स्तो नैतयोर्यान्ति किमन्तरेण (१)॥११७॥

---

अन्वयः—शृङ्गारः इति श्रुतस्य रसस्य महान् उदन्वान् क्व जागर्त्ति नाम। अन्यथा इयं लावण्यवैदग्ध्यनिधिः श्रीः कस्मात् पयोधेः उदस्थात्॥११५॥

रसस्येति। शृङ्गार इति श्रुतस्य प्रसिद्धस्य, रसस्य महान् उदन्वान् समुद्रः, क्व कस्मिन्नपि स्थाने, जागर्त्ति तिष्ठति, नाम इति वयं सम्भावयाम इत्यर्थः। अन्यथा तादृशोदन्वदभावे, इयं दृश्यमाना, लावण्यवैदग्ध्ययोः सौन्दर्यचातुर्ययोर्निधिराधारीभूता, श्रीरिव श्रीः, कस्मात् पयोधेः समुद्रात्, उदस्थात् उत्थिता। तथा च लक्ष्मीः समुद्रादेवोत्पन्ना, इयञ्च सौन्दर्यचातुर्याभ्यां लक्ष्मीस्वरूपा, विशेषतश्च अतीवशृङ्गाररसोद्दीपिका च। तेन अनया शृङ्गाररससमुद्रादेवोत्पन्नया भवितव्यम्। ततश्च शृङ्गाररसस्य कश्चित् समुद्रः कुत्रचिदस्त्येवेति भावः।

अत्र एतावान् अनुमानमलङ्कारः, पूर्वार्द्धे वाच्या क्रियोत्प्रेक्षा, दमयन्त्याः श्रीरूपविषयनिगरणेन श्रीरूपविषयित्वमुक्तं यातत्योर्भेदाध्यवसायमूला अतिशयोक्तिश्चेत्येषामङ्गाङ्गिभावेन सङ्करः। गुणरीती पूर्ववत्॥११५॥

বাঙ্গালা—শৃঙ্গাররসের মহাসমুদ্র কোন স্থানে আছে ইহা আমরা মনে করি; না হইলে, সৌন্দর্য ও চাতুর্য্যের আশ্রয়ীভূতা এই লক্ষ্মীটি কোন সমুদ্র হইতে উৎপন্ন হইল॥১১৫॥

অন্বয়ঃ—भैम्याः मुखम् एव साक्षात् सुधांशुः; (किन्तु) दिवः सुधांशुः लाक्षणिकः स्फुटम् (यतः शशः) च। एतद्भ्रुवौ मुख्यम् अनङ्गचापम्; पुनः पुष्पं तद्गुणमात्रवृत्त्या अनङ्गचापम्॥११६॥

साक्षादिति। भैम्या दमयन्त्याः, मुखं वदनमेव, साक्षात् प्रत्यक्षः, सुधांशुः अभिधया वृत्त्या सुधांशुपदप्रतिपाद्यमित्यर्थः; सुधावत् हिमकरकान्तिकत्वेन यौगिकत्वात् नारायणादिवदिति भावः। किन्तु दिवः आकाशस्य, सुधांशुः, लाक्षणिको लक्षणया वृत्त्या सुधांशुपदप्रतिपाद्यः। इति स्फुटं व्यक्तम्, यतः स शशाङ्कः शशस्य चिह्नं यस्य सः; शशकलङ्कसत्त्वेन सुधावत् हिमकरकान्तिकत्वाभावादिति भावः। तथा एतस्या दमयन्त्या भ्रुवौ भ्रूयुगलमेव, मुख्यं प्रधानम् अनङ्गचापं कामधनुः अभिधया वृत्त्या कामधनुःपदप्रतिपाद्यमित्यर्थः, निरतिशयकामोद्दीपकत्वादित्याशयः; पुनः किन्तु पुष्पम्, तयोर्भ्रुवोः गुणमात्रवृत्त्या सामान्यकामोद्दीपकतारूपसादृश्यमात्रस्य वर्त्तमानतया हेतुना, अनङ्गचापं लक्षणया अनङ्गचापपदप्रतिपाद्यम्। इत्थं यथाश्रुतार्थपरतयैवोपपत्तौ शब्दार्थ व्याख्यानान्तराणि सुधीभिश्चिन्त्यानि।

अत्र प्रथमे पादे सुधांशुपदस्य मुख्यत्वासम्बन्धेऽपि तत्सम्बन्धादतिशयोक्तिः द्वितीये स्फुटपदोपादानाद्वाच्या गुणोत्प्रेक्षा तदङ्गं हेतुः काव्यलिङ्गञ्च, तृतीयचतुर्थयोरपि तथैवातिशयोक्तिश्चेत्येषां मिथो निरपेक्षतया संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः॥११६॥

বাঙ্গালা—দময়ন্তীর মুখখানিই সাক্ষাৎ চন্দ্র; কিন্তু আকাশের চন্দ্র লাক্ষণিক; যে হেতু তাহাতে শশের চিহ্ন আছে। আর ইহার ভ্রূ দুইটিই মুখ্য কামধনু; কিন্তু ফুলকে যে কামধনু বলে, তাহা গৌণী বৃত্তি দ্বারা॥১১৬॥

---

(१) ... अन्तरेव।

पद्मान् हिमे प्रावृषि खञ्जरीटान् क्षिप्नुर्यमादाय विधिः क्वचित्तान्।
सारेण तेन प्रतिवर्षमुच्चैः पुष्णाति दृष्टिद्वयमेतदीयम् ॥१२०॥
एतद्दृशोरम्बुरुहैर्विशेषं भृङ्गो जनः पृच्छतु तद्गुणज्ञौ।
इतीव धात्राकृत तारकालि-स्त्रीपुंसमाध्यस्थ्यमिहाक्षियुग्मे ॥१२१॥

---

दृष्टिमध्य':, अतएव रजांसि परागा एव रजांसि धुलद्ग्रन्थिबन्धनधनुयष्टर्या पदम् आश्रयस्थानम् पुष्पमयम् आत्मनः पुराणं चापं धनुः, हित्वा परित्यज्य, अस्य अनङ्गस्य धन्विनो धृतौ मुष्टिर्गुणं रज्जुष्टिर्यो येन तत्, अतएव मुष्टिनाच्छन्नत्वात् भ्रूयुग्मस्य मध्यदेशो न दृश्यत इति भावः, भैम्या दमयन्त्याः, भ्रूयुग्मं भ्रूयुगलरूपम्, चापं नूतनं धनुः, आद्रियताम् आदरेण गृह्यताम्। दमयन्त्या भ्रूयुगलमतीवकामोद्दीपकमिति भावः।

अत्र श्लिष्टं निरङ्गं शीर्णरूपकत्वयं पुष्पमयचापत्यागपूर्वकभ्रूयुगलरूपचापादरासम्बन्धेऽपि तत्सम्बन्धाहतिशयोक्तिश्चेत्यनेनालङ्काराङ्गिभावेन सङ्करः। प्रसादो गुणः, वैदर्भी च रीतिः ॥११९॥

বাঙ্গালা—ভ্রমর রূপ ধূলদষ্ট এবং পরাগরূপ গুঁড়োর আশ্রয় পুষ্পময় নিজের পুরাতন ধনু পরিত্যাগ করিয়া, কামদেব অস্য দময়ন্তার ভ্রূযুগলরূপ নূতন ধনু সাদরে গ্রহণ করুন ; সে ধনু মধ্যদেশে ধনুর্দ্ধরের মুষ্টি ধারণ করিতেছে ॥১১৯॥

अन्वयः—विधिः यम् आदाय तान् पद्मान् हिमे खञ्जरीटान् प्रावृषि क्वचित् क्षिप्नुः (सन्) तेन सारेण प्रतिवर्षम् एतदीयं दृष्टिद्वयम् उच्चैः पुष्णाति ॥१२०॥

पद्मानिति। विधिर्ब्रह्मा, यं सारम् आदाय पद्मेभ्यः खञ्जरीटेभ्यश्च गृहीत्वा तान् प्रसिद्धान् पद्मान्, हिमे शीतकाले, तथा तान् खञ्जरीटान् खञ्जनपक्षिणः, प्रावृषि वर्षाकाले, क्वचित् कुत्रचिदपि च दृश्यस्थाने, क्षिप्नुः प्रेरयिता सन्, तेन पद्मखञ्जरीटेभ्यो गृहीतेन, सारेण श्रेष्ठभागेन, प्रतिवर्षं वर्षे वर्षे, एतदीयं दमयन्तीसम्बन्धि, दृष्टिद्वयं नयनयुगलम्, उच्चैरतिशयेन, पुष्णाति वर्द्धयति। अन्योऽपि नश्यतः पदार्थात् सारमादाय तेन वर्त्तमानं पदार्थं पुष्णाति। शीतकाले पद्मानि विनश्यन्ति, वर्षाकाले च खञ्जना न दृश्यन्ते, दमयन्तीनयनद्वयन्तु सर्वदैव समानमिति ताभ्यामितन्नयनद्वयमुत्कृष्टतरमिति भावः।

अत्र विधेः सारापहरणपोषणासम्बन्धेऽपि तत्सम्बन्धादतिशयोक्तिरलङ्कारः। तथा "वा पुंसि पद्मम्" इत्यमरोक्तिप्रामाण्ये सत्यपि कविभिः पद्मशब्दस्य पुंसि अव्यवहृतत्वात् अप्रयुक्तत्वादोषः ; स च पद्मानिति पाठेनैव समाधेयः। गुणरीती पूर्ववत्।

क्षिप्नुरिति "त्रसिगृधिधृषिक्षिपेः क्नुः" इति क्नुप्रत्ययः। तस्य च नित्तादित्वात् कर्मणि षष्ठीनिषेधः ॥१२०॥

বাঙ্গালা—বিধাতা সারাংশ গ্রহণ করিয়া, শীতকালে পদ্মগুলিকে এবং বর্ষাকালে খঞ্জনপাখীগুলিকে কোথাও ফেলাইয়া দিয়া, সেই সারভাগ দ্বারা প্রত্যেক বৎসর ইহার নয়ন দুইটীকে অত্যন্ত পুষ্ট করিয়া থাকেন ॥১২০॥

अन्वयः—जनः अम्बुरुहैः (सह) एतद्दृशोः विशेषं तद्गुणज्ञौ भृङ्गौ पृच्छतु इति (अभिप्रेत्य) इव धाता अक्षियुग्मे तारकालि-स्त्रीपुंसमाध्यस्थ्यम् अकृत ॥१२१॥

एतदिति। जनः उभयोस्तारतम्यजिज्ञासुर्लोकः, अम्बुरुहैः पद्मैः सह, एतस्या दमयन्त्या दृशोश्चक्षुषोः, विशेषं भेदं तारतम्यमिति यावत्, तयोः पद्मनयनयोर्गुणं जानीत इति तद्गुणज्ञौ, अन्यथा तारतम्यकथनासम्भव इति भावः, भृङ्गौ भृङ्गश्च भृङ्गी चेति तौ, पृच्छतु, इति अभिप्रेत्येव, धाता ब्रह्मा, इह अस्मिन्, अक्षियुग्मे दमयन्त्या नयनद्वये, तारके कनीनिके एव अलिस्त्रीपुंसौ भ्रमरदम्पती तयोर्माध्यस्थ्यं मध्यदेशवर्त्तित्वं विचारकत्वञ्च,

छद्मैव तच्छम्बरजं बिसिन्याः स्यात् पद्ममस्यास्तु भुजाग्रसद्म ।
उत्कण्टकादुद्गमनेन नालात् उत्कण्टकं जातमिदं नखैर्यत् ॥१२४॥
आनर्त्ति मर्त्येषु तुलामथास्या योग्येति योग्यानुपलम्भनं नः ।
यद्यस्ति नाके भुवनेऽथवाधस्तदा न तातस्ततलोकबाधः (१) ॥१२५॥

इत्यर्थः ; तथा च लोकैः, तत् पाणिरूपपद्मं विसप्रसूनम्, कर एव वा न गीयते करत्वेन च वा नाख्यायते ; अपितु सर्वैरेव गीयत इत्यर्थः । तथा च पद्मस्य श्रियो ग्रहणेन प्रसिद्धत्वात् एतत्पाणेश्च श्रियो ग्रहणस्य सर्वैरेव दर्शनात् करत्वेन सर्वैर्गानाच्च उक्तरूपा सम्भावना सम्भवत्येवेति भावः । दमयन्त्या बाहुद्वयं मृणालात् पाणिद्वयञ्च पद्मात् सुन्दरतरमिति निष्कर्षः ।

अत्र पूर्वार्द्धे राजयाञ्चबलि-पार्ष्णीभेदेऽपि करपदस्ते ग्रीवामिदाध्यवसायादतिशयोक्तिः, वाच्या क्रियोत्प्रेक्षा च ; द्वितीयार्द्धे च तथैवातिशयोक्तिः, अर्थापत्तिश्चेत्येतेषां संसृष्टिः । वृत्तरीती पूर्ववत् ।

"ग्रहाः पुंसि च भूम्न्येव" इत्यमरः ॥१२३॥

বাঙ্গালা—ইহার বাহুযুগল কি বিজিত মৃণালের নিকট হইতে প্রত্যেকে তাহার পুষ্পরূপ কর গ্রহণ করিয়াছে। কেন না, কোন্ ব্যক্তি এই বাহুযুগলে সেই বিসপ্রসূন পদ্মকে লক্ষ্মীর আশ্রয়রূপে দর্শন না করে ? এবং কর বলিয়া প্রকাশ না করে ? ॥১২৩॥

অন্বয়:—शम्बरजं बिसिन्याः तत् छद्म एव, तु अस्याः भुजाग्रसद्म पद्मं सत् । यत् उत्कण्टकात् नालात् उद्गमनेन जातमिदं नखैः उत्कण्टकम् ॥१२४॥

छद्मेति । शम्बराज्जलात् दैत्याच्च जातमिति शम्बरजम्, बिसिन्याः पद्मिन्याः, तत् पद्मम्, छद्म एव छलमेव मिथ्यैवेत्यर्थः । शम्बरदैत्यजातं मायामयं बलिन जलजातं पद्ममलीकमित्याशयः । तर्हि किं नाम पद्मं सत्यमित्याह—तु किन्तु, अस्या दमयन्त्याः, भुजाग्रं बाहोरग्रमेव सद्म आश्रयस्थानं यस्य तत् तादृशम्, पद्ममेव पाणिरूपं पद्ममेवेत्यर्थः, तत् सत्यं पद्मम् । कथमेतदित्याह—यद् यस्मात्, उद्गतानि कण्टकानि रोमाञ्चा-ख्योत्पादावयवाश्च यस्मिन् तस्मादुत्कण्टकात्, नालात् बाहुदण्डात् पद्मदण्डाच्च, उद्गमनेन उद्भवेन, जातानीव्याः क्रियाः अद्यापि येषां तैः नखैः, उत्कण्टकम् उद्गतकण्टकम् । तथा च कारणगुणाः कार्ये संक्रामन्ति । इत्यञ्च पद्मिनीपद्मं यदि सत्यं भवेत् तदा सकण्टकनालाज्जाततया तत् सकण्टकमेव भवेत् ; किन्तु तत्र सकण्टकमिति मिथ्यैव । अस्याः पाणिपद्मन्तु रोमाञ्चात्मककण्टकयुक्ताद्बाहुनालाज्जातमिति नखात्मककण्टकयुक्तमेव तत् दृश्यत इति तदेव सत्यं पद्ममिति भावः ।

अत्र जलजपद्मापेक्षया पाणिपद्मस्य सत्यत्वेनाधिक्यप्रतिपादनात् व्यतिरेकोऽलङ्कारो हेत्वनुप्राणेन संसृज्यते । वृत्तरीती पूर्ववत् ।

"शम्बरं शम्बरी जले । शम्बरो दैत्यहरिणी" इति त्रिकाण्डशेषः । नखैरिति प्रकृत्यादित्वादभेदे तृतीया ॥१२४॥

বাঙ্গালা—জলজাত পদ্মিনীর পদ্ম, একটা ছলমাত্র ; কিন্তু ইহার বাহুর অগ্রে জাত পদ্মই বাস্তবিক পদ্ম। যেহেতু, এই পাণিপদ্ম, কণ্টকযুক্ত নাল হইতে উৎপন্ন বলিয়া, তীক্ষ্ণ-নখরূপ কণ্টকযুক্তই হইয়াছে ॥১২৪॥

অন্বয়:—मर्त्येषु अस्याः तुलायां योग्या आनर्त्ति इति नः योग्यानुपलम्भनम् । यदि नाके अथवा अधः भुवने अस्ति, तदा तातस्तत-लोक-बाधः न (स्यात्) ॥१२५॥

आनर्त्तीति । मर्त्येषु मर्त्यलोकेषु, अस्या दमयन्त्याः तुलायां सादृश्यार्थम्, योग्या एतत्सदृशी कापि स्त्री,

(१) कौतस्कुतलोकबाधः ।

उन्नम्य धातुस्तुलिता करेण श्रोणौ किमेषा स्तनयोर्गुरुर्वा ।
तेनान्तराले त्रिभिरङ्गुलीनाम् उदीतमध्यत्रिवलीविलासा ॥१२८॥
निजामृतोद्योतनवनीतजाग्रीम् एतां क्रमोन्मीलितपीतिमानम् ।
कृत्वेन्दुरस्या मुखमात्मनाभूत् निद्रालुना दुर्घटमम्बुजेन ॥१२९॥

---

एतस्य विश्रान्तये विश्रामाय धन्वाध्वनि मरुभूमिपथे महीरुहेण वृक्षस्वरूपेण केवलश्यामरसात्मकेनेत्यर्थः, मनसापि, शृङ्गारधारां शृङ्गाररसप्रवाहरूपाम्, इमां न असृजत् ; विपरीतेन विपरीतस्वभावत्वादिति भावः ।

अत्र वेधसः सृष्टिसम्बन्धेऽपि तदसम्बन्धादतिशयोक्तिः, दमयन्तीं प्रति कुण्ठित्वादिपदार्थस्य श्यामीत्वादिपदार्थस्य च हेतुत्वात् काव्यलिङ्गद्वयम्, दमयन्त्यां शृङ्गारधारात्वारोपात् मनसि धन्वाध्वमहीरुहत्वारोपाच्च निरङ्गं केवलरूपकद्वयञ्चेत्येषामङ्गाङ्गिभावेन सङ्करः । अर्थस्य दुरूहत्वादोजो गुणः, गौडी च रीतिः ।

"समानौ मरुधन्वानौ" इत्यमरः ।

एतदनुरूपश्लोको यथा विक्रमोर्वश्याम्— "अस्याः सर्गविधौ" इत्यादि ॥१२७॥

বাঙ্গালা—সর্বদা কুশাঙ্কুরে থাকায় বিধাতার হাত দুইখানা, কঠিন হইয়া রহিয়াছে; সুতরাং তাহা দ্বারা তিনি এই কোমলাঙ্গীকে সৃষ্টি করিতে পারেন নাই। আবার তাঁহার মনটীও, শান্তরসের বিশ্রামের জন্য মরুপথের বৃক্ষস্বরূপ হইয়াছে; অতএব তিনি সে মন দ্বারাও, শৃঙ্গাররসের প্রবাহরূপা এই দময়ন্তীকে সৃষ্টি করিতে সমর্থ হন নাই ॥১২৭॥

অন্বয়—एषा श्रोणौ गुरुः स्तनयोः वा गुरुः (इति ज्ञातुं) धातुः करेण उन्नम्य एषा तुलिता किम् ? तेन अङ्गुलीनां त्रिभिः अन्तरालैः उदीत-मध्य-त्रिवली विलासा किम् ॥१२८॥

उन्नम्येति । एषा दमयन्ती, श्रोणौ नितम्बावच्छेदे, गुरुर्विशालत्वाद्भारवती, स्तनयोः स्तनयुगावच्छेदे वा गुरुः, इति ज्ञातुं धातुर्ब्रह्मणः, करेण हस्तेन, उन्नम्य उत्तोल्य, एषा तुलिता परिमिता किम् । तेनैव हेतुना, अतएवाङ्गुलीनां त्रिभिरन्तरालैरभ्यन्तरैः करणैः, उदीता उत्पन्ना मध्ये मध्यभागे त्रिवलीविलासो यस्याः सा तादृशी जाता किम् ।

अत्र वाक्ययोः क्रियोत्प्रेक्षयोर्मिथो निरपेक्षतया संसृष्टिः । अङ्गुलीनां रामानुत्कण्ठानमपतया न न्यूनपदता-दोषः । प्रसादो गुणः, वैदर्भी च रीतिः ॥१२८॥

বাঙ্গালা—ইনি নিতম্বের দিকে ভারী ? না স্তনের দিকে ভারী ? ইহা জানিবার জন্য বিধাতার হস্তে কি ইহাকে তুলিয়া ধরিয়া মাপিয়াছিল ? সেই জন্যই চারিটী আঙ্গুলের তিনটী ফাঁক দিয়া মধ্যে তিনটি থর বাহির হইয়াছে কি ? ॥১২৮॥

অন্বয়:—इन्दुः एतां निजामृतोद्योतनवनीतजाग्रीं क्रमोन्मीलितपीतिमानं कृत्वा आत्मना अस्याः मुखम् अभूत् । (किन्तु) निद्रालुना अम्बुजेन दुर्घटम् ॥१२९॥

निजेति । इन्दुश्चन्द्रः, एतां दमयन्तीम्, निजादमृतात् उद्यत् उत्पद्यमानं यत् नवनीतं तत्सारस्वरूपाण्युद्यन्ति इति तानि तादृशानि अङ्गानि यस्यास्तां तथोक्ताम्, तथा क्रमेण उन्मीलितः प्रकाशितः पीतिमा पीतत्वं यस्यास्ताम् ; नवनीतस्यापि क्रमेण पीतिमोत्पत्तेरिति भावः, कृत्वा, आत्मना स्वयम्, अस्या दमयन्त्याः, मुखम् अभूत् । ननु पद्ममप्यस्या मुखं भवितुमर्हतीत्याह— निद्रालुना एतदङ्गस्पर्शचन्द्रावलोकनभयात् सङ्कोचशीलेन, अम्बुजेन पद्मेन, दुर्घटम्, अस्या मुखं घटयितुमशक्यम् । अतश्चन्द्र एव मुखमभूदिति भावः । इयं नवनीतवत् कोमलाङ्गी क्रमप्रकाशितपीतवर्णा चन्द्रमुखी चेति निष्कर्षः ।

अत्र इन्दोर्मुखभवनासम्बन्धेऽपि तत्सम्बन्धादतिशयोक्तिः । गुणरीती पूर्ववत् ॥१२९॥

यस्याः स चारुर्मधुरेव कारुः श्वासं वितेने मलयानिलेन।
अमूनि पुष्पैर्विदधेऽङ्गकानि चकार वाचं पिकपञ्चमेन ॥१३०॥
कृतिः स्मरस्यैव न धातुरेषा नास्या हि शिल्पीतरकारुजेयः।
रूपस्य शिल्पे वयसापि वेधा निर्जीयते स स्मरकिङ्करेण ॥१३१॥
गुरोरयोमा भववद्दीप्तकण्ठं निहन्तिगर्वच्छिदया विनेतुम्।
श्रमः स्मरस्यैव भवं विहाय मुक्तिं गतानामनुतापनाय ॥१३२॥

---

বাঙ্গালা—চন্দ্র, স্বকীয় অমৃতজাত ননী দ্বারা ইহার অঙ্গ নির্ম্মাণ করিয়া, তাহাতেই ক্রমশঃ পীতবর্ণ প্রকাশ করিয়া, পরে নিজেই ইহার মুখ হইয়াছেন; কিন্তু চন্দ্রসম্পর্কবশতঃ সঙ্কোচশালী পদ্ম ইহার মুখ নির্ম্মাণ করিতে পারিত না ॥১২৯॥

अन्वयः—चारुः सः मधुः एव यस्याः कारुः; (येन सः) मलयानिलेन श्वासं वितेने, पुष्पैः अमूनि अङ्गकानि विदधे, पिकपञ्चमेन (च) वाचं चकार ॥१३०॥

यस्या इति। चारुः कुसुमविकासादिना मनोहरः। अतएव चार्व्वीमिमां सृजतीति भावः। स प्रसिद्धः मधुर्वसन्त एव, यस्या दमयन्त्याः, कारुः शिल्पी निर्म्मातेति यावत्। येन हि सः, मलयानिलेन दक्षिणवायुना, यस्याः श्वासं वितेने निर्म्ममे; श्वासस्यापि तद्वत् सुखस्पर्शसुगन्धित्वादित्याशयः। पुष्पैः चम्पकादिभिः, अमूनि अङ्गकानि विदधे चकार, चम्पकादीनामिवाङ्गानां पीतत्वकोमलत्वादिदर्शनादित्यभिप्रायः। तथा पिकस्य कोकिलस्य पञ्चमेन स्वरेण, वाचं वाक्यम्, चकार तथैव सुश्राव्यत्वादिति भावः। मलयादीनां वसन्तसम्बन्धित्वात् स एव तां रचयामासेति समुदायाशयः।

अत्र वसन्तस्य निर्म्माणासम्बन्धेऽपि तत्सम्बन्धादतिशयोक्तिरलङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः ॥१३०॥

বাঙ্গালা—মনোহর সেই বসন্তকালই ইহার নির্ম্মাতা। কারণ, সেই বসন্তকাল মলয়বায়ু দ্বারা শ্বাস নির্ম্মাণ করিয়াছে; চম্পকপ্রভৃতি পুষ্প দ্বারা এই সকল অঙ্গ সৃষ্টি করিয়াছে এবং কোকিলের পঞ্চম স্বর দ্বারা বাক্য প্রস্তুত করিয়াছে ॥১৩০॥

अन्वयः—एषा स्मरस्य एव कृतिः, न धातुः। हि अस्याः शिल्पी इतरकारुजेयः न (भवति)। स्मरकिङ्करेण वयसा अपि रूपस्य शिल्पे सः वेधाः निर्जीयते ॥१३१॥

कृतिरिति। एषा दमयन्तीरूपा, स्मरस्य कामस्यैव, कृतिर्निर्म्माणम्; किन्तु न धातुर्ब्रह्मणः कृतिः। तत्रैव हेतुमाह — हि यस्मात्, अस्या दमयन्त्याः, शिल्पी निर्म्माता, इतरैः कारुभिः शिल्पिभिः जेयो जेतव्यो न भवति; अस्याः सर्वस्त्रीसौन्दर्य्यवत्त्वेन एतच्छिल्पिनोऽपि सर्वश्रेष्ठत्वादिति भावः। अथ ब्रह्मापि इतरशिल्पिजेयो न भवतीति तस्यापि कृतित्वसम्भवे स कथं निषिद्ध इत्याह— स्मरस्य कामस्य किङ्करेण अनुचरेण, वयसापि यौवनेनापि, रूपस्य सौन्दर्य्यस्य, शिल्पे निर्म्माणविषये, स वेधा ब्रह्मा, निर्जीयते सर्वथैव पराभूयते। तथा च ब्रह्मणा मानुषमात्रं निर्म्मीयते, तत्सौन्दर्य्यन्तु यौवनेन। तेन स्मरकिङ्करेणैव यौवनेन वेधसो जेयत्वादस्या निषिद्ध इति भावः।

अत्र स्मरस्य कृत्यसम्बन्धेऽपि तत्सम्बन्धादतिशयोक्तिः, तथा धातुर्व्यपोहनात् शाब्दी परिसंख्या चानयोरङ्गाङ्गिभावेन सङ्करः। गुणरीती पूर्ववत् ॥१३१॥

বাঙ্গালা—কামদেবই ইহাকে নির্ম্মাণ করিয়াছেন, কিন্তু ব্রহ্মা নহে। কারণ, ইহার যিনি শিল্পী, তিনি অন্য শিল্পীর জেতব্য হইতে পারেন না। কিন্তু কামকিঙ্কর যৌবন বয়সও, সৌন্দর্য্যনির্ম্মাণের বিষয়ে সর্ব্বত্র সে ব্রহ্মাকে জয় করিয়া থাকে ॥১৩১॥

इयमियमधिरथ्यं याति नैपथ्यमञ्जुर्विशति विशति वेदीमुर्वशी सेयमुर्व्याः।
इति जनजनितैः सानन्दवादैर्विलग्ना नलहृदि परभैमीवर्णनाकर्णनाप्तिः॥१३७॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।
तस्य व्यप्यसमस्यमस्य दशमस्तस्य व्यरंसीन्महा-
काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः॥१३८॥

च "नडेर्धः" इत्यनेन डकारस्य धकारादेशं विधाय पुनः स्थानिवद्भावे सति धान्तत्वाभावात् "धढधमिथ्यसधीर्घोऽधः" इति सूत्रप्रयतकारस्य धकारो भवितुं नार्हति। अतः स्थानिवद्भावस्य दुष्टत्वम्। स च तेन कृतः अतएव च तथाविधविदुषकृदाचर्य्यमिवेति भावः।

अत्र द्वितीयार्थः शब्दशक्तिमूलो वस्तुध्वनिरेव। अस्यार्थस्य दुरूहतया ओजो गुणः, गौड़ी च रीतिः॥१३६॥

বাঙ্গালা—হায়! ইন্দ্র স্বকার্য্য সিদ্ধির জন্য, নিজের উপরে নলের আকৃতি সন্নিবেশিত করিয়া, নলস্বরূপ মনুষ্য হইয়াও, পূর্ব্বশ্লোকের মনুষ্যোচিত ব্যাখ্যা করিয়া, বাস্তবিক ইন্দ্রের ন্যায় দূষিত অভিপ্রায় কেন ব্যক্ত করিলেন॥১৩৬॥

অন্বয়:—নৈপথ্যমঞ্জুঃ इयम् इयम् अधिरथ्यं याति, सा इयम् उर्व्याः उर्वशी वेदीं विशति विशति इति जनजनितैः सानन्दवादैः नलहृदि पर-भैमी-वर्णनाकर्णनाप्तिः विलग्ना॥१३७॥

इयमिति। नैपथ्येन वेशेन मञ्जुर्मनोहरा, इयमियं दमयन्ती, अधिरथ्यं सभामार्गवर्त्तिरथ्यायाम्, याति गच्छति; तथा सा प्रसिद्धा, इयम् उर्व्याः पृथिव्याः उर्वशी दमयन्ती, वेदीं सभावेदीकाम् विशति विशति। एतेन च भाविसम्भ्रमसूचनं वेदितव्यम्। इति इत्थम्, जनजनितैर्लोककृतैः; सानन्दवादैः सहर्षकोलाहलैः, नलस्य हृदि चित्ते विद्यमाना, परैरिन्द्रादिभिः या भैम्या दमयन्त्या वर्णना तस्या आकर्णनं श्रवणं तस्य आप्तिः प्राप्तिः, विलग्ना विघ्निता; तादृशलोककोलाहलेन तिरस्कृतत्वात् तादृशभैमीवर्णनाश्रवणं कर्त्तुं नलो न शशाकेत्यर्थः।

अत्र उर्वशीदमयन्त्योर्भेदेऽपि तदभेदाध्यवसायादतिशयोक्तिश्छेकानुप्रासश्चानयोः संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः। मालिनी वृत्तम्॥१३७॥

বাঙ্গালা—'বেশ ভূষা শোভিতা এই এই দময়ন্তী রাস্তায় যাইতেছেন; এই সেইভূতলের উর্ব্বশী সভাবেদীতে প্রবেশ করিতেছেন প্রবেশ করিতেছেন' এই রূপ লোক কৃত আনন্দ কোলাহল নলের মনে অন্যান্যের কৃত দময়ন্তী বর্ণনার শ্রবণ প্রাপ্তিতে বাধা দিল॥১৩৭॥

श्रीहर्षमिति। न केवलं काव्यमात्रे तर्केऽपि नव्यन्यायेऽपि, यस्मै नितपमः श्रमः शिक्षापरिश्रमो यस्य तस्य, तस्य श्रीहर्षस्य।

श्रीढाकाविभागविक्रमपुरविषयान्तर्गतनिवासी श्रीमान् नवीपुरमतौ हरिदासशर्म्मा।
नाग-श्रुति-विप-शशाङ्कमिते शकाब्दे मासाग्निनेऽष्टमदिने दशमं समाप्तीत्॥

इति महामहोपाध्यायविद्यालङ्कारभट्टाचार्य्यात्मज-श्रीहरिदासशिद्धान्तवागीशभट्टाचार्य्यविरचितायां नैषधचरितटीकायां जयन्तीसमाख्यायां दशमः सर्गः॥०॥

# एकादशः सर्गः ।

——:*:——

तां देवतामिव मुखेन्दुवसत्प्रसादामक्ष्णा रसादनिमिषेण निभालयन्तीम् ।
लाभाय चेतसि धृतस्य वरस्य भीम-भूमीन्द्रजा तदनु राजसभां बभाज ॥१॥
तन्निर्मलावयवभित्तिषु तद्विभूषा-रत्नेषु च प्रतिफलन्निजदेहदम्भात् ।
दृष्ट्या परं न हृदयेन न केवलं तैः सर्वात्मनैव सुतनौ युवभिर्ममज्जे ॥२॥

---

अन्वयः—तदनु भीम-भूमीन्द्रजा चेतसि धृतस्य वरस्य लाभाय मुखेन्दुवसत्प्रसादां रसात् अनिमिषेण अक्ष्णा निभालयन्तीं देवताम् इव तां राजसभां बभाज ॥१॥

अर्थं न यन्त्रं न च वास्तु वास्ति माला महेशोऽसि तथापि मन्त्री ! ।
त्वत्स्तिवनाम्नामपि तादृशस्ते न् चिकीर्षसि ग्रामगुणेऽपि कुर्याः ॥

अथ प्राक् सूचितं राजवर्णनात्मकमेकादशसर्गमारभते तामिति । तदनु तादृशसामन्दवादानन्तरम्, भीम-भूमीन्द्रजा दमयन्ती, चेतसि धृतस्य वरणीयत्वेनावलम्बितस्य, वरस्य जामातुः अभीष्टविषयस्य च, लाभाय, मुखेन्दौ मुखचन्द्रे वसन् तिष्ठन् प्रसाद आह्लादविषयता भक्तदर्शनविषयता च प्रसन्नता यस्यास्ताम्, तथा रसादनुरागात्, अनिमिषेण अक्ष्णा चक्षुषा, निभालयन्तीं दमयन्तीमिव पश्यन्तीम्, अन्यत्र रसात् भक्तं प्रत्येव प्रीतिवशात्, स्वभावत एवानिमिषेण अक्ष्णा भक्तं निभालयन्तीं पश्यन्तीम्, देवतामिव, तां राजसभाम्, बभाज विवेश सिषिवे च ।

अत्र पूर्णोपमालङ्कारः, छेकानुप्रासो वृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ।
अस्मिन् सर्गे वसन्ततिलका वृत्तम् ॥१॥

বাঙ্গালা—তাহার পর দময়ন্তী মনোনীত বর লাভ করিবার জন্য, ইষ্ট দেবতার ন্যায় সেই রাজসভায় প্রবেশ করিলেন। তখন সেই রাজসভার সভ্যগণের মুখচন্দ্রে প্রসন্নতা অবস্থান করিতেছিল এবং সেই সভ্যগণ অনুরাগবশতঃ নির্নিমেষ নয়নে তাঁহাকে দেখিতেছিলেন ॥১॥

অন্বয়ঃ—তৈঃ যুবভিঃ পরং দৃষ্ট্যা ন, কেবলং হৃদয়েন ন, (অপিতু) तन्निर्मलावयवभित्तिषु तद्विभूषा-रत्नेषु च प्रतिफलन्निजदेहदम्भात् सर्वात्मना एव सुतनौ ममज्जे (इव) ॥२॥

तदिति । तैर्युवभिः पतिभिः, परं केवलम्, दृष्ट्या चक्षुषा, सुतनौ दमयन्त्याम्, न ममज्जे न निमग्नम् ; केवलं हृदयेन मनसा च, न ममज्जे ; अपितु तस्या दमयन्त्या निर्मला या अवयवभित्तयः अङ्गप्रत्यङ्गरूपाणि कुड्यानि तासु, तस्या विभूषाणामलङ्काराणां रत्नेषु च, प्रतिफलन्तः प्रतिबिम्बिता भवन्तो ये निजदेहाः स्वस्वशरीराणि तेषां दम्भात् छलात्, सर्वात्मनैव समस्तदेहेनैव, सुतनौ सुन्दर्यां दमयन्त्याम्, ममज्जे इव निमग्नमिव ।

अत्र सापह्नवा प्रतीयमाना क्रियोत्प्रेक्षालङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ॥२॥

বাঙ্গালা—সেই যুবকগণ কেবল নয়ন দ্বারা নহে, কেবল মন দ্বারাও নহে, কিন্তু দময়ন্তীর নির্ম্মল অঙ্গপ্রত্যঙ্গে এবং তাঁহার অলঙ্কারের রত্নে যে নিজ নিজ শরীর প্রতিবিম্বিত হইয়াছিল, তাহার ছলে সর্ব্ব শরীর দ্বারাই যেন দময়ন্তীতে মগ্ন হইয়াছিলেন ॥২॥

द्यामन्तरा वसुमतीमपि गाधिजन्मा यद्यन्यमेव निरमास्यत नाकलोकम् ।
स्वः स यादृगभविष्यदभूद्विमानैः तादृक् तदभ्रमवलोकितुमागतानाम् ॥३॥
कुर्वद्भिरात्मभवसौरभसम्प्रदानं भूपालचक्रचलचामरमारुतौघम् ।
आलोकनार्थं दिवि सञ्चरतां सुराणां तत्रार्च्चनाविधिरभूदधिवासधूपैः ॥४॥
तत्रावनीन्द्रचयचन्दनचन्द्रलेप-नैपथ्यगन्धमयगन्धवहप्रवाहम् ।
आलीभिरापतदनङ्गशरानुकारी (१) संवध्य सौरभमगाहत भृङ्गवर्गः ॥५॥

---

अन्वयः—गाधिजन्मा द्यां वसुमतीम् अपि अन्तरा यदि अन्यम् एव नाकलोकं निरमास्यत, (तदा) सः यादृक् स्वः अभविष्यत्; अवलोकितुम् आगतानां विमानैः तदभ्रं तादृक् स्वः अभूत् ॥३॥

द्यामिति । गाधिजन्मा विश्वामित्रः, द्यां स्वर्गम्, वसुमतीमपि भूतलञ्च, अन्तरा मध्ये स्वर्गमर्त्ययोर्मध्ये इत्यर्थः, यदि अन्यमेव नाकलोकं स्वर्गलोकम्, निरमास्यत त्रिशङ्कोरवस्थानाय अकरिष्यत्, तदा स नाकलोकः, यादृक् स्वः मनोहरः, अभविष्यत्; अवलोकितुं स्वयंवरं द्रष्टुम्, आगतानां देवानाम्, विमानैः करणैः, तदभ्रं स्वयंवरसभाया उपरितनमाकाशम्, तादृक् स्वः अभूत् ।

अत्र "यदि स्यान्मण्डले सक्तम्" इत्यादिवदर्थ-सौदाहरणवत् असम्बन्धे सम्बन्धरूपातिशयोक्तिरलङ्कारः । गुणरीती पूर्ववत् ॥३॥

বাঙ্গালা—স্বর্গ ও মর্ত্ত্য ইহার মধ্য স্থানে বিশ্বামিত্র যদি আর একটা স্বর্গলোক সৃষ্টি করিতেন, তাহা হইলে তাহা যেমন সুন্দর হইত; স্বয়ংবর দেখিবার জন্য আগত দেবগণের বিমানসমূহ দ্বারাও সেই স্বয়ংবরসভার উপরের আকাশ তেমনই সুন্দর হইয়াছিল ॥৩॥

अन्वयः—तत्र भूपाल-चक्र-चल-चामर-मारुतौघम् आत्मभव-सौरभ-सम्प्रदानं कुर्वद्भिः अधिवासधूपैः आलोकनाय दिवि सञ्चरतां सुराणाम् अर्च्चनाविधिः अभूत् ॥४॥

कुर्वद्भिरिति । तत्र स्वयंवरसभायाम्, भूपालचक्रस्य राजगणस्य चलानि आन्दोलनात् चञ्चलानि यानि चामराणि तेषां मारुतौघं वायुसमूहम्, आत्मभवस्य स्वोत्पन्नस्य सौरभस्य सम्प्रदीयते अनेनेति सम्प्रदानं देवगणान्तिके उपस्थितिकारणम्, कुर्वद्भिः चामरवातमवलम्ब्यैव उत्थितैरित्यर्थः, अधिवासधूपैः सभाधिवासनाय निष्पादितैर्धूपैः करणैः, आलोकनाय स्वयंवरदर्शनाय, दिवि आकाशे, सञ्चरतां भ्रमताम्, सुराणां देवानाम्, अर्च्चनाविधिः पूजाविधानमभूत् ।

अत्र अधिवासधूपानां चामरवातमात्रेण सुरसम्बन्धाभावेऽपि तत्सम्बन्धादतिशयोक्तिः स्वरूपात्मेन संसृज्यते । प्रसादो गुणः, पाञ्चाली च रीतिः ॥४॥

বাঙ্গালা—সেই স্বয়ংবরসভায় রাজগণের নিকটে যে সকল চামর আন্দোলিত হইতেছিল, তাহার বায়ুকে যে নিজোৎপন্ন সৌরভের আশ্রয় করিয়াছিল, সেই ধূপ দ্বারাই, দর্শনার্থ আকাশে বিচরণকারী দেবগণের পূজাবিধান হইয়াছিল ॥৪॥

अन्वयः—तत्र आपतदनङ्गशरानुकारी भृङ्गवर्गः आलीभिः अवनीन्द्र-चय-चन्दन-चन्द्र-लेप-नैपथ्य-गन्धमय-गन्धवह-प्रवाहं संवध्य सौरभम् अगाहत ॥५॥

तत्रेति । तत्र स्वयंवरसभायाम्, आपतन्त आगच्छन्तो ये अनङ्गशराः कामबाणास्तान् अनुकरोतीति तथोक्तः, बाणवदेव सवेगमागतत्वात् तथा बाणवदुःखकारित्वाच्चेति भावः, भृङ्गवर्गो भ्रमरसमूहः, आलीभिः श्रेणीभिः ।

---

(१)…शरानुसारी ।

उत्तुङ्गमङ्गलमृदङ्गनिनादभङ्गी-सर्वानुवादविधिबोधितसाधुमेधाः ।
सौधध्वजाः स्फुतपताकतयाभिनिन्युर्मन्ये जनेषु निजताण्डवपण्डितत्वम् ॥६॥
सम्भाषणं भगवती सदृशं विधाय वाग्देवता विनयबन्धुरकन्धरायाः ।
ऊचे चतुर्दशजगज्जनतानमस्या तत्राश्रिता सदसि दक्षिणपक्षमस्याः ॥७॥

अतएव वायुसंरोधनस्य हेत्वाश्रयः । अवनीन्द्रवर्गस्य राजगणस्य यः देहसुगन्धिलेपः चन्दनकर्पूरयोरङ्गरागः स एव लेपस्यं वेगवतः गन्धमयः सौरभव्यापी यो गन्धवहप्रवाहो वायुधारा तम्, संरुध्य आवध्य, सौरभं तस्य गन्धम्, अनाहत आलीढवान् स्मरशस्त्रानामभवदित्यर्थः ।

अत्र वायौपमालङ्कारान्वः कानुप्रासौ वृत्त्यनुप्रासश्चेत्येषां संसृष्टिः । समाससाहुल्यादौर्जो गुणः, गौडी च रीतिः ।

"घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुका" इत्यमरः ॥५॥

বাঙ্গালা—সেই স্বয়ংবরসভায় যে সমস্ত রাজা উপবিষ্ট ছিলেন, তাঁহাদের শরীরে যে সকল চন্দন ও কর্পূরের অনুরাগ ছিল; বায়ুপ্রবাহ তাহার সৌরভ লইয়া ছুটিতেছিল; তখন আগত কামবাণের অনুকারী ভ্রমরগণ শ্রেণী দ্বারা সেই বায়ুপ্রবাহকে অবরুদ্ধ করিয়া, তাহার সৌরভ ভোগ করিতে লাগিল ।৫।

অন্বয়:—उत्तुङ्ग-मङ्गल-मृदङ्ग-निनाद-भङ्गी-सर्वानुवाद-विधि-बोधित साधु मेधाः सौधध्वजाः स्फुतपताकतया जनेषु निज-ताण्डव-पण्डितत्वम् अभिनिन्युः (इत्यहं) मन्ये ॥६॥

उत्तुङ्गेति । उत्तुङ्गा अत्युच्चा ये मङ्गलमृदङ्गानां माङ्गलिकमुरजानां निनादाः शब्दास्तेषां या भङ्गीः प्रकारविशेषास्तासां यः सर्वानुवादविधिः समस्तवाद्यध्वनिसम्बन्धनृत्यव्यापारस्तेन बोधिता सर्वेषु ज्ञापिता साध्वी उत्तमा मेधा स्वकीयधारणाशक्तिर्याभिस्ताः, सौधध्वजाः अट्टालिकाग्रध्वजाः, स्फुता वायुभरेण सञ्चलिताः पताका यासु तासां भावस्तया हेतुना, जनेषु सभ्यजनानां समीपेषु, निजं स्वकीयं ताण्डवस्य उद्धतनृत्यस्य पण्डितत्वं नैपुण्यम्, अभिनिन्युः दर्शयामासुः, इत्यहं मन्ये । ध्वजा अपि नर्तकाः समस्तवाद्यलयानुसरणेन निजमेधां ज्ञापयन्तोऽग्रे आन्दोलनचालनेन सभ्येषु नृत्यकौशलं दर्शयन्ति ।

अत्र एतासु सौधध्वजेषु अप्रस्तुतनर्तकीव्यवहारसमारोपात् समासोक्तिरलङ्कारः, सा च क्रियोत्प्रेक्षा, वृत्त्यनुप्रासच्छेकानुप्रासयोर्वा संसृष्टिः । गुणरीती पूर्ववत् ॥६॥

বাঙ্গালা—স্বয়ংবরসভার অট্টালিকাগুলি, মাঙ্গলিক মৃদঙ্গের উচ্চ ধ্বনির সমস্ত অবস্থার অনুসরণ দ্বারা আপনাদের উত্তম মেধাশক্তি জানাইয়া দিল, চঞ্চল পতাকা দ্বারা সভ্যগণের নিকট আপনাদের নৃত্যকৌশল দেখাইতে লাগিল ইহা আমি মনে করি ।৬।

অন্বয়:—भगवती चतुर्दश-जगज्जनता-नमस्या वाग्देवता विनय-बन्धुर कन्धरायाः अस्याः सदृशं सम्भाषणं विधाय तत्र सदसि अस्याः दक्षिणपक्षम् आश्रिता (सती) ऊचे ॥७॥

सम्भाषणमिति । भगवती षड्विधैश्वर्यशालिनी । अत एवास्या राजगणवर्णनासामर्थ्यमासीदिति भावः । चतुर्दशानां जगतां भुवनानां जनतया लोकसमूहेन नमस्या पूज्या । तेन वाक्षी सत्यमेव वक्ष्यतीत्याशयः । वाग्देवता सरस्वती, विनयेन बन्धुरा नम्रा कन्धरा ग्रीवा यस्यास्तस्याः, अस्या दमयन्त्याः, सदृशं योग्यम्, सम्भाषणं विधाय, तत्र सदसि सभायाम्, अस्या दमयन्त्या एव दक्षिणपक्षं दक्षिणपार्श्वम् आश्रित्य, आश्रिता सती, ऊचे वक्ष्यमाणमुक्तवती ।

अत्र च्छेकानुप्रासोऽलङ्कारः, प्रसादो गुणः, वैदर्भी च रीतिः ॥७॥

**वक्त्रेन्दुसन्निधिनिमीलितदलारविन्द-द्वन्द्वभ्रमक्षममयाञ्जलिमात्तमौली ।**
**कृत्वापराधभयचञ्चलमीक्षमाणा साऽन्यत्र गन्तुममरैः कृपयान्वमानि ॥११॥**
**तत्तद्विरागमुदितं शिबिकाधरस्थाः साक्षाद्विदुः स्म न मनागपि यानधुर्याः ।**
**आसन्ननायकविपक्षमुखानुमेय-भैमीविरक्तिचरितानुमया तु जज्ञुः ॥१२॥**

एषामिति । प्राक् प्रथमं दुग्धा भूमिः पृथिव्येव सुरभिर्धेनुर्येन तस्य, एषां देवानाम्, गिरिः पर्वतस्य सुमेरोः सम्बन्धी, सकलानि रत्नान्येव फलानि यस्य सः, पञ्च शाखा विटपा यस्य सः, पञ्चशाखः सुमेरोरिव पाणि-रिव च स प्रसिद्धः, तरुः कल्पद्रुमः, मुक्ताफलं मौक्तिकम्, फलनेन उत्पादनेन साम्यम् अन्वर्थं नाम मुक्ताफ-लमिति संज्ञा यस्य तत्ताद्दशम्, तन्वन् कुर्वन्, यथा फलनसमयादेव आम्रादिकं फलं व्यपदिश्यते, तथा आत्मना फलनादेव मुक्ताफलमिति व्यपदेशं कुर्वन्नित्यर्थः, तथा पयोभिर्दुग्धमयैर्बिन्दुभिः, छुरितो रञ्जित इव आभाति शोभते । तथा च कल्पद्रुमः सुमेरुपर्वतस्य हस्त इव वर्त्तते ; तत्र च कल्पद्रुमे मुक्ताफलानि जायन्ते ; सुमे-रुश्च गोरूपधरां पृथिवीं दुग्धवान् । एवञ्च तस्य दुग्धस्य बिन्दव इव तानि मुक्ताफलानि तस्मिन् कल्पद्रुमे भासन्ते । तेन च देवानामन्यतमस्य वरणे त्वं खलु तस्य कल्पद्रुमस्य सुमेरोश्च स्वामिनी भवेरिति भावः ।

अत्र भूमिसुरभेरिति निरङ्गं केवलरूपकम्, छुरित इवेति क्रियोत्प्रेक्षा,* छेकानुप्रासश्चेति संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥१०॥

**বাঙ্গালা**—এই দেবগণের সুমেরুপর্বত পূর্বকালে পৃথিবীরূপ ধেনুকে দোহন করিয়া-ছিল ; ইহারই হস্ততুল্য এবং সমস্ত রত্নের উৎপাদক কল্পবৃক্ষ, মুক্তাফলকে (মুক্তাকে) ফল-নবশতঃ অন্বর্থনামা করিয়া, দুগ্ধবিন্দু দ্বারা ব্যাপ্ত হইয়াই যেন শোভা পাইতেছে ॥১০॥

**অন্বয়ঃ**—अथ अमरैः कृपया वक्त्रेन्दु-सन्निधि-निमीलि-दलारविन्द-द्वन्द्व-भ्रम-क्षमम् अञ्जलिम् आत्त-मौली कृत्वा अपराध-भर चञ्चलम् ईक्षमाणा सा अन्यत्र गन्तुम् अन्वमानि ॥११॥

वक्त्रेन्दिति । अथ तदनन्तरम् देवप्रशंसानन्तरम्, अमरैः कृपया, वक्त्रेन्दोः दमयन्त्या एव मुखचन्द्रस्य सन्निधौ तत्सान्निध्यवशादित्यर्थः निमीलीनि दलानि यस्य तत्ताद्दशं यत् अरविन्दद्वन्द्वं पद्मयुगलं तस्य भ्रमे भ्रान्तौ क्षमं योग्यम्, अञ्जलिं पाणियुगलयोगम्, आत्तमौली निजमस्तके कृत्वा, देवानां परित्यागनिबन्धनो योऽपराधस्तस्माद् यद्भयं तेन चञ्चलं, यथा तथा ईक्षमाणा देवानेव पश्यन्ती, सा दमयन्ती, अन्यत्र अपरवरसन्निधाने गन्तुम्, अन्वमानि अनुमता ।

अत्र वक्त्रेन्दिति निरङ्गं केवलरूपकम्, पाणियुगले सङ्कुचितदलपद्मयुगलभ्रमात् भ्रान्तिमान्, छेकानुप्रासश्चेत्येषां संसृष्टिः । गुणरीती पूर्ववत् ॥११॥

**বাঙ্গালা**—তাহার পর, দময়ন্তী আপন মস্তকে অঞ্জলি বন্ধন করিলেন, তখন তাঁহার হস্তযুগল, মুখচন্দ্রের সান্নিধ্য বশতঃ যাহার দলগুলি বুজিয়া গিয়াছে, এ হেন পদ্মযুগলের ভ্রম জন্মাইতে লাগিল ; এই অবস্থায় দময়ন্তী অপরাধভয়ে দেবগণের প্রতি চঞ্চল দৃষ্টিপাত করিতে লাগিলেন ; তখন দেবতারা কৃপাবশতঃ তাঁহাকে অন্যত্র যাইবার অনুমতি দিলেন ॥১১॥

**অন্বয়ঃ**—शिबिकाधरस्थाः यानधुर्याः उदितं तत्तद्विरागं मनाक् अपि साक्षात् न विदुः स्म ; तु आसन्न-नायकविपक्ष-मुखानुमेय-भैमी विरक्ति-चरितानुमया जज्ञुः ॥१२॥

तदिति । शिबिकाया अधरस्थाः अधोदेशवर्त्तिनः, यानधुर्याः शिबिकावाहकाः, उदितं दमयन्त्या उत्पन्नम्, तस्मिन् तस्मिन् देवे विरागं विरक्तिम्, मनाक् अल्पमपि, साक्षात् प्रत्यक्षेण, न विदुः न ज्ञातवन्तः ; शिबिकाया

रक्षःस्वरक्षामवेक्ष्य निजां निवृत्तो विद्याधरेष्वधरतां वपुषैव भैम्याः ।
गन्धर्वसंसदि न गन्धमपि स्वरस्य तस्या विमृश्य विमुखोऽजनि यानिवर्गः (१) ॥१३
दीनेषु सत्स्वपि कृताफलविसरचै-र्यैरदर्शि न मुखं त्रपयैव तस्याः ।
ते जानते स्म सुरशाखिपतिव्रतां किं तां कल्पवीरुधमधिक्षिति नावतीर्णाम् ॥१४॥

---

अधरस्थतया तद्दर्शित्ववर्तित्तस्य अत्यावश्यकत्वादिति भावः । तु किन्तु, आसन्नानां निकटवर्त्तिनां नायकानां देवानां विषण्णानि म्लानानि यानि मुखानि तैः अनुमेयं यत् भैम्या विरक्तिचरितं परित्यागरूपं विरागाचरणं तेन अनुमया अनुमानेन ज्ञः तद्विरागं ज्ञातवन्तः ।

अत्र विरागज्ञानाभावं प्रति शिबिकाधरत्वपदार्थस्य हेतुत्वात् काव्यलिङ्गम्, तत्प्रतिविच्छिन्नविषयात् तादृशचरितेन विरागानुमानाच्च अनुमानमलङ्कारः तयोरनयोरङ्गाङ्गिभावेन सङ्करः । प्रसादो गुणः, वैदर्भी च रीतिः ॥१२॥

**বাঙ্গালা**—সেই সেই দেবতার প্রতি দময়ন্তীর যে বিরাগ জন্মিয়াছিল, তাহা শিবিকার নিম্নস্থ বাহকগণ প্রত্যক্ষভাবে একটুও বুঝিতে পারিয়াছিল না; কিন্তু নিকটবর্ত্তী দেবগণের বিষণ্ণ মুখ দেখিয়া তাহারা দময়ন্তীর বিরাগাচরণের অনুমান দ্বারা সে বিরাগ বুঝিতে পারিয়াছিল ॥১২॥

**अन्वयः**—यानिवर्गः रक्षःसु निजाम् अरक्षाम् अवेक्ष्य निवृत्तः, भैम्याः वपुषा एव विद्याधरेषु अधरताम् अवेक्ष्य निवृत्तः; तस्याः स्वरस्य गन्धम् अपि गन्धर्वसंसदि न विमृश्य विमुखः अजनि ॥१३॥

रक्षःस्विति । यानिनां शिबिकावाहकानां वर्गः गणः, रक्षःसु राक्षसेषु, निजां स्वकीयाम्, अरक्षां भक्षणादीन अरक्षात् रक्षाया अभावम्, अवेक्ष्य पर्य्यालोच्य, निवृत्तः तेभ्यः पराङ्मुखो जातः । भैम्या दमयन्त्याः, वपुषा शरीरेणैव, विद्याधरेषु, अधरतां निकृष्टताम्, अवेक्ष्य निवृत्तः; विद्याधराणां कैषाञ्चित् नरशरीरानुमुखत्वात् कैषाञ्चित् अश्वशरीरनरमुखत्वादिति भावः । तथा तस्याः भैम्याः, स्वरस्य कण्ठध्वनेः, गन्धं लेशमपि, गन्धर्वाणां संसदि समूहे, न विमृश्य अविलोक्य न विविच्य, विमुखस्तत्र गन्तुं पराङ्मुखः, अजनि जातः ।

अत्र भैमीकण्ठस्वरगन्धस्य गन्धर्वसंसदि सम्बन्धेऽपि तदसम्बन्धादतिशयोक्तिरलङ्कारस्तेन काव्यलिङ्गमनुप्राणतया संसृज्यते । गुणरीती पूर्ववत् ॥१३॥

**বাঙ্গালা**—রাক্ষসদের নিকটে গেলে আপনাদের রক্ষাই থাকিবে না ইহা পর্য্যালোচনা করিয়া শিবিকাবাহকগণ সে দিকে গেল না; দময়ন্তীর শরীর দ্বারাই বিদ্যাধরগণ নিকৃষ্ট ইহা বুঝিয়া সে দিকেও গেল না এবং দময়ন্তীর স্বরের লেশও গন্ধর্বগণে নাই ইহা বিবেচনা করিয়া সে দিক যাইতেও পরাঙ্মুখ হইল ॥১৩॥

**अन्वयः**—दीनेषु सत्सु अपि कृताफलविसरचैः यैः त्रपया एव तस्याः मुखं न अदर्शि । ते अधिक्षिति अवतीर्णां सुरशाखिपतिव्रतां कल्पवीरुधं तां किं न जानते स्म ॥१४॥

दीनेष्विति । दीनेषु दरिद्रजनेषु, सत्स्वपि अगण्या विद्यमानेष्वपि, कृता अफला तेभ्यो दानाभावादेव निष्फलीकृता विभवा धनानां रचा यैः तैः, अतीवकृपणैरित्यर्थः, यैः त्रपया लज्जयैव तस्या दमयन्त्याः समीपे, मुखं न अदर्शि न दर्शितम् मुखं परावर्त्य स्थितमिति भावः । अथ तेषां तर्पैव कथमित्याह-ते जनाः, क्षितौ पृथिव्यामित्यधिक्षिति, अवतीर्णाम्, सुरशाखी कल्पतरुरेव पतिस्तस्य व्रतमिव व्रतम् भार्य्यानुरूपं लोकेभ्यो दानं यस्यास्ताम् । किञ्च सुरशाखी कल्पतरुस्तत्सहशी नल इत्यर्थस्तस्य पतिव्रतां साध्वीं भार्य्याम् । कल्पवीरुधं ·

(१) ··· यानवर्गः ।

याम्याः (१) ततः फणभृतामधिपं सुरीघामाञ्जिष्ठमञ्जिमविगाहिपदौष्ठलक्ष्मीम् ।
तां मानसं निखिलवारिचयान्नवीना हंसावलीमिव घना गमयाम्बभूवुः ॥१५॥
यस्या विभोरखिलवाङ्मयविस्तरोऽय-माख्यायते परिणतिर्मुनिभिः पुनः सा ।
उद्गत्वरामृतकरार्द्धपरार्द्ध्यभालां बालामभाषत सभा सततप्रगल्भा ॥१६॥

---

कल्पलतास्वरूपाम्, तां दमयन्तीम्, किं न जानते अ न ज्ञातवन्तः, अपि तु लोकमुखात् जानन्त्येव । तेन बदान्यानिति रूपकस्य बधा अभवत्येवाशयः ।

अत्र मुख्यदर्शनसम्बन्धेऽपि तदसम्बन्धादतिशयोक्तिः अधिविन्यवतीत्वं कल्पवीरुधमिति मिथ्येभेदाध्यवसायरूपा-तिशयोक्तिः छेकानुप्रासश्च त्येषां संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ॥१४॥

বাঙ্গালা—জগতে দরিদ্র লোক থাকিতেও যাহারা বিনা প্রয়োজনে ধন রক্ষা করিয়া থাকে, সেই যক্ষেরা লজ্জাবশতই দময়ন্তীকে মুখ দেখাইয়াছিল না। কারণ, তাহারা, পৃথিবীতে অবতীর্ণা কল্পবৃক্ষের ব্রতধারিণী কল্পলতাস্বরূপা দময়ন্তীকে কি জানিত না ॥১৪॥

অন্বয়ঃ—ततः नवीनाः घनाः हंसावलीं निखिल-वारि-चयात् मानसम् इव, याम्याः माञ्जिष्ठ-मञ्जिम विगाहि-पदौष्ठलक्ष्मीं तां सुरीघात् फणभृताम् अधिपं गमयाम्बभूवुः ॥१५॥

याम्या इति । ततो यक्षसभातिक्रमणानन्तरम्, नवीना नूतनाः, घना मेघाः, हंसानामावलीं श्रेणीम्, निखिलवारिचयात् सकलजलाशयात्, मानसं सरोवरमिव, यानं वहन्तीति याम्याः शिबिकावाहकाः, मञ्जिष्ठया रक्तमिति माञ्जिष्ठं यद्वस्त्रं तस्य मञ्जिमानं सौन्दर्य्यं विगाहते आदत्त इति तादृशी पदौष्ठयोश्चरणतलौष्ठयोर्लक्ष्मीः कान्तिर्यस्यास्ताम् एतच्च हंसावल्योपक्षेऽपि योज्यम् । तां दमयन्तीम्, सुरीघाद् यक्षभातः सकाशात्, फणभृतां सर्पाणाम् अधिपं राजानं वासुकिम्, गमयाम्बभूवुः प्रापयामासुः ।

अत्र श्रौतोपमालङ्कारः, अन्यस्य मञ्जिमानं कथमन्यो विगाहत इति वस्तुसम्बन्धेऽसम्भवम् तत्सादृश्यं बोधय-तीत्यसम्भवद्वस्तुसम्बन्धा निदर्शना, छेकानुप्रासश्च त्येषां संसृष्टिः । गुणरीती पूर्ववत् । "जलधरसमये मानसं यान्ति हंसाः" इति कविसमयात् हंसानां मानसगमनम् ॥१५॥

বাঙ্গালা—তাহার পর, নূতন মেঘ সকল যেমন হংস শ্রেণীকে সকল জলাশয় হইতে নিয়া মানসসরোবরে উপস্থিত করে; শিবিকাবাহকেরাও তেমন দময়ন্তীকে দেবসভা হইতে নিয়া সর্পরাজ বাসুকির নিকট উপস্থিত করিল। তৎকালে দময়ন্তীর চরণতল ও ওষ্ঠযুগল, মঞ্জিষ্ঠা রঞ্জিত বস্ত্রের সৌন্দর্য্য ধারণ করিতেছিল ॥১৫॥

অন্বয়ঃ—मुनिभिः अयम् अखिल-वाङ्मय-विस्तरः विभोः यस्याः परिणतिः आख्यायते, सततप्रगल्भा सा पुनः उद्गत्वरामृतकरार्द्ध-परार्द्ध्य-भालां बालाम् अभाषत ॥१६॥

यस्या इति । मुनिभिर्वाल्मीकिप्रभृतिभिः, अयं दृश्यमानः, अखिलवाङ्मयविस्तरो वेदादिसकलशब्दप्रपञ्चः, विभोः सर्वव्यापिकायाः, यस्याः सरस्वत्याः परिणतिः परिणामः आख्यायते कथ्यते ; सभायां सततं प्रगल्भा धृष्टा सा सरस्वती देवी पुनः, उद्गत्वरम् उदयशीलम् यत् अमृतकरस्य चन्द्रस्य अर्द्धं तद्वत् परार्द्ध्यं सुन्दरत्वात् श्रेष्ठं भालं ललाटदेशो यस्यास्ताम्, बालां दमयन्तीम्, अभाषत उक्तवती ।

अत्र लुप्तोपमालङ्कारो वृत्त्यनुप्रासेन संसृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ।

उद्गत्वरीति उत्पूर्वस्य गमेः "गत्वरश्च" इति क्वरप् प्रत्ययः मकारस्य तकारादेशश्च ॥१६॥

---

(१) कन्याः ... ।

**आश्लेषलग्नगिरिजा कुचकुङ्कुमेन यः पट्टसूत्रपरिवेषशोणशोभः।**
**यज्ञोपवीतपदवीं भजते स शम्भोः सेवासु वासुकिरयं प्रणितः सितश्रीः ॥१७॥**
**पाणौ फणी भजति कङ्कणभूयमस्मै-सोऽयं मनोहरमणीरमणीयमूर्त्तिः (१)।**
**कोटीरबन्धनधनुर्गुणयोगपट्ट-व্যापारपारगममुं भज भूतभर्त्तुः ॥१८॥**

---

বাঙ্গালা—বাল্মীকি প্রভৃতি মহর্ষিরা, এই বেদাদি সমস্ত শব্দ সমূহকে সর্বব্যাপিকা যে সরস্বতী দেবীর পরিণাম বলিয়া থাকেন ; সভায় সর্বদাই প্রগল্‌ভ স্বভাবা সেই সরস্বতী দেবী পুনরায় দময়ন্তীকে বলিতে লাগিলেন। তৎকালে দময়ন্তীর ললাটদেশ, উদীয়মান অর্দ্ধচন্দ্রের ন্যায় মনোহর ছিল ॥১৬॥

অন্বয়:—आश्लेष-लग्न-गिरिजा-कुच-कुङ्कुमेन पट्टसूत्र-परिवेष-शोण-शोभः यः शम्भोः यज्ञोपवीतपदवीं भजते, शम्भोः सेवासु प्रणितः सितश्रीः सः अयः वासुकिः ॥१७॥

आश्लेषेति। आश्लेषेण आलिङ्गनेन लग्नं यत् गिरिजायाः पार्वत्याः कुचयोः स्तनयोः कुङ्कुमं तेन, पट्टसूत्रपरिवेषस्य रक्तवर्णपट्टसूत्रवेष्टनस्येव शोणा रक्तवर्णा शोभा यस्य स तथोक्तो यः शम्भोर्महादेवस्य, यज्ञोपवीतपदवीं यज्ञसूत्रस्थानम् भजते आश्रयति रक्तवसनयोऽपि शम्भुना यो न परित्यज्यत इत्यर्थः ; अतएव शम्भोरेव सेवासु, प्रणितः सर्वदैवासक्तः, सितश्रीः शुभ्रकान्तिश्च, सोऽयं वासुकिर्नागराजः। नागराजत्वात् शम्भोरतिप्रियत्वाच्च अयमेव वरणीय इति ; पर सेवासु प्रणितत्वादयं कथमपि न वरणीय इति च भावः।

अत्र लुप्तोपमालङ्कारस्य वासुकावासञ्जनात् स्मरणाख्या संसृज्यते। गुणरीती पूर्ववत् ॥१७॥

বাঙ্গালা—শিবের আলিঙ্গন দ্বারা পার্বতীর স্তনযুগলের কুঙ্কুম লাগিয়া যাওয়ায় যাঁহার দেহকান্তি, পট্ট সূত্র পরিবেষ্টনের ন্যায় রক্তবর্ণ হইয়া যায়, এ হেন যিনি মহাদেবের যজ্ঞোপবীতস্থান আশ্রয় করিয়াছেন ; শুভ্রকান্তি এবং মহাদেবেরই সেবায় আসক্ত ইনি সেই বাসুকি ॥১৭॥

অন্বয়:—मनोहर-मणी-रमणीय-मूर्त्तिः सः अयं फणी ऐशे पाणौ कङ्कणभूयं भजति। भूतभर्त्तुः कोटीरबन्धन-धनुर्गुण-योगपट्ट-व्यापार-पारगम् अमुं भज ॥१८॥

पाणाविति। मनोहराभिर्मणीभिः रत्नैः रमणीया मूर्त्तिर्यस्य सः, सोऽयं फणी वासुकिः, ऐशे शिवसम्बन्धिनि पाणौ मणिबन्ध इत्यर्थः, कङ्कणभूयं कङ्कणाभरणत्वम्, भजति। अतएव भूतभर्त्तुः शिवस्य, कोटीरबन्धनं जटाजूटबन्धनं धनुर्गुणः योगपट्टमुत्तरीयविशेषश्च तेषां व्यापारो भवनं तत्तद्रूपेणावस्थानमित्यर्थः तस्य पारगं पारदर्शिनं तेषु व्यापारेषु निपुणमिति तात्पर्य्यम्, अमुं वासुकिम्, भज वृणीष्व। परसेवापरायणत्वाद्येव भजेति सूचितम्।

अत्र एकस्य वासुकेः कोटीरबन्धनादावनेकत्रभवनात् पर्य्यायनामालङ्कारः, रमणी-रमणीयेति यमकम्, अर्थे कानुप्रासो वृत्त्यनुप्रासश्चेत्येषां संसृष्टिः। प्रसादो गुणः, पाञ्चाली च रीतिः।

"ऐशं मणिर्मणी" इत्यमरः। अतएव स्त्रियां गद्यादित्वादीप्रत्ययः। "कोटीरः स्याज्जटाजूटः" इति यादवः। कङ्कणभूयमिति "भावे भुवः" इति भवतेर्भावे क्यप् ॥१८॥

বাঙ্গালা—সুন্দর সুন্দর রত্ন দ্বারা যাঁহার আকৃতিটী অতিসুন্দর হইয়াছে, ইনি সেই নাগরাজ বাসুকি মহাদেবের হস্তে কঙ্কণতা অবলম্বন করিয়াছেন। অতএব মহাদেবের

(१)…रमणीयमूर्त्तिः।

धृत्वैकया रसनयामृतमीश्वरेन्दोरप्यन्यया त्वदधरस्य रसं द्विजिह्वः।
आस्वादयन् युगपदेष परं विशेषं निर्णेतुमेतदुभयस्य यदि क्षमः स्यात् ॥१९॥
आशीविषेण रदनच्छददंशदानमेतेन ते पुनरनर्थतया न मन्यम्।
बाधां विधातुमधरे हि न तावकीने पीयूषसारघटिते घटतेऽस्य शक्तिः ॥२०॥

---

জটাজুটবন্ধন করা, ধনুর গুণ হওয়া এবং উত্তরীয় হওয়ার বিষয়ে নিপুণ এই বাসুকিকে তুমি বরণ কর ॥১৮॥

अन्वयः—द्विजिह्वः एकया रसनया ईश्वरेन्दोः अमृतम्, अन्यया अपि त्वदधरस्य रसं धृत्वा युगपत् एव आस्वादयन् एतदुभयस्य विशेषं निर्णेतुं यदि परं क्षमः स्यात् ॥१९॥

धृत्वेति। द्वे जिह्वे यस्य स द्विजिह्वः, प्रकरणादेष वासुकिः सर्पः, एकया रसनया जिह्वया, ईश्वरेन्दोः शिवललाटचन्द्रस्य, अमृतं धृत्वा गृहीत्वा, अन्ययापि रसनया, त्वदधरस्य रसं धृत्वा, युगपदेककालं एव, आस्वादयन् स्वादयन्, एतदुभयस्य चन्द्रामृतत्वदधररसयोः, विशेषं भेदं तारतम्यमिति यावत्, निर्णेतुं यदि परं केवलम्, क्षमः समर्थः स्यात्, न पुनरन्य इत्यर्थः। तेन मनुष्याणां चन्द्रामृतपानासम्भवात्, देवानां तत्सम्भवेऽपि जिह्वाद्वयाभावेन युगपत् पानासम्भवात्, अन्येषां सर्पाणां द्विजिह्वत्वेऽपि शिवकण्ठस्थित्यभावेन चन्द्रामृतपानासम्भवात् अयमेवास्वादयितृत्वया वरणीय इत्याशयः। यतोऽयं द्विजिह्वः खलः, अतः कथमपि न वरणीय इत्यपि सूचितम्॥

अत्र धृत्वेत्येकया क्रियया अमृतरसयोः कर्मतयाभिसम्बन्धात् तुल्ययोगिता, युगपत्तदुभयोरास्वादासम्बन्धेऽपि तत्सम्बन्धादतिशयोक्तिश्चेत्यनयोरङ्गाङ्गिभावेन सङ्करः। प्रसादो गुणः, वैदर्भी च रीतिः ॥१९॥

বাঙ্গালা—দ্বিজিহ্ব এই বাসুকি একটি জিহ্বা দ্বারা শিবের ললাটস্থ চন্দ্রের অমৃত, আর একটি জিহ্বা দ্বারা তোমার ওষ্ঠের রস ধারণ করিয়া, একসাথে সেই দুইটিকে পান করতঃ, সেই দুইটির তারতম্য নিশ্চয় করিতে যদি কেবল সমর্থ হন ॥১৯॥

अन्वयः—आशीविषेण एतेन ते रदनच्छद-दंश-दानम् अनर्थतया पुनः न मन्यम्। हि पीयूष-सार-घटिते तावकीने अधरे बाधां विधातुम् अस्य शक्तिः न घटते ॥२०॥

आशीति। आशी सर्पस्य दन्तस्तत्र विषं यस्य तेन, एतेन, वासुकिना, ते तव, रदनच्छदे अधरे दंशदानं चुम्बनसमये दंशनम्, अनर्थतया अपकृत्यहेतुतया, पुनः मन्तव्यं त्वया न मन्तव्यम्। हि यस्मात्, पीयूषस्य अमृतस्य सारेण संश्लेषभावेन घटिते ब्रह्मणा निर्मिते, तावकीने त्वदीये अधरे, बाधां विषजन्यां पीडाम्, विधातुम्, अस्य वासुकेः, शक्तिः सामर्थ्यम्, न घटते अमृते विषस्य क्रियाया असम्भवात् सम्भवतीत्यर्थः। अतो निःशङ्कमेनं वरीतुमर्हसीति भावः। विषधरत्वादेव च न वरीतुमर्हसीति च सूच्यते।

अत्र अधरस्य पीयूषसारघटितत्वासम्बन्धेऽपि तत्सम्बन्धादतिशयोक्तिरलङ्कारः प्रत्यभावं प्रति अमृतसारघटितपदार्थस्य हेतुत्वात् काव्यलिङ्गञ्चानयोरङ्गाङ्गिभावेन सङ्करः; सोऽपि च वर्णानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः ॥२०॥

বাঙ্গালা—আশীবিষ এই অনন্তনাগ তোমার অধরে যে দংশন করিবেন, সেটাকে তুমি অনর্থ বলিয়া মনে করিও না। কারণ, বিধাতা তোমার অধরটিকে অমৃতের সারাংশ দ্বারা নির্মাণ করিয়াছেন; অতএব তাহাতে বিষের পীড়া জন্মাইতে ইহার ক্ষমতা হইবে না ॥২০॥

पुष्पेषुणा ध्रुवममूनिषुवर्षजन्म-[१] हुङ्कारमन्त्रबलभञ्जितशान्तिशालीन् ।
शृङ्गारसर्गरसिकद्व्यणुकोदरि ! त्वं द्वीपाधिपान्नयनयोर्नय गोचरत्वम् ॥२६॥
स्वादूदके जलनिधौ सवनेन सार्धं भव्या भवन्तु तव वारिविहारलीलाः (२) ।
द्वीपस्य तं पतिममुं भज पुष्करस्य निस्तन्द्रपुष्करतिरस्करणक्षमाक्षि ! ॥२७॥

---

अन्वयः—यः लोकेश-केशव-शिवान् अपि शृङ्गार-सान्तर-नमान्तर-शान्तभावान् चकार, (सः) वितनुः इषुपञ्चकेन जगतां पञ्च इन्द्रियाणि संक्षोभयन् वः मुदं वितनुताम् ॥२५॥

लोकेशेति । हे राजानः ! यो वितनुः कामः, लोकेश-केशव-शिवानपि अन्येषां का कथा स्वयं ब्रह्म-विष्णु-महेश्वरानपि, शृङ्गारेण सान्तरः सव्यवधानो दूरीकृत इत्यर्थः, नमः सातिशयः आन्तरः अन्तःकरणवर्त्ती शान्तभावः शान्तरसो येषां तान् तथोक्तान्, चकार, अशीतसक्तियालीत्यर्थः; अतएव युष्माकं मुदो जननेऽपि शक्तिरस्यास्तीति भावः । स वितनुरनङ्गः कामः, इषूणां बाणानां पञ्चकेन, जगतां जगद्वासिनां जनानाम्, पञ्च इन्द्रियाणि चक्षुरादीनि, संक्षोभयन् विकारयन्; अतएव युष्माकमपि मुदात्मकविकारं जनयिष्यत्येवेत्याशयः; वो युष्माकम्, मुदम् अस्याः सम्मेलनेनानन्दम्, वितनुतां विस्तारेण करोतु । पूर्वश्लोकेन राज्ञां विमनोऽवस्था अनेन च प्रसादिता इति बोध्यम् ।

अत्र इत्यनुप्रासच्छेकानुप्रासयोः संसृष्टिः । माधुर्यं गुणः, वैदर्भी च रीतिः ॥२५॥

বাঙ্গালা—রাজগণ ! যিনি ব্রহ্মা, বিষ্ণু এবং মহাদেবের অন্তঃকরণ হইতেও শৃঙ্গার-রস দ্বারা শান্তরসকে দূরীভূত করিয়া থাকেন ; সে কামদেব পাঁচটী বাণ দ্বারা জগদ্বাসী লোকের পাঁচটী ইন্দ্রিয়কে বিক্ষুব্ধ করতঃ আপনাদের আনন্দ বর্দ্ধন করুন ॥২৫॥

अन्वयः—[हे] शृङ्गार-सर्ग-रसिक-द्व्यणुकोदरि ! त्वं ध्रुवं पुष्पेषुणा इषु-वर्ष-जन्म-हुङ्कार-मन्त्र-बल-भञ्जित-शान्ति-शालीन् अमून् द्वीपाधिपान् नयनयोः गोचरत्वं नय ॥२६॥

पुष्पेषुणेति । शृङ्गारस्य रसस्य सर्गे सृष्टौ रसिकम् अनुरागि यत् द्व्यणुकं तद्वत् सूक्ष्ममुदरं यस्यास्तत्सम्बोधनम् । त्वम्, ध्रुवं निश्चितमेव, पुष्पेषुणा कामेन, इषुवर्षे बाणक्षेपसमये जातो यो हुङ्काररूपो मन्त्रस्तस्य बलेन सामर्थ्येन भञ्जिता भग्नीकृता शान्तिरित्यर्थः. शान्तिशालिनः शान्तरसप्रभावो येषां तान् तथोक्तान्, अतएव द्वीपान्तरादपि त्वदर्थमागतानिति भावः; अमून् द्वीपाधिपान् पुष्करादिद्वीपाधिपतीन्, नयनयोरात्मचक्षुषोः, गोचरत्वं विषयत्वम्, नय प्रापय, सानुरागं पश्येत्यर्थः ।

अत्र पूर्वार्द्धे बाध्या क्रियोत्प्रेक्षा शृङ्गारस्य छेकानुप्रासेन संसृज्यते । शृङ्गारशब्दोपादानात् रसस्य स्वशब्दोक्तिदोषः; स च 'उन्मादसर्ग—' इत्यादिपाठेन समाधेयः । समासबाहुल्यादोजो गुणः, गौडी च रीतिः ।

जन्मेति "अविवक्षिता वा" इति पक्षे इडागमाभावः ॥२६॥

বাঙ্গালা—যে অণুক শৃঙ্গাররস সৃষ্টি করিবার জন্য অভিলাষী, তোমার উদরটী তাহারই তুল্য সূক্ষ্ম । হে দময়ন্তি ! তুমি এই দ্বীপাধিপতিদিগকে দর্শন কর ; বাণবর্ষণ করিবার সময়ে কামদেব যে হুঙ্কারমন্ত্র জপ করিয়া থাকেন, সেই মন্ত্রশক্তিই নিশ্চয় ইহাদের শান্তরসের ক্ষমতাকে নষ্ট করিয়া দিয়াছিল ॥২৬॥

अन्वयः—(हे) निस्तन्द्र-पुष्कर-तिरस्करण-क्षमाक्षि ! स्वादूदके जलनिधौ सवनेन सार्धं तव वारि-विहारलीलाः भव्याः भवन्तु । पुष्करस्य द्वीपस्य पतिं तम् अमुं भज ॥२७॥

---

(१) … इषुवर्षजनि … । (२) …वारिविहारलीलाः ।

सावर्त्तभावभवदद्भुतनाभिकूपे ! स्वर्भौममेतदुपवर्त्तनमात्मनैव ।
स्वाराज्यमर्जयसि न श्रियमेतदीयामेतद्गृहे परिगृहाण शचीविलासम् ॥२८॥
देवः स्वयं वसति तत्र किल स्वयम्भूर्न्यग्रोधमण्डलतले हिमशीतले यः ।
स त्वां विलोक्य निजशिल्पमनन्यकल्पं सर्वेषु कारुषु करोतु कृतीह दर्पम् ॥२९॥

स्वादूदक इति । निस्तन्द्रं प्रस्फुटितं यत् पुष्करं पद्मं तस्य तिरस्कारे निन्दायां क्षमे योग्ये अक्षिणी चक्षुषी यस्यास्तत्सम्बोधनम् । स्वादूनि मधुराणि उदकानि यस्य तस्मिन् जलनिधौ समुद्रे, सवनेन सवननाम्ना राज्ञा, सार्द्धं सह, तव वारिविहारलीला जलविहारकेलयः, भव्या रम्या भवन्तु । अतएव पुष्करस्य द्वीपस्य पतिम्, तं प्रसिद्धम्, अमुं सवनम्, भज वृणु ।

अत्र चतुर्थपादे लुप्तोपमाच्छेकानुप्रासयोरेकाश्रयानुप्रवेशरूपः सङ्करः । प्रसादो गुणः, वैदर्भी च रीतिः ॥२७॥

বাঙ্গালা—দময়ন্তি ! তোমার নয়ন দুইটী প্রস্ফুটিত পদ্মকেও তিরস্কার করিতে সমর্থ; অতএব স্বাদুজলপূর্ণ সমুদ্রে সবনরাজার সহিত তোমার জলবিহারখেলা মনোহরই হইবে। সুতরাং তুমি পুষ্করদ্বীপের অধিপতি প্রসিদ্ধ এই সবনরাজাকে বরণ কর ॥২৭॥

अन्वयः—(हे) सावर्त्त-भाव भवदद्भुत-नाभिकूपे ! स्वः भौमम् एतदुपवर्त्तनम् (अस्ति) ; आत्मना एव स्वाराज्यम् एतदीयां श्रियं न अर्जयसि ? एतद्गृहे शचीविलासं परिगृहाण ॥२८॥

सावर्त्तेति । आवर्त्तेन दक्षिणावर्त्तेन सहेति सावर्त्तं तस्य भावः सावर्त्तत्वमित्यर्थः, तेन भवत् जायमानम् अद्भुतमाश्चर्यं यस्मात् स तादृशो नाभिरूपः कूपो यस्यास्तत्सम्बोधनम् । हे तादृशि ! दमयन्ति ! स्वः स्वर्गस्वरूपम्, भौमं भूतलवर्त्ति, एतस्य सवननाम्नो राज्ञः उपवर्त्तनं देशोऽस्ति । आत्मना स्वयमेव, स्वाराज्यं स्वर्गराज्यस्वरूपाम्, एतदीयाम् एतत्सम्बन्धिनीम्, श्रियं राज्यसम्पदम्, न अर्जयसि एतस्य वरणेन नायत्ती करोषि, अपि तु अर्जयेत्यर्थः । तथा एतस्य सवनस्य गृहे, शच्या विलासं चेष्टितम्, परिगृहाण एतद्वरणे-नाङ्गीकुरु ।

अत्र निरङ्गं केवलरूपकद्वयम्, शचीविलासमिति सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धा निदर्शना, छेकानुप्रासश्च तेषां संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

“नीवृज्जनपदो देशविषयौ तूपवर्त्तनम्” इत्यमरः ॥२८॥

বাঙ্গালা—হে দময়ন্তি ! তোমার নাভিকূপটী দক্ষিণাবর্ত্ত হওয়ায় তাহা হইতে লোকের বিস্ময় জন্মে। এদিকে এই সবনরাজার দেশ, ভূতলে স্বর্গস্বরূপ বিদ্যমান রহিয়াছে। অতএব তুমি নিজেই স্বর্গরাজ্যস্বরূপ এই দেশের রাজ্যসম্পদ অর্জ্জন কর না কেন ? এবং ইঁহার গৃহে শচীর ন্যায় আচরণ করা স্বীকার কর ॥২৮॥

अन्वयः—तत्र हिमशीतले न्यग्रोधमण्डलतले यः स्वयम्भूः देवः स्वयं वसति किल ; सः त्वाम् अनन्यकल्पं निजशिल्पं विलोक्य कृती सन् सर्वेषु कारुषु दर्पं करोतु ॥२९॥

देव इति । तत्र पुष्करद्वीपे, हिमवत् शीतले, छायाबाहुल्यादित्याशयः, न्यग्रोधमण्डलतले मण्डलाकारवटतरु-च्छायायाम्, यः स्वयम्भूर्ब्रह्मा देवः, स्वयं स्वरूपेणैव, वसति । किलेति लोकवार्त्तायाम् । स स्वयम्भूः, त्वा-मनुपमरूपम्, अनन्यकल्पम् अन्यनारीभिरसदृशं सर्वोत्कृष्टमित्यर्थः, निजं शिल्पं निर्माणकर्मपुञ्जम्, विलोक्य,

राजान्तराभिमुखमिन्दुमुखीमथैनां याप्या जना (१) हृदयवेदितयैव निन्युः ।
अन्यानपेक्षितविधौ न खलु प्रधान-वाचां भवत्यवसरः सति भव्यभृत्ये ॥२४॥
ऊचे पुनर्भगवती नृपमन्यमस्यै निर्दिश्य दृश्यतमतावमताश्विनेयम् ।
आलोक्यतामयमये कुलशीलशाली व्रीलानताननमुदस्य निजास्यबिम्बम् ॥२५॥
एतत्पुरःपठदपश्रमवन्दिवृन्द-वाग्डम्बरैरनवकाशतरेऽम्बरेऽस्मिन् ।
तत्पक्षमस्ति पदमेव न मत्पदाना-मर्थोऽपि नार्थपुनरुक्तिषु पातुकानाम् ॥२६॥

**বাঙ্গালা**—বুদ্ধিমতী দময়ন্তী প্রথমে ভ্রূসঞ্চালন, পরে অঙ্গের মোটনাকে (মোড়ামুড়িকে) যবনরাজার পরিত্যাগের সূচক করিলেন। আবার যবনরাজেরও মলিনকান্তিরূপ প্রচুর ধূম, দময়ন্তীর অনাকাঙ্ক্ষাজাত দুঃখানলের চিহ্ন হইল ।৩৩।

**अन्वयः**—अथ याप्याः जनाः हृदयवेदितया एव एनाम् इन्दुमुखीं राजान्तराभिमुखं निन्युः । अन्यानपेक्षितविधौ भव्यभृत्ये सति प्रधानवाचाम् अवसरः न भवति खलु ॥२४॥

राजेति । अथ यवनपरित्यागानन्तरम्, याप्याः शिबिकावाहका जनाः, हृदयवेदितयैव दमयन्त्या अभिप्रायाभिज्ञतयैव हेतुना, एनामिन्दुमुखीं दमयन्तीम्, राजान्तरस्य अभिमुखम् निन्युः । तथा च अन्यस्य प्रभोरनपेक्षितो विधिर्नियोगो येन तस्मिन् तादृशे, भव्यभृत्ये निपुणकिङ्करे, सति विद्यमाने, प्रधानस्य प्रभोर्वाचां नियोगवाक्यानाम्, अवसरो न भवति । खलु वाक्यालङ्कारे ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ॥२४॥

**বাঙ্গালা**—তাহার পর শিবিকা বাহক লোকেরা দময়ন্তীর মনের ভাব বুঝিত বলিয়াই সেই চন্দ্রমুখীকে অন্য রাজার সম্মুখে নিয়া গেল। কারণ, যে ভৃত্য প্রভুর আদেশের অপেক্ষা করে না, সেইরূপ ভাল ভৃত্য থাকিতে, প্রভুর আদেশ বাক্যের অবসর হয় না ।৩৪।

**अन्वयः**—भगवती दृश्यतमतावमताश्विनेयम् अन्यं नृपम् अस्यै निर्दिश्य पुनः ऊचे । अयि ! व्रीलानताननं निजास्यबिम्बम् उदस्य कुलशीलशाली अयम् आलोक्यताम् ॥२४॥

ऊचे इति । भगवती सरस्वती, दृश्यतमतया परमसुन्दरत्वेन अवमतौ अवज्ञातौ आश्विनेयौ अश्विनीकुमारद्वयं येन तम्, अन्यं नृपम्, अस्यै दमयन्त्यै, निर्दिश्य प्रदर्श्य, पुनरूचे वक्ष्यमाणं पुनः कथितवती । अयि दमयन्ति ! व्रीलानतया लज्जया नतम्, निजास्यबिम्बं स्वकीयमुखमण्डलम्, उदस्य उत्तोल्य, अयं नृपः, आलोक्यताम् ।

अत्र अवमतेत्यनेन सादृश्याक्षेपादार्थोपमालङ्कारः, छेकानुप्रासो वृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः । माधुर्यं गुणः, वैदर्भी च रीतिः ॥२५॥

**বাঙ্গালা**—সৌন্দর্য্যে অশ্বিনীকুমার অপেক্ষাও উৎকৃষ্ট অন্য কোন রাজাকে দময়ন্তীকে দেখাইয়া দিয়া সরস্বতী পুনরায় বলিলেন—'দময়ন্তি! লজ্জাবনত নিজ মুখখানিকে উত্তোলন করিয়া, কুলশীলসমন্বিত এই রাজাকে দেখ ।৩৫।

**अन्वयः**—एतत्-पुरः-पठदपश्रम वन्दि-वृन्द-वाग्डम्बरैः अनवकाशतरे अस्मिन् अम्बरे तत्पक्षम् मत्पदानां पदम् एव न अस्ति, अर्थपुनरुक्तिषु पातुकानाम् अर्थः अपि न अस्ति ॥२६॥

एतदिति । एतस्य राज्ञः पुरः सम्मुखे पठत् स्तुवत् अपश्रमम् सत्यगुणवर्णनेन उत्कटचिन्ताया अभावात्

(१) जन्या जनीम् पा० ।

स्पर्शेन तत्र किल तत्तरुपत्रजन्मा यन्मारुतः कमपि सम्मदमादधाति ।
कौतूहलं तदनुभूय विधेहि भूयः श्रद्धां पराशरपुराणकथान्तरेऽपि ॥३९॥
क्षीरार्णवस्तव कटाक्षरुचिच्छटानामम्बे तु तत्र विकटायितमायताक्षि ! ।
वेलावनीवनलतिप्रतिबिम्बचुम्ब-किर्मीरितोर्मिचयचारिमचापलाभ्याम् ॥४०॥ (१)

शाक इति । तत्र शाकद्वीपे, शुकस्य पक्षिणो ये पक्षाः पक्षास्तैर्वा समा तुल्या छविः कान्तिर्यस्यास्तां तादृशीं पत्रमालां पर्णश्रेणीं बिभर्त्तीति सः, शाकसंज्ञः शाको नाम द्रुमः, तव चित्तं हरिष्यति । हरितो दिशः, यस्य शाकतरोः पल्लवीघस्य परिरम्भः स एव दिक्षु विजृम्भितं विलसितं तेन, जगन्तु हरितो हरिद्वर्णाः, श्यामाः सन्तः, अनुवन्ति प्रकाशन्ते । अतो द्रुमस्य वरणमेव तवोचितमिति भावः ।

अत्र श्लिष्टा तत्पल्लवौघस्य श्यामनिमित्तकहरित्त्वासम्बन्धेऽपि तत्सम्बन्धादतिशयोक्तिः, शुकेत्यादावार्थी उपमा, अन्यत्र च्छेकानुप्रासश्चेत्येषां संसृष्टिः । गुणरीती पूर्ववत् ।

मालभारिणी "यदादौ—" इत्यादिना छन्दः ॥३८॥

বাঙ্গালা—সেই শাকদ্বীপে শাকনামে একটী বৃক্ষ আছে; সে শুকপক্ষীর পক্ষের ন্যায় পত্রসমূহ ধারণ করে; সেই শাকবৃক্ষ তোমার মন হরণ করিবে। যে শাকবৃক্ষের পল্লবের সংস্পর্শে সমস্ত দিক্ হরিদ্বর্ণ বলিয়া বিখ্যাত হইয়া শোভা পাইতেছে ॥৩৮॥

অন্বয়:— तत्र तत्तरुपत्रजन्मा मारुतः स्पर्शेन कम् अपि सम्मदं यत् आदधाति किल, तत् कौतूहलम् अनुभूय पराशरपुराणकथान्तरे अपि भूयः श्रद्धां विधेहि ॥३९॥

स्पर्शेनेति । तत्र शाकद्वीपे, तस्य तरोः शाकद्रुमस्य पत्राज्जन्म यस्य स तथोक्तः, मारुतो वायुः, स्पर्शेन, कमपि अनिर्वचनीयम्, सम्मदमानन्दम्, यत् आदधाति जनयति । किलेति पुराणवार्त्तायाम् । तत् कौतूहलं कौतूहलजनकं सम्मदम्, अनुभूय तत्र गमनेन स्वयं प्रत्यक्षीकृत्य, पराशरः पराशरपुत्रो व्यासस्तस्य यत् पुराणं विष्णुपुराणं तस्य कथान्तरेऽपि अन्याख्यानेऽपि, भूयसी चासौ श्रद्धा चेति ताम् अतीवविश्वासमित्यर्थः, विधेहि कुरुष्व ; एकोपाख्यानस्य प्रत्यक्षेण सत्यताया अनुभवात् उपाख्यानान्तरस्य तथैव सत्यता अनुमीयत इति भावः ।

अत्र च्छेकानुप्रासोऽलङ्कारः । माधुर्यं गुणः, वैदर्भी च रीतिः ।

विष्णुपुराण एव तादृशशाकतरूपाख्यानदर्शनादुक्तविधव्याख्यानमेव युक्तम् । तथा च विष्णुपुराणे—

"शाकस्तत्र महान् वृक्षः सिद्धगन्धर्वसेवितः । यत्पत्रवातसंस्पर्शादाह्लादो जायते परः" ॥३९॥

বাঙ্গালা—সেই শাকদ্বীপে সেই শাকবৃক্ষের পত্র হইতে উৎপন্ন বায়ু, যে স্পর্শ দ্বারা অনির্বচনীয় আনন্দ উৎপাদন করে; সেই কৌতুকজনক আনন্দ অনুভব করিয়া, ব্যাস-রচিত বিষ্ণুপুরাণের অন্য উপাখ্যানেও, বিশেষরূপে বিশ্বাস কর ॥৩৯॥

অন্বয়:—(হে) आयताक्षि ! तत्र क्षीरार्णवः वेलावनी-वन-लति-प्रतिबिम्ब-चुम्ब-किर्मीरितोर्मि-चय-चारिम-चापलाभ्यां तव कटाक्षरुचि-च्छटानां विकटायितम् अम्बेतु ॥४०॥

(१) चत्वारि शतमपद्यान् परमिदं पद्यद्वयं पुस्तकान्तरे दृश्यते । यथा—

वाहीकजालपतनीपतनेन पीता जीवातुनामधरतेन पयोरहेन ।
अचिरदयुक्तपरिमलवलितोरुमूर्त्तिं रथ्यानने मधुभिदा भुजगाधिराजः ॥१॥
त्वद्रूपसम्पदवलोकनजातलज्जा पादाम्बुयोरिव करात् विलासनेन ।
भूयाधिवास कमला कलितावधाना निद्रानुबन्धमनु रीयविधुं ययन ॥२॥

द्वीपस्य पश्य दयितं द्युतिमन्तमेतं क्रौञ्चस्य चञ्चलदृगञ्चलविभ्रमेण ।
यन्मण्डले स किल मण्डलसन्निवेशः पाण्डुश्चकास्ति दधिमण्डपयोधिपूरः (१)॥४७॥
तत्राद्रिरस्ति भवदङ्घ्रिविहारयाची क्रौञ्चः स्फुरिष्यति गुणानिव यस्त्वदीयान् ।
हंसावलीकलकलप्रतिनादवाग्भिः स्कन्देषुवृन्दविवरैर्विवरीतुकामः ॥४८॥

---

अत्र श्लेषोपमयोरङ्गाङ्गिभावेन सङ्करालङ्कारः छेकानुप्रासवृत्त्यनुप्रासाभ्यां स सृज्यते । प्रसादो गुणः, वैदर्भी च रीतिः ॥४६॥

বাঙ্গালা—তাহার পর, সরস্বতী দেবী পুনরায় পূর্ববৎ দময়ন্তীকে বলিলেন— "দময়ন্তি! তোমার দন্তসমূহ কুন্দবিম্বনামক রত্নের সমানশোভাসম্পন্ন; তুমি এই ক্রৌঞ্চদ্বীপাধিপতিকে মনে কর; ইনি নিজবাহুবলেই বহুবার শত্রুদিগকে নিবারণ করিয়াছেন ।৪৬।

अन्वयः—(हे दमयन्ति ! त्वं) चञ्चल-दृगञ्चल-विभ्रमेण क्रौञ्चस्य द्वीपस्य दयितम् एतं द्युतिमन्तं पश्य । यन्मण्डले मण्डलसन्निवेशः पाण्डुः सः दधिमण्डपयोधिपूरः चकास्ति किल ॥४७॥

द्वीपस्येति । हे दमयन्ति ! त्वम्, चञ्चलौ यौ दृगञ्चलौ नयनप्रान्तभागौ तयोः विभ्रमेण विलासेन कटाक्षेपेणेत्यर्थः, क्रौञ्चस्य द्वीपस्य, दयितं पतिम्, एतं द्युतिमन्तं द्युतिमन्नामकं राजानम्, पश्य । यस्य द्युतिमतो राज्ञः मण्डले राज्ये, मण्डलो गोलाकारः सन्निवेशो राज्यस्य सर्वासु दिक्षु अवस्थानं यस्य सः, पाण्डुः शुभ्रवर्णः, स प्रसिद्धः, दधिमण्डपयोधेः दधिमण्डोदनामकसमुद्रस्य पूरः प्रवाहः, चकास्ति शोभते । अस्य वरणे तव दधिमण्डोदसमुद्रदर्शनादिकौतुकं भविष्यतीति भावः । किलेति पुराणवार्त्तायाम् ।

अत्र वृत्त्यनुप्रासोऽलङ्कारः । गुणरीती पूर्ववत् ।

"क्रौञ्चद्वीपः समुद्रेण दधिमण्डोदकेन च । आवृतः सर्वतः क्रौञ्चद्वीपतुल्येन मानतः ॥" इति विष्णुपुराणम् ॥४७॥

বাঙ্গালা—দময়ন্তি! তুমি চঞ্চল কটাক্ষপাত দ্বারা ক্রৌঞ্চদ্বীপের অধিপতি এই 'দ্যুতিমান্' নামক রাজাকে দর্শন কর; যাঁহার রাজ্যে গোলাকারে অবস্থিত শুভ্রবর্ণ সেই দধিমণ্ডোদসমুদ্রের প্রবাহ শোভা পাইতেছে ॥৪৭॥

अन्वयः—तत्र भवदङ्घ्रि-विहारयाची क्रौञ्चः अद्रिः अस्ति; यः हंसावली-कलकल-प्रतिनाद-वाग्भिः स्कन्देषु-वृन्द-विवरैः त्वदीयान् गुणान् विवरीतुकामः इव स्फुरिष्यति ॥४८॥

तत्रेति । तत्र क्रौञ्चद्वीपे, भवत्यास्तव अङ्घ्रिविहारं चरणविचरणं याचते तयोरतिकोमलशीतलतया सुखकरत्वात् प्रार्थयत इति स तथोक्तः, क्रौञ्चः क्रौञ्चनामा, अद्रिः कश्चित् पर्वतः, अस्ति । यः क्रौञ्चोऽद्रिः, हंसावल्या हंसश्रेण्याः कलकलस्य कोलाहलस्य प्रतिनादाः स्वाभ्यन्तरे प्रतिध्वनय एव वाचो विवरणवाक्यानि तैर्वाग्भिः, स्कन्दस्य कार्त्तिकेयस्य इषुवृन्देन बाणसमूहेन यानि विवराणि स्वगात्रे छिद्राणि तैः करणैः, त्वदीयान् गुणान्, विवरीतुकामो वर्णयितुकाम इव सन्; स्फुरिष्यति शोभिष्यते । अतएवास्य द्युतिमतो वरणेन तत्र च तव गमनमुचितमिति भावः ।

अत्र प्रतिनादेषु वाक्यत्वारोपस्य प्रकृतविवरणोपयोगितया परिणामालङ्कारः, विवरीतुकाम इवेति वाच्या गुणोत्प्रेक्षा, अनुप्रासे च्छेकानुप्रासश्चेति संसृष्टिः । गुणरीती पूर्ववत् ।

---

(१) 'पूरश्चकास्ति दधिमण्डपयःपयोधेः ।

तस्मिन् गुणैरपि भृते नवनादरिद्रैस्तन्वी न सा हृदयबन्धमवाप भूपे।
दैवे निरुन्धति निबन्धनतां वहन्ति हन्त प्रयासपरुषाणि न पौरुषाणि ॥५३॥
ते निन्यिरे नृपतिमन्यमिमाममुष्मा-दंसावतंसशिबिकांशभृतः पुमांसः।
रत्नाकरादिव तुषारमयूखलेखां लेखानुजीविपुरुषा गिरिशोत्तमाङ्गम् ॥५४॥
एकं क्रमद्रुततनुं धुततूलपक्ष (१) हित्वान्यमन्यमुपसत्य परिव्रजन्तीम् (२)।
एतां जगाद जगदर्चितपादपद्मा पद्मामिवाच्युतभुजान्तरविच्युतां ताम् ॥५५॥

বাঙ্গালা—হংসের ন্যায় শুভ্রবর্ণ এবং নূতন নূতন ইহার যশ, সমুদ্র পার হইবার জন্য এবং এই দেশ হইতে সকল দিগ্‌দিগন্তে অনায়াসে যাইবার জন্য, ক্রমিক ক্ষুদ্র জলাশয়ে সন্তরণ এবং ক্রমিক দূরে গমন দ্বারাই যেন অভ্যাস করিতেছে ॥৫২॥

অন্বয়:—तन्वी सा नवनादरिद्रैः गुणैः भृते अपि तस्मिन् भूपे हृदयबन्धं न अवाप। हन्त दैवे निरुन्धति (सति) प्रयासपरुषाणि पौरुषाणि निबन्धनतां न वहन्ति ॥५३॥

तस्मिन्निति। तन्वी कृशाङ्गी, सा दमयन्ती, नवनादरिद्रैः असंख्यातैः, गुणैः शौर्यसौन्दर्यादिभिः, भृते पूर्णेऽपि, तस्मिन् भूपे राजनि द्युतिमति, हृदयबन्धं मनोऽनुरागरूपं चित्तासङ्गम्, न अवाप न लेभे; तस्मिन्ननुरागाभावेति भावः। हन्त खेदे। दैवे निरुन्धति विघ्नमाचरति सति, प्रयासेन परिश्रमेण परुषाणि कठिनानि, पौरुषाणि पुरुषकाराः, निबन्धनतां कार्यसिद्धिहेतुताम्, न वहन्ति न धारयन्ति। सत्यपि विद्यादिगुणसमुदाये दैवप्रतिबन्धादेव द्युतिमति दमयन्त्यासक्ता नासीदिति भावः।

अत्र गुणपूर्णत्वरूपे कारणे सत्यपि हृदयबन्धरूपतत्कार्याभावाद्विशेषोक्तिरलङ्कारः, सामान्येन विशेषसमर्थन-रूपोऽर्थान्तरन्यासः, छेकानुप्रासो वृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः। प्रसादो गुणः, वैदर्भी च रीतिः ॥५३॥

বাঙ্গালা—সেই দ্যুতিমান্ রাজা অসংখ্যগুণে পরিপূর্ণ হইলেও, কৃশাঙ্গী দময়ন্তী তাঁহাতে মনের আসক্তি পাইলেন না। কারণ, দৈব প্রতিবন্ধক হইলে, পরিশ্রমকর্কশ পুরুষকার কার্য্যসিদ্ধির কারণতা বহন করে না ॥৫৩॥

অন্বয়:—लेखानुजीविपुरुषाः तुषारमयूखलेखां रत्नाकरात् गिरिशोत्तमाङ्गम् इव, अंसावतंसशिबि-कांशभृतः ते पुमांसः इमाम् अमुष्मात् अन्यं नृपतिं निन्यिरे ॥५४॥

त इति। लेखाः देवा एव अनुजीविपुरुषाः सेवकजनाः, तुषारमयूखस्य चन्द्रस्य लेखां कलाम्, रत्नाकरात् समुद्रात्, गिरिशस्य शिवस्य उत्तमाङ्गं मस्तकमिव, अंसयोः स्कन्धयोः अवतंसः भूषणीभूता ये शिबिकायाः अंशाः एकैकभागास्तान् बिभ्रतीति ते तथोक्ताः, ते पुमांसः वाहकपुरुषाः, इमां दमयन्तीम्, अमुष्मात् द्युतिमन्नाम्नो नृपतेः सकाशात्, अन्यं नृपतिम्, निन्यिरे नीतवन्तः। "लेखा अदितिनन्दनाः" इत्यमरः।

अत्र श्रौतोपमालङ्कारः छेकानुप्रासो वृत्त्यनुप्रासश्चेति संसृष्टिः। गुणरीती पूर्ववत् ॥५४॥

বাঙ্গালা—শিবসেবক দেবগণ যেমন পূর্ব্বকালে চন্দ্রের একটী কলাকে সমুদ্র হইতে নিয়া শিবের মস্তকে স্থাপন করিয়াছিলেন; তেমন স্কন্ধযুগলের অলঙ্কারস্বরূপ শিবিকার একৈকাংশবাহী পুরুষগণ দময়ন্তীকে দ্যুতিমান্ রাজার নিকট হইতে নিয়া অন্য রাজার নিকট স্থাপন করিল ॥৫৪॥

(১)···क्रमद्रुततनुं धुततूलपक्ष। (२)···जगदर्चितपादपद्मा।

ईशः कुशेशयसनाभिशये! कुशेन द्वीपस्य लाञ्छिततनोर्यदि वाञ्छितस्ते ।
ज्योतिष्मता सममनेन वनीघनासु तत्त्वं विनोदय घृतोदतटीषु चेतः ॥५६॥
वातोर्मिदोलनचलद्दलमङ्कुलाय-(१) भिन्नाभ्रमण्डलगलज्जलजातसेकः ।
स्तम्बः कुशस्य भविताम्बरचुम्बिचूडश्चिराय तव तत्र नेत्रनिपीयमानः ॥५७॥

---

अन्वयः—जगदर्चितपादपद्मा अद्भुतगुणं धुतदूषणञ्च एकैकं हित्वा अन्यम् अन्यम् उपगम्य परित्यजन्तीम् अच्युतभुजान्तरविच्युतां पद्माम् इव एतां जगाद ॥५५॥

एकैकमिति। जगदर्चिते त्रिभुवनजनपूजिते पादपद्मे यस्याः सा तथोक्ता सरस्वती, अद्भुता गुणा यस्य तम्, धुतानि वर्जितानि दूषणानि येन तञ्च, एकैकं राजानम्, हित्वा परित्यज्य, अन्यमन्यं राजानम्, उपगम्य प्राप्य, तं तमपि परित्यजन्तीम्, अच्युतस्य नारायणस्य भुजयोरन्तरात् मध्यात् विच्युता स्खलिता या श्रीः लक्ष्मीः ताम्, पद्मां लक्ष्मीमिव स्थिताम्, एतां दमयन्तीम्, जगाद वक्ष्यमाणमुवाच। अच्युतेत्यादिना लक्ष्मीरिवास्थिरा इयमपि नल एव स्थिरा नान्यत्रेति सूचितम्।

अत्र पूर्णोपमालङ्कारश्छेकानुप्रासेन संसृज्यते। प्रसादो गुणः, वैदर्भी च रीतिः ॥५५॥

বাঙ্গালা — নারায়ণের বাহুযুগলের মধ্য হইতে স্খলিতা লক্ষ্মীদেবী যেমন আশ্চর্যগুণসম্পন্ন এবং দোষবিহীন একটী একটী রাজাকে পরিত্যাগ করিয়া, অন্য অন্য রাজার নিকট যাইয়া তাঁহাদিগকেও পরিত্যাগ করেন; দময়ন্তীও তেমনই করিতেছিলেন; তখন জগৎপূজ্যা সরস্বতীদেবী তাঁহাকে বলিলেন ॥৫৫॥

অন্বয়ঃ—(हे) कुशेशय-सनाभि-शये! कुशेन लाञ्छिततनोः द्वीपस्य ईशः ते यदि वाञ्छितः, तत् त्वं ज्योतिष्मता अनेन समं वनीघनासु घृतोदतटीषु चेतः विनोदय ॥५६॥

ईश इति। कुशेशयस्य पद्मस्य सनाभिः सदृशः शयः पाणिर्यस्यास्तत्सम्बोधनम्। कुशेन दर्भस्तम्बेन, लाञ्छिता चिह्निता तनुराकारो यस्य तस्य, द्वीपस्य कुशद्वीपस्येत्यर्थः, ईशः पतिः, ते तव, यदि वाञ्छितः पतित्वेनाभीष्टः स्यात्; तत्तदा त्वम्, ज्योतिष्मता ज्योतिष्मन्नामकेन, अनेन कुशद्वीपाधिपतिना, समं सह, वनीभिः क्षुद्रक्षुद्रवनैर्घनासु निरन्तरासु, घृतोदस्य घृतसमुद्रस्य तटीषु तीरेषु, चेतो मनः, विनोदय क्रीडादिना प्रफुल्लय।

अत्र वृत्त्यनुप्रासच्छेकानुप्रासयोः संसृष्टिरलङ्कारः। प्रसादो गुणः, वैदर्भी च रीतिः।

"सहस्रपत्रं कमलं शतपत्रं कुशेशयम्" "पञ्चशाखः शयः पाणिः" इत्यमरः ॥५६॥

বাঙ্গালা—হে পদ্মহস্তে! কুশদ্বীপের অধিপতি যদি তোমার অভীষ্ট হন, তবে তুমি 'জ্যোতিষ্মান্' নামক এই কুশদ্বীপাধিপতির সহিত ক্ষুদ্র ক্ষুদ্র বন পূর্ণ ঘৃতসাগরের তীরে চিত্ত বিনোদন কর ॥৫৬॥

অন্বয়ঃ—(हे दमयन्ति!) तत्र अम्बर-चुम्बि-चूडः वातोर्मिदोलन-चलद्दल-मङ्कुलाय-भिन्नाभ्र-मण्डल-गलज्जल-जातसेकः कुशस्य स्तम्बः नेत्र-निपीयमानः (सन्) तव चिराय भविता ॥५७॥

वातोर्मीति। हे दमयन्ति! तत्र कुशद्वीपे, अम्बरचुम्बिनी आकाशस्पर्शिन्यः अतीवोच्चा इत्यर्थः चूडा अग्राणि यस्य सः, अतएव वातोर्मिभिः वायुवेगैः यत् दोलनं कम्पनं तेन चलन्ति चञ्चलानि दलानि पत्राणि च मङ्कुलायाः सुधारलताग्रात् कृपाणाग्रैः भिन्नं विदारितं यत् अभ्रमण्डलं मेघसमूहस्तस्मात् गलता पतता जलेन जातः सेकः स्नानं यस्य सः, कुशस्य स्तम्बः, नेत्राभ्यां तवैव नयनाभ्यां निपीयमानः सादरं दृश्यमानः सन्, तव चिराय चिरकालाय भविता भविष्यति। अत एतत्स्तम्बमेव ते श्रेयः इति भावः।

---

(१) वातोर्मिदोलनचलत्…।

पाथोधिमाथसमयोत्थितसिन्धुपुत्री (१) पत्पङ्कजार्पणपवित्रशिलासु तत्र ।
पत्या सहावह विहारमयैर्विलासैरानन्दमिन्दुमुखि ! मन्दरकन्दरासु ॥५८॥
आरोहणाय तव सज्ज इवास्ति तत्र सोपानशोभिवपुरश्मबलिच्छटाभिः ।
भोगीन्द्रवेष्टशतघृष्टिकृताभिरब्धि-दुग्धाचलः कनककेतकगात्रगात्रि ! ॥५९॥

अत्र दर्भे मसृणायमानारोपादितरत् कैतवरूपकम्, तादृशेन च मसृणायेन मेघमण्डलभिदाद्यसम्बन्धेऽपि तत्-सम्बन्धादतिशयोक्तिरित्यनयोरङ्गाङ्गिभावेन सङ्करः, सोऽपि च छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते । माधुर्यं गुणः, वैदर्भी च रीतिः ।

"ऊर्मिः स्त्रीपुंसयोर्वीच्यां प्रकाशे वेगभङ्गयोः" इति मेदिनी । "कौक्षेयको मण्डलाग्रः करवालः कृपाणवत्" इत्यमरः ॥५७॥

বাঙ্গালা—চন্দ্রমুখি ! সেই কুশদ্বীপে একটী কুশের ঝাড় তুমি সাদরে দর্শন করিবে ; তাহার অগ্রাগুলি আকাশ স্পর্শ করিয়াছে ; সুতরাং বায়ুবেগে তাহার পত্ররূপ তরবারিগুলি চলিতে থাকিয়া মেঘসমূহকে বিদারিত করে ; তাই সেই মেঘ হইতে জল নির্গত হইয়া সেই ঝাড়টীকে স্নান করাইয়া দেয় ; এহেন কুশের ঝাড় তোমার বিস্ময় জন্মাইবে ॥৫৭॥

অন্বয়—(হে) ইন্দুমুখি ! তত্র পাথোধি মাথ-সময়োত্থিতসিন্ধুপুত্রী-পৎ-পঙ্কজার্পণ পবিত্র-শিলাসু মন্দর-কন্দরাসু পত্যা সহ বিহারময়ৈঃ বিলাসৈঃ আনন্দম্ আবহ ॥৫৮॥

পাথোধীতি । হে ইন্দুমুখি ! চন্দ্রবদনে ! তত্র কুশদ্বীপে, পাথোধেঃ সমুদ্রস্য মাথসময়ে মন্থনকালে উত্থিতা যা সিন্ধুপুত্রী লক্ষ্মীদেবী তস্যাঃ পৎপঙ্কজয়োঃ পাদপদ্মযোঃ অর্পণেন পবিত্রাঃ শিলাঃ প্রস্তরাঃ যাসাং তাসু, মন্দরস্য পর্বতস্য কন্দরাসু গুহাসু, পত্যা সহ, বিহারময়ৈঃ বিহারস্বরূপৈঃ, বিলাসৈঃ কামব্যবহারৈঃ, আনন্দম্ আবহ ধারয় । জ্যোতিষ্মতী বর্ষেণ মন্দরবিহারসম্ভবাৎ লক্ষ্মীতুল্যৈব ভবিষ্যসীতি ভাবঃ ।

অত্র ছেকানুপ্রাসবৃত্ত্যনুপ্রাসয়োঃ সংসৃষ্টিঃ । মাধুর্যং গুণঃ, পাঞ্চালী চ রীতিঃ ॥৫৮॥

বাঙ্গালা—চন্দ্রবদনে ! সেই কুশদ্বীপে সমুদ্রমন্থনের সময় উত্থিত লক্ষ্মীদেবীর পাদপদ্মবিন্যাসে যাহার প্রস্তরগুলি পবিত্র হইয়াছিল, সেই মন্দরপর্বতের গুহাতে পতির সহিত বিলাস দ্বারা আনন্দ অনুভব কর ॥৫৮॥

অন্বয়ঃ—(হে) কনক-কেতক-গাত্র-গাত্রি ! তত্র ভোগীন্দ্র-বেষ্ট-শত-ঘৃষ্টি-কৃতাভিঃ অশ্ম-বলি-চ্ছটাভিঃ সোপানশোভি-বপুঃ অব্ধি দুগ্ধাচলঃ তব আরোহণায় সজ্জঃ ইব অস্তি ॥৫৯॥

আরোহণায়েতি । কনককেতকস্য স্বর্ণবর্ণকেতকীপুষ্পস্য গাত্রবৎ শরীরবৎ গাত্রং শরীরং যস্যাস্তৎসম্বোধনম্ । তত্র কুশদ্বীপে, ভোগীন্দ্রস্য বাসুকেঃ যৎ বেষ্টশতং ফণিকর্ষণসমূহস্তস্য যা ঘৃষ্টয় উভয়তো ঘর্ষণানি তাভিঃ কৃতাভিঃ, অশ্মসু মন্দরস্যৈব গাত্রস্থপ্রস্তরেষু যা বলিচ্ছটা উদরবলিবদ্রেখা বলিসমূহাস্তাভিঃ করণৈঃ, সোপানবৎ শোভি বপুঃ শরীরং যস্য স তাদৃশঃ, অব্ধেঃ সমুদ্রস্য দুগ্ধা মন্থনদণ্ডভূতঃ অচলো মন্দরপর্বতঃ, তব আরোহণায়, সজ্জ উদ্যুক্ত ইব অস্তি । অতস্তদারোহণেন মহানন্দমবাপ্স্যসীতি ভাবঃ ।

অত্র সজ্জমিবাবনা প্রতি সোপানেত্যাদিপদার্থস্য হেতুত্বাৎ কাব্যলিঙ্গম্, তদেব লুপ্তোপমা, বাচ্যা গুণোৎপ্রেক্ষা, ছেকানুপ্রাসবৃত্ত্যনুপ্রাসশ্চ তেষাং সংসৃষ্টিঃ । প্রসাদো গুণঃ, পাঞ্চালী চ রীতিঃ ॥৫৯॥

(१) ··पाथोधिमन्थ ··।

দেবী পবিত্রিতচতুর্ভুজবামভাগা বাগালপৎ পুনরিমাং গরিমাভিরামাম্ ।
অস্যারিনিষ্কৃপকৃপাণসনাথপাণেঃ পাণিগ্রহাদনুগৃহাণ গণং গুণানাম্ ॥৬৪॥
দ্বীপস্য শাল্মল ইতি প্রথিতস্য নাথঃ পাথোধিনা বলয়িতস্য সুরাম্বুনাঽয়ম্ ।
তস্মিন্ বপুষ্মতি ন বিস্ময়সে গুণাব্ধৌ রক্তা তিলপ্রসবনাসিকি ! নাসি কিং বা ? ॥
বিশ্বে ধয়ত্যুদধিমেকতমং বসৎসু যস্তেষু পঞ্চসু বিভায় ন সীধুসিন্ধুঃ ।
তস্মিন্ননেন চ নিজালিজনেন চ ত্বং সার্ধং বিধেহি মধুরা মধুপানকেলীঃ ॥৬৬॥

---

বাঙ্গালা—তাহার পর, প্রার্থী লোক যেমন পূর্বে বিবেচনা না করিয়া, নির্ধনের নিকটেই নীত শ্রীলিঙ্গ-নিক্ষেপণা প্রার্থনাকে সে নির্ধনের নিকট হইতে নিয়া, ধনীর নিকট উপস্থিত করে; তেমন দময়ন্তী চরণসঞ্চালন দ্বারা যাইবার সঙ্কেত জানাইলে, শিবিকাবাহকেরা সেই কৃশাঙ্গীকে সে রাজার নিকট হইতে নিয়া অন্য রাজার নিকট উপস্থিত করিল ॥৬৩॥

অন্বয়ঃ—পবিত্রিত-চতুর্ভুজ-বাম-ভাগা বাক্ দেবী গরিমাভিরামাম্ ইমাং পুনঃ আলপৎ । অরি-নিষ্কৃপ-কৃপাণ-সনাথ-পাণেঃ অস্য পাণিগ্রহাৎ গুণানাং গণম্ অনুগৃহাণ ॥৬৪॥

দেবীতি । পবিত্রিতঃ স্বভাবপবিত্রোঽপি বাগ্রূপেণ পবিত্রীকৃতঃ চতুর্ভুজস্য নারায়ণস্য বামভাগো যয়া সা, অত এবাস্য বাক্যস্য সর্বথা সত্যত্বমিতি ভাবঃ, বাক্ বাক্যরূপা দেবী সরস্বতী, গরিম্না কুলশীলসৌন্দর্যাদিগৌরবেণ অভিরামা মনোহরা তাম্, ইমাং দময়ন্তীম্, পুনরালপৎ উক্তবতী । কিমালপদিত্যাহ—অরিষু শত্রুষু নিষ্কৃপো নির্দয়ো যঃ কৃপাণঃ খড়্গঃ তেন সনাথো যুক্তঃ পাণির্যস্য তস্য মহাবীরস্যেত্যর্থঃ, অস্য শাল্মলীদ্বীপাধিপতেঃ, পাণিগ্রহাৎ আত্মনো গুণানাং গণম্, অনুগৃহাণ যোগ্যে যোজনাৎ দয়স্ব ।

অত্র বৃত্ত্যনুপ্রাসচ্ছেকানুপ্রাসয়োঃ সংসৃষ্টিঃ । মাধুর্যং গুণঃ, বৈদর্ভী চ রীতিঃ ॥৬৪॥

বাঙ্গালা—যিনি নারায়ণের বাম ভাগকে আরও পবিত্র করিয়াছেন, সেই বাগ্দেবী কুলশীলাদিগৌরবে মনোহরা দময়ন্তীকে পুনরায় বলিলেন—শত্রুদের প্রতি নির্দয়-তরবারিধারী এই রাজার পাণিগ্রহণ করিয়া তুমি নিজের গুণগুলির প্রতি অনুগ্রহ কর ॥৬৪॥

অন্বয়ঃ—সুরাম্বুনা পাথোধিনা বলয়িতস্য শাল্মল ইতি প্রথিতস্য দ্বীপস্য নাথঃ অয়ং (বর্ততে) । (হে) তিলপ্রসবনাসিকি ! গুণাব্ধৌ বপুষ্মতি অস্মিন্ কিং ন বিস্ময়সে ? কিং বা রক্তা ন অসি ? ॥৬৫॥

দ্বীপস্যেতি । সুরা মদ্যমিব অম্বু জলং যস্য তেন, পাথোধিনা সমুদ্রেণ, বলয়িতস্য পরিবেষ্টিতস্য, শাল্মল ইতি নাম্না প্রথিতস্য দ্বীপস্য, নাথঃ অধিপতিঃ, অয়ং বর্ততে । হে তিলপ্রসবনাসিকি ! তিলপুষ্পতুল্যনাসিকে ! গুণাব্ধৌ গুণসমুদ্রে, বপুষ্মতি বপুষ্মন্নামকে প্রশস্তবপুঃশালিনি চ, অস্মিন্ রাজনি, কিং ন বিস্ময়সে গুণৈর্বিস্মিতাসি ? কিং বা ন রক্তা অনুরক্তাসি ? গুণসাগরত্বাদস্মিন্ অনুরক্তাপি তবোচিতমিতি ভাবঃ ।

অত্র নাসিকি-নাসিকীতি যমকমলঙ্কারঃ । প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ ॥৬৫॥

বাঙ্গালা—সুরাসমুদ্রকর্তৃক পরিবেষ্টিত শাল্মলনামে প্রথিত দ্বীপের অধিপতি ইনি । হে তিলপুষ্পতুল্যনাসিকে ! গুণসাগর 'বপুষ্মান্' নামক এই রাজার প্রতি কি তুমি বিস্মিতা বা অনুরক্তা হইতেছ না ? ॥৬৫॥

অন্বয়ঃ—বিশ্বে একতমম্ উদধিং ধয়তি (সতি) পঞ্চসু তেষু বসৎসু (সৎসু) যঃ সীধুসিন্ধুঃ ন বিভায়, তস্মিন্ অনেন চ নিজালিজনেন চ সার্ধং ত্বং মধুরাঃ মধুপানকেলীঃ বিধেহি ॥৬৬॥

द्वीपं द्विपाधिपतिमन्दपदे! प्रशास्ति प्लक्षोपलक्षितमयं क्षितिपस्तदस्य।
मेधातिथेस्त्वमुरसि स्फुर दृष्टसौख्या साक्षाद्यथैव कमला यमलार्जुनारेः॥७१॥
प्लक्षे महीयसि महीवलयातपत्रे तत्रेक्षिते खलु तवापि मतिर्भवित्री।
खेलां विधातुमधिशाखविलम्बिदोला-लोलाखिलाङ्गजनताजनितानुरागे॥७२॥
पीत्वा तवाधरसुधां वसुधासुधांशुः न श्रद्दधातु रसमिक्षुरसोदवाराम्।
द्वीपस्य तस्य दधतां परिवेशवेशं सोऽयं चमत्कृतचकोरचलाक्षलक्ष्मि! ॥७३॥

---

अन्वयः—(हे) द्विपाधिपति-मन्द-पदे! अयं क्षितिपः प्लक्षोपलक्षितं द्वीपं प्रशास्ति ; तत् त्वम् अस्य मेधातिथेः उरसि साक्षात् दृष्टसौख्या (सती) यमलार्जुनारेः उरसि कमला, (तथैव) स्फुर ॥७१॥

द्वीपमिति। द्विपाधिपतेर्गजेन्द्रस्येव मन्दं मन्दगमनं पदं चरणं यस्यास्तत्सम्बोधनम्। अयं क्षितिपो राजा, प्लक्षेण पर्कटीवृक्षेण उपलक्षितं चिह्नितम्, द्वीपम्, प्रशास्ति परिपालयति। तत्तस्मात्, त्वम्, अस्य मेधातिथेर्मेधातिथिनाम्नः, उरसि वक्षसि, साक्षात् सर्वप्रत्यक्षभावेन न तु पूर्ववत् भावनामात्रेणेत्यर्थः, दृष्टमनुभावितं सौख्यं सुखं यया सा तादृशी सती, यमलार्जुनयोः यमलार्जुनयोररिः श्रीकृष्णस्य उरसि, यथैव कमला लक्ष्मीः, स्फुरति, तथैव स्फुर विराज।

अत्र श्रौतोपमालङ्कारस्य छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते। गुणरीती, पूर्ववत् ॥७१॥

বাঙ্গালা—হে গজেন্দ্রগমনে! এই রাজা প্লক্ষদ্বীপ শাসন করিয়া থাকেন; অতএব তুমি এই মেধাতিথির বক্ষঃস্থলে প্রত্যক্ষ ভাবে সুখ অনুভব করিয়া, নারায়ণের বক্ষঃস্থলে লক্ষ্মী-দেবীর ন্যায় শোভা পাইতে থাক ॥৭১॥

अन्वयः—तत्र महीवलयातपत्रे अधिशाख-विलम्बि दोलालोलाखिलाङ्ग-जनता-जनितानुरागे महीयसि प्लक्षे ईक्षिते (सति) तव अपि खेलां विधातुं मतिः भवित्री खलु ॥७२॥

प्लक्ष इति। तत्र प्लक्षद्वीपे, महीवलयस्य तत्रत्यभूमण्डलस्य आतपत्रे छत्रस्वरूपे, गोलाकारत्वविस्तृतत्वादिति भावः, अधिशाखं शाखासु विलम्बिनी लम्बमाना या दोला दोलनयन्त्राणि तासु लोलानि चञ्चलानि अखिलानि अङ्गानि यस्याः सा तादृशी या जनता जनसमूहस्तया जनितः अनुरागो यस्मिन् तस्मिन्, तथा महीयसि अति महति, प्लक्षे पर्कटीवृक्षे, ईक्षिते दृष्टे सति, तवापि, खेलां दोलनक्रीडाम्, विधातुं कर्तुम्, मतिरिच्छा, भवित्री खलु भविष्यत्येव, अस्मदीयखेलादर्शने तवापि तल्लौल्योत्पत्तेः स्वाभाविकत्वादिति भावः।

अत्र महीवलयातपत्र इति निरङ्गं केवलरूपकम्, छेकानुप्रासो वृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः। माधुर्यं गुणः, पाञ्चाली च रीतिः ॥७२॥

বাঙ্গালা—সেই প্লক্ষদ্বীপে ভূমণ্ডলের ছত্রস্বরূপ অতিবৃহৎ পাকুড়গাছ দেখিলে, তোমারও অবশ্যই খেলা করিবার ইচ্ছা জন্মিবে। কারণ, সেই পাকুড়গাছের ডালে বহুতর দোলা ঝুলান আছে; সে গুলিতে অনেক লোক দুলিতে থাকায় তাহাদের অঙ্গ সকল চলিতেছে; তাহাতে তোমার অনুরাগ জন্মাইবে ॥৭২॥

अन्वयः—(हे) चमत्कृतचकोर-चलाक्षलक्ष्मि! सः अयं वसुधासुधांशुः तव अधरसुधां पीत्वा तस्य द्वीपस्य परिवेशवेशं दधताम् इक्षुरसोदवारां रसं न श्रद्दधातु ॥७३॥

पीत्वेति। चमत्कृतः सन्ती चकोरः पक्षी तद्वत् चलाक्षसि अतिचञ्चले अक्षिणी नयनयुगलं यस्यास्तस्याः

**भूपेषु तेषु न मनागपि दत्तचित्ता विज्ञे रया वचनदैवतया तयाथ ।**
**वाचोगुणोदयलघूकृतपाणिवीणानिक्वाणया पुनरभाषि मृगीदृशा सा ॥८०॥**
**यन्मौलिरत्नमुदितासि स एष जम्बूद्वीपस्त्वदर्थमिलितैर्युवभिर्विभाति ।**
**दोलायितेन बहुना भवभीतिकम्पः कन्दर्पलोक इव खात् पतितस्त्रुटित्वा ॥८१॥**
**विष्वग्वृतः परिजनैरयमन्तरीपैः तेषामधीश इव राजति राजपुत्रि ! ।**
**हेमाद्रिणा कनकदण्डमयातपत्रः कैलासरश्मिचय-चामरचक्र-चिह्नः ॥८२॥**

---

স্কন্ধদেশে শিবিকার পায়াগুলি সমানভাবে ছিল, সেই শিবিকাবাহকেরা দময়ন্তীকে, জগতের একমাত্র প্রদীপস্বরূপ সেই রাজাদিগের নিকট হইতেও সরাইয়া নিল ॥৭৯॥

**अन्वयः**—अथ विज्ञे रया वाचो-गुणोदय-लघूकृत पाणि-वीणा-निक्वाणया तया वचनदैवतया तेषु भूपेषु मनाक् अपि न दत्तचित्ता सा मृगीदृशा पुनः अभाषि ॥८०॥

भूपेष्विति । अथ राजान्तरवर्णनानन्तरम्, विज्ञे रया दमयन्त्या स्वदयहृद्गतदर्शनात् विज्ञितया वाण्या वाक्य-स्वरस्य गुणोदयेन माधुर्य्याविर्भावेन लघूकृतम् अवत् तुच्छीकृतः पाणिवीणायाः करस्थितवीणायाः निक्वाणो ध्वनिः यया तया, तया वचनस्य वाक्यस्य दैवतया सरस्वत्या, तेषु भूपेषु, मनागपि ईषदपि, न दत्तं चित्तं यया सा, सा मृगीदृशा हरिणनयना दमयन्ती, पुनरभाषि वक्ष्यमाणमुक्ता ।

अत्र वृत्त्यनुप्रासच्छेकानुप्रासयोः संसृष्टिः । माधुर्यं गुणः, वैदर्भी च रीतिः ॥८०॥

**বাঙ্গালা**—তাহার পর, সেই রাজগণের প্রতি দময়ন্তী একটু মাত্রও চিত্ত সমর্পণ করিলেন না; ইহাতে বিজ্ঞ হইয়া সরস্বতীদেবী পুনরায় হরিণনয়না দময়ন্তীকে বলিলেন; তখন তাঁহার বাক্যস্বরের মাধুর্য্য তাঁহার হস্তস্থিত বীণার শব্দকে তুচ্ছ করিল ॥৮০॥

**अन्वयः**— (हे दमयन्ति ! ) त्वं यन्मौलि-रत्नं (सती) उदिता असि ; सः एषः जम्बूद्वीपः त्वद्-र्थमिलितैः युवभिः भव-भीति-कम्पः बहुना दोलायितेन खात् त्रुटित्वा पतितः कन्दर्पलोकः इव विभाति ॥८१॥

यदिति । हे दमयन्ति ! त्वं यस्य जम्बूद्वीपस्य मौलिरत्नं मस्तकमणिस्वरूपा सती, उदिता उत्पन्ना असि ; स एव जम्बूद्वीपः, त्वदर्थं मिलितैरेकत्र समवेतैः, युवभिः करणैः, भवान्महादेवात् भीत्या भयेन कम्पः कम्पन-शीलः, अतएव बहुना दोलायितेन कम्पनात्मकदोलनेन हेतुना, खात् स्वर्गात्, त्रुटित्वा स्खलित्वा पतितः, कन्दर्प-लोक इव कामदेवभुवनमिव, विभाति शोभते । सर्वे एवामी युवानः कामदेवतुल्याः सुन्दरा इति भावः ।

अत्र जात्युत्प्रेक्षालङ्कारः, निरङ्गं केवलरूपकम्, वृत्त्यनुप्रासश्चेत्येषां संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः । "स्वर्मिन्द्रिये सुखे स्वर्गे युवन्यो विहायसि" इति विश्वः ॥८१॥

**বাঙ্গালা**—দময়ন্তি ! তুমি যাহার মস্তকের রত্নস্বরূপ হইয়া জন্মিয়াছ, এই সেই জম্বু-দ্বীপ, তোমারই নিমিত্ত সম্মিলিত যুবকগণ দ্বারা, মহাদেবের ভয়ে কম্পিত হইয়া অনেক দোলন বশতঃ স্বর্গ হইতে স্খলিত হইয়া পতিত কামলোকের ন্যায় শোভা পাইতেছে ॥৮১॥

**अन्वयः**— (हे) राजपुत्रि ! अन्तरीपैः परिजनैः विष्वक् वृतः हेमाद्रिणा कनकदण्डमयातपत्रः कैलास-रश्मि-चय चामर चक्र-चिह्नः अयं तेषाम् अधीशः इव राजति ॥८२॥

विष्वगिति । हे राजपुत्रि ! अन्तरीपैः सिंहलाद्यन्तरीपरूपैः, परिजनैः सेवकैः, विष्वक् सर्वासु दिक्षु, वृतः परिवेष्टितः, हेमाद्रिणा सुमेरुपर्वतेन, कनकदण्डमयं स्वर्णदण्डयुक्तम् आतपत्रं छत्रं यस्य सः, सुमेरुपर्वतस्य उपरिभागे विस्तृतत्वात् निम्ने च कृशत्वात् एकः सुमेरुरेव दण्डरूपच्छत्ररूपश्चेति भावः ; तथा कैलास

**अस्मिन् (१) जयन्ति जगतीपतयः सहस्र-मस्रास्रुसान्द्ररिपुतद्वनितेषु (२) तेषु ।**
**रम्भोरु ! चारु कतिचित्तव चित्तबन्धि-रूपान्निरूपय मुदाहमुदाहरामि ॥८५॥**
**प्रत्यर्थियौवतवतंसतमालमाली-नीरन्ध्रतमःप्रकरतस्करशौर्य्यसूर्य्ये ।**
**अस्मिन्नवन्तिनृपतौ गुणसन्ततीनां विश्रान्तिधामनि मनो दमयन्ति ! किन्ते ॥८६॥**

---

বিদিত সুবর্ণ বলিয়া জগতে প্রসিদ্ধ লাভ করিয়াছে; সেই জম্বুবৃক্ষের ফলের রস হইতে উৎপন্ন এবং অমৃততুল্য জল যুক্ত জম্বু নামে নদী, এই জম্বুদ্বীপেরই সীমায় বাহিত হইতেছে ॥৮৪॥

**অন্বয়:**—अस्मिन् सहस्रं जगतीपतयः जयन्ति ; अस्रास्रुसान्द्र-रिपु-तद्वनितेषु तेषु (मध्ये) अहं मुदा कतिचित् तव चित्तबन्धिरूपान् उदाहरामि ; (हे) रम्भोरु । [त्वं] चारु निरूपय ॥८५॥

अस्मिन्निति । अस्मिन् जम्बूद्वीपे, सहस्रं बहव इत्यर्थः, जगतीपतयो राजानः, जयन्ति सर्वोत्कर्षेण वर्त्तन्ते । अस्राम् अस्रा रुधिरेणेतरजलाभ्यां सान्द्राः यथाक्रमं सिक्ता रिपवः शत्रवः तद्वनितास्तेषां रिपूणां स्त्रियश्च येषां तेषु महावीरेष्वित्यर्थः तेषु जगतीपतिषु मध्ये, अहं मुदा तत्स्मरणादिवानन्देन, कतिचित् कियतः, तव चित्त-बन्धीनि हृदयाकर्षकाणि रूपाणि सौन्दर्य्याणि येषां तान् जगतीपतीन्, उदाहरामि कथयामि ; हे रम्भोरु । दमयन्ति ! त्वं चारु सुन्दरं सम्यगित्यर्थः, निरूपय आत्मनो योग्यत्वेन यं कञ्चिद्विचिनु ।

अत्र 'मुदाहमुदाहर' इति यमकम्, अन्यत्र तु च्छेकानुप्रास इत्युभयोः संसृष्टिः । प्रसादो गुणः वैदर्भी च रीतिः ॥८५॥

**বাঙ্গালা**—এই জম্বুদ্বীপে বহুসংখ্যক রাজা সর্বশ্রেষ্ঠভাবে অবস্থান করিতেছেন; তাঁহাদের শত্রুগণ রক্ত দ্বারা সিক্ত হইয়া থাকে; আর শত্রুস্ত্রীগণও নয়নজল দ্বারা সিক্ত হইয়া থাকে; আমি সানন্দে তাঁহাদের মধ্যে কতকগুলির নাম তোমার নিকট উল্লেখ করিতেছি হে রম্ভোরু! তুমি ভাল করিয়া নিরূপণ কর ॥৮৫॥

**অন্বয়:**—[हे] दमयन्ति ! प्रत्यर्थि-यौवत-वतंस-तमाल-माली-नीरन्ध्र-तमः-प्रकर-तस्कर-शौर्य्य-सूर्य्ये गुणसन्ततीनां विश्रान्तिधामनि अस्मिन् अवन्तिनृपतौ ते मनः किम् [अनुरज्यति] ॥८६॥

प्रत्यर्थीति । हे दमयन्ति ! प्रत्यर्थिनां शत्रूणां यद् यौवतं युवतिस्त्रीसमूहस्तस्य वतंसाः कर्णभूषणी-भूता यास्तमालमालाः तमालदलश्रेणयस्ता एव नीरन्ध्राणि आविरलानि तमांसि अन्धकारास्तेषां प्रकरस्य समूहस्य तस्करः अपहारको नाशक इति यावत् शौर्य्यं वीरत्वमेव सूर्य्यो यस्य तस्मिन् । सूर्य्यो यथा अन्धकारान् नाशयति, तथा यस्य वीरत्वमपि शत्रून् विनाश्य तत्स्त्रीणां वैधव्यसम्पादनेन तासां कर्णभूषण-भूतानि तमालदलानि पातयतीत्यर्थः । तथा गुणसन्ततीनां सौन्दर्य्यादिगुणसमूहानाम्, विश्रान्तिधामनि विश्राम-स्थाने समस्तगुणशालिनीत्यर्थः, अस्मिन् अवन्तीनामवन्तिदेशस्य नृपतौ, ते तव मनः, किमनुरज्यतीति शेषः ।

अत्र तमालमालायामन्धकारत्वारोपः शौर्य्ये सूर्य्यत्वारोपं प्रति निमित्तमिति परम्परितरूपकमलङ्कारः, पूर्वार्द्धे च्छेकानुप्रासः परार्द्धे च वृत्त्यनुप्रास इत्येतेषां संसृष्टिः । पूर्वार्द्धे समासबाहुल्यादोजो गुणः, गौडी च रीतिः ; परार्द्धे तु माधुर्य्यं गुणः, वैदर्भी च रीतिः ॥८६॥

**বাঙ্গালা**—দময়ন্তি! শত্রুদিগের যুবতিস্ত্রীগণের কর্ণভূষণ-তমালদলরূপ অন্ধকার সমূহকে যাঁহার বীরত্বরূপ সূর্য্য অপহরণ করিয়া থাকে এবং যিনি সমস্ত গুণের বিশ্রামস্থান, এই সেই অবন্তিরাজের প্রতি তোমার মন অনুরক্ত হয় কি? ॥৮৬॥

[१] तस्मिन् ··· । [२] ···सार्द्ररिपु··· ।

तत्रानुतीरवनवासितपस्विविप्रा सिप्रा तवोर्म्मिभुजया जलकेलिकाले।
आलिङ्गनानि दधती भविता वयस्या हास्यानुबन्धरमणीयसरोरुहास्या॥८७॥
अस्याधिगम्य पुरमुज्जयिनीं भवानी जागर्त्ति या सुभगयौवनमौलिमाला।
पत्यार्द्धकायघटनाय मृगाक्षि! तस्याः शिष्या भविष्यसि चिरं वरिवस्ययापि॥८८॥
निःशङ्कमङ्कुरिततां रतिवल्लभस्य देवः स्वचन्द्रकिरणामृतसेचनेन।
तत्रावलोक्य सुदृशां हृदयेषु दग्धस्तद्दाहफलमाह (१) स किं न विद्मः॥८९॥

---

अन्वयः—अत्र अनुतीर-वनवासि-तपस्वि-विप्रा सिप्रा जलकेलिकाले ऊर्म्मिभुजया तव आलिङ्गनानि दधती (सती) हास्यानुबन्धरमणीय-सरोरुहास्या वयस्या भविता॥८७॥

तत्रेति। अत्र अवन्तिदेशे, अनुतीरं तीरे यत् वनं तत्र वसन्तीति ते तादृशास्तपस्विनो विप्रा यस्याः सा तथोक्ता, सिप्रा नाम नदी, जलकेलिकाले तवैव जलविहारसमये, ऊर्म्मिस्तरङ्ग एव भुजा बाहुस्तया, तव आलिङ्गनानि, दधती कुर्व्वती सती, हास्यस्य विकासस्यैव हसितस्य अनुबन्धेन नैरन्तर्य्येण रमणीयं मनोहरं सरोरुहं तदन्यं पद्ममेव आस्यं मुखं यस्याः सा तादृशी, वयस्या सखी तत्स्वरूपेत्यर्थः, भविता भविष्यति। अत ईदृशपवित्रया जलकेलिसम्भवादितवरणमेव ते श्रेय इति भावः।

अत्रारोप्यमाणस्य वयस्याधर्म्मस्य प्रकृतालिङ्गनोपयोगितया परिणामालङ्कारस्य छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते। अनुतीरेत्यादिना पवित्रताप्रतीतनाद् नापुष्टार्थतादोषः। प्रसादो गुणः, वैदर्भी च रीतिः॥८७॥

বাঙ্গালা—সেই অবন্তিদেশে সিপ্রানামে একটী নদী আছে, তাহার তীরস্থিত বনের ভিতরে তপস্বী ব্রাহ্মণগণ বাস করেন; সেই সিপ্রা নদী জল বিহার করিবার সময়ে তরঙ্গ-রূপ বাহু দ্বারা তোমার আলিঙ্গন করতঃ সখীস্বরূপ হইবে; তখন বিকাসরূপ অনবরত হাস্য থাকায় তাহার পদ্মরূপ মুখখানি মনোহর হইবে।৮৭॥

অन्वयः—सुभग-यौवन-मौलि-माला या भवानी उज्जयिनीम् अस्य पुरम् अधिगम्य जागर्त्ति, (हे) मृगाक्षि! पत्या अर्द्धकाय-घटनाय तस्याः चिरं वरिवस्यया शिष्या अपि भविष्यसि॥८८॥

अस्येति। सुभगं पतिप्रियं यद् यौवनं युवतिसमूहस्तस्य मौलीनां मस्तकानां माला तत्स्वरूपा पतिप्रिय-युवतिमध्ये श्रेष्ठेत्यर्थः, या भवानी पार्व्वती, उज्जयिनीं नाम, अस्य अवन्तिराजस्य पुरं नगरीम्, अधिगम्य अधिष्ठाय, जागर्त्ति प्रकाशते; हे मृगाक्षि! पत्या पतिदेहेन सह अर्द्धकायस्य आत्मनो देहार्द्धस्य घटनाय योजनाय, तस्या भवान्याः, चिरं वरिवस्यया परिचर्य्यया पूजनेनेत्यर्थः, त्वं शिष्यापि भविष्यसि न केवलं सिप्रालिङ्गनमेवावन्ति-राजस्य वरणफलमपि तु भवान्याः शिष्यत्वमपीति भावः।

अत्र सुभगेत्यादौ निरङ्गकेवलरूपकमलङ्कारश्छेकानुप्रासेन संसृज्यते। गुणरीती पूर्व्ववत्॥८८॥

বাঙ্গালা—ভাগ্যবতী যুবতীদিগের মস্তকের মালাস্বরূপা যে ভবানীদেবী এই অবন্তি-রাজের উজ্জয়িনী নগরীতে অধিষ্ঠান করিয়া বাস করিতেছেন; হরিণনয়নে! পতিদেহের সহিত নিজের অর্দ্ধদেহ যোগ করিবার জন্য, সেই ভবানীদেবীর চিরকাল পূজা দ্বারা তাঁহার শিষ্যাও হইবে।৮৮।

अन्वयः—तत्र सः दग्धः शिवः स्व-चन्द्र-किरणामृत सेचनेन सुदृशां हृदयेषु निःशङ्कं रतिवल्लभस्य अङ्कुरितताम् अवलोक्य किं तद्दाहफलम् आह, (तत्) न विद्मः॥८९॥

---

(१) ..फलमाप .. ।

आगःशतं विदधतोऽपि समक्षकामाः नाधीयते परुषमक्षरमस्य वामाः ।
चान्द्री न तत्र हरमौलिशयालुरेकानध्यायहेतुतिथिकेतुरपैति लेखा ॥९०॥
भूपं व्यलोकत न दूरतरानुरक्तं सा कुण्डिनावनिपुरन्दरनन्दना (१) तम् ।
अन्यानुरागविरसेन विलोकनाद्धा जानामि सम्यगविलोकनमेव रम्यम् ॥९१॥

---

ननु उज्जयिन्यां महाकालाख्यशिवावस्थानेन कामाविर्भाव एव न स्यात् तथा च सति युवत्यास्मिन् किं नाम सुखम् इत्याह— निःशङ्कमिति। तत्र उज्जयिन्यान्तु, स प्रसिद्धः, यदौ महाकालो नाम शिवो देवः, स्वचन्द्रस्य निजमौलिस्थचन्द्रस्य यत् किरणामृतं तस्य सेचनेन वर्षणेन, सुदृशां तरुणरमणीनाम्, हृदयेषु, निःशङ्कं निर्भयं यथा तथा, रतिवल्लभस्य कामस्य, अङ्कुरितताम् आविर्भावम्, अवलोक्य, किं नाम, तस्य कामस्य यो ईदृशाह आत्मनैव शरीरभस्मीकरणं तस्य फलं प्रयोजनम्, आह ब्रवीति, वयं तत्र विद्मो जानीमः। शिवस्य कामदेहभस्मीकरणं निष्फलमित्यर्थः। अतस्तत्र सर्वमेव कामसुखं भविष्यतीति भावः।

अत्र शिवस्य कामदेहदाहवैफल्यात् तदाविर्भावरूपानर्थोत्पत्तेश्च विषमालङ्कारः छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते। गुणरीती पूर्ववत् ॥८९॥

বাঙ্গালা—নিজের মস্তকস্থিত চন্দ্রের কিরণামৃতবর্ষণে উজ্জয়িনীতে রমণীগণের হৃদয়ে নির্ভয়ে কামের আবির্ভাব হয়, ইহা দেখিয়া, কামের শরীর দগ্ধ করায় কি ফল হইল, এবিষয়ে তত্রত্য মহাকালনামা শিব কি বলেন, তাহা আমরা জানি না ।৮৯।

अन्वयः—समक्षकामाः वामाः आगःशतं विदधतः अपि अस्य परुषम् अक्षरं न अधीयते। तत्र हरमौलि-शयालुः अनध्यायहेतु-तिथि-केतुः एका चान्द्री लेखा न अपैति ॥९०॥

आग इति। समक्षकामा अतीवाविर्भूतकामवेगाः, वामाः स्त्रियः, आगसामपराधानां शतं बहुत्वम्, विदधतोऽपि कुर्वतोऽपि, अस्य अवन्तिराजस्य सम्बन्धे, परुषं निष्ठुरम्, अक्षरं वाक्यम्, न अधीयते न पठन्ति। कथम् इत्याह-तत्र उज्जयिन्याम्, हरस्य महाकालरूपिणः शिवस्य मौलिशयालुः सदैव मस्तकस्थिता, अनध्यायस्य हेतुर्या तिथिः प्रतिपत् तस्याः केतुश्चिह्नभूता, एका चान्द्री चन्द्रसम्बन्धिनी, लेखा कला, न अपैति कदापि नापगच्छति। तथा च चन्द्रेण एककलाक्रियायां प्रतिपत्त्वमिति लक्षणात् तस्याश्च कलायाः सदैव शिवशिरसि स्थितत्वात् सर्वदैव दिवसेषु प्रतिपत्तिथिरेव अतः प्रतिपदश्च सर्वानध्यायतिथिषु प्रधानत्वात् वामाः कारणे सत्यपि परुषाक्षरं न पठन्तीति भावः।

अत्र आगःशतविधानरूपे कारणे सत्यपि परुषाक्षरपाठरूपतत्कार्याभावात् विशेषोक्तिरलङ्कारः, परुषाक्षरपाठाभावं प्रति पदार्थवाक्यार्थौ हेतुरिति काव्यलिङ्गम्, पूर्वार्द्धे अन्त्यानुप्रासः, परार्द्धे च वृत्त्यनुप्रास इत्येतेषां संसृष्टिः। गुणरीती पूर्ववत् ॥९०॥

বাঙ্গালা—এই অবন্তিনাথ শত অপরাধ করিলেও, ইহার অত্যন্ত কামার্ত্ত রমণীরা নিষ্ঠুর অক্ষর পাঠ করেন না। কারণ, সেই উজ্জয়িনীতে মহাদেবের মস্তকস্থিত, অনধ্যায়-জনক প্রতিপদের চিহ্ন, চন্দ্রের একটি কলা কখনও লুপ্ত হয় না।৯০।

अन्वयः—सा कुण्डिनावनिपुरन्दरनन्दना दूरतरानुरक्तम् (अपि) तं भूपं न व्यलोकत। सा अन्यानुरागविरसेन विलोकनात् अविलोकनम् एव रम्यम् (इति) सम्यक् जानाति ॥९१॥

भूपमिति। सा कुण्डिनावनिपुरन्दरस्य कुण्डिनभूमीन्द्रस्य भीमस्य नन्दना कन्या दमयन्ती, दूरतरानुरक्तमपि

---

(१)···नन्दिनी तम्।

प्रत्यर्थिपार्थिवपयोनिधिमाथमन्थ-पृथ्वीधरः पृथुरयं मथुराधिनाथः ।
अस्मश्रुजातमनुयाति न पर्वरीयः श्यामाङ्ककर्बुरवपुर्वदनाब्जमस्य ॥१०१॥
बालेऽधराधरितनैकविधप्रवाले पाणौ जगद्विजयकार्मुकमस्य पश्य ।
ज्याघातजेन रिपुराजकधूमकेतु-तारायमाणमुपरज्य मणिं किणेन ॥१०२॥

---

বাঙ্গালা—কুমারী ও গুণতারতম্যবাক্যনিপুণা দময়ন্তীকে সরস্বতী পুনরায় বলিলেন—'পদ্মবদনে! প্রস্ফুটিত পদ্মের সাদৃশ্য শিক্ষায় বিখ্যাত নিজ দৃষ্টি দ্বারা এই রাজার প্রতি বিশেষভাবে আলিঙ্গনব্যাপার আরম্ভ কর ॥১০০॥

अन्वयः—प्रत्यर्थि-पार्थिव-पयोनिधि-माथ-मन्थ-पृथ्वीधरः अयं मथुराधिनाथः पृथुः । श्यामाङ्क-कर्बुर-वपुः पर्वरीयः अस्मश्रुजातम् अस्य वदनाब्जं न अनुयाति ॥१०१॥

प्रत्यर्थीति । प्रत्यर्थिनो विपक्षाः पार्थिवा राजान एव पयोनिधयः समुद्रास्तेषां माथे मथने मन्थपृथ्वीधरो मन्थनदण्डभूतः पर्वतो मन्दर इत्यर्थः, विपक्षमर्दनकारी महावीर इत्याशयः । अयं मथुराया मथुराप्रदेशस्य अधिनाथो राजा, पृथुः पृथुनामा । श्यामेन श्यामवर्णेन अङ्केन कलङ्कचिह्नेन कर्बुरं विचित्रं वपुः शरीरं यस्य स तादृशः, पर्वरीयश्चन्द्रः, न जातं किशोरत्वात् न उत्पन्नं श्मश्रु मुखलोम यस्मिन् तत्, अस्य मथुराराजस्य, वदनाब्जं मुखपद्मम्, न अनुयाति न अनुकरोति ; मुखपद्मस्य अजातश्मश्रुकतया केवलगौरवर्णत्वात् चन्द्रस्य तु कलङ्केन विचित्रवर्णत्वात् वैर्णस्य च वैसादृश्यादिति भावः । किशोरी त्वं किशोरमेनं वृणीष्वेति समुदायाशयः ।

अत्र प्रत्यर्थिपार्थिवेषु पयोनिधित्वारोपः पृथौ मन्दरत्वारोपे निमित्तमिति परम्परितं रूपकम्, अनुकरणाभावं प्रति अस्मश्रुजातमिति-श्यामाङ्केत्यादिपदयोरर्थस्य हेतुत्वात् काव्यलिङ्गम्, छेकानुप्रासो वृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

अस्मश्रुजातमिति आहिताग्न्यादित्वात् जातशब्दस्य परनिपातः ॥१०१॥

বাঙ্গালা—ইনি মথুরাপ্রদেশের অধিপতি, ইঁহার নাম পৃথু; বিপক্ষনৃপতিরূপ সমুদ্র মন্থন করিতে ইনি মন্দরপর্বতস্বরূপ । ইঁহার মুখে দাড়ি উঠে নাই ; আর শ্যামবর্ণ চিহ্ন থাকায় চন্দ্রের শরীর বিচিত্রবর্ণ, সুতরাং সে চন্দ্র ইঁহার মুখের অনুকরণ করিতে পারে না ॥১০১॥

अन्वयः—(हे) अधराधरित-नैकविध-प्रवाले ! बाले ! अस्य पाणौ जगद्विजय-कार्मुकं ज्याघातजेन किणेन उपरज्य रिपुराजक-धूमकेतु-तारायमाणं मणिं पश्य ॥१०२॥

बाल इति । अधरेण ओष्ठेन अधरिता अधरीकृताः सौन्दर्येण पराजिता इत्यर्थः नैकविधा नानाप्रकाराः प्रवाला विद्रुमपल्लवा यया तस्याः सम्बोधनम् । तथा हे बाले ! अस्य मथुराराजस्य, पाणौ हस्तमणिबन्धदेशे इत्यर्थः, जगद्विजयस्य कार्मुकं धार्यतीकरणीयधनुःस्वरूपम्, ज्याघातः तज्जायत इति तेन, किणेन चिह्नेन, उपरज्य उपरागं प्राप्य ताद्दृशकिणस्य संसर्गेण तत् प्रतिबिम्बपातादतः श्यामवर्णीभूतमित्यर्थः, रिपुराजकं शत्रुभूतो राजसमूहस्तस्य धूमकेतुभूता या तारा विनाशसूचकी नक्षत्रविशेषस्तद्दाचरन्तम्, मणिं पश्य । धूमकेतुर्यथा लोकक्षयसूचकः, अस्य मणिबन्धस्थो मणिरपि विपक्षनृपतीनां तथैव क्षयसूचक इत्येनमेव महावीरं वृणीष्वेति भावः ।

अत्र उत्प्रेक्षोपमालङ्कारयोश्छेकानुप्रासेन संसृज्यते । गुणरीती पूर्ववत् ॥१०२॥

বাঙ্গালা—বালিকে! তোমার ওষ্ঠ খানি নানাবিধ প্রবালকে (বিদ্রুম ও নবপল্লবকে) পরাজিত করিয়াছে ; এদিকে দেখ এই মথুরাধিপতির হস্তে একটি মণি রহিয়াছে, ইহা জগৎ

तस्मादियं क्षितिपतिक्रमगम्यमानमध्वानमैक्षत नृपादवतारिताक्षी ।
तद्भावबोधबुधतां निजकर्म एव व्याचष्टते स्म शिबिकानयने नियुक्ताः ॥११०॥
भूयोऽपि भूपमपरं प्रति भारती तां वक्ष्यमाणमूरुचलचक्षुषमाचचक्षे ।
एतस्य काशिनृपतेस्तमवेक्ष्य लक्ष्मीमक्ष्णोर्मुदं जनय खञ्जनमञ्जुनेत्रे ! ॥१११॥

मधूनि मकरन्दानिव मद्यानि, पिबन्निव, इष्यतु अनुभवतु । अर्थाऽपि युयुत्सुर्युद्धाभिलाषमनाप्नुवन्नपि मध्वपानैः तृप्यति ।

अत्र पिबन्निवेति वाच्या क्रियोत्प्रेक्षा, मद्यमकरन्दयोः श्लेषेऽपि मधुशब्देन श्लेषाभेदाध्यवसायादतिशयोक्तिश्चानयो-रङ्गाङ्गिभावेन सङ्करः । वसन्ततिलका वृत्तम् ।

"निधुवनं बाहुयुद्धं स्यात्" इत्यमरः ॥१०९॥

বাঙ্গালা—পৃথিবীর মধ্যে অদ্বিতীয় বীর যে মথুরাপতি শত্রুর সম্পত্তির বিষয়ে বাহু-যুদ্ধ না পাইয়া একটুও সন্তুষ্ট হইতে পারেন না ; এই সেই মথুরাপতি তোমাকে পাইয়া পতনশীল পুষ্পময় কামবাণ হইতে নিঃসৃত মধু পান করিয়াই যেন সন্তুষ্ট হউন ॥১০৯॥

অন্বয়ঃ—इयं तस्मात् नृपात् अवतारिताक्षी (सती) क्षितिपतिक्रम-गम्यमानम् अध्वानम् ऐक्षत । शिबिकानयने नियुक्ताः निजकर्म एव तद्भावबोध-बुधतां व्याचष्टते स्म ॥११०॥

तस्मादिति । इयं दमयन्ती, तस्मात् नृपात् मथुराधिपात्, अवतारिताक्षी अपसारितनयना सती, क्षिति-पतिषु उपरीतनपार्श्वविष्टेषु राजसु क्रमेण गम्यमानम्, अध्वानं पन्थानम्, ऐक्षत अपश्यत् । पश्चात् शिबिकाया नयने वहनकर्मणि, नियुक्ता वाहकपुरुषाः, निजकर्मणैव स्वव्यापारेणैव राजान्तरप्रापणेनैव, तस्या दमयन्त्या भावबोधे अभिप्रायज्ञाने बुधतामभिज्ञत्वम्, व्याचष्टते स्म ज्ञापयामासुः ।

अत्र हृदयनुमानस्य कारणमालयोः सङ्करः । वसन्ततिलका वृत्तम् ॥११०॥

বাঙ্গালা—দময়ন্তী সেই মথুরাপতির উপর হইতে নয়নযুগল অপসারিত করিয়া, ক্রমিক উপবিষ্ট রাজাদের সম্মুখ দিয়া গত পথের প্রতি দৃষ্টিপাত করিলেন। তাহার পর, শিবিকাবাহকেরা আপন কার্য দ্বারাই তাঁহার অভিপ্রায় বুঝিবার বিষয়ে আপনাদের অভিজ্ঞতা জানাইল ॥১১০॥

অন্বয়ঃ—भारती भूयः अपि अपरं भूपं प्रति वक्ष्यमाण-मृग-चल चक्षुषं ताम् आचचक्षे । (हे) खञ्जन-मञ्जुनेत्रे ! त्वम् एतस्य काशिनृपतेः लक्ष्मीम् अवेक्ष्य अक्ष्णोः मुदं जनय ॥१११॥

भूय इति । भारती सरस्वतीदेवी, भूयः पुनरपि, अपरं भूपं राजानम्, प्रति लक्ष्यीकृत्य, वक्ष्यन् बिभ्यत् मृगस्येव चलचक्षुषीव चक्षुषी यस्यास्ताम्, तां दमयन्तीम्, आचचक्षे उवाच । किमाचचक्षे इत्याह— खञ्जनौ पक्षिणाविव मञ्जुनी सुन्दरे नेत्रे यस्यास्तत्सम्बोधनम् । त्वम्, एतस्य काशिनृपतेर्वाराणसीराजस्य, लक्ष्मीं शोभाम्, अवेक्ष्य दृष्ट्वा, अक्ष्णोर्नयनयोः, मुदम् आनन्दम्, जनय । तदर्शनं कुर्वित्यर्थः ।

अत्रापि पूर्ववद्दीपकालङ्कारादयः ।

"तत्र धातुभ्य इञ्" इत्यत्र काशिशब्दे च काश्यप्रातीतिकप्रत्ययात् काशिरिति ज्ञात्वा काशान्तीऽपि । तथा च कोषः:—
"पुरीषु सा तीर्थराजी शिवपुरी च तपःस्थली । काशी वाराणसी काशिर्ब्रह्मावती बरानसी" ॥१११॥

বাঙ্গালা—দময়ন্তীর নয়ন দুইটী, ভীত হরিণের নয়নের ন্যায় চঞ্চল ছিল ; অন্য রাজাকে লক্ষ্য করিয়া সেই দময়ন্তীকে সরস্বতীদেবী পুনরায় বলিলেন—"হে খঞ্জননয়নে ! এই কাশীরাজের সৌন্দর্য দেখিয়া নয়নযুগলের আনন্দ উৎপাদন কর" ॥১১১॥

**एतस्य सार्वभौमभुजः कुलराजधानी काशी भवोत्तरणधर्मतरिः स्मरारेः ।**
**यामागता दुरितपूरितचेतसोऽपि पापं निरस्य चिरजं विरजीभवन्ति ॥११२॥**
**आलोच्य (१) भाविविधिकर्तृकलोकसृष्टि-कष्टानि रोदिति पुरा कृपयैव रुद्रः ।**
**नामिच्छयेति मिषमात्रमधत्त यस्मां संसारतारणतरीमसृजत् पुरीं सः ॥११३॥**

अन्वयः—स्मरारेः भवोत्तरण-धर्मतरिः सा काशी एतस्य सार्वभौमभुजः कुलराजधानी । दुरित-पूरित-चेतसः अपि याम् आगताः (जनाः) चिरजं पापं निरस्य विरजीभवन्ति ॥११२॥

एतस्येति । स्मरारेर्भवार्णवपारतपस्य शिवस्य सम्बन्धिनी, भवोत्तरणे संसारार्णवपारगमने धर्मतरिः धर्मनौकास्वरूपा, मुक्तिनदीतीर्थे च पारकरणादिति भावः, सा काशी, एतस्य सार्वभौमो राज्ञः, कुलराजधानी वंशपरम्परया वासस्थानम् । दुरितैः पापैः पूरितानि चेतांसि येषां ते तादृशा अपि जनाः, यां काशीम् आगताः सन्तः, चिरजम् आजन्मजातं पापम्, निरस्य दूरीकृत्य, विरजीभवन्ति रजोगुणशून्याः कैवल्यलब्धनिष्ठा भवन्ति मुक्तिं प्राप्नुवन्तीत्यर्थः । तेनैतस्य वंशे त्वमपि मुक्तिं प्राप्स्यसीति भावः ।

अत्र काश्यां धर्मतरित्वारोपः शाब्दः, स्मरारौ तत्कर्णधारत्वारोपस्तु आर्थ इत्यं कदेशविवर्ति रूपकमलङ्कारः, छेकानुप्रासेन त्वनयोः संसृष्टिः । वृत्तरीतो पूर्ववत् ॥११२॥

বাঙ্গালা—সংসারসাগর পার করিবার পক্ষে মহাদেবরূপ কর্ণধারের ধর্মতরীস্বরূপা সেই কাশীনগরী এই রাজার কৌলিক রাজধানী। অত্যন্ত পাপীরাও যে কাশীনগরীতে আসিয়া চিরকালের পাপ দূর করিয়া রজোগুণশূন্য হইয়া যায় ॥১১২॥

अन्वयः—रुद्रः भावि विधि-कर्तृक-लोक-सृष्टि-कष्टानि आलोच्य कृपया एव पुरा रोदिति। (किन्तु) नामिच्छया इति मिषमात्रम् अधत्त ; यत् सः संसारतारणतरीं तां पुरीम् असृजत् ॥११३॥

आलोच्येति । रुद्रः शिवः, भाविन्या भविष्यन्त्या विधिकर्तृकाया लोकसृष्टेः प्राणिसमूहस्य कष्टानि जरा-मरणादिदुःखानि, आलोच्य प्रागेव विचार्य, कृपयैव पुरा रोदिति पूर्वं रुदितवान् । अत एवास्य रुद्र इति नाम जातमिति भावः । अथ तर्हि "सोऽरोदीत् तद्रुद्रस्य रुद्रत्वम्" इति श्रुतौ रुद्रनामेच्छया रोदनश्रुतिः का गतिरित्याह—नामिच्छया रुद्रनामलाभाकाङ्क्षया, अरोदीदिति श्रुत्युक्तम्, मिषमात्रं छलमात्रम्, अधत्त धृतवान् । कथमेतदवगतमित्याह—यद्यस्मात्, स रुद्रः, संसारतारणाय भवार्णवपारगमनाय तरीं तरीस्वरूपाम्, तां काशीं पुरीम्, असृजन्निर्मितवान् । अतो दययैवारोदीदिति भावः ।

अत्र कृपया रोदनासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः, काश्यां तरीत्वारोपः शाब्दः, संसारे सागरत्वारोपस्तु आर्थ इत्येकदेशविवर्ति रूपकम्, छेकानुप्रासश्च तेषां संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः ।

रोदितीति पुराशब्दयोगात् "भूतानद्यतने" इत्यतीत वर्तमाना ॥११३॥

বাঙ্গালা—ব্রহ্মাকর্তৃক সৃষ্ট ভবিষ্যৎ প্রাণিগণের কষ্ট পর্য্যালোচনা করিয়া দয়াবশতই মহাদেব রোদন করিয়াছিলেন; (তাই তাঁহার নাম হইয়াছিল রুদ্র)। কিন্তু রুদ্রনাম লাভ করিবার ইচ্ছায় রোদন করিয়াছিলেন, এই যে বেদে শুনা যায়, তাহা ছলমাত্র ধারণ করিয়াছিলেন। যে হেতু তিনি সংসারসাগর হইতে পার করিবার জন্য নৌকাস্বরূপ কাশীনগরী সৃষ্টি করিয়াছেন ॥১১৩॥

---

(१) आलोच्य ..

